तस्यैवाश्नोतेः करणे कारके; नहि कितवाः प्रतिकितवं धनम् अभ्यश्नुवते।

"तेषाम्" "एषा भवति" स्मृतिः—॥ ७॥

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः। सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्॥ प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति प्रवातेजाः प्रवणेजाः* इरिणे वर्त्तमाना इरिणं निरृणम् ऋणातेरपार्णं† भवत्यपरता अस्मादोषधय इति वा (सोमस्येव मौजवतस्य भक्षः‡) मौजवतो मूजवति जातो मूजवान् पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्म्मण इयमपीतरेषीकैतस्मादेव विभीदको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत् प्रशंसत्येनान् प्रथमया निन्दत्युत्तराभिर्ऋषेरक्षपरिद्यूनस्यैतदार्षं§ वेदयन्ते ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा|| तेषामेषा भवति॥ ८॥

"प्रावेपा मा"—इति। अक्षद्यूतस्य मौजवत आर्षम्। 'प्रावेपाः'

---

* "प्रवतेजाः" क, ख, ग।

† "निरिणं निरिणातेरपार्णं" क, ख, ग।

‡ नास्त्ययं पाठः क-ख-ग-पुस्तकेषु।

§ "०परिद्यूनस्यैतदार्षं" ख।

|| "गृह्णातेर्वा" क, ग।

त्वचि 'ग्रन्थः' ग्रथ्यतः एतावश्विनौ 'वयते'; 'वि च भवः' व्यावयति च, तर्पयति हविर्भिः। 'पूर्वःपूर्वः' 'यजमानः' प्रथमः-प्रथमो यजमानो 'ज्यायान्' ("वनयितृतमः") मध्यातृतमः, आवृत-त्वात्; तस्यैव विराधयेते अश्विनौ; नेतरस्येति ॥

"तयोः कालः सूर्योदयपर्यन्तः" प्रकाशीभावस्यानुविष्टम्भ मित्यतः कालात् अस्ति सूर्योदयपर्यन्तस्तयोः कालः*, ततः परं यागकालः। ततः किम्? "तस्मिन् अन्याः देवताः" तस्मिन् स्तुतिकाले अन्याः देवताः आश्विने शस्त्रे याः स्तुतिं लभन्ते, ताः "ओप्यन्ते" तासा मावापः तत्कालस्तुतिप्रतिलम्भ इति। तत्र तावदुषाः प्रथम मोप्यते †; तद्देवतानि सूक्तानि शस्यन्ते ॥

"उषाः" ‡, "वष्टेः कान्तिकर्मणः"। "वश कान्तौ (अ० प०

* अश्विनोः परिचयम् बहुच बहुधा श्रूयते। ऋक्संहितायाम् १म० ११६अनु० पञ्चविंशत्युत्तरं सप्तमं सूक्तं समग्र मेव अश्विनोः कार्यजातस्य परिचायकम्। इह हि बहूना मृष्यादीना मुपकारकथाः श्रूयन्ते। तत्रैव २१ अनु० पञ्चमे द्वितीये च सूक्ते दीर्घतमःप्रभृतीना मश्विभ्यां कृतं रक्षणं वर्णितम्। पुनरपि २४ अनु० चतुर्थे तृतीये सूक्ते तौग्र्यरक्षणादिक मुपवर्णितम्। "अश्विनौ वै देवानां भिषजौ"—इति, "अश्विनौ अध्वर्यू"—इति च ऐ० ब्रा० १, ४, १। मधुविद्याध्ययनञ्च मनयोः श्रु-यते। तथाहि—"दध्यङ् ह वा आभ्यां माथर्वणो मधुनाम ब्राह्मण मुवाच"— ...ा ४, १, ५, १८।

... श्रुतिस्तथैव उषसः श्रुतिरैतरेयके च दृश्यते। तथाहि—"सोऽश्विनौ ... तस्तैव स्तवेन। त मश्विना कचतुरथर्वं स्पृष्ट्य त्योऽश्वध्याम इति। अ... हुताशात उत्तरेण स्तवेन।"—इति ऐ० ब्रा० ७ प० २ ख० ४ ख०।

‡ निघं० ५ख० ६ ख० (२); १ भा० ४९०, ४९१ पृ०।

१०)"—इत्यस्य । यथोक्तम् "उच्छतीति सत्याः"—इति *, सदा इदं विकल्पेन शुम्यानायाः ; या पुनः "इतरा माध्यमिका" उषाः †, न तस्या विकल्पः ; किं तर्हि? उच्छतेरेव सा विवास-नार्थस्य;— उदकानि विवासयति, विवास्यते वा मेघान्मध्यमेनेति ॥

"तस्याः एषा भवति"— ॥ ५ ॥

उषस्तच्चित्र मा भरास्मभ्यं वाजिनीवति । येन तोकञ्च तनयञ्च धामहे ॥ उषस्तत् (चित्रं ‡) चायनीयं (मंहनीयं §) धन माहरास्मभ्य मन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि तस्या एषापरा भवति ॥ ६ ॥

"उषस्तच्चित्र मा भरा"—इति ‖ । गोतमस्यार्षम् । प्रातरनुवाके आश्विने च विनियोगः । हे 'उषः!' 'वाजिनीवति!' तदस्माकं 'चित्रं' "चायनीयं धनम्" ('आभर') "आहर" त्वम् । 'येन' त्वप्रत्तेन वयं "पुत्रांश्च पौत्रांश्च" अविच्छेदेन दृढान् ('धामहे') "दधीमहि" ॥

"तस्याः एषा अपरा भवति" । सा पुनः किमर्थम्? पूर्वस्या

* पु० २ अ० ६ पा० १ ख० २ भा० २१२, २१५ पृ० ।

† इतैव पु० ११ अ० ४ पा० ११ ख० २१८, २१९ पृ० द्र० ।

‡, § क-ख-ग-पुस्तकेष्विमे पदे न दृश्येते ।

‖ ऋ० सं० १, ९, २९, २ ; य० वा० सं० ३४, ३३ । सा० सं० उ० आ० ८, ३, ८, १ । "उषस्तच्चित्र मामरेति तिस्र औष्णिहम्"—इति आ० श्रौ० सू० ४, १४ ।

त्वचि चित्रं धन माहरेत्युक्तम्, तच्च पुनरुभयोरप्युषसोरविशिष्टम्; विशिष्टन्तु परस्या मुत्तमलिङ्गम्—"पूर्वे अर्द्धे रजसो भानु मञ्जते"—इति*, अतः परा उदाह्रियते—॥ ६ ॥

एता उ त्या उषसः केतु मक्रत पूर्वे अर्द्धे रजसो भानु मञ्जते ॥ निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावो ऽरुषीर्यन्ति मातरः ॥ एतास्ता उषसः केतु मकृषत प्रज्ञान मेकस्या एव पूजनार्थे बहुवचनं स्यात्पूर्वे अर्द्धे† अन्तरिक्षलोकस्य‡ समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः। निरित्येष स मित्येतस्य स्थाने। एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति। प्रति यन्ति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः सूर्या§ सूर्यस्य पत्न्येपैवाभिसृष्टकालतमा|| तस्या एषा भवति ॥ ७ ॥

"एता उ त्याः"—इति¶। पूर्ववदार्षं विनियोगश्च। याः 'पूर्वे

* परस्तादिदैव द्रष्टव्यम् (४प०)।

† "स्यात्पूर्वेऽर्द्धे" च प्रभृतिषु।

‡ "ऽन्तरिक्षलोकस्य" च-प्रभृतिषु।

§ "निर्मात्र्यः सूर्या" च।

|| "पत्न्येवैवाविसृष्टकालतमा" क, ग।

¶ ऋ० सं० १, ६, २४, १; मा० सं० उ० आ० ८, ३, १९, १। "एता उ त्या इति चतस्रो जागतम्"—इति आ० श्रौ० सू० ४, १४।

अर्द्धं' ('रजसः') "अन्तरिक्षलोकस्य" * 'समञ्जते' "भानुना" भासा आत्मान मभि व्यञ्जयति। 'एताः' ('त्याः') "ताः" 'उषसः'। किमिति? 'केतुम् अक्रत' "अकृषत" कुर्वन्ति लोकस्य "प्रज्ञानम्"। कथन्ताः प्रज्ञानं लोकस्य कुर्वन्ति? अत आह;—"निष्कृण्वाना आयुधानीव धृष्णवः"। "निरित्येष स मित्येतस्य स्थाने"। यथा—संस्कुर्वाणाः नित्यन्निर्मृजन्तः आयुधानि निर्मलानि कुर्वन्ति धृष्णवः धर्षयितारः ते आयुधिनस्तज्जीवनाः, एवं भानुना स्वेन भासा तमोमल मपनीय निर्मलानि प्रज्ञानानि लोकस्योषसः संस्कुर्वन्ति। ततश्च "प्रति गावोऽरुषीर्यन्ति मातरः"। यत एवोदितास्त मेव सूर्यम्प्रति यन्ति तत्रैवान्तर्लीयन्ते; सूर्यस्यैव हि रश्मिप्रान्तप्रोत्सार्यमाणे तमस्यपररात्रे जाते प्रकाश उपजायते, ता उषस इत्याचक्षते, स एष परमार्थतः सूर्य एव स्त्रीलिङ्गविशिष्टो भवति; सूर्यकार्यत्वात् प्रकाशस्य † ॥

"एकस्या एव पूजनार्थे बहुवचनम्"—इति वचनभेदप्रतिसमाधानम् ॥

निरित्येष स मित्येतस्य स्थाने सामर्थ्याद् व्यत्ययः; संस्क्रियमाणानि ह्यायुधानि अतिनिर्मलानि भवन्ति ॥

यथा चोपपद्यते उपसर्गव्यत्ययः, तथा निगम मुदाजहार।—"एमीदेषाम्"—इति ‡। "यद्दादीध्ये न दविषाण्येभिः"—इति।

---

* "रजसः अन्तरिक्षलोकस्य पूर्वेऽर्द्धे प्राचीनदिग्भागे"—इति सा० भा०।

† "उषसः=प्रभातकालाभिमानिन्यो देवताः"—इति सा० भा०।

‡ "यद्दादीध्ये न दविषाण्येभिः परायद्भ्योऽवहीये सखिभ्यः। न्युप्ताश्च बभ्रवो

कवषस्य वा अक्षस्य वा आर्षम् । छतनिरुक्तिर्देवनादप्रकुर्वन्नात्मानं धारयितुं ब्रवीति ।—'यदा दीध्ये' भृशं मभिध्यायामि निश्चयेन 'न दविषाणि' न देविष्यामि 'एभिः' अक्षैरिति *। अथ यदा 'सखिभ्यः' समानख्यानेभ्यः कितवेभ्यः 'परायद्भ्यः' परागच्छद्भ्यः देवनस्थानं मह्येभ्यः 'अवहीये' भृशं हीनोऽस्मीति। यदा च पुनस्ते प्राप्य आस्फारं निवपन्ति अक्षान्†, अथ पुनस्तदा तैर्न्युप्ताश्च ते 'बभ्रवः' बभ्रुवर्णा अक्षाः 'वाच मक्रत' शब्द मकुर्वत, अथ तदा निवृत्तिं मविगणय्य 'एमि इत्' आगच्छाम्येव 'एषाम्' अक्षाणां अप्येवं 'निष्कृतं' संस्कृतम अवस्थानम् आस्फारं संस्कृतं 'जारिणीव' व्यभिचारिणीव काचिद्दुःस्त्रीचारिव मात्मनोऽविगणय्येति ॥

"सूर्या"—इति‡ वक्तव्यम । सा पुनरियं "सूर्यस्य पत्नी"; "एषैव" उषाः, "अभिसृष्टकालतमा" यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति, गततमा भवति, तथातया सैषा उषाः§ सूर्या सम्पद्यते॥ । "तस्याः एषा भवति"—॥ ७ ॥

---

वाच मक्रत एमीदेषां निष्कृतं जारिणीव ।"—इति ऋ॰ सं॰ ७, ८, ६, ५ । अक्षकौषेषा । त्रिष्टुप् ।

* "न दविषाणि, न दूषये, न परिसपामि । यद्वा न दविषाणि न देविष्यामीत्यर्थः"—इति सा॰ भा॰ ।

† "प्राप्यास्फारन्ति वपन्ति अक्षान्"—इति क॰ इ॰ ।

‡ निघ॰ ५ अ॰ ६ ख॰ (२); १ भा॰ ४६०, ४६१ पृ॰ ।

§ उषसो ऽप्यथं लेवं श्रूयते—"पुरा शकुनिवादादनभ्युद्यात्तिर्थैतेवैः रसमूर्धं यद्या वयांसि यच्छकुनयस्तथ्पुरा शकुनिवादादनभ्यूयात्"—इत्यादि ऐ॰ ब्रा॰ ९, १, ५ इव सेव च सावित्रीत्युच्यते ऐ॰ ब्रा॰ ४, १, १. इ. ।

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्॥ आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व॥ सुकाशनं* शन्नमलं† सर्वरूप मपि वोपमार्थे स्यात्सुकिंशुक मिव शल्मलि मिति किंशुकं क्रंशतेः (प्र‡)काशयतिकर्मणः शल्मलिः सुशरो भवति शरवान्वारोह सूर्ये अमृतस्य लोक मुदकस्य सुखं पत्ये वहतुं कुरुष्व सविता सूर्य्यां प्रायच्छत् सोमाय§ राज्ञे प्रजापतये वेति च ब्राह्मणं वृषाकपायी वृषाकपेः पत्न्येषैवाभिसृष्टकालतमा तस्या एषा भवति॥ ८॥

"सुकिंशुकं शल्मलिम्"—इति||। सूर्याया आर्षम्। विवाहे विनियोगः। त्विले तावदुच्यते प्रभा मात्मनो विभज्य तदधिदेवतां ब्रवीति।—'सुकिंशुकं' सुष्ठु काशनं दीपनं लोकानाम्, 'शल्मलिं' "शन्नमलं" व्यपगतमलम्, 'विश्वरूपं' "सर्वरूपम्", 'हिरण्यवर्णं' हिरण्योपमवर्णं हिरण्य मिव वरणीयम्, 'सुवृतं' सुवर्त्तनं शोभनैर्वा रश्मिभिर्वृतम्, 'सुचक्रं' सुचक्रनं सुदीप्तम्। एत मेवंलक्षणं मण्डलं

* "सुकाशनं" क, ख, ग।

† "सन्नमलं" क, ख, ग।

‡ नास्त्येतत् पदम् क-ग-पुस्तकयोः।

§ "प्रायच्छत्सोमाय" क, ख, ग।

|| ऋ० सं० ८, ३, १२, ५। "सुकिंशुक मित्याद्या नवर्चो विवाहमन्त्रा श्चाग्नेः प्रतिपादकाः—इति सा० भा०।

रथम् 'आरोह' त्वं हे 'सूर्ये'! 'अमृतस्य' उदकस्य 'लोकं' स्थानम्। तत एव मधिरुह्य 'स्योनं' सुख मेतस्मै 'पत्ये' मण्डलाधिष्ठात्रे 'वहतुं' 'कृणुष्व' कुरुष्व॥

पृथक्पक्षे तु—रथ एव रथः, सूर्य उद्वोढा, कन्या सूर्योच्यते। एवंलक्षणं रथ मारोहेति*॥

"अपि वोपमार्थे स्यात्—"सुकिंशुक मिव शल्मलि मिति"। किंशुक मिति पलाशपुष्पे प्रसिद्धिः; इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पित मिव शल्मलि मिति सामर्थ्यात् तेनोपमानयोग आदित्यस्य पुष्टनर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः॥

"किंशुकं कंशतेः" धातोः प्रकाशनार्थस्य†; तद्धि दीप्तिमद्भवति।—। "शल्मलिः सुशरो भवति"। "शृ हिंसायाम्"—इत्यस्य धातोः; स हि मृदुत्वात् सुहिंस्यो भवति। "शरवान् वा"। हिंसावान्; कण्टकैरसौ हिनस्ति हि। "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्"‡। निरुक्तपक्षे ज्योत्स्नां

* "सुकिंशुकं शोभनकिंशुकवृक्षनिर्मितं तथा शल्मलिवृक्षनिर्मितं विश्वरूपं नानारूपं हिरण्यवर्णं हितरमणीयवर्णं हिरण्यालङ्कारयुक्तं वा सुवृतं सुष्ठु वर्तनं सुचक्रं शोभनचक्रोपेतं रथं हे सूर्ये! आरोह। अमृतस्य लोकं स्थानं स्योनं सुखकरं पत्ये सोमाय वहतुं वहन मात्मनः प्रापणं कृणुष्व कुरुष्व। अत्र निवर्त्तं द्रष्टव्यम्।"—इति सा॰ भा॰।

† पुरस्तादप्युक्त मिदम् (२भा॰२४२पृ॰ ६पं॰), रथ च नैवक्तो धातुः।

‡ "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्"—इत्यादि ऐ॰ ब्रा॰ ४, ७, १।

सोमाय ददाति; यदुक्तम्— "आदित्यतोऽस्य दीप्तिर्भवति"— इति*। "प्रजापतये वेति" उषसं वा मध्यस्थानाय प्रजापतये ददाति, के चित्त्वैतिहासिकपक्षे इच्छन्ति॥

तेषा मितिहासं शृणु। कथ मेतत्? इति—"वृषाकपायी"†, "वृषाकपेः पत्नी"। वृषाकपि रादित्यः‡, तस्य पत्नी, तद्विभूतिः; उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात्। सा पुनः "एषैव" सूर्या, "अभिसृष्टकालतमा" वृषाकपायीत्युच्यते॥

"तस्याः एषा भवति"—॥८॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे। घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥ वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा स्नुषा साधुसादिनीति वा§ साधुसानिनीति वा|| स्वपत्यं तत्सनोतीति वा। प्राश्नातु त इन्द्र उक्षण एता-न्माध्यमिकान्संस्त्यायानुक्षण उक्षतेर्वृद्धिकर्मण उक्ष-न्त्युदकेनेति वा प्रियं कुरुष्व सुखाचयकरं हविः

* १भा० १८१पृ० (१, १, १); ४७४पृ० (४, ४, ४)।

† निघ० ५अ० ६ख० (४); १भा० ४६०, ४६१पृ०।

‡ पुरस्ताद् द्रष्टव्यम् ११०४पृ० ११पं०, तट्टीप्पन्याञ्च; किञ्च ११८४पृ० १पं०, तद् व्याख्यायां तट्टीप्पन्याञ्चेति।

§ "साधुसादिनी वा" क, ख, ग।

|| "साधुसानिनी वा" क, ख, ग।

**(सुखकरं हविः*) सर्वस्माद्य इन्द्र उत्तरस्त मेतद् ब्रूम आदित्यं सरण्यूः सरणात्तस्या एषा भवति ॥ ६ ॥**

"वृषाकपायि रेवति"—इति† । इन्द्रस्यार्षम् । षष्ठे पृष्ठ्याहनि वृषाकपौविनियोगः । हे 'वृषाकपायि !', 'रेवति' धनवति ! रयिमति !, 'सुपुत्रे !' मध्यमेनेन्द्रेण समहरणसामान्यात्—सहस्थान-सामान्यात्, 'सुस्नुषे' "माध्यमिकया वाचा" मिथुनसामान्यात् । किम्? इति—'घसत्त इन्द्र उक्षणः' प्राश्नातु ते इन्द्रः तत्र स्वभूतानेतान्माध्यमिकानुक्षणोऽवश्यायसंस्त्यायान् एष इन्द्र आदित्यः; स हि तानुद्यन् पिबति । 'प्रियम्' इष्टम्, एतत् 'काचित्करं हविः' । क मिति सुखनाम‡, तस्य यदाचित साचयनं करोति, तद्भवति काचित्करम् । किं पुनस्तत्? 'हविः' उदकम्; तत्कुत्स्नावश्याय-लक्षणं हविः अत्र सवश्यायैरभिनिष्पादय । किमर्थम्? 'विश्वस्मात्' सर्वस्मात् य एष इन्द्र आदित्यः 'उत्तरः', तदर्थ मिति ॥

"स्नुषा" "साधुसादिनीति वा साधुसानिनीति वा" । शोभने अर्थे श्वसुरस्य सन्तानलक्षणे सीदत्यङ्गभाव मुपैतीति स्नुषा; साधु सनोति सन्ततिं सम्भजतीति वा स्नुषा; "सु अपत्यम्, तत्सनोतीति वा" । सु—इत्यपत्यनाम§; प्रसूयते हि तदिति, तदियं

* क-ख-ग-पुस्तकेषु एते पदे न दृश्येते ।

† ऋ॰ सं॰ ८, ४, ३, ३ ।

‡ कम्=उदकम् १भा॰ ६७४०, कम्=सुखम् १भा॰ ११८४॰ ।

§ एतस्मादेव यास्कवचनादिति बोध्यम् ।

श्वशुरस्य सनोति मज्जतीति वा स्नुषा*।—। "उक्षणः", "उक्षतः" वृद्ध्यर्थस्य†; वर्द्धयन्ति हि ते ओषधीरवस्यायाः; त एव वा बहुत्वाद् वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्य‡; "उदकेन" हि अवश्यायाः सर्व मिदं सिञ्चन्ति॥

"सरण्यूः"—इति§ वक्तव्यम्। सैव यदा स्वयं प्रत्यविभागेन सृता प्रसृता भवति, तदा "सरणात्" सरण्यूरित्युच्यते॥

"तस्याः एषा भवति"—॥ ८॥

अपागूहन्नमृतां मर्त्त्येभ्यः कृत्वी सवर्णा मददुर्विवस्वते। उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥ अप्यगूहन्नमृतां॥ मर्त्त्येभ्यः कृत्वी सवर्णा मददुर्विवस्वते ऽप्यश्विनावभरद्यत्तदासीदजहाद् द्वौ¶ मिथुनौ सरण्यूर्मध्यमं च माध्यमिकाञ्च वाच मिति नैरुक्ता यमञ्च यमीञ्चेत्यैतिहासिकास्तचेतिहास माच-

* "सव्यथैवाद्स्नुषा श्वशुराल्लज्जमाना निलीयमानेत्येव मेव"—इत्यादि ऐ० ब्रा० ३, २, ११।

† निघण्टौ मधुनामसु उक्षः, उक्षितः, उक्षा इति च (१भा० १९९ पृ०)। "उक्षति वृद्ध्यर्थः–इति स्कन्दस्वामी"—इति देवराजः। १भा० २०१ पृ० (५)।

‡ "उक्ष सेचने"—इति धा० पा० भ्वा० प० ६५७।

§ निघ० ५अ० ६ख० (५) १भा० ४९१ पृ०।

‖ "अपागूहन्नमृतां" ग, टीकास्वष्टस्वपि केषु चित्।

¶ "०दजहाद्दौ" क, ख, ग।

सूते त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार सा सवर्णा मन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव स विवस्वानादित्य आश्व मेव रूपं कृत्वा ता मनुसृत्य सम्बभूव ततोऽश्विनौ जज्ञाते सवर्णायां मनुस्तदभिवादिन्येषर्ग् भवति ॥ १० ॥

"अपागूहन्"—इति*। देवश्रवस आर्षम्। 'अपागूहन्' 'अन्तर्दधुः' एतां सुपर्णं वृषाकपाय्यः शायां 'मर्त्येभ्यः' मनुष्येभ्यः। के ते? रश्मयः। "कृत्वी सवर्णा मदद्विवस्वते"। तत्सवर्णा मेतां कृत्वा सरण्युम् अददुर्विवस्वते आदित्याय। 'उत अश्विना भरत्' स्तुतिभिः घोषाः; स ह्यश्विनोः स्तुतिकालः। अथवा सरण्युरभरत् हविषा; स ह्यश्विनोर्यागकालः। 'यत् तत् आसीत्' उषसो रूपं सरण्वा वा 'अजहात्' अत्यजत्। 'द्वा' "द्वौ" 'मिथुना' "मिथुनौ" सरण्यूः, "मध्यमश्च माध्यमिकाञ्च वाच मिति नैरुक्ताः" यदा हि सरण्यूरादित्यस्य सकाशं मण्डल मनु प्रविष्टा भवत्यविभागेन, तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इति एष तयोस्त्यागः॥

"यमञ्च यमीञ्चेत्यैतिहासिकाः"† । तन्मतेन मन्त्रार्थस्य योजना।

---

* ऋ० सं० ७, ६, १६, २। अस्याः ऋचः यमपुत्रो देवश्रवा नामर्षिः।

† "यमेतिहास माचक्षते। त्वष्टृनामकस्य देवस्य सरण्युस्त्रिशिरावेति स्त्रीपुंसात्मक मपत्यद्वय मभूत्। ततस्त्वष्टा सरण्यूनामिकां पुत्रीं विवस्वते प्रायच्छत्। ततस्तस्या विवस्वतः सकाशाद् यमयम्यौ विजज्ञाते। ततः कदाचिदात्मसदृशां देवजनितायां

त एव रश्मयः प्राणाधिदेवताभाव मापन्नाः, तेष्वन्यत्तद्रूपं चेत्यैतिहासिको व्यवहारः। तान्त्वाष्ट्रीं सरण्यू मस्याकृत्वा, तथासत्यश्विनोर्जन्म भविष्यत् पश्यन्तो लोकहिताय अमृतां अमरणधर्मिणीन्देवीम् अपागूहन्नन्तर्हिताश्चक्रुः। मर्त्येभ्यो मनुष्येभ्यः उत्तरान् कुरून् प्रति निन्युः*। ततस्तान्यां तत्सवर्णाञ्छायाप्रभवां कृत्वा ता मदर्दुर्विवस्वते। उताश्विनावभरत् यत् आश्वं तदा रूप मासीत्तेन सा सरण्यूरश्विनावभरत् अजनयत् वा अपुष्णात् उत्तरेषु कुरुषु। अजहाद् द्वा मिथुना सरण्यूः द्वावन्यौ मिथुनौ यमश्च यमीश्चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति॥

"तत्रेतिहास माचक्षते"। ऋजुरितिहासार्थः। यथा त्वाष्ट्री सरण्यूः विवस्वतोढा, सा च तस्मात् ननाश। "तदभिवादिन्येषर्ग्भवति"—॥ १० ॥

अथः समीपे तदपत्यद्वयं निधाय स्वय माश्वं रूपं कृत्वोत्तरान् कुरून् प्रति जगाम। अथ विवस्वानेतां स्त्रियं सरण्यू मिति मत्वा ता मरंसीत्। तस्यां मनुर्नाम राजर्षिरजायत। ततो विवस्वानेषा सरण्यूर्न भवतीति स्वय मश्वो भूत्वा ता मश्वरूपिणीं प्रायासीत्। ततः सङ्क्रीडमानयोस्तयोः स्खलितं रेतः पृथिव्यां पपात। अथ सा गर्भकामतया तत् पतितं रेत आजघ्रौ। ततस्तस्याः सकाशात् नासत्यो दस्रश्चेत्युभावश्विनावजायेताम्"—इति १म० २अ० १सूक्तारम्भे सा० भा०। त्रिशिरःपरिचयस्तु ऋ० सं० ७, ६, ४, २ द्र०। ('त्रिशीर्षाणं ०——— ० त्रितो गाः")।

* "ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति"—इति ऐ० ब्रा० ८ प० २ अ० ६ख०।

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति। यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश॥ त्वष्टा दुहितुर्वहनं करोतीदं विश्वं भुवनं समेतीमानि* च सर्वाणि भूतान्यभिसमागच्छन्ति यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेऽन्तर्धीयते† ॥११॥

॥ इति निरुक्तौ द्वादशाध्यायस्य प्रथमः पादः ॥१२. १.

त्वष्टा दुहित्र इति‡। पूर्वयैव समानार्थं विनियोगश्च। 'त्वष्टा' देवो विश्वकर्मा यं पुराणविदो वदन्ति, स ('दुहित्रे') "दुहितुः" 'वहतुं' "वहनं" विवाहं "करोतीति" 'इदं विश्वं' 'भुवनं' भूतजातं विवाहदर्शनप्रेप्सया 'समेति'; स हि विवाहानां स्वभावः। 'यमस्य माता' भविष्यता योगेनोच्यते 'पर्युह्यमाना' पर्यूढा, यमस्य यमौ च जनयित्वा, ततो 'महः' "महतः" 'जाया' 'विवस्वतः' देवस्य जाया भार्या हित्वा अपत्यं मिथुनावाप्यं रूपं कृत्वा 'ननाश' इति§ ॥

* "करोतीमानि"—इत्यव क, ख, ग।

† "अन्तर्धीयते" क, ख, ग।

‡ ऋ॰ सं॰ ८, ६, १२, १। उत्तमायाः प्रथमैषा।

§ "ननाश, उत्तरान् कुरून प्रति नष्टा अगच्छदित्यर्थः"—इति सा॰ भा॰।

नैरुक्तपक्षे तु 'त्वष्टा' मध्यमः, तमोभागस्य उषसो ('दुहित्रे') दुहितुः दूरे हितायाः प्रकाशरूपायाः 'वहतुं' "वहनं" विवस्वतः "करोति"। 'इदं विश्वं भुवनं ममेति' प्रभात मिति मत्वा "सर्वाणि भूतानि" स्वासुस्वासुइतिकर्त्तव्यतासु अभिसमागच्छन्ति। 'यमस्य माता पर्युह्यमाना' यमस्य मध्यमस्य माता देवधर्मेण अथवा द्युस्थानस्य यैव जाया सा मातेति। जायतेऽस्यां पुत्रत्वेन पतिः 'जाया' भार्या*, "महतो विवस्वतः" प्रकाशेन प्रोत्सार्यमाणा 'ननाश' नश्यति। सङ्क्षेपतो भाष्यकारोऽर्थं निराह।—"रात्रिरादित्यस्य" उषा जाया, सा "आदित्यस्योदयेऽन्तर्धीयते"—इति† ॥ ११ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ सप्तदशाध्यायस्य (द्वादशाध्यायस्य) प्रथमः पादः ॥ १२ । १ ॥

॥ द्वितीयः पादः ॥

**सविता व्याख्यातस्तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति तस्यैषा भवति ॥ १ (१२) ॥**

* तथा हि—"पतिर्भार्यां सम्प्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः॥"—इति म० सं० ९अ० ८ स्लो०।

† अत एव च रात्रेरपरं नाम "उषसा"—इति, एतन्मूलकच उष्मोजरपास्थान मवश्याचारव कुर्यं रवति मौ० द० कु०।

"सविता"—इति* वक्तव्यम्। स पुनरेव "व्याख्यातः" अभिधानतः; इह पुनरादित्यः। "तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति" यदा यस्मिन् काले द्यौरेव अपहततमस्का भवति, न पृथिवी; पृथिव्यां तमो भवति; दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति, स सावित्रः कालः, तस्मिन् काले आदित्यः सवितोच्यते†। "तस्य" सवितुः तत्कालोपलक्षितस्य "एषा" ऋक् प्राधान्यस्तुतिः "भवति"॥ १ (१२)॥

विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति॥ सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी कविः क्रान्तदर्शनो भवति कवतेर्वा प्रसुवति भद्रं द्विपाद्भ्यश्च चतुष्पाद्भ्यश्च व्यचिख्यपन्नाकं सविता वरणीयः प्रयाणमनूषसो विराजत्यधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्यादित्यधस्तात्तद्वेडायां‡ तमो भवत्येतस्मात्सामान्यादधस्ताद्रामोऽधस्तात् कृष्णः कस्मात्सामान्यादित्यग्निं

* निघ० ५अ० ६ख० (७); १भा ४९०, ४९१पृ०।

† "त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादश आदित्याः प्रजापतिश्च वषट्कारश्च (ऐ० ब्रा० १प० १ख० ४ख०)"—इत्येवमादिषु श्रुतानां द्वादशाना मादित्याना मेष प्रथमः, सवितेति; दिनाद्ययामाद्यतौर्याङ्गकालोऽस्याभिमतः।

‡ "०द्वेलायां" क, ख, ग।

**चित्वा न रामा मुपेयाद्रामा रमणायोपेयते न धर्माय कृष्णजातीयैतस्मात् सामान्यात्कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते कस्मात्सामान्या दिति कालानुवादं परीत्य कृकवाकोः पूर्वं शब्दानुकरणं वचेरुत्तरं भगो व्याख्यातस्तस्य कालः प्रागुत्सर्पणात्तस्यैषा भवति ॥ २ (१३) ॥**

"विश्वा रूपाणि प्रति मुञ्चते कवि"—इति* । श्यावाश्वस्यार्षम् । आभिप्लविके प्रथमेऽहनि विनियोगः; शिक्यपाशप्रतिमोके च यजमानस्याग्नौ । 'विश्वानि' "सर्वाणि" 'रूपाणि' रूपवत्स्वर्थेषु 'प्रतिमुञ्चते' आबध्नाति । तमोऽपघ्नन् रूपाण्याविःकुर्वन् । 'कविः' "क्रान्तदर्शनः" अथवा "कवतेः" धातोः गत्यर्थस्य कविः, कवति गच्छत्यसौ नित्यम् † । किञ्च कवित्वादेव 'प्रासावीत्' "प्रसुवति" जनयति । अभ्यनुजानाति च 'भद्रं द्विपदे चतुष्पदे' "द्विपाद्भ्यः" मनुष्यादिभ्यः "चतुष्पाद्भ्यः" गवादिभ्यः, यद्यत्तेषां भद्रं कल्याणं तत्तत्प्रसुवति । किञ्च । 'वि नाकम् अख्यत्' विख्यापयति नाकं द्याम् विदर्शयति; तदाहि तस्यां विकीर्णरश्मयो भवन्ति । किञ्च 'अनुप्रयाणम्, उषसः वि राजति' उषसः प्रयाण मनु विराजति प्रकाशते । सोऽस्माकं नामेदं करोत्वित्याशिषा स्तुतिर्निराकाङ्क्षा ॥

* ऋ० सं० ४, ४, १४, १ । य० वा० सं० ११, २ ।

† "कवते" निघ० २अ० १४ख० (२७); १भा० २१९, २४१पृ० । "कविः" निघ० ३अ० १५ख० (१०): १भा० २२८, २४१ । "अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः"—इत्यवटः ।

"वि नाक मख्यत्"—इति सवितुः कालोपलक्षणकं मन्त्रलिङ्गम्, तत्पशुगुणसामान्येन समर्थयन्नाह।—"अधोरामः सावित्र इति पशुसमाम्नाये विज्ञायते"*। "कस्माद्गुणसामान्यात्"? इति—"अधस्तात्तद्वेलायां तमो भवति" उपरिष्टाच्च ज्योतिः†। शुक्लं तदा दिवि भवति, कीर्णरश्मित्वात्तस्याः; अधस्तात्तु भूम्यां तदा तमो भवति। एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः॥

आह;—"अधोरामः" इति किमुक्तं भवति? उच्यते,—"अधस्तात्कृष्णः"—इति यदुक्तं स्यात् तदुक्तं भवत्यधोराम इति॥

आह;—"कृष्णः कस्मात् सामान्यात्" राम इत्युच्यते? शृणु,—विज्ञायते हि "अग्निञ्चित्वा" प्रथमं चित्वा "न रामा मुपेयात्"—इति‡। "रामा"—इति शूद्रोच्यते; सा हि "रमणाय" एव

---

* अश्वमेधादौ हि एकविंशत्यादयो यूपा भवन्ति, तेषु तदन्तरेषु च ग्राम्या आरण्याश्च बहवः पशवो बद्धा भवन्ति. तेषां स्तुत्यर्थाश्च ये मन्त्रा आम्नायन्ते, त एव पशुसमाम्नाया उच्यन्ते (य० वा० सं० २४अ० १—४०; २९अ० ५८, ५९ क० इत्यादयः द्र०)। तत्र च पशुसमाम्नाये "अधोरामः सावित्रः"—इति श्रूयते (य० वा० सं० २९अ० ५८ क०), अधोरामः अधस्तात्कृष्णः पशुः सावित्रः सवितृदेवताक इति च तदर्थः।

† एतच्च सवितृनामकादित्यस्य = प्रथमोदितस्य सूर्यस्य, अधोभागे तमसा सारूप्यः, उपरिष्टाच्च ज्योतिषा मिति फलितार्थः; इडायाम = पृथिव्याम्, सर्वदैव एकतः सूर्यो ऽस्तं याति एकत उदेति चेति तमोज्योतिषोः अपकर्षभावाभ्यां सदैव स्थितिरिति भावः।

‡ एतच्चान्यत्र शूद्राया उपयमो न दोषावह इति सुतराम्। तथा च "शूद्रावेदी पतत्यत्रेः"—इति (३अ० १६श्लो०) मनुवचन मन्त्रतमपर्युदासपर मिति चिन्तनम्।

"उपेयते"—"न धर्माय" रमणार्थमेव सा । "कृष्णजातीया"—इत्येकार्थौ शब्दावधुना उत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत् पश्चादयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण* ॥

"कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते"†, सः "कस्मात् सामान्यात्"? इति, उच्यते,— "कालानुवादं परीत्य" सवितुः काल ससौ वक्तीति‡ एवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वं कृकवाकुशब्द मधुना निर्वक्ति । "कृकवाकोः पूर्वं शब्दानुकरणम्" कृकवाकु-शब्दस्य पूर्वपदं शब्दानुकरणं कृकः—इत्येव ससौ शब्दङ्करोति; "वचेरुत्तरम्" वाकुरित्येतत्; कृकः—इत्येवं वक्तीति कृकवाकुः ॥

"भगः" वक्तव्यः§ । स पुनरेषः "व्याख्यातः" स्त्रीभगेन शब्दव्युत्पत्तितः‖ । ("तस्य कालः प्रागुत्सर्पणात्") तस्मात्सावित्रात्कालात् परत एतदुत्तमं ज्योतिर्भगाख्यं भवति¶ ॥

"तस्य एषा भवति"—॥ २ (१३) ॥

---

* एतच्च कृष्णत्वं शूद्राणां प्राकृत मार्याणाञ्चप्राकृत मासीत्तदासौ मित्यपि ज्ञेयम् । अत एव "कृष्णा अववैधामभिगात् (ऋ० सं० २, १, ८, ६)"—इति व्याख्यानावसरे "कृष्णान्, कर्मविघ्नकारिणोऽसुरान्"—इति सा०भा० । एवं बहुत्र ।

† य० वा० सं० २४अ० २५क० ।

‡ 'कृकवाकुः' ताम्रचूडः, कुक्कुट इति यावत्; स च पशुः 'सावित्रः' सवितृदेवताक इत्यर्थः । सवितुरुदयकाले एव तेषां वाक्प्रवृत्तेः । कृकवाकु-शब्देन मयूर-सरटावपि गृह्येते ।

§ निघ० ५अ० ६ख० (८); १भा० ४९०, ४९१पृ० ।

‖ १अ० १पा० ४ख०; १भा० २११पृ० ३पं० ।

¶ ह्रासभास्यादित्येष्वयं द्वितीयः; दिनाद्ययाममध्यवर्तीयांशकालोऽस्याधिकृतः ।

"त्रि नाक सद्यात्"—इति सवितुः कालोपलक्षणकं मन्त्रलिङ्गम्, तत्पशुगुणसामान्येन समर्थयन्नाह।—"अधोरामः सावित्र इति पशु-समाम्नाये विज्ञायते"*। "कस्माद्गुणसामान्यात्"? इति—"अधस्तात्तद्वेलायामसौ भवति" उपरिष्टाच्च ज्योतिः†। शुक्लं तदा दिवि भवति, कीर्णरश्मित्वात्तस्याः; अधस्तात्तु भूम्यां तदा तमो भवति। एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः॥

आह;—"अधोरामः" इति किमुक्तं भवति? उच्यते,—"अधस्तात्कृष्णः"—इति यदुक्तं स्यात् तदुक्तं भवत्यधोराम इति॥

आह;—"कृष्णः कस्मात् सामान्यात्" राम इत्युच्यते? शृणु,—विज्ञायते हि "अग्निञ्चित्वा" प्रथमं चित्वा "न रामा मुपेयात्"—इति‡। "रामा"—इति शूद्रोच्यते; सा हि "रमणाय" ए

* अश्वमेधादौ हि एकविंशत्यादयो यूपा भवन्ति, तेषु तद्वामादेषु च या[illegible] आरम्भाय बहवः पशवो बद्धा भवन्ति, तथा तुल्यर्थाय ये मन्त्रा आम्नायन्ते, त[illegible] पशुसमाम्नाया उच्यन्ते (य० वा० सं० २४अ० १—४० ; २९अ० ५८, ५९ क० [illegible] द्रष्ट०)। तत्र च पशुसमाम्नाये "अधोरामः सावित्रः"—इति श्रूयते (य० वा० सं० २९अ० ५८ क०), अधोरामः अधस्तात्कृष्णः पशुः सावित्रः सवितृदेवताक इति च तदर्थः।

† [illegible] सवितृनामकादित्यस्य = प्रथमोदितस्य सूर्यस्य अधोभागे तमसा सार्द्धः [illegible] ज्योतिषा सितिवर्णिमाकौ; इत्याणाम् = शुचियाम्, सर्वदैव एकतः कृष्ण [illegible] [illegible] वर्द्धेति चेति तमोज्योतिषोः अधऊर्ध्वभावाभ्यां सदैव सितासिति भाव

‡ एतच्चाग्न्यर्थ शूद्राया उपयमो न दोषावह इति सूचनाय। तथा च "शूद्रावेदी पततयो:"—इति (३अ० १९श्लो०) मनुवचन मत्रानुवर्त्तीदासपर मिति विज्ञेयम्।

"उपेयते"—"न धर्माय" रमणार्थमेव सा । "कृष्णजातीया"—इत्येकार्थौ शब्दावधुना उत्सृज्य रामां स्त्रियं प्रवीणादिशब्दवत् पश्चादयं रामशब्दो वृत्तः कृष्णसामान्यमात्रेण* ॥

"कृकवाकुः सावित्र इति पशुसमाम्नाये विज्ञायते"†, सः "कस्मात्सामान्यात्"? इति, उच्यते,— "कालानुवादं परीत्य" सवितुः काल ममौ वक्तीति‡ एवं परीत्य परिज्ञाय समाम्नाये तस्य सावित्रत्वं कृकवाकुशब्द मधुना निर्वक्ति । "कृकवाकोः पूर्वं शब्दानुकरणम्" कृकवाकु-शब्दस्य पूर्वपदं शब्दानुकरणं कृकः—इत्येव मसौ शब्दङ्करोति ; "वचेरुत्तरम्" वाकुरित्येतत् ; कृकः—इत्येवं वक्तीति कृकवाकुः ॥

"भगः" वक्तव्यः§ । स पुनरेषः "व्याख्यातः" स्त्रीभगेन शब्द-व्युत्पत्तितः‖ । ("तस्य कालः प्रागुत्सर्पणात्") तस्मात्सावित्रात्कालात् परत एतदुत्तमं ज्योतिर्भगाख्यं भवति¶ ॥

"तस्य एषा भवति"—॥ २ (१३) ॥

---

* एतच्च कृष्णत्वं शूद्राणां प्राकृत मार्याणान्त्वप्राकृत माधीयदायौ मित्यपि ध्रुवम् । अत एव "कृष्णा अववेधामभिगात् (ऋ० सं० २, १, ८, ६)"—इति व्याख्यानावसरे "कृष्णान्, कर्मविघ्नकारिणोऽसुरान्"—इति सा०भा० । एवं बहुत्र ।

† य० वा० सं० २४अ० ३५कं० ।

‡ 'कृकवाकुः' ताम्रचूडः, कुक्कुट इति यावत् ; स च पशुः 'सावित्रः' सवितृदेवताक इत्यर्थः । सवितुरुदयकाले एव तेषां वाक्श्रुतेः । कृकवाकु-शब्देन मयूर-सरटावपि गृह्येते ।

§ निघ० ५अ० ६खं० (८) ; १भा० ४६०, ४६१पृ० ।

‖ १अ० २पा० ४खं० ; २भा० २११पृ० १पं० ।

¶ द्वादशस्वादित्येष्वयं द्वितीयः ; द्विनाड्यामभ्युदितीयाँप्रकाशोऽस्याधिकतः ।

कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषा मित्यग्निः पृथिवीं दहति सर्वमेकोऽभिविपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्याथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद्वृषाकपिर्भवति वृषाकम्पनस्तस्यैषा भवति ॥ ८ (२७) ॥

"त्रयः केशिनः"—इति * दीर्घतमस आर्षम्। महाव्रते वैश्वदेवे शस्यते। य एते 'त्रयः' 'केशिनः' अग्निवाय्वादित्याः 'ऋतुथा' कालेकाले 'विचक्षते' यथाकालम् "अभिविपश्यन्ति" स्वकर्माधिकारयुक्तेनानुग्रहेण लोकमनुगृह्णन्ति, 'एषाम्' 'एकः' पृथिवीस्थानः "अग्निः" 'संवत्सरे' "पृथिवीं" 'वपते' "दहति" इत्यर्थः। तया हि सा कर्मण्या सम्पद्यते। "विश्वमेको अभि चष्टे" स्वाधिकारयुक्तैः "कर्मभिः" "अभिविपश्यति" अनुगृह्णाति "आदित्यः"। "ध्राजिरेकस्य ददृशे"। "गतिरेकस्य" रजसा दृतेन पार्थिवेन उदकेन वा "दृश्यते" 'न रूपम्' "मध्यमस्य" † ॥

"अथ यद्रश्मिभिरभिप्रकम्पयन्नेति"। 'अथ' 'यत्' यदा आदित्यः 'रश्मिभिः' उपसंहृतैरुपसम्पन्नैर्भूतानि 'अभिप्रकम्पयन् एति', "तत्"

* ऋ० सं० १. ३, ११. ४; अथ० सं० ९, १९, २।

† वायोः विद्युतो वेति भावः। टीकाकृतः भाष्यमस्याह—"एकस्य वायोः ध्राजिर्गतिर्देहयो दृश्यते सर्वैः, न रूपम्, अप्रत्यक्षत्वात्; स्पर्शशब्दधृतिकम्पलिङ्गैर्गम्यत इति हि न्यायविदो वदन्ति।"- इति।

तदा "वृषाकपिर्भवति"* वर्षिता चात्मायानां कम्पनश्च भूतानाम्†; सर्वो हि भगवन्यदृष्टे तद्भयात् कम्पते‡ ॥

"तस्य एषा भवति"—॥ ८ (२७) ॥

**पुनरेहि वृषाकपे सुविता कल्पयावहै। य एष स्वप्ननंशनोऽस्त मेषि पथा पुनर्विश्वस्मादिन्द्र§ उत्तरः ॥ पुनरेहि वृषाकपे सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्नान्नाशयत्यादित्य|| उदयेन सोऽस्त मेषि पथा पुनः सर्वस्माद् इन्द्र उत्तरस्त मेतद् ब्रूम आदित्यं यमो व्याख्यातस्तस्यैषा भवति ॥ ९ (२८)॥**

"पुनरेहि वृषाकपे"—इति¶। वृषाकपेरार्षम्। पृष्ठ्यस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। हे 'वृषाकपे' भगवन्! 'यः एषः' त्वं ('स्वप्ननंशनः') स्वप्ननाशनः "स्वप्नान्" "उदयेन" "नाशयसि", "सोऽस्त मेषि पथा पुनः"। यश्च त्वं 'विश्वस्मात्' "सर्वस्मात्" जगतः 'इन्द्रः' ईश्वरः 'उत्तरः' उद्गततरः, स त्वं 'पुनः'

* निरु० ५अ० ९ख० १९ (१भा० ४९०, ४९१पृ०)।

† द्वादशस्वादित्येष्वयं नवमः; दिनस्यतौ गयामान्त्यस्यतौ गांशः कालोऽस्याधिकृतः

‡ पु० ११अ० ४पा० ५ख० (११८पृ०) १२अ० १पा० ८ख० (१९१पृ०) च द्र०

§ 'पुर्नः। विश्वस्मादिन्द्र" -इति च-प्रभृतिषु।

|| "स्वप्नान्नाशयस्यादित्य" च-प्रभृतिषु।

¶ ऋ० सं० ८, ४, ४, ९।

'एहि' आयाहि, उदयं प्राप्नुहि। तत आवां 'सुविता' ("सुप्रसूतानि") सुप्रवृत्तानि शोभन मर्थ मुद्दिश्य जगतोऽनुग्रह मेतानि शोभनानि "कर्म्माणि" प्रवृत्तानि 'कल्पयावहै' सगुणानि कुर्वः * ;—इति मुद्-येनाह मनुष्ठानेनेति ॥

"यमः" वक्तव्यः †, स पुनः "व्याख्यातः" निर्वचनतः ‡ ; इह त्वादित्योऽभिधेयः § ॥

"तस्य एषा भवति"—॥ ८ (२८) ॥

यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः । अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥ यस्मिन् वृक्षे सुपलाशे स्थाने वृतशाखे वापि वोपमार्थे स्याद्वृक्ष इव सुपलाश इति वृक्षो व्रश्चनात्पलाशं पलाशना-द्देवैः॥ सङ्गच्छते यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेताजएकपा-

* "इन्द्राण्यहं चावां सूर्यो पर्य्याप्तिञ्च कुर्वाव"—इति भा० भा० ।

† निघ० ५ अ० ४ ख० १० (भा० ४४०, ४४४ पं०) ।

‡ "यमो यच्छतीति सतः" (१० अ० ०पा० ४ ख० ७ (४७०) ।

§ द्वादशस्वादित्येष्वयं दशमः, दिनान्तगामायुर्नोयांयात्वाभिहितः । "यच्-च्छते रश्मिभिरिति यमस्तयाऽवस्थ आदित्य उच्यते" —इति निघण्टुव्याख्याता माह देवराजोऽपि (१भा० ४९४३० १पं०) ।

॥ "हुतः यमे" क ।

¶ "पलाशदनाद्देवैः" क ; "पलाशदनाद्देवैः" ख, ग ।

इजन एकः पाद* एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा। एकं पादन्नोत्खिदतीत्यपि निगमो भवति तस्यैष निपातो भवति वैश्वदेव्या मृचि॥ १० (२९)॥

'यस्मिन् वृक्षे सुपलाशे"—इति†। कुमारस्य यामायनस्यार्षम्। 'यस्मिन् वृक्षे' आदित्ये; स हि स्वगत्या कालम् अतिक्रामयन् सर्वभूतानां मायूंषि चपयति। "वृश्चनाति वृक्षः"। "वृतक्षये वा" पुण्यकृद्भिर्वृते निवासे इत्यर्थः। 'सुपलाशे' सुष्ठु परागीर्णमस्ले दीप्तिमति 'देवैः' सह "रश्मिभिः" 'सम्पिबते' "सङ्गच्छते" अस्तं गच्छत्यादित्यः। तत्र किमिति? 'अत्र' 'नः' अस्मान् पुण्येन कर्म्मणा विद्यया च तत्प्रापिकया गतात्मनः 'पुराणान्' इव तन्निवासिनः 'अनु' ("वेनति") वेनतु ("कामयेत") कामयतु सम्प्रीणयत्वित्यर्थः॥

"वृक्षे इव सुपलाशे"—इति, ऐतिहासिकपक्षे स्वगृहमुपागतानस्मान् सुपलाशवृक्षप्रच्छन्नस्वनिवासे पितृराजो 'यमः' 'पुराणान्' इव तल्लोकनिवासिनः पितॄन् अनु कामयतु। अस्मिन् पक्षे देवैः सम्पिबत इति तदनुचारिणो गृह्यन्ते देवा इति‡॥

---

* "एकपाद" क, ख, ग।

† ऋ० सं० ८, ७, १७, १।

‡ "नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाजगाम। अथ सर्थ इदमादिकैर्मन्त्रैः प्रतिपाद्यते। यद्वा कुमारो नाम नचिकेतसोऽन्यः कश्चिदृषिः। यच्छतीति यम आदित्यः। तं मनेन सूक्तेन तुष्टाव।"—इति सा० भा०।

“अजएकपात्”—इति वक्तव्यम्*। स पुनः अय मादित्यः† नित्यम्, “अजनः” गमनः “एकः” च “पादः” अस्य; विज्ञायते हि—“अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः” इति‡। “एकेन पादेन पातीति वा”। सर्व मिदं जगत् एकेनांशेनानुप्रविश्य पाति रक्षति स्थितिकाले प्राणात्मना ऽन्नं पचन्नजनश्चेत्यज एकपात्। “एकेन पादेन पिबतीति वा”। एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्यजनश्चेत्यजएकपात्। अथ “वा” अजनो गमनः, “एकोऽस्यपाद इति” अजएकपात्। जीवभूतोऽस्य कृत्स्ने जगति एकः पादोऽनुप्रविष्टः;

निगमोऽपि हि भवत्येवास्मिन्नर्थे—“एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्। स चेत् तमुद्धरेदङ्ग न मृत्युर्नामृतं भवेत्”। एक मात्मनः पाद मंशं नोत्खिदति नोद्धरति इति आदित्यो हंसः सहनस्तमसो वाध्वनो वा हन्ता। कुतः पुनर्नोत्खिदति? ‘सलिलात्’ सन्मात्रे ब्रह्मणि लीनादेतस्माज्जगतः, ‘उच्चरन्’ अहन्यहनि उद्यन्नित्यर्थः। ‘स चेत्’ ‘तं’ जीवभूत मात्मनः पाद मेतस्मात् जगतः ‘उद्धरेत्’ ततस्तदुद्धरणसमकाल मेव ‘अङ्ग’ क्षिप्रं ‘न मृत्युर्नामृतं भवेत्’; — सर्व मिद मव्यपदेश्यं सदेव स्यादित्यर्थः§॥

---

* निघ० ५ अ० ६ ख० १८ (भा० ४९०, ४९४पृ०)।

† द्वादशस्वादित्येष्वय मेकादशः; दिनान्त्ययामसमध्यवर्त्तीयांशः कालोऽस्याधिष्ठानः। “अस्तभावस्थ आदित्य उच्यते”—इति चाहेह निघण्टुव्याख्यायां देवराजः।

‡ “तदेतच्चतुष्पाद् ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्म मथाधिदैवत मग्निः पादः”—इत्यादि छा० उ० ३, १८।

§ द्वादशपाद आदित्यः, तत्र यस्योदये खल्वेकः पादोऽवशिष्येत स एवैकपादिति चाह कश्चित्।

"तस्य एष निपातो भवति" साधारण्येन "वैश्वदेव्या मृचि"— ॥ १० (२९) ॥

पावी॒रवी॑ त॒न्य॒तुरेक॑पाद॒जो दि॒वो ध॒र्त्ता सिन्धु॒राप॑ः समु॒द्रिय॑ः। विश्वे॑ दे॒वास॑ः शृण॒व॒न् वचां॑सि मे॒ सर॑स्वती स॒ह धी॒भिः पुर॑न्ध्या॥ पविः शल्यो भवति यद्विपुनाति कायन्तद्वत्पवीर मायुधन्तद्वानिन्द्रः प॑वीर॒वान्। अ॒ति॒- त॒स्थौ प॒वी॑र॒वा॒नित्य॒पि॑ निगमो॒ भवति। तद्देवता वाक् पावीरवी पावीरवो च दिव्या वाक् तन्यतुस्तनिची वाचोऽन्यस्या अजश्चैकपाद्दिवो धारयिता (च*) सिन्धु-श्चापश्च समुद्रियाः (च†) सर्वे च देवाः सरस्वती च सह पुरन्ध्या स्तुत्या प्रयुक्तानि धीभिः कर्मभिर्युक्तानि शृण्वन्तु वचनानीमानीति पृथिवी व्याख्याता तस्या एष निपातो भवत्यैन्द्राग्न्या मृचि॥ ११ (३०)॥

"पावीरवी तन्यतुः"—इति ‡। वसुकर्णस्यार्षम्। वैश्वदेवे शस्त्रे विनियोगः। "पविः शल्यो भवति"। कस्मात्? "यद्" "विपु-नाति" विदारयति "कायम्" तेन शल्येन "तद्वत् पवीर

* "नास्त्येतत् पदम् ख-प्रभृतिषु।

† नास्त्येतत् पदम् क-ख-ग-पुस्तकेषु।

‡ ऋ० सं० ८, १, ११, ९।

मायुधम्"। रो मत्वर्थे। तेन मत्त्ववता आयुधेन "तद्वानिन्द्रः पवीरवान्" ॥

यथा चैतदेवं तथैव निगमः।—"अतितस्थौ पवीरवान्"—इति। "यो जनान् महिषांइव"* । विश्वमन्योरार्षम्। 'यः' इन्द्रः 'महिषान्' अतिमहतोऽप्यसुरजनान् 'तुधा' युद्धेन ('अति') अतीत्य 'तस्थौ' 'तिष्ठति' 'पवीरवान्' आयुधवान्। अपि च 'अपवीरवान्' अनायुध इत्यर्थः। सायुधो निरायुधश्च नित्य मसुरजनान् महतोऽपि अतितिष्ठति यः, स इदं नामास्माकं करोत्विति† ॥

"तद्देवता वाक् पावीरवी" स इन्द्रो यस्या माध्यमिकाया वाचो देवता, सैन्द्री वाक् पावीरवी‡। 'तन्यतुः' ("तनित्री") तनयित्री "वाचोऽन्यस्याः"। तदुक्तम्—"तां विश्वरूपाः पशवो वदन्ति"। सा च "दिव्या वाक्": "अजश्चैकपात्§ दिवो धारयिता"। एतदत्र द्युस्थानत्वम् अजस्यैकपदः। "सिन्धुश्च" नदः, "आपश्च"

---

* "यो जनान् महिषाँ इवातितस्थौ पवीरवान्। उतापवीरवान् युधा॥"—इति ऋ० सं० ८, १, २४, ३।

† "योऽसमातिः, जनान् स्वविरोधिभूतान्, अतितस्थौ अतिक्रम्य तिष्ठति पराभावयतीत्यर्थः। क इव? महिषान् सिंह इव। कीदृशः सन्? पवीरवान्। पवीरः पविः खड्गवान्। उत अपि च अपवीरवान् अपगतखड्गः सन्। खड्गसाहाय्य मपि कदाचिन्नापेक्षत इत्यर्थः। उत अपि च किं कुर्वन्? युधा योधनेन, युद्धा इत्यर्थः।"—इति सा० भा०।

‡ "पावीरवीं शंसति; वाग् वै सरस्वती पावीरवी, वाच्येव तद्वाचं दधाति"—इति ऐ० ब्रा० ३प० ३ख० १२ख०।

§ "शुन्ध्युरसि विश्वव्यचा अजोऽस्येकपात्"—इति य० वा० सं० ५, ३३।

मसुद्रियाः, 'विश्वे च देवाः' "सर्वे च देवाः" 'शृण्वन्' "शृण्वन्तु" "इमानि वचनानि" स्तुतिलक्षणानि। किं वचनान्येव? किं तर्हि? 'सह धीभिः' "कर्मभिः" हविर्दानयुक्तैः सहितानि। 'सरस्वती' "च" शृणोतु 'पुरन्ध्या' "सह" बहुधात्र्या, माध्यमिकया वाचा।—इत्येतदाशास्महे ॥

निर्वचनस्यास्या ऋच्युत्तरे पादे सम्यक् पाठो ऽन्वेष्यः* ॥ "पृथिवी"†, "व्याख्याता"‡। "तस्या एष निपातो भवति" दिवः पृथिव्याः "ऐन्द्राग्न्या ऋचि";— न स्तुत्यत्वेन; किं तर्हि? नैघण्टुकेन केवलम् ॥ ११ (३०) ॥

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः। अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ इति सा निगदव्याख्याता समुद्रो व्याख्यातस्तस्यैष निपातो भवति पावमान्यामृचि ॥ १२ (३१) ॥

"यदिन्द्राग्नी परमस्याम्"—इति§। कुत्सस्यार्षम्। हे 'इन्द्राग्नी!' 'वृषणौ' ('यद्') यदि युवां 'परमस्यां पृथिव्यां' द्युलक्षणायाम्,

* मदन्वेषणेन न किमपि फलं सम्पन्नम् ।

† निघ० १अ० १ख० १९ (१भा० ४९०, ४९४पृ०)।

‡ १अ० ४पा० १ख० १भा० ९४पृ० १८पं० (२भा० ११४पृ०)।

§ ऋ० सं० १, ७, १०, १।

शरीर मादित्यः; आश्रयणाद्वा सर्व मिद मस्मिन्नाश्रित मिति। तस्मिन् 'सप्त ऋषयः' "रश्मयः" 'प्रतिहिताः' प्रत्येकं हिताः निहिताः। ते पुनः सप्तैव अन्यूनाधिकाः सन्तः, सार्वदिक मुदक मुपनयन्तः, तेनै-द्वास्त मादित्यं 'सद' सदैव ('अप्रमादम्') "अप्रमाद्यन्तः" अनु-त्सर्गेण स्वस्य कर्मणः 'रक्षन्ति'; निरिन्धनः पार्थिवोऽपि ह्यग्निः दन्धनक्षयान्निर्वाप्येत. "त एव" सप्त सुप्ताः "आपनाः" सर्वस्य लोकस्य व्यापनाः, 'स्वपतः' अस्त मुपगच्छतः. अस्यादित्यस्यैव तं 'लोकम्' आत्मानं गच्छन्ति, वाह्यं मण्डलं प्रविशन्ति। तेष्वनुप्रविष्टेषु 'तत्र' सुप्तेषु उपरतप्रकाशवृत्तिषु तत्रान्तर्गतो 'जागृतः' तन्मण्डला-न्तरपुरुषः, तदधिष्ठाता, यो ऽसौ हिरण्यश्मश्रुः हिरण्यकेश इति विज्ञायते*, वायुश्च ।—"इत्यधिदैवतम्" ॥

"अथाध्यात्मम्" ।— मण्डलवदस्मच्छरीरे रश्मिवदिन्द्रियाणि प्रतिहितानि निहितानि†; तच्छरीरं नित्यं रूपाद्यालोकनाद्युपकारेण रक्षन्ति अप्रमाद्यन्ति, सप्तापनानि व्यापनानि विषयाणां शरीरस्य वा। तान्येव स्वपतोऽस्य जीवस्य सुखदुःखभोक्तुः लोकं शरीर मेव प्रत्यस्तमित मीयुः;—बुद्धिद्वारेण भोक्तर्येव भावनानुरूपेण लीयते। यद्भावनोपपादकः स्वप्नभोक्तुः स्वप्नो भवति, तत्र जागृतः शरीरपरि-पालनार्थम्; प्राज्ञश्चात्मा परमात्मा चिन्मात्रेण यः शरीरं व्याप्य वर्त्तते;

* "हिरण्यकेशः" ऋ० सं० १, ७९, १; "हिरण्यश्मश्रुः" ऋ० सं० १, १९२,९।

† "सप्त ऋषयः प्राणाः, त्वक्चक्षुःश्रवणरसनाघ्राणमनोबुद्धिलक्षणाः, शरीरे प्रति-हिता व्यवस्थिताः।"—इति सत्यो०।

तैजसस्य प्राणोऽन्नं पानं पञ्चमव्यूहस्य रसान्तर्भूतं तेजोवायुकल्पितः * ॥

"तेधा मेधा अपरा भवति"—। सा पुनः किमर्थम्? एष्वाय एवेति स्फुटतार्थे ॥ २ (२७) ॥

तिर्यग्बिलश्चमस † ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम्। अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥ तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं सर्वरूप मत्रासत ऋषयः सप्त सहादित्यरश्मयो ये अस्य गोपा महतो बभूवुरित्यधिदैवत मथाध्यात्मं तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन्यशो निहितं सर्वरूप मत्रासत ऋषयः सप्त सहेन्द्रियाणि यान्यस्य गोप्तृणि ‡ महतो

* "सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्। २। जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पादः। ३। स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। ४। यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। ५।"—इति मा० उ०। अथाह च गौडपादाचार्यः——"बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः। घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः।"—इति।

† "तिर्यग्बिलश्चमस"—इति ख (सर्वत्रैवाच); "तिर्यग्बिलश्चमस"—इति च।

‡ "गोप्तृणि" क, ख, ग।

एते 'देवाः' रश्मयः नित्यं स्वस्येव मण्डलादृमावरणलाद्न्तरिक्ष्य * सर्वतो यन्ति। अथवा 'ऋजूयताम्' "ऋतुगामिनाम्" ऋतावृतौ यथाकाल मस्मात् मण्डलात् गच्छताम् †। 'सुमतिः' शोभना मतिः, प्रसादाभिमुखी मतिः। सा ("नः") अस्मान् प्रति 'निवर्त्त-ताम्' नियमेन वर्त्तताम्; तत्पूर्विका च 'रातिः' धनलाभोऽस्मान् प्रति नियमेन वर्त्तताम्। ततस्तु तेन धनलाभेन उपजनितसामर्थ्याः सन्तो 'वयम्' तेषा मेव 'देवानां' 'सख्यं' समानतां याज्ञे कर्मणि समान सङ्गभावम् 'उपसेदिम' ("उपसीदेम") उपगच्छेम वयम्। ततश्च तथाभूताना मस्माकम् 'आयुः' ते देवाः 'प्र तिरन्तु' "प्रव-र्द्धयन्तु" 'जीवसे' "चिरं जीवनाय"।—इत्येतदाशास्महे॥

"विश्वे देवाः"‡ व्याख्याः। "सर्वे देवाः" त एव रश्मयः, उपस्थित-विश्वविशेषणाः सन्तो विश्वे देवा भवन्ति॥

"तेषां" तदभिधानविशिष्टानाम "एषा" प्राधान्यस्तुतिः "भवति"—॥ ५ (३८)॥

**ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वांसो दाशुषः सुतम्॥ अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुत मिति**

* "मण्डलादृमेनावरणलाद्न्तरिक्षस्य"—इति क० ह० पाठः।

† "ऋजूयताम्—ऋजु मार्जवयुक्तं सम्यगनुष्ठातारं यजमान मात्मन इच्छताम्"—इति सा० भा०।

‡ निघ० ५ख० ६ख० १० (१भा० ४८०, ४८६ पृ०)।

तद्देतदेक मेव* वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्ग मिति शाकपूणिरनत्यन्तगतस्त्वेष उद्देशो भवति बभ्रुरेक इति दश द्विपदा अलिङ्गाः† भूतांशः काश्यप आश्विन मेकलिङ्ग मभितष्टीयं सूक्त मेकलिङ्गं साध्या देवाः साधनात्तेषा मेषा भवति॥६ (४०)॥

"ओमासश्चर्षणीधृतः"—इति‡। मधुच्छन्दसा दृष्टा। प्रउगे शस्त्रे विनियोगः। वैश्वदेवग्रहानेन प्रातःसवने ग्रहो गृह्यते। हे 'विश्वे देवाः!'§ ये यूयम् 'ओमासः' "अवितारः" रक्षितारः, 'चर्षणीनां' मनुष्याणां स्वेनोपकारेण; "अवनीया वा" तर्पणार्हाः। ('धृतः') धारयितारश्च स्थितिकर्त्तारः। ते यूयं 'दाश्वांसः' "दत्तवन्तः" मनसा कृतसङ्कल्पा भूत्वा इदं नामास्माभिरस्मै देय मिति। ततः अस्य 'दाशुषः' "दत्तवतः" हवींषि यजमानस्यैतं 'सुतम्' अभिषुतं सोमं पातुम् "आगत"।—इत्येतदाशास्महे॥

अधुना विश्वान् देवानधिकृत्य तद्गत मेवाधियज्ञं विचारयिष्यन्नु-

* "तद्देतदेक मिव" क, ख, ग।

† "बभ्रुरेक इति दश द्विपदा अलिङ्गाः"—इत्येषोऽंशस्तु "सूक्त मेकलिङ्गम्"—इत्यतः परस्तात् दृश्यते क-ख-ग-पुस्तकेषु।

‡ ऋ० सं० १,१६,५; य० वा० सं० ७,३३।

§ "एतन्नामका देवविशेषाः"—इति सा० भा०। वस्तुतो बहुदेवताभिप्रायिक मेवैतत् सर्वत्र प्रयुज्यते : न तु विशेषदेवगणाभिप्रायिकम्।

पोद्घ्नन्ति।—"तदेतदेक मेव * वैश्वदेवं गायत्रं तृचम्"—इत्ये मादि। 'तत्'—इति समाम्नायस्यानुस्मरणे। 'एतत्'—इति वक्ष्यमाणार्थ-सन्निधीकरणाय। 'एकं' 'तृचं' 'सूक्तं' 'वैश्वदेवं' 'गायत्रं' गायत्रेण छन्दसा युक्तं 'दशतयीषु' सर्वास्वपि ऋक्षु शाखासु † 'विद्यते';—नान्यदस्त्येवास्मिञ्छन्दसि; प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे। तत्र किं कर्त्तव्यम्?—इति, यत आह;—"यत्तु किञ्चिद्बहुदैवतं" मन्त्रजातं गायत्रेण छन्दसा युक्तम्, "तद्वैश्व-देवानां स्थाने युज्यते"। न्याय्य मित्यतो "यदेव" ("विश्वलिङ्गम्") विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा, तदेव वैश्वदेवानां स्थाने विनि-युज्यते;— न बहुदेवतामात्रेण—"इति" "शाकपूणिः" मन्यते ‡। तत् किं सर्वस्यापि यास्काचार्यस्यैतदेवाभिमत मुत न? इति, यत आह;—"अनत्यन्तगतस्त्वेष उद्देशो भवति" अनैकान्तिक एष उद्देशः। उद्देशः प्रतिज्ञा;—"यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां स्थाने विनियुज्यते"—इति। कथ मनैकान्तिकम्? इति; वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थ मुत्पद्यमान माम्नायस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तु मर्हति, विश्वयुक्तमन्त्रजातवत्त्वात्कर्मसु सर्व-वैश्वदेवेषु तच्छन्दस्केषु अल मिति;— न च तत्सर्वास्वपि दश-

---

* "तदेतदेक मिव"—इति क० ष० पाठः। सायणधृतपाठस्तु तदेतदेक मेवेत्ये-वेति स एव समीचीनो मन्यतेऽस्माभिः।

† ऋग्भा० २४४पृ० ७पं०, २९५पृ० ३पं० द्र०।

‡ "अत्र विश्वशब्दः सर्वशब्दपर्यायः इति यास्कस्य मतम्; देवविशेषस्यैवासा-धारणं लिङ्ग मिति शाकपूर्णेर्मतम्"—इति सायणेनोक्तो निष्कर्षार्थः।

तयोश्चास्ति छन्दस्यलङ्कर्मोत्पादे ; प्रयोजनं च तच्छन्दोयुक्तैरपि त्रिविधैर्मन्त्रैर्भवति ; न च ते तथाविधाः सन्तीति बहुदेवताश्च तस्मिन् छन्दसि सन्ति। तत्किं सन्तु तस्य कर्मणः प्रहाणम्, उत वा तत्स्थाने बहुदेवतानि सूक्तान्योप्यन्ताम्? इति उच्यते ;—युक्तं यद्बहु-देवतानि श्रोप्येरन्निति यास्काचार्यः पश्यन्नाह—"यत्तु किञ्चिद्बहु-दैवतं तद्वैश्वदेवानां स्थाने युज्यते"। सेय मनुत्पत्तिर्गायत्रे छन्दसि वैश्वदेवानां मन्त्राणां यावदलङ्कर्मणि गमयति। बहु-विश्वशब्दयो-रितरेतरार्थाभिधेयप्रत्यासत्त्या बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त एवेति। अपि चैव मनत्यन्तगत इत्युद्देशः। येन "भूतांशः काश्यप आश्विन मकलिङ्गम्"। भूतांशो नाम ऋषिः काश्यपः, स एकेनाश्वि-लिङ्गेन युक्त मनेकर्चं सूक्तं ददर्श, तत्र यास्त्वप्यश्विलिङ्गं सूक्तं नास्ति तासा मप्याश्विनीत्वं तेनैवैकेनाश्विलिङ्गेन ; यथैकेनापि छत्रिणा मध्यगतेन छत्रिणो भवन्ति,*—एव मेकेन विश्वलिङ्गवचनेन यावन्ति सूक्तानि कर्माणि संयुज्यन्ते बहुदेवतानि अविश्वलिङ्गान्यपि तानि तदर्थसाधकानीति॥

अथाम अश्विलिङ्गम्, येन पर्फरीसूक्तं सर्व माश्विनम्†।

* छत्रिणो यान्तीति लक्षणाया उदाहरणम्; वैयाकरणाना मालङ्कारिकाणां नैयायिकानां च लक्षणा-प्रकरण मेव द्रष्टव्यम्।

† ऋक्संहितायाः दशममण्डलीय-नवमाध्यायस्याद्यं सूक्त मेकादशर्चम्। तत्र षष्ठ्या मृचि "पर्फरीका"-श्रुतेः तत् पर्फरीसूक्त मित्युच्यते। तस्य च सूक्तस्याग्निमाया मृच्येव "अश्विनोः"—इत्येकं पदं दृश्यते ; एतस्माच्छब्दनेनैव स मन्त्रोऽश्विलिङ्गः सम्प-द्यते, तथा व्यवह्रियते च सर्व मेवैकादशर्चं तत् पर्फरीसूक्त मश्विदेवताक मिति।

"ऋध्याम स्तोमं सनुयाम"—इति*। हे अश्विनौ! वयं 'स्तोमं' त्रिवृत्-पञ्चदशादिकम्† 'ऋध्याम' ऋध्यास्म, वर्द्धयेम। किञ्च; 'वाजं' हविर्लक्षणमन्नं युवाभ्यां 'सनुयाम' प्रयच्छेम। तस्माद् युवां 'सरथा' सरथौ, समानरथौ, एकमेव रथमारूढौ सन्तौ 'इह' अस्मिन् कर्मणि 'नः' अस्मदीयं 'मन्त्रं' मननीयं स्तोत्रम् 'उप यातम्' उपागच्छतम्। 'गोष्वन्तः' गोकुक्षिस्थावस्थितं 'पक्वं' परिणतम्, तदेव ('मधु') मधुरं 'यशो न' यश इत्यन्ननाम, नस्त्वार्थे, क्षीराज्यादिलक्षणम्, महावीरपात्रे अवनीयमानम्, अन्नमापेत्य आगच्छतमिति सम्बन्धः। एवमुक्तप्रकारेण 'भूतांशः' एतन्नामा ऋषिः 'अश्विनोः' 'कामम्' अभिलाषमात्मीयाभिः स्तुतिभिः 'अप्राः' आपूरयत, सम्पूर्णमकार्षीदित्यर्थः। "प्रा पूरणे" आदादिकः (प०), व्यत्ययेन मध्यमः‡॥

"अभितष्टीयं सूक्तम्"§ ऐन्द्रम्, तदपि "एकलिङ्गम्"—इति॥

* ऋ० सं० ८,६,२,६; १०,९,२,११। त्रिष्टुप्, आश्विनौ। पाठस्त्वेवम्—"ऋध्याम स्तोमं सनयाम वाजमा नो मन्त्रं सरथेहोप यातम्। यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः॥"—इति।

† त्रिवृदादिस्तोमलक्षणानि तु "तिसृभ्यो हिङ्करोति"—इत्यादीनि ताण्ड्यीयानि (१,२) द्रष्टव्यानि।

‡ सर्वमेतद् व्याख्यानं सायणभाष्यत उद्धृतमिव गम्यते; इत एव वा सायणेन उद्धृतमित्यपि सम्भाव्यतेव।

§ ऋक्संहितायास्तृतीयमण्डलस्य तृतीयाध्यायस्य नवमं सूक्तमभितष्टीयं नाम। तस्य हि सूक्तस्याद्या ऋक् "अभितष्टेव"—इति, एतदेव तादृशे नामकरणे निदानम्। एतच्च सूक्तम् दशर्चम्। तत्र "शुनं हुवेम"—इत्यन्त्या; यथैवैकत्र "इन्द्रम्"—इति

यथा—"शुनं हुवेम"—इति*। विजयाय 'समत्सु' संग्रामेषु नित्यं 'घ्नन्तं' 'वृत्राणि' वारकाणि शत्रुजातानि, 'सञ्जितं' समस्तानां वीराणां धनानाञ्च जेतारम्, 'शुनम्' शूनम्, उत्साहेन प्रवृद्धम्, 'नृतमम्' जगतः अतिशयेन नेतारम् 'ऊतये' रक्षणाय 'अस्मिन्' 'भरे' संग्रामे 'वाजसातौ' यस्मिन् शत्रून् जित्वान्नानि सम्भज्यन्ते तस्मिन्, 'हुवेम' वयं आह्वयामहे, तम् 'इन्द्रम्' एवमादिगुणयुक्त मात्मनो विजयायेति† ॥

"साध्याः"‡ "देवाः"; "साधनात्" ते हि सर्व मिदं साधयन्ति;

श्रूयते; अत एव सर्वत्रैतत् सूक्त मैन्द्र मिति व्यवह्रियते। एतच्च सूक्तम् चातुर्विंशिके ऽहनि माध्यन्दिने सवनेऽच्छावाकस्य शस्त्रम् (आ० श्रौ० सू० ७,४)। ब्राह्मणञ्चात्र—"अभितष्टेव दीधया मनीषा मित्यच्छावाकोऽन्वाह शंसत्यभिवत्यै रूप मभि प्रियाणि मर्मृशत् पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशन्तो यन्त्य-न्यारभमाणाः परो वा अस्माल्लोकात् स्वर्गो लोकस्त मेव तदभिवदति कवींरिच्छामि सन्दृशे सुमेधा इति ये वै तेन ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति" —इति ऐ० ब्रा० ६,४,४।

* एषा च ऋक्, संहितायां बहुत्र दृश्यते। यथाहि—३,३०,२२; ३,३१,२२; ३,३२,१७; ३,३४,११; ३,३५,११; ३,३६,११; ३,३८,१०; ३,३९,९; ३,४३,८; ३,४८,५; ३,४९,५; ३,५०,५; १०,८९,१८; १०,१०४,११. इति; परं तृतीयमण्डलस्थोनचत्वारिंशत्तमसूक्तीयैवैषा; तस्या एव अभितष्टीयसूक्तान्त्यत्वात्। पाठस्त्वेषः—"शुनं हुवेम मघवान मिन्द्र मस्मिन् भरे नृतमं वाजसातौ। शृण्वन्त मुग्र मूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानाम्॥"—इति ॥

† एतस्याः खलु सायणीयं व्याख्यानं ऋग्वेदे ३,१,४,७. द्रष्टव्यम्।

‡ निघ० ५अ० ६ख० २८ (१भा० ४९०,४९१पृ०)।

यदन्येन सर्वकर्मभिरसाधितं तत्साधयन्तीति साध्या उच्यन्ते। ते च पुनः प्राणाः विश्वसृज ऋषयः; ये सहस्रसंवत्सरसत्त्रेणेदं विश्व मसृजन्त, त एवैतेऽधिदैवं रश्मयः। विज्ञायते हि—"प्राणा वै सप्तऋषयः साध्या विश्वसृजः"—इति* ॥

"तेषा मेषा" प्राधान्यस्तुतिः "भवति"—॥ ६ (४०) ॥

यज्ञेन यज्ञ मयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ यज्ञेन यज्ञ मयजन्त देवा अग्निनाग्नि मयजन्त देवा अग्निः पशुरासीत्त मालभन्त तेनायजन्तेति च ब्राह्मणं तानि धर्माणि प्रथमान्या ते ह नाकं महिमानः स मसेवन्त यत्र पूर्वे स ॥ सन्ति देवाः साधना द्युस्थानो देवगण इति नै पूर्वन्देवयुग मित्याख्यानं वसवो यद्विवसते सर्वं वसुभिर्वासव इति समाख्या तस्मात् पृथिवीस्था इन्द्रो वसुभिर्वासव इति समाख्या तस्मान्मध्यस्थ वसव आदित्यरश्मयो विवासनात्तस्माद् द्युस्थानास्तेषा मेषा भवति ॥ ७ (४१) ॥

* "प्राणा वा ऋषयो दैव्यासः"—इत्याद्यपि द्रष्टव्याः ऐ० ब्रा० ९, ४, ९

"यज्ञेन यज्ञ मयजन्त—इति*। दीर्घतमस आर्षम्। "अग्नि-नाग्नि मयजन्त देवाः"। उक्तञ्च—"त मुग्निन्यथुः सर्वगणं सर्वमामा-नम्"—इति†; 'तम्' अग्निं स्थावरजङ्गमभावेनेति। "तं वध्नुरायां त्वयं वषत्या"—इत्येतस्माद्दर्शनवतः‡ प्रयोक्तुः सर्व मिद मग्निरित्यभिप्रेत्य ब्रवीति।—('यज्ञेन') "अग्निना" स्थावरजङ्गमभाव मापन्नेन हवि-र्भूतेन§ ('यज्ञम्') "अग्निम्" एव सर्वदेवताभूत मादित्यादिप्रनाडि-कया महान्त मात्मानम् 'अयजन्त' 'देवाः' दैवभाविनः, 'पूर्वे' ज्ञानकर्मसमुच्चयकारिणो यजमानभाव मापन्नाः, 'साध्याः' विश्वसृजः ऋषयः; प्राणाः। 'तानि धर्माणि' तानि कर्माणि, तथाविधज्ञान-युक्तानि, 'प्रथमानि' मुख्यानि महदात्मभावापत्तये 'आसन्'; तैरपि क्रियन्ते इत्यर्थः। 'ते' च तानि कृत्वा नियमेनैवानन्य-

* ऋ० सं० १,२,२२.४ ; ८.४,१९ ९ । य० वा० सं० ३१,१९ । अग्निमन्थने यज्ञेन मित्येषा परिधानीया (आ० श्रौ० सू० २,१९.)। एषा च ऋक् अघमर्षणीये पद्यमाने। "स्तेयं कृत्वा द्विजो मोहात् चिराचोपोषितः शुचिः। स्नातं जप्त्वास्य-मीयं चिपं मुच्येत किल्बिषात्"—इति ऋग्वि० १, २९।

† पुरस्तात् ९अ० ९पा० ८ख० (२भा० ९८०पृ०)।

‡ पुरस्तात् १०अ० ९पा० ८ख० (१०७—१११पृ०)।

§ "यज्ञो वै देवेभ्य उदक्रामत्, ते देवा न किञ्चनाशक्नुवन् कर्तुं न प्राजानं-स्तेऽब्रुवन्नदितिं त्वयेमं यज्ञं प्रजानामेति। सा तथेत्यब्रवीत्। सा वै वो वरं वृणा इति। वृणीष्वेति सैत मेव वर मवृणीत—मत्प्रायणा यज्ञाः सन्तु—मदुदयना इति। तथेति। तस्मादादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो वरवृतो ह्यस्याः। अथो एतं वर मवृणीत—मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीं मिति।"—इत्यादि ऐ० ब्रा० १प० १अ० १ख०।

स्तदक्षरं* भवति रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा इत्यधिदैवतमथाध्यात्मं शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशिधर्म तदक्षरं भवतीन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नधिनिषण्णानीत्यात्मप्रवादाः† ॥ ११ ॥

"आदित्य इति पुत्रः शाकपूणिः एष ऋग्भवति"—इति, मण्डलमभिप्रेतम्। "यदेन मर्चन्ति" यस्मादेन मर्चन्ति, तस्मादृक्। "तस्य" "यदन्यत्", ("मन्त्रेभ्यः") मण्डलगतेभ्यो ऽवयवेभ्यः, "तत्" परम् "अक्षरं" व्यवनम्, तत्र सर्व मोत मिति : "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"—इति (तै०आ०१०,१,२) श्रुतेः। "रश्मयोऽत्र देवा उच्यन्ते, य एतस्मिन्नधिनिषण्णा इति"। यस्तन्मण्डलमक्षरात्मना न वेद, किं स ऋचा आदित्येन मण्डलात्मना करिष्यति? नासौ यथावदादित्यं वेदेत्यर्थः। "य इत्तद्विदुस्त इमे समासत"--इति व्याख्यातम् (३५५पृ०३पं०)‡ ॥

* "यदन्यस्मात्तेभ्यस्तदक्षरं" ख, ग, झ।

† "यान्यस्मिन्नात्मन्येकं भवन्तीत्यात्मप्रवादाः" च, छ, ज।

‡ "अन्ये त्वन्यथा वर्णयन्ति :--'ऋचः' ऋगर्चनीयः 'आदित्यः'; आदित्यमण्डलमग्न्यादिमयं वा। "ऋग्भिः पूर्वाह्णे दिवि देव ईयते (प्र० ब्रा० ५, ७)"—"आदित्यो वा एष एतन्मण्डलं तपति, तत्र ता ऋचः (तै० आ० १०, १, २)" इत्यादिश्रुतेः। तस्य सम्बन्धिनि 'अक्षरे' 'परमे व्योमन्'- इति, उत्तरार्धचे यत्रापि "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"— इत्यादि (तै० आ० १०, १, २) [illegible]. 'यस्मिन्' सर्वे 'देवाः' द्योतमानाः रश्मयः 'निषेदुः' वर्तन्ते। 'यः'

आत्मेत्यात्मप्रवादाः। अथ स्कम्भवति शरीर मिति॥ "इन्द्रियाण्यत्र देवा उच्यन्ते"; तानि हि विषयेषु द्योतयन्त इति देवाः। "तस्य यद्विनाशिधर्मं" चेतनामतत्वमात्रविज्ञानम्, "तत्" परमम् "अक्षरं" व्यवनम्। यस्तदक्षरं न वेद, किं ममौ ऋचा शरीरेण करिष्यति? न तस्य जीवितेनार्थः। "य इत्तद्विदुः"—इति व्याख्यातम् (३५५पृ० ३पं०) *॥ ११॥

अक्षरं न क्षरति न क्षीयते वाक्षयो भवति† वाचो-ऽक्ष इति वाक्षा यानस्या‡ञ्जनात्तत्प्रकृतीतरद्वर्त्तनसा-मान्यादित्ययमन्त्रार्थचिन्ताभ्यूहोऽभ्यूल्हो§ऽपि श्रुति-

एतत् 'न वेद' स केवलया 'ऋचा' 'किं करिष्यति'; ये जानन्ति भावयन्ति, त एव विद्वांसः 'समासते' अस्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति॥" —इति च द्वितीयं व्याख्यानम् सा० भा०

* "अपरे त्वन्यथा वर्णयन्ति। -'ऋच' ऋगर्चनीयो जीवः। तस्य सम्बन्धिनि 'अक्षरे' अविनाशे व्याप्ते वा परमात्मनीत्यर्थः। अतएव जीवापेक्षया 'परमे' उत्कृष्टे निरुपाधिके, 'व्योमन्' विशेषेण सर्वाधिष्ठानत्वेन रक्षके, व्योमसदृशे वा। 'यस्मिन्' परमात्मनि 'देवाः' गमनवन्तो व्यवहरन्तो वेन्द्रियसङ्घकाः 'विश्वे' सर्वेऽपि 'अधि-निषेदुः' निषीदन्ति, आश्रित्य वर्त्तन्ते। 'यः' 'तत्' 'न वेद' न जानाति, उपा-ध्यंशपरित्यागेन तदेव स्वरूप मिति न पश्यति स्थूलो जनः, 'किं ऋचा करिष्यति' केवलेन जीवेन जीवभावन किं फलं प्राप्स्यति? जननमरणादिक्लेशस्यात्यागादिति भावः। 'ये' तत् तत्त्वं 'विदुः', 'ते'—इत्यादि सिद्धम्॥" —इति च चतुर्थं व्याख्या-नम् सा० भा०।

† "वाक्षरं भवति" ख,ङ, ज; "वाक्षयो भवति" —इति ह०(३५८पृ०१०पं०)।

‡ "वाचोपादानस्या०" ख, ग, क।

§ "अभ्यूहो" ख, ङ, ज।

तोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्या न ह्येषु प्रत्यक्ष मस्त्यनृषेरतपसो वा पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तान्मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति तेभ्य एतं तर्क मृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूह मभ्यूळ्ह* तस्माद्यदेव किञ्चानूचानोऽभ्यूहत्यार्षन्तद्भवति ॥ १२ ॥

"अक्षरम्" कस्मात्? तद्धि "न क्षरति" नान्यथाभाव मापद्यते। अथवा "न क्षीयते" न कदाचिदप्यामूलतो विनश्यति। अथवा "वाक्क्षयो भवति" नादो हि वर्णलक्षणाया वाचो निवासः। "वाचोऽक्षः—इति वा" अक्षरो ह्यक्ष इवानुप्रविश्य व्यञ्जनानि धारयति† ॥

अथ "अक्षः" कस्मात्? उच्यते;—("यानस्य") यानाक्षः तावत् "समञ्जनात्" नित्य मसौ मज्यते तैलादिना; "तत्प्रकृतीतरत्" स्वराख्य मक्षरम्, "वर्त्तनसामान्यात्" स्वर मधिरूढानि व्यञ्जनानि वर्त्तन्ते‡। "इति" परिसमाप्त्यर्थ इतिकरणः; उपप्रदर्शनार्थो वाक्यस्य॥

* "मभ्यूढं" घ, ङ, ज।

† १भा० ९२ पृ० अक्षरम्=वाक्; ११०पृ० अक्षरम्=उदकम्। अत्र च परस्तात् ११०पृ० "क्षरत्यक्षर मुदकम्"—इत्यादि।

‡ अक्षाः १भा० ४०७, ४११पृ०; अत्र च पुरस्तात् १०पृ० द्र०।

एवमर्थं "मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः" मन्त्रार्थचिन्तायां मभ्यूहो मन्त्रार्थचिन्ताभ्यूहः, वितर्कितः; शक्यते एतावता मन्त्रार्थोऽभ्यूहितु मिति। पुनः अयम् "अपि श्रुतितः",—"अपि तर्कतः"; श्रुतिभ्यो ब्राह्मणेभ्यो निगमशेषेभ्यस्त्रोन्नीतार्थाभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्यात् तस्योपरि पर्यायात्तर्कोऽभ्यूहो लक्षणन्याय इति। यद्यप्यय मभ्यूहः, तथापि "न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः"। कुतः पृथक्त्वेन? प्रकरणात्। किं तर्हि? "प्रकरणश एव तु निर्वक्तव्याः"। तान्येतानि प्रकरणानि मन्त्राणां याज्ञं दैवत मध्यात्म मितिद्वा-मानुप्रवेश इति। किं कारणम्? "न ह्येषु" मन्त्रेषु "प्रत्यक्षम्" अर्थदर्शनम् "अस्ति"। किं नास्त्येव? न नास्ति। किं तर्हि? "अनृषेः अतपसो वा"—इति; तस्येदानी मपि स्यात् ऋषिस्तपस्वी च; निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावाद्यथावदर्थं मन्त्राणां पश्यतः। येऽन्ये पुनरौपदेशिकाः, तानधिकृत्योच्यते—"पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति—इत्युक्तं पुरस्तात्"—इति। य एतेषु उपदेशतः पारोवर्येण परोवरभावेन मन्त्रार्थान् प्रतिपद्यन्ते, ते पारोवर्यविदः, तेषु यः कश्चिद्भूयोविद्यः बहुश्रुतो भवति, स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति। मन्त्रार्थ एव स्वयं विद्यावस्थान-भावेन विष्वग्भूतो लोकव्यवहारभावेन च विप्रकीर्णो विजृम्भत इति त मबहुश्रुतो नाल मुत्प्रेक्षितु मिति,—युक्तं यत्तत्परिज्ञान-नयोगे भूयोविद्यः प्रशस्यत इति। पुरस्तादपि चैतदुक्तम्*; इह तु प्रसङ्गादुच्यते॥

---

* १अ० ५पा० १ख०—१भा० ११९, ११८ पृ० द्रष्टव्यम्।

अतः पर मागमविशुद्धये प्रस्तौति।—"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्"—इति। पूर्व मपि हि "साक्षात्कृतधर्माण ऋषयो बभूवुः"—इत्युक्तम् *; इह तु मन्त्रार्थाभ्युपप्रदर्शनार्थ मिति विशिष्यते—"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यति"—इति। एवमादि-पुराकल्परूपोऽर्थवादः शास्त्रावनारम्भतये, तेभ्यः "एतं मन्त्रार्थचिन्ताभ्यूह मभ्यूहं प्रायच्छन्" ते देवाः एतं समस्तार्थमूह मपि भवन्तोऽनेन मन्त्रार्थान् शक्यन्तेऽभ्यूहितु† मिति। यस्मादेतदेवं "तस्मात्" अस्मिन् सूक्ते निरुक्तशास्त्रे यः "अनूचानः" विद्वान्, यदेव किञ्चिन्मन्त्रार्थेषु "अभ्यूहति", "आर्ष तत् भवति"; तथैव तदृषयोऽभ्यूहितवन्त इत्यभिप्रायः॥ १२॥

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे॥ हृदा तष्टेषु मनसाम्प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभि‡ रोहब्रह्माण ऊहब्रह्माण ऊह एषां ब्रह्मेति वा सेयं विद्या श्रुतिमतिबुद्धिस्तस्यास्तपसा पार मीप्सितव्यं तदिद मायुरिच्छता

* १अ० ६पा० ५ख०—१भा० १८७पृ०।

† "मन्त्रार्थान् शक्यन्तेऽभ्यूहितु"—इति क।

‡ "प्रवृत्तिभिः" ग, भ।

**न निर्वक्तव्यं तस्माच्छन्दःसु शेषा उपेक्षितव्या अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति* ॥१३॥**

न तत् स्वमनीषिकयोच्यते ; मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह। तद्यथा :—

"हृदा तष्टेषु"—इति†। ('हृदा') हृदयेन बुध्या, 'तष्टेषु' सूक्ष्मतामापादितेषु अचिन्त्याध्यात्मादिषु विद्वद्भिः, 'मनसो जवेषु' "मनसां" ("प्रजवेषु") ये प्रजवाः प्रगमाः न साक्षात् दृश्यन्ते, तेष्वर्थेषु स्वर्गापूर्वदेवतादिषु‡ 'ब्राह्मणाः' अधिगतमन्त्रार्थतत्त्वाः विचारयन्तः,— कि

* अध्यायसमाप्तिसूचक मेतद् द्विर्वचनं चातिरिक्तमर्वाक्ष्वेव पुस्तकेषु दृश्यते : च-पुस्तके तु कस्याप्यध्यायस्यावसाने नास्ति, तदस्य विवदमानस्य का कथा। येषु खलु पुस्तकेष्वत्र नाध्यायसमाप्तिः प्रत्युत पादसमाप्तिरेवेष्टा, तत्रापि कथं द्विर्वचन मिति सुधीभिर्विवेच्यम्।

† ऋ० सं ८, १, २४, ६ : १०, ६, ३, ८। अस्ति किल ऋक्संहितायां दशम-मण्डलीय-षष्ठानुवाकस्यैकादशर्चं तृतीयं सूक्तं बार्हस्पत्यम्, तेन वै बृहस्पतिर्ज्ञानं तुष्टाव। तदुक्तं बृहद्देवतायाम्—"यज्ज्ञातिः परमं ब्रह्म तद्योगात् समुपाश्नुते। तज्-ज्ञान मभितुष्टाव सूक्तेनाथ बृहस्पतिः॥" इति। तस्य सूक्तस्येय मष्टमी, त्रिष्टुप्। "अनेन सूक्तेनर्षिः परमपुरुषार्थसाधनं परब्रह्मज्ञानं स्तुतवान्, अतस्तद्देवत्य मिदम् (सूक्तम्, यथेय मृक्)।"—इति च सा० भा०। एतत्सूक्तं सर्व मेव वेदार्थजिज्ञासुभिः विशेषतः पर्यालोच्यम्।

‡ "स्वर्गो वै लोको दूरोहणम् (ऐ० ब्रा० ४प० ३ख० ६,१ख०)"—इत्यादि, "परो वा अस्माल्लोकात् स्वर्गो लोकः (ऐ० ब्रा० १पं० ४अ० ४ख०)"—इत्यादि, इत्येवमादीनि च वाक्यानि स्वर्गपरिचायकानि। अपूर्वं कर्मजन्य मदृष्टम्। तच

'विजज्ञुः' इत्यनुः ; 'त्वम्' एकम्* इत्यन्वयः। मन्त्रार्थव्याख्याने क मविद्वांसं के न तत्यजुः? 'वेद्याभिः' ("वेदितव्याभिः") "प्रवृत्तिभिः"†. न हि तासां मनोवृत्तीनां मन्तोऽस्ति, यासु प्रतिभानवता मपि मनोवृत्तयो न प्रवर्त्तन्ते, अतस्ता वेदितव्या एव भवन्त्यविद्वद्भिः। ये पुनः 'ओहब्रह्माणः'। इदं निरुक्तशास्त्रम् ऊहब्रह्म, येषां मस्ति ते शब्दार्थसङ्कटेष्वप्रतिबध्यमाना अतिक्रम्य अविद्वांसं ('वि') विशेषतः सर्वत्रैव प्रतिपूज्यमानाः 'चरन्ति' 'त्वे' एके इत्यर्थः॥

एव मेतस्मिन्मन्त्रे अस्या उद्भाहितार्थानेवोद्दिश्य मन्त्रार्थचिन्ताभ्यूहस्य ब्रह्मत्वं श्रूयते। तस्मादिद मपि निरुक्तशास्त्रं ब्रह्मैव वेद इत्यर्थः॥

इदानी मुपसंहरति—"सेयं विद्या"—इति। श्रुतिमतीत्याद्यर्थं सैवैका विद्या बुद्धिं वर्धति, ज्यायसी सर्वाभ्यो विद्याभ्यो महानेष तर्कः। "तस्याः तपसा पार मीप्सितव्यम्" गन्तु मिति वाक्यशेषः। पदवाक्यप्रमाणविदा‡ ब्राह्मणेन यस्माद्वेदो विधिनिषेधप्रतिप्रसवनियमपरिसङ्ख्यापुनर्वचनपरार्थवादगहनः§, अर्थवादाश्च यथाश्रुतप्रमा-

* "उत त्वः"—इत्यस्य व्याख्यानम् "अप्येकः"—इति (१भा० ११२४०), "उत त्वम्"—इत्यस्य व्याख्यानम् "अप्येकम्"—इत्यादि (१भा० ११४४०) च बहु दृष्टं पुरस्तादिदेव।

† "वेद्याभिः वेदितव्याभिर्विद्याभिः प्रवृत्तिभिर्वा"—इति सा० भा०।

‡ पदशास्त्रं व्याकरणम्, वाक्यशास्त्रं मीमांसा, प्रमाणशास्त्रं न्यायादिकम्।

§ तत्र, विधिः—"अज्ञातार्थज्ञापको विधिः।०———०विधिश्चतुर्विधः;—उत्प-

"तस्मात्" "छन्दःसु" शाखान्तरेषु निगमोदाहरणाना माकाङ्क्षितनिराकाङ्क्षार्थं ("शेषाः") वाक्यशेषाः, पादार्द्धर्चादिलक्षणाः* उपेक्षितव्याः† ॥ १३ ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायस्य (त्रयोदशाध्यायस्य) प्रथमः पादः ॥ १३ । १ ॥

जम्बूमार्गाश्रमवासिनो भगवद्दुर्गाचार्यस्य कृतौ ऋज्वर्थायां निरुक्तवृत्तौ

अष्टादशाध्यायः (त्रयोदशाध्यायः) समाप्तः ॥ १३ ॥

॥ इति सपादसप्तदशाध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता ॥

(व्याख्यातं दैवतं यज्ञाङ्गञ्चेत्यादिः ॥‡)

---

मूर्खो धर्मं तदविदः। तत् पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥"—इति च १२अ० १०९—११२, ११५ श्लो०।

* ६७४पृ० १पं० "अर्द्धर्चभागोऽपि क्वचिदुपेक्षितव्याः"—इत्यादि द्रष्टव्यम्।

† पुरस्तादुक्तं "जुनो त्वस्मै तुभ्यं विसवे (१अ०१पा० ३ख०—१भा० १२१पृ०)"—इत्यादिकम्; "बृहस्पते प्रथमं वाचो अग्रम् (ऐ० आ० १, १४.)"—इत्याद्यैतरेयकं चेह स्मर्त्तव्य मिति शम्।

‡ ज-पुस्तकमात्रे एवैव पाठोऽत्र; तत्र हि सर्वत्रैवाध्यायान्तेषु अग्रिमाध्यायप्रतीकपाठ एवमेवेति दर्शितं पुरस्तात् (३३५पृ०)।

([1]अथेमा[2]यद्यावो[3]यदुदृश्चो[4]विहिसोतोः[5]सृण्येव[6]तरत्स[7]च-त्वारि[8]शृङ्गा[9]स्वर्यन्त[10]श्चत्वारिवाग्[11]ऋचोअक्षरआ[12]दित्यइत्यक्ष-रन्नक्षरति[13]हृदातष्टेषु त्रयोदश ॥ *)

## ॥ इति निरुक्ते त्रयोऽदशाध्यायः समाप्तः† ॥ १३ ॥

(अतिस्तुति-प्रकरणं समाप्तम् ‡)

## ॥ इति नैरुक्ते प्रथमं परिशिष्टं समाप्तम् ॥ १ ॥

* अथप्रतीकपाठावलम्बिश्च पुस्तकेष्वेतेन पाठेन भवितव्यम्; तेष्वेवाध्याय-समाप्तिश्च दृश्यते। परं नाद्योऽपि क-पुस्तके नायं पाठः, अपि तु परिशिष्टसमा-प्तावेकत्रैव "अथेमा"- इत्यादीनां पश्चानां खण्डानां प्रतीकपाठः; तत्रैव त्रयोदशा-ध्यायसमाप्तिश्च।

† च-पुस्तकसम्मत एष पाठः। क-पुस्तके परिशिष्टभागो नास्त्येव; ख-ग-भ-पुस्तकेषु इह नाध्यायसमाप्तिः; अपि त्रयोदशाध्यायस्य प्रथमपादसमाप्तिरेव; घ-ङ-पुस्तको खण्डितौ; झ-पुस्तकेऽपि नाध्यायसमाप्तिः, पादविभागस्तु तत्र न दृश्यते क्वाप्यध्याये; ज-पुस्तके त्विह "इति नैरुक्ते उत्तरषट्के सप्तमोऽध्यायः"—इति; दुर्ग-लब्धे त्विहैव परिशिष्टसमाप्तिः ग्रन्थसमाप्तिश्च परं नैषोऽध्यायः, अपि पाद एव; अतएव हि इत्तौ "सपादसप्तदशाध्यायी निरुक्तवृत्तिः समाप्ता" —इति (२१५पृ० ९पं०)। एवश्चाध्यायसमाप्तौ च-ज-पुस्तकयोः ऐकस्य सम्मतिरिति।

‡ नैतत् निघण्टुव्याख्यानम्; अपि तत्प्रासङ्गिक मिति मम।

## ॥ अथ चतुर्दशाध्यायः* ॥

॥ अथवा त्रयोदशस्यैव द्वितीयादिस्त्रिपादी ॥

॥ तत्राद्यः, द्वितीयपादः† ॥

व्याख्यातं दैवतं‡ यज्ञाङ्गं§ चाथात ऊर्द्ध्वमार्गगतिं व्याख्यास्यामः सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टा|| ऽयै-

---

* ख-ञ-पुस्तकयोः; इत्तिहस्माने त्वेषोऽध्यायो नास्त्येव, सायणमतेऽप्येव मेव; तेन हि ऋगादिभाष्ये न क्वापि एतदध्यायीयः कश्चिदपि खण्डः खण्डांशो वा उद्धृतः प्रत्युत "जातवेदसे सुनवाम ऋ० मं० १. ७, ७. १" इत्यस्या ऋचो व्याख्यावसरे "जातवेदाः कस्मात्" इत्यादिः (२भा० ३९३पृ०) सप्तमाध्यायीय एव पाठ उद्धृतः, न तु "जातवेदस इति जात मिदं सर्वम्" इत्यादिरिहत्यः (२२४पृ०)। एव मन्यत्रान्यत्र च।

† ख-ग-ञ-पुस्तकेषु; ङ-पुस्तके तु पादविभागो नास्ति पर मेष त्रयोदशाध्याय एव। वस्तुतोऽत्र पादविभागो नास्त्येवेत्यस्माकम, पादसन्धिषु पूर्वपूर्ववत् पादादावथादिशब्दव्यवहारादिदर्शनाभावात्, ञ-पुस्तकातिरिक्तेषु पादीयखण्डाङ्कपार्थक्यादर्शनाच्च।

‡ "अथातो दैवतम्"— इत्यारभ्य "य ऋतुकालो जायानां य ऋतुकालो जायानाम्"—इत्यन्तेनाध्यायषट्केनेति (२भा० १८५पृ० - ४भा० ३२९पृ०)।

§ "अथेमा अतिस्तुतयः"—इत्यारभ्य "ताद्भाव्य मनुभवत्यनुभवति"—इत्यन्तेनाध्यायैकेन पादेनैकेन वा (३३०पृ०—३९१पृ०)।

|| "कर्म द्रष्टा" ख, ग, ञ।

तदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः* प्रवदन्तीन्द्रं† मित्रं वरुणमग्निमाहुः‡ रित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ॥ १§ (१४‖) ॥ १¶

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम्म आसन्। अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो** हविरस्मि नाम†† ॥ अहमस्मि प्रथमजा ऋतस्य पूर्वन्देवेभ्यो अमृतस्य नाम‡‡। यो मा ददाति स इदेव

* परस्तादुक्तम्—"महान्तमात्मानमेकमात्मानं बहुधा मेधाविनः वदन्ति" इति ७अ० ४पा० ५सू० (७भा० ३८०पृ०)।

† "प्रवदन्तीन्द्र" ग, ज, भ।

‡ ऋ० सं० १, ३, २२, ६; अथ० सं० ९९, ८।

§ चतुर्दशाध्यायीयखण्डाङ्क एष, च-ज-सम्मतः।

‖ चयोदशाध्यायीयखण्डाङ्क एषः, ख-ग-क-सम्मतः।

¶ चयोदशाध्यायस्यैव द्वितीयपादीयाङ्क एषः, भ-पुस्तकसम्मतः।

** "घर्मो" च-मात्रे; मुद्राकरप्रमाद एष. ? एव मन्यचान्यचान्यान्योऽप्यस्ति।

†† ऋ० सं० ३, १, २०, ९. य० वा० सं० १८, ६६। "अग्निरस्मीति इयस्य (३, १, २०, १-२ अग्निः परब्रह्म वा देवता" इति, "साक्षात्कृतपरमतत्त्वरूपोऽग्निः इदेम (१,२) स्वात्मनः सर्वात्मकत्वानुभव माविष्करोति। ०——०। भोक्तृभोग्यभावेन द्विविधं चेदं सर्वं जगत्" - इत्यादि, "तदनेन अग्नेः सर्वात्मकत्वप्रतिपादनेन परब्रह्मत्व मुक्तं भवति"—इति च ऋ० सं० सा० भा०।

‡‡ "अमृतस्य नाभिः" च-प्रभृतिषु; सामसंहितापाठविरुद्धश्चैषः।

मावदहं * मन्त्रं मन्त्रं महदन्तं मह्मि † ॥ इति स ह ज्ञात्वा प्रादुर्बभूवैवं तं व्याजहारा यं त‡ मात्मान मध्यात्मज मन्तिक मन्यस्मा आ चचक्षेति ॥ २ (१५) ॥ २.

अपश्यं गोपा मनिपद्यमान मा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान § आ वरीवर्त्ति भुवनेष्वन्तः ‖ ॥ आवरीवर्त्ति भुवनेष्वन्तरित्ययमेष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तद-

* "इदेव मावा अह" च-प्रभृतिषु, एष च सा०-मं०-पाठविरुद्धः ।

† सा० मं० आर० आ० २, १, ९ । 'त्रिष्टुभा अग्निदेवता आत्मान मेवाह: आत्मा एव ऋषिः" इति तत्र सा० भा० । तै० आ० ९, १० ।

‡ 'व्याजहारायत" च-प्रभृतिषु

§ "विषूचीर्वसान" क-प्रभृतिषु (स्वरे विशेषः) ।

‖ ऋ० सं० १, ४. २०, १; शु० वा० मं० ३७, १७; अथ० सं० ९, १०, ११ । अस्यवामीये सूक्ते इद मेकत्रिंशौ । अत्र शौनकः—'अस्यं कृत्वा द्विजो मोहात् चिरात्तोपोषितः शुचिः । सूक्तं जपत्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषात् ॥" —इति ऋग्वि० १, २९ । "अस्य वामस्य पलितस्य होतुरिति पलितस्य दैर्घतमस एकपञ्चाशतम्"— इति ऐ० आ० ५, १२ । अस्मिन् सूक्ते प्रायेण संशयोत्पादका दुर्बोधार्थाः प्रतिपाद्यन्ते । अपश्यं गोपा मित्याद्यनया ब्रह्मसाक्षात्काररूपस्य प्रशंसा । प्रवर्ग्याऽभिष्टवे विनियुज्यतेऽसौ (आ० श्रौ० सू० ४, ६) । सूर्यस्य च गोपात्व मैतरेयके श्रूयते—"एष वै गोपा एष हीदं सर्वं गोपायति" इत्यादिः । तैत्तिरीयकेऽपि—"अपश्यं गोपा मित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायति" इत्यादिः ।

मृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत् क्षेत्रं तज्ज्ञानात्* क्षेत्रज्ञमनुप्राप्य† निरात्मक‡मथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति§ सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी (रजः||) इति कामद्वेषस्तम इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वन्तः क्षेत्रज्ञपृथक्त्वाय कल्पते प्रतिभातिलिङ्गो महानात्मा तमोलिङ्गा विद्या प्रकाशलिङ्गस्तमोऽपि निश्चयलिङ्ग आकाशः ॥ ३।१६ ॥ ३.

आकाशगुणः शब्द आकाशाद्वायुर्द्विगुण स्पर्शेन वायोर्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्त्ति तस्यान्ते-

* "तद्ज्ञानात्" ग-प्रभृतिषु।

† "योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः॥ जीवसञ्ज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम्। येन वेदयते सर्वं सुखं दुःखञ्च जन्मसु॥"— इति म० स० १२अ० १२, १३ श्लो०।

‡ "निरात्मज" ग-प्रभृतिषु।

§ "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ (तै० आ० १०, १०, १)" —इति, "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य (छा० उ० ६, ४)" इत्याद्याश्च विवेचनीयाः।

|| नास्त्येतत् ग-प्रभृतिषु।

सुपुप्सन्नङ्गानि प्रत्याहरति भूतग्रामाः पृथिवी मपि यन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वायुं वायु-राकाश माकाशो मनो मनो विद्यां विद्या महान्त मात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपीति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्त्तेते स कालस्तदेतदहर्भवति युगसहस्रपर्यन्त महर्यद् ब्रह्मणो विदू रात्रिं युगसहस्रान्तां तेऽहोरात्र-विदो जना इति* ॥ ४ (१७) ॥ ४.

तं परिवर्त्तमान मन्योऽनुप्रवर्त्तते स्रष्टा द्रष्टा विभ-क्तातिमात्रोऽह मिति गम्यते स मिथ्यादर्शनेद्म्यावकं†

* मनुसंहिताया मपि—"आकाशं जायते तस्मात् तस्य शब्दं गुणं विदुः। आ-काशात्तु विकुर्वाणात् सर्वगन्धवहः शुचिः। बलवान् जायते वायुः स वै स्पर्शगुणो मतः। वायोरपि विकुर्वाणाद् विरोचिष्णु तमोनुदम्। ज्योतिरुत्पद्यते भास्वत्तद्रूपगुण मुच्यते। ज्योतिषश्च विकुर्वाणादापो रसगुणाः स्मृताः। अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः।"—इति (१अ० ७५—७८ श्लो०), "आद्याद्यस्य गुणन्त्वेषा मवाप्नोति परःपरः। यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः (१अ०२०श्लो०)"—इति च। दैविकानां युगानान्तु सहस्रं परिसङ्ख्यया। ब्राह्म मेक महर्ज्ञेयं तावती रात्रिरेव च। तद्वै युगसहस्रान्तं ब्राह्मं पुण्य महर्विदुः। रात्रिञ्च तावती मेव तेऽहोरात्रविदो जनाः। तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते (१अ० ७१—७४ श्लो०)"—इति च। आकाशादीनां तद्गुणानाञ्च वर्णनं गौतमसूत्रादौ ब्रह्मसूत्रादौ च विस्तरतो द्रष्टव्यम्। भगवद्गीताया मपि किञ्चिद् द्रष्टव्य मस्ति ८, १७।

† "स मिथ्यां दर्शनेद्म्यावकं" च।

महाभूतेषु चिरोत्थाकाशाद्वायोः प्राणं चक्षुश्च* वक्तारञ्च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्त्तिः पार्थिवांस्त्वष्टौ† गुणान् विद्यात् त्रीन्मातृतस्त्रीन् पितृतोऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोऽन्नं पान‡मित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि क्लृप्तः§ ॥ ५ (१८) ॥ ५।

स यद्यनुरुध्यते तद्भवति यदि धर्मोऽनुरुध्यते|| तद्देवो भवति यदि ज्ञान मनुरुध्यते तदमृतो भवति यदि काम मनुरुध्यते संच्यवत इमां योनिं सन्दध्यात्¶ तदिद मत्र मतं श्लेष्मा रेतसः सम्भवति श्लेष्मणो

---

* "प्राणचक्षुश्च" ख, क, ज।

† "पार्थिवांस्त्वष्टौ" ख।

‡ "ऽन्नपान" ख, क, ज।

§ "प्राणापानव्यानोदानसमानाः० ——— ० वाक्श्रवणचक्षुःश्रोत्रजिह्वाघ्राणरेतोमूत्राकूतिसङ्कल्पाः० ——— ० शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घाशिश्नोपस्थपायवः० ——— ० त्वक्चर्ममांसरुधिरमेदमज्जास्नायवास्थीनि ० ——— ० शब्दस्पर्शरूपरसगन्धाः ० ——— ० पृथिव्यप्तेजोवायुराकाशाः ० ——— ० अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम (सं० खा० १०, ५१—५७)"—इत्येवमादयस्तत्र पर्यालोच्याः।

|| "धर्म मनुरुध्यते" ख, क, ज।

¶ "शुभाशुभफलं कर्म मनोवाग्देहसम्भवम्। कर्मजा गतयो नृणा मुत्तमाधममध्यमाः॥"—इत्यारभ्य "यादृशेन तु भावेन यद् यत् कर्म निषेवते। तादृशेन शरीरेण तत् फल मुपाश्नुते॥"—इत्यन्तो (म० सं० १२ अ० ३—८१ श्लो०) ग्रन्थस्तत्र इम मर्थमेव प्रब्रूते।

रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नो ऽस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति* शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन नपुंसको भवति शुक्रेण भिन्नेन† यमो भवति‡ शुक्रशोणितसंयोगान् मातृपितृसंयोगाच्च (तत् §) कथमिदं शरीरं परं संयम्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्चरात्राद् बुद्बुदाः सप्तरात्रात् पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो

* "तस्मात् पराञ्चो भूत्वा चतुष्पादो रेतः सिञ्चन्ति, सम्यङ् द्विपाद्भवति, तस्मात् सम्यञ्चो भूत्वा द्विपादो रेतः सिञ्चन्ति (ऐ० आ० १. ५, ५।"—इत्यादि, "एष ह वा पत्नीषु रेतो दधाति • ——— • पुरुषस्य संवतो योष्यति, येषा स्त्रियोऽधि पुमांसोऽस्य पुत्रा जायन्ते"—इति च (ऐ० आ० २. २, १२। द्रष्टव्यम्।

† "शुक्रभिन्नेन" ख, ङ, ञ।

‡ "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समे पुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः॥"—इति च म० सं ३अ० ४८ श्लो०। "कारणानुविधायित्वात् कार्याणां तत्स्वभावता। नानायोन्याकृतीः सत्त्वान् धत्तेऽतो द्रुतलोहवत्। अत एव च शुक्रस्य बाहुल्याज्जायते पुमान्। रक्तस्य स्त्री, तयोः साम्ये क्लीवः शुक्रार्तवे पुनः। वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता। वियोनिविकृताकारा जायन्ते विकृतैर्मलैः॥"—इत्यादि च (अ० हृ० शा० स्था० १अ० ५—७ श्लो०) वैद्यके बहु द्रष्टव्यम्।

§ नास्त्येतत् पदं ख-ग-भ-पुस्तकेषु।

भवति* मासमात्रात्कठिनो† भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याध्यवस्यति नवमे सर्वाङ्गसम्पूर्णो भवति‡। मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनिसहस्राणि मयोषितानि यानि वै। आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा। अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः। साङ्ख्यं

* “द्रवो भवति” ख, ग, घ।

† “मासमात्रात् कठिनः” ख।

‡ “[illegible]” [illegible] २, ३ १०, ४,” —इत्यस्या व्याख्यानावसरे सायणः “[illegible] इत्युक्त्वा तुगर्भनिर्माणमुक्तम्। उत्तरवाक्ये तुभूतैः दशभिः [illegible]। इदञ्च पदं कौशिके व्याख्यायते”—इत्यादि। ते च कौशिकमन्त्रा यथा- “चक्षुश्च श्रोत्रं च मनश्च वाक् च प्राणापानौ देह इदं शरीरम्। द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम्॥ उरश्च पृष्ठञ्च करौ च बाहू जङ्घे चोरू उदरं शिरश्च। रोमाणि मांसं रुधिरास्थिमज्जा मेतच्छरीरं जलबुद्बुदोपमम्॥ भ्रुवौ ललाटं च तथा च कर्णौ हनू कपोलौ चुबुकं तथा च। ओष्ठौ च दन्ताश्च तथैव जिह्वा एतच्छरीरं कृमिराजकोशम्॥”—इति। तत्रैव सायणभाष्ये दशयन्त्र मित्यस्य व्याख्यानान्तर मपि कृत मस्ति। कौशिकविवरणं त्वनुक्रमण्यां द्रष्टव्यम्।

योगं समभ्यस्येत् पुरुषं वा पञ्चविंशक मिति * ततश्च दशमे मासे प्रजायते † जातश्च वायुना स्पृष्टो न स्मरति । जन्ममरणेऽन्ते § च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ (१९) ॥ ६.

अष्टोत्तरं सन्धिशत मष्टाकपालं शिरः सम्पद्यते षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणा मर्द्धचतस्रो रोमाणि कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थगुदपाय्वेतन्मूत्रपुरीषं कस्मादाहारपान ‖ सिक्तत्वानुपचित ¶ कर्माणावन्योन्यं ** जयेत †† इति ‡‡ तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यज्ञानतम-

* म० भा० १४. ... ९८९. ३. ४२९ ।

† "अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व-म्रियस्वेति"—इति च छा० उ० ५प्र० १०ख० । पथोः = देवयान-पितृयानयोरिति यावत् ।

‡ "स्पृष्टस्तत्र स्मरति" च, छ, ज ।

§ "जन्ममरणे मन्ये" च, छ, ज ।

‖ "कस्माद्धाराधान" ख, छ ।

¶ "सिक्तत्वाकृष्टित" छ ।

** "कर्मणावन्योन्यं" ख, छ ।

†† "जायेते" ख, छ ।

‡‡ ग-पुस्तके तु इत्येव सप्तमखण्डसमाप्तिः ।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति*॥ न तं विद्यया विदुषो य एवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिमन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं† यत्पथगामिनश्चरन्त्य-

* ऋ० मं० ८, ३, १७; शु० वा० सं० १७, ३१। अथैतन्महीधरभाष्यम्—"हे नराः! 'तं' विश्वकर्माणं 'न विदाथ' न जानीथ; 'यः' 'इमा' इमानि भूतानि 'जजान' उत्पादितवान्। इयदस्मीदं यत्तदस्मीदमिति वय मात्मानं विश्वकर्माणं जानीम इति यदुच्यते, तदसत्; न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वम्, किन्तु 'युष्माकम्' अहंप्रत्ययगम्यानां जीवानाम 'अन्यत्' अहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यं मीश्वरतत्त्वं 'बभूव' भवति, विद्यते। जीवरूपवत्तदपि कुतो न वेद्यः? इति चेत्, श्रूयताम्;—'नीहारेण प्रावृताः' यूयं नीहारसदृशेनाज्ञानेनाच्छन्नाः, अतो न जानीथ। यथा,—नीहारो नात्यन्तमसद्, दृष्टेरावरकत्वात्; नात्यन्तं सत्, काष्ठपाषाणादिवत् सम्यागसर्वाग्यत्वात्; एव मज्ञान मपि, नात्यन्त मसत्, ईश्वरतत्त्वावरकत्वात्, नापि सद्, बोधमात्रनिवर्त्यत्वात्। ईदृशमाज्ञानेन सर्वे जीवाः प्रावृताः। न केवलं प्रावृतत्वं किन्तु 'जल्प्या' च देवोऽहं मनुष्योऽह मित्याद्यवृतजल्पनेन प्रावृताः। किञ्च 'असुतृपः' केनाप्युपायेन असून प्राणांस्तृप्यन्ति, उदरम्भरा इत्यर्थः; न तु पारमेश्वरं तत्त्वं विचारितवन्तः। न केवलमिहलोकभोगमात्रपराः 'उक्थशासः' नानाविधेषु यज्ञेषु उक्थं प्रउगनिष्केवल्यादिकं शंसन्तः 'चरन्ति' पृथिव्यां वर्तन्ते। केवलमैहिकामुष्मिकभोगपरा वर्तन्तेऽतो विश्वकर्माणं देवं न जानीथेत्यर्थः।"—इति।

† "उद्यन् खलु वा आदित्यः सर्वाणि भूतानि प्रणयति, तस्मादेनं प्राण इत्याचक्षते"—इत्यादि ऐ० आ० ५, ५, ९।

विद्वांसः* क्षेत्रज्ञ मनुप्रवदन्त्यथाहो विद्वांसः क्षेत्रज्ञो ऽनुकल्पते† तस्य तपसा सहाप्रमाद मेत्यथासख्यो भवति तेनासन्तत मिच्छेत्तेन सख्य मिच्छेदेष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति ज्ञाता कस्माज्जायते‡ सखा कस्मात् सख्यतेः सह भूतेन्द्रियैः शेरते§ महा-भूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयतीति (वा||) तस्य यदापः¶ प्रतिष्ठाशील मुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञान-कृतोऽथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्र-मिष्यामः** ॥ १० (२३) ॥ १०.

हंसः। घर्मः। यज्ञः। वेनः। मेघः। कृमिः। भूमिः। विभुः। प्रभुः। शम्भुः। शम्भुः। वधकर्मा। सोमः। भूतम्। भुवनम। भविष्यत। आपः। महत्। व्योम। यशः। महः। स्वर्णीकम्। स्मृतीकम। स्वृतीकम्।

* "स्तेयं यन्त्यथ गामिन्द्रं स्वरन्त्यविद्वांसः" ख, ग, भ।

† "क्षेत्रज्ञो न कल्पते" ख, ग, भ।

‡ "कस्माज्जानतेः" ख, ग, भ।

§ "शेते" ख, ग, भ. 'से शेते' — इति [illegible] ॥

|| नास्त्येतत् पदं च-छ-ज पुस्तकेषु।

¶ "तपः" ख, ग, भ।

** "भूतनामधेयान्यनुक्रमिष्यामः" च, छ, ज।

सतीकम्। सतीनम्। गहनम्। गभीरम्। गम्भरम्। कम। अन्नम्। हविः। सद्म। सदनम्। ऋतम्। योनिः। ऋतस्य योनिः। सत्यम्। नीरम्। (हविः*।) रयिः। सत्। पूर्णम्। सर्वम्। अक्षितम्। बर्हिः। नाम। सर्पिः। अपः। पवित्रम्। अमृतम्। इन्दुः। हेम। स्वः। सर्गाः। शम्बरम्। अम्बरम्। वियत्। व्योम। बर्हिः। धन्व। अन्तरिक्षम्। आकाशम्। आपः। पृथिवी। भूः। (स्वयम्भूः†।) अध्व। पुष्करम्। सगरम्। समुद्रः। तपः। तेजः। सिन्धुः। अर्णवः। नाभिः। (ऊधः‡।) वृक्षः। तत्। यत्। किम्। ब्रह्म। वरेण्यम्। हंसः। आत्मा। भवन्ति। वर्धन्ति। अध्वानम्। यद्दाहिष्या§। शरीराणि। अव्ययञ्च संस्कुरुते||। यज्ञः। आत्मा। भवति। यदेनं तन्वतेऽथैनं महान्त मात्मान मेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति¶ ॥ ११ (२४)॥ ११.

* नास्त्येतत् पदम् ख-ग-भ-पुस्तकेषु।

† नास्त्येतच्च पदम् च-छ-ज-पुस्तकेषु

‡ नास्त्येतदपि पदम् च-छ-ज-पुस्तकेषु।

§ "यद्दाहिष्या"—इति ख, ग, भ।

|| "अव्ययं च संस्कुरुते"—इति ख, ग, छ, भ।

¶ मेघः, भूमिः, बुधकर्मा, सोमः, आपः, यमः, स्वर्णीकम्, सूतीकम्, स्ततीकम्, सतीकम्, कुम्, अम्भ, मधु, सत्, सर्व, नाम, पवित्रम्, अमृतम् अध्वा, सगरः तपः, तेजः, सिन्धुः, नाभिः, वृक्षः, कृत्, यत्, ब्रह्म, वरेण्यम्, भवति, वर्धन्त्यध्वानम्, —इमे च स्वरपाठभेदाः च-प्रभृतिषु।

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः* ॥ (सोमः पवते जनयिता मतीनां जनयिता दिवो जनयिता पृथिव्या जनयिताग्नेर्जनयिता सूर्यस्य जनयितेन्द्रस्य जनयितोत विष्णोः†)—(सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशकर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा मादित्यरश्मीना मग्नेर्गतिकर्मणा मादित्यरश्मीनां सूर्यस्य स्वीकरणकर्मणा मादित्यरश्मीना मिन्द्रस्यैश्वर्यकर्मणा मादित्यरश्मीनां विष्णोर्व्याप्तिकर्मणा मादित्यरश्मीना मित्यधिदैवत मथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः। अपि वा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे‡) ॥ १२ (२५) ॥ १२.

ब्रह्मा देवानां पदवीः कवीना मृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्र

* ऋ० मं० ९, ४, ९. ५ ; सा० सं० उ० आ० ९, १, ४. ५

† नैवं पाठो दृश्यते च-छ-ज-पुस्तकेषु ।

‡ नैवं पाठो दृश्यते ख-ग-भ-पुस्तकेषु ।

मत्यैति रेभन्* ॥ ब्रह्मा देवाना मित्येष हि ब्रह्मा भवति देवानां देवनकर्मणा मादित्यरश्मीनां पदवीः कवीना मित्येष हि पदं वेत्ति कवीनां कवीयमानाना† मादित्यरश्मीना मृषिर्विप्राणा मित्येष हि ऋषिणो भवति‡ विप्राणां व्यापनकर्मणा मादित्यरश्मीनां महिषो मृगाणा मित्येष हि महान् भवति मृगाणां मार्गणकर्मणा मादित्यरश्मीनां श्येनो गृध्राणा मिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यते स्थानकर्मणो यत एतस्मिं-स्तिष्ठति स्वधितिर्वनाना मित्येष हि स्वयङ्कर्माण्या-दित्यो धत्ते वनानां वननकर्मणा मादित्यरश्मीनां सोमः पवित्र मत्येति रेभन्नित्येष हि पवित्रं रश्मीना मत्येति स्तूयमान एष एवैतत् सर्व मक्षर मित्यधिदैवत मथाध्यात्मं ब्रह्मा देवाना मित्यय मपि ब्रह्मा भवति देवानां देवनकर्मणा मिन्द्रियाणां पदवीः कवीना मित्यय मपि पदं वेत्ति कवीनां कवीयमानाना§

* ऋ० सं० ७, ४. ७, १. मं० ९, ९६, ६. वा० सं० १७, ९७; तै० आ० १०, १०, ४; सा० सं० उ० आ० ७, १; १९. ९। देवस्त्वां सविता मधुनावनक्त्विति मनसा देवाना मिति याज्या (आ० श्रौ० सू० ४. ११.)। म० भा० अनु० गौ० ३२ अ० १९—४२ श्लो०।

† "कवीयमानाना" ख, ग, भ।

‡ "ऋषिणा" ग; "हि ऋषिणा" ख, भ।

§ "कवीयमानाना" ख, ग, भ।

मिन्द्रियाणा मृषिर्विप्राणा मित्यय मप्यृषिणो* भवति विप्राणां व्यापनकर्मणा मिन्द्रियाणां महिषो मृगाणा मित्यय मपि महान् भवति मृगाणां मार्गणकर्मणा मिन्द्रियाणां श्येनो गृध्राणा मिति श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञान-कर्मणो यत एतस्मिंस्तिष्ठति† स्वधितिर्वनाना मित्यय मपि स्वयङ्कर्माण्यात्मनि धत्ते वनानां वननकर्मणा मिन्द्रियाणां सोमः पवित्र मत्येति रेभन्नित्यय मपि पवित्र मिन्द्रियाण्यत्येति स्तूयमानो ऽय मेवैतत् सर्व मनुभवत्यात्मगति माचष्टे¹ ॥ १३ (२६) ॥ १३.

* ''मित्यय मपि ऋषिर्णो'' ख, ङ, ञ

† ''एतस्मिंस्तिष्ठन्ति'' ग, ङ, ञ

¹ ''[illegible] सर्वस्य जगतः स्रष्टा चैतन्य परमात्म-स्वरूपेणावस्थितः सन् 'देवानां' इन्द्रादीनां मध्ये, 'ब्रह्मा' चतुर्मुखो भूत्वा परमात्मैव नियामकत्वेनावतिष्ठते। तथा 'कवीनां' काव्यनाटकादिकर्तॄणां पुरुषाणां मध्ये, 'पदवीः', भूत्वावतिष्ठते। व्याकरण निष्पन्नः सुशब्दविशेषः पदं तद्वेत्ति गच्छतीति 'पदवीः' शब्दमात्रस्याभिज्ञो व्यासवाल्मीक्यादिरूप इत्यर्थः। 'विप्राणां' वैदिकमार्गवर्तिनां ब्राह्मणानां मध्ये, 'ऋषिः' तत्तद्ग्रन्थप्रवर्तको वसिष्ठादिरूपः, बभूव। 'मृगाणां' चतुष्पदां मध्ये, शक्त्याधिक्येन युक्तः 'महिषः', बभूव। 'गृध्रोपलक्षितानां' सर्वेषां पक्षिणां मध्ये प्रबलः 'श्येनः', बभूव। 'वनानां' वृक्षसमूहरूपाणां मध्ये, छेदनार्थः 'स्वधितिः' परशुः, बभूव। यागहेतुभूतवल्यात्मकः 'सोमः', भूत्वा 'रेभन्' मन्त्रशब्दयुक्तः सन्, 'पवित्रं' शुद्धिकारणं गङ्गाजलकुशदर्भादिद्रव्यजातं सर्वम्, 'अत्येति'॥''—इति तै० आ० सा० भा०। ऋक्सामसंहितयोः सायणीयभाष्ययोः एकरूप मेव व्याख्यानान्तर मपि।

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्। गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः* ॥ वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यृतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्व मक्षर मित्यधिदैवत मथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमतामृतस्यात्मनः† कर्माणि ब्रह्मणो मतान्यय मेवैतत् सर्व मनुभवत्यात्मगति माचष्टे‡ ॥ १४ (२७) ॥ १४.

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः। सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सन्नवन्ते§ ॥ एत एव सोमं गावो धेनवो

* ऋ० सं० ७, ४, १७, ४ ; मा० सं० छ० आ० ९, १, ४, २ ।

† "०बुद्धिमतान्यृतस्यात्मनः" ख, ग, भ।

‡ 'वह्निः' वोढा, यजमानः 'तिस्रः वाचः' ऋग्यजुःसामात्मिकाः स्तुतीः 'प्र ईरयति'। तथा 'ऋतस्य' यज्ञस्य 'धीतिं' धारयित्रीं 'ब्रह्मणः' परिवृढस्य सोमस्य 'मनीषां' मनस ईशित्रीं कल्याणीं वाचं च प्रेरयति। किञ्च 'गोपतिं' वृषभं यथा 'गावः' 'अभिगच्छन्ति' तद्वत् गवां स्वामिनं सोमं गावः, 'पृच्छमानाः' पृच्छन्त्यः सत्या 'यन्ति' स्वपयसा मिश्रयितु मभिगच्छन्ति। तथा 'वावशानाः' कामयमानाः 'मतयः' स्तोतारः 'सोमं' 'यन्ति' स्तोतु मभिगच्छन्ति ॥"—इति सा० भा०।

§ ऋ० सं० ७, ४, १७, ५ ; सा० सं० उ० आ० ९, ९, १०, ९ ।

रश्मयो वावश्यमानाः* कामयमाना आदित्यं यन्त्येव मेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्त्येव मेव सोमः सुतः पूयते अज्यमान एत मेवार्काश्च त्रिष्टुभश्च सन्नवन्ते तत एतस्मिन्नादित्य एकं भवन्तीत्यधिदैवत† मथाध्यात्म मेत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि‡ कामयमानान्यात्मानं यन्त्येव मेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्त्येव मेव सोमः सुतः पूयते अज्यमान इम मेवात्मा च सप्त ऋषयश्च सन्नवन्ते तानीमान्येतस्मिन्नात्मन्येकं§ भवन्तीत्यात्मगतिं माचष्टे‖ ॥ १५ (२८) ॥ १५.

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन् प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो

---

* "वावाश्यमानाः" ख, ग, भ।

† "भवन्त्यधिदैवत" ख, ग, भ।

‡ वावाश्यमानानि" ख, ग, भ।

§ "तान्येतस्मिन्नात्मन्येकं" ख. ग, ज।

‖ "'धेनवः' प्रीणयित्र्यो गावः 'सोमं' 'वावशानाः' कामयमानाः भवन्ति। 'विप्राः' मेधाविनः स्तोतारो 'मतिभिः' 'पृच्छमानाः' प्रच्छन्तो भवन्ति। 'अज्यमानः' गोभिः श्रियमाणैः 'सुतः' अभिषुतः, 'सोमः' अभिर्भिः परि 'पूयते'। तथा 'त्रिष्टुभः' त्रिष्टुब्रूपा 'अर्का' अर्चनाभिः क्रियमाणाः एते मन्त्राः 'सोमे' 'सं नवन्ते' सङ्गच्छन्ते॥— इति सा० भा०।

वावृधे सुवान इन्दुः* ॥ अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुरित्यधिदैवत मथाध्यात्म मत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा वृषा पवित्रे अधि सानो अव्ये महत् सोमो† वावृधे सुवान इन्दुरित्यात्मगतिं माचष्टे‡ ॥ १६ (२९) ॥ १६.

महत्तत्सोमो महिषश्चकारापां यद्गर्भो ऽवृणीत देवान्। अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः§ ॥ महत्तत् सोमो महिषश्चकारापां यद्गर्भो ऽवृणीत देवाना माधिपत्य|| मदधादिन्द्रे

* ऋ० सं ७, ४, १८. ५; सा० सं० उ० आ० ६, १, ४, ७।

† "बृहत्सोमो" ख, ङ, ज।

‡ "समुद्रः" यस्मादापः सन्द्रवन्ति, स समुद्रः, अपां वर्षकः। 'राजा' सोमः। 'प्रथमे' विस्तृते 'भुवनस्य' उदकस्य 'विधर्मन्' विधारके ऽन्तरिक्षे 'प्रजाः' 'जनयन्' उत्पादयन् 'अक्रान्' सर्वं मतिक्रामति। *** । 'वृषा' कामानां वर्षिता, 'सुवानः'। अभिषूयमाणः, 'इन्दुः' दीप्तः, स 'सोमः'। 'अधि' अधिकं 'सानो' समुच्छ्रिते, 'अव्ये' अविमये, पवित्रे 'बृहद्' प्रभूतम् 'वावृधे' वर्द्धते ॥"—इति सा० भा०।

§ ऋ० सं० ७, ४, १९, १; सा० सं० उ० आ० ६, १, ५, १०।

|| "देवानामाधिपत्य" ख, ङ, ज।

पवमान ओजो ऽजनयत्सूर्ये ज्योतिरिन्दुरादित्य इन्दु-
रात्मा* ॥ १७ (२०) ॥ १७.

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार। देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान† ॥ विधुं विधमनशीलं दद्राणं दमनशीलं‡ युवानं चन्द्रमसं पलित आदित्यो गिरति सद्यो म्रियते स दिवा समुदितेत्यधिदैवत मथाध्यात्मं विधुं विधमनशीलं दद्राणं दमनशीलं§ युवानं महान्तं पलित आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिं माचष्टे|| ॥ १८ (२१) ॥ १८.

* "'महिषः' महान् पूज्यो वा सोमः, 'महत्' प्रभूतं 'तत्' कर्म 'चकार' अकरोत्। किं तत्? 'अपां गर्भः' उदकानां गर्भः, उदकानां गर्भभूतः, जनयितृत्वाज्जन्यत्वाच्च। सः सोमः 'देवान्' 'अवृणीत' सम्भजनेति। 'यत्' तत् कृतवानिति। किञ्च 'पवमानः' पूयमानः, सोमः, 'ओजः' सोमपानेन जन्यं बलम् 'इन्द्रे' 'अदधात्' अदधात्। तथा 'इन्दुः' सोमः 'सूर्ये' 'ज्योतिः' तेजः अजनयत् ॥"—इति सा० भा०।

† ऋ० सं० ८, १, २६, ५; सा० सं० उ० आ० ४, १, ४, २; अथ० सं० ९, १०, ९-१०।

‡,§ "द्रमनशीलं" ख, ग, घ।

|| "अनया कालात्मक इन्द्रः स्तूयते। 'विधुम्' विधातारम्, सर्वस्य युद्धादेः कर्तारम्। विपूर्वो दधातिः करोत्यर्थः। तथा 'समने'। अनन्त मनः प्राप्तम्, सम्यगननोपेते सङ्ग्रामे। 'बहूनां' शत्रूणां 'दद्राणं' द्रावकम् ईदृक्षाम् अवयवैः 'युवानं' सन्तं

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः* ॥ सहजातानां षण्णामृषीणामादित्यः सप्तमस्तेषा[†] मिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं[‡] भवन्तीत्यधिदैवत मथाध्यात्मं सहजातानां षण्णा मिन्द्रियाणा मात्मा सप्तमस्तेषा मिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह सम्मोदन्ते यत्रेमानि सप्तऋषीणानीन्द्रियाण्येभ्यः पर

पतयं 'पलितः' जरा 'जगार' निगिरतीन्द्राद्यथा । एव मुक्तलक्षणं बहुमावलक्षणस्य 'देवस्य' कालात्मकस्य इन्द्रस्य 'महित्वा' महत्त्वेनोपेतं 'काव्यं' सामर्थ्यम् 'पश्य' पश्यत हे जनाः! तथा 'जरसा' प्राप्तोऽयं 'ममार' म्रियते । सः 'ह्यः' परेद्युः 'समान' सम्यक् चेष्टते; पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः । तदेवं चत्वारि नामानि शरीराङ्गानि ॥"—इति सा० भा० ।

* ऋ० सं० १, २, ११, ५; अथ० सं० ९, १५, १६ ।

† "मादित्यरश्मयस्तेषा" रोथ्‌धृतोऽय मपि पाठः क्वचित् ।

‡ "आदित्यस्तान्यस्मिन्नेकं"—इत्यपि पाठो रोथ्‌धृतः ।

आत्मा तस्मिन्नेकं* भवन्तीत्यात्मगतिं माचष्टे† ॥ १९ (३२)॥ १९.

॥ इति नैरुक्ते त्रयोदशस्यैव द्वितीयः पादः समाप्तः‡ ॥

॥ अथ तृतीयः पादः§ ॥

स्त्रियः॑ स॒तीस्ताँ उ॑ मे पुंस॑ आहुः पश्य॑दक्ष॒ण्वान्न वि चे॑तद॒न्धः। क॒विर्यः पु॒त्रः स ईमा चि॑केत॒ यस्ता

* "तस्मिन्नेतस्मिन्नेकं" ख, ग, ङ।

† "साकञ्जानाम् एकस्मादादित्यात् सहोत्पन्नानां सप्तानाम् ऋतूनां मध्ये 'सप्तथं' सप्तमम् ऋतुम्। एकजम् एकोत्पन्नम् आहुः कालतत्त्वविदः। चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षड् ऋतवो भवन्ति, अधिकमासेनैक उत्पद्यते सप्तमर्तुः। न च तादृशो मास एव नास्तीति मन्तव्यम्; अस्ति त्रयोदशो मास इत्याहुरिति श्रुतेः। तदेवोक्तं—'षडिद्यमाः' इत्यत्र एवकारार्थः। षडेव ऋतवो मासद्वयरूपाः 'ऋषयः' गन्तारः। ते च 'देवजाः' देवादादित्याज् जाता इत्येव माहुः। सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः। "निःसूर्योऽधिकमासो मण्डलं तपते रवेः"—इत्यादिश्रुतेः। तस्मात् षडेव देवजाः; अदेवज एकः। 'तेषाम्' ऋतूनां सरूपाणि 'इष्टानि' सर्वैरभिमतानि, 'धामशः' तत्तत्स्थाने 'विहितानि' पृथक् पृथक् स्थापितानि; 'रूपशः' रूपभेदेन विकृतानि, विविधाकारविकृतानि। स च रूपभेदस्तैत्तिरीयैराम्नातः,—'स एव सन् वसन्ताय प्रायच्छत्, यवं ग्रीष्माय' इत्यादि। 'स्थात्रे' अधिष्ठात्रे तदर्थाय 'रेजन्ते' चलन्ति, जगदनुग्रहाय पुनःपुनरावर्तन्त इत्यर्थः॥"—इति सा० भा०।

‡ चतुर्दशाध्यायवादिषु च-छ-ज-पुस्तकेषु नास्त्येव पादविभागः, तथा चैष पाठः ख-ग-ङ-पुस्तकमात्रसम्मतः; तथापि लेखकप्रमादात् क्वचित् व्यतिक्रमश्च।

§ ख-ग-ङ-पुस्तकसम्मतः, शेषेषु च पादान्वितपुस्तकेष्वेव मतः।

विजानात् स पितुष्पितासत्* ॥ स्त्रिय एवैताः† शब्दस्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्देन‡ निराहारः प्राण इति पश्यन् कश्चान्न विजानात्यन्धः कविर्यः पुत्रः स इमा जानाति यः स इमा§ जानाति स पितुष्पितासदित्यात्मगतिं माचष्टे|| ॥ २० (३३) ॥ १¶ ·

* ऋ० सं० १, ३, १७, १ ; अथ० सं० ९, १५, १९ ।

† "स्त्रिय एवेति ताः" ख, ङ, ज ।

‡ "पुंशब्दे" ख, ङ, ज ।

§ "स इमा" ख, ग, भ ।

|| "'मे' मदीया या दीधितयः 'स्त्रियः' स्त्रीत्ववत्यो 'योषितः' 'सतीः' सन्ति । योषिद्वदुदकधारणात् स्त्रीत्वम् । एषां रश्मीनां नाविद्धलिङ्गत्वात् स्त्रीलिङ्गता । 'तान् उ' तानू रश्मीनेव 'पुंस आहुः' प्रभूतवृष्ट्यादिकर्तृत्वेन पुरुषानाहुः । अतिनिर्देशापेक्षया पुंलिङ्गता । एतम् अर्थं मन्त्रनिगूढम् 'अक्षण्वान्' ज्ञानदृष्ट्युपेतः कश्चित् महान् 'पश्यत्' जानाति । 'अन्धः' अतथाविधः स्थूलदृष्टिः 'न विचेतत्' न विचेतयति, न जानाति । किंच 'यः' 'कविः' क्रान्तदर्शी 'पुत्रः', स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः; पुत्रं जगतां पाता, वृष्ट्यादिकरणयोऽग्नि । 'सः ईम्' स एव पुत्रः । यद्वा ईमेनं मन्त्रं स्त्रीणां सतीनां पश्चात् पुरुषभावम् 'आ चिकेत' सर्वतो जानाति । विष्णोः स्थितिं पुत्र एव जानाति नान्यः । 'यः' कश्चित् 'ता' तानि 'विजानात्' स्त्रीपुरुषपुत्ररूपाणि जानीयात्, 'सः पितुः पिता असत्' पिता दृश्या जगत्पालको रश्मिसमूहः, तस्यापि पिता आदित्यः, स भवति ; आदित्य एव भवतीत्यर्थः । यद्वा लौकिकोक्तिरियम् । यस्तानि जानाति स एवं भवति ; पुत्रपौत्रादिप्रचितचिरकालं जीवी भवति ।—इत्यधिदैवतम् ॥

अथाध्यात्मम् ।— या इदानीं 'स्त्रियः सतीः' स्त्रीत्वं प्राप्ताः 'आहुः' लौकिकाः, 'तान्' तानेव 'मे' मह्यं 'पुंसः' पुरुषान् 'आहुः' प्रतिपादयन्ति तत्त्वज्ञाः । कथ मन्य-

सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि। ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः* ॥ सप्तैतानादित्यरश्मीनय मादित्यो गिरति मध्यस्थानोर्द्ध्वशब्दो यान्यस्मिंस्तिष्ठन्ति† तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवत मथाध्यात्मं सप्तेमानीन्द्रियाण्यय मात्मा गिरति मध्यस्थानोर्द्ध्वशब्दो यान्यस्मिंस्तिष्ठन्ति‡ तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणीन्द्रियाणि§ ज्ञानकर्मणेत्यात्मगतिमाचष्टे|| ॥ २१ (३४) ॥ २.

---

ज्ञात्मभावः ? उच्यते—एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनश्चैतन्यज्ञानमात्रैक-तनद्वारपदेशोपपत्तेः । * * * । द्वितीयः पादः पूर्ववत् । किञ्च पुत्रो वयसाल्पोऽपि 'यः' 'कविः' क्रान्तप्रज्ञः ज्ञानी स्यात् 'ईम्' इम मर्थं 'सः' 'विचिकेत' जानाति । एष सूक्ष्मस्य परमात्मनः 'ता' तानि स्त्रीत्वपुंस्त्वादीनि यो विजानीयात् सोपाधिकानि जानीयात्, 'सः' 'पितुः' स्वोत्पादकस्यापि ज्ञानरहितस्य 'पिता असत्' पितृवत् पूज्यो भवति ॥"—इत्यादि सा० भा० द्रष्टव्यम् ।

¶ विषयस्यास्य विशदानं परस्तात् (३९८-९० §, ||, ¶) लिखितं द्रष्टव्यम् ।

* ऋ० सं० १, २, २१, १ ; अथ० सं० ९, १८, ७ ।

†,‡ "यत एतस्मिंस्तिष्ठन्ति" ग, च, ज ।

§ "सर्वाणि कर्माणि" ख, म, ञ ।

|| "'सप्त' सर्पणस्वभावाः सप्तसङ्ख्या वा रश्मयः, 'अर्द्धगर्भाः' संवत्सरस्यार्द्धं 'गर्भं' गर्भस्थानीय मुदकं धारयमाणाः । यद्वा मध्यमस्थानार्द्धे मध्येऽन्तरिक्षे गर्भवद्धर्त-

न वि जानामि यदिव इदमस्मि निण्यः सन्नद्धो मनसा चरामि। (यदा मागन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भाग मस्याः* ॥ न विजानामि यदि वेद मस्मि निण्यः प्रसन्नद्धो मनसा चरामि†) न हि (वि‡) जानन्§ बुद्धिमतः (पुष्टिः||) पुष्यः परिवेदयन्तो¶ ऽय मादित्योऽय मात्मा** ॥ २२ (३५) ॥ ३.

---

मानाः। 'भुवनस्य' लोकस्य 'रेतः' सारम्, दृष्टिप्रदत्वेन रेतोभूताः। तादृशा रश्मय 'विष्णोः' व्यापकस्यादित्यस्य 'विधर्मणि' जगद्धारणव्यापारे 'प्रदिशा' प्रदेशेन 'तिष्ठन्ति' वर्तन्ते। किञ्च ते 'धीतिभिः' प्रज्ञाभिः मनसा जगदुपकारः कर्त्तव्यः इति बुद्ध्वा च 'विश्वतः' सर्वतः। द्वितीयार्थे तसिः। विश्वं परिभवन्ति, परितो भावयन्ति, कृत्स्नं जगद् व्याप्नुवन्तीत्यर्थः। यस्मादेवं तस्मात् 'ते' त एव 'विपश्चितः' बुद्धियुक्ताः परिभुवः सर्वेण व्याप्ताश्च ॥

यद्वा 'सप्तार्द्धगर्भाः'। 'सप्त' महदहङ्कारौ, पञ्च तन्मात्राणीति मिलित्वा सप्तसङ्ख्याकानि तत्त्वानि ; 'अर्द्धगर्भाः' अविकृतिरूपाया विकारात्मिकाया मूलप्रकृतेः, प्रकृतिविकृतेर्वा हिरण्यगर्भस्यात्मनश्चोत्पन्नत्वादर्द्धांशेन प्रपञ्चाकारेण परिणामादर्द्धगर्भाः, पुरुषांशस्याविक्रियत्वादित्यभिप्रायः; अत एव तेषां प्रकृतिविकृतित्वम्। यस्मादेवं तस्माद् 'भुवनस्य' 'रेतः' कारणम्। कारणभूतानि तान्येव 'विष्णोः' व्याप्तस्य पुरुषस्य 'विधर्मणि' 'प्रदिशा' प्रदेशेन 'तिष्ठन्ति'। इतरत् समानम् ॥"—इति सा० भा०।

* ऋ० सं० २, ३, २१, २ ; अथ० सं० ९, १८, ५।

†, || एतौ पाठौ न दृश्येते च-छ-ज-पुस्तकेषु।

‡ नैतत् पदम् च-ग-झ-पुस्तकेषु।

§ "जानन्" च, ग, झ।

¶ "परिवेदयते" च, ग, झ।

** "अयं 'यद्ध इव इदम्' यदपीदं विश्वम् 'अस्ति' ; तस्मात् प्रपञ्चोऽयमेवास्ति ; नामरूपांशं परमार्थं त्यक्त्वा सर्वमात्मनोऽस्ति। सोऽयं सच्चिदानन्दाकारोऽस्ति,

## अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना

योऽयं भवामीति 'न विजानामि' निविदं नाज्ञासिषम्; परं ज्ञानजनित मिदं सर्वं भवामीति ज्ञानं जातम्, अविवेकज मित्यर्थः, कार्यकारणयोरभेदात्। ब्रह्मप्रपञ्चयोरपि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजात मपि ब्रह्मरूप मेव भवति। "इदं सर्वं यदयमात्मा", "ब्रह्मैवेदं सर्वम्", "आत्मैवेदं सर्वम्", "स ईक्षत बहु स्यां प्रजायेय"—इत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। "तदनन्यत्वमारम्भणशब्दादिभ्यः"—इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम्। अतः इत्यमस्य अयमर्थः। यत् परोक्षज्ञानं सर्वैकात्म्यरूप मानुभाविक मस्ति, तदिदं, तदहमेवास्मि। इदं सर्वं भवामीति ज्ञानं मे जातम्। अपि नेतद् दार्ढ्याभिव्यञ्जनम्। आनुभाविकं सार्वात्म्यं यदस्ति, तत् 'न विजानामि' न प्राप्तोऽस्मि। ज्ञानजनितं सार्वात्म्यं ज्ञातं न त्वानुभाविक मित्यर्थः। तत्र कारण माह—यतोऽहं 'निण्यः' अन्तर्हितनामैतत्; अन्तर्हितः, गूढचित्तः; चित्तप्रत्ययप्रवाहाभावेन परिच्छिन्न इत्यर्थः। तत्रोपपत्ति माह—'सन्नद्धः' अविद्याकामकर्मभिः सम्यङ् नद्धो वेष्टितः। अत एव 'मनसा' युक्तः भावनामहिम्ना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः सं 'चरामि' संसारे। अथवा मनसा सन्नद्धः चरामि, इन्द्रियपरवश एव सन् संसारे दुःखं अनुभवामि, न सार्वात्म्यं जानामीति परिदेवते। यास्कोऽपीमं परिदेवनार्थमेनोदाजहार—"अथापि परिदेवना कस्माच्चिद् भावात् न वि जानामि यदिवेदमस्मि (निरु० ७, १, ३.)"—इति। बहिर्मुखचेतसां सकलपापपरिणामजनितं दुःखं अन्यत्र श्रूयते। "पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्"—इति। तर्हि कदैतद् भवति? इत्याह—'यदा मागन्' आगमिष्यति तदा। किं तत्? इत्युच्यते—'ऋतस्य' परमार्थस्य परस्य ब्रह्मणः 'प्रथमजाः' प्रथमोन्मेषः प्रथमोत्पन्नः चित्तप्रत्ययप्रवाहजनितोऽनुभवः। स यदा 'मा' मां प्राप्नोति, 'आदित्' अनन्तर मेव अवयवयोगेन 'अस्याः' 'वाचः' ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचो यदिवेदमस्मीत्यस्याया वा 'भागम्' भजनीयं सद्रूपस्वरूपा सामर्थ्यं परं ब्रह्मपदम् 'अश्नुवे' प्राप्नोमि। चित्तस्य बहिर्मुखतां परित्यज्य अन्तर्मुखतैवदुःसम्पादा। सा यदा स्यात् तदासौ मेव ब्रह्मरूपं सुलभं भवति, पश्चाद् विघ्नाभावात्। यथा गिरिशिखरात् पतन् पाषाणोऽविलम्बेन

सयोनिः। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम्* ॥ अपाङ्यति प्राङ्यति स्वधया गृभीतोऽमर्त्य आदित्यो मर्त्येन मनसा सह† तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं न चन्द्रमस मित्यधिदैवत मथाध्यात्म मपाङ्यति प्राङ्यति‡ स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यात्मानं न मन इत्यात्मगति माचष्टे§ ॥ २३ (३६) ॥ ४.

---

पतति, तद्वत्। चित्प्रत्यक्सुखस्य दुःखकत्व मपि तथैव श्रूयते—'कश्चिद्धीरः प्रत्यगात्मान मैक्षदावृत्तचक्षुरमृतत्व मिच्छन्'—इति ॥"—इति षा॰ भा॰।

* ऋ॰ सं॰ १, २, ११, २ ; अथ॰ सं॰ ९, १८, १।

† "मर्त्येन चन्द्रमसा सह" ख, ग, ज।

‡ "मपाङ्ङेति प्राङ्ङेति" ख, ग, भ।

§ "'अमर्त्यः' अमरणधर्मा अय मात्मा, 'मर्त्येन' मरणधर्मणा भूतात्मना देहेन 'सयोनिः' समानस्थानः। यत्र परिच्छेदको देहोऽस्ति, तत्र सर्वत्र सोऽयं मपि तिष्ठ-तीत्यर्थः। यद्वा समानोत्पत्तिः; अध्यासेन सहैवोत्पत्तिप्रत्ययवत्त्वे। एवम्भूतः सन् 'स्वधया' अन्नोपलक्षितकर्मणा 'गृभीतः'। यद्वा स्वधाशब्देनान्नजं शरीरं लक्ष्यते। तेन गृहीतः सन् 'अपाङ् एति' अधस्तात् कर्म कृत्वाधो गच्छति। 'प्राङ् एति' ऊर्ध्वलोकं प्राप्नोति। परमात्मैव सूक्ष्मशरीरोपाधिकः सन् नानाविधं कर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण सम्बद्धो लोकान्तरेषु सञ्चरति। स्थूलसूक्ष्मोभयशरीरपरित्यागेन लोके गुणत्रयान्वितः सन् परिभ्रमति। तथाच श्रूयते—'गुणान्वयो यः फलकर्मकर्त्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूप-स्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः'—इति। इदानीं अथ प्राधान्ये-

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत्स जीवात्*॥ क आदित्यो धुरि गा युङ्क्ते रश्मीन् कर्मवतो भानुमतो दुराधर्षानसुन्व्यसुनवन्तीषूनिषुणवन्ति† मयोभूनि सुखभूनि य इमं सम्भृतं वेद कथं स जीवतीत्यधिदैवतमथाध्यात्मं

नेषु'। भुवनानाम्। यत्तु पृथिव्यादिषु लोकेषु मध्ये जगत्कारणं ब्रह्मैव 'ज्येष्ठम्' प्रशस्ततमम् 'नाम' बभूव। तस्य परमार्थत्वात् तद्व्यतिरिक्तानां व्यावहारिकत्वाच्च। यद्वा 'ज्येष्ठम्' वृद्धतमं जगत्कारणत्वेन सर्वथा प्रादुर्भूतं बभूव। * * *। यद्वा इदं तदेव ब्रह्म स्वप्रकाशतया 'नाम' दिदीपे। * * *। 'यतः' उपादानभूतात् यस्माद् ब्रह्मणः 'उग्रः' उद्गूर्णः 'त्वेषनृम्णः' प्रदीप्तबलः सूर्य्यात्मकः इन्द्रः 'जज्ञे' जातो बभूव। श्रूयते हि—'चक्षोः सूर्यो अजायत' इति, 'सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति च। * * *। स च 'जज्ञानः' जायमान एव 'सद्यः' शीघ्रं 'शत्रून्' घातयितुम् मन्देहादीन् राक्षसान् 'निरिणाति' निर्गमयति। यद्वा उपासकानां पापरूपान् शत्रून् निहन्ति। तथाच ब्राह्मणम्—'सद्यो ह्येव जातः पाप्मानमपाहत' इति। * * *। 'विश्वे' सर्वे 'ऊमाः' अवन्ति रक्षन्तीत्यूमाः प्राणिनः। * * *। सर्वे प्राणिनो 'यं' सूर्य्यात्मकमुद्यन्तमिन्द्रमनुलक्ष्य मदथं मुदमात्—मदथं मदमात्—इति 'मदन्ति' हृष्यन्ति। * * *। तथाच ब्राह्मणम्—'भूतानि वै विश्व ऊमास्त एतममदन्नुदगादुदगादिति' इति। तैत्तिरीयकञ्च—'तस्मात् सर्व एव मन्यन्ते मां प्रत्युदगादिति' इति। यद्वा यं स्तुत्यादिभिर्मादयन्ति तत्, पश्चात् सर्वे प्राणिनोऽभीष्टप्राप्त्या हृष्यन्ति। * * *। स इन्द्रो यक्षे इत्यन्वयः॥"— इति सा० भा०।

* ऋ० सं० १, ९, ८, १ ; सा० सं० उ० आ० ४, १, ५, १० ।

† "दुराधर्षानसुन्वसुनवन्तौ"—इत्यादि च, म, भ ।

क आत्मा धुरि गा युङ्क्ते इन्द्रियाणि कर्मवन्ति भानुमन्ति* दुराधर्षाणदुःखसुखयन्तीषूनिषुवन्ति† मयोभूनि सुखभूनि य इमानि सम्भृतानि वेद चिरं स जीवतीत्यात्मगतिं‡ माचष्टे§ ॥ २५ ॥ (३८) ॥ ६.

* "कर्मवन्तो भानुमन्तो" ख, ङ, ज ।

† "दुराधर्षाणदुःखसुखयन्तीषूनिषुवन्ति" ख, ग, भ ।

‡ "य इमं सम्भृतं वेद चिरं जीवतीत्यात्मगति" ख, ङ, ज ।

§ "'अद्य' अस्मिन् कर्मणि 'ऋतस्य' गच्छत इन्द्रसम्बन्धिनो रथस्य 'धुरि' अग्रवहनप्रदेशे 'गाः' गतिमतोऽश्वान् 'कः' 'युङ्क्ते' को नाम नियोक्तुं शक्नोति ? न कोऽपीत्यर्थः । कीदृशानश्वान् ? 'शिमीवतः' वीर्यकर्मोपेतान् । 'भामिनः' तेजसा युक्तान् । 'दुर्हृणायून्' परैर्दुःसहेन क्रोधेन युक्तान् । 'आसन्निषून्' येषाम् आसनि आस्ये मुखप्रदेशे शत्रूणां प्रहरणार्थं निषवो बाणाः सन्ति तादृशान् । 'हृत्स्वसः' हृत्सु शत्रूणां हृदयेषु अस्यन्ति, स्वकीयं पादं क्षिपन्तीति हृत्स्वसः । 'मयोभून्' मयसः सुखस्य भावयितॄन्, स्वकीयानां सुखप्रदानित्यर्थः । 'यः' यजमानः 'एषाम्' ईदृशानामश्वानां 'भृत्यां' भरणक्रियां रथवाहनक्रियाम् 'ऋणधत्' समर्धयति स्तौतीति यावत् 'सः' यजमानो 'जीवात्' जीवनवान् भवेत् ।

यद्वा क इति प्रजापतिरुच्यते ; 'को ह वै नाम प्रजापतिः' इति श्रुतेः । 'ऋतस्य' 'धुरि' निर्वाहे 'गाः' वेदरूपान् वाग्विशेषान् 'अद्य' इदानीं 'युङ्क्ते' संयोजयति । कीदृशान् ? 'शिमीवतः' प्रतिपाद्यैः कर्मभिः युक्तान् । 'भामिनः' उज्ज्वलान् । 'दुर्हृणायून्' दुर्हृणीयतिर्वधकर्मा, शत्रुनाशकान् ; वेदाध्ययनस्य नित्यत्वात् । 'आसन्निषून्', 'आसनि' आस्ये 'इषुः' एषणं गमनं उच्चारणं येषां तान् । 'हृत्स्वसः', 'हृत्सु' हृदयेषु दीप्यमानानाम् प्रकाशमानानामित्यर्थः । 'मयोभून्', 'मयसः' अध्ययनप्रभवस्य सुखस्य भावयितॄन् । 'यः' यजमानः 'एषां' वचसां 'भृत्यां' भरणक्रियाम् 'ऋणधत्' समृद्धिमतीं करोति 'स जीवात्' स एव जीवति ; अन्ये जीवन्मृता इत्यर्थः ॥"—इत्यादि सा० भा०

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति। कस्तोकाय क इभायोत राये ऽधि ब्रवत्तन्वे३ को जनाय* ॥ क एव गच्छति को ददाति को बिभेति को मंसते सन्तमिन्द्रं कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय† ॥ २६ ((३९))॥ ७.

* ऋ० सं० १, ६, ८, १।

† "अनुपहीनरीन्द्रे आगते सति 'क ईषते' भयोभीतः सन् को निर्गच्छति? न कोपीत्यर्थः। 'कः तुज्यते' को हिंस्यते? शत्रुहिंस्योऽपि कश्चिन्नास्तीत्यर्थः। 'कः' यजमानः 'बिभाय' बिभेति? इन्द्रे रक्षके सति भयमपि नोपपद्यते। दूरे तस्य शत्रुकृता हिंसा—'अन्ति' अन्तिके समीपे सन्तं वर्त्तमानमिन्द्रं 'कः' पुरुषो 'मंसते' जानाति; वयमेव जानीमो नान्य इत्यर्थः। एकः 'कः' पूरकः; एवं सहायार्थमिन्द्रे आगते सति 'कः' यजमानः 'तोकाय' पुत्राय 'अधिब्रवत्' हे इन्द्र! अस्मदीयं पत्रं रक्षेत्येवंरूपमधिवचनं को यजमानः कुर्यात्? स्वयमेवेन्द्रो रक्षतीति भावः। 'इभाय' गजाय 'कः' अधिब्रवत्? 'उत' अपि च 'राये' शत्रुभिरपह्रियमाणाय धनाय 'कः' अधिब्रवत्?—अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात्? न कोपीत्यर्थः। अपि च 'तन्वे' स्वकीयाय शरीराय 'जनाय' परिजनाय च 'कः' अधिब्रवत्? स्वशरीररक्षार्थं परिजनरक्षार्थं च इन्द्रस्याधिवचनं नापेक्षितम्; स्तुत्या प्रीत इन्द्रः स्वयमेव रक्षतीत्यर्थः॥

यदा तु क-शब्दाभिधेयस्य प्रजापतेः सम्बन्धिनि कर्मणि विनियोगः, तदानीं परमैश्वर्ययोगात् इन्द्रशब्देन प्रजापतिरेवाभिधीयते; यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'—इति विनियोगानुसारेण कदाचन—इत्यस्यामृचि विद्यमान इन्द्रो गार्हपत्यपरतया नीयते, तद्वत्॥"—इत्यादि सा० भा०।

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः। कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः*॥ क आदित्यं पूजयति† हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुदेवः कल्याणदेव इत्यधिदैवतमथाध्यात्मं क आत्मानं पूजयति‡ हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति कस्मै देवा आवहानाशु होमार्थान् को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञ इत्यात्मगतिमाचष्टे§॥ २७(४०)॥ ८.

---

* ऋ० सं० १, ६, ८, ३।

†,‡ "पूरयति" च, छ, ज।

§ "'कः' यजमानः 'अग्निम् ईट्टे' इन्द्रार्थं हविर्निरूप्य अग्निं स्तौति? इन्द्राय हविर्निर्वापोऽपि सम्यक् कर्तुं न शक्यते, इन्द्रस्य दुर्विज्ञानत्वात्। को वा इन्द्रयागार्थं अग्निं 'स्रुचा' जुह्वा, 'ध्रुवेभिः' ध्रुवैः नित्यैः, 'ऋतुभिः' वसन्तादिकालैरुपलक्षितेन 'घृतेन' 'हविषा' 'यजातै' यजेत्। यद्वा ऋतवः प्रयाजदेवताः, "ऋतवो वै प्रयाजाः"—इति श्रुतेः; ताभिः 'ध्रुवैः' प्रकृतौ विकृतौ चानुष्ठेयतया नित्यैः ऋतुभिः सह 'अग्निम्' आज्यभागदेवताम्, 'घृतेन हविषा' को यजेत्? न कोऽपीत्यर्थः। 'कस्मै' यजमानाय 'होम' दातव्यं प्रशस्तं धनम् 'आशु' शीघ्रम् 'देवाः' 'आवहान्' आवहन्ति प्रयच्छन्ति? न कस्मायपीत्यर्थः। इन्द्र एव धनस्य दाता, नान्ये देवा इतीन्द्रः स्तूयते। 'वीतिहोत्रः' प्राप्तयज्ञः, 'सुदेवः' शोभनदेवताकः 'कः' यजमानः 'मंसते' इन्द्रं सम्यक् जानाति? न कोऽपीत्यर्थः। बहुविधेन स्तोत्रेण चिरकालोपासनेन चेन्द्रः प्रत्यक्षो भवति, नान्येन प्रकारेणेति तात्पर्यार्थः॥"—इत्यादि सा० भा०।

त्वम॒ङ्ग प्र शं॑सिषो दे॒वः श॑विष्ठ मर्त्य॑म्। न त्वद॒न्यो म॑घवन्नस्ति मर्डि॒तेन्द्र॒ ब्रवी॑मि ते॒ वचः॑*॥ त्वमङ्ग प्रशंसीर्देवः शविष्ठ मर्त्यं न त्वदन्योऽस्ति मघवन् पाता वा पालयिता वा जेता वा सुखयिता वेन्द्र ब्रवीमि ते वच इति स्तुतिसंयुक्तम्† ॥ २८‡. (४१)॥ ९.

॥ इति निरुक्ते त्रयोदशाध्यायस्यैव तृतीयः पादः§ ॥

अथ चतुर्थः पादः॥

हं॒सः शु॑चि॒षद्वसु॑रन्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत्। नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जा ऋ॒त॒जा

* ऋ॰ सं॰ १, ६, ८, ४; य॰ वा सं॰ ६, ३७।

† "ते वच स्तुतियुक्तम्" ख, घ, ज।

‡ "'अङ्ग'—इत्यभिमुखीकरणे। 'अङ्ग!' 'शविष्ठ' हे बलवत्तम। इन्द्र! 'देवः' द्योतमानस्त्वं 'मर्त्यं' मरणधर्माणं मां स्तुवन्तं पुरुषं 'प्रशंसिषः' अस्मदनेन स्तुतमिति प्रशंसा। हे 'मघवन्' धनवन्! 'इन्द्र!' 'त्वदन्यः' त्वत्तोऽन्यः कश्चित् 'मर्डिता' सुखयिता 'न अस्ति'। अतः कारणात् 'ते' तुभ्यम् इदं स्तुतिरूपं 'वचः' 'ब्रवीमि' उच्चारयामि॥"—इत्यादि सा॰ भा॰।

§ अत्रापि पूर्ववदौपम्यं द्रष्टव्यम् (२९० पृ॰ "‡")।

अद्रिजा ऋतम्* ॥ हंस इति† हंसा सूर्यरश्मयः परमात्मा परं ज्योतिः पृथिवी व्याप्तेति‡ व्याप्तं सर्वं व्याप्तं वननकर्मणानभ्यासेनादित्यमण्डलेनेति§ त्ययतीति‖ लोका त्ययतीति¶ हंसयन्त्ययतीति** हंसाः†† परमहंसाः परमात्मा सूर्यरश्मिभिः प्रभूत गभीर वसतीति‡‡ त्रिभिर्वसतीति वा रश्मिर्वसतीति वा वह्निर्वसतीति वा§§ सुवर्णरेताः पूषा गर्भा‖‖ रिभेति रिभन्ता वनकुटिलानि कुटन्ता रिभन्तान्तरिक्षा चरत्यथान्तरिक्षा चरदिति दिवि¶¶ भुवि गमनं वा सुभानुः*** सुप्रभूतो होतादि-

* ऋ० सं० ३, ७, १४, ५ : य० वा० सं० १०, १४ ; १२, ४ ; कठ० उ० ५ ।

† "हंसेति" ख, ग, भ ।

‡ "पृथिव्याप्तेति" ख, ग, भ ।

§ "वननकर्माभ्यासेना०" ख, ग, भ ।

‖ "त्यजतीति" ख, ग, भ ।

¶ "लोकत्यजतीति" ख, ग, भ ।

** "हंसत्यजतीति" ख, ग, भ ।

†† नास्त्येतत् पदम् ख-ग-भ-पुस्तकेषु ।

‡‡ "प्रभूतगभीत वसतीति" ख, ग, भ ।

§§ "वह्निर्वसतीति वा रश्मिर्वसतीति वा"—इति पाठव्यतिक्रमः ख, ग, भ ।

‖‖ "पूषणा गर्भा" ख, ग, भ ।

¶¶ "रिफिरिति रिफिता वनकुटिलानि कुटन्ता रेफान्तान्तरिक्षचरेद्दथान्तरिक्षं चरतीति दिवि" ख, ग, भ ।

*** "सुभानुः" ख, ग, भ ।

त्यस्य गता भवन्त्यतिथिर्दुरोणसत्सर्वे दुरोणसद् द्रवं सर्वे रसा विकर्षयति रश्मिर्विकर्षयति वह्निर्विकर्षयति वननमभवत्यश्वगोजा* अद्रिगोजा धरित्रिगोजाः† सर्वे गोजा‡ ऋतजा बहुशब्दा भवन्ति§ निगमो निगमव्यति भवत्यृषे निर्वचनाय|| ॥ २९¶ (४२) ॥ १.**

* "भवन्त्यतिथिर्दुरोणसत् द्रवन्ति सर्वं रसान् विकर्षयन्ति रश्मिभिर्विकर्षयन्तो-त्यश्वगोजा" ख, ग, घ।

† "अब्जगोजा" ख, ग, घ।

‡ "सर्वगोजा" ख, ग, घ।

§ "ऋतगोजा ऋतजो बहुजो शब्दो भवति" ख, ग, घ।

|| "निगमो निगमयो भवत्यृषिनिर्वचनाय" ख, ग, घ।

¶ ख-ग-घ-पुस्तकेष्वेव पादस्तृतीयः।

** अत्र सायणीयभाष्यमेतद् द्रष्टव्यम्। तथाहि,——

"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रु-रित्यादि श्रुत्युक्तो मण्डलाभिमानी देवोऽस्ति, यश्च सर्वप्राणिचित्तरूपस्थितः परमात्मा, यच्च निरस्तसमस्तोपाधिकं परं ब्रह्म, तत् सर्वमेकमेवेति प्रतिपाद्यते॥ हंसः। हन्ति गच्छतीत्यर्थः। सर्वत्र सर्वदात्मा योऽहं सोऽसावित्यादिश्रुत्युक्तप्रकारेणैकीकृत्योपास्यः परमात्मतत्त्वप्रतिपाद्य आदित्यः। स च शुचौ दीप्ते द्युलोके सीदतीति शुचि-षत्। अथ यदतः परो दिवो ज्योतिर्दीप्यते इत्यादि श्रुतेः। अनेन द्युस्थान आदित्यः प्रतिपादितः। स एव मध्यस्थानो वायुरित्याह। वसुः सर्वस्य वास-यिता वायुः। स चान्तरिक्षसदन्तरिक्षचारी। अथ तस्यैव क्षितिस्थानवैदि-काग्निरूपतामाह—होता देवानामाह्वाता होमनिष्पादको वा। वेदिषद् वेद्यां गार्हपत्यादिरूपेण स्थितः। अतिथिरतिथिवत् सर्वदापूज्योऽग्निः। दुरोणसत्। दुरोणं गृहनाम। तत्र पाकादिसाधनत्वेन स्थितः। अनेन क्षितिस्थानाख्य-

सखायेत्यात्मानं (दुरात्मानं*) परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं वृक्षशरीरं वृक्षं पक्षी† प्रतिष्ठापयति तयोरन्यत्कृस्कान्न‡ मनश्नन्न्यो सरूपतां सलोकतां मश्नुते य एवं विद्वाननश्नन्न्यो§ अभिचाकशीतीत्यात्मगतिं माचष्टे|| ॥ ३०॥ (४३)॥ २.

* नास्त्येतत् पदम् ख-ग-ङ-पुस्तकेषु।

† "इत्थं वृक्षं शरीरं वृक्षे पक्षी" ख, ग, ङ।

‡ "तयोरन्यो भुङ्क्तान्य" ख, ग, ङ।

§ "य एवं वेदाश्नननश्नन्नो" ख, ग, ङ।

|| ख-ग-ङ-पुस्तकेष्वेव दृश्यमानः।

¶ अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ सूच्येते। यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया समानख्यानौ समानं वृक्षं परिषस्वजाते। एक मेव वृक्षं परिषस्वजाते आश्रयतः। तयोरन्य एकः पिप्पलं पक्वं स्वादु रस मत्ति अपरोऽनश्नन् अभिचाकशीति अभिपश्यति। तद्वत् द्वौ सुपर्णस्थानीयौ जीवपरमात्मानौ। सयुजा समानयोगौ। योगो नाम सम्बन्धः स च तादात्म्यलक्षणः। य एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मनः स तदात्मा। एव मन्यस्यापि य एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः। एव मेकस्वरूपावित्यर्थः। अनेन भास्करमतानुसारिणोऽतिरेकिणामौ जीवात्मा परमात्मनो नान्यः। स च परमात्मा जीवादन्यो जीवात्मयथाद्विति मतं निरस्तं भवति।

ननु सम्बन्धो द्विष्ठः। स च पक्षिणोरेव भेद मपेक्षते। अतः कथ मैकात्म्य मिति? न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अतएव सखायौ समानख्यानौ, नान्यख्यानौ। यन्मेकस्य यादृशं ख्यानं तादृश मेवान्यस्येति युक्त्या भेदः स्फुटं प्रतिभाति। कथं तादात्म्य मुच्यत इति न वक्तव्यम्। नात्र परस्परं दृष्टान्तो दार्ष्टान्तिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेव ख्यानं मितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्न मैका-

ख्यातम् । अनेन वाक्यभेदोऽपि निरस्तः । समानं वृक्षं परिषस्वजाते इत्यत्र यथा-क्रयान्तराभावादुभयोरेकाश्रयत्व मुभयुपसन्नत्वं सहत् सयुजा सखायावित्युभया-पेक्षयोगस्याने चावगमीये । इष्यते इति इष्टो देहः । स चोभयोः समान एक एव । जीवस्य भोगार्थत्वात् परमात्मना चुद्दैश्वर्यमहिमदर्शनास्योपलब्धिस्थानत्वाच्चोभ-योरपि समानः । तादृशं समानं वृक्षं परिषस्वजाते परिष्वजतः, आश्रयतः ।

न च जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकादिरिति वाच्यम् । तयोर्भावद्वैतत्वात् । तथा चाथर्वणिका अनन्तरमाम्नायास्य स्पष्टनिवर्तक मपरं मन्त्र मेव समामनन्ति—“समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्य मीश मस्य महिमान मिति वीतशोकः ॥”—इति । अस्यार्थः—एक एव शरीरे पूर्वः पुरुषः परमात्मा निमग्नो निमूढः सन् स्वस्य त्वपीश्वरोऽप्यनीशबुद्ध्या मुह्यमानो मूढः सन् शोचति । संसारे ऽहं कर्ता सुखी दुःखीति जननमरणे अनुभवति । यदा तु जुष्टं नित्यशुद्ध मन्यं संसारशोकातीत मीशं परमेश्वरं पश्यति स्वात्मत्वतया साक्षात्करोति । तदा वीतशोको देहाद् व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन् अस्य महिमान मिति । निर-स्तसमस्तोपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वेशत्वादिमहिमान मिति । इति प्राप्नोति । न च तद्भावान्यत्र तन्महिमा प्राप्यते । अतस्तद्रूपो भवतीत्यर्थः । तस्माद्वस्तुत एक एव । भेदस्तु मोहकृत इति प्रसिद्धम् । अनुभवदशायां लौकिक-बुद्ध्या भेदमभ्युपेत्योच्यते । तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूत मत्ति भुङ्क्ते । यस्य यदुपार्जितं तत्तस्य स्वादु भवति । अन्यः परमात्मानश्नन् आप्तकामत्वेनाभुञ्जानः । स्पृहाया अभावात् । आप्तकामस्य का स्पृहेति श्रुतेः । तस्माद् वास्तवभेद मपक्षीव तयोरन्य इत्युक्तम् । वस्तुतस्तु अनीशया शोचति मुह्यमान इत्युक्तत्वादभेद एव । तादृशः परमात्मा स्वात्मत्वेन अमन्तव्यत्वेनाभिधीयते । अत्र “द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारौ”—इत्यादिनिरुक्ते मत मस्य मन्त्रस्य व्याख्यान मनुसन्धेयम्(१)”—इति व्या॰ भा॰ ।

---

(१) आश्चर्य मेतद्! यदत्र चतुर्दशाध्यायीयं नैरुक्तवचन मित्रैकत्र प्रमाणत्वेनोपन्य-स्तम् । यदि हि चतुर्दशाध्यायस्यापि निरुक्तत्वं सायणसम्मतं स्यात्, तर्हि एतद्-

आ याहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भाग-
धेयं जुषस्व। तृप्तां जुहुर्मातुलस्येव* योषा भागस्ते पैतृ-
ष्वसेयी वपा मिव ॥ आगमिष्यन्ति शक्रो देवतास्ताभिस्त्रि-
भिस्तीर्थैभिः शक्रप्रतरैरीलितेभिस्त्रिभिस्तीर्थैर्यज्ञ मि-
मन्नो यज्ञभाग मग्नीषोमभागाविन्द्रो जुषस्व तृप्ता मेवं
मातुलयोगकन्या भागं सर्त्तकेव सा या देवतास्तास्तत्-
स्थाने शक्रं निदर्शतिम्† ॥‡ ३१ (४४) ॥ ३॰

विप्रं विप्रासोऽवसे देवं मर्त्ता स ऊतये। अग्निं
गीर्भिर्हवामहे ॥ विप्रं विप्रासोऽवसे विदुर्वेद विन्दते-
र्वेदितव्यं विमलशरीरेण वायुना§ विप्रस्तु हृत्पद्मनि-
लयस्थित|| मकारसंहित मुकारं पूरयेन्मकारनिलयं

* "जुह्वमातुलस्येव" ख।

† "निदर्शनम्" ख।

‡ भाष्यमेवैतत् ख-ग-घ-पुस्तकेषु, तत्र पाठभेददर्शनस्य का कथा।

§ "विमलं शरीरं वायुना" ख, ग, घ।

|| "विप्रस्तु पद्मनिलयं हृदिस्थित" ख, ग, घ।

व्याख्यातानां सर्वेषा मेव मन्त्राणां व्याख्यानावसरे ऽन्यथान्यथवत् प्रमादवशादेवोद्धारो दृश्येत एवेति। किञ्च "जातवेदसे सुनवाम"—इत्यस्या भाष्ये "जातवेदाः कस्मात्?"—इत्यादिकं यास्कमाध्यायीयवचनमात्र मुद्धृत्य न कथ मपि पर्याप्तं स्यात्, अपि तु इद-त्यमपि "जातवेदस इति जातमिदं सर्वं सचराचरं"—इत्यादिक मुद्धृतं दृश्येतै-वेति। अतो लिपिकरप्रमादमूलक एवैष ग्रन्थ इत्यनुमेने;—अतोऽपि कस्मिंश्चित् पुस्तके टीप्पणी—"अथ हो हो" इत्यादिः, ततः केनचिल्लेखकेन ग्रन्थांश एव इति मत्वेव निवेशितेति।

गतं विप्रं* प्राणेषु बिन्दुसिक्तं† विकसितं‡ वह्नितेजः-प्रभञ्जनकपद्मममृतशरीर§ ममृतजातस्थित ममृत-वाचामृतमुखे|| वदन्ति । अग्निमग्नीभिर्हवामहे¶ । अग्निं सम्बोधयेदग्निः सर्वा देवता इति** तस्योत्तरा भूयसे निर्वचनाय†† ॥ ३२(४५) ॥ ४.

जातवेदसे सुनवाम सोम मरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः‡‡ ॥ जातवेदस इति§§ जात मिदं सर्वं सचराचरं स्थित्युत्पत्तिप्रलयन्यायेनाच्छाय सुनवाम सोम मिति प्रसवेनाभिषवाय सोमं राजान ममृतमरातीयतो यज्ञार्थ मिति स्मो निश्चये निदहाति दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि दुर्गम-

---

* "मकारसंहारित मकारं पूजयन् मकारनिश्चयं गमयति विप्रं" ख, ग, भ ।

† "बिन्दुः सिक्तं" ख, ग, भ ।

‡ "विकसितं" ख, ग, भ ।

§ "वह्निवेजः प्रभुं कमकं पद्मममृतशरीर" ख, ग, भ ।

|| "ममृतवाचा अमृतमुखा" ख, ग, भ ।

¶ ऋ० सं० ५ अ० ८ अ० २९ व० १ ऋ० ।

** ऐ० ब्रा० १ प० १ अ० १ ख० ।

†† ख-ग-भ-पुस्तकेष्वयं खण्डस्तृतीयः ।

‡‡ ऋ० मं० १, ७, ७, १ ।

§§ केषुचित् पुस्तकेषु व्याख्याता चैषा पुरस्तादपि (२ भा० २९४ पृ०) ।

नानि स्थानानि नावेव सिन्धुं यथा कश्चित्कर्णधारो नावेव सिन्धोः स्यन्दनान्नदीं जलदुर्गां महाकूलान्तारयति दुरितात्यग्निरिति तानि तारयति* तस्यैषापरा भवति† ॥ ३३ (४६) ॥ ५.

इदन्तेऽन्याभिरसमानमद्भिर्याः काश्च सिन्धुं प्रवहन्ति नद्यः। सर्पो जीर्णामिव त्वचं जहाति पापं सशि-

* "स्थित्युत्पत्तिप्रलयन्यायेन जातवेदस्या इदं जातवेदसे (ग० "स्त्रों वैव जा०") ऽर्चाय सुनवाम सोम मिति प्रसवायाभिषवाय सोमं राजानं ममृत मरातीयतो यज्ञार्थं मनिष्टो निर्दहति (ग० "निदहाति") निश्चयेन दहति भस्मीकरोति सोमो दद्-दित्यर्थः। स नः पर्षदति (ग० "दुर्गाणि विश्वानि") दुर्गमनानि स्थानानि नावेव सिन्धुं नावा सिन्धुं यथा यः कश्चित् कर्णधारो नावा सिन्धुः स्यन्दमिमां (ग० "स्यन्द-मानानां") नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति"—इति पाठाः ख-ग भ-पुस्तकेषु दृश्यन्ते।

† "जातवेदस इत्येकर्चं षष्ठं सूक्तम्। मरीचिपुत्रस्य कश्यपस्यार्षम्। त्रैष्टुभम्। जातवेदोगुणकोऽग्निः शुद्धाग्निर्वा देवता। तथा चानुक्रान्तम्—'जातवेदस एका जातवेदस्य मेतदादीन्येकभूयांसि सूक्तसहस्रं मेतत्तु कश्यपस्यार्षम्'—इति। संप-नीया। सूचितञ्च—'जातवेदसे सुनवाम सोम मित्याग्निमारुते जातवेदस्यानाम्। (आ० सू० ७. १)'—इति। जातवेदसे जातानामुत्पत्तिमतां सर्व्वेषां वेदित्रे। यद्वा जातैः सर्व्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वाग्नये सताकपं सोमं सुनवाम अभिषुणुयाम। जातवेदोगुणक मग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः। सोऽग्निररातीयतो ऽरातिं शत्रु मिवाचमानाचरतः शत्रोर्वेदो धनं निदहाति। नितरां दहतु भस्मीकरोतु। अपि च सोऽग्निर्नोऽस्मान् विश्वा विश्वानि सर्व्वाणि दुर्गाणि दुर्गमनानि भोक्तु मशक्यानि दुःखान्यतिपर्षत् अति पारयतु। अतिक्रमय्य दुःख-रहितं सुखं प्रापयतु। तत्र दृष्टान्तः—नावेव सिन्धुम्। यथा कश्चित्कर्णधारो

रक्षो ऽभ्युपेत्य ॥ इदन्ते ऽन्याभिरसमानाभिर्याः काश्च सिन्धुं पतिं कृत्वा नद्यो वहन्ति सर्पो जीर्णामिव सर्पत्वचन्त्यजति पापं त्यजन्त्वाप आप्नोतेस्तासा मेषा भवति॥* ३४ (४७) ॥ ६.

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुक मिव बन्धनान् मृत्योर्मुक्षीय मा मृतात्† ॥ त्र्यम्बको सुगन्धिं (सुगन्धिं‡) सुष्टुगन्धिं पुष्टिवर्द्धनं पुष्टिकारक मिवोर्वारुक मिव§ फलं बन्धनादारोधनान्मृत्योः सकाशान्मुञ्चस्व मां कस्मादित्येषा मितरेषापरा भवति|| ॥ ३५¶ (४८)॥ ७**.

---

पाशादिभिर्दुष्टसत्वैराकुलितां नदीं नावा तारयति महत्। तथा दुरिता दुरितानि दुःखहेतुभूतानि पापान्यस्मानग्निरतिपारयतु। दुःखनिमित्तात् पापादस्माननुतारयत्वित्यर्थः। अत्र निरुक्तम्– जातवेदाः कस्मात् जातानि वेद (१भा० १९१पृ०)"—इत्यादि सा० भा०।

* नास्त्येव खण्डः ख-ग-भ-पुस्तकेषु, तत्र पाठभेदस्य का कथा।

† ऋ० सं० ५, ४, ३०, ९ ; य० वा० सं ३, ६०

‡ नास्त्येतत् पदं ख-ग-भ-पुस्तकेषु।

§ अत्र "इव"-पदं च न दृश्यते ख-ग-भ-पुस्तकेषु।

|| "कस्मादित्येषापरा भवति" च, ज :

¶ ख-ग-भ-पुस्तकष्वेष खण्डस्तृतीयः।

** अत्र शौनकः। 'त्रिरात्रं नियतोऽपोष्य श्रपयेत् पायसं चरुम्। तेनाहुतिशतं पूर्णं जुहुयात्संशितव्रतः॥ समुद्दिश्य महादेवं त्र्यम्बकं त्र्यम्बकेत्यृचा। एतत् पवं मतं कृत्वा जीवेद्वर्षशतं सुखी (ऋग्वि० १. १८.)॥" चयाणां महाविष्णुब्रह्मणां मन्त्रकं

शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छत मु वसन्तान्। शत मिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥ शतं जीव शरदो वर्द्धमान इत्यपि निगमो भवति शत मिति शतन्दीर्घमायुर्मरुत एना वर्द्धयन्ति* शत (मेन†) मेव शतात्मानं‡ भवति ( शत

पितरं यजामह इति विश्वसमाश्रितो वसिष्ठो ब्रवीति। किंविशिष्ट मित्यत आह— सुगन्धिं प्रसारितपुण्यकीर्त्तिम्। पुनः किंविशिष्टम्? पुष्टिवर्द्धनं जगद्बीजम्। उच्छ्रसि मित्यर्थः। उपासकस्य वर्धनम्। अणिमादिशक्तिवर्धनम्। अतस्त्वत्प्रसादादेव मृत्योर्मरणात् संसाराद्वा मुक्षीय मोचय। यथा बन्धनादुर्वारुकं कर्कटीफलं मुच्यते तद्वन्मरणात् संसाराद्वा मोचय। किं मर्यादीकृत्य? आमृतात्। सायुज्यता-मोक्षपर्यन्त मित्यर्थः। अथ तैत्तिरीयभाष्ये— 'शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः। यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेः। पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनः। तादृशं त्र्यम्बकं यजामहे पूजयामः। लोके यथोर्वारुकफलानि बन्धनाद्वृन्तात् स्वय मेव मुच्यन्ते(१), तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासम्। अमृतादिर-जीवितात् स्वर्गादेर्वा मा मुक्षीय। चतुर्थपादार्थमन्त्रस्य तात्पर्यातिशयं दर्शयति— त्र्यम्बकं यजामह इत्याह मृत्योर्मुक्षीय मामृतादिति वावैतदाहेति।"—इति सा॰ भा॰।

* "मरुतो मां वर्द्धयन्तु" ख, ग, भ।

† नैतत् ख-ग-भ-पुस्तकेषु।

‡ "शत मात्मानं" ख, ग, भ।

(१) "उर्वारुः कर्कटी स्त्रियौ"—इत्यमरः २, ४, १५५। "उर्वारुः—ईर्वारुः, इर्वारुः, ईर्वारुः, एर्वारुः। उन्मत्तो धुस्तूरिवारुः कर्कटिः स्यादिति पुंस्काण्डे रत्न-कोशात्। कर्कटी, कर्कटिः द्वे कर्कट्याः, 'काँकडी'—इति ख्यातायाः।"—इति सप्तामरविवेकाख्या टीका।

मनन्तं भवति शत मैश्वर्यं भवति*) शत मिति शतं दीर्घं मायुः† ॥ ३६ (४६) ॥ ८.

मा ते राधांसि मा त ऊतयो वसो ऽस्मान् कदाचना दभन्। विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ‡॥ मा च ते धामानि§ मा च ते कदा च नः‖ सरिपुः सर्वाणि प्रज्ञानान्युपमानाय मनुष्यहितो ऽय मादित्यो ऽय मात्मा ऽथैतदनुप्रवदन्त्यथैतं** महान्त मात्मान मेषर्गणः प्रवदति वैश्वकर्मणे†† देवानान्नु वयञ्जानानासदासीन्नो सदासीत्तदानी मिति च सैषात्मजिज्ञासा सैषा सर्वभूतजिज्ञासा ब्रह्मणः सारिष्टं‡‡ सरूपतां सलोकतां गमयति य एवं वेद (नमो ब्रह्मणे

* मात्स्येषोऽग्निः ख ग-भ-पुस्तकेषु।

† ख-ग-भ-पुस्तकेष्वेष पाठः खण्डः।

‡ ऋ० सं० १, ६; ८, ५; मा० स० उ० आ० ८, २, ५, ९

§ "धनानि" ख, ग, भ।

‖ "कदाचन" ख, ग, भ।

¶ "०न्युप मानमस्मानुष्य हिता" ख, ग, भ।

** "प्रवदत्यथैनं" ख, ग, भ।

†† "वैश्वकर्मणो" ग, भ।

‡‡ "सार्ष्टिं" ग, भ; "सा ऋष्टं" ख।

नमो महते भूताय* नमः पारस्कराय† नमो यास्काय
ब्रह्म शुक्ल मसीय ब्रह्म शुक्ल मसीय‡) ॥३७§॥ (५०) ९||.

([१]व्याख्यातन्दैवत[२]मग्निरश्मि[३]जन्मनापश्य[४]ञ्जोपामाकाश-
गुणस्तम्परि[५]वर्त्तमानंसयद्यनुरुध्यतेऽष्टोत्तरमथयेहिंसा-
माश्रित्याथयेहिंसामुत्सृज्य[१०]नतं[११]हंसो[१२]घर्मःसोमःपवते[१३]ब्र-
ह्मा[१४]देवानान्ति[१५]स्रोवाचईरयति[१६]सोमङ्गा[१७]त्रोऽकान्महत्तत्सो-
मो[१८]विधुन्दद्राणं[१९]साकञ्जानां[२०]स्त्रियःसतीः[२१]सप्ताई[२२]गर्भानवि-
जा[२३]नाम्यपाङ्[२४]प्राङेतितद्[२५]दिदासकोऽश्वय[२६]ङ्क्तेकईषते[२७]को-
अग्निमीट्[२८]टत्वमङ्ग[२९]हंसःशुचिषद्[३०]द्वासुपर्णा[३१]ऽऽयाहीन्द्र[३२]॥ विप्रं-

* “देवाय” ख, ग, भ।

† “नमः पारस्कराय”—इति नास्ति ख-ग-भ-पुस्तकेषु।

‡ नास्त्येषोऽंशः ख-ज-पुस्तकयोः।

§ “हे वसो निवासयितरिन्द्र ते तव सम्भृतानि राधोभिरिति राधांसि भूतान्यस्मान् कदाचन कदाचिदपि मा दभन् मा विनाशयन्तु। तथैतयोर्मन्त्रार्थः। यद्वा भूतय इत्यत्र वर्णलोपः। भूतयः कम्पयितारस्ते मदीया मघवन्तः मा दभन्। हे मानुष मनुष्यहितेन्द्र! चर्षणिभ्यो मन्त्रद्रष्टृभ्यो नोऽस्मभ्यं विश्वा विश्वानि सर्वाणि वसूनि धनानि च आ उप मिमीहि। सर्वत आहृत्यास्मत् समीपे कुरु। सर्वत्र वर्त्तमानं धन मह्यं प्रयच्छेत्यर्थः।”—इत्यादि सा० भा०।

|| नैष मन्त्रो दृश्यते ख-ग-भ-पुस्तकेषु।

२२ विप्रासो २४ जातवेदस २५ इद्दःऽन्तेन्याभि* २६ त्र्यम्बकं २७ शतञ्जीवमाते-
राधांसीति सप्तविंशत्॥† )

(१) (अथेमा (२) यद्द्यावो (३) यदुदञ्चो (४) वहिसो (५) तोस्त्वण्येव (६) तरत्स-
(७) श्चत्वारि (८) श्रृङ्गा (९) स्वयन्त (१०) श्चत्वारिवाक् (११) ऋचो अक्षर (१२) आदित्य इत्य-
क्षरन्नक्षरति (१३) ह्रदा (१४) तष्टे (१५) पुव्यास्यातन्दैवतमग्निरस्मिजन्मना-
(१६) पश्यन्नो (१७) पामाकाशगुणस्त्स्पर्शि (१८) वर्त्तमानं (१९) सयद्यनुरुध्यतेऽ-
(२०) श्रोत्तरम् (२१) अथ ये हिंसामाश्रित्याथ (२२) ये हिंसामुत्सृज्य (२३) न तं (२४) हंसो-
(२५) घर्मः सोमः (२६) पवते (२७) ब्रह्मा देवानान्त्स्तोवाच (२८) ईरयति सोम-
(२९) ङ्गावो (३०) ऽक्रान्मह (३१) त्तत्सोमो (३२) विधुन्दद्राणं (३३) साकञ्जानं स्त्रियः-
(३४) सतीः (३५) सप्तार्धगर्भा (३६) नविजानाम्य (३७) पाङ्प्राङेति (३८) तद्दिदास को-
(३९) अद्य युङ्क्ते (४०) कईपते (४१) को अग्निमीट्टे (४२) त्वमङ्ग (४३) हंसः शुचिषद्दासु-

* नायमं खण्डोऽस्ति ख-ग-भ-पुस्तकेषु ।

† ज-पुस्तकसम्मत एव खण्डप्रतीकपाठः; परिशिष्ट व्याख्यायद्दयात्कालं प्रमाणम्; क-ख-ग-भ-पुस्तकेषु न क्वापि प्रतीकपाठो दृष्टः ।

(४४) पर्णाऽऽष्टीन्द्र* (४५) विप्रंश्च (४६) प्रामो (४७) जातवेदस इदन्तेन्याभि (४८) ख्य-म्बकं (४९) शतं जीव (५०) मातेराधांसीति पञ्चाशत् ॥‡ )

॥ इति निरुक्ते चतुर्दशाध्यायः समाप्तः§ ॥ १४ ॥

( ऊर्द्ध्वमार्गगतिप्रकरणं समाप्तम् )

॥ इति नैरुक्तं द्वितीय-परिशिष्टं समाप्तम् ॥

# ( इति परिशिष्टम् )

---

*, † ख-ग-भ पुस्तकेषु नैतौ खण्डौ स्तः. अत एव च तत्र खण्डसङ्ख्यापरिवर्त्तः [illegible] ।

‡ क-पुस्तकसम्मत एव पाठः; परिशिष्टस्यैकाध्यायात्मकत्वे प्रमाणम् ।

§ इह यद्वक्तव्यं तदुक्तं पुरस्तात् ३११ पृ० "†" ।

|| नैतन्निघण्टु मवलम्ब्य कृतम्; अपि तु प्रसङ्गादुक्त मिति केचाचित्; न चाप्यस्य यास्कः कर्त्तेत्येके ।

इति निरुक्तम्

(निघण्टु, निघण्टुभाष्यम्, परिशिष्टं च)

सम्पूर्णम् ॥

# अथ निरुक्तालोचनम् ।



"साक्षात्कृतधर्माण ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" (१ भा० १९७ पृ०)

अथेद मालोचयामः ।—कि मिदं निरुक्तम् ? तस्यैतस्य वेदाङ्गत्व मस्ति नास्ति वा ? तन्मूलस्य कः प्रणेता, को वा तस्य ? कश्चासौ यास्कः ? तस्य ऋषित्व मस्ति नास्ति वा ? कियांश्चायं ग्रन्थो यास्कीयः ? कश्च कालो यास्कस्य ? कैमर्थिकी तस्यैषा प्रवृत्तिः ? कोऽसौ वेदः ? वेदकालनिर्णयः शक्यो ऽशक्यो वास्माकम् ? के विषयाश्चैतन्निरुक्तप्रतिपाद्याः ? तट्टीकाकृतोर्देवराजदुर्गाचार्ययोश्च कौ जीवितसमयाविति द्वादश ।

( १ )

तत्रादौ पुरैकदास्माभिर्विचारित मपि पुनरिद मेव विचार्यते किञ्चिद्विशेषप्रतिपत्तये कि मिदं निरुक्त मिति । ऋग्भाष्यभूमिकायां सायणाचार्य एव माह—"अतिगम्भीरस्य वेदस्यार्थ मवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि । अत एव तेषा मपरविद्यारूपत्वं मुण्डकोपनिषद्याथर्वणिका आमनन्ति—'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष मिति ; अथ परा यया तदक्षर मधिगम्यते'—इति । साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गसहितानां

कर्मकाण्डाना मपरविद्यात्वम्; परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वात् उपनिषदां परविद्यात्वम्।

(१) वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथाच तैत्तिरीया उपनिषदारम्भे समामनन्ति—'शिक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं साम सन्तान इत्युक्तः शिक्षाध्यायः'—इति. ···। तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षायन्थोऽपेक्षितः।

(२) कल्पस्त्वाश्वलायनापस्तम्बबोधायनादिसूत्रम्। कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः। ··। अतः कल्पसूत्र मन्त्रविनियोगेन क्रत्वनुष्ठान मुपदिश्योपकरोति। ··। तस्मात् शिक्षेव कल्पोऽप्यपेक्षितः।

(३) व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते; ···। तस्मादियं वाक् इदानी मपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यत इत्यर्थः; ···;

(४क) अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। 'गौः ग्मा ज्मा क्ष्मा क्षा क्षमा'—इत्यारभ्य 'वसवः वाजिनः देवपत्न्यो देवपत्न्यः'—इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते; एतावन्ति पृथिवीनामानि, एतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्ट मभिहितत्वात्। तदेतन्निरुक्तं त्रिकाण्डम्। ···। पञ्चाध्यायरूपे काण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपेक्षितया पदार्थस्योक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम्।

(४ख) तद्व्याख्यानञ्च 'समाम्नायः समाम्नातः'—इत्यारभ्य 'तस्यास्तस्याताद्भाव्य मनुभवत्यनुभवति'—इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे, तदपि निरुक्त मुच्यते; एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः। ···। तस्माद् वेदार्थावबोधायोपयुक्तं निरुक्तम्।

(५) तथा छन्दोग्रन्थोऽप्युपयुज्यते, छन्दोविशेषाणां तत्र तत्र विहितत्वात्। ···। 'यो ह वा ०—० तस्मादेतानि मन्त्रे मन्त्रे विद्यात्'—इति श्रूयते। तस्मात्तावद्वेदनाय छन्दो ग्रन्थ उपयुज्यते।

(६) ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थे विहितम्—'यज्ञकालार्थसिद्धये'—इति। कालविशेषविधयश्च श्रूयन्ते—* * *। अतः कालविशेषान् अवगमयितुं ज्योतिष मुपयुज्यते।

एतेषां वेदार्थोपकारिणां षणां ग्रन्थानां वेदाङ्गत्वं शिक्षाया मेव मुदीरितम्—'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषा मयनं चक्षुर्निरुक्तं श्रोत्र मुच्यते। शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्ग मधीत्यैव ब्रह्मलोके महीयते'—इति"—इति।

तदित्थं सर्ववेदभाष्यकारस्य सायणाचार्यस्य नये—द्वे निरुक्ते; मूलं पञ्चाध्यायी, तद्व्याख्यानञ्च द्वादशाध्यायीति; तथा निरुक्तशब्दव्युत्पत्तिप्रकारश्च द्विविध एव: 'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्'—इति, 'एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेणोच्यन्ते तन्निरुक्तम्'—इति च। तथैव मुण्डकोपनिषदादौ यच्छ्रूयते निरुक्तमिति पदम्, सायणमते तदुभयोरेव बोधकम्; शिक्षावचनतोऽपि यद् ज्ञायते निरुक्तस्य वेदश्रोत्रत्वम्, तन्मते तदप्युभयविधस्यैव। ततश्चास्य नये द्वयोरेव वेदाङ्गत्वं समम्; द्वयोरेव निरुक्त मित्येवैकनाम्ना बोधाच्च अङ्गानां षट्सङ्ख्यात्व मप्यवितथ मेवेति। एतत्फलितार्थमात्र मवलम्ब्यैव कार्य्यारम्भकाले ऽस्माभिः किञ्चिल्लिखितञ्च, पर मिदानीं तदेव परीक्षितु मेवैष प्रबन्धो ऽवतार्यते।—

श्रूयते ह्येवं छान्दोग्योपनिषदि—"स वा एष आत्मा हृदि, तस्य तदेव निरुक्तं हृद्यय मिति तस्माद्धृदयम् (८. ३. ३.)"—इति। तदेतत् हृदयनिर्वचनं क्वास्ति निघण्टौ, यास्कीये वा? न क्वापि। निघण्टौ तु तादृशनिर्वचनदर्शनस्य सम्भावनैव नास्ति; यास्कीये निघण्टुभाष्यरूपे निरुक्तग्रन्थे ऽपि हृदयशब्दनिर्वचनावसरस्तु बहुत्र विद्यते (४ भा० ५२, १४०, ३६०, ३७५, ४०७ पृ०), परं न क्वापि तन्निर्वचनं कृत मस्ति। ततश्चेमे सुव्यक्ते—नेदं यास्कीयं निरुक्तं प्रादुरभूत् छान्दोग्योपनिषदः पुरस्तात्, 'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्'

—इति सायणीय माद्यं निरुक्तलक्षणं च नाभिमतं छान्दोग्योपनिषत्प्रवक्तु-रिति ।

श्रूयते चेदं गोपथब्राह्मणे—"ओङ्कारं पृच्छामः ... किन्निरुक्तम् ? ... आपेरोङ्कारः सर्वं माप्नोतीत्यर्थः (१. १. २४—३०.)"—इत्यादि । तदेतदोङ्कारनिर्वचनं निघण्टौ, यास्कीये वा क्वास्ति ? एतत्प्रश्नस्योत्तरं चेद मेव वक्तव्यं न क्वापीति । निघण्टौ तु तादृशनिर्वचनदर्शनस्य सम्भावनैव नास्ति; निघण्टुभाष्यात्मके यास्कीये निरुक्तेऽपि ॐशब्दनिर्वचनावसरस्तु विद्यते (४ भा० ३५२ पृ०) परं न च तत्र तन्निर्वचनं कृत मस्ति । तथाच अत्रापीद मेव हृद्यं सुव्यक्तम्—नेदं यास्कीयं निरुक्त माविरभूत् गोपथब्राह्मणतः पुरस्तात्, न च 'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्' —इति सायणीय माद्यं निरुक्तलक्षण मभिमतं गोपथब्राह्मणप्रवक्तुरिति ।

ऋक्प्रातिशाख्यद्वितीयवृत्तिकारः खलु देवमित्रपुत्रो विष्णुमित्रोऽप्येव माह—"निरुक्तं पदविभागमन्त्रार्थदेवतानिरूपणार्थं शास्त्रम् (२ पृ०)" —इति । अतो ज्ञायते तस्यापि सायणीय मन्त्यं निरुक्तलक्षण मेव सम्मत मिति; आद्यलक्षणलक्षिते निघण्टुसमाम्नाये मन्त्रार्थप्रभृतिनिरूपणोपायस्यादर्शनादिति ।

मनुसंहिताया अन्यतमटीकाकारस्य कुल्लूकभट्टस्य मतेऽपि निर्वचनमूलक एव निरुक्तशब्दप्रयोग उपलभ्यते । तथाहि—"श्राद्धभुग् वृषलीतल्पम् (३, २५०)"—इति मानवीयश्लोकस्य व्याख्यानावसरे एतदुक्तं तेन "वृषलीशब्दोऽत्र स्त्रीपर इत्याहुः । निरुक्तञ्च कुर्वन्ति—वृषस्यन्ती चपलयति भर्त्तार मिति वृषली । ब्राह्मणस्य परिणीता ब्राह्मण्यपि वृषलीति"—इति । नैतद् यास्कीयं वचन मिहोद्धृतं कुल्लूकेन, नापि मानवीयम् (८. १६.); अपि तु केषाञ्चिदपरटीकाकारादीनां मत मेव मित्येव प्रदर्शितम् । यास्कस्तु—"वृषलो वृषशीलो भवति वृषाशीलो वा (२भा० ३२१ पृ०)" —इत्येव निरवोचत् । अत्र त्वेतदेव समालोच्यं यदनतिप्राचीनस्य पण्डितस्य कुल्लूकस्यापि प्रयोगे निरुक्तं न निघण्टुपर मिति । एव मपरत्रापि

तत्रैव। तथाहि—"मां स भक्षयितामुत्र यस्य मांस मिहाद्म्यहम्। एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः (५. ५५.)"—इति मानवीयवचनव्याख्यानावसरे ह्युक्तं तेनैव कुल्लूकभट्टेन—"एतत् मांसशब्दस्य निरुक्तं पण्डिताः प्रवदन्ति। इति मांसशब्दस्य निर्वचन मवैधमांसभक्षणपापफलकथनार्थम्"—इति। इहापि कुल्लूकभट्टमते ऽपि निर्वचनपर मेव निरुक्तम्, न तु निघण्टुपाठपर मित्येव प्रदर्शन मस्माक मिष्टम्। प्रदर्शितनिर्वचनन्तु न यास्ककृतम्; अपि मनुसंहिताकारकालिकैः कैश्चिदिदद्भिरनुमोदितं तत्संहिताकृतैव कृतम्। यास्कस्तु मनुसंहिताकृतो ऽपि बहुप्राचीनः, तत्काले तु मांसशब्दस्य निर्वचन मन्यथैव प्रचलित मासीदित्यन्यदेतत्। तथाहि—"मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा (२भा० ३७८ पृ०)"—इति यास्कीयं निरुक्तम्। "एतद्वै परम मन्नाद्यं यन्मांसम्"—इति च शतपथीया श्रुतिर्यास्कीयस्य तन्निर्वचनस्य साधिका भवितु मर्हति चेति कथान्तरम्। प्रकृते तु कुल्लूकस्यापि सायणीयं द्वितीयनिरुक्तलक्षण मेवाभिमतम्; न त्वाद्यलक्षणं निघण्टुपर मित्येवेहास्माभिरित्थं प्रदर्शितम्।

आख्यायते महाभारते चादिपर्वणि—"महत्त्वाद् भारतत्वाच्च महाभारत मुच्यते। निरुक्त मस्य यो वेद सर्वपापैः स मुच्यते (१. १. २७०.)"—इति। एवञ्चेद मेव प्रतीयते—सायणीयं द्वितीयं निरुक्तलक्षण मेवाभिमतं महाभारतकारस्यापि; न त्वाद्यम्। तत्र मोक्षधर्म्मेऽपि—"अर्जुन उवाच। भगवन् भूतभव्येश सर्वभूतसृगव्यय। लोकधाम जगन्नाथ लोकाना मभयप्रद। यानि नामानि ते देव कीर्त्तितानि महर्षिभिः। वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः। तेषां निरुक्तं त्वत्तोऽहं श्रोतु मिच्छामि केशव। न ह्यन्यो वर्णयेन्नाम्नां निरुक्तं त्वा मृते प्रभो!। श्रीभगवानुवाच। ***। गौणानि तत्र नामानि कर्म्मजानि च कानि चित्। निरुक्तं कर्मजानां त्वं शृणुष्व प्रयतोऽनघ!। ***। नराणा मयनं ख्यात मह मेकः सनातनः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं

मम तत् पूर्वं मतो नारायणो ह्यहम्। * * *। नामानि चैव गुह्यानि निरुक्तानि च भारत!। ऋषिभिः कथितानीह यानि सङ्कीर्तितानि ते (३४१,३४२ अ० १—५६, १—१२८ श्लो०)"—इति। एव मपीद मेव प्रतीयते—सायणीयं द्वितीयं निरुक्तलक्षण मेवाभिमतं मोक्षधर्मलेखकालेऽपि; न त्वाद्यम्। तत्रैव निघण्टुनाम चाख्यातं दृश्यते, परं न तन्निरुक्तपर मपि तु पदपाठात्मकग्रन्थविशेषपर मेव। तथाहि—"निघण्टुकपदाख्याने विद्धि मां वृष मुत्तमम्। कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते। तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः (३४२ अ० ८६, ८७. श्लो०)"—इति। पठितश्चाच निघण्टौ "वृषाकपिः"—इति (४८३ पृ०)। तदेवं निघण्टोर्निरुक्तत्वं नेष्टं महाभारतकारस्येत्यपि सुवचम्।

यास्कीयेऽत्र निरुक्ते च निरुक्तस्योल्लेखो बहुत्रैवोद्घोषितः, परं न तत्र क्वापि निघण्टोर्ग्रहणं विवक्षितम्। तथाहि—"इतीमानि चत्वारि पदजातान्यनुक्रान्तानि—नामाख्याते चोपसर्गनिपाताश्च। तत्र नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च (२ भा० ८३पृ०)"—इत्येव मादीनि द्रष्टव्यानि। निघण्टोस्तु निघण्टुनाम्नैव व्यपदेशः व्याहृतः; न क्वापि निरुक्तत्वेन। तथाहि ग्रन्थारम्भे एव—"निगमनान्निघण्टव उच्यन्ते (२ भा० ७पृ०)"—इति। ग्रन्थभूमिकायां (२भा० १३७पृ०) निघण्टोः स्वरूपं पारिभाषिकलक्षणं च प्रदर्शितम्, तदप्यत्र समालोचनीय मेव। तथाहि—"एतावन्तः समानकर्माणो धातवः, * * *, एतावन्त्यस्य सत्त्वस्य नामधेयानि, एतावता मर्थाना मिद मभिधानं नैघण्टुक मिदं देवताना मप्राधान्येनेद मिति; तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं तत्"—इत्यादि। किञ्चात्र द्वितीयाध्यायारम्भे यन्निरुक्तशास्त्रप्रयोजनं वर्णितम् (२भा० १४७—१७४ पृ०), तदपि निघण्टुपाठादेव न सम्भवति। अतः सायणीये द्वितीयनिरुक्तलक्षणे एव भगवतो यास्कस्यापि सम्मतिर्ज्ञायते; न त्वाद्ये।

भगवता कात्यायनेनाप्युक्तम् भाष्यानामश्लोकग्रन्थे—"बाहुलकं प्रकृतेस्तनुदृष्टेर्नैगमरूढिभवं हि सुसाधु। नाम च धातुज माह निरुक्ते व्याक-

रथो शकटस्य च तौकम्"—इति। एतच्छ्लोकपर्य्यालोचनेन च बुध्यते सायणीयं द्वितीयं निरुक्तलक्षण मेव भगवतः कात्यायनस्यापि सम्मतम्; न त्वाद्यं लक्षण मिति;—द्वितीयलक्षणलक्षिते यास्कीये (१भा०८३ पृ०) एव ग्रन्थे तथोक्तदर्शनादिति।

तस्यैव श्लोकस्य व्याख्यानावसरे भगवान् पतञ्जलिश्चाह—"नाम खल्वपि धातुज मेव माऊनैरुक्ताः (३अ० २पा० ३आ०)"—इत्यादि। ततश्चावगम्यते तस्य भगवतोऽप्यभिमतं सायणीयं द्वितीयनिरुक्तलक्षण मेव; न त्वाद्यम्;—आद्यलक्षणलक्षितेऽखिलनिघण्टौ तथादर्शनादिति।

"सञ्ज्ञाया मनाचितादीनाम् (पा० ६. २. १४६.)"—इति सूत्रीये आचितादिगणे निरुक्तशब्दपाठदर्शनाच्चावगम्यते गणपाठकृतोऽपि सायणीयान्त्यलक्षण एव सम्मतिः; अन्यथा हि निघण्टोर्निरुक्तसञ्ज्ञया प्रसिद्ध्यभावादेव सिद्धे कृतं तत्र निरुक्तशब्दपाठेनेति।

अस्ति चेयं हरिकारिका—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्"—इति। तदित्थं भगवता खलु माङ्गलिकेनाचार्येण पाणिनिना "पृषोदरादीनि यथोपदिष्टम् (६. ३. १०९.)"—इति सूत्रेण यत्सर्वं सङ्क्षेपेण विहितम्, तदपि निरुक्ते विशदीकृत्य प्रदर्शित मिति फलितम्। तथा-चोक्तं तत्र महाभाष्ये—"पृषोदरादीनीत्युच्यते. कानि पृषोदरादीनि? पृषोदरप्रकाराणि। कानि पुनः पृषोदरप्रकाराणि? येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते (६अ० ३पा० ३आ०)"—इति। लोपागमवर्णविकारादयश्च बोधिता एव विशेषेण यास्कीयेऽत्र निरुक्ते; द्वितीयाध्यायारम्भे तु "अथ निर्वचनम्"—इत्यादीनि, "एकपदानि निर्ब्रूयात्"—इत्यन्तानि (२भा०१३७—१६० पृ०१६प०) ग्रन्थसारभूतानि तथाविधानि बोधनानि स्वय मुक्तानि च। तथा चेद मवश्यं वक्तुं शक्यते यत् श्रीमतो भर्तृहरेरपि सायणीयं द्वितीयं निरुक्तलक्षण मेवाभिमतम्; न त्वाद्यम्;—आद्यलक्षणलक्षिते हि निघण्टौ लोपागमादीनां बोधनादर्शनादिति।

निघण्टुनिर्वचनकारस्य देवराजयज्वनोऽपि सायणीये द्वितीयनिरुक्तलक्षणा एवाभिमतिः प्रतीयते। तथाहि तत्र भूमिकायामेव—"निरुक्तविद्या-निगमप्रतिष्ठाम् अवाप यास्कः"—इति, "प्रणमामि यास्कभास्करं यो ध्वान्तमसः प्रकाशितपदार्थः"—इति, "भगवता यास्केन ०—० निरुक्तानि"—इति, "तत्र प्रदर्श्य कतिचिदेव निरुक्तानि"—इति, "स्कन्दस्वामी च तत एव निरुक्त मनुजगाम"—इति, "भाष्यकारेण (यास्केन) बहुवक्तव्यत्वात् प्रकरणश एव निरुक्तानि"—इति, "अतोऽन्येषां यथाक्रमेणानिरुक्ते"—इति, "पदानां (निघण्टुस्थितानाम्) भाष्यकारेण (यास्केन) निरुक्तानाम्"—इति, "भाष्यकारेणैव ०—० निरुक्तानि"—इति, "निर्वचनञ्च निरुक्तं ०—० निरीक्ष्य क्रियते"—इति, "स्कन्दस्वामिकृतां निरुक्तटीकाम्"—इति, "निरुक्तकारोक्तनिर्वचनसामान्यलक्षणमनुसृत्य निरुक्तिः क्रियते"—इति द्वादशवारं प्रयुक्तं निरुक्तपदम्; परं नैकत्रापि सायणीयाद्यलक्षणालक्षितस्य निघण्टोर्बोध उपपद्यते। ग्रन्थमध्येऽपि बहुत्रैव निरुक्तस्योल्लेखः कृतः। तथाहि—"तथाच निरुक्तम्—योनिरन्तरिक्षं महानवयवः परिवीतो वायुना (१भा० २६५०)"—इति। दृश्यते चैतत् यास्कीये एव निरुक्तद्वितीयाध्यायीयद्वितीयपादस्थैवखण्डे: न तु निघण्टौ। यत्र यत्र तु निघण्टोर्बोधन मेवाभीप्सितम्, तत्र सर्वत्रैव निघण्टुरिति समाम्नाय इति च प्रयुक्तम्। तथाहि तत्रैव भूमिकायाम्—"समाम्नायं ०—० निर्ब्रुवता"—इति, "तेन च समाम्नायपठितानां पदाना मन्येभ्यः (प्रसङ्गान्निरुक्तेभ्यः) व्यावृत्त्यर्थं किञ्चिच्चिह्नं कृतम्"—इति, "क्षीरस्वाम्यनन्ताचार्यादिकृतां निघण्टुव्याख्याम्"—इति च; एव मन्यत्राप्यूह्य मिति।

निरुक्तवृत्तिकारस्य श्रीमद्दुर्गाचार्यस्यापि सायणीयं द्वितीयनिरुक्तलक्षण मेवाभिमतम्: न त्वाद्यम्। तथाहि तदीयमङ्गलाचरणे एव दृश्यते—"पञ्चाध्यायी-निघण्टोश्च निरुक्त मुपरिस्थितम्"—इति। एवञ्च तन्मते खलु पञ्चाध्यायात्मग्रन्थस्य कस्य चित् निघण्टुरिति नाम, तद्व्याख्यानग्रन्थस्य च निरुक्त मिति स्फुटम्। ततश्च भूमिकाया मपि अङ्गग्रन्थप्रयोजनकथना-

वसरे—"अतः × × × निरुक्तं नामेद मङ्ग मारभ्यते। ०—०। अथास्यैव मखिलपुरुषार्थोपकारशक्तिसमर्थस्य सङ्ग्रहः। तद्यथा— नामाख्यातोपसर्गनिपातलक्षणम्, ०—० इत्येष समासतो निरुक्तशास्त्रचिन्ताविषयः"—इत्युक्त मस्ति। एतस्माच्च ज्ञायते यास्ककृतभाष्यरूपस्यैव ग्रन्थस्य निरुक्तत्वं तत्सम्मतम्; न हि पञ्चाध्यायीरूपस्य निघण्टुनामग्रन्थस्य नामाख्यातोपसर्गनिपातलक्षणादयश्चिन्ताविषया दृश्यन्ते। स्पष्टश्चोक्तं तत्तदनुपद मेव —"तस्य (यास्कीयनिरुक्तस्य) एषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्ग्रहः (२भा० ६पृ० १५—२० पं०)"—इत्यादि।

मधुसूदनसरस्वतीकृते प्रस्थानभेदनामग्रन्थे प्रथमन्तूक्तम्—"एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे ज्ञाते वैदिकमन्त्रपदाना मर्थज्ञानाकाङ्क्षायां तदर्थं भगवता यास्केन 'समाम्नायः समाम्नातः स व्याख्यातव्यः'—इत्यादि त्रयोदशाध्यायात्मकं निरुक्त मारचितम्'—इत्यादि। तथा च तस्यापि सायणीये द्वितीयनिरुक्तलक्षणे एव सम्मतिर्बुध्यते; न त्वाद्यलक्षणे। तत उत्तरम् "एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मका निरुक्तान्तर्भूता एव"—इत्युक्तम्। तदेतन्निघण्टोर्वेदाङ्गत्वसाधनायैवानन्यगत्योक्तम्; न तु तत्स्वप्रमासिद्ध मिति।

व्यवहारतस्तु ज्ञायते सायणीयं द्वितीयं निरुक्तलक्षण मेव सङ्गतम्; न त्वाद्य मिति। तथाहि—बहूनां निघण्टुपुस्तकाना मादौ 'निघण्टुः प्रारम्भः' इति, सर्वेषां मध्ये च 'निघण्टौ प्रथमाध्यायः' इत्यादि, अन्तेऽपि 'निघण्टुः समाप्तः'—इत्येवमादय एव प्रयोगा लिखिता दृश्यन्ते; न क्वचिदपि निघण्टुपुस्तके निरुक्तशब्दोल्लेखो दृष्टः केनचिदद्यापि। एवं निघण्टुनिर्वचनग्रन्थे च 'निघण्टुनिर्वचन मारब्धम्' इति, 'निघण्टुनिर्वचने प्रथमोऽध्यायः' इत्यादि, 'निघण्टुनिर्वचनं समाप्तम्' इत्येवमादय एव प्रयोगा लिखिता दृश्यन्ते; न क्वचिदपि निघण्टुनिर्वचनपुस्तके 'निरुक्तनिर्वचन मारब्धम्'—इत्येवमादयः प्रयोगा लिखिता दृष्टाः केनचिदद्यापि।

ननु निरुक्तवृत्तिकृता भगवद्दुर्गाचार्येण तु निरुक्तप्रथमाध्यायीयप्रथम-

पादव्याख्यानान्ते "इति जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ निरुक्तव्याख्यायां षष्ठस्याध्यायस्य प्रथमः पादः"—इति यास्कीयप्रथमाध्यायस्यैव निरुक्तषष्ठाध्यायत्वं बोधितम्; एवं मुत्तरत्रापि; ग्रन्थान्ते च "इति सपादसप्तदशाध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता"—इति यास्कीयसपादद्वादशाध्याय्या एव सपादसप्तदशाध्यायीत्वं ज्ञापितम्। ततश्च तन्मते निघण्टुनिरुक्तयोरैकात्म्य मेव प्रतीयते। तथासत्युपपन्न मेव निघण्टोश्च निरुक्तत्व मिति तन्मते सायणीय मादौ निरुक्तपदत्वा मपि सुसङ्गतम्?—इति चेन्न; उपक्रमोपसंहारविरोधप्रसङ्गात्। उक्तं ह्युपक्रमे "पञ्चाध्यायी-निघण्टोश्च निरुक्त मुपरि स्थितम्"—इति, "अयञ्च तस्या द्वादशाध्यायी भाष्यविस्तरः (२भा० ८ पृ०)"—इति च; एवञ्च निघण्टोः पञ्चाध्यायीत्वम्, तद्व्याख्यात्मकस्य निरुक्तस्य द्वादशाध्यायीत्वं सुतरां तयोः पार्थक्यञ्चोररीकृत मेव; प्रतिपादीयवृत्त्युपसंहरणे ग्रन्थोपसंहरणकाले च उभयोरैकात्म्य-मभ्युपगम्य निरुक्तस्यैव सपादसप्तदशाध्यायीत्वं स्वीकृत मिति स्वीकारे तु उपक्रमोपसंहारयोर्विरोधोऽपरिहार्य एव प्रसज्येत। अतस्तद्विरोधप्रसक्ति-भिया इद मेवावधारित मस्माभिः,—सूत्रभाष्यरूपयोः निघण्टुनिरुक्तयोः उभयोरेव वृत्तौ कृते दुर्गाचार्येण; तत्र सूत्रात्मकस्य निघण्टोरेव प्राथम्यात् प्रथमं स एव व्याख्यातः, तत उत्तरञ्च निरुक्तग्रन्थः; निरुक्तावबोधे च

प्र, क्वचित् क्वचित् निघण्ट्वपेक्षा विद्यत एवेत्यनयोः पूर्वापरीभावेनैकत्र संस्था

—इ नञ्च तस्य वृत्तिकृतोऽभीप्सित मिति उभयवृत्त्योरैकात्म्यं मत्वा सपाद-

व्याकृत सप्तदशाध्यायीत्वं व्यपदिष्ट मिति भवतु नाम तदीयवृत्तिग्रन्थस्य सपाद

घण्टु सप्तदशाध्यायीत्वं तेन किं निरुक्तस्येति।

तथापि "निरुक्तव्याख्यायां षष्ठस्याध्यायस्य"—इत्याद्युक्तयः कथ मुप-

मेव पद्येयुः?—इति चेदत्र ब्रूमः,—यथा च महाभारतादौ तथैवात्रापीत्थं

"पञ्च व्यवहारो न भ्रान्तिहेतुरिति। तथाहि महाभारते आदिपर्वण्येव—"पौलो-

पञ्चाध्य मपर्वणि एकादशोऽध्यायः" इति। न तत्र पौलोमस्यैव पर्वणः एका-

निरुक्त दशोऽध्यायो गत इति बुध्यते; अपि तु तत्रैकाध्यायात्मक मनुक्रमणिका-

पर्व, तत एकाध्यायात्मकं पर्वसङ्ग्रहपर्वं, तत एकाध्यायात्मकं पौष्यपर्वं, ततोऽष्टाध्यात्मकं पौलोमपर्वं, तत्सङ्कलनयैवैकादशत्वं सम्पद्यते। एव मुत्तरत्रापि तत्रान्यत्र च सर्वत्रैव। एव मिहापि निरुक्तवृत्तिग्रन्थस्य निघण्ट्वाख्याने पञ्चमाध्यायेऽतीते निरुक्तप्रथमाध्याय एव षष्ठत्वेन व्यपदिष्ट इति नैव शङ्काप्रसङ्ग इति। दृष्ट मेव मन्यत्रापि—अस्ति मगधादिषु सुप्रचलित मेकं व्याकरणम्, तस्य एकार्द्धस्य सारस्वत मिति नाम, अपरार्द्धस्य तु चन्द्रिकेति। नेमौ भागौ एककालिकौ एककर्तृकौ वा सुतरां विभिन्नग्रन्थावित्येव प्रसिद्धौ ; परं तट्टीकाकृद्भिर्भट्टमाधवप्रभृतिभिः सारस्वतस्य व्याकरणपूर्वार्द्धत्वं चन्द्रिकाया व्याकरणपरार्द्धत्वं च व्यवस्थाप्य उभयोरेवैका टीका सिद्धान्तरत्नावल्यादिका प्रणीता ; परं न हि तट्टीकया सारस्वतचन्द्रिकयोरैकात्म्यं सम्पन्नम्,—सारस्वतन्तु सारस्वत इत्येव, चन्द्रिका च चन्द्रिकेत्येवाद्यापि व्यपदिश्यते लोके ; पर मुभयोर्य्याकृतपूर्वापरीभावतोऽधिगमनेनैव भवेद् व्याकरणबोध इत्येव बोधितम्। एव मत्रापि उभयवृत्तेरैकात्म्यतया न हि निघण्टुनिरुक्तयोरैकात्म्यतासम्भवो न च तदिष्टं दुर्गाचार्यस्य : परं वृत्तिबोधितपूर्वापरीभावतोऽधिगमनेनैव भवेद् वेदपदार्थबोध इत्येव बोधित मिति।

तदेवं निरुक्तवृत्तिकारस्यापि सायणीये द्वितीयनिरुक्तलक्षणे एवाभिमतिर्नाद्ये इति यदुपन्यस्तं पुरस्तादिह, तत्समीचीन मेवेति वृत्तिकृतो व्यवहारः खलु सायणीयाद्यलक्षणखण्डनेऽननुकूल इति च नाशङ्क्यम्। तद्वृत्तावेव हि पञ्चाध्याय्या निघण्टुरित्येव लोकव्यवहार इति च स्पष्ट मेव स्वीकृतम्। तथाहि—"त एते गवादयो देवपत्न्यन्ता निघण्टवः, तदेकदेशो नैघण्टुकं प्रकरण मिति निघण्टु सञ्ज्ञया व्यवहारो लोके ;—निघण्टु मधीमहे निघण्टु मध्यामहे इति (२भा० १४३ पृ०)"—इति। एवञ्च लोकव्यवहारादपि सम्यक् ज्ञायते निघण्टुर्निघण्टुरेव निरुक्त मेव निरुक्त मिति।

किञ्च मित्थं प्राचीनतमानां प्राचीनाना मनतिप्राचीनाना माधुनिकानाञ्च

सर्वेषा मेवार्षग्रन्थकाराणाम्, ग्रन्थसमाप्त्यादिलेखसमालोचकानां व्यवहार-विदां च सर्वेषा मभिमतं सायणीयं द्वितीयं निरुक्तलक्षण मेव ; तथाद्य-लक्षणन्तु सर्वथानभिमत मिति । तथाच "अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्"—इति सायणस्वकपोलकल्पितं लक्षणं निर्मूल मेवेति निघण्टुभाष्यात्मकस्यास्य यास्कीयस्यैकस्यैव निरुक्तत्वं सर्वसम्मतम्, निघ-ण्टोस्तु निघण्टुत्व मेव अथैव मपि निघण्टुग्रन्थस्य निरुक्तान्तर्भूतत्वा-त्मकत्वात् निरुक्तसम्पादनात् दुर्विवेकत्व चात्र सम्पादन मस्मत्कृतं न दोषाये-त्याशास्महे वय मिति शम् ।

( २ )

अथेतर्हि विचार्यते,— निघण्टु निरुक्तयोरुभयोरेव वेदाङ्गत्व मुतान्य-तमस्य ? अन्यतमस्यैवेति चेत्, कस्य ? इति । वेदाङ्गग्रन्थास्तु षडेव ; श्रूयते हि गोपथब्राह्मणे "षडङ्गविदस्तत्तथाधीमहे (१. १. २७.)"—इति । पातञ्जलमहाभाष्यादौ स्मर्यते च "आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ऽध्येयो ज्ञेयश्च"—इति पस्पशायाम् । एष चागमः कात्यायनानुमत एव : यतोऽस्यैतद्वार्त्तिकम् "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"—इति । पाणिनिशिक्षादावपि वेदाङ्गानि षडेवेति निर्णीतं दृश्यते ( इ ६० ) । प्रस्थानभेदेऽप्युक्तम्—"वेदाङ्गानि षट्"—इति । तत्र शिक्षा, कल्पः, व्याकरणम्, छन्दः, ज्योतिष मिति पञ्चाङ्गानि तु सर्व-सम्मतान्येव ; निघण्टुनिरुक्तयोः उभयोरेव वेदाङ्गत्वे षट्त्वं व्याहन्येत ; अन्यतमस्य वेदाङ्गत्वेऽन्यतमस्य तदभावः सुतरां सम्पद्यते ; तत् कस्य वेदाङ्गत्व मिदं कस्य नेत्यय विचारः प्रवर्त्तते ।

प्रस्थानभेदे उभयोरेव वेदाङ्गत्व मङ्गीकृतम् । कथं न तथा षट्त्वं व्याहत मित्यत्राह च तत्र "एवं निघण्टवोऽपि वैदिकद्रव्यदेवतात्मकपदार्थ-पर्यायशब्दात्मका निरुक्तान्तर्भूता एव"—इति । न च तत्कथनमात्रेणैव

उभयोर्वेदाङ्गत्वसाधनायैव वा वादिनस्तथा स्वीकुर्युः ; वादी भङ्गं न पश्यतीति हि प्रसिद्ध मेव ।

ऋग्भाष्यभूमिकायां सायणाचार्योऽपीमां विपत्तिं परिलक्ष्यैव निघण्टो-रपि निरुक्तत्वसम्पादकं प्रदर्शित माष्यपञ्चयं (आ पृ०) व्यरचयत् । तथाच निघण्टोस्च निरुक्तत्वेनैव ग्रहणात् सप्ताना मप्येषां ग्रन्थानां वेदाङ्गत्व मुपपद्येत, न च वेदाङ्गानां षट्त्वं व्याहन्येतेति । प्रशंसनीयैवैषा तस्य चातुरी ! परं किं कुर्मो वयम्,—तदेतन्मतं न सर्ववादिसम्मतं नापि विचारसह मिति प्रतिपादितं पुरस्तादिहैवेति ।

पाणिनिशिक्षायान्तु "निरुक्तं श्रोत्र मुच्यते"—इति दर्शनात् निरुक्तस्यैव वेदाङ्गत्वं सिध्यति, न तु निघण्टोः । न चेदं सहसा श्रद्धामहे ; परकाल-जस्य भाष्यस्य वेदाङ्गत्व मस्ति, अतिपूर्वकालजस्य मूलस्य तन्नास्तीति वदत एवाश्रद्धोत्पादात् । ननु भवान् पाणिनिवचनेऽपि कथ मश्रद्धते ? अत्र ब्रूमः—न चेदं पाणिनिवचनम् ; न हि पाणिनिः स्वय मेव "अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा"—इत्युपक्रान्तु मर्हेत्, नापि हि "येनाक्षरसमाम्नाय मधिगम्य महेश्वरात् कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणि-नये नमः"—इत्याद्युक्तिभिरुपसंहर्त्तुं वार्हेदिति ।

निरुक्तवृत्तिकृन्मते तु निरुक्तस्यैव वेदाङ्गत्वम्, निघण्टोस्तु साक्षा-च्छन्दोधर्मित्व मेवेति किङ्कृतं भवेद् वेदाङ्गत्वेनेति नात्रास्माक मश्रद्धा-वसरः । तथाहि "अतः * * * निरुक्तं नामेद मङ्ग मारभ्यते । प्रधा-नञ्चेद मितरेभ्योऽङ्गेभ्यः"—इत्याद्युक्तिभिः निरुक्तस्य वेदाङ्गेषु प्राधान्यं स्थापितम् ; "तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्ग्रहः । सा च पुनरियं * * * श्रुतर्षिभि * * * छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता । सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव ; यथायथापम्नात्ता गौर्गोधर्म्मा*"—इत्युक्त्या तु निघण्टोश्छन्दस्त्व मव्याहत मेवेति च वर्णितम् ।

* मुद्रितपाठस्तु आदर्शदोषात् सम्पाद्यशुद्धियुक्त इति लक्ष्यते तत्रैव (१भा०१पृ०*)।

'यथा' च 'अयथापन्ना' अप्रकृतविपन्ना परं सामान्यविपन्ना, 'अन्या' यूथपरिभ्रष्टा, 'गौः' 'गोधर्म्मा' एव ; न हि तस्या यूथपरिभ्रष्टत्वेन गोत्वं नष्टम् ; तथैव छन्दोभ्यः समाहृता एषा पञ्चाध्यायी छन्द एव, समाहरणहेतुत एव न ह्यस्या छन्दस्त्वं तिरोभूत मिति भावः (२भा०६पृ०)। तथाच निघण्टुनामकानि समाम्नायात्मकानि पदानि तु यास्कपूर्व्वकालत एव विश्रुतानि ; तान्येव पदान्यनुसृत्य यास्को द्वादशाध्यायात्मकं निरुक्ताख्यं ग्रन्थं निर्ममे, तस्य च वेदार्थबोधोपयोगितया तदानीन्तनैरार्य्यैर्वेदाङ्गत्वं स्वीकृत मित्येव निरुक्तवृत्तिकृदाशयः फलितः।

यास्कस्य पूर्व्वश्रुतिलेखदृशा त्ववगम्यते निघण्टोर्नास्ति वेदाङ्गत्वम्, नापि वेदत्व मिति । तथाहि—"उपदिशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च (२भा० १३७पृ०)"—इति । अत्र "इमं ग्रन्थम्"—इत्युक्त्या निघण्टोरेव ग्रहण मिष्टम्, न तु निरुक्तस्यास्य ; प्रणीयमाने हि निरुक्ते "समाम्नासिषुः"—इति परोक्षातीतप्रयोगानुपपत्तेः । अपरञ्च निरुक्त मासीत् शाकपूण्यादिप्रोक्तम्, तदभिलक्ष्यैव तथा क्रिया प्रयुक्तेत्यपीह वक्तुं न युज्यते ; अनुपद मेव "एतावन्तः समानकर्म्माणो धातवः"—इत्याद्युक्त्या निघण्टुपरिचयस्यैवोपलब्धेः । अतएवात्र वृत्तिः "इमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः"—इति ; गवादिदेवपत्न्यन्तश्च निघण्टुग्रन्थ एव । किञ्चात्रापर मपि विवेच्य मस्ति— न चेदं वचन मेतस्य हि निरुक्तस्य कर्त्तुर्यास्कस्य, यथा चेम मिति एतन्निरुक्तं गृह्येतेति ; अपि त्वेतद् वचनं प्राचीन मेव यास्केनेहानूक्त मिति । अतएव "बिल्मं भिल्मं भासन मिति वा"—इति बिल्मशब्दस्य निर्व्वचनप्रदर्शनं सङ्गच्छते यास्कस्य ; न हि स्वय मेव दुरूहं शब्दं प्रयुज्य तद्व्याख्यानाय च यतितुं प्रवर्त्तते कश्चिद् । स्वपदवर्णन मेव भाष्यलक्षणम्, निरुक्तस्य च निघण्टुभाष्यत्वं सर्व्वसम्मत मिति स्वपदव्याख्यान मपीह न दोषायेत्यपि वक्तुं न युज्यते ; यदत्र बिल्मशब्दस्य भिल्म मिति प्रतिशब्द मुक्त्वापि अर्थान्तरं वदति भासन मिति, वेति संशय मपि जनयति ; तदेवाचार्य्यप्रवृत्तिर्ज्ञापयति— न ह्येवेदं स्वपद-

वर्णन मिति ; न हि स्वपदव्याख्याने स्वज्ञान-वैकल्पिकत्व-प्रकटन मुपयुज्यते क्वचिदपीति। एतस्मिन् खलु वचने बहूनि समालोच्यानि सन्ति, तानि चोपरिष्टाद् वक्ष्यामः; साम्प्रतन्तु वेदाङ्गेभ्यः पृथगेव निघण्टोर्ग्रहणं यास्कस्याप्यभिमत मित्येवेह प्रदर्शन मस्मदिष्टम्।

नन्वत्र वृत्तिग्रन्थे "वेदाङ्गानि च इतराणि (२भा० १३८ पृ० ६ पं०)"—इति लिपिभङ्गितो निघण्टोरपि वेदाङ्गत्वं ध्वनित मेवेति चेत्, ध्वनयतु नाम स तथैव किन्तेन; न हि वृत्तिकारोऽभ्रान्त एवेत्यस्माकम्। वस्तुतो यदि नाम 'इतराणि'—इति पदप्रयोगात् तथैव ध्वनितं गम्येत, तर्हि तादृशवचनस्यैकदेशयुक्तित्व मेव स्वीकार्यम्; प्रदर्शितभूमिकोक्तविरोधात्। महाभाष्ये भगवतोऽशेषशेमुषीसम्पन्नस्य पतञ्जलेरप्येवं बह्वेकदेशयुक्तयः प्रदर्शिता लघुशब्देन्दुशेखरादौ नागेशभट्टप्रभृतिभिः, तत् किमस्य वृत्तिकृतः स्वल्पधियो हि दुर्गाचार्यस्येति। वस्तुतो दुर्गाचार्यस्य निरुक्तवृत्तिभूमिकायां दृष्टं यास्कीयस्य निरुक्तस्य वेदाङ्गत्वम्, तन्मूलस्य निघण्टोस्तु न तत्त्व मपि छन्दोधर्मित्व मेवेत्येव युक्ततरं प्रतिभात्यस्माक मिति।

अथात्रापरापि च शङ्का समुत्पद्येत नाम। तथाहि—प्रदर्शितयास्कपूर्वश्रुतिसमालोचनादवगतं नास्ति निघण्टोर्वेदाङ्गत्व मिति बाढम्! परं तथैवेद मप्यवगम्यते यास्कप्रणीतैतन्निरुक्तात् बहुपूर्व मेव वेदाङ्गानि निर्वृत्तानीति कथं तत्र वेदाङ्गेषु तदानीं प्रणीयमानस्यैतस्य निरुक्तस्यान्तर्भावः शक्यते वक्तु मपि? वदत एव हि व्याघातः स्फुट मिति। इहास्माक मीदृगस्ति गुरूपदेशः,—प्रदर्शितगोपथश्रुत्यादिभ्योऽवगम्यते षडेव वेदाङ्गानीति; प्रदर्शितशिक्षावचनादिभ्यश्च ज्ञायते निरुक्तस्य च वेदाङ्गान्यतमत्वम्; यास्कीयेऽत्रैव निरुक्ते "नैरुक्ताः", "शाकपूणिः"—इत्यादिपर्यालोचनया च बुध्यते तत्पूर्व मपि चासन् बहवो निरुक्तविदस्तथा बहूनि निर्वचनापरपर्यायाणि निरुक्तानि चेति; तेषा मेव साजात्यहेतुक मस्य यास्कीयस्यापि ग्रन्थस्य यथा निरुक्तत्वं तथैव वेदाङ्गत्व मपीति।

एतदेवाभिप्रेत्याह बह्वृक्प्रातिशाख्यकारः शौनकोऽपि—"शाखापवा-

दात् प्रतिपत्तिभेदात् भिन्नस्यशास्त्रस्येति च यथासिद्धाम्। नैतेन शास्त्रेण विशिष्यतेऽन्यैः शास्त्रस्य वेदाङ्ग मनिन्द्य मार्षम् (१४.१८,१९.)"—इति। तथैतत्तृतीयवृत्तिकृतोव्वटेन च स्वारब्धवृत्त्युपक्रमे शौनकीयस्यास्य प्रातिशाख्यस्यापि वेदाङ्गत्व मिष्यमाणेनैतदुक्तम्—"अङ्गता चास्यान्यशास्त्रसव्यपेक्षस्य नैव स्यादकृत्स्नत्वात्; कृत्स्नता वेदाङ्गता मनिन्द्यता मार्षताञ्च स्वय मेव शौनको दर्शयिष्यति—'कृत्स्नञ्च वेदाङ्ग मनिन्द्य मार्षम्'—इति। अनयोः पक्षयोर्यतरः पक्षः श्रेयान्, ततरो गृहीतव्यः"—इति।

अथापरञ्च;—यद्यपि प्रदर्शितयास्कपरिभूतवचनोक्तांशे वेदशब्देन ब्राह्मणभागएवेष्ट इति बुद्धौत ब्राह्मणत्वं निघण्टोर्निराकृतम्; तत्पूर्वांशे मन्त्रभागस्यापि पृथक् श्रुतेः मन्त्रत्व मपि वारितम्; तथापि तत्रैव 'समाम्नासिषुः'—इति क्रियादर्शनात् समाम्नायत्व मव्याहत मेव। अतएव "समाम्नायः समाम्नातः स व्याख्यातव्यः"—इति निरुक्तग्रन्थारम्भस्य, 'सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव (२भा० ६ पं०)"—इति दुर्गाचार्यप्रबन्धस्य च नासङ्गतिप्रसङ्गः।

तदित्थ मसौ निघण्टुर्न हि मन्त्रग्रन्थः, न च ब्राह्मणग्रन्थः, नापि वेदाङ्गान्यतमः; अपि तु मन्त्रतो न्यूनमानः, ब्राह्मणवेदाङ्गाभ्या मन्यूनमानश्च समाम्नायविशेष एवेति यास्कस्याशयः, तत्पूर्वतनानाञ्च सम्मतः; किञ्चास्यैव निघण्टभाष्यस्य निरुक्तत्वं तदनुगतं वेदाङ्गत्वञ्चेति शम्।

( २ )

अथैतर्हि विचार्य मेतत्,—निरुक्तमूलसूत्ररूपस्य निघण्टोः कः समाम्नाता को वा प्रणेता तद्भाष्यरूपस्य निरुक्तस्य ?—इति।

अनतिप्राचीनाना मार्यकोविदाना मन्यतमः स्वर्गतो विमुक्तो वा ख्यातो मधुसूदनसरस्वती सञ्ज्ञयाहैकं प्रबन्धं प्रस्थानभेद-नामेति। तत्रेदं लिखितं दृश्यते—"भगवता यास्केन 'समाम्नायः समाम्नातः स व्याख्या-

तव्यः'—इत्यादि * * * निरुक्त मारचितम्"—इति। नात्र वादो दृश्यते ऽस्माभिः। तत उत्तरं लिखित मस्ति—"निघण्टुमन्त्राकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केनैव कृतः"—इति। तदेतल्लिखनं तदीय मेतद्विषयकं भ्रान्ति मेव प्रकटयति। हन्त भो वेदान्तिन् मधुसूदन! स्वोद्धृतं 'समाम्नायः समाम्नातः स व्याख्यातव्यः'—इति वचन मपि नालोचितम्?—अद्ययुगीयेन कृतस्य ग्रन्थस्य कथं भवेत् समाम्नायत्वम्? अथवा सम्भव एवैतं भवादृशानां सर्वभ्रमवादिनां वेदान्तिनाम्। एवं हि तल्लिखितं निघण्टोर्निरुक्तान्तर्भूतत्व मपि (का पृ०) कथं नाम भवेत् श्रद्धेयं तद्विरुद्ध-बहुप्रमाणदर्शिना मिति।

सायणाचार्यस्त्वत्र सम्यगेवालेखीत्—"गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य * * * पदानां समाम्नायः समाम्नातः"—इति, "तद्व्याख्यानञ्च समाम्नायः समाम्नात इत्यारभ्य * * * यास्को निर्ममे"—इति च (ऋ०सं०भा० भू०)। तदेवं सायणमते हि निघण्टोः समाम्नायत्वेनानादित्वम्, निरुक्तस्य तु तद्भाष्यरूपत्वं यास्कीयत्वञ्चेति प्रतिपन्नम्।

देवराजयज्वकृत-निघण्टुटीकाया भूमिकायाञ्च तथैव बोध्यते। तथाहि—"भगवता यास्केन समाम्नायं नैघण्टुक-नैगम-दैवतकाण्डरूपेण त्रिविधं गवादि देवपत्न्यन्तं निर्ब्रुवता"—इत्यादि। एतच्चैतन्मयेऽपि निघण्टोः समाम्नायत्वेनानादित्वम्, तन्निर्वचनात्मकस्यैतस्य निरुक्तस्य यास्कीयत्वं च स्फुटम्।

निरुक्तवृत्तिकारः खलु दुर्गाचार्यस्तु यद्यपि स्वग्रन्थभूमिकायां निरुक्त-वर्णनसमये केन कृतं तदिति नोक्तवान्; पर मनुपदं प्रथमखण्डव्याख्यानावसरे एवाह—"आचार्यः अयं यास्को निरुक्तकारः"—इति; एव मन्यत्रापि। निघण्टुकर्तृनिर्णयविषये तूक्तं तद्भूमिकाया मेव। तथाहि—"सा (पञ्चाध्यायी निघण्टुः) च पुनरियं साक्षात्कृतधर्मभ्यो महर्षिभ्यः उपदेशेन मन्त्रार्थ मुपश्रुत्य श्रुतर्षिभिरवरशक्तिदौर्बल्य मपेक्ष्य तदनुजिघृक्षया वाच्यार्थसामर्थ्यादभिधेयानुनीय मन्त्रार्थावबोधाय छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता"—इति। एतच्च सर्वं निरुक्तोक्तसारभूत मेव

(२भा० १३७, ७ पृ०) । एवं हि वृत्तिकृतो दुर्गाचार्यस्य मतेऽपि निघण्टोः समाम्नायत्वेनानादित्वम्, निरुक्तस्यैतस्य यास्कीयत्वं च सुव्यक्तम् ।

महाभारतीये मोक्षधर्मपर्वणि 'शिपिविष्ट'-नामनिर्वचनप्रसङ्गे ये त्रयः श्लोकाः (३४२ अ० ६९, ७०, ७१ श्लो०) दृश्यन्ते, तैश्च श्रूयते यास्ककृत मेवैतन्निरुक्तम् । तथा हि—

"शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।
तेनाविष्टन्तु यत् किञ्चित् शिपिविष्टेति च स्मृतः ।
यास्को मा मृषिरव्यग्रोऽनेकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद् गुह्यनामधरो ह्यहम् ।
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
मत्प्रसादादधोनष्टं निरुक्त मभिजग्मिवान्"—इति ।

अस्यैव ह्यत्र निघण्टुभाष्ये शिपिविष्ट-निर्वचनञ्च द्विविधम् (२ भा० ४६—५३ पृ०) । तत्रैव किञ्चिदुत्तरं द्वाभ्यां श्लोकाभ्यां (३४२ अ० ८६, ८७ श्लो०) निघण्टुकर्तृनाम च प्रकटितम् । तथाहि—

"वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत ।
निघण्टुकपदाख्याने विद्धि मां वृष मुत्तमम् ।
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद् वृषाकपिं प्राह काश्यपो मां प्रजापतिः"—इति ।

अस्यैव ह्यत्र निघण्टौ दैवतकाण्डे द्युस्थानदेवताख्यानेषु वृषाकपिरिति पदपाठश्च (१भा० ४६० पृ०) । इतश्चावधार्य्यते यस्य खल्वेतस्य निघण्टु-ग्रन्थस्य कर्तृपदं पाणिनितोऽप्यवरजाय यास्काय दातु मुद्यतः प्रस्थानभेद-कारः, स हि वेदाङ्गाना मुत्पत्तितो बहु प्रागेव ब्राह्मणग्रन्थानाञ्चोत्पत्तिः, ततोऽपि प्राक् महर्षिणा काश्यपेन समाम्नात इति ; तदानीन्तनस्यैव काश्यपस्य प्रजापतित्वश्रवणात्, निघण्टुत्पत्तिज्ञापकस्य यास्कानूक्तवचन-स्यापि तत्रैव तात्पर्यावबोधाच्च ।

तथा चानूक्तं भगवता यास्केन पुराकल्पअनुवचन मिदम्—"साक्षात्-

लभ्यत एव; परं स हि कौषीतकीब्राह्मणव्याख्याता विनायकोऽस्यैव माधवस्य एव इत्यत्र तु नोपलभ्यते निसंशयं मानम्। एवं विनायक-शान्तिरितिप्रथिते कृत्यग्रन्थे सामगानां संहितातो ब्राह्मणाच्चापि मन्त्राणां सङ्ग्रहः कृतो वर्त्तते। तस्य कर्त्ता विनायकश्च किम् स्यादस्यैव माधवस्य सूनुः? तथा षड्गुरुशिष्यश्चैकं विनायकं मन्यतमं गुरुं माह। तथाहि—'नमः षड्गुरवे तुभ्यं नमोऽस्मद्गुरवेऽपि च। विनायकस्त्रिशूलाङ्को गोविन्दः सूर्य एव च। व्यासश्च शिवयोगी च ये षट् तेभ्यो नमः सदा'—इति। सोऽपि विनायकः किं मस्यैव माधवस्यात्मजः? इमानीह विचार्याण्येव।

(७) भास्करमिश्रः—भट्टः इत्यनेको ज्योतिषशास्त्रीयग्रन्थानां प्रणेतातिप्रसिद्धो भास्कराचार्यः; नायं सः; तस्य वेदविद्वत्त्वेन प्रसिद्ध्यभावात्। वेदान्तशास्त्रीयप्रकरणग्रन्थविशेषस्य सिद्धान्तसिद्धाञ्जनस्य रत्नतूलिकाख्यायाष्टीकायाः प्रणेतापि बभूवैको वेङ्कटयज्वात्मजो भास्करः; स चास्माद् विभिन्न एव तत्रैव हि दीक्षित इति तत्स्वपरिचयो न तु मिश्र इति। वैदिकग्रन्थेषु एतर्हि सुदुर्लभाः त्रिकाण्डमण्डनाख्ययज्ञकारिकाः प्रशस्ताः, तासां प्रणेता बभूवापरो भास्करः; किन्तु वेदाङ्गच्छन्दःसूत्राणां मतिदुर्लभस्यात्युत्कृष्टस्य भाष्यराजाख्यस्य भाष्यस्य रचयिता च बभूवान्यो भास्करः। नूनमनयोः कतरेणैव वेदभाष्यकारेण भवितव्यम्। न च त्रिकाण्डमण्डनकारो भाष्यराजकारस्याभिन्नः; तयोः पितृपरिचयभेदात्। तद्यथा—त्रिकाण्डमण्डनकारस्य भास्करस्यासीज्जनकस्तत्र परिचितः कुमारस्वामी; स एव वा स्यात् कुमारिलस्वामी; भाष्यराजकारस्य तु गम्भीरराजः। तदत्र गम्भीरराजसूनुना कृतं तद् वेदभाष्यमुत कुमारिलतनूजेनेति चिन्तिते कुमारिलात्मजेनैव कृतं वेदभाष्यं दृष्टं देवराजेनेति प्रतीयते; नैघण्टुककाण्डनिर्वचने पृषेतिपदव्याख्यानावसरे '—इति भट्टभास्करमिश्रः (१ भा० १६ पृ०)'—इत्येव मुल्लेखदर्शनात्; न हि गम्भीरराजसूनुर्भट्टः; अपि तु दीक्षित इत्येव परिचितस्तत्र भाष्यराजे; कुमारिलस्वामी तु भट्ट इति प्रसिद्ध एव मीमांसकानाम्। यदीद मनुमानं नानृतं भवेत्, तर्हि

मार्द्धसप्तशतसंवत्सराभ्यन्तरजातस्य सुतरां श्रीमच्छङ्कराचार्यप्राग्भवस्य मीमांसावार्त्तिकप्रणेतुर्भट्टकुमारिलस्यैवाय मपत्यं भास्करमिश्रः। सायणतो ऽन्यूनचतुःशताब्दीपूर्वभोऽय मिति चानुमितं Burnell-महोदयेनापि (Catalogue pp. 12—14.)। एतत्कृतं रुद्राध्यायमात्रस्य भाष्य मस्माभिर्दृष्टम्; परं कस्याप्येकस्य वेदस्य सम्पूर्णं भाष्यं नाद्याप्यस्माक मभवद् दृग्गोचरम्; आपस्तम्बसंहिताभाष्यं तु पूर्ण मेव प्राप्यत इति नः श्रुतमात्रम्।

(८) भरतस्वामी। एतत्कृतग्रन्थत एकत्रैक मेव क्षुद्रं निर्वचनवाक्य मुद्धृतं देवराजेन; ततोऽवगम्यते,—तदानी मेवैतत्कृतस्य सम्पूर्णस्य भाष्य-स्यातिदुर्लभत्वम्; इदानीं तु नैवोपलब्धिसम्भावनापि। अतस्तस्यापि भरतस्वामिनः परिचयः सम्प्रत्यस्माक मज्ञेयकल्प एव। पर मस्ति क्वचित् पुस्तकालये छन्दोगारण्यकमात्रस्यैव तत्कृतं भाष्य मतिजीर्ण मिति च नः श्रुतम्। ६२७-शाकीयताम्रशासन मस्यापि कालनिर्णये स्याद्वा निदान मिति।

अथास्य व्याख्यानशैली त्वजटिलेति प्रशस्यैव विपश्चिताम्। परं पौरा-णिकमतप्रबलकालप्रभवत्वादस्य बहुत्रैव पौराणिकमतानुसृता अपि व्याख्याः दृश्यन्ते। तद्यथा—'पञ्चाशत्कोटियोजनविस्तीर्णेति पृथिवी (१२पृ०)'-इति, पर्वतोऽपि पक्षच्छेदात् पूर्व मन्तरिक्षे व्रजति स्म (६४पृ०)'-इति, पक्षच्छे-दात् पूर्वं पर्वतस्य (६६पृ०)'-इति, 'उभयत्रापि छेद्यच्छेदकभावेन सम्बन्धः ०——० तेषा मिन्द्रः पक्षानच्छिनत् (६७पृ०)'-इति,'पिनाकम् ०——० दण्डाकारं धनुरुच्यते; तच्च रूढितो महादेवीय मेव सामान्येन (३८५पृ०)' -इति च। नैरुक्तविज्ञानभावावगमे चासमर्थ एवासीत् स इति च गम्यतेऽत्रानेकत्र। तथाहि—'विकृतत्वं ज्योतिषः शीतत्वात् ह्रासवृद्धिभ्यां वा (४२०पृ०)'-इत्येवमादीनि समालोच्यानि।

नैरुक्तशासनात्तस्य बहुत्र ज्ञाननेत्रोन्मीलन मपि प्रतीयतेऽत्र। तद्यथा— 'यमः = मध्यस्थानवायुः (४७८पृ०)'-इति, 'यमः ०—० = अस्तमयावस्थ

आदित्य उच्यते (४९४पृ०)'–इति, 'विष्णुः=तीव्ररश्मिसहायेन सर्वत्र व्याप्नि-प्नोति (२६२)'–इति, 'अदितिः ०—०=ऐतिहासिकानां मते देवमाता, नैरुक्तानां मते अदीनादिगुणा, आत्मपक्षे प्रकृतिः (४०१पृ०)'–इति च। 'पञ्चजनाः'–इतिपदस्य व्याख्यानावसरे शूद्रस्य यज्ञाधिकारित्वं च विचारित मतिसुन्दरम् (१८५—१८७ पृ०); 'यत्रैकार्थानां पदानां सन्निपातः, तत्रैकं तस्य वाचकं भवति; अन्यथा निरुक्तं नीरसं कर्णान्त मिति मर्यादा (१२ पृ०)'–इत्यादिरभ्युपगमस्य तत्र नूनं सत्यत्वमेव। 'रलयोरभेदः (१३पृ०)'–इति, 'दलयोरेकत्वस्मरणात् (१४पृ०)'–इति, 'बवयोरभेदः (४५८पृ०)'–इत्येवमादयस्तत्र दर्शितविषय उणादिपदसाधने भवन्त्येव बहुत्र सहायकाः।

निघण्टुसमाम्नायविरुद्धा अपि भवन्ति पदपाठा इति चेह ध्वनितम्। तद्यथा—'सतीकम् ०——० अत्र स-शब्दे अवग्रहकरणे पदकाराणा मभिप्रायस्य वैचित्र्यात् (२१८पृ०)'–इति। अस्मन्मते तु सतीक मित्यस्य तथैव निर्वचनं कार्य्यम्, यतो नैव विरुद्धेन 'स। तीकम्'–इति पदग्रन्थः; तस्यापि संहितावत्त्वेन व्यपदेशात् तद्विरोधस्यानुपेक्षणीयत्वात्। वस्तुतो 'सतीकम्'–इत्येव नैघण्टुकम्; न पुनः सतीक मिति। एवं हिक मित्यादेर्निर्वचनावसरे (३२९पृ०)'–यदुक्तं मेते निपाता इत्येव, तदपि पदग्रन्थविरोधान्निन्दनीय मेव। तत्र त्वस्मन्मते 'एते नव निपातसमुदायाः'–इत्येव वक्तुं युक्तम्; अन्यत्राप्येव समुदितपदद्वयस्य पदत्वेन परिगणनं दृश्यत एव हि निघण्टाविति। सायणाचार्य्यस्तु ऋग्भाष्यादौ हिक मित्यादीनां पदपाठरीत्यैव व्याख्यान मलिखत्; न तु निर्वचनरीत्येति पश्यत्विदं स्वग्रन्थायमानं किल देवराजः।

व्योमशब्दनिर्वचनावसरे त्वेकत्र पदग्रन्थमर्यादाभङ्गभिया उणादिसूत्रस्य यास्कीयनिर्वचनस्यापि ध्वनितोऽनादरः। तथाहि—"उणादौ तु ०—० वीयते तद्वायुना व्योम। तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः परिवीतो वायुना (२ भा० १८८ पृ०)'–इति। इदं निर्वचन

मेतत्पदकारयोः शाकल्यात्रेययोरभिमतम्; वीत्यस्मिन् अवग्रहीतत्वात्"–इति (२६पृ०)। वस्तुतो यास्केनापि पदकाराभिमत मेव निरुक्तं व्योम व्यवन मिति (४ भा० २२९पृ०); परिवीत इति तु नैव व्योमनिर्वचनम्, अपि संहितापद मेवेत्यतो भ्रम एवात्र लक्ष्यते देवराजस्य। अथवा उणादिसूत्रदूषणे एवास्य तात्पर्य मिति सर्वं मनवद्यम्।

इहानेकत्र निगमस्यान्वेषणीयता च प्रतिपादिता स्वकण्ठरवेणैव। तथाच १७, २१ (३), २२, २३, २६, २८, २९, ३१, ३३, ३४, ३५, ४१ (२), ४५, ४६ (३), ४७ (२), ४८, ५६, ५७, ६१, ६२ (२), ६५, ६६ (२), ६७, ७१, ७८, ८३, ८४, ८९, ९० (२), ९६, ९५, १०४, १०६, १०७, ११० (२), ११२ (२), ११३ (२), ११४, ११५, ११६ (२), ११७, ११८, १२२ (२), १२३, १२४, १२५ (२), १२७, १२८ (३), १३५, १३६, १३७, १३८, १४० (२), १४८, १४९, १५१, १५७ (३), १६७, १६८ (२), १६९, १७३ (२), १८०, १८८ (२), १८९, १९१, १९४, १९९, २००, २१७, २१९ (३), २२१ (३), २२२, २२३, २३०, २३२, २३३ (४), २३४, २३५, २४०, २४९, २५९, २६३, २६६, २७०, २७४ (२), २७५, २७६, २७७, २८०, २८५, २८८, २९०, २९७ (४), ३०१, ३०२, ३०६, ३०७ (२), ३०९, ३१० (२), ३११, ३१५, ३१६, ३२१ (२), ३२२, ३२३ (२), ३२८, ३३०, ३४२, ३४४ (२), ३४५ (२), ३४८, ३४९ (२), ३५०, ३५१ (२), ३५९ (२), ३६०, ३६१ (३), ३६२, ३६३, ३६४, ३६६ (२), ३६८ (२), ३७२ (२), ३७३ (२), ३७४ (५) ३७५ (५), ३७६, ३९९, ४०९, ४११, ४४४ पृष्ठेषु द्रष्टव्यम्। नैव मन्वेषणीयत्वप्रतिपादनं दूषणीयं मन्यतेऽस्माभिः; 'न हि सर्वः सर्वं वेत्ति'–इति-प्रज्ञावत्सिद्धान्तात्, लुप्तशाखीयनिगमानां लाभासम्भवाच; परं यदत्र ब्राह्मणवादा अपि निगमा इति प्रदर्शिताः;—'वेकुरानामासि जुष्टा–इति निगमः'–इति (९५पृ०), 'दैव्याः शमितार आरभध्व मुत मनुष्याः–इति च (१७७पृ०)' –इत्यादयः। त इमे न रोचन्तेऽस्मभ्यम्; निघण्टुसमाम्नायस्य ब्राह्मण-

पूर्वभवत्वेन ब्राह्मणीयपदेषु लब्ध्यासम्भवात्, द्वादशाध्याय्यां निरुक्ते क्वापि तथाविधनिगमास्मरणाच्चेति दिक् ॥

अथ निरुक्तटीकाया ऋज्वर्थायाः प्रणेता दुर्गाचार्यस्तु नूनं निघण्टु-व्याख्यातुर्देवराजयज्वनोऽवरजः, सर्ववेदभाष्यकृतः सायणाचार्याच्च पूर्वजः—इति तु प्रतिपादित मेव पुरस्तात्; सम्प्रति सम्भाव्यते,—सोऽपि दाक्षिणात्य एव भवितु मर्हति; तत्र नैसर्गिकगौडविद्वेषदुर्गन्धोपलब्धेः। तथाहि— "वन्दनाः=वन्दितारः, लाडगौडादयः"—इत्यादि (२ भा० ४५८ पृ०)। सायणाचार्योऽपि दाक्षिणात्य एव, परं न स दुर्गाचार्य इवापरिमार्जित-रुचिः; तेन हि वेदार्थप्रकाशे 'वन्दना'—इति पदस्य 'वन्दनानि, स्तोत्राणि' —इति व्याख्यान मकारि। नन्वेवं ऋज्वर्थायाः परिच्छेदान्तेषु दृश्यमानस्य 'जम्बूमार्गाश्रमवासिनः'—इति विशेषणस्य का गतिरिति चेत्, अत्र ब्रूमः —दक्षिणापथीयप्रदेशेभ्यो जम्बूदेशं गन्तुं प्रस्थितानां पान्थानां मार्ग एव स्थितस्तदाश्रमः, तत एव तत्र तथा विशेषण मुपपद्येतेति; न त्वेतेन तस्य दाक्षिणात्यत्वं निरस्यते।

ऋज्वर्थायां निघण्टुनिरुक्तयोः कर्त्तृपार्थक्यं सुप्रतिपादितम्। तथाहि— "एतस्मिन् मन्त्रे 'अकूपारस्य दावने'—इत्यय मनयोः पदयोरनुक्रमः, समाम्नाये पुनः 'दावने अकूपारस्य'—इति मन्त्रपाठव्यतिक्रमेणानुक्रमः। तेन ज्ञायतेऽन्यैरेवाय मृषिभिः समाम्नायः समाम्नातः, अन्य एव चायं भाष्यकार इति (२ भा० ४३६ पृ०)"—इत्यादि। वाय्विन्द्रयोर्भिन्नाभिन्न-त्वविचारोऽप्यत्र दर्शनीयः। तद्यथा—"वायुरिन्द्रो वेति कि मेकस्य पर्यायवचनावेतौ शब्दौ उताभिधेयौ भिद्येते?"—इत्यादिः (३ भा० ३२३ पृ०)। तत्रैव "कस्मात् पुनर्मध्यमस्य शब्दद्वयेनोपदेशः क्रियते, पार्थिवोत्तमयोरेकैकेन? (३२५ पृ०)—"इति विचारोऽपि भवेदेव प्रेक्षावता मभिधेयवचनः। "पात्रस्य इन्द्रपान मिति समाख्या (३ भा० ४४५ पृ०)"—इत्येवमादि व्याख्यानञ्च दुर्गाचार्यस्य तस्य याज्ञिकत्व मावे-दयति। "तासु तनूनपादित्येकः + + + नास्त्येव नराशंसः; तत्र

नराशंसयाजिनां सौत्रामणीप्रयोगे कथं प्रयोगः ? (३ भा० ५०३ पृ०)"—इति तत्प्रश्नोद्भावन मपि प्रशस्य मेव। "आथर्वणे रोदसीत्यप्रत्यक्षं पदम्, तदपेक्ष्यैकवचनेन भाष्यकारो निराह 'रोदसी रुद्रस्य पत्नी'—इति (४ भा० ३३२ पृ०)"—एषापि पङ्क्तिरस्य बहुमूल्येव। "सा च पुनर्व्याख्या (३ भा० ३७८ पृ०)"—इत्याद्यनुक्रमण्यार्थवचनञ्चास्य भवेदेव प्रशंसनीयम्। देवानां द्वैविध्यम् (४ भा० ३२२ पृ०), पितृणां त्रैविध्यम् (४ भा० १८२ पृ०), देवयानपरिचयः (४ भा० ३७८ पृ०), मन्त्रेषु देवतानिर्णयप्रकारोपदेश-व्याख्यानं (३ भा० ३११ पृ०) चेत्येवमादिक मपीह द्रष्टव्य मेव।

परं मन्त्राणां छन्दोनिर्णये तु क्वचित् क्वचिदिह छन्दोऽनुक्रमणीविरोधः परिलक्ष्यते। तथाहि—'सं मा तपन्त्यभितः (ऋ० सं० १. ७. २१. ३.)'—इत्यस्या ऋचो निर्णीतं तेन पङ्क्तिच्छन्दः; अनुक्रमण्यां तूक्त मत्र—"पांक्त मस्या त्रियृतयमी महाबृहती यवमध्या"—इति। एतदेव छन्दो-ऽनुक्रमणीमत मनुसृत्य सायणाचार्येण तु निर्णीत मियं यवमध्या महाबृह-त्येवेति। तत्र हि मध्यपादस्य द्वादशानुकृतैवैतादृशमतद्वैधे निदान मुप-गम्यते। वस्तुतस्तु तादृशस्थले छन्दः सन्दिह्यत एव; प्रदर्शिताया हि ऋचो मध्यमः पादो दशाक्षरः श्रूयते, न च दशाक्षरमध्या द्विचत्वारिंशदक्षरा पञ्चपदा काचिदस्ति विशुद्धा बृहती पङ्क्तिर्वेति; अतो नूनं चिन्तनीय मेवैतस्या ऋचो विराड्-यवमध्या नाम महाबृहतीच्छन्दः उत स्वराट्-पथ्या नाम पङ्क्तिच्छन्दः? इति। ईदृक्सन्देहापनोदनायैव सूत्रितः पिङ्गलाचा-र्यसूत्रे—"आदितः सन्दिग्धे, देवतादितश्च (६, २१. ७, १.)"—इति। एव-ञ्चास्या ऋचः पाङ्क्तसूक्तमध्यपतितत्वात् पङ्क्तित्व मेव ज्यायः। न जाने कथ मनुक्रमणीकारोऽस्या महाबृहतीत्व माख्यदिति। क्वचित् मूलानुरोधतो-ऽपि अङ्कक्छन्दोऽनुक्रमणीविरोधो गलेकुठारन्यायेन स्वीकृत एव दुर्गा-चार्येण। तद्यथा—"अभि न इला (५भा० २४२पृ०)"—इत्यस्य खण्डस्य वृत्तिर्मदीया टीप्पनी च (॥) द्रष्टव्या। सायणाचार्येण तु ऋग्भाष्ये अनु-क्रमण्यनुरोधतो नैरुक्तसरसोऽपि किमु दूष्यायितः? अपि वा नव तेन

तदानी मेष निरुक्तग्रन्थः स्मृतः ? अन्यथा ह्येतद्लेखोऽपि कथं न तत्र कृतस्तेन । वस्तुतोऽत्र निरुक्तानुक्रमणीकारयोः प्रतीयत एव मतभेदः, तत् किङ्कर्त्तव्यमूढ एवाभवता मिह देवराजः सायणश्च ।

दुर्गाचार्यदृष्टनिघण्टुसमाम्नायपुस्तकगतलिपिकरप्रमादादिदोषतश्च क्वचित् क्वचिद् भ्रान्तिः प्रतीयते ऋज्वर्थानाम् । तद्यथा—निघण्टौ नैगमे काण्डे जहेत्याद्यखण्डे समाम्नान मेकत्रिंशत्तमं 'नू च'–इति (१भा० ३८८पृ० १०पं०) : तदवलम्बेनैवोक्तं भगवता यास्केन "पुराणनवयोर्नू चेति च"–इति (२भा० ४३०पृ०) : निगमश्चोदाहृतस्तत्रैव "नू च पुरा च सदनं रयीणाम् (ऋ० सं० १. ७. ४. २.)"–इति । दुर्गाचार्यस्त्वत्राह "अयन्तु नू चिदित्येतस्यैवार्थसामान्यप्रसङ्गात्समाम्नात एवोदाहृतः (४३५ पृ०)"–इति । किन्त्वात्रयथास्कीयग्रन्थः पदपाठविरुद्ध इव लक्ष्यते । पदकारा हि 'नु । चित्', 'नु । च'–इत्येव मपाठकन्ति ; निरुक्ते तु 'नूचित्'–इति, 'नूच'–इति चैतौ अनवग्राह्यणीयावेव निपातौ सूचिताविति गम्यते । निघण्टुसमाम्नाये तु द्वित्राण्यपि पदानि पदत्वेन परिगणितानि दृश्यन्ते "शं योः (४. १. ४८.), सोमो अक्षाः (४. २. १३.)", देवो देवाच्या कृपा (४. ३. ३८.)"–इत्यादीनि । तथा चैवंविधसन्देहनिरसनाय तादृश-समाम्नायपाठदर्शनस्याकिञ्चित्कर मेव ! तदत्र टीकाकृतोऽत्र वचन मेव भवेच्छरण मस्मादृशाम् : दौर्भाग्य मेवास्माकं यदिह ऋज्वर्थाकृतो नेवौष्ठाधरप्रस्फुरणं दृश्यते ! अहह एष विरोधः किमु तेन नैव लक्षितः ? दशमेऽपि पुनः नूचिदित्यस्यैव 'नवं च पुराणं च'–इत्यर्थः कृतो यास्केनेत्याह स एव स्फुटम्,—"नूचित्–इति नवपुराणाभिधायको निपातः (४भा० ७२पृ०)"–इति । तत्रापि नैव दृष्टस्तेन तत्पदग्रन्थः ? सायणाचार्येण तु तत्र नूचिदित्यस्य नवपुराणार्थतापि न स्वीकृता ! इद मेवोच्यते 'मुरारेस्तृतीयः पन्थाः'–इति । तत्त्वतः सायणाचार्यकृतं तद्व्याख्यानं तु निरुक्तविरुद्धं पदग्रन्थविरुद्ध मिव च प्रतीयत एव ।

क्वचिदिह मूलादृष्टपदस्यापि व्याख्यानं कृतं गम्यते । तद्यथा—'सह-

श्विणः'–इत्यादिः, 'वायव्ये मन्त्रे'–इत्यन्तो ग्रन्थः (४भा० ४८७पृ०) समालोच्यः। तदेवंविधं स्वकपोलकल्पितपदव्याख्यानं चातीव विस्मयावहम्।

क्वचित्तु मूलपाठेऽपि स्वसंशयः प्रकाशितोऽनेन। तद्यथा—'भाष्य मन्त्र' –इत्यादि (३ भा० २११पृ०)। तत्र तादृशाशङ्काया निदानोल्लेखस्त्वोचितस्तस्य; नान्यथा हि ग्रन्थवक्तव्यतादोषो भवेत् सुपरिहार्यः। अस्माकं स्वल्पधियां न तत्रासम्यकताबोध उपजायते। सायणाचार्येणाप्येतदेव नैरुक्तं व्याख्यान मुत्कृष्टं मत्त्वेव प्रशंसापूर्वकं सम्पूर्णं मुद्धृतं यथायथ मृग्वेदार्थप्रकाशे। तत् कथं मन्यामहे दुर्गाचार्यस्यैष नैरुक्तपाठसंशयो नूनं धीमतां विचारविषय इति।

मूलोक्तलक्षणाना मुदाहरणेषु समन्वयाः खलु टीकाकृद्भिरवश्यं दर्शनीयाः; पर मिहानेकत्र न तथा दर्शिता दुर्गाचार्येण; ततोऽत्र बहुत्रैव भवेत् लक्षणसमन्वयसंशयस्य दुष्परिहार्यता च। तद्यथा—परोक्षकृताना मृचां यल्लक्षण मभिहितं मूले "परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य (३ भा० ३८५ पृ०)"–इति; एतस्योदाहरणान्यपि दर्शितानि तत्रैव "इन्द्रो दिव (३८६ पृ०)–इत्यादीनि; पर मुदाहृतेषु तेषु परोक्षकृतनिगमेषु न हि श्रूयन्ते सर्वा एव प्रथमपुरुषक्रियाः; प्रत्युत 'अनूषत', 'गायत', 'अयंसत'–इति तिस्रो मध्यमपुरुषक्रियास्तु। तदिह कथं भवेल्लक्षणसमन्वयः? इतीह वृत्तिकृतोद्भावनीय मेव। न च तथोद्भावितं दुर्गाचार्येण। किञ्च 'अनूषत'–इत्यस्य अभिष्टुतेति प्रतिशब्ददानं, तदनुगतं सर्वं तन्मन्त्रव्याख्यानं च तस्य व्याख्यापयश एवोद्भावयति। सायणभाष्ये तु 'अनूषत'–इत्यस्य स्तुतवन्त इति प्रतिशब्दः प्रदत्तः, तथा न चोपलभ्यते तत्र यूय मिति, स्फुट मप्युक्तं तत्साधनिकायां 'लुङि व्यत्ययेनात्मनेपदं झस्यादादेशः'–इति। अहो इहैतदपि विचार्यम्—अस्त्वेकस्यैवास्य दुर्गाचार्यस्य व्याख्याने दोषः, परं सर्ववेदभाष्यकारेण सायणेनापि 'गायत'–इत्यस्य व्याख्यायां कथं न यास्कीयलक्षणोदाहरणमर्यादा परिरक्षिता? गड्डलिकाप्रवाह एव किं मन्त्र वीज मिति।

'एष व्याख्यानसमयः'—इत्येतन्नैरुक्तवचनस्य (१ भा० १४२ पृ०) दुर्गाचार्य-कृतव्याख्यानदर्शनाद् गम्यते पुन रेतत्प्रचलितं महाभारतं निरुक्तात् पूर्वैव प्रणीत मिति ; तदेतादृशव्याख्यानं तु पौर्वापर्यज्ञानविधुरेणैव कृत मिति कालज्ञानकृतश्रमाणा मैतिहासिकानां भवेद्धास्यास्पद मेव । एव मन्यत्रापि बहून्येव विद्यते स्फुटम् ।

क्वचिद्विरोधतो व्याख्येयानि मन्त्रवचनानि च नैव व्याख्यातान्येतेनाचार्येण असमाधानीय एवैष दोषो व्याख्यातॄणाम् । अतः स च मयोद्धारितः बहु-टिप्पन्याम् । तद्यथा—३ भा० ३५५ पृ०, ३५३ पृ०, ३६१ पृ० इत्यादि ।

किञ्च यद्विहानेकत्रोक्तं भगवता यास्केन "—इति सा निगदव्याख्याता" इति (३ भा० ४१४ पृ०, ४ भा० ७, १०, २५, ३२, ५३, ६८, १०३, ११८, १६४, १७९, २३०, २५० पृ०), तथा सर्वथा नैव निगमानां विशेषतो व्याख्यानानि कर्त्तव्यानीति श्रीमद्दुर्गाचार्यस्य । अथो वत, तादृशानां व्याख्या-कथा तु दूरे आस्ताम्, कस्यचनस्य निगदव्याख्यातेति पदस्यापि व्याख्यानं न कृतं तेन क्वचिदपि ! नन्वत्र यास्ककाले यासां ऋचा मर्थबोध आसीदतीव सुगमः, तासां व्याख्यानं निष्प्रयोजन मिति मत्त्वैवाह तत्र तत्र यास्को निगदव्याख्यातेति । अयन्ते चैवं निगदव्याख्याता मन्त्रास्तैत्तिरीयारण्यकादावपि । तथाहि—"अथ निगदव्याख्याताः । ताननुक्रमिष्यामः"—इति तै० आ० १ प्र० ६ अनु० ४ ख० । 'निगद्यमानेनैव मन्त्रपाठेनैव + + + विस्पष्ट माख्यातो भवति, तान् एतान मन्त्रान् अनुक्रमेण कथयिष्यामः'—इति च तत्र तद्भाष्यं सायणीयम् ।

क्वचिदहो त्रैकालिकाभावविशिष्टस्य मन्त्रकमलस्यापि सुगन्धोऽवापि तेन; दृष्टञ्च क्वचिन्निराकार मपि साकारम् । अतिगम्भीरमूलजलधौ दिग्भ्रम एव तत्र तत्र तद्बीज मनुमीयते ; नान्यत् कि मपि । तद्यथा—३ भा० ४४३ पृ० ३—६ पङ्क्तयो द्रष्टव्याः ।

क्वचित् पदग्रन्थविरोध मुररीकृत्य च कृतं नवकनिगमव्याख्यान मेते-नातिपण्डितम्मन्येन । तद्यथा—वराहनिगमव्याख्यानावसरे त्विषिरूप मिद

मिति मन्त्रेणोक्तम्—'त्वेषितः = सन्दीपितः'—इति (४भा० २६ पृ०)। पद-संहितायां तु 'त्वाऽइषितः'-इति सावग्रहपाठः श्रूयते। तथाचावगम्यते बहूपदकारस्य शाकल्यस्यर्षेर्नात्र त्विषेरूप मिष्ट मिति। एवञ्चानयो-र्विरोधः स्फुटम्। नून मवगतस्तेन विरोधस्तेनापि वेदार्थघट्टना ; अत एवानुपद मुक्तम्—'नान्यथार्थ उपपद्यते'—इति। 'अन्यथा' पदकारनये 'त्वाऽइषितः'—इत्यत्रग्रहानुरोधतः त्विषेरूप मिद मिति स्वीकाराभावे इति च तद्भावः। एतच्च प्रौढिवादमात्रम् ; सायणाचार्येण तु पदकारमत मनुसृत्य कृत एव हि त्वेषित इति पदस्य 'त्वया प्रेरितः'—इत्यय मर्थोऽसकृत्। वस्तुतोऽस्माभिः सर्वत्र तथैवार्थः कल्पनीयो यथा न विरुध्येत पदपाठः ! आर्षं पदपाठ मवमत्यार्थकरणन्तु साहस मेवेत्यत्र कास्ति वक्तव्यता।

एव मनुक्रमणीकारस्य शौनकस्य, कल्पकारस्याश्वलायनस्य च मतविरुद्ध मिह प्रतीकोपादान मपि लक्ष्यते। तद्यथा—आचष्ट आसा मिति निरुक्तोदाहृतनिगमस्य व्याख्यानाय अभि वो देवी मिति प्रतीकोपादानं तद्व्याख्यानं च द्रष्टव्यं मत्कृतया टीप्पन्या सहैव (३ भा० १६८ पृ०, + )।

अस्य वैज्ञानिकज्ञानाभावोऽपि द्योतितोऽत्र बहुत्र। तद्यथा—'विकृतज्योतिष्कः'—इतिनिरुक्तपदस्य व्याख्यान मुक्तम्—"तद्धि तस्य विकृतं ज्योतिः, शीतत्वात् ; इतराणि उष्णानि ज्योतींषि सूर्यादीनि, तान्यपेक्ष्य (३ भा० ६६ पृ०)"—इति। स्वभावस्यान्यथाभाव एवोच्यते विकारो नाम लोके; तद्यदि हि पूर्व मुष्ण मनन्तरं चन्द्रमः-सम्बन्धात् शीत मिति स्याद् विज्ञानवेद्यं चान्द्रमसं ज्योतिः, तर्ह्येवोपपद्येत चन्द्रवाचकस्य 'वकः' —इतिपदस्य यास्कीयं निर्वचनं 'विकृतज्योतिष्कः'—इति। स्वभावशीतस्य तु विकृतत्व मेव किन्नामेति संशयोऽपि नोद्भूतः किमु दुर्गाचार्यस्य ?।

एवं यदा पौराणिकाख्यानघनघटाभिराच्छन्नं वैदिकं ज्योतिः, तादृशे एव निविडान्धकारग्रस्ते भारते यतोऽयं जातो दुर्गाचार्यः, ततोऽपीह ऋज्वर्थायां मूलाभिप्रायविरुद्धानि मूलासम्बद्धानि च बहून्याख्यानानि दृश्यन्ते। तत्र, मूलाभिप्रायविरुद्धं यथा—"एव मुच्चावचैरभिप्रायैर्ऋषीणां

मन्त्रदृष्टयो भवन्ति"—इतिनैरुक्तस्य व्याख्यानशेषे "मन्त्राणां द्रष्टारो भवन्ति, न तु कर्तार इत्यभिप्रायः (२ भा० २०६ पृ०)"—इति। न चायं मभिप्रायो मूलकृतो यास्कस्येति मन्यते। तत्त्वतस्तु अनिर्दिष्टकालिकाना मतिप्राचीनानां यज्ञादीनां दृष्ट इति, युगारम्भकालिकानां प्राचीनानां प्रोक्त इति, मध्यकालिकाना मनतिप्राचीनाना मद्यतनीयानाञ्च कृत इति व्यवहारः समार्थ एव। मन्त्रासम्बद्धानि च यथा—"सप्त सिन्धून्, स्यन्दना आकाशनद्यः, एता च इला चैवैवमाद्याः (३ भा० ४४३ पृ०)"—इति। किञ्च "समारोहणे = उदयगिरौ"—इत्यादि (४ भा० १०२ पृ०) व्याख्यानन्तु ततोऽप्यधिकं विचित्रम्; तथा "इह कथं चन्द्रमा मध्यस्थानः ?"—इति स्वारस्यविचारस्य समाधानमपि (४ भा० १७२ पृ०)।

एवमपि यास्कीयवचनव्याख्यानानुरोधात् तस्य बहुत्राऽवितथवादित्व मपीह लक्ष्यते। तद्यथा देवताना माकारविचारप्रकरणे—"तदाहुः 'नैतदस्ति यद्देवासुरम्'—इति। × × × 'तद्यथा—अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमाः—इति'। प्रत्यक्षत एतान्यपुरुषप्रकाराणि, इत्येतेषा मतोऽन्यथाऽभ्युपगमे दृष्टहानिः स्यात्! न चैतदिष्टम्। तस्मादपुरुषविधा अग्न्यादयः, तत्सामान्याददृष्टा इन्द्रादयोऽप्यपुरुषविधाः, न हि मनुष्यत्वे तुल्ये केचिदाकारिणः केचिदनाकारिणः इति, तथैव देवताना मपीह न्यायः। तस्मादपुरुषविधा इति (३ भा० ३३९ पृ०)"—इति। एतेन अग्न्याद्यन्तः-पुरुषरूपकल्पन मप्यपास्त मिति स्फुटम्। एवं भगवता यास्केन पृथिव्याः वहिःप्रभाशून्यत्वं वर्णितम्—"अपगतभास मपहृतभास मन्तर्हितभासं गतभासं वा (२ भा० २७८)"—इति। ततश्च दुर्गाचार्येण कृष्णच्छाया भवति पृथिवीत्यवगतम् (२ भा० २८० पृ०)। तत एव पौराणिकवर्णितं राहोर्ग्रासे सूर्यस्य ग्रहण मित्यपि तस्याभूता विदितम्।

परमन्तःसारशून्यो वंशतरुचन्दनवनस्थोऽपि न कथ मपि चन्दनायते! दुर्गाचार्यः खलु देवताना मपुरुषविधत्वं व्याख्यायाप्यनुपद मनुससारैव पौराणिकमतम् "परे तु (३ भा० ३४२ पृ०)"—इत्यादिना। अहो काल

प्रभावतो मतिविभ्रमः! वेदाङ्गग्रन्थकर्त्तुर्भगवतो यास्कस्यापि मतं खर्वीकर्त्तु मिच्छत्ययम्!! एवं मगस्त्यजन्मव्याख्यानादावपि पौराणिकाख्यान मेवानुसृतम्; न तु तत्त्वं व्याख्यात मेतेन।

क्वचिदिह व्याकरणप्रक्रियाख्यान मप्यपरिस्फुटम्। तद्यथा—'अस्मे'—इति नैगमपदव्याख्यानायोक्तो भगवता यास्केन 'अस्मे ते बन्धुः'—इत्यादिः सन्दर्भः। तत्र अस्मच्छब्दात् प्रथमादीनां सर्वासा मेव विभक्तीनां बहुवचनाना 'जस्-शस्-भिस्-भ्यस्-भ्यस्-आम्-सुप्'—इत्येतेषां स्थाने "सुपां सुलुक्-पूर्वसवर्णाच्छेयाडाड्यायाजालः"—इति (७. १. ३९) पाणिनीयेन सूत्रेण शे-आदेश एवेष्टः। तथाच 'अस्मे'—इत्येकस्यैव पदस्य वयम्, अस्मान्, अस्माभिः, अस्मभ्यम्, अस्मत्, अस्माकम्, अस्मासु—इति सप्तविधा एवार्था भवितु मर्हन्ति, भवन्ति च यथास्थानं यथानुगम मित्येव मूलतात्पर्यम्। परं दुर्गाचार्येण लेषा वैयकरणप्रक्रिया नैव तत्र कण्ठरवेणोद्घोषिता; अपि तूक्तं " 'अस्मे'—इत्यस्य 'वयम्'—इत्येवम्प्रथमया विपरिणाम उपपद्यते"—इत्येवमादि (२ भा० १९३ १९७ पृ०)।

क्वचिच्चेह पाठकभ्रामिकोक्तिश्च लक्ष्यते। तद्यथा—'इह तूत्तमः (४ भा० ३०२ पृ०)'--इत्युक्तिर्भ्रामयत्येव पाठकान् मध्यमस्याप्यन्वेषणाय।

क्वचित्तस्य नामविभ्रमावर्त्तमग्नता च परिदृश्यते, या खल्विदानीन्तनाना मल्पधियां तु का कथा, आसीत् सर्वानुक्रमणीवृत्तिकारषड्गुरुशिष्यादेरपि। तद्यथा—"वसिष्ठस्येद मार्षम्, यस्मादस्यात्र प्रयोगः—'उतासि'—इति: तदेतद्विरुद्धार्थं मुपलक्ष्यते ?"—इति (३ भा० ७८ पृ०)। अहो कोऽत्र विरोधः ? वसिष्ठस्य सहस्रतमपुरुषोऽपि हि किं नोच्येत वसिष्ठ इति! वस्तुतो वसिष्ठ इति गोत्रनामैव; न तु व्यक्तिनाम: पुरासीत् गोत्रनामत एव प्रायः सर्वव्यवहारः; यथाद्यापि दृश्यते यूरोपीयसभ्यानाम्।

क्वचिदिह यास्कप्रदर्शितनिगमार्थस्य चान्वेषणीयतोपदिष्टा। तद्यथा —"द्यमानोड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मां सुप्तं दोषाया मबोधयत्। मृग्योऽत्र शेषः (२भा० ४३५ पृ०)"—इति। नून मिह उक्ताति-

रिक्तस्यार्थस्यैव स्मयतोपदिश्यते ; तत्त्वनुचितं वृत्तिज्ञताम् । किञ्चात्र 'दयमानोड्डीयमानः'-इत्यशुद्धपाठस्तु स्यात्लेखकप्रमादज एव ; 'दयमान उड्डीयमानः'-इत्येवम्पाठेनैव भवितव्यम् ; परं किन्तु 'दोषायाम्'-इत्यपि पाठः किं लिपिकरप्रमादादेव सम्पन्नः ? न हि 'दोषा'-इत्यव्ययस्य युज्यते तथाविधं रूपम् ।

निगमान्वेषणीयता तु बहुत्रैवोपदिष्टा । तद्यथा—"जामिशब्दस्य (अतिरेकार्थस्य) पर्य्येष्यो निगमः"—इति, ततः "एतस्य (बालिशार्थस्य) अपि पर्य्येष्यो निगमः"—इति च (२ भा० ४६१ पृ०)। जामिशब्दस्यातिरेक-बालिशार्थयोर्मन्त्रात्मनिगमप्रदर्शने देवराजोऽप्यभवदसमर्थ इव (२ भा० ४००पृ०)। सायणभाष्यदर्शिनो वयन्त्वतिरेकवाचिनस्तस्य निगम मपि पश्याम एव—"जामि वृवत आयुधम् (ऋ०सं० ५. ८. ६. ३.)"—इति । 'जामि, अतिरेकनामैतत्'-इत्यादि हि तत्र सायणीयं भाष्यम् ।

तस्मतस्तु नैघण्टुकव्याख्यान मेवास्यामोऽन्निगमसङ्कटे मुख्य मवलम्बन मिति च प्रतीयते ; तत्र हि येषां पदानां निगमा नैव विद्यन्ते, इहापि न तेषां त उपलभ्यन्ते ; अपि तत्र खलु येषां पदानां ये च यथा च निगमाः प्रदर्शिता देवराजेन, प्रायस्त एव तथैवेह च दृश्यन्ते। तद्यथा—तत्र क्रोधनामसु पठितस्य हरइतिनैघण्टुकपदस्य 'निगमो ऽन्वेषणीयः'-इति व्याख्यान मुपसंहृतं देवराजेन (२भा० २३४पृ०) ; तथेह क्रोधनामनिरुक्त-व्याख्यानावसरे दुर्गाचार्य्येणापि तन्निगमो नैवादर्शि (२भा० २८६पृ०)। परं सायणीयभाष्यसाहित्यात्त्वस्माभिरवगम्यते एव क्रोधवाचिनोऽपि हरः-शब्दस्य निगमः—"अवयाता हरसो दैव्यस्य"—इति (ऋ० सं. ६. ४. ११. २. । अथ० सं० २. २. २.)। "त्वं 'दैव्यस्य' 'हरसः' क्रोधस्य 'अवयाता' पृथक्कर्त्ता"—इति हि तत्र सायणीयं भाष्यम् । एवन्तस्यैव हरःशब्दस्य ज्योतिर्दिनार्थयोः क्रमात् यौ निगमौ प्रदर्शितौ देवराजेन, तावेव ऋज्व-र्थाया मपि ; किञ्च अस्त्वर्थे यथा मन्त्रात्मनिगमाभावः सूचितो देवराजेन, ऋज्वर्थाया मपि तथैव ; यश्चो तत्रैव ततश्चोक्तं देवराजेन

'उदकलोकवाचिनिगमौ पर्य्येष्यौ'—इति, तत एवानन्यगत्या दुर्गाचार्य्येणा-पीह मौन मेवावलम्बितम् (१भा० ३६८ पृ०, २भा० ४५० पृ०)। तथाचात्र-गम्यतेऽस्य वृत्तिकृतो दुर्गाचार्य्यस्यापि वेदविद्या प्रायोऽस्माक मिवासम्पूर्णा-ऽऽसीदिति। हन्तास्मादृशाना मर्द्धशिक्षितानामन्येतादृशमहार्हवैदिकग्रन्थ-व्याख्याने प्रवृत्तिर्विडम्बनायैवेत्यलं पल्लवितेनेति शम्॥

अथेदं निरुक्तालोचन मुपसंहरन्निह किञ्चिद् वच्मि। सर्वत्रैव ग्रन्थ-कालनिर्णये कर्त्तव्य मेतत्,—प्राचीनार्य्याणां गोत्रनाम्ना मेव व्यवहार आसीन्न पुनर्व्यक्तिनाम्ना मिति; यथाद्यापि दृश्यते इंलण्डीयादीनां तथा सपितृनामनामव्यवहारो दाक्षिणात्यानां भारतीयाना मपि। अतएव व्यासाश्वलायनपाणिनिशौनकयास्कादीनां बहुत्वात् तत्तत्कृतेष्ववश्यम्भावी पौर्वापर्यविभ्रमो भवत्येव। षड्गुरुशिष्यादयोऽपि प्रायः सर्वे तद्विभ्रमा-वर्त्तमग्ना एवासन्; अत्रैव पूर्वं मयापि यत् स्वीकृतं प्रातिशाख्यादीना मेककर्त्तृकत्वम् "नात्र वादं पश्यामः (७ पृ०)"—इति, तदपि तादृश-भ्रमादेव। तत्त्वतो बृहद्देवताप्रणेता शौनकस्तु प्रातिशाख्यकृतः शौनकात्, निरुक्तकृतो यास्काच्च बहुवरः; तत्र बहुत्रैव तयोर्नामोल्लेखदर्शनात्। तथाहि—

"पद मेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुषादः पदं यास्को वृत्तोवृत्ते इति त्वृचि॥"—इति*।

दृश्यते चैव मेवात्र यास्कीये निरुक्ते 'पुरुषानदनाय'—इति†।

* बृ० दे० २अ० ११२श्लो०।　　† निरु० ३भा० १८१पृ०।

तथा, "कात्यायनं सर्व मिति भगवानाह शौनकः ।"—इति* ।
लभ्यते चैव मेव शौनकीयानुक्रमणिकातोऽपि† ।

न हि कोऽपि विज्ञः स्वं भगवानिति वक्तु मुत्सहेतेति नन मनुक्रमणीकृच्छौनको बृहद्देवताकृच्छौनकात् प्राचीन इत्यवतिष्ठते; तथा च षड्गुरुशिष्यकृतः 'शौनकीया दश ग्रन्था'—इति सिद्धान्तः कथं न विलीनो भवेत् मध्यस्थमनीषोदवदिति सुधीभिरेव विभाव्य मिति दिक् ।

एवं पाटलाविजय-जाम्बवतीविजय-काव्ययोः प्रणेता पाणिनिः, व्याकरणसूत्रप्रणेतुः पाणिनेराचार्यात् अन्यो बहुपरभवश्च; न हि व्याकरणाचार्यस्य पाणिनेः रचनायां व्याकरणाशुद्धिः सम्भवेन्नाम, नापि हि महाभाष्यकृत्पतञ्जलिकालपर्यन्ताविर्भूतेन केनचिद् वैयाकरणेन प्रयुक्तं किमपि पद मशुद्ध मिति गणयितुं शक्यते तत्परजातैः कालिदासादिभिश्च प्रयोगपदुभिः अस्ति च व्याकरणाशुद्धिदोषः पाटलाविजये; उदाहृतश्च स रुद्रटकृतकाव्यालङ्कारटीकाकृता नेमिसाधुना च्युतसंस्कृतिदोषोदाहरणप्रसङ्गे 'सन्ध्यावधू गृह्य करेण'—इति। तत्र गृहीत्वेति वक्तव्ये गृह्येति प्रयोग एवाशुद्धः। अत्रेदं विचार्यम्;—अशेषशेमुषीसम्पन्नस्य, महेश्वरवरप्रसादाप्तव्याकरणविद्यस्य, सिद्धवाग्विभवस्य, व्याकरणसूत्रकृतस्य पाणिनेर्व्याकरणाशुद्धिरत्रापि सम्भवेत् किमु? उत यदि गृह्येति पदं तेनैव पाणिनिना प्रयुक्तं स्यात्, नहि तत्प्रयोगबलादेव साध्विति कथं न मन्येत; प्रयोगा अपि हि पाणिनि-कात्यायन-पतञ्जलीनां साधुत्वनियामका भवन्त्येवेत्यत्र कोऽपि न विप्रतिपद्यते। नत्वेवं, यतः खलु गृह्येति पदं न कोऽपि साधु मन्यते; अतएव ज्ञायते नेदं व्याकरणाचार्य्येण तेन पाणिनिना प्रयुक्तम्, न च पतञ्जलिपूर्वकालीनेनापि केनचिदिति। वस्तुतः पाणिनिः खलु महाकवेर्वाल्मीकेश्च बहुपूर्वभवः; वाल्मीकीयाद्रामायणात् पूर्वं सूत्रकाल एवासीत्, तदोपमाद्यादिवृत्तानां कथा तु दूरपराहता स्यात्, आनुष्टुभेनापि छन्दसा कश्चिल्लौकिको ग्रन्थो रचितो न वेति महान् संशय एवेति ।

* ब० दे० ३ अ० १५२ श्लो० । † ऋ० म० १, १२५, १, सा० भा० ।

अथेह विदुषः सानुनय मभ्यर्थये ।—अतिप्राचीनग्रन्थानां कालनिर्णये बहुज्ञ विद्वांसोऽपि भ्रान्ता इवोपलभ्यन्ते, तस्मादस्मदुक्तेर्भ्रमविजृम्भितत्वं क्वापि वक्तव्यतेति सम्भाव्यत एवात्र भ्रमबाहुल्यम्; पर मेतदाद्यन्तं मत मेव धीमद्भिर्धैर्येणानुकम्पानयनाभ्यामेवालोचयितव्यम्; आर्यभाषयोपनिबद्ध मिदं नूतन मिति वा, आवर्जनाराधिततोऽपि किञ्चिद् ग्रहणीयं क्वचिल्लभ्यत इति निश्चित्यैव वेति । अपि चेह व्याकरणाशुद्धिश्च सम्भाव्यते; सर्वदा वैदिकग्रन्थालोचकस्य श्रोत्रियस्योक्ताववकाशतोऽपि छान्दसपदप्रयोगस्यावश्यम्भावितयान्यत्र महार्षग्रन्थेष्वपि तथा दृष्टत्वात् । अतएवोक्तं केनचिल्लौकिकप्रयोगनिपुणेन कविना—

"गुरुनटदेवज्ञभिषक्श्रोत्रियमुखगह्वराणि यदि न स्युः ।
व्याकरणभीता अपशब्दमृगाः क्व विचरेयुः ॥"—इति ।

(सुभाषितावलिः २३०१)

कलिकाता ।
संवत् १९४८ ।
खृ० १८९१ ।

अहमपि श्रोत्रियः,

**श्रीसत्यव्रतशर्म्मा ।**

(काश्यप-चट्टोपाध्याय-भट्टाचार्य-आवसथान्वयः,
सामश्रमीतिलब्धोपनाम, सामगाचार्य इति प्रसिद्धश्च.

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series.

Nos. 530, 546, 551, 568, 580, and 583

---

# THE NIRUKTA.

WITH COMMENTARIES

EDITED BY

PAṆḌIT SATYAVRATA SÁMAŚRAMI.

VOL. III.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1886

# निरुक्तम् ।

## ( निघण्टु-भाष्यम् )

जम्बूमार्गाश्रमवासि-भगवद्दुर्गाचार्य्य-विरचितया

ऋज्वर्थाख्यटीकया सहितम् ।

श्रीलश्री

बङ्गदेशीयासियाटिकसमाजाभ्यर्थनया व्ययेन च

काश्यधीतवेदादि-बङ्गसामगेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

सम्पादितम् ।

तृतीयो भागः ।

कलिकाताराजधान्याम्

बाप्तिष्टमिशन्यन्त्रे मुद्रितम् ।

शकाब्दाः १८०८ ॥

# अथ पञ्चमादि-चतुरध्यायानां सूची।

अष्टमाध्यायस्य,—

प्रथमे पादे ४ ( १—४ ) = ३ ( १—३ )
द्वितीये पादे १२ ( ५—१६ ) = १२ ( ४—१५ )
तृतीये पादे ७ ( १७—२३ ) = ७ ( १६—२२ )
सङ्ख्या २३ त्रयोविंशतिः २२ द्वाविंशतिः।

# अथ अकारादिवर्णक्रमेण खण्ड-प्रतीक-सूची।

| वाक्यप्रतीकाः ... ... ... | अ० | पा० | ख० | पृ० |
|---|---|---|---|---|
| वैश्वानरीयो द्वादशकपालो भवती०* | ७ | ७ | २(—२४) | ४१८ |
| व्यचस्वतीरुर्विया वि श्रयन्तां ... | ८ | २ | ७(१०) | ४७२ |
| आयन्त इव सूर्यं ... ... | ६ | २ | ४(८—) | १७१ |
| स इत्तमोऽवयुनं ततन्वत् ... | ५ | ३ | २(१५) | ८९ |
| सद्यो जातो व्यमिमीत यज्ञ० ... | ८ | २ | ६(२१) | ४९४ |
| समान मेतदुदक०* ... ... | ७ | ६ | ९(—२३) | ४१४ |
| समिद्धो अद्य मनुषो दुरोणे ... | ८ | २ | २(५) | ४५९ |
| सखि मविन्दच्चरणे नदीनाम् ... | ५ | १ | १ | १ |
| सुगुरसत् ... | ५ | ३ | ७(१९) | ९६ |
| सुदेवो असि वरुण ... ... | ५ | ४ | ९(२७) | १२१ |
| सृप्रः सर्पणादिद मपीतरत् ... | ६ | ४ | १(१७—) | २०९ |
| सोमानं स्वरणं कृणुहि ... ... | ६ | ३ | १(१०) | १८१ |
| स्त्रिया आपो भवन्ति* ... ... | ६ | ४ | २(—१७) | २१५ |
| स्तोमेन हि दिवि देवासो ... | ७ | ७ | ६(२८) | ४२९ |
| स्थूरं राधः शताश्वं* ... ... | ६ | ४ | ८(—२२) | २३७ |
| स्वसराण्यहानि भवन्ति* ... | ५ | १ | ५(—४) | ३२ |
| हविषा जारो अपां ... ... | ५ | ४ | ६(२४) | ११२ |
| हविष्पान्त मजरं स्वर्विदि ... | ७ | ७ | ३(२५) | ४२३ |
| हिनोता नो अध्वरं ... ... | ६ | ४ | ७(२२—) | २३२ |
| हिमेनाग्निं घ्रंस मवारयेथां ... | ६ | ६ | ८(३६) | २८० |

इत्याद्यङ्काः सर्वपुस्तकसम्मताः, पादाङ्कास्तु क-प्रभृतिपुस्तकविरुद्धा अपि ख-प्रभृति-पुस्तकसम्मताः, अध्यायाङ्कास्तु तथैवात्र मुद्रितपुस्तकेऽपि प्रदर्शिताः; वक्रमध्यस्थिताङ्कास्तु ते क-प्रभृतिपुस्तकानुमतभेदबोधिकाः। * एतच्चिह्नितप्रतीकाः प्रत्यध्यायावसानमुक्तप्रतीक-संग्रहमात्रविषयाः। † एतच्चिह्नेन च तस्य प्रतीकस्य क-प्रभृतिपुस्तकाना मेव सम्मति-र्बोध्या। (-१९-) अङ्कोऽयम् एवैतच्चिह्नेन तत्खण्डाङ्कस्य तदाद्यारम्भत्व तदसमाप्तिश्च बोध्यम्. (—२१) अङ्कस्यावैवैतच्चिह्नेन तस्य तदानारम्भत्व मेव, तथा (११—) अङ्का-नन्तरैवैतच्चिह्नेन तस्य तदसमाप्तिश्चेति।

| अ० | पा० | ख० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|
| ,, | ,, | ,, | १५ | मन्त्रदृष्ठयो | मन्त्रदृष्टयो |
| ,, | २ | १ | २ | ०दैकैकस्या | दैकैकस्या |
| ,, | ,, | २ | ४ | बाह्र | बाह्र |
| ,, | ६ | ८ | १ | मुञ्चैत्यव | मुञ्चैत्यव |
| ,, | ७ | ५ | २ | यन्तूर्णिम्वरति | यन्तूर्णिश्चरति |
| ,, | ,, | ७ | ७ | वनिवा | वनिर्वा |
| ८ | २ | ६ | ६ | किं देवता: | किन्देवताः |

---

## ॥ मूल-पाठभेदपूर्त्तिः ॥



| अ० | पा० | ख० | पं० | ( मुद्रितातिरिक्ताः पाठाः ) |
|---|---|---|---|---|
| ५ | ४ | ५ | २ | "द्वेषमोऽहति०"—इति ख-प्रभृतिषु । |
| ६ | ५ | ५ | ३ | "बलादतीतो"—इति ख-प्रभृतिषु । |
| ७ | २ | १ | ८ | "आग्नावैष्णवं हविर्न"—इति ख-प्रभृतिषु । |

---

## ॥ अथ पञ्चमोऽध्यायः ॥

तत्र.

### ॥ प्रथमः पादः ॥

ॐ इम्। सस्निं मविन्दच्चरणे नदीनाम्। संस्नातं मेघम्। वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा*। वोढृतमो† ह्वानानां स्तोमो दूतो हुवन्नरौ‡ नरा मनुष्या नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवाना मसि मर्त्त्याना मित्यपि निगमो भवति।§) वावशानो वष्टेर्वा वाश्यतेर्वा। सप्त स्वसॄररुषीर्वावशान इत्यपि निगमो भवति। वार्यं वृणोतेरथापि वरतमम्। तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्। तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारो||। यूयं स्थ युष्मभ्य मिति वान्ध इत्यन्ननामाध्यानीयं भवति। आमत्रेभिः सिञ्चता मद्य मन्धः। आसिञ्चतामत्रैर्मदनीय¶ मन्धोऽमत्रं पात्र ममा अस्मिन्नदन्त्यमा

---

* "हुवं नरा" क, ख, ग।

† "वोळ्हतमो" क, ख, ग।

‡ "हुवं नरा" क, ग। "हुवन्नरो" च।

§ बन्धनीचिह्नान्तर्गत मेतन्न दृश्यते क-ख-ग-पुस्तकेषु (ऋ० सं० ७, ५, ११, १)।

|| "गोपितारो" क, ख, ग।

¶ "मद्य" क, ख, ग।

पुनरनिर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शन मन्धन्तम इत्यभिभाषन्तेऽय मपीतरोऽन्ध एतस्मादेव। पश्यदक्षण्वान् न वि चेतदन्ध इत्यपि निगमो भवति ॥ १ ॥

"सस्निम्†"—इति*। एतदनवगतम्। अर्थाप्रतीतिरप्यनवगम्य इत्युच्यते। लक्षणाप्रसन्नस्य संस्कारः खल्वपि अविज्ञात मित्युच्यते। तत्रैवं सति, क्वचित्प्रकृत्यादेः संस्कारस्यानवगमः; क्वचिदर्थाप्रतीतिरेव; क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्नि मिति; न विज्ञायते किं सम्पृक्तं भवति? प्रकरणादत्र मेघाभिधेयम्; अन्यश्चान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "सस्निं सविन्दच्चरणे नदीनां सपा०—०जानादहीनाम्"†। विश्वावसोर्देवगन्धर्वस्यार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्त ऋत्विजो यजमानश्चेति। तासा मुपस्थानर्चा मियं सध्ये मैत्रायणीयके। 'सस्निं' "संस्नातम्", अद्भिः परिवेष्टितं, सर्वतः परिस्नुतं, धौतं वा "मेघम्", 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत? 'चरणे नदीनां' यत्र नद्यो आपश्चरन्ति, गच्छन्ति, तत्रालभत; अन्तरिक्षलोके इत्यर्थः। आह;— लब्ध्वानन्तरं किं सकरोत्?

---

* १भा० ४०२ पृ० ४अ० १ख० (२), किञ्च ४०४पृ० १५ पं०।

† "सस्निं सविन्दच्चरणे नदीनां सपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम्॥"—इति ऋ० सं० ८, ७, १७, ६।

इति । उच्यते ;— 'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः । 'दुरः' द्वारः । आह ;— कस्य ? उच्यते ;— 'अश्मव्रजानाम्' अपा मश्मा मेघः, त मधि या व्रजति, स च यासां व्रजभूतो गोष्ठ-भूतः, ता अश्मव्रजा आपः ; तासां निर्गमनद्वाराणि अपावृणोत् । या एता एवंलक्षणा आपः, 'आसाम्', अस्य च इन्द्रस्य 'गन्धर्वः' विश्वा-वसुः 'प्र वोचद्',—'अमृतानि' नामानि, छान्दसस्तुतियुक्तानि ; तानि हि नित्यत्वादमृतानि । आह ;— कस्मात्पुनरस्येन्द्रस्यामृतानि प्रावो-चदासामपाम् ? इति । उच्यते, इतः ;— यस्मादसाविन्द्रः 'दक्षं' दातारं मेघम् । अयम् आसाम 'अह्नीनाम' अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भविष्यति ;—इत्येवं 'परि जानात्' परि-ज्ञातवान्। परिज्ञाय च 'अपावृणोत् दुरोऽश्मव्रजानाम्'। तस्मादस्येन्द्र-स्यामृतानि नामानि प्रावोचदद्भिरनेन प्रकारेणेन्द्रेण सर्व मेवेदं जगद् ध्रियत इति आसा मपि अनेन हेतुना प्रावोचदिति । एव मेतस्मिन् मन्त्रे 'चरणे नदीनाम् अविन्दत्' अपावृणोच्च दुरोऽश्मव्रजानाम्, दक्षञ्च परिजानात्'—इत्येकवाक्यतार्थसम्बन्धात् "अश्नि"-शब्दो मेघ-विशेषणम् उपपद्यते ॥

अथ वा अस्य सप्तस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात् ;— संख्यातं मेघ मविन्द दलभतेन्द्रः पर्येष्यमाणः, क्वाविन्दद् ? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव इन्द्रः, तं मेघं, दक्षं दातारम्, अह्नीनाम् अपां परिजानात्। परिज्ञाय च समर्थोऽय मिति ततस्तस्य द्वाराण्य-पावृणोत् । अश्मव्रजाना मपा मधो निर्गमनाय। तत एतानि निर्ग-तानि, अमृतानि उदकानि, सत्य-मत्यन्कराणि प्रावोचदिव प्राकथय-

"दूतो[३] जवतेर्वा गत्यर्थस्य"* ; स हि गच्छति । "द्रवतेर्वा" गत्यर्थस्यैव । "वारयतेर्वा" ; स हि वारयत्यनर्थान् ॥

"वावशानः[४]"—इति अनवगतम्† । "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात् । "सप्तस्वसॄररुषीर्वावशानः —०पूषणस्य"‡ । वितस्याप्तस्येव मार्षम् । आग्नेयी । त्रिष्टुप् । प्रातरनुवाकाश्विनयोः शस्यते । 'सप्त' 'स्वसॄः' स्वसारो भगिन्य इव पार्श्वर्त्तिषः समानजन्मत्वात् । अथवा सह सर्पणात् स्वसारः ; ता हि सह सर्पन्ति 'अरुषीः' आरोचनाः, दीप्ता इत्यर्थः । या एवंलक्षणाः अर्चिषः, ताः, अग्निः 'वावशानः' कामयमानो वावश्यमानो वा, शब्दं कुर्वाणः स 'विद्वान्' आत्मीयमधिकारान् जानानः, 'मध्वः' घृतस्य हविषः पूर्णः, 'उज्जभार' ऊर्द्धं हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः । एवं ता ऊर्द्धं कृत्वा दर्शनमभिव्यञ्जयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रापनियमितवान् तद्भविः 'पुराजाः' अग्निः ; स हि सर्वदेवेभ्यः प्रथम एव जातः§, । 'इच्छन्' 'वव्रिं' रूपं 'पूषणस्य' पूष्णः, आदित्यस्य । कथं नामासावादित्यो दीप्तरूपः स्यात्? अतोऽन्तरादित्यस्य येमे । तथा-

* १भा० ४०५पृ० ८पं ।

† १भा० ४०५पृ० ९पं ।

‡ "सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् । अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य ॥"—इति ऋ० सं० ३. ५, २२, ५ ।

२ १२
§ तथा चैतरेयकम्,—"अग्निर्वै देवयोनिः"—इति १. १,२ ; किञ्च "अहमस्मि
३ २ २१२ १२ ११२ २१२ २ १२
प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।"—इति सा० आ० आर० १, ९, ९ ।

होतुः शस्त्रे विनियुक्ता। अस्याश्च च शस्त्रस्य यास्येयथा। हे 'अध्वर्यवः!' 'भरत' प्रापयतेमं 'सोमम्', एतस्माद्धविर्द्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथ वा 'भरत' धारयताग्नेरुपरि। ततश्चैनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते 'आ सिञ्चत' तस्मिन्नग्नौ। 'मद्यं' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि? इतः— यस्मात् 'कामो हि वीरः' कामयत वीरः इन्द्रः 'अस्य' सोमस्य 'मदं' मदैव, नित्यकालं सेव 'पाति' पानमित्यर्थः। तस्मात् कारणात् 'जुहोत', तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम्। किमेतं सेव केवलं सोम मेष कामयते? नेत्युच्यते;— 'तदिदेष वष्टि' तत्तत्सोमप्रदानमेष इन्द्रो वष्टि कामयत इत्यर्थः; न केवलं रात्रिपर्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं मा विलम्बध्व मित्यभिप्रायः। एव मत्र दानसम्बन्धात् "अन्धः"-शब्दोऽन्नार्थं उपपद्यते। पठितमपि चान्ननामसु* अनेकार्थत्वात् तु सन्दिह्यत इत्येष निगम उपात्तः॥

निगमप्रसक्त मुच्यते।—"अमत्रं पात्रम्; अमा अस्मिन् अदन्ति" अश्नन्तीत्यर्थः। अमा-शब्देन पुनर्यदनिर्मितपरिमाणं किञ्चिद् भवति, तदुच्यते; न हि तेषां परिमाण मस्ति, यावन्तस्तस्मिन्नदन्ति। "पात्रं पानात्" पीयते हि तेन॥

तमोऽप्यन्ध उच्यते। किं कारणम्? "नास्मिन्" "ध्यानं" दर्शनं कृतं "भवति"' चक्षुषो दृष्टि-निरोधाल्लौकिका अपि दर्शननिरोधे सति "अन्धन्तम इत्यभिभाषन्ते"। "स्त्रियः सतीस्ताँ उ मे०—•

* १ भा० १०४ पृ० (१)।

इत्यर्थः। स च परिनिष्ठितविद्यवनैव 'पुत्रः' पुरुणो बहुनोऽमज्जातः। यस्याय सेवङ्गुणयुक्तः, स 'ईम्' आ चिकेत'।'ईम्'—इति पदपूरणः। 'आ चिकेत' स एवैतानेवम् आभिमुख्येन यथावत् पश्यति ; नेतरो मूढः। यश्चैतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः; स हि आधिदैविकम् आत्मानम् अभि सम्पन्नो भवति ; न हि तस्य पिता नाम कश्चित् ; स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः। एव मेतस्मिन् मन्त्रे य एवाक्षण्वान् भवति। स एव पश्यतीत्यस्य सन्निधौ 'न विजानात्यन्धः'-शब्दप्रयोगात् अदर्शनलक्षणं तमः 'अन्धः'-शब्देनोच्यत इत्युपपद्यते॥ १ ॥

असश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वाव्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्यु मति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञ मभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् तरुष्यतिरप्येवङ्कर्म्मा। इन्द्रेण युजा तरुषेम वृत्र मित्यपि निगमो भवति। भन्दना भन्दते स्तुतिकर्म्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदियर्त्ति

प्रजावतीरिति च। अन्येन मदाहनो याहि तूयम्। अन्येन मदाहनो गच्छ क्षिप्रमाहनमीव भाषमाणेत्यसभ्यभाषणादाहना इव भवन्त्येतस्मादाहनः स्या*दृषिर्नदो भवति नदते स्तुतिकर्म्मणः। नदस्य मा रुधतः काम आ गन्। नदनस्य मा रुधतः काम आगमत् संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते॥ २॥

“असश्चन्ती”—इति अनागतम्। “असज्यमाने इति वा”—इत्यर्थनिर्वचनम्: “अव्युदस्यन्त्याविति इति वा”—इति। “असंश्चन्ती भूरि०——०यन्मनुर्हितम्”‡ भरद्वाजस्यार्षम्। अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीयं निविद्धानीयं सूक्तं शस्यते। ‘असश्चन्ती’ असज्यमाने असंश्लिष्यमाणे परस्परतः, एते द्यावापृथिव्यौ। ‘भूरिधारे’ बहूदकप्रस्रवणस्वभावे एव; अथवा बहु भूतं धारयित्र्यौ। ‘पयस्वती’ उदकवत्यौ। ‘घृतम्’ उदकम्, ते अपि ते ‘दुहाते’ प्रपूरयतः; इतरेतरसम्भोगेन। ‘सुकृते’ शोभनकृते; अथवा शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ। ‘शुचिव्रते’ शुक्लकर्मणौ इत्यर्थः। ‘राजन्तौ’ दीप्यमाने स्वैः स्वैः तेजोभिः। ‘अस्य’ ‘भुवनस्य’ भूतजातस्य ‘रोदसी’ रोधसी,

* “०तस्मादाहन स्यात्”—इति ख, ग।

† १ भा० ४०४ पृ० ८ पं०।

‡ “असंश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते। राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम्॥” इति ऋ० सं० ५, १, १४, १।

रोधयित्र्यौ। ये एते एवंलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्मभ्यं 'रेतः' उदकं 'सिञ्चन्तम्' अभिमते काले। किंलक्षणं पुनः सिञ्चन्तम्? 'यत्' 'मनुर्हितम्' मनुष्यहितम्, अक्षारं, सस्य-सम्पत्कर मित्यभिप्रायः। एव मेतस्मिन् मन्त्रे 'भूरिधारे'-इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्तौ"—इति द्यावापृथिवीविशेषण मुपपद्यते। "असज्यमाने इति" न हि ते सज्येते परस्परतः "अव्युदसन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्यस्यन्त्यौ वा; न हि ते उपक्षीयेते विपर्यस्येते वेति॥

"वनुष्यति*"—इति "हन्तिकर्म्मा" हन्त्यर्थे वर्तमानः, "अनवगतसंस्कारो भवति"। "यदिन्द्राग्नी जना इमे०——०मन्युके समे"†। नाभाकस्यार्षम्। महाव्रते महदुक्थे शस्यते। अस्याः पुनरष्टाक्षराः षट् पादाः। छन्दसां पुनरनुक्रमण्यां शौनकेनाग्नि मस्तोषीत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि, तेषा मपीयं मध्ये हे 'इन्द्राग्नी!' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च उभयेऽपि 'वि ह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया। 'तना' सन्ततया 'गिरा' वाचा; अथ वा 'तना' धनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते। तदा युवाम् 'अस्माभिः' अस्मदीयैः 'नृभिः' मनुष्यैः संहितौ भूयास्तन्ते

* १भा० ४०९ पृ० १२ पं०।

† "यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा। अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तां मन्युके समे॥"—इति ऋ० सं० ६, २, २५, १।

व्याख्यानप्रक्रमुच्यते ;–"पापः पाताऽपेयानाम्" अपेयान्य-नेऽशुचीनि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः । "पापत्य-मानः" पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा । "अवाङेव" नरक मेव प्रति "पतति" असौ, तस्माद् "वा" पापः ॥

"तरुष्यतिः(९), अप्येवङ्कर्मा" हन्तिकर्मेत्यर्थः* । "ऋभुक्षुभिः ०——० तरुषेम वृत्रम्"† । वसिष्ठस्येय मार्षम् । त्रिष्टुप् । अविवाक्ये तृतीयसवने, वैश्वदेवे शस्त्रे, आर्भवे सूक्ते, निविद्धानीये शस्यते । ऋभवः उरुभासो वयम्, उरुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि वः स्याम' अभिभवेम युष्मान् वयम् । हे 'विभ्वः' 'विभुभिः' प्रभूत-वर्णैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषा मभिभवितॄणां 'शवांसि' बलान्यभिभवेम । किञ्च ; 'वाजः' 'अस्मान्' 'अवन्तु' । कस्मिन् ? 'वाजसातौ' सङ्ग्रामे ; 'इन्द्रेण' च 'युजा' संयुक्ताः सन्तो वयं 'तरुषेम' हन्याम 'वृत्रं' शत्रु मित्यर्थः । अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ-त्वुपपद्यते ॥

"भन्दना(१०)‡, भन्दतेः स्तुतिकर्मणः" स्तुत्यर्थे वर्त्तमानस्य । "पिता यज्ञाना०——०धामभिः कविः"§ । विश्वामित्रस्येय मार्षम् ।

* १भा० ४०९पृ० १४ पं० ।

† ऋभुक्षुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि । वाजो अस्माँ अवतु वाजसाता विन्द्रेण युजा तरुषेम वृत्रम् ॥"—इति ऋ० सं० ५,४,१५,१ ।

‡ १भा० ४०९ पृ० १८पं० ।

§ "पिता यज्ञाना मसुरो विपश्चितां विमान मग्निर्वयुनं च वाघताम् । आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥"—इति ऋ० सं० १, ८, १०, ४ ।

कर्म-रूप-सम्बन्धात् स्तौताम्; नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति च्युक्तम्। 'सुशराः' सुस्मृताः, सुपूर्णाः; स्थानकरणानुप्रदानवत्या युक्तद्गुणैरलङ्कृताः। 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्यायाभिप्रायेण नित्यकाल मेवेत्यभिप्रायः। कं पुनरर्थ मुपेत्य स्तौतोदीरयति? 'ब्रह्म प्रजावत्' अन्नं प्रजासंयुक्तम् भोक्तृसहितम्। अपि च 'रयिम्' धनं गो-हिरण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पोतः' त्व मस्माभिरस्मिन् कर्मणि। हे 'इन्दो' सोम! इद मस्मदर्थं 'याचतात्' याचस्वेत्यर्थः। एत मर्थ मभिप्रेत्य स्तौतीदीरयति। मन्दना उदियर्त्तीत्युदाहरणसम्बन्धात् स्तुतय एताः 'मन्दना'-शब्देनोच्यन्त इत्युपपद्यते। पूर्व माख्यातपदसम्बद्ध मुदाहरणं "पुरुप्रियो मन्दते धामभिः"—इति(१०पृ०२१पं०). इदन्तु नामरूप-सम्बद्धं "स मन्दना उदियर्त्ति प्रजावतीः"—इति (१४पृ० २१पं०) च। उभयथा प्रयोगोऽस्तीत्युभय मुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च॥

"आहनः ११"—इति *। एतत् पदं सम्बोधन मनवगतम्, अप्रतीयमानार्थत्वात्। "आ हंसि"—इत्यर्थप्रतीतिः। "न तिष्ठन्ति न निमिषन्त्येते०—०रथ्येव चक्रा" †। यमस्य यम्याश्च संवादसूक्तम्; तत्र यमस्येय मार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति:— हे यमि! मामंस्था साम्प्रतं रहो वर्त्तत इति, किन्तु 'न तिष्ठन्ति' मुहूर्त्त

* १ भा० ४०१ पृ० ३ पं०।

† "न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति। अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा॥"—इति ऋ० सं० ७.६.७, ३।

"नदः"† —इति * एतदनवगतम्। "ऋषिः नदो भवति" —इति शब्दस्य पर्यायेण तन्निर्वचनम्। "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः। नदना वा नदनोत्विन्यर्थप्रतीतिः। "नदस्य मा रुधतः ० —० धर्या। अमन्ताम्"†। अगस्त्यलोपामुद्रा-ब्रह्मचारिसूक्त-संवादे लोपामुद्राया इयं मार्षम्। सा अब्रवीदगस्त्यं भर्त्तारमभि-प्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संरुन्धतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रतं पीड्ये। स पुनरेवं न जाने। किम् 'इतः' एव 'आ जातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीडनाय;— अथ वा 'अमुतः' अगस्त्यशरीरात्? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात्। अत एव "स्मरः" इति काम उच्यते। तस्मादुपपद्यते इतो वास्मच्छरीरात्;— अमुतो वा नद-शरीरात्, कुतः? इति न जाने इति। अथ वा अन्यत एव 'कुतश्चिद्' अयमागतः स्यात्? इत्येतदपि तत्त्वतो न जाने। इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसा वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति: यदि न ममामावुपरि प्रजननं निरोत्स्यात्, ततो नायं कामो मागमिष्यत, इत्येवं दोषेण गच्छति। "रिणाति"—इति गतिकर्मसु पठितम्‡। अथ वा चेतसा 'नीरिणाति' उपगच्छ-

* १भा० ४०१ पृ० ६ पं०।

† "नदस्य मा रुधतः काम आगन्निह आजातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम्॥" —इति ऋ० सं० १,४ ११,४।

‡ १ भा० १९७ पृ० १४पं० ,५८ ।

तीत्यर्थः ; दृष्टपुरुषानुचिन्तना हि कामार्त्तायाः स्त्रियाः स्वभाव एव । तस्मादेव सम्पुपद्यते । 'धीरं' स्थिरबुद्धिं ब्रह्मचर्ये 'अधीरा' सङ्क्षुब्धसर्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति । 'श्वसन्तं' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्ये कृतबुद्धिं तथापि धयत्येव । "श्वसिति, नदति"—इत्येवं गतिकर्मसु पठितम् * । एवं लोपामुद्रावाक्य "नदस्य रुधतो मा मागमत् कामः"—इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते । "संरुद्ध-प्रजननस्य ब्रह्मचारिणः इत्युपिपुत्रा विलपितं वेदयन्ते"—इति निदानप्रख्यापनम् ॥ ७ ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः । अक्षातेरित्येके । अनूपे गोमान् गोभि-रक्षाः सोमो दुग्धाभिरक्षाः । त्साः पाशः सिंह प्रत्यञ्च मत्साः । क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके ऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः श्वात्र मिति क्षिप्रनामाशु अतनं भवति । स पतत्रीत्वरं स्था जगद्य-च्छ्वात्र† मग्निरकृणोज्जातवेदाः‡ । स पतत्रि चेत्वरं स्थावरं जगमञ्च यत्तत् क्षिप्र मग्निरकरोज्जातवेदाः ।

* १ भा० ९८० पृ० १४ख० (४); मदीयभूमौ च द्रष्टव्या ।

† "जगद्यदिच्छात" ख, ग ।

‡ "मग्निरकृणोज्जातवेदा" ख, ग ।

ऊतिरवनात्। आ त्वा रथं यथोतय इत्यपि निगमो भवति। हासमाने इत्युपरिष्टाद्व्याख्यास्यामः।* वम्रकः पड्भिरुप सर्पदिन्द्रम्। पानैरिति वा स्पाशनैरिति वा (स्पर्शनैरिति वा†)। ससं न पक्क मविदच्छुचन्तम्। स्वपन मेतन्माध्यमिकं। ज्योतिरनित्यदर्शनं तद्दिवावि-दज्ज्वाल्यमानम्। द्विता च सत्ता स्वधया च शम्भुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च। शम्भुः सुखभूः। मृगं न व्रा मृगयन्ते। मृग मिव व्रात्याः प्रैषाः ॥ ३ ॥

"सोमो अक्षा:"—इत्येते द्वे पदे। अत्र अक्षा इत्येतत् पदं अननुगतम्, पक्षेण चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः। कथं नाम "न यस्य द्यावापृथिवी"—इत्येतदेवोदाहरण मत्र उपलक्षितं स्यात्? अत्र हि अक्षा इत्येष शब्दः, सोमशब्देन सम्बद्धः; यथा भूतशब्देन, मेषशब्दः—"मेषो भूतो-ऽभियन्नयः"—इत्यत्र§, यथा वा "अग्निर्नेये"—इत्यत्राग्निशब्दः||। अथ वाप्नोति-पक्षे अक्षा इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादय मनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाते प्राप्ते सति॥

* क-ख ग-पुस्तकेष्विहैव तृतीयखण्ड समाप्तः।

† सम्बन्धचिह्नान्तर्गत मेतन्न दृश्यते क-ख ग पुस्तकेषु

‡ "स्वप्न मेतन्माध्यमम"—इति क, ख ग।

§ १ भा० ९९० पृ० १२ख० (८)।

|| १ भा० ९९० पृ० १२ख० (२)।

संवरणान्युदकानि; उदकानि हि देशान्तरात् संवृण्वन्ति, तानि यथा सर्वेभ्यो देशेभ्यः संसृत्य समुद्र माभिमुख्येन 'अग्मन्' गच्छन्ति, एव दुग्धाभ्यः सोमः सर्वेभ्यो गात्रेभ्यः संसृत्य उधः प्रति चरति मदायेन्द्रस्य। अथ यदैवं प्रचरति, तेन सोमेनामात्राम्यायां मात्राप्येन तृप्त इन्द्रो 'मन्दी' हर्षशीलः, यजमानस्य शत्रून् 'तोषते' हिनस्तीत्यर्थः। "नितोषयति, निबर्हयति"—इति हन्तिकर्मसु पठितम *। एव मेतस्मिन् मन्त्रे "चियति-निगमः पूर्वः"—"अनूपे गोमान् गोभिरक्षाः"—इत्यपः (०० पृ० २० पं०) "चरति-निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र (२० पृ० २० पं०)। एवम् "एके" मन्त्रार्थविदो मन्यन्ते। तच्च तथैवोपव्याख्यातम्। "सर्वे" एवैते त्रयोऽपि "चियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते। न यस्य द्यावापृथिव्यो निवासः, न धन्व, न अन्तरिक्षं निवासः; किं तर्हि? सोम एव इन्द्रस्य निवासः। तस्य सोमस्य किम्? इति उच्यते,— यदस्य मन्युरधि शत्रूणां नीयमानः, तृणानि वोल्नु रुजति स्थिराणि। समान मन्यत् पूर्वेणार्थेन। "अनूपे गोमान् गोभि रक्षाः"—इत्यत्र निवासार्थेनैव पूर्वस्मिन्नेवार्थे। अथ सोमो दुग्धास्वपि गोषूधः निवसति, न निर्दुग्धाः कर्त्तुं शक्यन्ते इत्यभिप्रायः। एव मेते सर्वे त्रयोऽपि "चियति-निगमाः"—इति "शाकपूणिः" आचार्यो मन्यते॥

"आत्रम्[१४]" इति एतदनवगतम्। "आपु अनतं

* १ भा० ९८१ पृ० १९ख० (१९), ६० । तद्धौम्यनौ च द्रष्टव्या।
† १भा० ४०७ पृ० १९पं।

च। कथं पुनः वर्त्तयामहे? इति उच्यते,—'रथं यथा' शक्तो हि कश्चित् यथा रथ मावर्त्तयेत्, एव मावर्त्तयामहे वयं त्वां स्तुतिभिः। किंलक्षणं पुनर्भवन्त मावर्त्तयामहे? उच्यते;—'तुविकूर्मिम्' बहूना मनेकप्रकाराणां कर्मणां कर्त्तारम्। 'ऋतीषहम्' च, आर्त्ताना मभिभवितारम्। हे 'इन्द्र!' 'शविष्ठ' बलिष्ठ! 'सत्पते' सतां पते!। एव मावर्त्तनेनैकवाक्याभिसम्बन्धेन "ऊति"-शब्दो रक्षणार्थ इत्युपपद्यते॥

"हासमाने[१६]"—इति *। "उपरिष्टाद् व्याख्यास्यामः"; "प्र पर्वताना मुशती उपस्थात"—इत्यत्र †॥

"पड्भिः[१७]"—इति ‡ अनवगतम्। "पानैरिति वा स्पशनैरिति वा"—इति शब्दसमाधो। "एवा महो असुर०—० विश्व माभाः" §। वस्रो नाम वैखानसः, तस्येय मार्षम्। ऐन्द्री। य एष एतस्मिन् सूक्ते स्तुतिप्रकारोऽधिकृतः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान! हे इन्द्र! 'असुर' असुमन्' प्रज्ञानवन्! बलवन्! वा 'वक्षथाय' स्तुतिवक्त्रे, महते यजमानाय, पूर्वकल्पान्तरीणाय; पूर्वकल्पान्तरीण एव 'वम्रकः', 'पड्भिः' सोमपानैरभ्युदितैः, अथ वा गुणस्पाशनैः स्तुतिगतैः, 'उपसर्पत्' उपसृप्तवान्, अन्यकल्पान्तरीणम् 'इन्द्रम्'। 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्रियमाणः 'करति' कृतवान्। किम्? 'स्वस्तिम्' स्वस्त्ययनम्। 'अस्मै' यज-

* १ भा० ४०८ पृ० ५ पं०।

† प० दै० का० ९, ४, ५।

‡ १ भा० ४०८ पृ० ८ पं०।

§ "एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम्। स इयानः करति स्वस्तिमस्मा इष मूर्जं सुक्षितिं विश्व माभाः॥"—ऋ० सं० ८, ५, १५. ९।

स निर्झरप्रदेशे 'विविक्षांसं' पुनःपुनरास्वादयमानम्, ओषधीः 'विषः' अस्या एव भूमेः 'उपस्थे' उपस्थाने; निर्झरे हि भूमेः प्रदेशे अपि उपतिष्ठन्त इति निर्झर एवोपस्थो भूमेः। तस्या एव 'अन्तः' मध्य इत्यर्थः। अस्मिन्नेवंलक्षणे प्रदेशे, तं सन्तम् 'अविदत्' कश्चित् ऋषिः अन्यो वा। ओषधीरास्वादयन्तं कथं पुनरविदत्? इति उच्यते,— 'ससं न पक्वम्' अविदत्, यथैव स्वपनशीलं "माध्यमिकं ज्योतिः" वैद्युताख्यं पक्वमभिव्यक्तम्; वर्षासु उपर्यन्तरस्थानादयन्नेव दृश्यते, एवं निर्झरान् प्रविष्टमपि सन्तमग्निमतिमहत्त्वादविशेषोऽविदद्-वापश्यत्*। 'शुचन्तं' दीप्यमानमित्यर्थः। निर्झरेऽन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्झरस्थोऽपि स्वया दीप्त्या विज्ञायत एवे-त्यभिप्रायः। य एवङ्गुणयुक्तोऽग्निः स इदं नाम करोतु—इत्येव माशीर्ज्ञेया†। न ह्यष्टौ मासान् माध्यमिकं ज्योतिर्दृश्यते, ततः "अनित्यदर्शनम्", तस्मादनित्यदर्शनात् "स्वपनम्"—इत्युच्यते; पक्वं नामाभिव्यक्तमित्युच्यते॥ एवमिह शब्दमाहात्म्यात् अर्थाप-पत्तेश्च "ससम्"—इत्यनेन शब्देन स्वपनमुच्यत इत्युपपद्यते‡॥

"द्विता (१८)"—इति। अनवगतम्। "द्वैधम्"—इत्यवगमः। "यस्त्वद्धोता पूर्वो अग्ने० ०देववीतौ"§। कतस्य वैश्वामि-त्रस्येयमार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भग-

* "ससं न पक्वम्, पक्वमन्नमिव" इति भा० भा०।

† सायणव्याख्यया विरोधाच्च द्रष्टव्यम् यास्काभिप्रायोऽप्यत्रास्फुटः।

‡ १ भा० ४०८ पृ० १७ पं०।

§ "यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता स्वधया च शम्भुः। तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ।"—इति ऋ० सं० ३. १,

वन्! 'अग्ने!' पृथिवीस्थान!* 'त्वत्' त्वत्तः, 'यः' 'पूर्वः' होता मध्यमस्थानो वायुः†; असावपि हि दूतो देवाना मिति श्रूयते,— "आ दूतो अग्नि मभरद् विवस्वतः"—इति‡। वैद्युतोऽग्निरिति केचिन्मन्यन्ते। 'यजीयान्' यष्टृतरः। 'द्विता च सत्ता' द्वैधं यस्य विद्यमानता :—"मध्यमे च स्थाने" वैद्युतभावेन, "उत्तमे च" स्थाने सूर्यभावेन। 'स्वधया च' अन्नेन, सर्वभूतानां वर्षाद्वारेण। यः 'शम्भुः' "सुखभूः" सुखस्य भावयिता। तस्य किम्? इति उच्यते,—'तस्य अनुधर्म' वायोर्भक्तिलाभ मन्वात्मनो दीप्तिलक्षणां वृत्ति मतिलाभ माप्नुवन्; "वायुर्वा अग्नेस्तेजः, तस्माद् वायुरग्नि मन्वेति"—इति च विज्ञायते। हे अग्ने! 'प्रयज' प्रकर्षेण यज, देवान्। हे 'चिकित्वः' चिकित्वन्! ज्ञानवन्नित्यर्थः। 'अद्य' एवम्, 'नः' अस्माकं यागं कुर्वन्, तं ब्रूहि, यं कुरुष्व। 'धाः अध्वरं' धारय यज्ञम्। 'देववीतौ' देवतर्पणायेत्यर्थः॥ एव मत्र शब्दसाकल्यादर्थोपपत्तेश्च "द्विता"—इत्ययं द्वैध मित्येव मुपपद्यते॥

"आः [१०]"—इति§ अनवगतम्। "आश्याः"—इत्यवगमः। "गोभिर्यदीं मन्ये० - ०धेनुभिः"॥। काण्वस्य मेधातिथिः, प्रियमेधाङ्गिरसः इन्द्रं स्तुतं ददृशतुः। तत्रैषाभिप्लवस्य षडहस्य

* "अग्निः पृथिवीस्थानः"—इति प० ८० का० ७, ०, १।

† "वायुर्वेन्द्रो वान्तरिक्षस्थानः"—इति प० ८० का० ७, ९, १।

‡ ऋ० सं० ४, ५, १०, किञ्च, 'यदतो अभवद् विवस्वतः (ऋ० सं० १, ४, १९, १)"— इत्याद्या अपि द्रष्टव्याः।

§ १मा० ४० ६१० ३पं०।

॥ "गोभिर्यदीं मन्ये अस्मन्मृगं न व्रा मृगयन्ते अभिक्षरन्ति धेनुभिः॥"—इति इति ऋ० सं० ५, ७, १८, १।

द्वितीयेऽहनि मरुत्वतीये शस्त्रे अनुचरतृचे शस्यते। हे भगवन्निन्द्र! 'यद् ईम्' यद्यपि त्वाम् 'अन्ये' यजमानाः 'गोभिः' वाग्भिः, स्तुतिलक्षणाभिः 'धेनुभिः' च तर्पयित्रीभिराहुतिभिः 'अभि स्वरन्ति' अभिगच्छन्ति, अभिव्याप्नुवन्ति, तथाप्यस्मानेव प्रत्यभ्येहि। किं कारणम्? इतः,— यस्मादेतेऽस्माभिरतिरिक्तया भक्त्याऽन्येभ्यो यजमानेभ्यः सकाशात् 'व्राः' "व्रात्याः", "प्रैषाः" युष्मत्संस्तवसंयुक्ताः प्रतिप्रहिताः 'मृगं न' "मृग मिव" इतरे लुब्धकाः व्रात्याः 'मृगयन्ते' मार्गयन्ते त्वाम; तस्माद् भक्त्यतिरेकात् विषहेतोरस्मानेव प्रत्यभ्येहि॥ एव मेतस्मिन्मन्त्रे मृगसम्बन्धाद् "व्राः" – इति शब्देन लुब्धका उच्यन्ते इत्युपपत्तिः॥३॥

वराहो मेघो भवति वराहारो वर माहार माहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरो अद्रि मस्तेत्यपि निगमो भवत्यय मपीतरो वराह एतस्मादेव वृहति* मूलानि वरंवरं मूलं वृहतीति† वा। वराह मिन्द्र एमुष मित्यपि निगमो भवत्यङ्गिरसोऽपि वराहा उच्यन्ते। ब्रह्मणस्पतिर्वृषभिर्वराहैः। अथाप्येते माध्यमका‡ देवगणा वराहव उच्यन्ते। पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्॥४§॥

* "बृहति" क, ग।

† "बृहतीति" क, ख, ग।

‡ "माध्यमिका" ङ, च, परं इतिपाठविरुद्धः।

§ ङ-च-पुस्तकयोर्नास्य सङ्ख्याऽङ्केरः, षष्ठसङ्ख्य-वाक्यविरुद्धश्चैव:

"वराहः [२]"—इति *, अनवगत मनेकार्थस्य। "मेघः" तावद् वराह उच्यते; स हि "वराहारो भवति" तस्य वर मुदक माहारः। "वर माहार माहार्षीरिति च ब्राह्मणम्"; निर्वचनस्य दृढप्रतीत्यर्थं ब्राह्मण माचार्येण प्रदर्शितम्। यथा मेघो वराहशब्देनोच्यते, तथैव निगमः;— "अस्येदु मातुः सवनेषु० ......० अद्रि मस्ता" †। नोधा नाम गोतमपुत्रस्येय मार्षम्। ऐन्द्री। त्रिष्टुप्। अभिजिद्विश्वजिन्-महाव्रतादिषु आहीनिकेषु अहःसु अहीनसूक्ते माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'अस्य इत् उ मातुः' अस्य जगन्निर्मातुः यज्ञस्य 'सवनेषु' प्रातःसवन-माध्यन्दिन-तृतीयसवनेषु, 'महः' महतः यज्ञस्य, 'पितुं' महान्नं सोमभागं 'पपिवान्' पीतवान्। पीत्वा 'चार्वन्ना' चारूणि च शोभनान्यन्नानि, अन्यान्यपि हवींषि भक्षयित्वा, तैर्हविर्भिः, तेन च सोमेन विवृद्धबलः, सद्यः एव 'पचतम्'; परिपक्व मुदकदान समर्थं मेघं हि 'विष्णुः' इन्द्रः, सर्वभूतानां वेष्टा प्राणभावेन 'मुषायत्' अमुष्णादित्यर्थः। 'सहीयान्' अभिभवितृतमः। कथम्पुनरमुष्णात्? इति उच्यते,—"विध्यद्वराहं तिरो अद्रि मस्ता"। 'वराहम्' मेघं 'विध्यत्'। कथम्पुनः विध्यद्वराहम? इति उच्यते, 'तिरः अद्रिम् अस्ता' दूर एवावस्थितस्य 'अद्रिं' वज्रम 'अस्ता' क्षेप्तेत्यर्थः॥ एव मेतस्मिन् मुषायच्छब्दसम्बन्धाद् "वराहः मेघः"—इत्युपपत्तिः॥

"अय मपीतरो वराह एतस्मादेव" असौ अपि हि वरं मूलाख्य माहार माहरत्येव। "वरं वरं मूलं वृहति"—उद्यच्छतीत्यर्थः॥

* १भा० ४०९ पृ० ७पं०।

†"अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना। मुषायद्विष्णुः पचतं सहीयान् विध्यद्वराहं तिरो अद्रि मस्ता॥"—इति ऋ० मं० १, ४, १८, १।

यथा अय मपीतरो वराह-शब्दः छन्दसि वराह इत्युच्यते, तथैष निगमः ;—"विश्वेत्ता विष्णुरा०——०एमुषम्"* । काण्वस्य पुरुमतेरार्षम् । ऐन्द्री । 'विश्वा इत् ता' विश्वानि एव तानि 'विष्णुः आभरत्' । 'उरुक्रमः' बहुविक्रान्तः, 'त्वेषितः' सन्दीपितः इन्द्रः वाक्येन । यदि 'त्वा', 'इषितः'—इति पदविभागः†; तथापि तु 'त्वेषितः'—इत्येकं पदं कृत्वैव निरुक्तम्, परोक्षकृतत्वान्मन्त्रस्य ; नान्यथार्थ उपपद्यते । कानि पुनस्तानि वसूनि आहरत्? इति उच्यते ;—'शतं महिषान्' बहून् महतो यज्ञान् आहरत् । किंलक्षणान्? इति उच्यते ;—'क्षीरपाकम् ओदनम्' प्रायणीयाख्य मादितः कृत्वा ये क्रियन्ते तान्, सोमक्रतूनित्यभिप्रायः । कुतः पुनराहरत्? इति उच्यते ;—'वराहम्' असुरम्, वराहरूपेणावस्थितम् । सर्व्वेषा मसुराणां मध्ये 'एमुषम्' मोहस्थानीयम् ॥ "माययाय मिन्द्रो जघान, तस्य मध्यादाहरत्; यदयं वराह मिन्द्र एमुष मेकविंशत्याः पुरां पार इत्युच्यते"—इत्येवं ब्राह्मणं मैत्रायणीयके ; तदनुवादिनी चैषा ऋक्‡ । तस्मादत्र वराह एवोच्यत इत्युपपद्यते ॥

* "विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः । शतं महिषान् क्षीरपाक मोदनं वराह मिन्द्र एमुषम् ॥"—इति ऋ० सं० १, ५, २०, ४ ।

† "त्वा । इषितः ।"—इत्येवं पदकाराः पठन्ति ।

‡ "अस्या ऋचो निरुक्तैतिहासिकमतभेदेन द्विधा योजना । नैरुक्तपक्षे तावत् ;— * * * । ऐतिहासिकपक्षे चरकब्राह्मणे इतिहास आम्नायते ।"—इति सा० भा० (ऋ० सं० १, ५, २०, ५) । "आपो वा इद मग्रे सलिल मासीत्, तस्मिन् प्रजापतिर्वायुर्भूत्वाचरत्, स इमा मपश्यत्, तां वराहो भूत्वाहरत्"—इति तै० सं० ७, १, ५ । "स वराहो रूपं कृत्वोपन्यमज्जत्"—इत्यादि तै० ब्रा० १, १, ३ । "उद्धृतासि वराहेण कृष्णेन शतबाहुना"—इत्यादि तै० आ० १०, १, ८ । "ता मेमुष इति वराह उज्जघान"—इति श० ब्रा० १४, १, २, ११ । इत्याद्यैतिहासिकानाम् ।

"अङ्गिरसोऽपि वराहा उच्यन्ते"। "स ईं सत्येभिः •——• व्यानट्" * । आयास्याङ्गिरसस्येय मार्षम् । ब्राह्मणस्पत्यस्य काश्यपस्यै षड़र्चे विनियुक्ता मैत्रायणीयके । 'सः' 'ब्रह्मणस्पतिः', 'सत्येभिः' सत्यवादिभिः, 'सखिभिः' समानख्यानैः, 'शुचद्भिः' दीप्तिमद्भिः, 'वि धनैः' विविधधनवद्भिः, 'वृषभिः' वर्षद्भिः वर्षितृभिः, 'वराहैः', 'घर्म्मस्वेदिभिः' घर्म्मनापयितृभिः, प्रवर्ग्यकर्म्मणि ; अथ वा यज्ञस्वेदिभिः, यज्ञस्वादयितृभिः, यज्ञमद्भिर्वा । एवङ्गुणविशिष्टैरङ्गिरोभिः सहितो ब्रह्मणस्पतिः 'गोधायसं' गाः वाचः धाययितारम्, अपां वा ; मेघम् । 'अदर्दः' अदारयदिति । विपरिणामपरीक्षकत्वान्मन्त्रस्य । दारयित्वा च 'द्रविणम्' उदकं 'व्यानट्' व्याप्नातीत्यर्थः। एतस्या मृचि अङ्गिरसां विशेषलिङ्गं नास्ति वराहशब्दवाच्यत्वं, सूक्ते तु एतस्मिन्नङ्गिरसो लिङ्ग मस्तीत्यर्थः† ।—

"ऋतं शंसन्त०—०मनन्त"‡। 'ऋतं शंसन्तः' ऋतं सत्यं वा प्रशंसन्तः, अपि च 'ऋजु' अकुटिलम् अतिक्रान्त मेव 'दीध्यानाः' ध्यायमानाः, सर्व्वभूताना मुपरि ममचनम इत्यभिप्रायः। 'दिवस्पुत्रासः' द्योतनवतः, 'असुरस्य' प्रज्ञावतः पुत्राः, 'वीराः' विविधाना

* "स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः। ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट्॥"—इति ऋ० सं० ८, १, १९, १।

† ऋ० सं० १० ५, १७ सू० द्रष्टव्यम्।

‡ तत्रैव सूक्ते इयं द्वितीया, अत इमां दर्शयति; अत्र तु 'अङ्गिरसः'—इति पदस्य समुक्तत्र एव दर्शनीयः। ऋकपाठस्तथः,—"ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः। विप्रं पद मङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त॥"—इति (ऋ० सं० ८, १, २५सू०, १ = १०.५, १७व०, १)।

मर्थानां वक्तारः, ईरयितारो वा मेधावित्वात्। 'विप्रं पदं' वि प्राप्तं सर्वतः प्राप्तं 'अङ्गिरसो दधानाः'। यत्पदं स्थानं ज्ञानसहितस्य कर्म्मणः फलपराकाष्ठा, ता मङ्गिरसो दधाना धारयन्तः चेतसा; विद्वत्प्रज्ञत्वात्। "यज्ञस्य धाम प्रथमं मनन्त" 'यज्ञस्य' यत् 'प्रथमं' मुख्यं परमात्माख्य मनावृत्तिलक्षणं 'धाम' स्थानं तत्त्वेन 'मनन्त' जानत इत्यर्थः॥ एतदेवैतस्या मृचि अङ्गिरोलिङ्गं दृष्ट्वा एष निगमो भाष्यकारेणोदाहृतः;—"अङ्गिरसोऽपि वराहा उच्यन्ते"—इति॥

"अथापि एते माध्यमका देवगणा वराहव उच्यन्ते"; "मरुतः, रुद्राः"—इत्येवमादयः*। अङ्गिरसो ह्यपिमसाख्या मपि लभन्ते, तस्मान्माध्यमकत्वेऽपि सति पृथगुद्धृत्योक्ताः। ये तावन्मरुतो वराहशब्देनोच्यन्ते, तथैव निगमः;—एतत्त्यन्० ——० वराहून्†। राहूगणस्य गोतमस्यैव मार्षम्। "आविद्युन्मद्भिर्मरुतः"–इतीयञ्चैतस्मिन्नेव सूक्ते‡। हे 'मरुतः!' 'एतद्' 'त्यद्' बलं योऽस्माकीणं 'न योजन मचेति' न योग मागच्छति, विजितारित्वात् भवतां न युज्येत इत्यर्थः। तस्य बलस्य किम्? इति उच्यते;—'सस्वर्ह यन् मरुतो वः'। अन्तर्हितं यत् सर्वेषां मनुष्याणाम्। यस्य च मध्ये युष्मान् 'वराहून्' परेषां शत्रूणां उद्वर्हन्, उद्वर्हणान्, 'हिरण्यचक्रान्' सुवर्णविकृतचक्रान्, 'अयोदंष्ट्रान्' अयोमयान् रथानधिरूढ़ान् 'विधावतः' नानाप्रकारं

* १भा० ४८३पृ० ५अ० ५ख० (८, (९)।

† "एतत्त्यन्न योजन मचेति सस्वर्ह यन्मरुतो गतमो वः। पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्॥"—इति ऋ० सं० १, ६, १४, ५।

‡ ऋ० सं० १, १४, ४ सू०=१ ६, १४ व०।

धावनः, 'पश्यन्' स्तौति, 'गौतमः'*। ततः तत्र योजन भवति। प्रव-
तिर्गत्यर्थः; अन्तर्गत्यर्थस्य माकल्यात्। एव मन प्रकरणं तु कृता।
वराहव उच्यन्ते इत्युपपत्तिः। मरुतादयो हि सर्व एव माध्यमिका
देवगणा वराहव उच्यन्ते। तेषां माध्यान्तरेषु स्पष्टा निगमाः।
निगमानुपलब्धौ च "माध्यमिका देवगणा वराहव उच्यन्ते" एतद्
बहुवचनं मरुत्स्वेव योज्यम्; तेषां सप्तसप्तका गणा ब्राह्मणे हि श्रूयन्ते;
—"ते सप्तसप्त मरुतां गणाः"—इति, तस्मादेव मप्युपपद्यते।

एवं बहुवचनं भाष्यकारस्य एकदेवताविषयेऽपि कदाचिद् वराह-
शब्दो भवत्येव, तदप्युपपत्तिलभ्यम्। तद्यथा,—"दिवो वराह मरुषं
कपर्दिनम्"—इति रुद्र उक्तः ‡ ॥

स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा स्वरा
दित्या भवति स एतानि सारयति। उस्रा इव
स्वसराणीत्यपि निगमो भवति। शर्या अङ्गुलयो भवन्ति
(सृजन्ति कर्माणि) शर्या इषवः शरमय्यः शरः
शृणातेः शर्याभिर्न भरमाणो गभस्त्योरित्यपि निगमो
भवत्यर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति

* "अथातो मध्यस्थाना देवगणाः तेषां मरुतः प्रथमगामिनो भवन्ति"—इत्यादयो
द्रष्टव्याः। प० दे० का० ५. ३, १।

† मूलपाठस्तु 'गोतमः'—इति।

‡ ऋ० सं० १, ८, ५ ५।

§ "एतानि" क, ख, ग।

|| बन्धनीचिह्नान्तर्गतपाठोऽयं दृश्यते क-ख ग पुस्तकेष्वेव।

यदनेनार्चन्त्यर्क* मन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृत्तः† कटुकिम्ना ॥५ (५)॥

"स्वसराणि‡"—इति, अनवगतम्। "स्वयं सारीणि"—इत्यवगमः। "अहानि"—इत्यभिधेयवचनम्; तानि हि स्वय मेव सरन्ति गच्छन्ति। अपि वा "स्वर आदित्यः" अत्र उच्यते। "स एनानि सारयति" तेनैतानि स्वसराणीत्युच्यन्ते। "विश्वेदेवासो०——०स्वसराणि"§। मधुच्छन्दस आर्षम्। अग्निष्टोमे प्रउगे शस्त्रे गायत्रे तृच वैश्वदेवे शस्यते। हे 'विश्वेदेवाः!' 'अप्तुरः' कर्म्म प्रति त्वरमाणाः; ते हि याज्ञिकं कर्म्म प्रत्यागन्तुं त्वरन्ते। अतएव सामन्त्र्यते 'सुतम् आगन्त' अस्माभिः अभिषुत सतं सोमं प्रति 'आगन्त' आगच्छत। हे 'तूर्णयः' त्वरणशीलाः!। कथं पुनरागच्छत? 'उस्रा इव स्वसराणि'। यथा 'उस्राः' रश्मयः, 'स्वसराणि' अहानि प्रति, शीघ्र मागच्छन्ति, एव मागच्छत॥ एव मस्मिन् रश्मिसम्बन्धात् "स्वसराणि" —इत्यहानीत्युपगम्यते ॥

"शर्य्याः||"—इति, अनवगतम्। "शरमय्यः"—इत्यवगमः। "इषवः" अभिधेयाः। "शरः, शृणातेः" हिंसार्थस्य (क्र्या० प०), हिंस्यन्ते

* "यदेनेनार्च्चन्त्यर्कं" क, ख, ग।

† "संहतः" क, ख, ग। "संहत्तः" घ।

‡ १भा० ४०९पृ० ९पं०।

§ "विश्वेदेवासो अप्तुरः सुत मागन्त तूर्णयः। उस्रा इव स्वसराणि।"—इति ऋ० सं० १, १, ६, ९।

|| १भा० ४०९ पृ० ११पं०।

च मर्ष्यस्तेन महत्। "अर्को वृक्षो भवति" य एष प्रसिद्धः। आह किं कारणम्? इति, उच्यते;—"मंवृत्तः" महतः, मंव्याप्तः; "कटुकिम्ना" कटुकभावेन भवति ॥ ५ ॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा* शतक्रत उद्येमिरे वंशमिव वंशो वनशयो भवति वननाच्छ्रूयत इति वा पवी रथनेमिर्भवति यद्विपुनाति भूमिम्। उत पव्या रथानामद्रिं भिन्दन्त्योजसा। तं मरुतः क्षुरपविना व्ययुरित्यपि† निगमौ भवतः। वक्षो व्याख्यातं धन्वान्तरिक्षं धन्वन्त्यस्मादापः। तिरो धन्वातिरोचत इत्यपि निगमो भवति। सिनमन्नं भवति सिनाति भूतानि। येन स्मा सिनं भरथः सखिभ्य इत्यपि निगमो भवति। इत्था‡-मुथेत्येतेन व्याख्यातं सचा सहेत्यर्थः। वसुभिः सचाभुवा। वसुभिः सहभुवौ। चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातोऽथापि पशुनामेह भवत्युदात्तश्चिदसि मनासि चितास्त्वयि भोगाश्चेतयस इति वा आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्यध्यर्थे

* "ब्रह्माणस्त्वा" क, ख, ग।

† "क्षुरपविनाव्ययुरित्यपि"—इति क, ख, ग।

‡ "भवतीत्था-" क, ख।

दृश्यते। अभ्र आ अपः। अभ्रे आ अपोऽपोऽभ्रैर्धा न* द्युम्नं द्योततेर्यशो वा अन्नं वा। अस्मे द्युम्न मधि रत्नं च धेहि। अस्मासु द्युम्नं च रत्नं च धेहि॥ ६ (५)॥

॥ इति पञ्चमाध्यायस्य प्रथमः पादः॥ ५, १.

यथा तावद्देवोऽर्कशब्देन उच्यते, तथैव निगमः;— "गायन्ति त्वा गायत्रिणः‡...... येमिरे"। मधुच्छन्दस आर्षम्। अनुष्टुप्। ऐन्द्री। हे भगवन्निन्द्र! 'गायन्ति त्वा गायत्रिणः' स्तुवन्ति त्वां सामगाः, सामभिः। अर्चन्त्यर्क मर्किणः' पूजयन्ति त्वाम् ऋग्मिः होतारो मन्त्रिणः। एवं मनेन प्रकारेण मां एते "ब्रह्माणः" याज्ञ कर्माणि हि 'ब्रह्मकृतो'। 'वंशमिव येमिरे' उद्यमिरे वंशमिव त्वां स्तुतिभिः वर्द्धयन्ति। यथा नर्त्तकाः वंशमुच्छ्रयन्तीत्यर्थः॥ "वंशो वनशयो भवति"; वने शयित इत्यस्ति। "वननाच्छ्रूयत इति वा" सम्भजनाद्वा वंशैर्भिः॥ एवं सन् देवः "अर्क"-शब्देनोच्यते॥

मन्त्रस्यार्कशब्दवाच्यत्वे "अर्चन्त्यर्क मर्किणः"—इत्ययं एव निगमः (५ पृ० ४ पं०); अर्किणो हि मन्त्रा एवाभिप्रेताः॥

वृक्षस्तु प्रसिद्ध एव, तेन निगमस्तदभिधायको नैवास्ति॥

* "अभ्र आ अपोऽभ्रेऽप्य इति" क, ख, ग।

† "यशो वान्नं वा" ङ, च।

‡ "गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्क मर्किणः। ब्रह्माणस्त्वा शतक्रतु उद्वंशमिव येमिरे।"—इति ऋ० सं० १, १, १९, १।

"पविः²⁴"—इति*, अनवगतम् । "रथनेमिर्भवति"- इत्यभिधेयवचनम् "यद् वि पुनाति भूमिम्"; सा हि विपुनाति भूमिमिति पविः । "उत स्म ते० ---०भिन्दन्त्योजसा"† । श्यावाश्वस्येयं मार्षम् । हे मरुतः! येषां वः तिरोभवितुं माविर्भवितुं च काले शक्तिरस्ति, ते यूयम् 'उत स्म' अपि च कस्मिंश्चन काले 'शुन्ध्यवः' मद्राव इव 'परुष्णीं' नद्यां, माध्यमिकायां वा विपर्ववत्यां यूयमेव 'शुन्ध्यवः' शोधयितारः 'ऊर्णाः' चित्राः, तिरोहिताः 'वसथ' एतस्मिन्नन्तरिक्षलोके । 'उत' अपि च; कस्मिंश्चिदभ्युद्गमनकाले यामी युष्माकं 'रथानां पव्याः' वा रथनेमयः, ता एव 'अद्रिम्' एवं 'भिन्दन्ति' 'ओजसा' बलेन, किं पुनः वृक्ष मित्यभिप्रायः ॥ एव मेतस्मिन्नर्थसंयोगात्पविशब्देन रथचक्रनेमिरभिसम्बध्यते । ब्राह्मण मपि चैतस्मिन्नेवार्थे चातुर्मास्ये सान्तपनं हविरधिकृत्य 'देवा वै वृत्रस्य मर्म नाविन्दन्-"तं मरुतः क्षुरपविना व्ययन्" सान्तपनं मन्तपंस्तस्मात् सान्तपना:'—इति । एतस्मिन्नपि च ब्राह्मणे चक्रनेमिः क्षुरधाराकृतिमत्वात्क्षुरपविरित्युच्यते, तस्मादुपपद्यते । अन्यप्रयोगविषयत्वादुदाहरणद्वयम् ॥

"वक्षः²⁵"—इति‡, व्याख्यातम् । "उपो अदर्शि शुन्ध्युवः"—इत्यत्र§ ॥

* १भा० ४०९ पृ० १८ पं० ।

† "उत स्म ते परुष्ण्या मूर्णा वसत शुन्ध्यवः । उत पव्या रथाना मद्रिं भिन्दन्त्योजसा"—इति ऋ० सं० ४, ३, ९, ४ ।

‡ १भा० ४१० पृ० ३पं० ।

§ १भा० (४२२ पृ०) ४अ० १पा० ५ख० ।

स्तोमाभिशंसने मैत्रावरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'इमा उ वां' युवयोः 'भृमयः' स्तुतयः याभिस्तैस्तैस्तोतृभिरुदीर्य्या-मद्दे, तां पुनस्ता अस्मै 'युवायते' युष्मद्ग्त, भवद्भ्यां ददते यज-मानाय 'न' यथा पूर्व्वं 'तुज्या' दानायाभिमताना मर्थानाम् 'अभूवन्' बभूवुः। यतः ब्रवीमि;—हे 'इन्द्रावरुणौ!' 'क त्यत्' क तत्, युवयोः 'यशः' माहाभाग्यं गतम्? 'येन' माहाभाग्येनैताभिः स्तुतिभिः अभियुतौ सन्तौ 'सिनम्' अन्नं 'भरथः' 'सखिभ्यः' समान-ख्यानेभ्यो यजमानेभ्यः॥ अन्न मेव हि प्रायेण यजमानैः प्रार्थ्यत इति "सिन"-शब्देनात्रान्न मभिधीयत इत्युपपत्तिः। व्यभिचारि-त्वादभिधानानां "सिनम्"-इत्यादीनि स्वस्वेऽभिधानवर्गे पठिता-न्यपि* सन्ति नैघण्टुके प्रकरणे समाम्नाता न्यतस्मिन्नैकपदिके प्रकरणेऽनवगतसंस्कारभिप्रायेण, कानि चिदनेकार्थाभिप्रायेण॥

"इत्था(२९)"—इति †, एष निपातः; "अमुया"—इत्यनेन व्या-ख्याताऽष्टमेऽध्याये †॥

"सचा(३०)—इति ‡, अप्रतीतार्थो निपातः। "सह"—इत्यर्थ-प्रतीतिः। "अग्निनेन्द्रेण०——०सचिना" ‖। श्यावाश्वस्येय मा-र्षम्। त्रिष्टुप्, ज्योतिष्मती। हे 'अश्विनौ!' एताभिः अग्न्यादिभिः देवताभिः 'सचा भुवौ' सहितौ भूत्वा, 'सजोषसौ च' सहप्रीतौ, इमं

* "सिनम्"—इति नि० १अ० ७ खण्डेऽष्टमं पदम् (१भा० २०२ पृ० ।

† १भा० ४१० पृ० १ पं०।

‡ याास्कीयत्वतीय इति भावः। १भा० १अ० २पा० ४ख० (२२०पृ० द्रष्टव्यः।

§ १भा० ४१० पृ० १० पं०।

‖ "अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचा भुवा। सजोषसा उषसा सूर्येण च सोमं पिबत मश्विना॥"—इति ऋ० सं० ६, २, १४, १।

'सोमं' 'पिबतम्'। पीत्वा चैतन्नामास्माक मर्थं मभिप्रेतं कुरुत मित्येव माशीर्याञ्चा॥ एत मिद्राग्न्यादिदेवताभिसम्बन्धात् "सचा"—इत्येष सहयोगे भवतीत्येतदुपपद्यते॥

"चित्"(२१)—इति*, एष "निपातः"; "अनुदात्तः"। तद्यथा,—"सद्यश्चिद् यः शवसा पञ्च कृष्टीः"—इति†। स "पुरस्तादेव व्याख्यातः" "चिदित्येषोऽनेककर्म्मा"—इत्यत्र‡। "अथापि" अय मेव "उदात्तः" आद्युदात्तो भवति, ततः "पशुनाम भवति"। तद्यथा,—"चिदसि मनासि धीरसि—इति राजक्रयणी§ गोस्तुतौ। सैवोच्यते;—"चिदसि मनासि"—इति॥। अतः पुनरेतद् ब्राह्मणे व्याख्यायते,—"चिदसीति यद्धाव विचिकित्सन्' इत्येत मादि आश्चर्यवे¶॥

"आ"(२२)—इति**, आकार उपसर्गः; पुरस्तादेव व्याख्यातः"—"आ इत्यर्वागर्थे"—इति††। "अथाप्युपमार्थे दृश्यते" निपातत्वेन "जार आ भगम्"—इति‡‡। "अथापि" कदाचित् "अध्यर्थे दृश्यते",—"अधीत्युपरिभाव मैश्वर्य्यं वा"—इति। यथाय मध्यर्थेऽपि भवति, तथा "अभ्र आँ अपः"—इत्येष निगमः। "कद् प्रियया

* १भा० ४११ पृ १पं०।

† ऋ० सं० ८, ८, ११, २।

‡ १भा० ४८ पृ० १ख० १पा० १ख०।

§ राजक्रयणी = सोमक्रयणी, यया गवा सोमः क्रीतो भवति, "सोमो वै राजा"—इति श्रुतेः (१, ५, १. ऐ० ब्रा०)।

|| य० वा० सं० ४, १९ द्रष्टव्या।

¶ श० ब्रा० ३, ३, ४, १—१०।

** १भा० ४११ पृ० ७पं०।

†† १भा० ४१ पृ० १ख० १पा० ५ख०।

‡‡ १भा० ११०पृ० १ख० १पा० ४ख०।

धाम्नें॰—॰वि॒त॒नोति॒ मा॒यिनी॑"*। अधुना पदविभाग मस्य भाष्यकारः करोति, उपसर्गविभागोपप्रदर्शनार्थम्,—"अभ्रे, आँ, अपः"—इति। अधुना "आँ"-इत्यस्यार्थं ब्रवीति,—"अपोऽभ्रेऽधीति" यदुक्तं स्यात्तदेवोक्तं भवति "अभ्र आँ अपः"—इति। प्रतिभानो राधेयस्येव मार्षम्। वैश्वदेवस्य प्रथमैव। जगती। अत्र पुनः प्राधेयापः स्तूयन्ते। "आपो वै विश्वेदेवाः, सर्व्वा एव वा देवताः"—इत्यनेन † ब्राह्मणदर्शनेनापां विश्वेदेवत्व मुपपद्यते। तत् पुनः सूक्तं अभिप्लवस्य षड़हस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे शस्यते।

"कद्॒ प्रि॒याय॒ धाम्ने॑ मनामहे॒"। 'कत् उ प्रियाय' सुखाय प्रियाय च 'धाम्ने' स्थानाय वैश्वदेवाय, तत्प्राप्त्यर्थम्। तानेव च विश्वान् देवान् यो 'मनामहे', त एव स्तुपास्यमानाः तत् स्थानं प्रापयितुं समर्था इत्यर्थं मनामहे। स्थानविशेषणान्येवोत्तराण्यपि स्वक्षत्रादीनि। 'स्वक्षत्राय' च धाम्ने स्वबलायेत्यर्थः। यत्र स्व मेव बलं भवति, न तत्र परकीयं बल माश्रीयते; यथेह लोके। 'स्वयशसे' यत्र स्वमहिमकृत मेव यशो भवति, न सांयौगिकद्रव्यकृतम्। 'महे' महते धाम्ने। तत्-प्राप्त्यर्थ मेव 'वयं' मनामहे; मत्वा चोपास्मह इत्यभिप्रायः। 'आमेन्यस्य' मेना माध्यमिका वाक्, सा यत्र; तस्य। 'रजसः' रजो लोकः, अन्तरिक्ष लोक इत्यर्थः; तस्य। 'आँ' उपरि। 'यद् अभ्रे' यो मेघः; तत्र। या आपः अवस्थिताः, ताः 'अपः'। 'वृणाना'

* "कद्॒ प्रि॒याय॒ धाम्ने॑ मनामहे॒ स्वक्ष॑त्राय॒ स्वय॑शसे म॒हे व॒यम्। आ॒मे॒न्यस्य॒ रज॑सो यद॒भ्र आँ अ॒पो वृ॑णा॒ना वि॑त॒नोति॑ मा॒यिनी॑॥"—इति ऋ॰ सं॰ ४, ३, ९, १।

† "आपो वै सर्वा देवताः"—इति ऐ॰ ब्रा॰ २,२,९। "विश्वेदेवाः — सर्वे देवाः"—इति च प॰ दै॰ का॰ ९, ४, ५।

सम्भजमाना 'वितनोति' विसृजति वर्षभावेन। 'मायिनी' प्रज्ञावती, माध्यमिका वाक्। ताः 'अपः' 'वयम्' एवमादिगुणयुक्ताः, तासां सेव सर्वमतस्य धाव्वः प्राप्त्यर्थं 'मनामहे' याचामहे॥ अभ्रे एव हि नाधि आपः वर्त्तन्ते इति आकुथ्यर्थं इत्युपपद्यते॥

अथ चैव मन्यथास्य मन्त्रस्यार्थः स्यात्;—'कद् प्रियाय' सुखाय प्रियाय चैतस्मै 'धाम्ने' स्थानाय, यत्र वयं वर्त्तामहे। कथं नामैतत् स्थानं सुखं च प्रियं च स्वचक्षुस्य स्वमहत्त्वस्य स्यादित्येव मर्थं विश्वान् देवान् मनामहे। "महेमहि, मनामहे"—इति याच्ञाकर्म्मसु पठितम्*। कतमाः पुनरपो याचामहे? इति उच्यते;—'अमेन्यस्य रजसः' आभिमुख्येन मननीयस्य रजसोऽन्तरिक्षलोकस्य यदभ्र मुपरि वर्त्तते, तस्मिन्नभ्रे 'अपः' 'वृणाना' सम्भजमाना 'मायिनी' माध्यमिका वाक् 'वितनोति' वृष्टिभावेन, ताः 'मनामहे' याचामहे॥

"सुवम्(११)"—इति†, अनेकार्थम्। "यशो वा अन्नं वा"—इत्यभिधेयवचनम्। "शतं ते शिप्रिन्नूतयः ०—० रत्नं च धेहि"‡। वसिष्ठस्यार्षम्। त्रिष्टुबेव। मध्याम्नते महदुक्थे दक्षिणे पक्षे शस्यते। हे 'शिप्रिन्!' इन्द्र! 'शतं' 'ते' तव 'ऊतयः' आगमनानि सन्तु। क? 'सुदासे' सुदाने कल्याणदाने, एतस्मिन् यजमाने, तथैव मनुगृहाण, यथा नित्ययाच्येवायं यजमानः स्यादित्यभिप्रायः। आगतस्य च मतः तव 'सहस्रं शंसा' बहूनि स्तोत्राणि सन्तु। 'उत रातिः अस्तु' अपि च

* १अ० १५ख० १८स० (१४), (१९)।

† १अ० ४१२ख० १२पं०।

‡ शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु। जहि वधर्वनुषो मर्त्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि।"—इति ऋ० सं० ५, २, ८, २।

हविर्द्द्भिरक्षित्येतद्देवानुवर्त्तते। एवम्ब त्व मागत उपहूतः सन् प्रभु, यत् कुरुष्व। हे 'वधः' वधयितः! 'वनुषः मर्त्यस्य', योऽस्मान् हन्तु मिच्छति मर्त्यो मनुष्यः; तस्य। यद् वीर्य्यम्, तत् 'जहि'। हत्वा च तस्य वीर्य्यम्, निहत्य महात्मा 'अस्मे' अस्मासु 'द्युम्नम्' "अन्नं यशो वा" 'रत्नं च' 'धेहि' देहीत्यर्थः। 'रत्नं' धनम्। एव मेतस्मिन् मन्त्रवचनत्व-स्थात् "द्युम्न"-शब्देन "यशो वा अन्नं वा" उच्यत इत्युपपत्तिः; इते हि सत्यौ यशोऽन्नं वा भवतीति॥ "द्युम्नं द्योततेः"—इति, अन्न मेव हि भुञ्जानस्य दीप्तिर्भवतीति। द्युम्नं द्योतयितृ च, यशस्तु दीप्तं प्रकाश-स्वभावादिति ॥ ६ ॥

इति निरुक्तवृत्तौ दशमाध्यायस्य (पञ्चमाध्यायस्य)
प्रथमः पादः॥ ५, १ ॥

॥ द्वितीयः पादः ॥

पवित्रं पुनातेर्मन्त्रः पवित्र मुच्यते। येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति। रश्मयः पवित्र मुच्यन्ते। गभस्तिपूत इत्यपि* निगमो भवत्यापः पवित्र मुच्यन्ते। शतपवित्राः स्वधया मदन्तीर्बहुदकाः। अग्निः पवित्र मुच्यते वायुः पवित्र मुच्यते सोमः पवित्र मुच्यते सूर्यः पवित्र मुच्यते इन्द्रः पवित्र मुच्यते। अग्निः

---

* "गभस्तिपूतो नृभिरद्रिभिः सुत इत्यपि"—इति क, च।

पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः । पवित्रं ते मा पुनन्त्वित्यपि निगमो भवति। तोदस्तुद्यतेः ॥ १ (६) ॥

"पवित्रम्[१४]"—इति*, अनेकार्थम् । "पुनातेः"—इति धातु-निर्द्देशो निर्वचनाभिप्रायः । "मन्त्रः पवित्र मुच्यते"—इत्यभिधेय-वचनम्। "येन देवाः ०———० पुनन्तु नः"† । मन्त्रस्य पवित्रत्व-प्रख्यापको निगमः। पवित्रस्य वसिष्ठसहितस्य वा आर्षम्। पावमानी सौमी । 'येन' 'पवित्रेण' मन्त्रेण 'देवाः' ऋत्विग्-यजमानाः 'आत्मानं पुनते' 'सदा' सतत मेव। प्रस्तुते कर्म्मणि यस्य मन्त्रस्य तत् सामर्थ्यम्, 'तेन' मन्त्रेणैवं वीर्य्यवता 'सहस्रधारेण' बहुप्रकारेण प्रतिरसेन 'पवमानः' पूयमानः, सोमो मां पुनातु ॥ मन्त्रेणैव देवा ऋत्विग्-यजमाना आत्मानं पुनन्ति, तस्मादुपपद्यते तेषां देवत्व मिति ; न हि इतरेषां देवानां पाप मस्ति, यत् पूयेत। "न च वै देवान् पापं गच्छ-न्ति"—इति विज्ञायते। तस्माद्देवशब्देनात्र ऋत्विग्-यजमाना उच्यन्ते। ते हि हविषां दातारः, याचनेन च अर्थिनः तस्मादुपपद्यते तेषां देवत्वम् ॥

"रश्मयः पवित्र मुच्यन्ते"; ते हि स्पर्शनेनैव पावयन्ति । "वाचस्य-तये पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः। देवो देवेभ्यः पवस्व

* १भा० ४१२४० २५पं० ।

† "येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमानीः पुन-न्तु नः ॥"—इति सा० सं० उ० आ० ५, २, ८, ५ ।

येषां भागोऽसि”‡—इत्येषा उपांशुग्रहग्रहणे विनियुक्ता। हे सोम! वाचस्पतिरिन्द्रः, त्वां पश्यतीत्येत मर्थं पुरस्कृत्य ‘[illegible]’ वर्षितुः, अग्नौ प्रास्ताहुत्या वृष्टिं कर्तुरादित्यस्य§ चार्थं ‘पवस्व’ पूयस्व; यावेतावन्तर्हितौ मन्त्रौ सकलयज्ञं व्याप्नुवानौ निषिच्यमानस्यैव ताभ्यां पवस्व। अपि च त्वं प्रागप्यभिषवात् ‘गभस्तिपूतः’ एव रश्मिपूतः। किञ्च; ‘देवः’ त्वं दानादिगुणयुक्तः। देवाना मेव दानादिगुणयुक्तानां पवित्र मसि पावयितासि। किं सर्वेषा मेव? नेत्युच्यते,—‘येषां भागोऽसि’ ये त्वा मभिषवादिक्रियया भजन्ति ऋत्विग्-यजमानाः; ते ह्यत्र देवत्वेनाभिप्रेताः पावनसम्बन्धात्; न हीतरेषां देवानां पाप मस्ति। पूर्व्ववत् किञ्चित्॥

“पवमान मह्यर्णो०——०धन्वसि”*। एतं मन्त्रं व्याचष्टे। ऋषिगणैरकृष्टमायादिभिर्व्यस्तैः समस्तैश्च त्रिभिः “प्र त आश्विनीः”—इत्येतस्याष्टाचत्वारिंशदृचस्य सूक्तस्य † चत्वारिंशता ऋचां दशद्रष्टारो दृष्टाः; तत्रैषा चतुस्त्रिंशत्तमी ‡। हे ‘पवमान’ पूयमान! सोम! ‘अव्ययानि’ ‘पव्यया’ पविमयेन, और्णेन पवित्रेण पूयमानः, त्वम् ‘महि’ ‘अर्णः’ उदकम्, उदकत्वेनाभिसम्पन्नः, तत्स्वभाव मुपगतः,

* य० वा० सं० ७, १।

† “अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते।”—इति म० ३अ० ७६ श्लो०।

‡ ऋ० सं० ७, २, १८, ४.— ९, ५, १, २४ ऋ०।

§ ऋ० सं० ९, ५, १६ऋ०।

|| पवमान मह्यर्णो वि धावसि सूरो न चित्रो अव्ययानि पव्यया। गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्वसि॥”—इति।

निर्वचनीयः, सन्होः भूत्वा ततो द्रोणकलशं प्रति 'वि धावसि'। कीदृशः पुनः पूर्व्वं भूत्वा एतां रसावस्था मापद्यसे त्वम्? इति, उच्यते;— पूर्व्वं तावदरण्येऽवस्थितः, 'गभस्तिपूतः' रश्मिपूतः सन्। ततः आहृत्य क्रीत्वा सोमस्तुण-विक्रय-विधानेन, 'नृभिः' ऋत्विग्भ्यज-मानैः 'अद्रिभिः' ग्रावभिः 'सुतः' अभिषुतः। ततो 'मद्ये' 'वाजाय' अन्नाय 'धन्वसि' त्वत्वं जगद्धारयित्रेऽर्थाय। कथं नाम त्वत्त-जगदुपकारित्व मभिनिष्पद्येत, दृष्टिनिमित्तेनेत्येत मर्थं पुरस्कृत्य रस-भाव मापन्नो द्रोणकलशं प्रति 'धन्वसि' प्राप्नोषीत्यर्थः? 'सूरो न चित्रः' सूर्य्य इव पूजनीयः॥ एव मस्मि "गभस्तिपूतः"—इत्येत-स्मात् पावनसम्बन्धाद्रश्मीनां पवित्रत्व मुपपद्यते॥ केचित् "पवित्रवन्तः परि वाच मासते"—इति*, एष निगमो विधीयते॥

"आपः पवित्र मुच्यन्ते"; ता अपि हि पावयन्ति। "शतपवित्राः स्वधया॰—॰जुहोत"†। अब्देवत्या। त्रिष्टुप्। वसिष्ठस्यार्षम्। 'शत-पवित्राः' बहुपावयित्र्यः, याः देव्यः, 'स्वधया' अन्नेन सहिता भूत्वा 'मदन्तीः' 'देवीः' दानादिगुणयुक्ताः, 'देवानां' दानादि-गुणयुक्तानां मेव 'पाथः' पानं सोमाख्यम्, 'अपि यन्ति' अपि गच्छन्ति। ताः, एवंलक्षणा आपः, 'इन्द्रस्य न मिनन्ति' न हिंसन्ति च तानि कर्म्माणि? येनाभ्रवधानन्तर मविलम्बमाना वर्षभावेन प्रचर-न्तीत्यभिप्रायः। या एताः, एवङ्गुणयुक्ता आपः, ताभ्योऽद्भ्यः 'सिन्धुभ्यः'

* ऋ॰ सं॰ ७, ९, १८, २।

† "शतपवित्राः स्वधया मदन्तीर्देवीर्देवाना मपि यन्ति पाथः। ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत॥"—इति ५, ४, १७, २।

स्यन्दमानाश्च: 'हव्यं' हवि:, 'घृतवत्' घृतमिश्रम् 'जुहोत'हे ऋत्विजः। अर्हन्ति ता हविरित्यभिप्राय:॥ एव मचाप: "पवित्र"-शब्देनोच्यन्ते; अन्वैवतत्साद्दश्य मन्त्रस्य॥

अग्न्यादयोऽपि ह्येते पवित्रशब्देनोच्यन्ते; तेऽपि हि सर्वं एव पावयन्ति। "अग्निः पवित्रं स मा पुनातु, वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु॥"—"इत्यपि निगमो भवति"। निगदप्रसिद्ध एवैष निगम: (?)॥

"तोद:(२४)"—इति *, अनवगतम्। "तुद:"—इत्यवगमः। "तुद्यते:" व्यथनार्थस्येति (तु० उ०) धातुनिर्द्देश:। भूमेर्विलं तोद इत्युच्यते; तद्धि तुन्नं भवति दीर्घत्वात्। कूप इत्येके॥ २ (६)॥

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा। तोदस्येव शरण आ महस्य॥ बहुदाश्वांस्त्वा मेवाभिह्वयाम्यरिरमित्र ऋच्छतेरीश्वरोऽप्यरिरेतस्मादेव यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद् दृष्ट्वैवं मवक्ष्यत्†। तोदस्येव शरण आ महस्य। तुदस्येव शरणेऽधि महतः स्वञ्चाः स्वञ्चनः। आजुह्वानो घृतपृष्ठः स्वञ्चा इत्यपि निगमो भवति। शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः॥ २ (७)॥

"पुरु त्वा दाश्वान् वोचे०——०महस्य" ‡। दीर्घतमस

* १आ० ४१२ ष० ७पं०।

† "मवचत्" क, ख, ग।

‡ ऋ० सं० १, १, १९, १।

वाम' अभिषुणुमः सोमम् 'इति', तथापि कल्याणाभिव्याहारिणः सुप्रभाता एवोषसः,—किं मुत यः सुनोतीत्यभिप्रायः॥ एव मस्मिन् "सूर्येण संयतते"—इत्यनेन समाम्नात् "ऋषाः = ऋषुनः" अस्तेः (भू०प०) गत्यर्थस्य दर्शनादित्युपपद्यते॥

"शिपिविष्टः, विष्णुः"—"इति", एते "विष्णोः" एव "द्वे नामनी भवतः"। अत्र "शिपिविष्टः[१७]"—इति *, एतद् गुणपद मनवगतम्; पक्षेण चानेकार्थम्। शिपिविष्टः, शेप इव निर्वेष्टित इत्यर्थप्रतीतिः। अस्य समम्नादेव "विष्णु[१८]"-शब्दः † समाम्नातः। यथा "अन्धः"—इत्यस्य समन्नात् "सोम"-शब्दः "सोमो अन्धः"—इति ‡। न ह्यत्र प्राधान्येन विष्णु-शब्दः समाम्नातः, देवतापदत्वात् §। अनयोर्द्वयो-रपि नाम्नोः यत् "पूर्व्वं", तत् "कुत्सितार्थीयं भवति"—"इति" "औपमन्यवः" आचार्य्यो मन्यते। यथा च कुत्सितार्थीयं तथोदा-हरणार्थं मेव निर्ब्रुवन् दर्शयिष्यति ॥ ॥२(७)॥

कि मित्ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपि-विष्टो अस्मि। मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ॥ किं ते विष्णोऽप्रख्यात मेतद्भवत्यप्रख्या-पनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्न-

* १भा० ४११ पृ० १२पं०।
† १भा० ४११ पृ० १२पं०।
‡ १भा० ४०२ पृ० ४ष० २ख० (१२)।
§ यद्यति च प० दै० का० ९, ९, ०; ८।
‖ इत उत्तरस्मिन्नेव खण्डेऽयैव।

रश्मिरपि वा प्रशंसानामैवाभिप्रेतं स्यात् किं ते विष्णो प्रख्यात मेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टो-ऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैरा-विष्टो भवति। मा वर्पो अस्मदप गूह एतत्। वर्प इति रूपनाम वृणोतीति सतो यदन्यरूपः समिथे सङ्ग्रामे भ-वसि संयतरश्मिस्तस्योत्तरा भूयसे निर्वचनाय॥ ३ (८)॥

"कि मित् ते", "प्रतत्ते अद्य—इति"*। वसिष्ठस्यैते आर्षे। विष्णोः शिपिविष्टस्यान्वारम्भणीये चरुः, तस्यैते याज्यानुवाक्ये; वाजपेये च सप्तदशे शस्त्रे शस्यते; सोमातिरेकशस्त्रे च तृतीयसवने च किं रूपः त्वम्? इति पृष्टः शिपिविष्टोऽस्मीत्युक्ते अनन्तरं प्रक्रियते; "कि मित् ते विष्णोः"—इति †। कि मेतदेवैकं विगतरश्मिरूपं 'परिचक्ष्यं' परिध्याख्यापनीयं भवति, नान्यानि रूपाणि तत्र सन्ति, येनैवं "प्र ववक्षे" पुनःपुनर्ब्रूषे। अस्माक मयतः "शिपिविष्टः अस्मि"—इति, "शेप इव निर्वेष्टितोऽस्मीति"; "अप्रतिपन्नरश्मिः" हि सूर्य्यः, उदय-काले निर्वेष्टितः शेप-स्वरूपो भवति, तस्य तद्रूपगुणयोगित्व मकुत्सितार्थ मित्युपपद्यते। "अपि वा" "प्रशंसानामैवाभिप्रेतं स्यात्" प्रशंसायुक्तगुण मेवैतन्नाम स्यात् "शिपिविष्टः"—इति। आह;— कथम्? इति, उच्यते;—"शिपयः", "अत्र" अस्मिन् प्रशंसापक्षे "रश्मयः उच्यन्ते"। स च सूर्य्यो मुहूर्त्ततः "तैः" शिपिसञ्ज्ञैः वाल-

* ऋ० स० ५, ६, २५, ६; ५।
† ऋ० सं० ५, ६, २५, ६।

रश्मिभिः "आविष्टः", तस्मात् "शिपिविष्टः"—इत्युच्यते*। एव मेतद् भूत्याख्यमानं प्रशंसानामैव भवति; नास्त्रीलोपमासम्बद्ध मित्यभिप्रायः। हे 'विष्णो!' किं मेतदेवैकं रूपं तव 'परिचक्ष्यं' "प्रख्यापनीयम्" अस्ति, यदेतदुदयकाले प्रतिपन्नमात्रेषु रश्मिषु नान्यानि रूपाणि प्रख्यापनीयानि सन्ति। "यद्वत" एवं "प्रब्रूषे—शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः" प्रतिपन्नमात्रेषु रश्मिष्विति। विज्ञानीमस्त्वेतद्रूपद्वयम्। अतो ब्रूमः;—"मा वर्पो अस्मदपगूह एतत्"। 'मा' एतद् 'वर्पः' रूपम् 'अस्मत्' अस्माक मयतः प्रख्यापय। किं तर्हि? 'अप गूह एतत्' संवृतं कुरुष्वैतद् "शिपिविष्ट"-शब्दवाच्य मुपमेय रूपम्; अय वा बालरश्मिसंयुक्तम्। किं तर्हि? "यदन्यरूपः" येनान्येन रूपेण 'समिथे' "सङ्ग्रामे" 'बभूथ' "भवसि"†। "संयतरश्मिः" सम्बद्धानेकरश्मिजालः, तदेव नो माध्यन्दिनं रूप मनेकरश्मिविकचं प्रकाशयस्वेत्यभिप्रायः। तद्धनाष्टं सङ्ग्रामेषु भवति॥ "तस्य" एवार्थस्य प्रकृतस्य यथा प्रशंसानामैतदिति, "उत्तरा" ऋगस्या एव प्रकृताया ऋचः "भूयसे निर्वचनाय"; अत्र हि स्वशब्देनैवास्य प्रशंसानामत्व मुच्यते॥ ३ (८)॥

**प्र तत्ते अ॒द्य शि॑पिविष्ट॒ नामा॒र्यः शं॑सामि व॒युना॑नि वि॒द्वान्। तन्त्वा॑ गृणामि त॒वस॒ मत॑व्यान् क्षयं॑न्त म॒स्य**

* ऋ० सं० ५, ६, २४, ७ ऋगव्याख्यायां सा० भा० एव मेव।

† "पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् सङ्ग्रामे वसिष्ठस्य साहाय्यं चकार। आनबृषिरनया प्रत्याचष्टे।"—इति चस्या एव ऋचो व्याख्यारम्भे सायणः।

रजसः पराके ॥ तत्ते ऽद्य* शिपिविष्ट नामार्यः प्रशंसा-
म्यर्यो ऽहं मस्मीश्वर स्तोमाना मर्यस्त्व मसीति वा तन्त्वा
स्तौमि तवस मतव्यांस्तवस इति महतो नामधेय
मुदितो भवति निवसन्त मस्य रजसः पराके पराक्रान्त
आघृणिरागतहृणिः। आघृणे सं सचावहै। आगतहृणे
संमेवावहै। पृथुज्जयाः पृथुजवः। पृथुज्जया अमिना-
दायुर्दस्योः प्रामापयदायुर्दस्योः॥ ४ (९)॥

"प्र तत् ते अद्य"—इति †। हे 'शिपिविष्ट!' विष्णो! 'तत्' 'ते'
तव 'नाम' 'प्रशंसामि' तत्प्रशंसार्थीय मेव पश्यामि; यदन्ये कुत्सिता-
र्थीयं पश्यन्ति। 'वयुनानि' युष्मद्विषयाणि प्रज्ञानानि 'विद्वान्'
जानानः। किञ्च; "अर्यो ऽहं मस्मि" यस्मादीश्वरः स्तुतीना मुदीरणे,
युष्मद्गुणाभिज्ञः, तस्मादहं प्रशंसामि। अथ "वा" "अर्यस्त्व मसि"
अर्य ईश्वरः, मदनुग्रहाय समर्थः, तस्मात् प्रशंसामि। तत्ते नामेति
विस्फुटतरं प्रशंसानामत्व मिति। यस्त्वं सर्व्वगुणसम्पन्न ईश्वरः, 'तं'
'त्वा' त्वा महं 'गृणामि' स्तौमि। 'तवसं' महान्तम्। 'अतव्यान्'
अमहानहम्; आत्मनिन्दया स्तूयते। क वर्त्तमानं निवसन्तम्? 'अस्य
रजसः' अन्तरिक्षलोकस्य 'पराके' पराक्रान्ते स्थाने, दूराद् दूरतरे
निवसन्तं स्तौमि॥

"आघृणिः(१९)"—इति ‡, अनवगतम्। "आगत-हृणिः"—इत्य-

* "तत्ते अद्य"—इति क, ख, ग।
† ऋ० सं ५, ९, १५. ५।
‡ १भा० ४१२ पृ० २पं०।

वगमः । आगतदीप्तिरागतक्रोधो वाभिधेयः । "एहि वां विमुचो॰ —॰नो भव" * । भरद्वाजस्येयमार्षम् । गायत्री । पौष्णो मन्त्रः । 'एहि' आगच्छ । हे 'विमुचः' विमोचयितः ! प्रजानाम् तमोभ्यः, पूषन् ! सूर्य्य ! 'नपात्' नप्तः ! अद्भ्योऽग्निर्जायते, अग्नेरादित्यः—इत्यनया- पेक्षया नपात्त्वं सूर्य्यस्य । अथ वा मनुष्याणामेव नप्ता स्यात् ; मनुष्य ऋत्विग्भ्यो मनुष्येभ्यो जायतेऽग्निः, अग्नेरपि च सूर्य्यो जायते ; यदुक्तं मन्न्युपस्थाने,— "एष प्रातः प्रसुवति"—इति † । 'आघृणे' आगत- दीप्ते ! 'सं सचावहे' "संसेवावहे" । 'वाम्' आवां परस्परतः । 'रथीः ऋतस्य' रंहयिता, गमयिता, प्रोत्सर्पयिता त्वं यज्ञस्य 'नः' 'भव' । त्वदुदयप्रतीक्ष एवाहं यज्ञप्रारम्भं प्रत्याशासे । यत् त्व मुदिहि, त्वय्युदिते प्रोत्सर्पता मयं यज्ञ इत्यभिप्रायः । स एव मय मन्त्र सूर्य्य- सम्बन्धात् "आघृणि"-शब्दो दीप्तिवाचकः । दीप्ति-कर्म्मसु च पठित एवायं "हरः(९), घृणिः(१०)"—इति ‡ । क्रोधोऽपि घृणिरित्युच्यते, —"हेळः(१), हरः(२), घृणिः(३)"—इति § ; तदपि प्रकरणवशादुप- चितव्यम् ॥

"पृथुज्रयाः(४०)"—इति ‖, अनवगतम् । "पृथुजवः"—इत्यवगमः ।

---

* 'एहि वां विमुचो नपादाघृणे सं सचावहे । रथीर्ऋतस्य नो भव ॥"—इति ऋ॰ सं॰ ४, ८ २१, १ ।

† 'अग्निं वा आदित्यः सायं प्रविशति, तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी सम्पद्येते, उद्यन्तं वादित्य मग्निरनु समारोहति, यस्माद्धूम एवाग्नेर्दिवा ददृशे ॥"— इति तित्तिरिश्रुतिः (य॰ वा॰ सं॰ २, ९ टी॰) ।

‡ १भा॰ १५८पृ॰ १ख॰ १७ख॰ (९), (१०) टीप्पन्याम् ।

§ १भा॰ ११२पृ॰ १ख॰ १२ख॰ (१), (२), (३) टीप्पन्याम् ।

‖ १भा॰ ४१२पृ॰ ८ पं॰ ।

"यं नु न किः पृतनासु ०—० दायुदस्योः"*। विश्वामित्रस्य मार्षम्। त्रिष्टुप्। ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य द्वितीयेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'यं नु न किः' य मिन्द्रं न कश्चिदपि 'पृतनासु' सङ्ग्रामेषु 'स्वराजम्' अपराधीनराज्यं 'द्विता' द्विविधेनापि बलेन सांयौगिकेन औरसेन च, 'तरति' जयति; सर्व्वथा यो जेतुं न शक्यत इत्यर्थः। अथवा; 'द्विता तरति' द्विधैकधा वा, बहुधा वा वर्त्तमानं 'पृतनासु' 'यं नु न किः' यं न कश्चित् हन्तुं शक्नोति 'नृतमं' मनुष्यतमं 'हरिष्ठां' हर्य्योः स्थातारम्। 'इनतमः' ईश्वरतमश्च यः सर्वेभ्य ईश्वरेभ्यः, 'सत्वभिः यो ह शूषैः' अनेकसत्वसंयुक्तैः हस्त्यश्वरथपदातिलक्षणैः सांयोगिकैः बलैः, शूषैश्च बलविशेषैरेव। अथ वा; सत्वशब्दविशेषण मेव "शूष"-शब्दः स्यात्,—सत्वयुक्तैः शूषैः बलैरिति। 'पृथुज्रयाः' विस्तीर्णजवः 'अमिनात् आयुः'। कस्य? 'दस्योः' मेघस्य, असुरस्य; त महं स्तौमि। स इदं नाम करोत्वित्यभिप्रायः॥ एव मत्र शब्दसाकूप्यात् वधाधिकाराच्च "पृथुज्रयाः=पृथुजवः"—इत्युपपद्यते॥४ (९)॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्। दूरेदृशं गृहपति मथर्युम्॥ दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मस्वरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा हस्तच्युती हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपति मतनवन्तम्॥ ५ (१०)॥

* "यं नु न किः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम्। इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः॥"—इति ऋ० सं० ३, ३, १९, १।

"अध्वर्युम्(११)"—इति *, अनवमतम्। "अतनवन्तम्"—इत्यव-गमः॥ "अग्निं नरो०—०मध्वर्युम्" †। वसिष्ठस्यार्षम्। विराट्त्रिष्टुप्। महाव्रते आग्नेये सूक्ते प्रथमैवेयम् ‡। व्यूढस्य दशरात्रस्य चतुर्थेऽहनि आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते च प्रथमैव §। 'नरः' मनुष्याः 'दीधितिभिः' अङ्गुलिभिः याश्च परिगृह्य, उत्तराणि च 'हस्तच्युती' हस्त-प्रच्युत्या हस्ताभ्यां प्रच्यावयन्तः 'अरण्योः' सकाशा-दग्निं 'जनयन्त'। 'प्रशस्तं' प्रशस्य मित्यर्थः। 'दूरेदृशं' दूरे दर्शनम् 'गृहपतिम्', 'अध्वर्युम्' "अतनवन्तम्" गमनवन्त मित्यर्थः॥ एव मत्र अततेः गत्यर्थस्य (भ्वा०प०) माहात्म्यादन्यधिकाराच्चापि "अध्वर्युः" अतनवानित्युपपद्यते। "दीधितयोऽङ्गुलयो भवन्ति"; ता हि "धी-यन्ते" "कर्म्मसु" अनुष्ठीयमानेषु। "अरणी" "प्रत्यृतः" प्रतिगतः। "एने", "अग्निः" वा स्यात् "समरणाज्जायते—इति वा"; अरण्योः हि 'समरणात्' समागमनादग्निर्जायते॥ ५(१०)॥

**एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम्। इन्द्रः सोमस्य काणुका॥ एकेन प्रतिधानेनापिबत्साकं सहे-त्यर्थः। इन्द्रः सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति (वा कृतकानीति॥) वेन्द्रः सोमस्य कान्त इति वा कणे घात इति वा कणे हतः कान्तिहत-**

* १भा० ४१२ पृ० ११पं०।

† ऋ० सं० ५, १, २२, १

‡ "चाच्यप्रउगे विश्वजितः"—इति ऐ० ब्रा० ५, १

§ "अग्निर्नर इत्याग्निमारुतम्"—इति ब्रा० ८, ८।

|| सत्सनौचिह्नान्तर्गत मेतन्न दृश्यते च-पुस्तके।

स्तथैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन् काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्तास्तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति तथापि निगमो भवति। य मक्षिति * मक्षितयः पिबन्तीति। तं पूर्वपक्ष आप्याययन्ति तथापि निगमो भवति। यथा देवा अंशु माप्याययन्तीति॥ ६ †॥

"काणुका(४२)"—इति ‡, अनवगतम्, अनेकार्थं च। "कान्तकानीति वा, क्रान्तकानीति वा, कृतकानीति वा"—इत्येवमाद्याः शब्दसमाधयः। "एकया प्रति०—०काणुका" §। काण्वस्य कुरुसुतेरिय मार्षम्। गायत्री। ऐन्द्री। 'एकया प्रतिधा' एकेन प्रतिधानेन, सकृत्प्रतिहितेनैव चेतसा 'पिबत्' पिबतीन्द्रः 'साकं' सहेत्यर्थः। कानि पुनः पिबति? 'सरांसि'। कियन्ति? 'त्रिंशतम्'। कस्य पूर्णानि पिबति? 'सोमस्य'। किङ्गुणयुक्तानि? 'काणुका' "कान्तकानि", प्रियाणीत्यर्थः। अथ "वा" सोमस्य "क्रान्तकानि", अखिलं सरांसि सोमस्य पूर्णानीत्यर्थः। अथ "वा" "कृतकानि" संस्कृतानि, ऋत्विग्भिः इन्द्रार्थमेव। अथ "वा" "इन्द्रः" यस्मात् "सोमस्य कान्तः" तस्मादपि-

* "य मंचुति"—इति च पाठो हस्तलिखितपुस्तके। ५९ पृ० १९ पं० द्रष्टव्यम्।
† नात्रैकादशखण्डसमाप्तिः क-च-पुस्तकयोः।
‡ १भा० ४१२ पृ० १९पं०।
§ ऋ० सं० ६, ५, १९, ४।

वत्। अन्वयेन्द्रविशेषण मेव स्यान्न सरोविशेषणम्। आह, कथम्? इति, उच्यते,—"आघातः इति वा" आ कणे घातं पिबतीति यावत्, कणे हन्यत इत्यर्थः; "कणे हतः"="कान्तिहतः"—इत्यर्थं। कामः, प्रार्थना, कणे,—इतिसमानार्थाः*; कामे योऽभिहतः, स "कणे हतः"—इत्युच्यते, हतपानाभिलाष इत्यर्थः। एव मेतत् काणुकेति सरोविशेषण मिन्द्रविशेषणं वा? पानविशेषणं वा? सर्व्वेषा मस्मिन्मन्त्रे प्रकृतत्वात्। एवं चास्य त्रिकल्प्यमानस्यानेकार्थतापि दर्शितैव भवति॥

यदेतदुक्त मस्मिन्मन्त्रे "सरांसि त्रिंशतम्"—इति, अस्याभिधेयविषयप्रख्यापनप्रसक्त मिद मुच्यते;—"तच्चैतद्याज्ञिका वेदयन्ते" तच्चैतस्मिन् त्रिंशच्छब्दे एतदभिधेय मर्थवस्तु याज्ञिकाः 'वेदयन्ते' कथयन्ति। "त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि"—इति; तत्र हि माध्यन्दिने सवने उक्थपर्य्यायाः त्रयोऽप्यैन्द्रा एव भवन्ति, तिष्वपि चैतेषु दश चमसाः‡, तदभिप्रायेण त्रिंशत्-सरांसीत्युक्तं मन्त्रदृशा। ते ह्यत्रेन्द्रस्य "सरकाः" अभिप्रेताः §। सीधु-सरका इवेतरस्य कस्य चित् चत्रियस्य यानि तान्युक्थसम्बद्धानि च सोमपात्राणि "एकेन" प्रतिधानेन "पिबन्ति" पीयन्ते, "नान्यत्र सरांस्युच्यन्ते"—

* "कमति"—इत्यस्य कान्तिकर्मसु पाठात्। १भा०१९९ पृ० द्रष्टव्यम्।

† "परोक्षं वा एतत् प्रउगं सव प्रातर्यदा स्तुवन्ते। सवभिर्वैदिष्यवमाने कुर्वते; सुते सोमे दशमं स्तुवाति।"—इति ऐ० ब्रा० ३ १, १।

‡ चमसाः प्रचाः इति पर्य्यायवचनम्। ' यद् चित्तं पर्य्येस्तुवत, तद् चमसानां चहस्यम्।"—इति ऐ० ब्रा० ३. १, ९।

§ सरकः=मद्यपानपात्रम्। तथा हि—"सरकोऽप्यमृतपेयम्"—इति श० ब्रा० ९, १०, ४२। सीधु, इक्ष्वादिजन्यो मद्यविशेषः (Vinegar)। तथा हि हि।मर्थ सीधु माह,—"गुड़ः सीतरसः सीधुरपक्वमधुरद्रवैः। शिवः पक्वरसः सीधुः सम्पक्वमधुरद्रवैः।"—इति। "मधुद्रवैरिक्षुरसादिभिः" —इति वा० वि० स० ७ च०।

इत्येव याज्ञिकाना मभिप्रायः। "त्रिंशदपरपक्षस्याहोरात्राः, त्रिंशत्-पूर्वपक्षस्येति नैरुक्ताः"। "तत्" तत्रैवं सति "याः एताः" "चान्द्र-मस्यः" चन्द्रमसि भवाः चान्द्रमस्यः, "आगामिन्यः" प्रतिपद्-द्वितीयाद्यास्तु तिथिष्वागच्छन्तीति। किं तासाम्? इति, उच्यते;—"रश्मयस्ता अपरपक्षे पिबन्ति"। यथा चैतदेवं "तथापि" तथैव "निगमः";— "य मक्षितिं मक्षितयः पिबन्ति"—इति। चन्द्रमस मपरपक्षे पीत्वा ते सूर्य्यरश्मयः "पूर्वपक्षे" प्राप्ते पुनः "आप्याययन्ति" आ-पूरयन्ति। यथा चैतदेवं "तथापि" तथैव "निगमः";—"यथा देवा अंशु माप्याययन्ति"—इति॥

"यथा देवा अंशु माप्याययन्ति, य मक्षिति मक्षितयः पिबन्ति। तेन च इन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः॥"—इति। राजयक्ष्म-गृहीतस्य वैश्वदेवस्येष्टिर्निरूप्यते, तत्र प्राक् स्विष्टकृतो ऽनेन याज्याहुतिर्हूयते। 'यथा' येन प्रकारेण, 'देवाः' सूर्य्यरश्मयः 'अंशुं' सोमम् 'आप्याययन्ति' पूर्वपक्षे। एव मनेन प्रकारेण हे यजमान! त्वाम् 'इन्द्रः', 'वरुणः', 'बृहस्पतिः' च एते 'भुवनस्य' भूतजातस्य 'गोपाः' गोप्तारः। 'आप्याययन्तु' आयुषा धनेन च। किञ्च; 'यथा' येन प्रकारेण 'अक्षितिम्' अक्षीणं सोमम्, 'अक्षितयः' सूर्य्यरश्मयः 'पिबन्ति', तथा त्वा मपि हविर्दातारं सर्वे पिबन्तु, उपजीवन्तु एते देवाः इति। येषान्तु "य मक्षतिम्"—इति पाठः, तेषां य मक्षति मक्षितयः पिबन्ति,स च त्वा माप्याययन्त्वि-त्येवं योज्यम्*॥

* शु० वा० सं० पञ्चमाध्यायीयसप्तमकण्डिका, तादृशव्याख्या च महीधर-कृता द्रष्टव्या।

आह ;—"एकया प्रतिधापिबत्"—इत्येतस्मिन्मन्त्रे * "साकं सरांसि त्रिंशतं मिन्द्रः" पिबतीत्युक्तम्। नैरुक्तपक्षेणोक्तम्,—"तद् या एतास्चान्द्रमसा आगामिन्य आपो भवन्ति रश्मयः, ता अपरपक्षे पिबन्ति"—इति ; तदेतद्रश्मिषु पातृषु, चन्द्रमसि च पीयमाने, सर्वमेवेद मसम्बद्धं भवति?—इति, "एकया प्रतिधापिबत्"—इत्येतस्य मन्त्रस्यैन्द्रत्वात्। इतरस्मिन् "अचिति मक्षितयः पिबन्ति"—इति रश्मिनां पान-सम्बन्धादादित्य उच्यते ; आदित्योऽपि हि इन्द्र-शब्देनोच्यत एव —"असावादित्य इन्द्रः"—इति विज्ञायते। तदवयवभूतास्च रश्मयः, आदित्येन सह समासव्यासस्तुतिभाजः †। सरः-शब्दः खल्वपि उदके एव वर्त्तते; "पयः(२७), सरः(२८), भेषजम्(२९)"—इत्युदकनामसु पठितम् ‡। तत्रैवं सति यानि तान्युदकानि सरांसि पञ्चदशाहः-सम्भृतानि साक मवस्थितानि भवन्ति चन्द्रमसि, तानि सूर्य्यः = इन्द्रो रश्मिभिरपरपक्षे पिबतीति। एव मेतत् सर्व मुपपद्यते एव नैरुक्तपक्षे॥ ६॥

अध्रिगुर्मन्त्रो भवति गव्यधिकृतत्वादपि वा प्रशासन मेवाभिप्रेतं § स्यात्तच्छब्दवत्त्वादध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्व मध्रिगवित्यग्निरप्यध्रिगुरुच्यते। तुभ्यं श्चोतन्त्यध्रिगो शचीवः। अधृतगमनकर्मवानिन्द्रो-

---

* पु० ५९ पृ० १४ पं०।

† "तासां भक्तिसाहचर्यं व्याख्यास्यामः"—इत्यादि। प० दै०का० ७, ९, १—३।

‡ १अ० ९९ पृ० १ख० १२ ख० (२७) प्रभृतयः, (२८), (२९)।

§ "प्रशंसामात्रमेवाभिप्रेतं" +इति क, ख, ग।

ऽप्यध्रिगुरुच्यते। अधिगव ओह मिन्द्रायेत्यपि निगमो भवति। आङ्गूष* स्तोम आघोषः। एनाङ्गूषेण वय मिन्द्रवन्तः। अनेन स्तोमेन वय मिन्द्रवन्तः॥ ७(११)॥

"अध्रिगुः[४२]"—इति †, अनवगतम्, अनेकार्थञ्च। "अध्रिगुर्मन्त्रो भवति"। आह, किं कारणम्? उच्यते;—"गवि अधिकृतत्वात्। सोऽय मधिगुः सन् अध्रिगुरित्यर्थः। गवि योऽधिकृतो मन्त्रः स अध्रिगुः। "अपि वा" गोरनित्यत्वात् "प्रशासन मेव" एतत् "अभिप्रेतं" स्यात्। अध्रिगुर्नाम कश्चिदस्ति दैव्यः शमिता, तस्यैतत् प्रशासनं स्यात्, सम्प्रेषण मित्यर्थः ‡। किं कारणम्? "तच्छब्दवत्त्वात्"। तथा ह्यस्य मन्त्रस्य अध्रिगुशब्दवत्त्वं यदेतदुक्त मुपपद्यते। तदनेनैव निगमेन "अध्रिगो शमीध्वम्"—इति §। हे 'अध्रिगो!' सर्व्व एव यूयं 'शमीध्वम्' "शमयध्वम्" एनं पशु मिति। "दैव्याः शमितार आरभध्वम् ०——०आशासाना मेधपतिभ्यां मेधम्०——०नेदस्तोके तनये रवितारवच्छमितारः०——०अध्रिगो शमीध्वम्"—इति ‖ प्रैषः। हे

---

* "भवत्याङ्गूष"—इति क, ख।

† १भा० ४१४ पृ० ५ पं०।

‡ "अग्निर्वै देवानां होताऽऽसीत्, स एनं वाचा व्यशाद्, वाचा वा एनं होता विशास्ति"—इति ऐ० ब्रा० २, १, ७।

§ ऐ० ब्रा० २, १, ७।

‖ "दैव्याः शमितार आरभध्व मुत मनुष्याः * * * उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम् * * * प्रास्मा अग्निं भरत * * * स्तृणीत बर्हिः * * * अन्वेनं माता मन्यता मनु पितानु भ्राता सगर्भ्योऽनुसखा सयूथ्यः * * * उदीचीना मस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राण मन्ववसृजतादन्तरिक्ष मसुं दिशः श्रोत्रं पृथिवीं शरीरम् * * * एकधाऽस्य त्वच माच्छ्यतात् पुरा नाभ्या अपि-

'दैव्याः !' 'शमितारः !' अपि च हे 'मनुष्याः !' 'आरभध्वम्' 'उपनयत' च एनं पशुम्। एताः 'मेध्याः'* 'दुरः' यज्ञस्य द्वार इत्यर्थः। 'आशासानाः' प्रार्थयमानाः, 'मेधपतिभ्याम्'† आभ्या मग्नीषोमाभ्यां मेधम् एनं पशुं शमयितुम्। किञ्च; 'प्र अस्मै अग्निं भरत' प्रभरतास्मै पशवे सञ्ज्ञप्यमानाय अग्नि मुल्मुकम्, पुरस्ताद्धारयतेत्यर्थः‡। किञ्च; 'स्तृणीत बर्हिः' अस्मै पशवे सञ्ज्ञप्यमानाय, उपाकरण मेनं दर्भ मपास्यतेत्यर्थः§। किञ्च; 'अन्वेनं माता मन्यताम्' एनं सञ्ज्ञप्यमानं माता अनुमन्यताम्। 'अनु' मन्यतां 'पिता'। 'भ्राता सगर्भ्यः' 'अनु'मन्यतां सहगर्भीयः, सहोदर इत्यर्थः। 'अनुमन्यतां' चैनं 'सखा सयूथ्यः' सहयूथचारी; 'अनु' मन्यता मेन मेभिः सञ्ज्ञपयतेत्यभिप्रायः। किञ्च; 'उदीचीनाम् अस्य पदो निधत्तात्' उदक्पाद मेनं सञ्ज्ञपयतेत्यर्थः। किञ्च; सूर्य्यप्रभव मस्य चक्षुः, ततः 'सूर्य्यम्'

शसो वपा मुत्खिदतादन्तरेवोष्माणं वारयध्वात् * * * श्येन मस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवांसाऽच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाऽष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्र मस्यानूनं कृणुतात् * * * ऊवध्यगोहं पार्थिवं खनतात् * * * ॥ ६ ॥ अस्ना रक्षः संसृजतात् * * * वनिष्ठु मस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनयं रविता रवच्छमितारः * * * अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्व मध्रिगो * * * ॥ ७ ॥" —इति ऐ० ब्रा० २, १।

* "पशुर्वै मेधः"—इति ऐ० ब्रा० २, १, ६।

† "यजमानो मेधपतिः, * * * यजमान मेव तत् स्वेन मेधेन समर्द्धयति; अथो खल्वाहुः यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरिति। स यद्येकदेवत्यः पशुः स्यात् 'मेधपतये'—इति ब्रूयाद् यदि द्विदेवत्यो 'मेधपतिभ्याम्'—इति, यदि बहुदेवत्यो 'मेधपतिभ्यः'—इति; एतदेव स्थितम्"—इति ऐ० ब्रा० २, १, ६।

‡ "आग्नेयो वाव सर्वः पशुरग्निं हि सोऽनुप्राण्यवनीति तस्मादस्याग्निं पुरस्ताद्धरन्ति"—इति ऐ० ब्रा० २, १, ६।

§ "ओषध्यात्मा वै पशुः, पशु मेव तत् सर्वात्मानं करोति" इति ऐ० ब्रा० २, १, ६।

एव 'गमयतात्'। 'वातम्' अनु 'प्राणम्' 'अन्ववसृजतात्'। 'चक्षुः' शरीरविधारकं प्राणम् 'अन्तरिक्षम्' अन्ववसृजत। 'दिशः' 'श्रोत्रम्' अन्ववसृजत। किञ्च; 'उपाकरणेन' दर्भेण 'सह' साकम् 'एकधास्य त्वचम्' 'आच्छ्यतात्' आच्छातेत्यर्थः। ततोऽनन्तर मेव 'पुरा' 'नाभ्या अपि शसः' तस्माच्छसः प्रशस्तात् प्रदेशाद् 'वपाम्' 'उत्खिदतात्' उद्धरत। किञ्च; 'अन्तरेव' अभ्यन्तरत एव, 'उष्माणम्' अस्य शस्यमानस्य 'वारयध्वात्'। 'श्येन मस्य' श्येनाकृति श्येनवर्णं वा पार्श्वेन 'वक्षः' उरः 'कृणुत'। 'प्रशसा बाहू', 'शला दोषणी'—इति बाह्वोरेवैतदभिधानम् अवयवशः; अत्र बाहु-शब्दः प्रायेणांसयोः वर्त्तते, आ आरत्निसन्धानौ बाहू प्रशस्तौ कुरुत। स्वधित्याकृती,—इत्येकः। शलाशब्दः अरत्न्या मेव वर्त्तते। तौ च शलादोषणी द्रवणसमर्थौ प्रशस्तौ कुरुत। शलाकाकृती निर्म्माणौ कुरुतेत्येके। "श्येन-शला-कश्यपा-कवषा-स्रेकपर्ण्याकृतिविशेषवचनसिद्धसाधनं स्यात्"—इति हि नैयायिकाः पठन्ति। 'कश्यपेवांसा' कश्यपाविव अंसौ कुरुत। किञ्च; 'अच्छिद्रे श्रोणी' अविकले कुरुत। 'कवषोरू' कवषे गतिसमर्थे कुरुत; कवतिर्गत्यर्थः, "च्यवते, कवते, गवते"—इति गतिकर्म्माणः *। पिण्डिकाख्ये ऊरू अच्छिद्रे एव कुरुतेत्यर्थः। 'स्रेकपर्णा' करवीरपत्राणीव 'अष्ठीवन्ता' अस्थिसंयुक्ता कुरुत। 'षड्विंशतिरस्य वङ्क्रयः †, ता अनुष्ठ्योच्यावयताद्' या एता वङ्क्रयः पर्शवः ‡, ता अनुष्ठ्या अनुष्ठानक्रियया प्रच्यावनसमर्थयैव प्रच्यावयत। किञ्च;

---

* १भा० २९१पृ० २ख० १४ख० (२१), (२०), (१८)।

† "षड्विंशतिरस्य वङ्क्रयः"—इति कौषि० ब्रा० १०, ४।

‡ "पार्श्वस्य मूलभूतान्यस्थीनि वङ्क्रिशब्दवाच्यानि"—इति महो० (ऐ०ब्रा०२४,४)।

'गात्रम्' 'अस्य' 'अनूनम्' अविकलं 'कृणुतात्' कुरुत। किञ्च; 'ऊवध्यगोहम्' ऊवध्यं यः पार्थिवो गर्भः, अशुद्धं संवृणोति, तम्*, उत्तरस्थानत्वात् 'खनतात्'। 'अस्ना रक्षः संसृजतात्' असृग्भ्यामिह रक्षांसि युङ्क्तेत्यर्थः। किञ्च; 'वनिष्ठुम्' दृष्ट्वा 'मा राविष्ट' मा शब्दं करिष्यथाः। 'उरूकं मन्यमानाः' उलूकवन्तं वनिष्ठुं मन्यमानाः; उलूको हि भयङ्करत्वात् दृष्ट्वा जनैः विराव्यते,—अय मुलूकोऽय मुलूक इति। तदाकृत्या उलूकसारूप्याद्वनिष्ठोर्मा राविष्टेत्युच्यते। हे शमितारः! 'नेदस्तोके तनये रवितारवच्छमितारः' नैतत् कर्म्म कुर्वतां रवितारवत्, पुत्रेषु पौत्रेषु वः स्यात्; अव्रणशीलं वः पुत्र-पौत्रं भविष्यतीत्यभिप्रायः। हे 'अध्रिगो!' 'शमीध्वम्' एवं यज्ञ 'सुशमि शमीध्वम्' यथा साधु सुशमितः स्यात्तथैनं 'शमीध्वं' हे 'अध्रिगो!' मा प्रमादं करिष्यथ॥ एवमेतस्मिन् दैव्यस्य शमितुः अध्रिगोः† प्रशासनमित्येतदुपपद्यते, तस्य सम्बोध्यत्वादस्मिंश्च प्रैषे‡ यथासमाम्नातं प्रशासनानि द्रष्टव्यानि;—"प्राञ्चा अग्निं भरत"—इत्येवमादीनि§॥

"अध्रिगुरप्यध्रिगुरुच्यते" अधृतगमनोऽसावित्यध्रिगुः। "तुभ्यं श्चोतन्त्य०——०मेधिर"‖। कुशिकपुत्रस्यार्षम्। त्रिराट्। पाञ्चिष्ट-

* "ओषधं वा ऊवध्य मियं वा ओषधीनां प्रतिष्ठा"—इति ऐ० ब्रा० २, १, ९।

† "अध्रिगुर्वै देवानां शमिता पापो निग्रभीता स्वनिष्ठन्य देवेनं तं निग्रभीतृभ्यश्च समुपच्छति"—इति ऐ० ब्रा० २, १, ७।

‡ प्रैषः=ऋत्विजां प्रेषणं कार्येषु। तथा चैतरेयश्रुतिः,—"प्रैष मैच्छन् तत् प्रैषाणां प्रैषत्वम्"—इति २, १, ९। "प्रैषेभिः प्रैषानाप्नोति (य० वा० १९, १९)"—इत्यादयश्च द्रष्टव्याः।

§ ऐ० ब्रा० २, १, ६। पृ० ६१ ष्ट० ११पं० (टीप्पन्याम्)।

‖ "तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य। कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर॥"—इति ऋ० मं० ३, ,२१, ४।

स्तोके* सूक्ते विनियुक्ता। हे 'अध्रिगो' अधृतगमन! 'शचीवः' कर्म्मवन्! 'तुभ्यं' त्वदर्थं मेते 'स्तोकासः' बिन्दवो वपा मतीत्य स्रोतं क्षरन्ति। 'मेदसः' च 'घृतस्य' च। यस्य तवैतदर्त्तते, स त्वं 'कविशस्तः' प्रचरणेप्रचरणे कविभिरभिष्टुतः, 'बृहता' महता 'भानुना' 'भाषा' 'आगाः' आगच्छ। आगत्य चेमानि 'हव्या' हवींषि यानि स्तोकाख्यानि, त्वदर्थं मेव क्षरन्ति 'जुषस्व' संसेवस्व। हे 'मेधिर' यज्ञवन्! इत्यर्थः। एव मत्र "अध्रिगो"—इत्यग्निरुक्तः, तस्मादग्नेरध्रिगुत्व मुपपद्यते॥

"इन्द्रोऽप्यध्रिगुरुच्यते"। तस्यापि न कश्चिद् गमनधारयितास्ति "अस्मा इद्०——०रातंतमा"†। नोधस इय मार्षम्। अहीनसूक्ते शस्यते। 'अस्मै' इन्द्राय 'प्र हर्मि' प्रभरामि 'स्तोमम्', 'प्रयो न' प्रय इव, अन्न मिव; यः स्तोमः हर्मि करोति, तं प्रभरामि। 'तवसे' महते 'तुराय' त्वरमाणाय 'माहिनाय' महनाय होत्रे। किञ्च; 'ऋचीषमाय' ऋक्समाय, स्तुतिसमाय; यावती स्तुतीरुदीर्यते तावानेवासौ भवति, माहाभाग्यात्। 'अध्रिगवे' अधृतगमनाय, अप्रतिहतगमनाय, एवंलक्षणाय 'इन्द्राय', 'ओहम्' अहं प्रापयामि 'ब्रह्माणि' हवींषि 'राततमा' दातव्यतमानि यान्यसावेवार्हति, तानीत्यभिप्रायः॥ एव मस्मिन्नध्रिगुशब्दे इन्द्र-विशेषणत्वादिन्द्राभिधान मित्युपपद्यते॥

---

* पशौ स्तोकानुवचन इदं सूक्तम्। आ० ३, ४. इ०।

† "अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय। ऋचीषमायाध्रिगव ओह मिन्द्राय ब्रह्माणि राततमा॥"—इति ऋ० सं० १, ४, १०, १।

“आङ्गूषः(४४)”—इति *, अनवगतम्। “स्तोमः” अभिधेयः। “आघोषः”—इति शब्दसमाधिः॥ “एनाङ्गूषेण॰——॰उत द्यौः” †। त्रिष्टुप्। कुत्सस्य त्रितस्य वा कूपे पतितस्यार्षम्। वैश्वदेवस्य चरोर्भाग-भवतो याज्यैषा। ‘एनेन’ अनेन ‘वयम्’ ‘आङ्गूषेण’ आघोषणीयेन स्तोमेन ‘इन्द्रवन्तः’ इन्द्रसंयुक्ताः ‘स्याम’ वयम्। ‘तत्’ ततो विश्वे ‘सर्वे’ एव अनवखण्डिताः सन्तः, सर्व्वान् भ्रातृव्यान् ‘अभि’ भवेम। तदेतत् ‘नः’ सर्वमपि ‘मित्रः’ ‘वरुणः’ च ‘मामहन्त’ पुनःपुनर्मह-यन्तां पूजयन्तु। ‘अदितिः’ च पूजयतु। ‘सिन्धुः’ च पूजयतु। ‘पृथिवी’ च पूजयतु। ‘उत द्यौः’ पूजयत्वित्येतदेवानुवर्त्तते॥ एव मत्र स्तोमोऽयम् “आङ्गूष”-शब्देनोक्तः, शब्दसादृश्यादर्थोपपत्तेश्च॥ ७(११)॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः॥ आपातितमन्युस्तृप्रप्रहारी (क्षिप्रप्रहारी तृप्रप्रहारी ‡) सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वर्ज्जीषी सोमो यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीष मपार्ज्जितं भवति तेन-

* १भा॰ ४१४ पृ॰ १२ पं॰।

† “एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥”—इति ऋ॰ सं॰ १,७,१२,४।

‡ बन्धनीचिह्नान्तर्गत मेतन्न दृश्यते क-ख-ग-पुस्तकेषु। “तृपलप्रहारी”—इति रोथ-सम्पादित M-पुस्तकपाठः; “तृप्रप्रहारी”—इति रोथ-सम्पादित A-पुस्तक-पाठश्च। “तृप्रहारी क्षिप्रहारी”—इत्येव दुर्ग-सम्मतः पाठः।

र्जीषी सोमोऽप्यैन्द्रो निगमो भवति*। ऋजीषी वज्रीति। हर्योरस्य स भागो धानाश्चेति धाना भ्राष्ट्रे हिता भवन्ति फले हिता भवन्तीति वा। बभ्रां ते† हरी धाना उप ऋजीषं‡ जिघ्रता मित्यपि निगमो भवत्यादिनाभ्यासेनोपहितेनोपधा मादत्ते बभस्तिरत्तिकर्मा सोमः सर्वाण्यतसानि वनानि नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैन§ मप्राप्य विनश्यन्तीतीन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मोभयप्रधानेत्यपरं श्मशा शु अश्नुत इति वा श्माश्नुत इति वा। अवं श्मशा रुधद्वाः। अवारुधच्छ्मशा वारिति ॥ ८ (१२) ॥

॥ इति पञ्चमाध्यायस्य द्वितीयः पादः ॥ ५, २·

"आपान्तमन्युः(४५)"—इति ||, अनवगतम्, पदैण चानेकार्थम्। "आपातितमन्युः"—इत्यवगमः। "आपान्तमन्युः"—इति ¶। वैश्वामित्रस्य रेणो रिय मार्षम्। त्रिष्टुप्। सूर्य्यस्तुत्यैकाहे निष्केवल्ये विनियुक्ता। आपादितदीप्तिः, उत्पादितमन्युर्वा शत्रुभिः संग्रामे, 'तृपलप्रभर्मा' "तृप्रहारी क्षिप्रहारी, सोमो वेन्द्रो वा"। 'धुनिः' धूनयिता

* "भवति"—इत्यधाव एव च-पुस्तके।
† "बभ्रां रात्रे" च।
‡ ऋजीषि" क, च। "ऋजीषिम्" ग।
§ "दभ्नुवन्त्यर्वाकेवैन" क, च।
|| १भा० ४१४ पृ० १० पं०।
¶ ऋ० सं० ८, ४, १४, ५।

कम्पयिता शत्रूणां पापानाम्। 'शिमीवान्' स्वाधिकारविहितेन कर्म्मणा कर्म्मवान्। 'शक्मान्' हिंसावान्। 'ऋजीषी' यदि सोमोऽभिप्रेतः, तस्य ऋजीषित्व मुपपद्यते; अथेन्द्रोऽभिप्रेतः, तस्य तयोरश्वयोः ऋजीषभागाः * इत्यनयापेक्षया ऋजीषित्वम्। एव मयं मर्द्धर्चः सोमस्येन्द्रस्य वा; यस्मिंस्तु पक्षे सौम्य एषोऽर्द्धर्चः, तस्मिन् पक्षेऽयं तृतीयः पादः सोमेनाभिसम्बन्धयितव्यः ;—य एवङ्गुणयुक्तः 'सोमः', स एतानि 'विश्वानि' सर्वाणि 'अतसा' अनुपक्षीणानि 'वनानि' उदकानि, इतराणि वा वनानि वनस्पत्याख्यानि, स्वेन महिम्ना व्याप्नोति ; स हि तेषा मधिपतिः। एव मेते त्रयोऽपि पादाः सौम्या भवन्ति। उत्तर ऐन्द्र एव,—"नार्वागिन्द्रं प्रतिमानानि देभुः"—इति। नैनम् इन्द्रं प्रतिमानानि, यैः प्रतिमीयन्ते स्तोत्राणि, न तानि दभ्नुवन्ति, नाभिभवितुं शक्नुवन्ति। किन्तर्हि ? अर्वागेव तान् पुनात्येव। तस्मादिन्द्राद् भूत्वा "एनम्" इन्द्रम् "अप्राप्य" एव "विनश्यन्ति", नोपमार्थं कुर्वन्ति ; स हि तेषां विनाशः। एव मेष पाद ऐन्द्रः। एव मुभयप्रधानत्व मस्या ऋचः॥

अथ वैव मन्यथास्या ऋच उभयप्रधानत्वम्। द्वौ प्रथमौ पादावैन्द्रत्वेन व्याख्यायेते, तृतीयपाद मुल्लङ्घ्य चतुर्थः पादः आद्याभ्या मभिसम्बन्धयितव्यः। योऽय मेवङ्गुणविशिष्ट इन्द्रः, आपादितमन्युः दृढप्रहारी, धुनिः, शिमीवान्, शक्मान्, ऋजीषी च ; त मेन मिन्द्र मेवम्प्रभावं न प्रतिमानानि दभ्नुवन्ति। किन्तर्हि ? अर्वागेवैन मप्राप्य वर्त्तमानानि विनश्यन्ति। एव मेते त्रय ऐन्द्राः पादाः ;—द्वा-

* "ऋजीषं नीरसं सोमलतापूर्णम्"—इति महो॰ (ऐ॰ ब्रा॰ ब॰ १८, ७१)। नीरसं ग्रावभिर्निष्पीडितरस मित्यर्थः

वायौ चतुर्थश्च। अयं तृतीयः सौम्यः,—"सोमो विश्वान्यतसा वनानि"—इति। यः "सोमः, सर्वाण्यतमानि वनानि" महिम्ना व्याप्नोति, यश्च "इन्द्रं न प्रतिमानानि दभ्नुवन्ति" तौ सोमेन्द्राविदं नाम कुरुता मित्याशीर्याज्या॥

"एके" पुनः "इन्द्रप्रधाना" एवेय मृक् "इति" एवं मन्यन्ते;—"नैघण्टुकम्" अस्यां "सोमकर्म"—इति; तेषा मियं योजना,—य इन्द्र आपातितमन्युः; तृप्रहारी, धुनिः, शमीवान्, शरुमान्, ऋजीषी च, स सोम इव अतमानि वनानि इदं सर्वं व्याप्नोति;। न चैनं प्रतिमानानि दभ्नुवन्ति। किन्तर्हि? एन मिन्द्र मप्राप्यैव विनश्यति। एव मिन्द्रप्रधानैव भवति। एव मस्या ऋचः त्रिधा समामार्थो बोद्धव्यः। तथाहि भाष्यकारेण दर्शितम्। सोमस्य ऋजीषित्वोपपादनार्थं माह भाष्यकारः *,—"यत्सोमस्य पूयमानस्यातिरिच्यते" रसादन्यदसार मतिरिच्यते, "तदृजीषम्"—इत्युच्यते। तद् "अपार्जितम्" अपवर्जितं "भवति", कल्कभूतत्वात्† "तेन" संयोगाद् "ऋजीषी सोमः" उच्यते॥

"अथ" यस्मिन् पक्षे "ऐन्द्रः" अर्द्धर्चो भवति, एतस्मिन् पक्षे इन्द्रस्य ऋजीषित्वाभिधायकः एषः "निगमः भवति"। इन्द्रस्य ऋजीषित्व मनुपपन्नं मन्यमानो निगमं पठति;—"ऋजीषी वज्री वृषभः०—०मदिन्तुन्द्रः"‡। अत्रेरिय मार्षम्। त्रिष्टुप्। ऋजीषेण

---

* यास्कः (निघण्टु-भाष्यकारः = निरुक्तकारः)।

† ग्रावभिः पिष्टत्वादिति भावः। तथा हि,—"द्रव्य मार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत्"—इत्यादि कल्कलक्षणम्। चा० वि० ख० ९ अ०।

‡ "ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा। युक्त्वा हरिभ्या मुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रः॥"—इति ऋ० सं० ४, २, ११, ४।

तद्वान् 'ऋजीषी', वज्रेण तद्वान् 'वज्री', 'वृषभः' वर्षिता कामानाम्, 'तुराषाट्' बलवान्, 'राजा' अधिपतिः, 'वृत्रहा' वृत्रघ्ना, 'सोमपावा' सोमस्य पातेत्यर्थः। य एवङ्गुणयुक्त इन्द्रः, स 'युक्ता' 'हरिभ्याम्' अश्वाभ्यां रथं तम् अधिरुह्य 'उपयासत्' उपागच्छत् । 'अर्वाङ्' अस्मानाभिमुख्येन, 'माध्यन्दिने सवने' एतस्मिन् प्राप्ते 'उप' उपगम्य च 'मत्सत्' माद्यताम्, अस्मत्प्रदत्तेन सोमेनेत्यर्थः॥

एव मेतस्मिन् मन्त्रे 'ऋजीषी' इन्द्र उक्तः। तत्पुनरेतदृजीषित्व मिन्द्रस्य न विज्ञायते, केन कारणेनेत्यतस्तदुपपादनार्थं माह,—"हर्योरस्य स भागः"—इति । हर्योरेवाश्वयोरस्येन्द्रस्य स भागो यदृजीषम् । "धानाश्च" । प्रसङ्गादत्र धाना उक्ताः * । तदुक्तम्,—"हर्योर्भागा हरिवतोः"—इति † । तेन हरिसंयोगेन ऋजीषेण लक्षितलक्षणया वृत्त्या इन्द्रस्य ऋजीषित्वम्॥

आह ;—"धानाः" कस्मात्? उच्यते ;— ता हि "भ्राष्ट्रे हिताः" भवन्ति‡ ; अथ "वा" भ्राष्ट्रादवतार्य्य "फले" फलके "हिताः" निहिताः "भवन्ति"। तत्र हि ता विसार्यन्तेति दाहभयात्। यथा ऋजीषं धानाश्च हर्योरश्वयोरिन्द्रस्य च भागस्तथैव निगमः ;— बभ्रां ते हरी धाना उप ऋजीषं जिघ्नताम्'—इति। अत्र 'बभ्राम्'—इत्येतस्मिन्पदे य एषः "बभस्तिः" धातुः, "अत्तिकर्मा" भक्षणार्थः§। सः

* "धानाः करम्भः सक्तवः परीवापः पयो दधि। सोमस्य रूपꣳ हविष आमिक्षा वाजिनं मधु"—इति य० वा० सं० १९, २१ ।

† "हरिवते हर्यश्वाय धानाः"—इति ऋ० सं० २, २, १८, १ ।

‡ "धाना भ्रष्टयवे स्त्रियः"—इति अ० को० १, ७, ४७ ।

§ १ भा० २१४ पृ० १ पं० द्रष्टव्यम् ।

"आदिनाभ्यासेनोपहितेनोपधा मादत्ते" आदावभ्यासेनोपहितेनोपधा मादत्ते, धकारेण निमित्तभूतेन उपधा मकार मादत्ते, सुम्नति। "घसिभसोर्हलि च (पा० ६,४,१००)"—इत्यकारलोपः, ततो धत्वे कृते, जश्त्वे च कृते, बप्सा मित्येतद्रूपं भवति॥ "धानाः सोमाना मिन्द्राद्धि च पिब च बप्सां ते हरी धाना उप ऋजीषं जिघ्रता मा-रथचर्षणे सिञ्चस्व। यत्त्वा पृच्छाद् वृषन् पत्नी कामीमदया इत्यस्मिन् सुम्नति यजमाने तस्मै किं मराम्याः सुष्ठु सुवीर्यं यज्ञस्यागुर उद्धृषं यद्यदक्षीकमतां तत्तथाभुङ्क्तात्यज" । हारियोजनाख्यायं प्रैषः । हे इन्द्र!' 'अद्धि' भक्षय 'धानाः'। 'सोमानाम्' एतेषाम् स्वभूतं रसम् 'पिब च' अस्य हारियोजनस्य सोमस्य*। किञ्च; 'बप्साम्' भक्षयतां 'ते' तव एतावश्वौ 'हरी' एताः 'धानाः'; 'उप ऋजीषं जिघ्रताम्' उपजिघ्रता मृजीषञ्च। 'आ रथचर्षणे सिञ्चस्व' जठरे सोम मेनम् हे 'रथचर्षणे' रथगमन! आसिञ्चस्व। किञ्च; 'यत्त्वा पृच्छात्' यदि त्वां पृच्छेत् गृह मनुप्राप्त मस्मद्यज्ञात् हे 'वृषन्' वर्षितः! 'पत्नी कामीमदयाः' क पीतवांस्त्वम्? अतो ब्रूयाः,—त्व मस्य यजमानस्य नाम गृहीत्वा; 'अस्मिन्' 'सुम्नति' सोम मभिषुण्वति 'यजमाने'। ततः सा यदि पुनरपि पृच्छेत् 'तस्मै' परितुष्टः त्वं 'किं मराम्याः' किं दत्तवानसि? ततः तां प्रति ब्रूयाः,—'सुष्ठु' 'सुवीर्यं' शोभनं वीर्यम् अहं मस्मै दत्तवान्। 'यज्ञस्य आगुर उद्धृषम्' यदसावनेन

* "हारियोजन मेतत्सूक्तकं धानाभिमिश्रितम्"—इति सा० भा० (ऋ० सं० १, ८२ ४)। किञ्च; "हर्योरश्वयोर्योजनं यस्मिन्नुचे स तथोक्तः, तस्य स्वामित्वेन सम्बन्धी हरियोजनः। हे 'हरियोजन!' इन्द्र!"—इति च सा० भा० (ऋ० सं० १, ६१, १६)।

यज्ञेन आगूर्णवान् प्रार्थितवान् अभूत्, तत् सर्वं मह्य मदात्; 'यज्ञस्य' योतदृष्टां रूपं दीप्तिं मह्य मदा मर्त्यं। किं बहुना, 'यथा' 'अवीकमताम्' यद्यत्कामितवानयं यजमानः फल मस्य कर्मणः, 'तत्' सर्व मेतत् 'तथा' प्रार्थित मेव 'अभूत्'; न कश्चिदस्य मृषा कामो बभूवेत्यभिप्रायः। हे 'होतः' त्व मपि योऽय मेवङ्गुणविशिष्ट इन्द्रः, तं सहरिभ्यां 'यज *'—इति॥ एव मत्र "हरी उपजिघ्रताम्"—इत्ये-तस्माद् विशेषलिङ्गात् सजोषित्व मश्वयोः; अश्वयोगाच्च सजोषित्वं लक्षितलक्षणया इन्द्रस्योपपद्यते॥

"श्मशा"(४९)—इति, अनवगतम्†। "स्वाशिनी", "शमाशिनी" —इति वावगमः। स्वाशिनी = शमाशिनी = शीघ्रव्यापिनी कुल्या, नदी वा। शमाशिनी पुनर्नाडी; सा हि शं शरीरं व्याप्नोति। एव मेतदिह विमृश्यमान मनेकार्थ मपि भवत्येव॥ "कदा वसो स्तोत्रं०—०वाताप्याय"—इति‡। कुत्सपुत्रस्य दुर्मित्रस्यार्षम्। उष्णिक्। ऐन्द्रस्य सूक्तस्य प्रथमेयम्। हे 'वसो' वसुमन्! इन्द्र! 'कदा' कस्मिन् काले 'स्तोत्रम्' एतन्मयोदीरितम् 'अस्य' यजमानस्य 'हर्यतः' कामयतः, कामान् प्रार्थयतः, त्वाम् 'ऋधद्' उपरोत्स्यति। 'श्मशा' इव 'वाः' कुल्येवोदकं विसर्पमाणम्; नाडीव वा, अथवा

* "यजोतिं शय्यारूपम्"—इति य० वा० सं० १९, २४। तत्रैव "यजोतिशब्दो शय्याया रूपम्; निष्केवल्ये स्तोत्रियानुरूपयोरनन्तरं शय्या शस्यते यजोतिशब्दो ज्ञेयः"—इति महीधरः।

† १भा ४१५ पृ० ५पं०।

‡ "कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः। दीर्घं सुतं वाताप्याय॥"—इति ऋ० सं० ८, ५, १९, १।

आध्यात्मिकी नाडी, शरीराश्रितं रसम्। आह, कतमत् सोमम्? इति, उच्यते;—यदेतत् 'दीर्घं सुतं' सोमं सत्राख्यं सुत मभिषुतं प्रवर्त्तते, 'वाताप्याय' उदकार्थम्॥ एव मेतस्मिन् "सस्रा"—इत्येतत् नाड्यभिधानं कुल्याभिधानं वा शब्दोपपत्तेः, अर्थोपपत्तेश्चेति॥ ८ (१२)॥

इति निरुक्तवृत्तौ दशमाध्यायस्य (पञ्चमाध्यायस्य)

द्वितीयः पादः॥ ५, २॥

॥ तृतीयः पादः॥

उर्वश्यप्सरा उर्वभ्यश्नुत ऊरुभ्या मश्नुत उरुर्वा वशोऽस्या अप्सरा अप्सारिण्यपि वाऽप्स इति रूपनामाप्सातेरप्सानीयं भवत्यादर्शनीयं व्यापनीयं वा स्पष्टं दर्शनायेति शाकपूणिर्यदप्स इत्यभक्षस्याप्सो नामेति व्यापिनस्तद्रा भवति रूपवती तदनयात्त मिति वा तदस्यै दत्त मिति वा तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द तदभिवादिन्येषग्भवति॥ १ (१३)॥

"उर्वशी"(४०)—इति *, अनवगतम्। "अप्सराः"—इत्यभिधेयवचनम्। "उर्वभ्यश्नुते"—इति व्युत्पत्तिः। उरु, महद् यशोऽभिव्याप्नोति। अथ वा "ऊरुभ्यां" मैथुने धर्मे पुरुषम् "अश्नुते" व्या-

* १भा० ४१५ पृ० १० पं०।

प्नोतीति उर्वाह्निनी सती उर्वशीत्युच्यते। अथ "वा" "उरुः" महान् "अस्याः" "वशः" कामः, सेय मुरुवशिनी सती उर्वशीत्युच्यते। एताः शब्दसमाधयः ॥

अधुना "अप्सराः"—इत्येतं शब्दं समाख्यानप्रसक्तं निर्ब्रवीति। आह;—"अप्सराः" कस्मात्? उच्यते;—सा हि "अप्सारिणी" भवति, अपः प्रति नित्य मेव सरति; तत्प्रभवत्वात् तदेव तस्याः प्रिय मुदकम्, तस्मादप्सराः। अथ वा अद्भ्यः सृतेत्यप्सराः। "अपि" चैव मन्यथा स्यात्;—"अप्सः—इति" एतत् "रूपनाम"। "अ-प्सातेः" प्रतिषेधपूर्वस्य प्सातेः भक्षणार्थस्य (अदा॰ प॰); तद्धि "अ-प्सानीयम्" अनदनीयं "भवति"; न हि तद्भक्ष्यते, किन्तर्हि? "आदर्शनीयं" तदाभिमुख्येन स्थित्वा द्रष्टव्य मेव भवति चक्षुषा; न पुनर्मुखेन भक्षयितव्य मित्यर्थः। "व्यापनीयं वा" व्यापन मर्हति। "आप्‌ऌ व्याप्तौ (स्वा॰ प॰)", तस्य वा अप्सः; तद्धि नायनेन रश्मिना आत्मनः प्रत्ययाधानार्थं व्यापयितव्यं भवति। "स्पष्टं दर्शनायेति" "शाकपूणिः" आचार्यो मन्यते; न ह्येतदस्पष्टं दर्शनाय, किन्तर्हि? स्पष्ट मेवेत्यर्थः। "यदप्सः—इत्यभक्षस्य" पुरस्तादुक्तम्,—"अपि वाप्स इति रूप नाम, अप्सातेः"; न हि तद्भक्ष्यते, किन्तर्हि? दृश्यते तदिति। तत्र "अभक्षस्य" अप्सः-शब्दवाच्यत्वप्रख्यापक एष निगमः;—"यदेनश्चकृम यदप्सश्चकृमा वयम्"—इति। "यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यदेनश्चकृमा वयं यदप्सश्चकृमा वयं यदेकस्यापि धर्मणि एनस्ततोऽवयजन मसि स्वाहा"—इति *। वरुणप्रघा-

* य॰ वा॰ सं॰ २०, १७। तत्र च पाठे भेदः।

येषु करम्भपात्रहवने पत्नीयजमानयोर्मन्त्रः ; 'यद्ग्रामे' 'वयं' किञ्चित् 'एनः' चकृम, 'यत्' च 'अरण्ये', 'यत् सभायाम्', 'यत्' च 'इन्द्रिये' प्रजनने निमित्तभूते सति, 'यत्' च अन्यत्रापि क्वचिद्ग्रामादिभ्यो 'वयम्, 'एनः' 'चकृम' कृतवन्तः, 'यत्' च 'अप्सः' 'चकृम' यदभक्ष्य-भक्षणं कृतवन्तः, 'वयं' किञ्चिन्नदेवानेकप्रकार मेकैकस्यापि आवयो-श्चेतसि निमित्तभूतं उत्पन्नं किञ्चित्, 'यदेकस्यापि धर्म्मणि' तदनेक-प्रकार मेकस्यावयोः कर्म्मणि निमित्तभूतम्,— यच्च मह्त् कृतम्, यच्च पृथक् कृतम्, यच्च मानसम्, यच्च शारीरम्, तस्य सर्वस्य एनसो-ऽस्माकं अपनयनं कृत्वा ततः 'अवयजन मसि' मरुतां हे हविः! करम्भपात्राख्यं प्रघासान् ह्वामहे। "मरुतः"—इत्यतो विशेष-लिङ्गान्माह्तत्व मस्यावसीयते ॥ यद् "अप्सः"—इत्येष शब्दः अभ-क्ष्यस्याभिधायको दृष्टः, तस्मात्साधूक्तं "अपि वाप्स इति रूपनामा-प्सातेः"—इति (७३ पृ० ११पं०) ॥

अधुना यदुक्तं "व्यापनीयं वा"—इति (७३पृ०१२पं०), "आप्लृ व्याप्तौ (स्वा०पं०) इत्यस्य वाप्स इति तस्यार्थस्य व्यापकं निगमं ब्रवीति;— "अप्सो नामेति व्यापिनः"—इति। यथा आप्नोतिः अभिव्याप्त्यर्थः, तस्या इत्येतदुपनाम भवति, तथैष निगमः;—"पृथिव्याः पुरीष मस्यप्सो नाम, तां त्वा विश्वे अभिगृणन्तु देवाः। स्तोमपृष्ठा घृतवती-सीद प्रजावदस्मे द्रविणा यजस्वाश्विनाध्वर्यू सादयता मिह त्वा"*— इत्यग्निचयने द्वितीयायां चितावाश्विन्यो नामेष्टकाः, तासा मेकस्या मय मुपधानमन्त्रः। 'पृथिव्याः' 'पुरीष मसि' पूरयित्र्यसि। हे इष्टके!

* य० वा० सं० १४, ४।

'अप्सो नाम', 'तां' 'त्वाम्' एवङ्गुणयुक्तां सतीं 'विश्वे' सर्वे 'अभि ष्टणन्तु' अभिष्टुवन्तु 'देवाः'। किञ्च; सा त्वं सोमपृष्ठादेव उदीरितेन सोमेन सृष्टा 'घृतवती' उदक-संश्लेषिता 'इह' अग्निचयने 'आसीद'। किञ्च; 'अश्विना' अश्विनौ देवौ 'अध्वर्यू' 'मादयताम् इह त्वाम्'; तौ हि सञ्ज्ञानीतौ यथा त्वं सादयितव्येत्यभिप्रायः। एव मत्रापे-ष्यार्थमप्सरःस्याप्स इत्युपपद्यते, इह लक्षणार्थासम्भवात्॥

एवं तावदप्सरा इत्यस्याभिधानस्याप्स इत्ययमेकदेश उपपादित; अधुना 'रा'—इत्येकदेश मुपपादयिष्यन्नाह;—"तद्रा भवति रूप-वती"। रो मत्वर्थे, तेनाप्सशब्दवाच्यत्वेन रूपेण तद्वती सा भवत्यप्सराः तद्रा भवतीत्येव मुक्तेऽपि सति रेफस्य मत्वर्थता न गृह्यत इति मन्य-मानो भाष्यकारः, स्पष्ट मेव मत्वर्थ माह; यदुक्तम् रूपवतीति रूप-संयुतेत्यर्थः। तस्या एव सर्वयोषिद्भ्यः प्रति विशिष्टं रूप मित्यभिप्रायः। अथ "वा" एव मन्यथा स्यात्,—"तदनया" अप्स-शब्दवाच्यं रूपम् "आत्तं" गृहीत मेव कुतश्चित्। एतस्मिन् पक्षे 'रा'—इत्यय मादा-नार्थः। अथ 'वा' एव मन्यथा स्यात्,—"तत्" अप्सशब्दवाच्यं रूप मतिरिक्त मिव "अस्मै" "दत्तम्" विधात्रा। तथाहि ते तस्मादति-शयेनानयापि च लक्ष्यते। एतस्मिन् 'रा'—इत्ययं दानार्थः*॥

"तस्याः" एवङ्गुणविशिष्टाया उर्वश्या अप्सरसो "दर्शनात्" "मित्रावरुणयोः रेतः"† "चस्कन्द" स्कन्नम्। "तत्" तस्यार्थस्य "अभिवादिनी" "एषा ऋग् भवति"——१(१३)॥

---

* १ भा० ३५५ पृ० ३ अ० १० ख० (४)।

† "मैत्रावरुणं प्रगाथं शंसत्यहर्वै मित्रो रात्रिर्वरुणः"—इति ऐ० ब्रा० ४, १, ४। उदकनामसु (१भा० १०४ पृ०) 'रेतः' द्रष्टव्यः।

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि-जातः। द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त॥ अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातो द्रप्सं स्कन्नं ब्रह्मणा दैव्येन द्रप्सः संभृतः प्सानीयो* भवति सर्वे देवाः पुष्करे त्वाधारयन्त पुष्कर मन्तरिक्षं पोषति भूतान्युदकं पुष्करं पूजाकरं पूजयितव्य मिद मपीतरत् पुष्कर मेतस्मादेव पुष्करं वपुष्करं वा पुष्पं पुष्यतेर्वयुनं वेतेः कान्तिर्वा प्रज्ञा वा॥२(१४)॥

"उतासि मैत्रावरुणः"—इति †। वसिष्ठस्य सपुत्रस्येय मार्षम्। तस्यैव स्तुतिरिन्द्रस्य वा। 'उत'—इति, अयम् 'अपि'-शब्दार्थे वर्त्तमानोऽधस्ताया ऋचि ये जन्मनी वसिष्ठस्योक्ते, ते सम्भावयति। सा पुनरियं ऋक्;— "विद्युतो ज्योतिः०—०जभार" ‡। 'विद्युतः' विशेषेण, द्योतते देदीप्यते इति विद्युत्=उर्वशी—इति; अस्मात्। 'ज्योतिः' प्रकाशः। तस्मात् 'परि' परितोऽधिकं 'सञ्जिहानम्' उत्तिष्ठन्तम्, जायमान मित्यर्थः। 'मित्रावरुणौ देवौ§ 'यत्' 'अपश्यतां' 'त्वा'

* "सम्भृत प्सानीयो"—इति क, ख. ग, घ। "सम्भृतप्सानीयं"—इति ङ। परं ख-ग-पुस्तकयोः "सम्भृतः प्सानीयो"—इत्येव शोधिततया दृश्यते, वृत्तिपाठस्यैव मेव।

† ऋ० सं० ५, ३, २४, १।

‡ "विद्युतो ज्योतिः परि सञ्जिहानं मित्रावरुणा यदपश्यतां त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार॥"—इति ऋ० सं० ५, ३. २३, ५।

§ मित्रः — प० दै० १०, १, ८। वरुणः — प० दै० १०, १, २।

त्वाम्' 'तत्' 'ते' तव 'जन्म' एकम् हे 'वसिष्ठ'! 'उत' अपि च 'यत्' 'त्वा' "अगस्त्यो विश आजभार" 'अगस्त्यः' ऋषिः 'विशः' मनुष्यान् प्रति, मनुष्यलोकम् 'आजभार' आहृतवान्, 'तत्' 'ते' तव द्वितीयं जन्म॥

'उतासि' अपि चासि 'मैत्रावरुणः' हे 'वसिष्ठ!'। कथं पुन-र्मित्रावरुणयोरुत्पन्नोऽसि—किं सङ्घर्षेण? न, इत्युच्यते,—'उर्वश्याः' सकाशात्। हे 'ब्रह्मन्!' 'मनसोऽधिजातः' न सङ्घर्षणेन। किन्तु; निर्बीज एवासि, मनोऽभिधानमात्रादुत्पन्नः? न, इत्युच्यते। किन्तर्हि? 'द्रप्सं' शुक्रम्, उर्वशी-दर्शनात् 'स्कन्नं' मित्रावरुणयोः। 'ब्रह्मणा' 'दैव्येन' देवानां स्वभूतेन, ऋग्यजुःसामाख्येन स्तुवन्तः 'विश्वेदेवाः' मा एतद् भूमौ पतेदिति कुम्भस्योपरि 'पुष्करे' उदके, अन्तरिक्षे वा 'त्वा' त्वाम्, तेन शुक्रेण मह्ह्कृता मुपगतम् 'अददन्त' अधारयन्तेत्यर्थः॥ एव मेतस्मिन् "द्रप्सं स्कन्नम्"—इत्यादिना सम्बन्धेन "उर्वशी"-शब्देन "अप्सराः"—इत्युपपद्यते॥

"ऐन्द्रेण किल तेजसा निदधे वसिष्ठः, मित्रपरिगृहीताया मुर्वश्या मुत्पन्नो वरुणतेजसा जातः"—इति पुराणात् श्रूयते, तद-प्युपेक्षितव्यम्* ॥

अनेकविधो मन्त्राणां विषयः; वसिष्ठस्येय मार्षं युष्मदस्माच्च प्रयोगः,—"उतासि"—इति; तदेतद्विरुद्धार्थं मुपलक्ष्यते? नैत-द्विरुद्धम्, नित्यत्त्वान्मन्त्राणां भवति† ॥

---

* "उर्वशी वा अप्सराः पुरूरवाः पतिः"—इत्यादि "उर्वशी हाप्सराः पुरूरवस मैडं चकमे"—इत्यादि च श० ब्रा० २. ४, १, २२; ११, ५, १, १।

† वसिष्ठेत्यादिगोत्रनामेति स्वीकारे वा का हानिः?

आह ; रेतः कस्मात् "द्रप्सः"—इत्युच्यते ? स हि रेतः-सञ्ज्ञको रसः, पुरुषस्याङ्गादङ्गात् "सम्भृतः", स्त्रीयोनेः "प्सानीयो भवति" भक्षणीयो भरणीयश्च । एवं प्साते: (अदा० प०) भरतेश्च (भ्वा० उ०) यथासम्भवं "द्रप्सः"—इत्येष शब्दो द्रष्टव्यः ॥

पुष्करशब्दोऽनेकार्थः, त मिह प्रसक्तं व्याचष्टे;—"पुष्कर मन्तरिक्षम्"; तद्धि "पुष्णाति भूतानि" अवकाशदानेनोपकुर्वत् । "उदकम्" अपि "पुष्करम्" ; तेन हि पूजा क्रियते, पूजाकरत्वात् पुष्करम् । अथ वा "पूजयितव्यम्" पूजनार्ह मात्मन एवेति पुष्करम् । "इदम्" "इतरत्" पद्मम् "एतस्मादेव" कारणात् "पुष्करम्"—इत्युच्यते ; तदपि हि पूजाकरं पूजयितव्यम् शोभनत्वात्तस्य । अथ "वा" "पुष्करं" तदिति "वपुष्करम्" ; व्यवहृते हि तस्मिन् वपुष्मान् भवति ॥

पद्म-प्रसङ्गात् पुष्प-शब्दं निराह ;—"पुष्पं पुष्पतेः"—इति । पुष्पतिः विकसनार्थः (दि० प०) ; तद्धि विकसितं भवति ॥

"वयुनम्(४८)" – इति *, अनेकार्थम्, अनवगतम् । "वेतेः"—इति धातुनिर्देशः ; वेनम्—इति न्याय्यम् । "कान्तिर्वा" अभिधेया "प्रज्ञा वा" ॥ २ (१४)॥

स इत्तमोऽवयुनं ततन्वत् सूर्येण वयुनवच्चकार । स तमोऽप्रज्ञानं ततन्वत् स तं सूर्येण प्रज्ञानवच्चकार वाजपस्त्यं वाजपतनम् । सनेम वाजपस्त्य मित्यपि निगमो भवति । वाजगन्ध्यं गध्यत्युत्तरपदम् । अश्यामवाजगन्ध्य

* १आ० ४१५ पृ० १८ पं० ।

मित्यपि निगमो भवति। गर्ध्यं गृध्यतेः। कृत्वा वाजं न गर्ध्यं युयूषन्नित्यपि निगमो भवति। गध्यतिर्मिश्रीभावकर्म्मा। आगधिता परिगधितेत्यपि निगमो भवति। कौरयाणः कृतयानः पाकस्थामा कौरयाण इत्यपि निगमो भवति। तौरयाणस्तूर्णयानः। स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्रसखिभिः सजोषा इत्यपि निगमो भवत्यह्रयाणोऽह्रीतयानः। अनुष्टुया कृणुह्यह्रयाणेत्यपि निगमो भवति। हरयाणो हरमाणयानः। रजतं हरयाण इत्यपि निगमो भवति। य आरितः कर्मणि-कर्मणि स्थिरः। प्रत्यृत स्तोमान् व्रन्दी व्रन्दतेर्मृदुभावकर्म्मणः ॥ ३ (१५) ॥

स इत्तमोऽवयुनं०—०स्वधावः"*। भरद्वाजस्यार्षम्। त्रिष्टुप्। ऐन्द्रे सूक्ते व्यूढस्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते। यस्त्व मेवङ्गुणविशिष्टो हे भगवन्निन्द्र! यथागुणं त्वा मवोचाम। 'सः' त्वम् 'इत्' एतत् शार्वरं 'तमः' 'अवयुनम्' अ-प्रज्ञानलक्षणं 'ततन्वत्' स एव तं सर्व मेवैनं लोकं स्वेन प्रकाशात्मेन सन्तनोति 'सूर्य्येण वयुनवत्' "प्राणो हीन्द्रः, तस्मात्सूर्य उदेति, प्राणाद्वा एष उदेति, प्राणेऽस्तमेति"—इति ह्युक्तम् †। तस्मात्प्राण इन्द्रः, सूर्यस्योदयहेतुः,

* "स इत्तमों० —— ०चकार। कदा ते मर्त्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः ॥"—इति ऋ० सं० ४, १, ११, ३।

† "उद्यन् खलु वा आदित्यः सर्वाणि भूतानि प्राणयति, तस्मादेनं प्राण इत्याचक्षते।"—इत्यादि ऐ० आ० ५, ५, १।

स तं सूर्य मुद्गमयत्। तेन 'सूर्येण' 'वयुनवत् चकार' एतज्जगत् ज्ञानवत् करोति। तस्मात् स एवेन्द्र एव मुच्यते ;—सूर्येण स मेतज्जगद्वयुनवत्प्रज्ञानत् चकार कृतवानसीत्यर्थः। यस्य मेवम्प्रभावः तस्य 'कदा' कस्मिन् काले 'मर्त्ताः' मरणधर्म्माणो मनुष्याः 'अमृतस्य' अमरणधर्म्मिणः 'धाम' स्थानं 'दूयन्तः' यष्टु मिच्छन्तः 'न मिनन्ति'। न अयन्ति हे 'स्वधावः!'। अत्र च न सर्वदैवतं चापरिक्लिष्टं स्थानम्, कृतावकाशस्त्वं यज्ञेष्वित्यभिप्रायः॥ एव मिह "तमः ततन्वत् सूर्येण", "वयुनवत् चकार"—इति अनेन सम्बन्धाद् "वयुन"-शब्देन प्रज्ञान मित्युच्यत इत्युपपत्तिः। कान्त्यर्थत्व मपि कचिदुपेक्ष्यम्; इहैव वा पक्षेण योज्यम्॥

"वाजपस्त्यम्(४९)"—इति *, अनवगतम्। "वाजपतनम्"—इत्यत्रगमः। "तं सखायः पुरोरुचम्०—०वाजपस्त्यम्" †। पावमानी सौमी। अम्बरीष ऋजिश्वा च सूक्तं ददृशतुः, तस्यैषा। 'तम्' एनं सोमं हे 'सखायः!' ऋत्विजः! 'पुरोरुचम्' अग्रतो दीप्तम्, 'यूयं वयं च' सम्पृक्ताः सन्तः, हे 'सूरयः!' मेधाविनः! 'अश्याम' व्याप्नुयाम वयम् 'वाजगन्ध्यम्' प्रति विशिष्टान्नसमानगन्धम्; अथ वा वाजग्रहीतारम्; अथ वा वाजसन्निग्रथितारम्। किञ्च; 'सनेम' सम्भजेमहि "वाजपस्त्यम्" वाज मन्नम्, तदस्माक मिति मन्यमानः सन्तो य माभिमुख्येन देवाः पतन्ति गच्छन्ति, स

* १भा० ४११ पृ० ९ पं०।

† "तं सखायः पुरोरुचं यूयं वयं च सूरयः। अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्॥" —इति ऋ० सं० ७, ४, २५, ९।

वाजपस्त्यः सोमः, तं नित्यकाल मेव वयं भजेमहि॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च "वाजपस्त्य"-शब्देन सोम उक्तः॥

"वाजगन्ध्यम्[५०]"—इति *, एतदपि पद मेकस्मिन्नेव निगमे† निरुक्तम्, केवलं समाम्नायानुक्रमविपर्यासः,—"वाजपस्त्यम्, वाजगन्ध्यम्"—इत्येष समाम्नायानुक्रमः‡; निगमे पुनः "अश्याम वाजगन्ध्यम्, सनेम वाजपस्त्यम्"—इति §॥

"गध्यम्[५१]"—इति ||, अनवगतम्। ग्रहणीय मित्यर्थप्रतीतिः। "यासि कुत्सेन०——०पार्याय भूषात्" ¶। वामदेवस्यार्षम्। ऐन्द्री। त्रिष्टुप्। अहीनसूक्ते चतुर्विंश उक्थे माध्यन्दिने सवने मैत्रावरुणस्येयं शस्त्रे शस्यते। हे भगवन्निन्द्र! 'यासि' 'कुत्सेन' ऋषिणा स्तूयमानः, अथ वा 'कुत्सेन' वज्रेणाभ्युद्यतेन, 'सरथं' समानगमनम्, अभिवहन-रथ मारुह्य, अथ वा 'सरथं' रथसंयुक्तं परानीकम्। 'अवस्युः' ररक्षिषुः आत्मीयान्, ममर्दिषुश्च परकीयान्। 'तोदः' तुन्न इव केनचित् 'वातस्य' जवेन यासि। तथापि च गच्छन् 'हर्य्योः' अश्वयोः 'ईशानः' ईश्वरो न धावति त्वयि अन्यत एव त्वा मूरतुः। स त्वं भज 'ऋज्रा' ऋजुनैव मार्गेण न काचिदन्यां गतिं धावमानः; 'वाजं न गध्यम्' वाज मिव ग्रहणार्हं भोक्तु माभिमुख्येन। 'युयूषन्'

* १आ० ४१९ पृ० ५पं०।

† पृ० ८१ पृ० १२ पं०।

‡ १आ० ४०४ पृ० ४ख० १ख० (४९,, (५०)।

§ ऋ० सं० ७, ४, १५, ९।

|| १आ० ४११ पृ० ९ पं०।

¶ "यासि कुत्सेन सरथं मवस्युस्तोदो वातस्य हर्य्योरीशानः। ऋज्रा वाजं न गध्यं युयूषन् कविर्यदहन् पार्याय भूषात्॥"—इति ऋ० सं० ३, ५, १९, १।

पुनःपुनः सम्मिश्रयिष्यन्, आत्मानं शत्रुभिः युद्धे। 'कविः' क्रान्तदर्शनः। 'यदहन्' यस्मिन्नहनि 'पार्याय' पारणाय शत्रूणामुपरि चेतः करोषि; पारयितव्यायेत इति वा, तस्मिन्नेवाहनि माम् सर्वाम् 'भूषात्' अतिक्रम्य वर्त्तसे इत्यर्थः। पर्य्यटकात्, पर्यरक्षत्, अत्यकामत् —इत्येते भूषतेरर्थाः॥ एव मेतस्मिन् शब्दसारूप्यादर्थोपपत्तेश्च "गध्यम्"—इत्येष शब्दो "गृह्णातेः"—इत्युपपद्यते॥

"गध्यतिः(५१)"—इति *, अप्रतीतार्थः। स पुन रेष-"मिश्रीभावकर्मा"। "आगधिता परिगधिता॰——भोज्या शता" †। भावयव्यस्यार्षम्। 'आगधिता' आगृहीता आमिश्रिता च। 'परिगधिता' च परिमिश्रीकृता बाहुभ्यां मया परिष्वक्तेत्यर्थः। 'या' 'कशीकेव' प्रतिकशं कशीकेव; सा हि नकुलजातिः का चित् कशा मिति श्रूयतेऽश्वमेधे ‡। सा यथा मदकाले प्रतिकश मतितरां परिष्वजति; स हि तस्याः परिष्वजनस्वभावः। एवं याम् 'आ जङ्गहे' परिगृह्णाति बाहुभ्याम्। परिगृह्य च 'ददाति'। 'यादुरीया' आदरवती; अथ वा यादसा रेतःसेकेन तद्वती। "यादः" —इत्युदकनामसु पठितम् §। आह; किं ददाति 'मह्यम्'? इति, उच्यते,—'याशूनां' मैथुनाख्यानां 'शता' शतानि बहूनि इत्यर्थः। या एवम्प्रकारा, सा मम 'भोज्या' पत्नीत्यभिप्रायः॥ एव मथ मैथुनसम्बन्धात् शब्दसारूप्याच्च "गध्यतिः" मिश्रीभावकर्मेत्युपपद्यते॥

---

* १भा॰ ४११ पृ॰ १२पं॰।

† "आगधिता परिगधिता या कशीकेव जङ्गहे। ददाति मह्यं यादुरीया याशूनां भोज्या शता॥"—इति ऋ॰ सं॰ १, १, ११, १।

‡ "कशीं विदुष्मः"—इति य॰ वाज॰ सं॰ २४, ३६।

§ १भा॰ ८९पृ॰ १९पं॰ १अ॰ १२ख॰ (४८) वा॰।

"कौरयाणः(४२)"—इति *, अनवगतम्। "कृतयानः"—इत्यवगमः। "यं मे दुरिन्द्रो०——०धावमानम्" †। मेधातिथेः काण्वस्यार्षम्। यान मनया प्रशस्यते। 'यं' 'मे' मम 'दुः' दत्तवन्तः, 'मरुतः' 'इन्द्रः' च। 'पाकस्थामा' विपक्वप्राणः, 'कौरयाणः' संस्कृतयानः 'विश्वेषां त्मना' सर्वेषा मपि यानानां अन्यप्रतिग्रहीतृ-प्रकाराणां मध्ये आत्मना तदेव 'शोभिष्ठं' शोभनतमम्; अनेकरत्नविचित्रत्वात् 'दिवि इव' ज्योतिश्चक्रम् 'उपधावमानं' दृश्यते॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च "कौरयानः = कृतयानः"—इत्युपपद्यते॥

"तौरयानः(४३)"—इति‡, अनवगतम्। "तूर्णयानः"—इत्यवगमः। "जातं यत् त्वा परि देवा अभूषन्महे भराय पुरुहूत विश्वे। स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः॥"—इति §। 'जातं' जातमात्रं विश्वेदेवाः 'यत्' 'त्वा' त्वां 'पर्यभूषन्' परिगृहीतवन्तः, 'महे' महते 'भराय' भरणाय, महान्त मसुरैः सह सङ्ग्रामं करिष्यतीत्यनेनाभिप्रायेण। 'सः' त्वं हे 'पुरुहूत!' इन्द्र! 'तौरयाणः' त्वरितयानो भूत्वा 'उपयाहि' उपगच्छैनं 'यज्ञम्', मरुद्भिः' 'सखिभिः' सह 'सजोषाः' सम्प्रीयमाणः। उपागत्य च अस्माक माशिषः समर्द्धयेत्यभिप्रायः॥ एव मत्रागमनसम्बन्धात् "तौरयानः = तूर्णयानः"—इत्युपपद्यते॥

* १आ० ४१९ पृ० १८ पं०।

† "यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः। विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम्॥"—इति ऋ० सं० ५, ७, १९, १।

‡ १आ० ४१० पृ० ३पं०।

§ ऋ० सं० २, २, १९, ३वा०।

"अक्रुयानः(५५)"—इति *, अनवगतम् । "अक्रूरयानः"—इत्यवगमः । "त्वया वयं०——०कृणुह्यक्रुयाण" † । वामदेवस्यार्षम् । त्रिष्टुप् । अग्नये रक्षोघ्ने अष्टाकपालः, तत्र स्विष्टकृतः पुरोऽनुवाक्यैषा, मैत्रायणीयके । हे भगवन् ! मे 'त्वया वयं' 'सधन्यः' समानधनिनः यदेतदस्मद्गृहे धन मेतदावयोः तत्समेत्यभिप्रायः । यत एव मतो ब्रूमः ;-'स्तोताः' त्वयैव रचिताः मन्त्राः, 'तव' 'प्रणीती' प्रणीत्या तवैव प्रणयेन 'अश्याम वाजान्' प्राप्नुयामोऽन्नानि । किञ्च; 'उभा शंसा' उभावपि शंसितारौ,—यश्चायतो नः पापानि शंसति, यश्च पृष्ठतः, तावुभावपि 'सूदय' जहि । हे 'सत्यताते' यज्ञतनितः ! किञ्च; 'अनुष्ठुया' अनुष्ठानेन 'कृणुहि' कुरु कर्म्मणैतत्सम्पादय यदहं ब्रवीमि । हे 'अक्रुयाण !' अलज्जितयानेत्यर्थः ॥ एव मत्र "अक्रुयाणः"—इत्यनेन अक्रूरयानोऽग्निरुच्यते । उपपद्यते हि देवताया अलज्जितयानत्वम् ॥

"ह्वरयानः(५६)"—इति ‡, अनवगतम् । "ह्वरमाणयानः"—इत्यवगमः । "ऋज्रं मुक्षण्यायने०——०सुषामणि"—इति § । विश्वमनसो वैयश्वस्येय मार्षम् । उष्णिक् । यान मनया स्तूयते । 'ऋज्रम्' ऋजुगामिनम् 'रथम्' 'रजतम्' रजतमयं रजतविकृतं

* १भा० ४१७ पृ० ९पं० ।

† "त्वया वयं सधन्य१ स्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यक्रुयाण ॥"—इति ऋ० सं० ३, ४, १५, ४ ।

‡ १भा० ४१७ पृ० १०पं० ।

§ "ऋज्रं मुक्षण्यायने रजतं हरयाणे । रथं युक्तमसनाम सुषामणि ॥"—इति ऋ० सं० ६, १, १५, २ ।

वा, 'युक्तम्' अश्वैः। 'अघनाम' सम्भवन्तो वयम्। क पुनर्सम्भवन्तः? 'उचथ्यायने'। उचथ्यायन इति कश्चिदासीत्; तस्मिन् यजमाने, 'हरयाणे' "हरमाणयाने", नित्यकाल मेवाभिप्रस्थितयाने, सुषा-मणि' शोभनं सामास्य सुषामा; तस्मिन् यजमाने। तादृशः स इन्द्रो दातेत्यभिप्रायः॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च "हरयाणः = हरमाणयानः"—इत्युपपद्यते॥

"आरितः[१७]"—इति *, अनवगतम्। प्रतीत्यस्य स्थाने आहुः; "प्रत्यृतः"—इत्यर्थप्रतीतिः। "यो अश्वानां०——०हवामहे" †। कुत्सस्येय मार्षम्। व्यूढ़स्य दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे निविद्धानीये सूक्ते शस्यते। 'यः' इन्द्रः 'अश्वानां' 'गवां' च 'गोपतिः'। किञ्च; 'यः' 'आरितः कर्मणिकर्मणि स्थिरः' आरितः सर्वान् स्तोमान् प्रति योऽवस्थितः। केन? देवतारूपेण सर्वेषु स्तोमेषु चावस्थानात्। यः 'कर्मणि' अग्निहोत्रादौ 'स्थिरः' नित्यः; य मृते न किञ्चन कर्म प्रवर्त्तत इत्यभिप्रायः। 'वीडोश्चित्' संस्तब्धस्यापि दर्पितस्यापि 'यः' इन्द्रः 'अ-सुन्वतः' अभिषव मकुर्वाणस्य 'वधः' वधयिता। त मेवङ्गुण-युक्तं 'मरुत्वन्तं' मरुत्सहितम्, इन्द्रम्, 'सख्याय' सखिभावाय एतस्मिन् कर्मणि 'हवामहे' आह्वयाम इत्यर्थः॥ एव मयम् "आरित"-शब्दोऽर्थोपपत्त्या "प्रत्यृतः"—इत्युपपद्यते॥

* १भा० ४१७ पृ० १३पं०।

† "यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः। वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे॥"—इति ऋ० सं० १, ७, ११, ४।

“व्रन्दी(१८)”—इति *, अनवगतम्। “व्रन्दतेर्मृदुभावार्थस्य”; धातुरेवात्र सम्प्रतीतः॥ ३(१५)॥

नि यद् वृणक्षि श्वसनस्य मूर्द्धनि शुष्णस्य चिद् व्रन्दिनो रोरुवद्वना। निवृणक्षि यच्छ्वसनस्य मूर्द्धनि शब्दकारिणः शुष्णस्यादित्यस्य (च†) शोषयितू रोरूयमाणो वनानीति वा वधेनेति वा। अव्रदन्त वीळितेत्यपि‡ निगमो भवति वीलयतिश्च§ व्रीलयतिश्च‖ संस्तम्भकर्म्माणौ पूर्वेण संप्रयुज्येते निष्षपी स्त्रीकामो भवति विनिर्गतसपः सपः सपते¶ स्पृशतिकर्म्मणः। मा नो मघेव निष्षपी परा दाः। स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः। तूर्णाश** मुदकं भवति तूर्णं मश्नुते††। तूर्णाशं न गिरेरधीत्यपि निगमो भवति। क्षुम्प महिच्छत्रकं‡‡ भवति यत् क्षुभ्यते॥ ४(१६)॥

* १भा० ४१८ पृ० ३पं०।

† नास्त्येतत् क-ख-ग-पुस्तकेषु।

‡, §, ‖ अत्र सर्वत्रैव ल-स्थाने ड-पाठो घ-पुस्तके।

¶ एष एव पाठो इत्थिकता प्राधान्येन स्वीकृतः परस्तात् (१भा०४१८पृ०), सायणसम्मतश्चैष एव। इह तु ङ्गौ “विनिर्गतपसास्यम स्पृशते”—इति पाठो लभ्यते; एष च क-ख-पुस्तकयोः। “विनिर्गतपसाः स्पृश स्पृशते”—इति ग। “विनिर्गतपस पसः सपते”—इति ङ। “विनिर्गतपसाः। पसः सपते”—इति घ।

** “परादास्तूर्णाश” क, ख, ङ।

†† “तूर्णं मश्नुतेः” क, ख, ग।

‡‡ “महिच्छत्रकं” घ।

एष एवं निगमः ;—"नियद् वृणक्षि॰——॰त्वापरि" *। सव्यस्येव मार्षम्; आङ्गिरसस्येयम्। जगती। ऐन्द्री। स पुन रिन्द्र एवाङ्गिरसः पुत्रत्व मापन्नं 'निवृणक्षि' निवर्णयसि। 'यत्' यस्त्वं हे भगवन्निन्द्र! मेघं हत्वा 'श्वसनस्य' "शब्दकारिणः" वायोः 'मूर्द्धनि' उपरि 'शुष्णस्य चित्' "शोषयितुः" अपि भगवतः "आदित्यस्य", 'व्रन्दिनः' मृदुभावकर्तुः; आदित्येन हि परिपच्यमानं संस्त्यानं मपि च दृतिन्दकादि मृदु भवति, तस्मादसौ व्रन्दी। तस्याप्येव कर्मकारिणो मण्डलं प्रत्यूर्ध्वं 'रोरुवत्' स्तनयितु-शब्दं कुर्वाणः। 'वना' "वनानि" विक्षिपसि। ऊर्द्ध मधस्य "वनानि" उदकानि विक्षिपतो न ते शक्तिप्रतिघातोऽस्तीत्यभिप्रायः। यस्मिंस्तु पक्षे "वधेन"—इति निर्वचनम्, तस्मिन् पक्षे 'वना'—इत्येष शब्दो मेघ-वधेनेति योज्यः। उदकशब्दस्य तस्मिन् पक्षेऽध्याहार्योऽभिवर्जन-सम्बन्धात्। 'प्राचीनेन' प्रागञ्चितेन, अदीनेन, तस्मिन् कर्मण्याभि-मुखेन, 'मनसा', 'वर्हणावता' हिंसावता। 'यत्' 'अद्या चित्' अद्यापि त्वं कर्म 'कृणवः' करोष्येव, अ-सुकर मन्यैः; तस्माद्ब्रवीमि;—'कः त्वा परि'? कोऽन्यस्त्वा उपरि वर्त्तते, त्व मेव सर्वभूतानि परिगृह्य वर्त्तस इत्यर्थः॥ एव मत्र "व्रन्दि"-शब्देनादित्य उक्तः। तत्पुनरे-तदस्पष्टं मृदुभावकरणादादित्यस्य व्रन्दित्व मिति। अतो व्रन्दि-शब्दस्य मृदूभावार्थोपपिपादयिषया श्रौडयतिना संस्त्यानार्थवाचिना सह सम्बद्धोऽत्र व्रन्दतेः प्रयोगः॥

---

* "नि॰—॰वनां। प्राचीनेन मनसा वर्हणावता यदद्या चित् कृणवः कस्त्वा परि॥"—इति ऋ॰ सं॰ १, ४, १०, ५।

ततो निगमात् ब्रन्दतेर्हि मृदूभावार्थता स्पष्टतरेति दर्शयति; —"अव्रदन्त वीड़िलेत्यपि निगमो भवति"। अपि पूर्वोऽप्ययं स्पष्टतर इत्यपि शब्दः "वीडयतिश्च व्रीडयतिश्च" एतौ द्वावपि "संस्तम्भकर्माणौ", "पूर्वेण" अनेनैव अनन्तरेण ब्रन्दिना, यस्मात् समानवाक्यता मुपगतौ "प्रयुज्येते"। तस्माद् ब्रन्दि-शब्दस्य मृदूभावार्थत्व मुपपद्यते। "तद्देवानां०——०व्यचक्षयत्स्वः" *। मन्त्रस्यार्थम्। जगती। बार्हस्पत्ये सूक्ते। 'तत्कर्त्वं' तत्कर्म 'देवानां', 'देवतमाय' देवतमस्य बृहस्पतेः, यत् 'अश्रथ्नत्' श्लथान्यभवत्, 'दृढा' दृढान्यपि सन्ति मेघच्छन्दानि। किञ्च; 'अव्रदन्त' मृदून्यभवन्। कानि पुनस्तानि मृदून्यभवन्? इति, उच्यते;—'वीड़िता' यानि वीड़ितानि व्रीडितानि सन्नद्धानि दर्पितानि, असुरकुलानि; अन्यानि वा यानि कानि चित्, तानि मृदून्यभवन्निति। किञ्च; 'उद् गाः आजत्' उदाजद् गाः, उदगमयदपः। 'अभिनद्' 'वलम्' मेघम्, 'ब्रह्मणा' स्तूयमानः। किञ्च; 'अगूहत्' अनाशयत् 'तमः' वैद्युतात्मना। किञ्च; 'व्यचक्षयत् स्वः' व्यदर्शयत् आदित्यम्॥ अव्यवधानकरणेन व्रीड़यतिना सह प्रयोगाद् व्रीड़तेरर्थवैपरीत्येन ब्रन्दतेर्मृदुतार्थत्व मुपपद्यते नभसः॥ एव मचाव्रदन्त वीलितेति ब्रन्दतेः, व्रीडयतेर्वन्दिना सह प्रयोगोऽन्यत्र कश्चित् द्रष्टव्यः †॥

* "तद्देवानां देवतमाय कर्त्वमश्रथ्नन् दृळ्हाव्रदन्त वीळिता। उद् गा आजदभिनद् ब्रह्मणा वल मगूहत् तमो व्यचक्षयत् स्वः॥"—इति ऋ० सं० २, ७, १, २।

† ऋ० सं० १, ४, १०, ४-५ ऋचौ द्रष्टव्यौ।

"निःष्षपी(१८)"—इति *, अनवगतम्। "विनिर्गत-पसाः"—इति † ब्रह्मसमाधिः। "स्त्री-कामः" पुंश्चलोऽभिधेयः ‡; स हि नित्यं निर्गत-शेप एव भवति §। "सप सपतेः" ‖ "स्पृशतिकर्मणः" स्पृशत्यर्थे वर्त्तमानस्य,—शेपः; तेन हि स्त्री स्पृश्यते ¶। "प्रति यत् स्या०——०परा दाः" **। कुत्सस्यार्षम्। ऐन्द्री। त्रिष्टुप्। हे मघवन्निन्द्र! 'यत्' यस्मात् 'प्रत्यदर्शि' प्रतिपद्यतीव, 'स्या' सा 'नीथा' स्तुतिः। "नीथाविदो जरितारः"—इत्येतस्मान्निगमात् स्तुतिर्नीथेति प्रतीयते ††। 'दस्योः' शत्रोः दासयितुस्तव 'ओको न' ओक इव, निवास मिव। 'अच्छ' आभिमुख्येन, हृदय मनुप्रविश्य। 'सदनं' स्थानम्, यत्र तया नीथया स्तुत्या सर्त्तव्यम्,—यस्तवाभिमतो गुणः; अनेन यदि नाम मा मेष स्तोता स्तुयात्, साधु स्यादिति, त मर्थं मनुप्रविश्येव भवतो हृद्गतम्; तेनार्थेनात्मान मभिसम्बन्धयित्वा

* १भा० ४१८ पृ० ९पं०।

† "विनिर्गतसपः"—इत्यपि पाठो दृश्यत्वसम्मत एव (१भा० ४१८ पृ०।

‡ पुंश्चली = स्वैरिणी,—इति तु योगात् प्रतीयत एव परं पुंश्चल-शब्दस्य स्वैर-वाचकत्व मेतद्वृत्तिपन्थादेवेति सम्भाव्यते।

§ "निष्षपी = विनिर्गतसपा विनिर्गतशेपा यथेष्टाचारी दासीपतिः।"—इति सा० भा० (ऋ० सं० १, ७, १८, ५)।

‖ "सपः सपतेः"—इत्यपि पाठो दृश्यत्वसम्मत एव (१भा० ४१८पृ०)।

¶ "निष्षपी। षप समवाये। सपति समवैति योऽन्या सञ्चरत इति सपः शेपः पचाद्यच्। निर्गतो नित्योद्धतः सपः शेपो यस्य स स्त्रीव्यसनो निष्षपः। बहुलमाप्यत्वा-दीकारः"—इति सा० भा० (ऋ० सं० १, ७, १८, ५)।

** "प्रति यत् स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात्। अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः॥—इति ऋ० सं० १, ७, १८, ५।

†† ऋ० सं० २, १, ११, ५।

एतन्मम धन मित्येवं 'आनती' च तदेव 'अगात्' नित्यकाल मेवा-गच्छति। अतएव मतः स्तुत्युदीरितारो वयं भवतः। 'अध' एतस्मात् कारणात् वयं ब्रूमः;— हे 'मघवन्! 'चर्कृतात्' पुनःपुनः क्रियमाणात् एतस्मात् कर्मणः, आत्मस्तुत्याश्रयभूतात्मान मस्मान् 'परा दाः' पराङ्मुखान् दधीथाः; उपनामय तत् कर्मसाधनानि। कथं च पुनः कर्मसाधनानि? कथं च पुनर्मा परा दाः? 'मघेव निष्षपी' स यथा धनानि नित्यविनिर्गतशेपो विनाशयति। एवम् 'नः' अस्मान् मम् 'मा' अवमादयिष्ठाः धनभूतास्तव वय मतो रक्षस्वेत्यभिप्रायः॥ एव मत्र शब्दसारूप्यादर्थोपपन्नेषु धननामसमन्वन्धात् निष्षपी" निर्गत-पसाः, स्त्रीकाम इत्युपपद्यते॥

"तूर्णाशम्(१०)"—इति *, अनवगतम्। "उदकं भवति"—इत्य-भिधेयवचनम्। "तूर्णाशं" हि चिप्रम्, तत् "अश्नुते" व्याप्नोति, तूर्णाशन मिति प्राप्तम्। अपठितं चैतदुदकनामसु; तेनाप्रती-तार्थम्। प्रति श्रुताय॰—॰मूतये †। मेधातिथेरार्षम्। गायत्री। ऐन्द्री। रात्रिपर्याये शस्यते। मैत्रावरुणस्य प्रथमे शस्ते विनियुक्ता। हे ऋत्विग्यजमानाः! यन्मया प्रतिश्रुत मार्त्विज्य मुपगच्छता अह मिन्द्रं स्तुतिभिराह्वयिष्यामीति, तस्मै 'प्रतिश्रुताय' 'वः' युष्माक मुपकरणार्थं मेतस्मिन्कर्मणि 'धृषत्' धृष्टं प्रगल्भम्। 'हुवे' आह्वये।

'मं' सुवनुं सुनसं वेन्द्र मध्म् 'ऊतये' तर्पणाय; अथ वा

* १आ॰ ४१८ पृ॰ १४ पं॰।

† "प्रति श्रुताय वो धृषत् तूर्णाशं न गिरेरधि। हुवे सुशिप्र मूतये॥"—इति ऋ॰ सं॰ ६, ३, १, ४।

भवता मात्मनश्च रक्षणायेति स्यात्। कथम्पुनराह्वयामि? "तूर्णाशं न गिरेरधि"। यथा 'तूर्णाशम्' 'गिरेः अधि' मेघस्योपरि वर्त्तमान माह्वयन्ति वर्षार्थिनो जनाः। एव माह्वयामीति॥ एव मत्र गिरिसम्बन्धात् "तूर्णाशम्" उदक मित्युपपत्तिः॥

"क्षुम्पम्(११)"—इति *, अनवगतम्। "अहिच्छत्रकं भवति"—इत्यभिधेयवचनम्। "यत्" यस्मात्तत् स्पृष्टमात्रं "क्षुभ्यते" चलति, तस्मात् क्षुपं क्षोभण मिति न्याय्यम्॥ ४(१६)॥

कदा मर्त्त मराधसम्पदा क्षुम्पं मिव स्फुरत्। कदा नः शुश्रवद् गिर इन्द्रो अङ्ग। कदा मर्त्त मनाराधयन्तं पादेन क्षुम्प मिवावस्फुरिष्यति† कदा नः शृणोति‡ च गिर इन्द्रो अङ्ग। अङ्गेति क्षिप्रनामाञ्चित मेवाञ्चितं भवति निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति॥ ५ (१७)॥

"कदा मर्त्त मराधसं०—०इन्द्रो अङ्ग" §। गोतमस्येय मार्षम्। उष्णिक्। ऐन्द्री। तात्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'कदा' कस्मिन्काले 'मर्त्तं' मनुष्यम 'अराधसम्' अनाराधयन्तम्; यः त मिन्द्रं नाराधयति, स्तुत्या हविषा च, तम्।

* १भा० ४१९ पृ० १पं०।
† "मिवावस्फुरसि" ख, ग। "मिवावस्फुरिष्यति" क, च।
‡ "श्रोष्यति" क, च।
§ ऋ० सं० १, ६, ९, १।

'यदा' पादेन 'स्फुरत्' अवस्फुरिष्यति, अभिहिंसिष्यति च इन्द्रः। "स्फुरति(२५), स्फुलति(२६)"—इति वधकर्मसु पठितम्*। किञ्च। 'कदा नः' कदा अस्माकं परिचरणमागानां स्तुतिभिर्हविर्भिश्च 'शुश्रवत्' श्रोष्यति 'गिरः' स 'इन्द्रः', 'अङ्ग' क्षिप्र मित्यर्थः। कदास्माकं परिचरितृणा मिन्द्रः श्रोष्यति गिरः, श्रुत्वा च समर्द्धयिष्यत्याशिषः। अनाराधयितृंश्च कदा पादेनाभिहनिष्यति? कदा अनाराधयित्राराधयित्रोर्विशेषं ज्ञास्यतीत्यभिप्रायः। स्वरूपेण तावदेषोऽस्य मन्त्रस्यार्थो मया लक्ष्यते; भाष्यं पुनरत्र लोकः "पादेन क्षुम्प मिवावस्फुरसि"†—इत्येव मधीते; तथा च,—"कदा नः शृणोति गिरः"‡—इति; तदेतत् "क्षुम्प मिवावस्फुरसि"—"शृणोति गिरः"—इत्यनयोर्भाष्यवाक्ययोः पुरुषो वैलक्षण्यात् दुर्योज्यो मन्त्रार्थ इति "गिरः अवस्फुरसि"—इति मध्यमपुरुषयोगः प्रत्यक्षकृतलक्षणाभिसम्बन्धी। मन्त्रस्य "कदा नः शृणोति च गिरः"—इत्येतत् परोक्षकृतः। एव मेतद्भाष्यं दुर्योज्यम्; यद्येष भाष्यस्य सम्यक् पाठः? अथ पुनरसम्यक् पाठः? सम्यक्पाठोऽन्वेष्टव्यः। अहन्तु लक्षये,—यथैष मया मन्त्रो व्याख्यातः, स एव सम्यक् पाठः स्यात्! —"पादेन क्षुम्प मिवावस्फुरिष्यति"—"श्रोष्यति च गिरः"—इति; तथाहि मन्त्रार्थस्याविरोधो लक्ष्यते§। स्वर्केऽपि वास्मिन् काश्चित्

* १आ० १८१ पृ० २ख० १९ ख०।

† "मिवावस्फुरिष्यति"—इत्येव तु पाठो दृश्यते क-ख-पुस्तकयोः।

‡ "कदा नः श्रोष्यति च गिरः"—इत्येवं पाठो दृश्यते तत्र क-ख-पुस्तकयोः।

§ क-ख पुस्तकयोरेव मेव दृश्यते पाठः। तथा च एतस्य हतिवन्यस्यानुरोधत एव तत्र तादृशः पाठः कल्पितः, क-ख-पुस्तकौ च इत्यनन्तरत एव लिखिताविति।

परोक्षकृता ऋचः, काश्चित् प्रत्यक्षकृताः। अतोऽपि दुरवधार्योऽस्य भाष्यस्याभिप्रायः। मध्यमपुरुषकं हि पादेन सुदृष्टमाख्यं प्रोच्यते। तथाचानाराधयितुर्विनाशोऽभीष्ट इति। "सुम्न"-शब्देनाहिंस्यत्व मभिधीयते॥

"निचुम्पुणः(१९)"—इति *, अनवगतम्, अनेकार्थञ्च। "निचुम्पुणः सोमो भवति"—इत्यभिधेयवचनम्। "निचान्तपृणः"—इति शब्दसमाधिः। स हि निचान्तो भवितः "प्रीणाति"॥ ५ (१७)॥

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये। अपां जग्मिर्निचुम्पुणः॥ पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानायापां गन्ता निचुम्पुणः समुद्रोऽपि निचुम्पुण उच्यते निचमनेन पूर्यत अवभृथोऽपि निचुम्पुण उच्यते नीचैरस्मिन् क्वणन्ति नीचैर्दधतीति वा। अवभृथ निचुम्पुणेत्यपि निगमो भवति। निचुम्पुण निचुङ्कुणेति च पदिर्गन्तुर्भवति यन्पद्यते॥
॥ ६ (१८)॥

"पत्नीवन्तः सुता इमे०—०निचुम्पुणः। कक्षो नाम आङ्गिरसः, तस्यैव मार्षम्। गायत्री। ऐन्द्री। रात्रिपर्यायेषु मध्यमे पर्याये होतुः शस्त्रे विनियुक्ता। 'पत्नीवन्तः' पत्नीभिः अद्भिः, तद्वन्तः।

* १आ० ४१९ पृ० ९पं०।

'सुताः' अभिषुताः। 'इमे' सोमाः। 'उशन्तः' "कामयमानाः" इव 'यन्ति' देवान् प्रति, 'पीतये' * कथं नामास्मान् देवाः पिबेयु-रित्येव मर्थं कामयमाना इव यन्ति। किं मेतदेव? नेत्युच्यते। पुनःपुनरेष 'निचुम्पुणः' सोमः "अपां" वीर्येण सहितः, तासु तासु क्रियासु प्रदीयमानः अस्माभिर्देवान् प्रति 'गन्मिः" एव भवति, गन्तैव भविष्यति ॥ एव मिह सोमाधिकारात् "निचुम्पुण"-शब्देन सोम उच्यत इत्युपपद्यते ॥

"समुद्रोऽपि निचुम्पुणः"—इति "उच्यते"। स हि "निच-मनेन" उदकेन "पूर्यते"; उदकं हि निचम्यत इति निचमनम्। ऋग्योऽत्र निगमः ॥

"अवभृथोऽपि निचुम्पुण उच्यते"। "नीचैरस्मिन् कणन्ति" शब्दं कुर्वन्ति। तत्र ह्युक्त मवभृथेष्वोपांश्वेव चरन्तीति निचुम्पुणः। अथ "वा" "नीचैः" अस्मिन् यज्ञपात्राणि "दधतीति" निचुम्पुणः; तानि हि तत्राप्सु निधीयन्ते। "अवभृथ निचुम्पुण निचेरुरसि" † —इत्यनेनाभिमन्त्र्याप्सु प्रह्रीयन्ते सोमपात्राणि। हे 'अवभृथ' अवभृथदेव! हे वरुण! नीचकणन! 'निचेरुरसि' नीचैश्चरणशीलो-ऽसि। निचुम्पुणो नीचकणनो भूत्वा गृहेगृहे यज्ञगृहेऽवतिष्ठसे। स त्व मेवङ्गुणविशिष्टः "अव देवैः देवकृतम् एनः यासिषम्" अव-यचि नः देवैः सहितो देवकृतं देवनिमित्तम् देवापराधम्; त

* "वीतये"—इति मूलपाठः।

† "अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अव देवैर्देवकृत मेनो यासिष मव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहि॥"—इति य० वा० सं० ३, ४८।

सेनः। 'मर्त्त' इति 'मर्त्तैः' सहितो 'मर्त्यत्रतम्' मनुष्यव्रतम्, हनः ; 'पुरुरावण:' पुरोः महतोऽपि 'देवरिषः' देवरोषणादस्मात् पाहि॥ एव मत्र "निचुम्पुण"-शब्देनावभृथ उच्यते ॥

निचुङ्कुणोऽप्यनेनैव व्याख्यातः ॥

"पदिः(१२)"—इति*, अनवगतम्। "गन्तुः" एष निर्द्देशः कृतो "भवति"। "यत् पद्यते" यस्मादसौ पद्यते गच्छतीत्यर्थः। अभिधेयः पक्षी ; स हि नित्यकाल मेव पतितो भवति॥ ६(१८)॥

सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति। यस्त्वा यन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति॥ सुगुर्भवति सुहिरण्यः स्वश्वो† महच्चास्मै वय इन्द्रो दधाति यस्त्वा यन्तमन्नेन प्रातरागामिन्नतिथे मुक्षीजयेव पदिमुत्सिनाति। कुमारो मुक्षीजा मोचनाच्च शयनाच्च‡ ततनाच्च पादः पद्यतेः। आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते। आविष्कुरुते भास मादित्यो गूहते बुसम्बुस मित्युदकनाम ब्रवीतेः शब्दकर्म्मणो भ्रंशतेर्वा यद्वर्षन् पातयत्युदकं§ रश्मिभिस्तत् प्रत्यादत्ते॥ ७ (१९)॥

॥ इति पञ्चमाध्यायस्य तृतीयः पादः ॥ ५, ३.

---

* १भा० ४१९ पृ० १५ पं०।

† "सुहिरण्य स्वश्वः" ग, ङ।

‡ "शयनाच्च" ख, घ। "मोचनाच्च ततनाच्च शयनाच्च" ङ।

§ "यद्वर्षं पातयत्युदकं" क, ख, ग। "यद्वर्षात्पातयत्युदकं" ङ।

सुगुरसत् ०——० सिनाति"* । कक्षीवान् ऋषिः । स एव 'सुगुः' भवति, शोभनगुः । स एव 'सुहिरण्यः' भवति । स एव 'स्वश्वः' भवति । 'सुगुः' च महत्त्व 'अस्मै' 'वयः' 'इन्द्रः' 'दधाति' ददाति । आह, तस्य किम् ? इति । उच्यते ;— "यस्त्वा ऽऽयन्तं वसुना प्रातरित्वः" । प्रातरागामिष्यतिचे ! स हि प्रातःप्रातरन्यानि ग्रहाण्यभ्येति, तेनैव सामन्त्र्यते — 'प्रातरित्वः !'— इति । 'आयन्तम्' अध्वानं 'वसुना' धनेन क्षुधाविप्रशमनेन प्राणरक्षणेन । 'मुक्षीजयेव' पाशयेव, "कुमारः" 'पदिं' पतितारं पक्षिणम् 'उत्सिनाति' उद्गृह्य सिनाति, बध्नाति, प्राणांस्त्वपि मन्नियच्छतीत्यर्थः । यथा हि— अतिथिरध्वगो भवति, स पतन् क्षुधितोऽन्नसंयोगेन कस्य-चिद् गृहिणो गृहेऽवतिष्ठते, एव मेतत् स्यात् ॥ एव मत्र पक्षी "पदि"-शब्देनोच्यते ; स हि अतिक्रममाणः पाशया बध्यत इत्युपपद्यते ॥

"मुक्षीजा मोचनाच्च" सा हि अवमुच्यते पक्षिणः पादे । "सय-नाच्च" सीयते बध्यते हि तया पक्षी । "तननाच्च"† सा हि पक्षिणो बधार्थं तन्यते । एताभ्यः क्रियाभ्यो यथासम्भवं "मुक्षीजा"—इत्येतद-भिधानं भवति ॥

"पादु(१४):"—इति ‡, अनवगतम् । "पद्यतेः" —इत्यर्थप्रतीतिः । सा ते जीवातु० ——० मुच्यते" § । वत्सप्रस्येय मार्षम् । ऐन्द्री ।

* ऋ० सं० १, १, १०, २ ।

† क-पुस्तकादिष्वेषु सर्वेष्वेव मूलपुस्तकेषु "ततनाच्च"—इत्येव पाठः ।

‡ १भा० ४१८पृ० १८पं० ।

§ "सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये ।०——०मुच्य-ते ॥"—इति ऋ० सं० ७, ७, १९, ४ ।

त्रिष्टुप्। महाव्रते मरुत्वतीये शस्यते। हे यजमान! 'या' 'ते' तव 'जीवातुः' जीविका, या भगवतः सूर्यस्य तापप्रकाशवृष्ट्युदयास्तम-यरसादानादिलक्षणा प्रवृत्तिः, अनेन सौर्येण कर्मणा सर्वभूतानि त्वं जीवयसि इत्यभिप्रायः। यत एव मयैतस्मात् कारणात् ब्रवीमि;—'तस्य' सूर्यस्य 'विद्धि' विजानीहि; यस्त्वया स्तुतिहविर्दानादिल-क्षणः प्रत्युपकारः कर्त्तव्यः। 'मा' त्वम् 'अस्मै' सूर्याय, 'एतादृक्' एतादृश मुपकारम् 'अपगूहः' मा संवृतं कार्षीः। प्रत्युपकारायास्मै त्व मभ्युद्यच्छस्वेत्यभिप्रायः। अपि च 'समर्ये' सङ्ग्रामे एतस्मिन्, मृत्युना सह वर्त्तमाने, सर्वभूतानाम्; श्वः अद्य वा मृयेथाः, को हि तद् वेद?—कस्य कदा मृत्युरिति। स त्वं तत्तानि शोभनका-र्याणि मन्यमानः, शीघ्रं प्रत्युपकुरुष्वास्मै सूर्यायेत्यभिप्रायः। आह,—का पुनः सूर्यस्य प्रवृत्तिः जीवातुः? इति। "आविः स्वः कृणुते गूहते बुसम्"। 'आविष्कुरुते' प्रकाशीकरोति स्वभासा सर्व मिद मुपभासितं व्यवहाराय कल्पते, 'स्वः' आदित्यः। 'गूहते' संवृणोति रश्मिभिः 'बुसम्' उदकम्। किञ्च; 'सः' 'पादुः' तत्पदनं तद्गमन मवभासनेन चरणदानादिकर्त्तुः 'अस्य' सूर्यस्य 'निर्णिजः' उपनिर्णेज-यतुः तमः-पङ्कदिग्धानि स्वरूपाणि स्वेन प्रकाशोदकेन धौतानीव करोतीति निर्णिक् सूर्यः, तस्य निर्णिजः। 'न मुच्यते' नोपरमतीत्यर्थः। अत एव मय मद्य च तवोपकारे प्रवृत्तः। अतः प्रत्युपकुरुष्वास्मा इत्यभिप्रायः॥ एव मत्र शब्दार्थोपपत्तेः "पादुः=पदनम्"—इत्युपपद्यते॥ "बुस मित्युदकनाम" *। "ब्रवीतेः"

* १आ० ९९४० १ख० १२ख० (१०)।

शब्दार्थस्य (पदा० प०); तद्धि शब्दवद्भवति। "अंशतेर्वा" तद्धि भश्यते (दि०प०) मेघात्। "यद् वर्षम् पातयत्युदकम्" आदित्यः, "तद्" "रश्मिभिः प्रत्यादत्ते"—इति समासतो भाष्यकारेणास्य मन्त्रार्द्धर्चस्यार्थ उक्तः॥ ७ (१९)॥

इति निरुक्तवृत्तौ दशमस्याध्यायस्य (पञ्चमाध्यायस्य)

तृतीयः पादः॥ ५, ३॥

॥ चतुर्थः पादः॥

वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा॥ १ (२०)॥

"वृकः[(१५)]"—इति *, अनवगतम्, अनेकार्थञ्च। "वृकः" तावत् "चन्द्रमा भवति"; स हि "विवृतज्योतिष्कः" प्रकाशितज्योतिष्को भवति, तस्माद्वृकः। अथ "वा" "विकृतज्योतिष्कः"—इति वृकः; तद्धि तस्य विकृतं ज्योतिः, शीतत्वात्; इतराणि उष्णानि ज्योतींषि सूर्यादीनि, तान्यपेक्ष्य †। अथ "वा" विक्रान्तज्योतिष्कः वृकः; तस्य हि विक्रान्तं ज्योतिः, इतरेभ्यो ग्रहनक्षत्रतारकादिभ्यो ज्योतिर्भ्यः सकाशात्। एते शब्दसमाधयः॥ १ (२०)॥

* १भा० ४२० पृ० १८ पं०।

† सूर्यस्योष्ण मेव ज्योतिरत्रापतितं शीतं भवति, तत एव विकृत मुक्तम्। "अथा तु शीरमन्वत"—इत्यस्य व्याख्यानं द्रष्टव्यम् (१भा० ४०४०)।

अरुणो मासकृद् वृकः पथा यन्तं ददर्श हि। उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी * वित्तं मे अस्य रोदसी॥ अरुण आरोचनो मासकृन्मासानां (चार्द्धमासानां †) च कर्त्ता (भवति ‡) चन्द्रमा वृकः पथा यन्तं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येनयेन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी जानीतं मेऽस्य द्यावापृथिव्यावित्यादित्योऽपि वृक उच्यते यदावृङ्क्ते॥ २ § ॥

“अरुणो मासकृद्०——०रोदसी” ‖। त्रितस्यैव माप्तस्य कूपे पतितस्य, कुत्सस्य वा आर्षम्। पङ्क्तिः। वैश्वदेवी। ‘अरुणः’ “आरोचनः” आभिमुख्येन सर्वस्य जगतो रोचयिता स्वया ज्योत्स्नया। ‘मासकृत्’ “मासानां च अर्द्धमासानां च कर्त्ता”। मासशब्दसम्बन्धादर्द्धमासशब्दोऽध्याहृतः; तानपि ह्यसौ निर्मिमीत इति ¶। “चन्द्रमा” ‘वृकः’। आह;—किं करोति? इति, उच्यते;—“पथा यन्तं ददर्श हि” नक्षत्रमण्डलस्याधोऽवस्थितः ‘पथा’ स्वेन मार्गेण ‘यन्तं’ ‘ददर्श’ पश्यति “नक्षत्रगणम्”;—न मा मन्धकूपे पतितं

* “पृष्ठ्यामयी” ख।

† नैतद् दृश्यते क-ख-पुस्तकयोः।

‡ नैतद् दृश्यते क-ख-ग-पुस्तकेषु।

§ नात्र खण्डसमाप्तिः क-च-पुस्तकयोः, खण्डप्रतीकवाक्यविरुद्धा चैषा।

‖ ऋ० सं० १, ७, २२, २।

¶ सूर्य्यस्यैव मासकर्त्तृत्वं न तु चन्द्रस्येति मन्वानो भाष्यकारो मासाना मित्यस्यैव व्याख्यान मर्द्धमासाना मित्याद्येत्यस्माकम्।

पश्यति, यदि नाम पश्येत् कथञ्चिदवश्य मथाऽप्यायेतापदो मा मित्यभिप्रायः *। किञ्च; "उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तम्"। यथा कश्चित् 'तष्टा' तथा "पृष्ठरोगी", कश्चिदुच्चं "तन्तुवम्" उच्चैरुन्नामयदे वयं योज्या न वा?—इत्यनेनोत्कटो भूत्वा 'निचाययति' पश्यति, एवं "चन्द्रमाः" अप्युज्जिहीते "येन" नक्षत्रेण "योद्यमानः",—अमुना मयाद्य योक्तव्य इति। एवं 'निचाय्य' "तष्टा" स्वेन दृष्टात् दर्शनेन। ततस्तदेव "अभिजिहीते", तेनैव मद्दोदितेत्यर्थः। एव मस्य येनार्थः, न मय मादरेणोद्धकायो हि भूत्वा पश्यति †; मया ‡ त्वस्यार्थो नास्तीति मा न पश्यत्यधोवर्त्तमानम्। एव मतो ब्रवीमि;— अपि तावत् हे 'रोदसी!' 'वित्तं' विजानीतं 'अस्य' चितस्यार्त्तिप्रलापस्य योऽर्थः। विदित्वा उत्तरतं मा मस्मात् कूपात् इत्यभिप्रायः॥ एव मत्र अरुण-शब्दात् मामकच्छ ब्दाच "वृकः=चन्द्रमाः"। चन्द्रमःशब्दाच नक्षत्रगणोऽध्याहृतः, तथार्थोपपत्त्यविरोधात्॥

येषां तु शाखिनां "मा सकृत्"—इत्येतत् पदद्वयं भवति §, तेषां सकृत् मां ददर्श चन्द्रमाः, यदि पुनःपुनः पश्येदवश्यं मोचयेदस्या आपदः; यथा तु यन्तं नक्षत्रगणं पुनःपुनः पश्यति न मा मित्येवमादि योज्यम्॥

"आदित्योऽपि वृक उच्यते"। "यद् आदत्ते" यस्मादसौ तम आदत्ते, तस्माद्वृकः॥ २॥

* कूपपतितस्य चितस्यर्षेरिति शेषः।

†,‡ पश्यति चन्द्रः; मया चितेनेति बोध्यम्।

§ तत्पदकारपाठतस्तथैव स्वरमुद्रितिति भावः।

**अजोहवीदश्विना वर्त्तिका वा मास्नो यत्सी ममुञ्चतं वृकस्य। आह्वयदुषा अश्विना* वादित्येनाभिग्रस्ता ता मश्विनौ प्रमुमुचतुरित्याख्यानं† श्वापि वृक उच्यते विकर्त्तनात्। वृकश्चिदस्य वारण उरामथिः। उरण-मथिः। उरण ऊर्णावान् भवत्यूर्णा पुनर्वृणोतेरूर्णोतेर्वा। वृद्धवाशिन्यपि वृक्युच्यते। शतं मेषान् वृक्यै चक्ष-दान मृज्राश्वं तं पितान्धं चकारेत्यपि निगमो भवति। जोषवाक मित्यविज्ञातनामधेयं‡ जोषयितव्यं भवति॥ ३ (२१)॥**

"अजोहवीदश्विना०——०विषेण" §। कक्षीवत आर्षम्। आश्विनी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'अजोहवीत्' "आह्वयत" आह्वतवती "उषाः"। हे 'अश्विनौ!' युवाम्। वर्त्तनशीला 'वर्त्तिका'। कदा पुनराह्वयत्? इति, उच्यते;—'आस्नः' आस्याद्वेनां 'वां' युवाम् 'अमुञ्चतम्'। 'वृकस्य' आदित्यस्य। उषाः किल "आदित्येनाभिग्रस्ताश्विनौ" आह्वतवती, "ता मश्विनौ प्रमोचितवन्ताविव-त्याख्यानम्"—एतस्मिन्नर्थे वेदयन्ते निदानविदो वक्तृचाः, तदप्युपे-

* "आह्वयदुषाश्विना" क, ग।

† "प्रमुमुचतुरित्याख्यानं" ग, ङ।

‡ "जोष इत्यविज्ञातनामधेयं"—इति क-ख-ग-पुस्तकेषु। दृष्टाविदैव मेव; परं नैघण्टुके "जोषवाकम्"—इत्येव व्याख्यातम् (१भा०४२०७०१८पं०), निगमेऽप्येव मेव।

§ "अजोहवीदश्विना०——०वृकस्य। वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण॥"—इति ऋ० सं० १, ८, १९, १।

चितव्यं मन्त्रार्थनिर्णयाय *। एतच्च युवयोर्माहाभाग्यम्। किञ्चान्यत्। "विजयुषा ययथुः साग्वद्रेः"। 'विजयुषा' विजय मिच्छन्तौ युवां 'ययथुः' गच्छथः, 'सानु' समुच्छ्रितम् 'अद्रेः' मेघस्य शिखर मारुह्य। किञ्च; युवा मेव 'जातम्' उपद्रवं दुर्भिक्षाख्यं कृत्स्नस्य जगतः, 'वि-श्वाथः' विश्वगस्थानौ; सर्वतो गतौ भूत्वा,—मेघजालेनेदं सर्वं मभि-प्रच्छाद्य, ततः 'अहतं' हतवन्तौ स्थः; 'विषेण' उदकेनेत्यर्थः॥ यथाऽस्मिन् वृकशब्देनादित्य उच्यते, तथाऽऽख्यानादुपेक्षितव्यम् †॥

"श्वापि वृक उच्यते", "विकर्त्तनात्" विविध मसौ कृन्तति तस्माद्वृकः। "वृकश्चिदस्य०——० चित्रया धिया" ‡। प्रगाथपुत्रस्य कलेरार्षम्। सतोबृहती। महाव्रते हचाशीतिषु विनियुक्ता। 'वृक-श्चित्' वृकोऽपि, 'श्वा' सारमेयोऽस्येन्द्रस्य विद्यत एव। 'वारणः' वार-यिता शत्रूणाम्। किं पुनान्यान्युपकरणानि? 'उरामथिः' "उरण-मथिः"; उरान् मेषान् यो मथ्नाति स उरामथिः। स पुनरस्येन्द्रस्य 'आभूषति', 'वयुनेषु' प्रज्ञानेषु; यदेवासौ विजानीते आभूषत्वयं शत्रूनिति, तदेवासौ आभूषति। यस्य तवैवं सर्वोपकरणसम्पन्नत्वम्, हे 'इन्द्र!' 'सः' त्वम् 'इमम्' 'नः' अस्माकं 'स्तोमम्' उपश्रुत्य 'आगहि' आगच्छेमं यज्ञं 'प्र' प्रकर्षेण 'चित्रया' चायनीयया कमनीयया 'धिया' बुद्ध्या॥ सरमा हि देवशुनी श्रूयते §। तत्पुत्रनप्रभिश्च देवानां

---

* '"आवो हर्कस्य वर्त्तिका मभीके युवं नरा नासत्यामुमुक्तम्।"—इति (ऋ० सं० १, ८, १०, ४), एतद्भाष्यं च सायणीयं द्रष्टव्यम्।

† ऋ० सं० १, ८, १०, ४; १९, १.—एताहचौ पर्य्यालोच्याविव्यर्थः।

‡ "वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति। सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया॥"—इति ऋ० सं० ६, ४, ४९, २,।

§ "किं मिच्छन्ती सरमा (ऋ० सं० ८, ६, ५, १)"—इत्यादौ द्रष्टव्यम्।

भवितव्यम्, तस्मात् श्वापि वृक उच्यत इत्युपपद्यते ; इतरेषां मारुक्षकाणां परिचयाभावात् अस्य मन्त्रस्य पूर्वोऽर्द्धः परोक्षकृतः ;—वृकस्मिन्द्रस्येत्यस्मात् षष्ठीयोगात्। उत्तरस्तु प्रत्यक्षकृतः ;—भागवीऽस्येत्यस्मान्मध्यमपुरुषयोगात्, सम्बोधनाच्च। देवता किल परोक्षा स्तूयमाना प्रत्यक्षीभवति। तदेतत् सर्वेष्वेवंभूतकेषु मन्त्रेषूपलक्षितव्यम् ॥

निगमप्रसङ्ग मुच्यते ;— “उरणः = ऊर्णावान्” ऊर्णया तद्वान् “भवति”। “ऊर्णा पुनर्वृणोतेः”। इति विग्रहप्रसङ्गम्। ता अपि शीतत्राणार्थं विध्रियन्ते। “ऊर्णास्तेषां” आच्छादनार्थे स्यात्, ताभिराच्छन्न उरणो भवति ॥

“वृकवाशिन्यपि वृक्युच्यते” येषा वृकं वाश्यते,—शिवा, सापि वृक्युच्यते ; विकर्त्तनादेव। “शतं मेषान्०——०भिषजावनर्वन्”*। अजोहवीदित्यनया समानार्षेयम्। ‘शतं मेषान्’ ‘वृक्ये’ शिवायै, तदा वाशिते सति परितुष्टः ‘चक्षत्’ व्यादिष्टवान् ‘दानम्’। येयमेवं शोभनमभिप्रस्थितानामस्माकमर्थसिद्धये वाश्यते, तस्यै, शतं मेषाणां दीयतामित्येवमाज्ञापितवान्। ‘ऋज्राश्वम्’ ऋज्राश्वो नाम राजपुत्रः, तम्। ‘तं च’ पुनरेवं व्यादिष्टवन्तमतिसाहसिकोऽयमिति ‘पिता’ कुपितः, शापेन ‘अन्धं’ ‘चकार’ कृतवानित्यर्थः। ‘तस्मै’ एव मन्धीभूताय पितुरभिशापेन, ‘अक्षी’ अक्षिणी, ‘नासत्यौ’ अश्विनौ देवौ, ‘विचक्षे’ विगतदर्शनाय ‘आधत्तम्’। ‘दस्रौ’ दर्शनीयौ अश्विनौ। ‘भिषजौ’ देवभिषजौ। भयसादयितारौ, ‘अनर्वन्’ चक्षुः

* “शतं मेषान् वृक्ये चक्षदानम् ऋज्राश्वं तं पितान्धं चकार। तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्॥”—इति ऋ० सं० १, ८, ११, १।

प्रधानम् अनाश्रित मन्यत्र क्वचित्, स्वप्रधान मित्यर्थः ॥ एव मथ मेवममन्वाह, व्याख्याने च तथार्थतोपपत्तिदर्शनात् "इन्द्रवाग्नी वृत्युच्यते"—इत्युपपद्यते ॥

"जोषः(११)"—इति *, अनवगतम्। "अविज्ञातनामधेयम्"—इत्यभिधेयवचनम्। "जोषयितव्यं भवति"—इति शब्दसमाधिः। जोषयितव्यं विज्ञापयितव्यं परस्मै तद्भवत्यस्पष्टत्वात् ॥ ३ (२२)॥

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा। जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥ य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथोऽथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः कृत्तिः कृन्ततेर्यशो वा अन्नं वा†। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरण मन्तरिक्षे‡ कृत्तिरिवेतीय मपीतरा कृत्तिरेतस्मादेव सूच मप्युपमार्थे वा। कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति§। श्वघ्नी कितवो भवति स्वं हन्ति स्वं पुनराश्रितम्॥ भवति। कृतं न श्वघ्नी वि चिनोति देवने कृत मिव श्वघ्नी

---

* १भा० ४९० पृ० १८ पं० "जोषवाकम्"—इति।

† "यशो वान्नं वा" क, ख। वृत्तौ तु "यशोऽन्नं वा"—इत्येव।

‡ "मन्तरिक्षं" क, ख, ग।

§ "कृत्तिं वसान आ चर पिनाकं बिभ्रदा गहीत्यपि निगमो भवति"—इति क-ख-पुस्तकयोः; परं हत्तिविरुद्धः।

|| "पुनराहृतं" क, ख, ग। "पुनराहतं" ङ।

विचिनोति देवने कितवः किं तवास्तीति शब्दानुकृतिः कृतवाग्वाशीर्नामकः* मम मिति परिग्रहार्थीयं सूत्र-नामानुदात्तम् ॥ ४ (२२) ॥

"य इन्द्राग्नी सुतेषु वां०——०भमथस्य न" †। भरद्वाजस्येय मार्षम्। बृहती। हे 'इन्द्राग्नी !' 'यः' यजमानः 'सुतेषु' अभिषु-तेषु सोमेषु 'वां' युवां 'स्तवत्' "स्तौति" 'तेषु' कर्मसु 'ऋता-वृधा' सत्यवर्द्धयितारौ, यज्ञवर्द्धयितारौ वा। "तस्य" युवाम् "अश्नी-थः" स युवयोः बहुमत इत्यभिप्रायः। "अथ" पुनः "योऽयम्" "जोषवाकम्" अविज्ञातं किमपि उपांशु "वदति" "विजञ्जपः" केवल मुदकतीरेऽवस्थितोऽन्यत्र वा जपनशील एव; न कर्मकारीत्य-भिप्रायः। तस्य 'जोषवाकं वदतः'। 'पज्रहोषिणा' हे "प्रार्जितहो-षिणौ !" प्रभूतयागौ ! "यदिन्द्रश्च अग्निश्च भूयिष्ठभाजौ देवतानां तस्माद् ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणा मिति ह विज्ञा-यते"। 'देवा' हे "देवौ !" 'न भमथस्न' न कदाचिदपि तस्य हवींषि भक्षयथः; तेन युवयोर्नासौ बहुमत इत्यभिप्रायः। अत्र "जोषवाकं वदतः", "न भमथः"—इत्येतद् दृष्ट्वा यः सुतेषु सोमेषु स्तौति, तस्य न भमथ इत्येतदध्याहृतं भाष्यकारेण॥ एव मत्र विजञ्जपस्य भक्षयितव्याभावाज्जपस्य चोपांशुस्वाभाव्यात् "जोषवाक"-शब्दोऽविज्ञातनामधेय मित्युपपद्यते॥

* "कितवाग्वाशीर्नामकः"—इत्येव मेव पाठः सर्वत्र क-पुस्तकातिरिक्तेषु; इतो तु क-पुस्तकानुसारत एव।

† ऋ० सं० ४, ८, २५, ४।

"छर्दिः(१०)"—इति *, अनवगतम्, अनेकार्थञ्च। "छन्दतेः"—इति धातुनिर्द्देशः। "यशोऽन्नं वा"—इत्यर्थवचनम्। कर्त्तव्य मिति न्याय्यम्; यशो हि द्विषतां मर्म्माणि छन्तति, अन्न मप्यसम्यगुपयुक्त मायुरेव छन्तति। "त मुत्वा नून०——०र्मो अश्नवन्" †। नृमेधः प्रियमेधश्चेय मार्षम्। सतोबृहती। ऐन्द्री। चतुर्विंशादिषु माध्यन्दिने ब्राह्मणाच्छंसिनः शस्त्रे स्तोत्रियानुरूपवर्गे विनियुक्ता। 'तम् उ त्वा' हे 'असुर' प्रज्ञावन्! 'प्रचेतसं' विद्वद्प्रज्ञानं 'राधः' धनं स्व मिव पित्र्यं 'भागम्' उत्पन्नप्रणयत्वाद् 'ईमहे' तचोदेहि स्थिरशरीराणां तदेतदस्तु नः। किञ्च; 'महीव छर्दिः' महदिव यशः, महद् वा अन्नम् 'शरणा' शरणम्, गृहम्। 'ते' तव हे 'इन्द्र!' यद् "अन्तरिक्षलोके", तदहं 'प्राश्नवम्'। किञ्च; 'ते' तव 'सुम्ना' सुम्नानि बलसम्बन्धानि सुखानि, त्वद्भोग्यानीत्यर्थः। यद्वा; सुम्नानि, सुखसाधनानि; अप्सरःप्रभृतीनि प्राश्नुया महम्। तदहं सोमं सुन्वानः तस्याभिषवकर्मणो माहाभाग्येन, येन त्वत्सायुज्य मश्नुयाम्, देहपातोत्तरकाल मिह चामुत्र चैतत् नः फलद्वय मस्तु त्वत्त इत्यभिप्रायः। यशो हि विस्तीर्णं भवति, तेन हि गृहस्योपमान मुपपद्यते। यदनुप्रविष्टानाम् अशनापिपासे न स्तः, तदहं तव गृहम् प्राश्नुया मित्येव मन्त्रेनाप्युपपद्यते॥

"इयम् अपि इतरा छर्दिः एतस्मादेव"। सूत्रमयी कन्थेति या

* १भा० ४२१ पृ० १पं०।

† "त मु त्वा नून मसुर प्रचेतसं राधो भाग मिवेमहे। महीव छर्दिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्॥"—इति ऋ० सं० ६, ६, १२, ६।

प्रविद्धा, साप्येतस्मादेव कृन्तते:; सा हि वस्त्रार्थे: कृत्तिर्यथिता* भवति। "उपमार्थे वा" यथापि कृत्तिरित्युच्यते। तथेतरा सूचनयो उपमीयते, विकर्त्तनसामान्यात्। कृत्तिरिव कृत्तिः कन्था। "कृत्ति-वासाः पिनाकहस्तोऽवततधन्वा"—इति। व्याख्यातोऽत्र मद्गुनेऽध्यायो निगमः‡ ॥

"श्वघ्नी(१८)"—इति§, अनवगतम्। "कितवो भवति"—इत्यभिधेयवचनम्। "स्वं हन्ति"—इति शब्दव्युत्पत्तिः। स्वहा इति न्याय्यम्। विग्रहान्तरम् उच्यते;—"स्वं पुनराश्रितं भवति"; तद्धि स्वामिना आश्रितेन श्रितं भवति स्वेन। "कृतं न श्वघ्नी वि चिनोति • ——• नूतनः" ॥। कक्षीवत्पुत्रस्याङ्गिरसस्येय मार्षम्। ऐन्द्री। जगती। तार्तीयसवनिकेषु उक्थपर्यायेषु ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। यथाच कृतादीनां दायानां मध्ये कितवः 'कृतं विचिनोति', 'देवने' आस्कारे; अपि नामात्र कृतं यस्मात् ततो जयेय मह मित्येवम्। 'मघवा' इन्द्रः 'संवर्गम्' उदकसंवर्जयितारम्, अन्तरिक्षे, बहूनां मेघानां मध्ये, विचिनोति,—कतमस्त्वेषां मेघाना मुदकदाने समर्थः? इति, तं विज्ञाय यदजहत्। 'सूर्यम्' सुष्ठु ईरयितार मपाम्। 'न' 'तत्', 'ते'

* "कृत्तिर्यथिता"—रोथ-सम्पादितहस्तिपुस्तकपाठः।

† यास्कीयहस्तीये इतियावत्। १भा० २५९ पृ० ८पं०—२५८ पृ० ९पं० द्रष्टव्ये।

‡ क-च-पुस्तकयोर्नैव निगमो दृश्यते; तत्र त्वय मस्ति,—"कृत्तिं वसान (य० वा० सं० १६, ५१)"—इत्यादि।

§ १भा० ४२१ पृ० ७पं०।

‖ "कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत्। न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः॥"—इति ऋ० सं० ७, ८, १४, ५।

तव 'अन्यः' कश्चिद् 'अनुवीर्यं भकत्'। तद् वीरकर्म तावकम्, अन्यः कश्चिदनुकर्तुं समर्थः। 'न' अपि 'पुराणः', 'न उत' नापि 'नूतनः' नव इत्यर्थः। न पूर्वे चक्रुः, नापरे करिष्यन्तीत्यभिप्रायः। इतरस्मा-न्नाद् देवनसम्बन्धाच "श्वघ्नी = कितवः"—इत्युपपद्यते ॥

अस्य मन्त्रस्य पूर्वोऽर्द्धर्चः परोक्षकृतः, स एव विपरिणामयितव्यः; अथ चोक्तः समाधिः ॥

निगमप्रसङ्ग मुच्यते ;—"कितवः"—इत्यस्य शब्दस्य "किं तवा-स्तीति" एषा "शब्दानुकृतिः"; स हि नित्यकाल मेव दिदेविषुः प्रतिदेविहभिः, कितवैः पृच्छते,—किं तवास्तीति, तस्माच्छब्दानुकर-णात्कितव एवासौ बभूव। अथवा "कृतवान्" अयं यथा स्यादित्येव मसौ आशास्यते सुहृद्भिरन्यैः कितवैः; स हि तस्मादेव माशामनात् "आशीः"-निमित्त-"नामकः" कितव एवासौ बभूव ॥

"समम्(१८)"—इति *, एतत् "परिग्रहार्थीयं सर्वनाम"। तत् पुनरेतद् "अनुदात्तम्"; "त्वत्समसिमेत्यनुच्चानि"—इति ह्युक्तम् †। विप्रतिपन्नस्वरत्वादेव भाष्यकारेण स्वरोऽवधृतः, पक्षेण चाप्यनेकार्थ-तास्य भवतीत्येतत् प्रदर्शितं भाष्यकारेण ॥ ४ (२२) ॥

मा नः समस्य दूढ्यः१ परिद्वेषसो अंहतिः। ऊर्मिर्न नावमा वधीत् ॥ मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसो अंहतिरूर्मिरिव नाव मावधीदूर्मिरू-

* १म० ४१२७० ११पं० "समस्य"—इति।
† फि० सू० ४पा० ९।

णीतेर्नौः प्रणोत्तव्या भवति नमतेर्वा तत्कथ मनुदात्त-प्रकृति नाम स्याद् दृष्टव्ययं तु भवति। उतो समस्मि-न्नाशिशीहि नो वसो इति सप्तम्यां शिशीतिर्दानकर्म्मा। उरुष्या णो* अघायतः समस्मादिति पञ्चम्या मुरुष्य-तिरकर्म्मकः†। अथापि‡ प्रथमाबहुवचने। नभन्ता मन्यके समे॥५(२३)॥

"मा नः§ समस्य०——०मा वधीत्"। विरूप आङ्गिरस एता माग्नेये सूक्ते ददर्श। गायत्री। आग्नेयी। दशरात्रस्य तृतीयेऽहनि प्रातःसवने आद्ये सूक्ते विनियुक्ता। हे भगवन् अग्ने! युष्मत्प्रसादात् 'मा नः' मास्मान्, 'समस्य' सर्वस्यैव, 'दूढ्यः' दुर्धियः पापधियः, 'परिद्वेषसः' सर्वतो द्वेष्टुः, स्वभूतः, 'अंहतिः' वध इत्यर्थः। 'ऊर्मिनं' ऊर्मिरिव, यथोर्म्मिर्नाव माभिमुख्येन गत्वा वधयति; नैव मंहतिरस्मान् द्वेष्यप्रहितोऽवधीदिति॥ एव मत्र सर्वस्मादेव द्वेष्टुर्वधानभीष्टत्वात् "समस्य"—इत्येतत् सर्वनामेत्युपपद्यते॥

"ऊर्मिः, ऊर्णोतेः" आच्छादनार्थस्य; सा ह्याच्छादयति तीर मुदकमध्ये वा यदन्यद् भवति। "नौः प्रणोत्तव्या भवति" पारगमनाय; "नमतेर्वा" स्यात्; सा हि प्रह्वीभूतेव भवति, पारगमनाय॥

* "०कुर्मीवृष्याणो" क।

† "मुदष्यतो रक्षाकर्मा" क, घ।

‡ "रक्षाकर्मायापि" क।

§ ऋ० सं० ६, ५, १५, ४।

आह; यदेतत् सम मिति शब्दरूपम् "अनुदात्तप्रकृति" अनुदात्तस्वभावम्, "तत् कथं नाम स्यात्?" "अनुदात्तप्रकृतयो हि निपाताः, उदात्तप्रकृतीनि नामानि भवन्तीति। उच्यते;-"द्रष्टव्ययं तु" एतद्, यस्मादनुदात्तप्रकृतित्वेऽपि सति, तस्मान्नामैवैत् "भवति" ॥

आह; क पुनरस्य व्ययो दृष्टः? इति, उच्यते;—"उतो सम-स्मिन्ना शिशीहि नो वसो—इति सप्तम्याम्" व्ययो दृष्टः। "विद्मा सखित्व मुत०—०गोमति"*। सौभरेरार्षम्। सतोबृहती। ऐन्द्री। आख्याने विनियुक्ता। 'विद्म' विजानीमो वयं 'सखित्वं' सखिभावम्। 'उत' अपि च। हे 'शूर' वज्रिन्! इन्द्र! 'भोज्यं' भोग्यम् अंशोपजीव्यत्वं मित्राणाम्, यतो वयं 'आ ईमहे' आभिमुख्येन स्थित्वा याचामहे,— 'ते' तव यानि धनानि। किञ्च; 'उतो' अपि च 'समस्मिन्' सर्वस्मिन् 'शिशीहि नः' देहि अस्माकं हे 'वसो' वसुमन्! इन्द्र!। क पुनराशिशीहि नः? इति,—'वाजे' अन्ने इत्यर्थः। हे 'सुशिप्र' हे सुनस!, अथवा हे सुहनो! 'गोमति' गोभिस्तद्वति अन्ने, अस्मान् प्रतिष्ठापयेत्यर्थः ॥ एव मत्र समस्मिन्निति सप्तम्यां व्ययो दृष्टः ॥

"उरुष्याणो अघायतः समस्मात्—इति पञ्चम्याम्" व्ययो दृष्टः। "स नो बोधि०—०समस्मात्"†। श्रुतबन्धोरार्षम्। आग्नेयी।

---

* "विद्मा सखित्व मुत शूर भोज्य१ मा ते ता वज्रिन्नीमहे। उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति॥"—इति ऋ० सं० ६, २, ९, १।

† "सं ला०——०सखिभ्यः। स नो बोधि सुधी हवं मुरुष्याणो अघायतः समस्मात्॥"—इति य० वा० सं० ३, २६।

द्विपदा। अग्न्युपस्थाने विनियुक्ता। यः त्वमेवम्प्रभावः, यथा-प्रभावं त्वां वय मवोचाम। 'सः' त्वं हे भगवन्नग्ने! 'बोधि' बुध्यस्व 'नः' अस्माक मभिप्रायम्। 'सुधी' शृणु च 'हवम्' आह्वान मिदम्। आहूतश्च 'उरुष्याण:' उपगम्यास्मान्, 'अघायतः' पाप मिच्छतः 'समस्मात्' सर्वस्मात् पाहि। एव मत्र समस्मादिति पञ्चम्यां व्यथो दृष्टः॥

तस्मात् व्ययदर्शनाद्दृष्टानुविधिश्छन्दसि भवतीति कृत्वाऽनुदात्त-प्रकृतित्वेपि सति नामैतद्भवतीत्युपपद्यते * ॥ ५ (२३)॥

हविषां जारो अपां पिपर्त्ति पपुरिर्नरा। पिता कुटस्य चर्षणिः॥ हविषापां जरयिता पिपर्त्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा। उग्रो यः शम्बः पुरुहूत तेनेत्यपि निगमो भवति। केपयः कपूया भवन्ति कपूय मिति पुनाति कर्म्म कुत्सितं दुष्पूयं भवति॥ ६ (२४)† ॥

"कुटस्य(३०)", "चर्षणिः(३१)"—इति ‡, एते अनवगते। "कृतस्य", "चायिता"—इत्येतौ शब्दसमाधी। एक एव निगमः।—"हविषां जारो०—०चर्षणिः"—इति §। प्रस्कण्वस्यार्षम्। आश्विनी। प्रात-

---

* व्ययापीत्यादि मूल मव्याख्यात मेव स्थितम।

† एतदन्त एव चतुर्थः पादः केषुचिद् रो॰ष॰मद्दस्तपुस्तकेषु रो॰षृ॰मु॰ ११०पृ॰)।

‡ १अ॰ ७१२ख॰ १८ प॰।

§ ऋ॰ सं॰ १, २, ११, ४।

रनुवाकाश्विनयोः शस्यते। हे 'नरा' नरौ! अश्विनौ! युवाम्। एषः "आदित्यः", 'पिता' पाता, कृत्स्नस्य जगतः। 'कुटस्य' "कृतस्य कर्मणः" सार्वभौमस्य साध्वसाधुनः। 'चर्षणिः' "चायिता" द्रष्टा, बुद्ध्यधिदेवताभावेनावस्थितः सर्वभूतानाम्। 'अपां जारः' अपां सर्वभूतान्तर्गतानां प्राणभावेनावस्थितो* जरयिता, शोषयिता। 'पपुरिः' च पूरयिता च। प्राप्ते काले 'हविषा' उदकेन 'पिपर्त्ति' पूरयति वा प्रीणयति वा। यौ युवा मेवङ्गुणयुक्तेनादित्येन पूर्य्येथे, प्रीणेथे वा, तौ युवा मिमां नामास्माकमाशिषं समर्द्धयत मित्येव माशीर्याञ्चा॥ एव मत्र "कुटस्य-चर्षणिः"—इत्येते कृतस्य चायिते-त्येव मुपपद्येते॥ नरावत्र द्यावापृथिव्यावभिप्रेते†, तयोश्चोदकेना-दित्यः पूरयिता। तस्मादादित्यविषयचायिता चर्षणिशब्दस्य; तस्य च बुद्ध्यधिदेवताभावेन कृतस्य कर्मणो द्रष्टृत्व मुपपद्यते॥ 'पिपर्त्ति'-'पपुरिः'—इत्येव मेतौ निगमस्थौ शब्दौ "पृणात्यर्थौ वा प्रीणय-त्यर्थौ वा"॥

"शम्बः(७१)"—इति‡, अनवगतम्। "वज्रनाम"—इत्यभिधेय-वचनम्। "शमयिता वा शातयिता वा"—इति शब्दसमाधौ। "आराच्चिदु०—०वाजरत्नाम्"§। कृष्णस्याङ्गिरसस्यार्षम्। त्रिष्टुप्।

---

* "उद्यन् खलु वा आदित्यः सर्वाणि भूतानि प्रणयति, तस्मादेनं प्राण इत्याचक्षते।"—इति ऐ० ब्रा० ५, ५, ६।

† "तत्कावश्विनौ द्यावापृथिव्यावित्येके"—इति प० दै० का० ६, १, १।

‡ १भा० ४१२ पृ० १पं०।

§ "आराच्चिदु मर्प बाधस्व दूर मुग्रो यः शम्बः पुरुहूत तेन। अस्मे धेहि यवमद् गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्॥"—इति ऋ० सं० ७, ८, १२, ९।

माध्यन्दिने सवने स्तोमातिशंसने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। हे 'पुरुहूत' बहुभिराहूत! 'यः' एषः, 'आरात्' समीपे अस्माकं वर्त्तते शत्रुः, तं दूरम् 'अपबाधस्व' नाशयस्वेत्यर्थः। आराच्छब्दो ऽत्र समीपार्थवाची। अन्यत्रापि चोक्तम्,—"आरात् प्राग्वंशादुदयास्तमयौ"—इति। किं पुनरपबाधस्व? 'उग्रो यः शम्बः' उद्गूर्णो यो वज्रः, तेन अपबाधस्व। किञ्च; तं दूर मपबाध्य 'अस्मे' अस्मभ्यं 'धेहि' देहि 'यवमत्' यवैस्तद्वत्—व्रीहिगोधूमाद्यन्नम्। अपि च 'गोमत्' गोभिस्तद्वत्—पश्वादिभिः। किञ्च; स त्व मेतदेवङ्गुणक मस्मभ्य मन्नं ददत् 'कृधि' कुरुष्व इमां 'धियम्' एतत् कर्म, 'वाजरत्नां' वाजरमणीयां, प्रचुरेणान्नेन यथैतस्मिन् कर्मणि वर्त्तमाना रमेमहि, तथा कुरुष्वेत्यभिप्रायः। धीरिति कर्मनामसु पठितम्,—'धीः, शची"—इति *। एव मत्रापबाधनसम्बन्धात् "शम्बः"—इत्येतद् वज्रनामेत्युपपद्यते। अपठित मेतद्वज्रनामसु †,—इत्यतोऽप्रसिद्धार्थम्; तस्यैवम्प्रकरणादर्थसिद्धिर्भवति॥

"केपयः(३२)"—इति ‡, अनवगतम्। "कपूयाः" ह्येते सन्तः केपय इत्युच्यन्ते। आह;—"कपूयम्"—"इति" किमुक्तं भवति? उच्यते;—यदेतत् पापकारी प्रायश्चित्तेन "पुनाति कर्म कुत्सितम्", यच्च तद् "दुष्पूयं" दुष्पावं "भवति" पूयमान मपि, एतत् कपूय मित्युच्यते॥ ६(२४)॥

* १भा० २श्च० १ख० (११), (११)।
† १भा० २८९ पृ० २श्च० १० ख० (१)—(१८)।
‡ १भा० ४११ पृ० ४पं०।

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा। न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥ पृथक् प्रायन् पृथक् प्रथतेः* प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि† यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन् यज्ञियां नावमारोढुं‡ मथ ये नाशक्नुवन् यज्ञियां नावमारोढुं§ मीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त ऋणे हैव॥ ते न्यविशन्तास्मिन्नेव लोक इति वेर्म इति बाहुनाम समीरिततरो¶ भवति। एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे। एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्वांसच मंहसस्त्राणं** धनुर्वा कवचं वा कवचं कु अञ्चितं भवति काञ्चितं भवति कायेऽञ्चितं भवतीति वा॥७(२५)॥

"पृथक् प्रायन्०—०केपयः"††। पूर्वयैव समानार्षविनियोगा; इयन्तु जगती। 'पृथक् प्रायन्' 'पृथग्' भूता एव विश्वा-

* "पृथतेः" क। "(पृथक् प्रथतेः)" ख।

† "०ह्वयन्ताकुर्वतः श्रवणीयानि" क, ख, ग।

‡,§ 'मारोढु" च।

|| "ऋणेनैव" क, ख, ग।

¶ "समीरिततमो" क।

** "मंहसत्राणं" क, ख, ग।

†† ऋ० सं० ७, ८, १०, १।

कर्मानुरूपेण; देवयानेन पथा, पितृयानेन वा 'प्रापन्'। हे इन्द्र! त्वत्प्रसादात् देवलोकं गन्धर्वलोकं पुनः ख लभ्यन्ते। 'प्रथमाः देवऋत्वः' ये मुख्या देवाना माज्ञाकारो यत् कर्मसु। किञ्च; 'दुस्तरा' "अन्यैः" अपकृद्भिर्दुस्तराणि। 'अवस्थानि' "अवनीयानि कर्माणि" 'अकृण्वत' अकुर्वत। किञ्च; 'ये' त्वत्प्रसादरहिताः जनाः, 'यज्ञियां नावम्*', 'आरुहम्' "आरोढुम्", 'न शेकुः' नाशक्नुवन्। अथ पुनर्ये नाशक्नुवन् यज्ञियां नाव मारोढु किमर्थं? विषयप्रधानाः, कपूय मेव दुष्पूय मेव कर्म चक्रिरे; तेनैव कपूयेन कर्मणा प्रेर्यमाणाः 'ते', 'ईर्मैव' "इहैव" लोके यथा कर्मानुरूपायां योनौ 'न्यविशन्त'। तदुक्तम्;—"अथ य इह कपूयचरणा अभ्याशो-ह्ययत्†, ते कपूयां योनि मापद्येरन्;—श्वयोनिं वा, शूकरयोनिं वा, चण्डालयोनिं वा"—इत्येवमादि‡॥ एवं मन्त्र न ये शेकुः यज्ञियां नाव मारोढु मित्येतेन सम्बन्धात् "केपयः = कपूयाः"—इत्युपपद्यते॥

* "यज्ञो वै सुतर्मा नौः, कृष्णाजिनं वै सुतर्मा नौ र्वाग्वै सुतर्मा नौ र्वाच मेव तदारुह्य तया स्वर्गं लोक मभिसन्तरन्ति।"—इति श० ब्रा० १, २, १। किञ्च; "तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते य संवत्सरं द्वादशाहं वासते। तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेव मेवैतास्त्रिष्टुभः समारोहन्ति।"—इति ऐ० ब्रा० ९, ४, ५।

† "अभ्याश मनुभूय"—इत्येव मेव हस्तिपुस्तकपाठः परं सकलविरुद्धः।

‡ "य इह रमणीयचरणा अभ्याशो ह यत्, ते रमणीयां योनि मापद्येरन्, ब्राह्मणयोनिं वा, क्षत्रिययोनिं वा, वैश्ययोनिं वाऽथ य इह कपूयचरणा०——० चण्डालयोनिं वाथैतयोः पथोर्न कतरेणचन, तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति; जायस्व-म्रियस्वेत्येतत्तृतीयं स्थानम्।"—इति छा० उ० ५, १०।

शब्दसारूप्यप्रसङ्गादुच्यते;—"ईर्मे इति बाहुनाम"—इति, स हि "समीरिततरो भवति" एतेभ्योऽङ्गेभ्यः॥

"तूतुम्-आतुवे(७४)"—इति*, एते अनवगते। "तूतुम्"—इत्यस्य "तूर्णम्"—इति शब्दसमाधिः। "आतुवे"—इत्यस्य "उपाकुरुषे"—इति शब्दसमाधिः। "एता विश्वा०—०वचः" †। इन्द्रस्य वैकुण्ठस्येव मार्षम्। ऐन्द्रे सूक्ते निविद्धानीये महाव्रते मरुद्वत्ये शस्यते। 'एता' एतानि, 'विश्वा' विश्वानि, सर्वाणि स्थानानि। त्व मुपागम्य तेनतेन देवतात्मना कुरुष्व निवर्त्तयेत्यर्थः। आह; कतमानि पुनः स्थानानि? उच्यते;—"स्वयं सूनो सहसो यानि दधिषे"। हे 'सूनो सहसः' बलस्य पुत्र! 'यानि' एतानि 'स्वयम्' एव 'दधिषे' धारयसि, तानि त्व मेव कुरुषे। यत एवं कुरुषे, अत एव त्व मेव धारयिता स्रष्टा चास्य जगतः। अत एतस्मात् कारणात् 'वराय' वरयितव्याय, 'ते' तव, 'पात्रम्' एतत् सोमपूर्णं प्रदिशामः। 'धर्मणे' धारयित्रे। 'तना' च धनं च, सर्वं तवैव। 'यज्ञः' च क्रतुः, तवैव। 'मन्त्रः' च कर्मकरणः, तवैव। 'ब्रह्म' चान्नं, तवैव। 'उद्यतं' चैतदनेकप्रकार मपि स्तुतिलक्षणं 'वचः' तवैव। एव मत्र शब्दसारूप्यात् "तूतुम्"—इत्येष शब्दः तूर्णं मित्येव मुपपद्यते। करणसम्बन्धाच्च; यद्धि कर्म, तूर्णं मेव करण मिष्यते कर्तृभिः तस्मादुपपद्यते। "आतुवे"—इत्यत्रापि यद्धि क्रियते, तदुपग-

* १भा० ४११ पृ० ९पं०।

† "एता विश्वा०—०दधिषे। वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः॥"—इति ऋ० सं० ८, १, ९, ९।

‡ "स योऽश्वं प्रक्षेत्युपाक्षे"—इति श० ब्रा० ९, ९।

स्याभिमुख्येनैव स्थित्वा क्रियत इति 'उप'-शब्दोऽत्र भाष्यकारेणाध्याहृतः॥

अत्र "सूनो! सहसः"—इत्येतस्मादिशेषलिङ्गादाग्नेयी सेतामृचं कृत्वा केचिद् व्याचक्ष्यते; अग्निर्हि बलेन मथ्यमानो जायत इति। तथा हि प्रकरणविरोधो भवति। सूक्तं ह्येतदैन्द्रम्। ऐन्द्रत्वे तस्य "सूनो!"-"सहसः"—इत्यनयोः पदयोरर्थयोजना, अधिदेवताभावेन; प्राण इन्द्रो व्यवस्थितः, तस्येतरो यः प्रजासु व्यादिष्टः, प्राणस्तु पुत्रः;—इत्येव मुपपद्यते पितृ-पुत्रभावः। तदुक्तम्;—"प्राणो वा अह मस्मि, प्राणस्त्वं, प्राणः सर्वा ण भूतानि"—इति* ॥

"अंसत्रम्[१५]"—इति†, अनवगतम्। विकल्पतश्चानेकार्थम्। "अंहसः त्राणम्"—इत्यर्थप्रतीतिः। "धनुर्वा कवचं वा"—इत्यभिधेयवचनम्; ताभ्यां हि पुरुषाः साङ्ग्रामिकाः, अंहसस्त्रायन्ते। आख्यानप्रसक्त मुच्यते;—"कवचं, कु-अञ्चितं भवति" कुटिल मञ्चितम्; स हि तस्य स्वभावः। अथ वा "काञ्चितम्" कुटिलीकृतं "भवति"। अथ वा "कायेऽञ्चितम्" तद्गतं "भवति" ॥७(२५)॥

प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथ मित् कृणुध्वम्। द्रोणाहाव मवत मश्मचक्र मंसत्रकोशं सिञ्चता नृपाणाम्॥ प्रीणीताश्वान्त्सुहितं‡ जयथ जयनं

* "प्राणो वा०——०प्राणो ह्येवैतानि सर्वाणि भवति"—इति शा० ब्रा० ९,९।

† १भा० ४२२ पृ० १४ पं०।

‡ "प्रीणीताश्वान्सुहितं" क, ङ।

वो हित मस्तु स्वस्तिवाहनं रथं कुरुध्वं द्रोणाहावं द्रोणं द्रुममयं भवत्याहाव आह्वानादावह आवहनादवतोऽवातितो महान् भवत्यश्मचक्र मशनचक्र मसनचक्र मिति वांसत्रकोश मंसत्राणि वः* कोशस्थानीयानि सन्तु कोशः कुष्णातेर्विकुपितो भवत्यय मपीतरः कोश एतस्मादेव सञ्चय आचितमात्रो महान् भवति सिञ्चत नृपाणं नरपाणं कूपकर्मणा सङ्ग्राम मुपमिमीते काकुदं तात्वित्याचक्षते जिह्वा कोकुवा सास्मिन् धीयते जिह्वा कोकुवा कोकूयमाना वर्णान्नुदतीति† वा कोकूयतेर्वा (स्याच्छब्दकर्मणो ‡) जिह्वा जोहुवा तालु तरते स्तीर्णतम मङ्गं लततेर्वा स्याद् (लम्बकर्म्मणो §) विपरीताद् यथा तल्वं लतेत्यर्थविपर्य्ययः॥ ८ (२६)॥

"प्रीणीताश्वान्० —० नृपाणम्" ‖। बुधस्य सोमपुत्रस्येय मार्षम्। वैश्वदेवे सूक्ते। 'प्रीणीत' प्रीणयत यवसोदकादिना। एतान् 'अश्वान्' उपस्थितोऽयं सङ्ग्राम इत्यभिप्रायः। प्रीणयित्वैतानश्वानेभिरश्वैरुपजातवीर्यैः 'हितं' "सुहितं" 'जयाय' "जयथ", "जयनं वो हित

* "मंसत्राणि व" क ख, ग। "मंसत्रणि वः" घ।

† "एनान्नुदतीति" क, ख, ग।

‡ नैतद् दृश्यते क-ख-ग-पुस्तकेषु।

§ नैतद् दृश्यते क-घ-पुस्तकयोः।

‖ ऋ० सं० ८, ५, १९, १।

मत्रु" अविहितोऽपि जयः कश्चिद् भवत्येव,—यथ युद्धप्रवृत्तावुपचारयो इन्यन्ते। 'स्वस्तिवाहम्' अभिपूजितवाहं 'रथं' 'कृणुध्वम्' "कुरु-ध्वम्"; हे देवाः! एव मेतां साङ्ग्रामिकी मितिकर्त्तव्यतां कृत्वा 'द्रोणं' "द्रुममयम्" एतम् "आहावम्" आहावस्थानीयं रथं कृत्वा; 'अवतम्' एतं सङ्ग्रामकूपम्। 'अश्मचक्रम्' "अशनचक्रं" व्यापनचक्रं; व्यापयन्ति हि तत्र क्षिप्राणि चक्राणि शत्रूणाम्। अथ वा "असन-चक्रम्" अस्यन्ते हि तत्र चक्राणि। 'अंसत्रकोशम्' "अंसत्राणि" धनूंषि, कवचानि वा "कोशस्थानीयानि" तत्र "सन्तु"। तैः 'सिञ्चत' उत्सिञ्चतैनं सङ्ग्रामकूपम्। 'नृपाणं' "नरपाणम्", नरा एव तत्रोदकस्थानीयास्त एवोच्यन्ते। एव मत्र "कूपकर्मणा" अस्मि-न्नुत्तरेऽर्द्धर्चे किञ्चित् साधर्म्येण "सङ्ग्राम मुपमिमीते" मन्त्रदृक्॥ एव मत्र सङ्ग्रामोपमासम्बन्धादुत्सेचनसम्बन्धाच्च "अंसत्र"-शब्देन धनुः, कवचं वोच्यत इत्युपपद्यते॥

ततः "आहावः, आह्वानात्"—इत्येतद्यथावस्थितस्यैव मन्त्रपदस्य निर्वचनम्। आहूयतेऽस्मिन्नित्याहावः*। इदं त्वन्यत्,—"आवहः, आवहनात्"—इति अस्यैव विपरिणम्यते। उह्यतेऽस्मिन्नुदक मित्यावहः। "अवतः" कूपः; स हि खन्यमानो "महानवातितः" अवाक्कृततो "भवति" सत इत्यर्थः। 'अंसत्रकोशम्'—इति कोश-शब्दो विग्रह-प्रसक्तः "कोशः कुष्णातेः"—इति। "विकुषितः" स विविधं कुषितो "भवति" चर्म्मकोशः, सुषिरत्वात्। "अय मपीतरो द्रव्यकोशः",

* "अभ्यंर्यो इत्याक्रयते चतुर्दशस्य वदिष्यमाणस्याहावस्य रूपम्।"—इति ऐ० ब्रा० ५, ४, ९।

"एतस्मादेव" कुश्याते:। "सम्रय:" सम्रयकोश:। स हि "आचित-मात्र:" मात्राभि: आचितो "भवति", "महत्त्वात्"॥

"काकुदम्[०६]"—इति *, अनवगतम्। "तालु—इत्याचक्षते"—इत्यभिधेयवचनम्। "जिह्वा, कोकुवा"—इत्युच्यते; "सा" हि कोकुवाख्या जिह्वा, "अस्मिन्" तालुनि वर्णाभिव्यक्त्यर्थं मुहुर्मुहुः "धीयते", तदेतत् कोकुवाधानं सत् काकुद मित्यभिधीयते। "जिह्वा कोकुवा" कथं स्यात्? इति, उच्यते;—शब्दानुकरणनिमित्तं जिह्वायाः कोकुवात्वम्। "कोकूयमाना" तथाविधं हि सा कुर्वाणा, तालुनि "वर्णान् नुदति"; तस्माद्वा कोकुवां नुदत् काकुदं स्यात्। आह;—जिह्वैव तावत् कस्मात् "जिह्वा"—इत्यभिधीयते? इति, उच्यते;—सा हि "जोहुवा" सती जिह्वेत्युच्यते। तया प्राणिनोऽन्न मात्मन्येव जुहृति; तया आह्वयतीति वा जोहुवा। अथ "तालु" कस्मात्? उच्यते;—"तरते:" धातो:; तद्धि "तीर्णतरम्" इतराङ्गेभ्यो विस्तीर्णत्वेन भवति। "लततेर्वा स्यात्", "वीपरीतात्" आद्यन्तवैपर्य्येण,—"यथा तलम्"—इति। समानजातीयशब्दोपप्रदर्शनं दृष्टप्रतीत्यर्थम्। अस्यैव लततेर्लवनार्थस्य "लता"—इत्येतच्छब्दरूपम् "अविपर्य्यय:" अविपर्य्ययेण भवति॥ ८ (२६)॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरा मिव॥ (सुदेवस्त्वं कल्याणदानो यस्य तव देव सप्त सिन्धवः प्राणायानुक्षरन्ति

* १... २ ख० १९ पं०।

काकुदं सूर्म्यं सुषिरा मिवेत्यपि निगमो भवति॥*) (सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण यस्य ते सप्त सिन्धवः सिन्धुः स्रवणात् यस्य ते सप्त स्रोतांसि तानि ते काकुद मनुक्षरन्ति सूर्मि† कल्याणोर्मि‡ स्रोतः सुषिर मनु यथा§ वीरिटं तैटीकिरन्तरिक्ष मेव माह॥ पूर्वं वयते¶ रुत्तर मिरतेर्वयांसी-रन्त्यस्मिन् भांसि वा** तदेतस्या मृच्युदाहरन्त्यपि†† निगमो भवति‡‡)॥ ९ (२७)§§॥

"सुदेवो असि०—०सुषिरा मिव"||||। प्रियमेधस आर्षम्। अनुष्टुप्। हे "वरुण!" "सुदेवः" शोभनस्त्व मसि देवः। 'यस्य'

---

* क-ख-पुस्तकयोर्नास्त्येषः पाठः।

† "सूर्मि" ङ।

‡ "कल्याणोर्मिः" ग, ङ।

§ "मनु यस्य" ग।

|| "मेव माह" ङ।

¶ "पूर्वं वेते" ग, ङ।

** "भाक्नौति वा" ग।

†† "मृच्युदाहरन्तीत्यपि" ग, ङ।

‡‡ क-ख-पुस्तकयोर्नास्त्येषः पाठः।

§§ सुदेवस्त्वं कल्याणदान इत्यारभ्य भवतीत्यन्तपाठो ह्यतावननुभूतोऽपि क-ख-ग-पुस्तकेषु दृष्टत्वादिहोपन्यस्तः। सुदेवस्त्वं कल्याणदेव इत्यारभ्य भवतीत्यन्तपाठस्तु क-ख-पुस्तकयोरदृष्टोऽपि ह्यतावनुभूयते, ङ-च-पुस्तकयोश्च दृश्यत एवेतीहोपन्यस्तः। ग-पुस्तके तु क-ख-पुस्तकारूढेना ङ-च-पुस्तकारूढेनयोभावेन पाठो यथैव स्थितौ, एव मेव पूर्वापरीभूतौ दृश्येते। तथा च ग-पुस्तकानुसारत एवासौ क्रमोऽत्र मुद्र्यते सर्वपाठप्रदर्शनायेति।

|||| ऋ० सं० ६, ५, ७, १।

'ते' सव, एताः 'सप्त सिन्धवः' अन्तरिक्षनद्यो वा बहुत्वाक्रत्येवमाद्याः; "अश्वा नामासि, तितुत्वा नामासि, अभ्रपत्नी नामासि, मेघपत्नी नामासि, वर्षयन्ती नामासि, पुरस्तादहन्ना नामासि"—इति सिन्धुनद्य उच्यन्ते सप्तैताः। समुद्रा एव वा सप्तसिन्धुशब्देनोच्येरन्। 'काकुदं' तालु, 'अनुक्षरन्ति', 'सूर्म्यं सुषिरां' नगरोदकनिःसरणभूमिम् 'इव'; सर्वतः समस्नुवतेत्यभिप्रायः॥ एव मत्र सिन्ध्वनुक्षरणसम्बन्धात् "काकुदं = तालु"—इत्युपपद्यते। दुर्वचनत्वं सर्वस्य मन्त्रस्य कृत्स्नाध्ययने प्रयोजनम्। अन्यास्तु हि ऋचु या एतस्मिन् प्रकरणेऽधीताः, तासु समाम्नातेभ्यः पदेभ्योऽन्यान्यपि अनवगतसंस्काराण्यनेकार्थानि वा सन्तीत्युपप्रदर्शनार्थं कृत्स्नैव ऋगधीता स्यात्* ॥

"बीरिटम्(७०)"—इति †, अनवगतम्, पक्षेण चानेकार्थम्। भीरस्मिन् तन्यत इति भी-तननम्, अन्तरिक्षम्; निरालम्बत्वान् सर्व एव बिभेति। तदेवं भी-तननं सद् बीरिट मित्युच्यते। अथ वा भासोऽत्र नक्षत्रादीनां तन्यन्ते, तदेतद्भास्तननं सद् बीरिट मित्युच्यते। गणाभिधानपक्षेऽपि यथासम्भवं योज्यम्‡ ॥ ८(२७) ॥

प्र वांऋजे सुप्रया बर्हिरेषा मा विश्पतीव बीरिट इयाते। विशा मक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान्॥ प्रऋज्यते सुप्रायणं बर्हिरेषा मेयाते सर्वस्य पातारौ वा पालयितारौ वा बीरिट मन्तरिक्षं

* सिन्धु-सूर्मिशब्द-व्याख्यानेऽव्याख्याते एव स्थिते

† १भा० ४११ पृ० १पं० "बीरिटे" इति।

‡ इहापि नैरुक्त मव्याख्यात मेव स्थितम्।

भियो वा भासो वा ततिरपि वोपमार्थे स्यात् सर्वपती इव राजानौ वीरिटे गणे मनुष्याणां रात्र्या विवासे पूर्वस्या मभिह्रुतौ वायुश्च नियुत्वान् पूषा च स्वस्त्ययनाय नियुत्वान् नियुतोऽस्याश्वा नियुतो नियमनाद्वा नियोजनाद्वाऽच्छाभेराप्तु मिति शाकपूणिः परीं सी मिति व्याख्यात मेन* मेना मस्या अस्येत्येतेन व्याख्यातं सृणिरङ्कुशो भवति सरणादङ्कुशोऽञ्चनेराकुञ्चितो भवतीति वा। नेदीय इत्सृण्यः पक्व मेयादित्यपि निगमो भवत्यन्तिकतम मङ्कुशादायात्पक्व मौषध मागच्छत्विति त्यागच्छत्विति† ॥ १० (२८) ॥

॥ इति पञ्चमाध्यायस्य चतुर्थः पादः‡ ॥ ५. ४.

'प्र वावृजे सुप्रया॰—॰नियुत्वान्" § । वसिष्ठस्यार्षम्। त्रिष्टुप्। 'प्रवावृजे' "प्रवृज्यते" प्रस्तीर्यत इत्यर्थः। 'सुप्रयाः' "सुप्रयाणं" सुप्रगमनं, यत् सुख मभिगच्छन्ति देवताः प्रास्तीर्णे तस्मिन्। "आविश्पतीव वीरिट इयाते"। "आ इयाते" 'विश्पती' "सर्वस्य" जगतः "पातारौ वा पालयितारौ वा" धात्वन्यत्व मर्थैकत्वम्। 'इव' पादपूरणः; एवेत्येतस्यार्थे वा। क्व पुनरवस्थितौ एयाते?

* "व्याख्याताः। एन" च।

† "औषध मागच्छत्विति" च।

‡ रोथ्सम्पादितपुस्तकेषु बहुषु चतुर्विंशखण्डान्त एव चतुर्थः पादः, इह तु पञ्चमः पादः समाप्तः।

§ ऋ॰ मं॰ ५, ४, ९, २।

इति, उच्यते;-'वीरिटे' अन्तरिक्षे इत्यर्थः। "अपि वा" अथ मित्र-शब्दः "उपमार्थे" एव "स्यात्"; विश्पतीव; "सर्वपती इव राजानौ वीरिटे गणे" अवस्थितौ। आह;—कस्य पुनः एयाते? कौ वा एयाते? कं वा अर्थं पुरस्कृत्य एयाते? इति, उच्यते;—"एषां" 'विशां' "मनुष्याणां" तासु क्रियासु आक्रयमाणौ 'अक्तोः' "रात्र्याः" अपगमे सति, 'उषसः' च आगमनकाले 'पूर्वहूतौ' "पूर्वस्याम्" एव "अभिहूतौ" प्रथमे एवाह्वानकाले। 'वायुः' "च" 'नियुत्वान्', 'पूषा' "च" 'स्वस्तये' "स्वस्त्ययनाय" स्वस्त्ययनार्थम्, एयाते यजमानस्य॥ अन्तरिक्षेणैव हि देवता आगच्छन्तीति "वीरिटम् = अन्तरिक्षम्"—इत्युपपद्यते। यस्मिन्नपि पक्षे, गणो वीरिट-शब्देनोच्यते, तस्मिन्नपि पक्षे, विश्पती राजानौ सर्वदा गणमध्यगतावेव आगच्छत इत्युपपद्यत एव॥

आह;—"नियुत्वान्" कस्मात्? इति, उच्यते,—"नियुतोऽस्याश्वाः"। अथ "नियुतः" कस्मात्? उच्यते,—"नियमनात्"। नीचैर्हि नियम्यन्ते। "नियोजनाद्वा" नियोज्यन्ते हि रथे। "नियुतो वायोः*"—इत्येतस्मात् कारणात् विप्रकृष्टोऽपि नियुत्वच्छब्दो वायु-शब्देनैव संयोजितो भाष्यकारेण; न हि पूष्णो नियुद्भिः सम्बन्धोऽस्ति॥

"अच्छ(७८)"—इति†, एष शब्दो "अभेः" अर्थे भवति। "आप्तुम्" —"इति" योऽर्थ उक्तः स्यात्, स एवार्थः अच्छेत्यनेनोक्तो भवति, एवं "शाकपूणिः" आचार्यो मन्यते॥

* १भा० १५२पृ० १अ० १५ख० (१०)।

† १भा० ४२२पृ० ११पं०।

"परि(७९)", "ईम्(८०)", "सीम्(८१)",—"इति *" एते "व्याख्याताः" षष्ठेऽध्याये निपातोपसर्गप्रकरणे † ॥

"एनम्(८२)", "एनाम्(८३)"—इति ‡ पदद्वयम्, "अस्याः-अस्येत्येतेन" पदद्वयेन "व्याख्यातम्" नवमेऽध्याये §। निगमास्त्वाच्च मृग्याः॥

"सृणिः(८४)"—इति ‖, अनवगतम्। "अङ्कुशो भवति"—इत्यभिधेयवचनम्। "सरणात्"—इति व्युत्पत्तिः। सर इति न्याय्यम्। सरति गच्छत्यसौ हस्तिशिरसि। "अङ्कुशोऽञ्चतेः"—इति पर्यायप्रसक्तम्; अञ्चत्यसौ गच्छति हस्तिशिरसि। "आकुचितो भवतीति वा"। स ह्याभिमुख्येन कुटिलीभूतः भवति॥

"युनक्त सीरा वियुगा०——०पक्व मेयात् ¶"। बुधस्येयमार्षम्। त्रिष्टुप्। वैश्वदेवी। ऋत्विक्स्तुतिर्वा, अग्नौ मध्यमदान्तयोजने सीरानुमन्त्रणे विनियुक्ता। 'युनक्त' योजयत, देवाः योजयितारः, 'सीरा' सीराणि, 'वि' 'तनुध्वम्' वितनुत च 'युगा' एतानि युगानि, 'कृते' कृष्टे 'इह' अस्मिन् 'योनौ' क्षेत्रे 'वीजं'

* १भा० ४२३पृ० १३पं०।

† "परीति सर्वतोभावम्"—इति (१भा० ४१पृ०) १अ० १पा० ५ख०। "अनर्थकाः कर्मोपसंग्रहार्थीया"—इति (१भा० ७३पृ०) १अ० ३पा० ५ख०। "सीमिति परिग्रहार्थीया वा पदपूरणा वा"—इति (१भा० ६१पृ०) १अ० ३पा० २ख०।

‡ १भा० ४२३पृ० १९पं०।

§ "अस्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे"—इति (१भा० ४०५पृ०) ४अ० ४पा० ४ख०।

‖ १भा० ४२४पृ० ३पं०।

¶ "युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम्। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात्॥"—इति य० वा० सं० १२, ६८।

'वपत'। तथा 'च' वपत, यथा 'गिरा' वाचा यत् प्रार्थयामः, तत् 'श्रुष्टिः' क्षिप्र मेव 'असद्' भवेत्; 'सभराः' च अतिफलभारवत्य एताः सुरोषधयः 'नः' अस्माकम्। किञ्च; 'नेदीय इत्सृण्यः' "सृणि रङ्कुशो भवति" यावति प्रदेशेऽवस्थित माक्रष्टुं शक्नोति, ततोऽपि नेदीयः। अत्र 'पक्वम्' औषधं प्रचुरत्वात् ओषधीनाम्, 'एयात्' आगच्छेदस्मान् प्रति; तथा शीघ्रं बहु च वपतेत्यर्थः। एव मत्र नेदीय इत्यनेन सम्बन्धात् "सृणिरङ्कुशो भवति"—इत्युपपद्यते। अन्ये तु ब्रुवते। तथा वपत, यथा प्राग् दात्राकर्षणान्मुष्टिः पूर्येतेति दात्र मेवास्मिन्पक्षेऽङ्कुश-शब्देनोच्यते। तदाकृष्टसस्यस्य अङ्कुशाभावात् दात्राकर्षणात् प्राग् "अन्तिकतमं" सन्निकृष्टतम मौषधं पक्वं आगच्छे दिति युष्माभिरेव मुक्ते सति एतत् वय माशास्महे,—"पक्व मौषध मागच्छत्विति"॥

अध्यायसमाप्त्युपप्रदर्शनार्थाय द्विरभ्यास इति ॥ १० (२८) ॥

॥ इति निरुक्तवृत्तौ दशमाध्यायस्य * चतुर्थः पादः ॥ ५, ४ ॥

ऋज्वर्थायां निरुक्तवृत्तौ
जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ
दशमोऽध्यायः (पञ्चमोऽध्यायः) समाप्तः ॥ ५ ॥

---

* १भा० १४९ पृ० "१॥" द्रष्टव्यम्।

१ २ ३ ४ ५ ६ ७
( सख्निमसश्चन्तीनयस्यवराद्धोगायन्तित्वापविचंपुरु-
८ ९ १० ११ १२ १३ १४
त्वाकिमित्तेप्रतत्तेऽग्निन्नरएकयापान्तमन्युरुर्वश्यप्सराउ-
१५ १६ १७ १८ १९ २०
तासिसइन्नियतकद्रामर्त्तपत्नीवन्तःसुगुरसदृकश्चन्द्रमा-
२१ २२ २३ २४ २५
अरुणोमायइन्द्राग्नीमानःसमस्यहविषाजारःपृथक्प्रा-
२६ २७ २८
यन्प्रीणीतासुदेवःप्रवाहजेऽष्टाविंशतिः ॥* )

॥ इति निरुक्ते पूर्वषट्के पञ्चमोऽध्यायः ॥ ५ ॥

* १भा० १४६ पृ० " * * " द्रष्टव्यम्

## ॥ अथ षष्ठाध्यायः ॥

तत्र,

### ॥ प्रथमः पादः ॥

ॐ३म्*। त्व मग्ने द्युभिस्त्व माशुशुक्षणिस्त्व मद्भ्यस्त्व मश्मनस्परि। त्वं वनेभ्यस्त्व मोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ त्व मग्ने द्युभिरहोभिस्त्व माशुशुक्षणि राशु इति च शु इति च क्षिप्रनामनी भवतः क्षणिरुत्तरः क्षणोतेराशु शुचा क्षणोतीति वा सनोतीति वा शुक् शोचतेः पञ्चम्यर्थे वा प्रथमा तथा हि वाक्यसंयोग आ इत्याकार उपसर्गः पुरस्ताच्चिकीर्षितज उत्तर आशु शोचयिषुरिति शुचिः शोचतेर्ज्वलतिकर्मणोऽय मपीतरः शुचिरेतस्मादेव निष्षिक्त मस्मात् पापक मिति नैरुक्ताः ॥ १ † ॥

"आशुशुक्षणिः(१)"—इति ‡, अनवगतम्। "आशु शुचा सनिता वा" स्यात्, "आशु शुचा क्षणिता वा"। "त्व मग्ने

* "ओं" ख। "ॐ" ग। "ओः" ङ। च-पुस्तके न कि मपि।

† ङ-च-पुस्तकयोर्नात्र खण्डसमाप्तिः।

‡ १भा० ४२१ पृ० ९ पं०।

द्युभिस्त्वमा शुशुक्षणिः०——०जायसे शुचिः''*। इत्यस्मदस्येव मार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। जगती, आग्नेयी। हे भगवन्! 'अग्ने!' 'त्वं' 'द्युभिः' अहोभिः निमित्तभूतैः पौर्णमास्याद्यैः एषां मथ्यमानो नृणां जायसे; पौर्णमास्या ममावस्यायां वादधीतेत्युक्तम्†। किञ्च; 'त्वम् आशुशुक्षणिः'। "आशु इति च शु इति च" एते "क्षिप्रनामनी भवतः"। शु-इत्येतदत्र प्रामन्त्रिक मन्यचोपकारं करिष्यतीति। तद्यथा,—"शुनो वायुः, शु एत्यन्तरिक्षे"—इत्येव मादौ‡। 'आशुशुक्षणिः'—इत्येतेषां पञ्चाना मक्षराणा माद्यं तावदक्षरद्वयम् 'आशु'—इत्येतत् क्षिप्रनाम§। अधुना 'शु'—इत्येतत् तृतीय मक्षर मतिक्रम्य उत्तर मक्षरद्वयं निगद्य,—"क्षणिः"—इत्येष द्व्यक्षरः शब्दः "क्षणोतेः" धातोः (तना० उ०) हिंसार्थस्य। "क्षनोतेः (तना० उ०)" वा सम्भजनार्थस्य। मध्यमं तु 'शु'—इत्येतदक्षरं शुचेः (भ्वा० प०) दीप्त्यर्थस्य। अथ कोऽर्थः सर्वैरप्येतैरक्षरैरभिधीयते? इति उच्यते,—"आशु" "शुचा" दीप्त्या "क्षणोति" हिनस्ति—"इति" आशुशुक्षणिः, अग्निः। अथ वा "आशु" "शुचा" "सनोति" सम्भजति—"इति" आशुशुक्षणिः, अग्निः। क्षणोतेः सनोतेश्च विकल्पः। "शुक् शोचतेः"—इति। पञ्चाना मक्षराणा माशुशुक्षणि-शब्दे तृतीय मक्षरं 'शु'—इति, तस्यैतन्निर्वचनम्। एवं तावदय मेको निर्वचनप्रकारः आशुशुक्षणि-शब्दस्य।

* ऋ० सं० २, १, १०, १।

† "इष्टिं वा पौर्णमासे वाऽग्निमाधानं कुर्वीत"—इति मी० श्र०सू० १, १, १४।

‡ प० दै० का० ९ख० ४पा० ९ख०।

§ "शु(१५), आशु(१६)"—इति क्षिप्रनामसु (२अ० १५ख० द्रष्टव्ये।

अथ वैव मन्यथा स्यात् "पञ्चम्यर्थे" इयं "प्रथमा" विभक्तिः। 'आशुशुक्षणेः'—इति यदुक्तं स्यात्, एतदुक्तं भवति—'आशुशुक्षणिः'—इति। आह,—किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यते? इति, उच्यते,—"तथा हि वाक्यसंयोगः" तेन प्रकारेण पञ्चमीत्वेन विपरिणामे पञ्चमीत्वेन विपरिणतस्य शब्दस्यानेन वाक्येन संयोगेऽर्थसङ्गतिर्भवति न यथावस्थितस्य। आह,—कथं कृत्वा?—इति, उच्यते;—'त्व मद्भ्यस्त्व मश्मनस्परि। त्वं वनेभ्य स्त्व मोषधीभ्यः'—इत्येतान्यक्षराणि बहूनि पदानि पञ्चम्यन्तानि, तस्मादनेनापि पञ्चम्यन्तेनैव भवितव्य मित्युपपद्यते पञ्चमीत्वेन विपरिणाम इति। आशुशुक्षणिरित्येतस्याक्षरपञ्चकस्य य एषः पुरस्तात् "आ-इति आकारः", एष तावत् "उपसर्गः"। यः पुनरेष शुशुक्षणिरिति "उत्तरः" अनन्तरश्चतुरक्षरः शब्दः, एषः "चिकीर्षितजः" चिकीर्षितादर्थाज्जातः सनन्तादित्यभिप्रायः। अथ पुनः समस्तस्य कोऽर्थः? इति, उच्यते;—यः कश्चित् "आशुशोचयिषुः" आदिदीपयिषुः भवति, स आशुशुक्षणिः (यजमान इति यावत्*) तस्मादाशुशुक्षणेः त्वं हे भगवन्नग्ने! 'जायसे'। कि मेतावदेव? नेत्युच्यते,—त्वम् 'अद्भ्यः' जायसे, वैद्युतात्मना। त्व मेव च 'अश्मनः' 'परि' परितः सर्वतः, इतरेतराभिघाताज्जायसे। त्वं 'वनेभ्यः' दारुभ्यः। त्वम् 'ओषधीभ्यः' शरादिभ्यः। त्वं 'नृणां' मनुष्याणां हे 'नृपते' मनुष्यपते! 'जायसे' अभिव्यज्यसे। 'शुचिः' दीप्त इत्यर्थः॥

"शुचिः शोचतेः" ज्वलत्यर्थस्य। "अथ मपीतरः शुचिः" लौकिकः

* क-पुस्तके नैतद् दृश्यते।

“एतस्मादेव”—इति वैयाकरणा मन्यन्ते; नैरुक्ताः पुनः निःपूर्वात् सिञ्चतेरितरः शुचिरित्येवं मन्यन्ते; “निः” निष्कृष्य हि “अस्मात्” “पापकम्” अशुचित्वम्, अन्यस्मिन् “सिक्तं” भवतीत्येतम्। अथाग्निर्वाच्य आशुशुक्षणिरन्यो वा यः कश्चिदग्निं मथित्वा तेन किञ्चिदादिदीपयिषुर्भवति, स वा आशुशुक्षणिरिति॥ १॥

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्। आशा दिशो भवन्त्यासदनादाशा उपदिशो भवन्त्यभ्यशनात् काशिर्मुष्टिः प्रकाशनान्मुष्टिर्मोचनाद्वा मोषणाद्वा मोहनाद्वा। इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते। इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनाद्रोधः कूलं निरुणद्धि स्रोतः कूलं रुजतेर्विपरीताल्लोष्टोऽविपर्ययेणापारे दूरपारे यत् सङ्गृभ्णासि मघवन्काशिस्ते महान्। अहस्त मिन्द्र सम्पिणक्कुणारुम्। अहस्त मिन्द्र कृत्वा सम्पिण्ड्ढि* परिक्वणनं मेघम्॥ २ (१)॥

“आशाभ्यः[२]”—इति †, अनवगत मनेकार्थञ्च। “आसदनात्” —इत्यवगमः। “इन्द्र आशाभ्यस्परि०——०विचर्षणिः” ‡। एतस्य-

---

* “संपिढ्ढि” क, ग। “संपिंढ्ढि” ख। “संपिंढि” ङ। “संपिष्ढि” च। इतो तु “सम्पिण्ड्ढि”—इत्येव।

† १भा० ४२७ पृ० द्रष्टं।

‡ “इन्द्र०——०करत्। जेता शत्रून् विचर्षणिः॥”—इति ऋ० सं० २, ८, ९, २।

मदस्यैव मार्षम्। गायत्री। ऐन्द्री। अभिप्लवस्य द्वितीयेऽहनि प्रउगे शस्यते। 'इन्द्रः' 'आशाभ्यः' दिग्भ्यो हि यद् भय मुत्पद्यते जगताम्, 'सर्वाभ्यः' नानादिङ्निवासिभ्यो भूतेभ्यः 'अभयं' 'करत्' करोत्वित्यर्थः। आह;— किं लक्षणः पुनरसाविन्द्रः?—इति, 'जेता शत्रून्विचर्षणिः' अधिद्रष्टा सार्वभौतिकानां कर्मणाम्॥ "आशा दिशो भवन्ति, आसदनात्"; आभिमुख्येन हि ताः सर्वत्र सन्ना इव भवन्ति। "आशा उपदिशो भवन्ति, अभ्यशनात्"। अभ्यश्नुवते हि ताः परस्परेणैव॥

"काशिः(१)"—इति *, अनवगतम्। 'काशयितव्यः'—इत्यवगमः। "मुष्टिः"—इत्यभिधेयवचनम्। "प्रकाशनात्"—इति निर्वचनम्। "मुष्टिः"—इत्येतत्पर्यायप्रसक्तं निरुच्यते,—"मोचनाद्वा" मुच्यते ह्यसौ, "मोषणाद्वा" तेन हि मुष्यते, "मोहनाद्वा" तत्र हि मुह्यति परः। कि मेतन्मुष्टौ? इति †। "उताभये पुरुहूत०———०काशिरित्ते"‡। विश्वामित्रस्यार्षम्। त्रिष्टुप्। ऐन्द्री। पृष्ठ्याभिप्लवयोः द्वितीयपञ्चमयोरह्नोः सम्पातसूक्तं नाम, तत्रेयं शस्यते, अच्छावाकेन माध्यन्दिने सवने; महदानु मलाह्वण उद्वृहरचइत्येतास्तु तत्रैव§। अपि

* १भा० ४१७ पृ० ५ पं०।

† "कि मेतस्मिन् मुष्टाविति" ख।

‡ "उताभये पुरुहूत श्रवोभिरेको दृळ्हमवदो वृत्रहा सन्। इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित्ते॥"—इति ऋ० सं० ३, २, १, ५

§ अनुपदवक्ष्यमाणा इमास्तु ऋचोऽत्रैव माध्यन्दिने सवने अच्छावाकनामर्त्विजा शस्यन्त इत्यर्थः। तत्र, कृणावमिति चतुर्थस्य पदस्य निगमाय महदानुमिति (ऋ० सं० ३, २, २, ९), मलाह्वण इति पञ्चमपदस्य निगमाय मलाह्वण इति (ऋ० सं० ३, १, २, ५.) सलल्लूकमिति षष्ठपदस्य निगमाय उद्वृहरच इति (ऋ० सं० ३, १, ४, ९.) इमं विष्यतीदैव यथोत्तरम्;—१२४, १२५, १२७पृ०।

भयवति सङ्ग्रामे, 'अभये' अभये इव। हे 'पुरुहूत!' 'एकः अपि 'सन्' असहायः, 'श्रवोभिः' श्रवणीयैः शब्दैरन्नैर्वा, हविर्भिर्वा तृप्तः सन् 'दृढं' समर्थम् 'अवदः', 'वृत्रहा' शत्रुहेत्यर्थः। किं मेतावदेव माहाभाग्यम्? नेत्युच्यते, इदं चान्यत्—'इमे चित्' इमे अपि 'रोदसी' "द्यावापृथिव्यौ", एवं मपि 'अपारे' "दूरपारे" सती 'यत्' "सङ्गृह्णासि", त्वं महो! 'काशिः' 'ते' "महान्"॥ एवं मत्र सङ्ग्रहणसम्बन्धात् "काशि"-शब्दो मुष्ट्यभिधायक इत्युपपद्यते॥

प्रसक्तानुप्रसक्त मुच्यते,—ये एते "रोदसी", एते "रोधसी"। किं कारणम्? "विरोधनात्" त्रिविधानि हि भूतान्येते रुन्धः। "कूलम्" अपि "रोधः" उच्यते; तदपि हि "स्रोतः" उदक-स्रोतांसि "निरुणद्धि"। "कूलं रुजतेः (तु० प०) धातोः; तत् पुनः "विपरीतात्" वैपरीत्येन। "लोष्टः" पुनरस्यैव धातोः "अविपर्ययेण"॥

"कुणारुम्[(४)]"—इति*, अनवगतम्। मेघोऽभिधेयः। "क्वणनम्" —इति शब्दसमाधिः। "मृद्दानं पुरुहूत०——०तुवसा जघन्थ"†। 'मृद्'—इत्युदकनाम, उदकदातारं मेघम्। हे 'पुरुहूत!' "इन्द्र!" 'क्षियन्तम्' अन्तरिक्षलोके वसन्तं गच्छन्तं वा 'अहस्तम्' अप्रतीकारसमर्थं कृत्वा ततः पुनः 'सम्पिणक्' "सम्पिण्ड्ढि", सञ्चूर्णय। 'कुणारुं' "परिक्वणनं" शब्दकारिण मित्यर्थः। एवं तावदेनं कुरु। अथ पुनः योऽय मपरो वृत्रः, वर्ज्जिता, मेघः। एत मप्युपरि 'वर्द्धमानं','पियारुं'

* १भा० ४२० पृ० ८ पं०।

† मृद्दानं पुरुहूत क्षियन्तं महस्तमिन्द्र सम्पिणक् कुणारुम्। अभि वृत्रं वर्द्धमानं पियारुमपादमिन्द्र तवसा जघन्थ॥"—इति ऋ० सं० ३, ३, ९, ६।

हिंसनशीलम्, 'अपादं' गमनहीनं कृत्वा तत एनं 'तत्रथा' वत्रेण 'जघन्य' जघीत्यर्थः॥ एव मत्र वधाधिकारात् मेघाधिकाराच "कुणारुं = क्वणनशीलम्"—इत्युपपद्यते॥ २ (१)॥

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार। सुगान् पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः॥ अलातृणोऽल मातर्दनो मेघो वलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार। सुगान् पथो अकृणोन्निरजे गाः। सुगमनान् पथो अकरोन्निरजनाय* गवाम्। प्रावन्वाणीः पुरुहूतं धमन्तीः। आपो वा वहनाद्वाचो वा वदनाद् बहुभिराहूत मुदकं भवति धमतिर्गतिकर्म्मा॥ ३ (२)॥

"अलातृणः[(५)]"—इति †, अनवगतम्। "अल मातर्द्दनः"—इत्यवगमः। अलातृणो वल ०——० धमन्तीः ‡"। हे 'इन्द्र!' योऽयम् 'अलातृणः' "अल मातर्दनः" पर्याप्तिः आतर्दयितुम्। उदकपूर्णो 'वलः' मेघः; स हि आवृणोत्युदकम्। 'व्रजः' च, स एव अन्तरीक्षे व्रजतीति; गुणान्तरत्वादभ्यासः। आह;—किं तस्य? इति। एष 'गोः' "एतस्याः माध्यमिकाया वाचः" भावत्कायाः शब्द मुपश्रुत्य 'पुरा'

---

* 'निर्गमनाय'—इत्येव वृत्तिसम्मतः, क-च-पुस्तकयोश्च।

† १भा० ४९७ पृ० १२ पं०।

‡ ऋ० सं० ३, २, १, ५।

एव 'हन्तोः' "हननाद्" भवतो बधाद् 'भयमानः' बिभ्यत्; अपच्छोऽयमस्य बध इति मन्यमानः, 'व्यार' विस्मयीभवतीत्यर्थः। स त्वमनेनैव प्रकारेण एनं मेघं विदारयन्, 'सुगान्' "सुगमनान्" 'पथः' मार्गान्, 'अकृणोत्' करोषि, कृतवान् वा "निर्गमनाय" एतासां मेघोदरान्तर्गतानां "गवाम्" अपाम्; विदीर्णे हि तस्मिन्मेघे सुखं ताः तस्मान्मेघोदरान्निर्गच्छन्ति। किञ्च; निर्गताः सत्यः ताः 'वाणीः' आपः 'प्रावन्' प्रकर्षेणावन्, रचन्ति; 'धमन्तीः' गच्छन्त्यः यथानिम्न मभिसरमाणः, 'पुरुहूतम्' उदकम्। यदेतदुदकस्थानं तड़ागनद्यादि, तत्प्रति धमन्तीः तदेव रचन्ति; तद्धि उपदस्येत्, यदि न पतेरंस्ता आपः। एव मापो 'वाणी'-शब्देनोक्ताः; ताः हि "वहनाद्" वाणीरित्युच्यन्ते। "वाचो वा वदनाद्" वाणीरित्युच्यन्ते। यदा विदीर्णात् मेघान्निर्गत मुदकं पुरुहूतं भवति वर्षभावेन, अथ तदा तेषा मेव प्राणिना महो दृष्ट मिति—एवमाद्या वाणीः वाचो धमन्तीः मुखेभ्यो निर्गच्छमानाः, तदेवोदकं प्रावन् प्रागच्छन्नित्यर्थः॥ एव मत्र "पुरा हननाद् भयमानो व्यार"—इत्यनेन सम्बन्धात् "अलातृणः = मेघः"—इत्युपपद्यते॥

"बहुभिः" प्राणिभिः "आहुतः" आहूयते— ममेदं ममेद मिति, तस्मात् पुरुहूतम् "उदकं भवति"। "धमतिः" एष "गतिकर्मा" एव *; नात्र स्तुतिकर्मेत्यभिप्रायः। स्तुतिकर्मस्वपि हि धमतिः पठितः। "धमति(१२), नदति(९), सरति"—इति †॥

* १भा० (२२७, २४९ पृ०) २अ० १४ ख० ५०)।

† १भा० (२२१, २२२ पृ०) ३अ० १४ ख०।

'निरजे गाः'—इत्यत्र * केचिद् 'पशुगव्य एताः'—इति व्याचक्षते †, तासां हि इन्द्रेण विदारितेषु मेघेषु सुगमनाः पन्थानो निर्गमनाय भवन्ति, सुयवसत्वान्नीरजस्कत्वाच्च। 'प्राक्त् वाणीः'—इत्यत आरभ्य समान मेत्र पूर्वेण॥ २ (३)॥

उद्वृह रक्षः सहमूल मिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि। आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य॥ उद्धर रक्षः सहमूल मिन्द्र मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा वृश्च मध्यं प्रति शृणीह्यग्र मग्र मागतं भवत्या कियतो देशात्सललूकं संलुब्धं ‡ भवति पापक मिति नैरुक्ताः सररूकं वा स्यात्सर्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हन्तेः। त्वं चिदित्था कत्पयं शयानम्। सुखपयसम्। सुख मस्य पयः। विस्रुह आपो भवन्ति विस्रवणात्। वया इव रुरुहुः सप्त विस्रुह इत्यपि निगमो भवति। वीरुध ओषधयो भवन्ति विरोहणात्। वीरुधः पारयिष्णव इत्यपि निगमो भवति। नक्षद्दाभ मश्नुवानदाभ मभ्यशनेन दभ्नोतीति। नक्षद्दाभं ततुरिं

* पृ० १२५ पृ० ९ पं०।

† ऐतिह्यासपक्षेयेति भावः। तथाहि ऋ० सं० २, १, ५, ५.—इत्येवमादीनां सायणीयं भाष्यं द्रष्टव्यम्।

‡ "संलब्धं" क। "संलुब्धं" ग। "संलुब्धं" ख-नाम-इति-पुस्तकपाठः।

पर्वतेष्ठा मित्यपि निगमो भवत्यस्कृधोयुरक्षाधायुः ऋध्विति ह्रस्वनाम निरुक्तं भवति। यो अस्कृधोयुर-जरस्वर्वानित्यपि निगमो भवति (निस्रम्भा निश्रथ्य-हारिणः* )॥ ४ (३)॥

"सललूकम्[१]"—इति†, अनवगतम्। "संलुब्धम्"—इति शब्द-समाधिः, "सरत्कम्"—इति "वा"। "उद् वृह रक्षः०——०हेति मस्य" ‡। "उद्धर" एतत् 'रक्षः' 'सहमूलम्' हे 'इन्द्र!', 'वृश्चा' अस्य छिन्धि 'मध्यम्', 'अग्रं' च अस्य 'प्रति शृणीहि' प्रतिजहीत्यर्थः। किञ्च; 'आ कीवतः' "आ कियतः"§ आ कस्माद् "देशात्" एतदुद्धर; यस्मात् वितर्कयमाणा अपि न शक्नुयुर्वितर्कयितुं—कियतोऽपि प्रदेशादेतदुद्धृत मिति। यथा न किञ्चिदप्यस्यावशिष्यते, तथैत-दुद्धरेत्यभिप्रायः। तथा चैतदुद्धृत्य 'सलम्लूकं' "संलुब्धं" संमूढ मप्रतिपन्नं कुरु। अथ वा "पापकं" पापतर मस्मत्तः कुरु—"इति" एतत् "नैरुक्ताः" नैरुक्तपक्षेण। अथ वा "सरत्कं" सरणशीलं‖ "वा" (अशनशीलं¶) प्रच्युतं स्वदेशात् एतत् कुरु। तत एतत् उन्मूलं कृत्वा स्थानप्रच्युतायास्मै रक्षसे 'ब्रह्मद्विषे' ब्राह्मणद्वेष्ट्रे 'तपुषिं' तापयित्रीं 'हेतिं' हन्त्रीम्, आयुधजातिम्, मूलमध्याग्रच्छेदनाय पुनः पुनः 'अस्य'

---

* नास्त्येतत् क-ख-ग-पुस्तकेषु परं दृत्तिकृता तु व्याख्यात मेव।

† १भा० ४२७ पृ० १८ पं०।

‡ ऋ० सं० ३, १, ४, १।

§ "आ कियत इति पाठान्तरम्"—इति क।

‖ "सरणशीलं"—इति ख।

¶ नास्त्येतत्पदं क-गाम-वृत्तिपुस्तके।

क्षिपेत्यर्थः॥एव मत्र सललूक मिति लुभेर्मोहनार्थस्य (तु०प०) अन्यथा-रूप्यात् संलुब्ध मित्युपपद्यते। "सर्त्तः" (भू०प०) अप्यत्र साल्ल्य मस्तीति "सरल्लकं वा स्यात्"—इत्युक्तं भाष्यकारेण। रक्षोविशेषणञ्चैतत्; तस्य हि सम्मोहो वा नाशनं वाभीष्ट मिति॥

"कत्पयम्(७)"—इति *, अनवग..म्। 'कपयम्'—इत्यवगमः। कपय मित्यवगमे "सुखपयसम्"—इति पर्यायेणाभिधेयवचनम्। मधुरोदको यो मेघः, सोऽभिधेयः। किं कारणम्? "सुखं" हि सुखोत्पादनम् "अस्य" "पयः", मधुरत्वात्। "त्यं चिदित्था०——० जघान"†। गातुर्नामात्रेयः, तस्येय मार्षम्। 'त्यं' तं मेघम् 'इत्था' अमुना प्रकारेण, अथ वा अमुष्मिन्नन्तरिक्षलोके 'कत्पयं' सुखोदकं 'शयानम्' असूर्यं तमस्य ‡ इत्वा 'वावृधानं' वर्द्धमानम्। 'मन्दानः' मन्दमानः, 'वृषभः' वर्षिता, 'इन्द्रः', 'सुतस्य' अभिषुतस्य, सोमस्य स्व मंशं पीत्वा। ततः 'उच्चैः' वज्रम् "अवगूर्य"§ 'जघान'। य एवङ्गुणयुक्त इन्द्रः, सोऽस्माक मिदं नाम करोत्वित्येव माशीर्योज्या॥ एव मत्रेन्द्रो जघानेति अनेन सम्बन्धात् "कत्पयः = सुखपयः = मेघः"—इत्युपपद्यते, तस्य वधस्याभीष्टत्वात्॥

"विस्रुहः(८)"—इति ||, अनवगतम्। 'विस्रवः'—इत्यवगमः।

* १भा० ४२८पृ० ९ पं०।

† "त्यं चिदित्था कत्पयं शयान मसूर्ये तमसि वावृधानम्। तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान॥"—इति ऋ० सं० ४, १, २१, ९।

‡ "असूर्ये तमसि"—इति मूलपाठः; तस्यैव विभक्तिपरिणामेन व्याख्यान मेतदिति वा। "असूर्यं तमः"—इत्येव क-पाठः।

§ "अपगूर्य"—इति मूलपाठः; तस्यैव व्याख्यान मेतदिति वा।

|| १भा० ४२८पृ० ९ पं०।

"आपो भवन्ति"—इत्यभिधेयवचनम्। "विस्रवणात्"—इति हेतुनिर्देशः। "वैश्वानरस्य ०——० सप्त विस्रुहः" *। भरद्वाजस्येव आर्षम्। प्रातरनुवाकाश्विनयोः शस्यते। 'वैश्वानरस्य' भगवतः, अग्नेः, 'अमृतस्य' अमरणधर्मिणः, 'केतुना' कर्मणा, 'चक्षसा' चक्षुषा दर्शनेन 'दिवः' अपि यानि 'सानूनि' समुच्छ्रितानि स्थानानि, तानि 'विमितानि' विनिर्मितानीत्यर्थः। अग्निप्रकाश्यमानविषयो हि लोकः कर्मणि प्रवर्त्तते साधुन्यसाधुनि वा। साधुभ्यः साधुना च, पापेभ्यः पापेन च सार्वलौकिकेन कर्मणा स्वकर्मफलभोगायेदं सर्वं विनिर्मीयत इत्यनयापेक्षयोक्तम्,—"वैश्वानरस्य चक्षुषा केतुना च दिवोऽपि सानूनि निर्मितानि"—इति ; अग्निरेव हि वाच्यधिदेवताभावेनावस्थितः सर्वमिदं स्थापयति, ततः कर्म प्रतायते। तदुक्तम्,—"अग्निर्वाग् भूत्वा मुखं प्राविशत्"—इति †। किञ्च ; 'तस्येद् विश्वा' तस्यैव वैश्वानरस्य पृथिवीभावेनावस्थितस्य। अयं चाग्निर्वैश्वानर इत्युक्तम् ‡, 'विश्वा भुवना' विश्वानि भुवनानि, सर्वभूतभावयितॄण्युदकानि। "भुवनम्"—इति ह्युदकनामसु पठितम् §। 'मूर्द्धनि' उपरि

---

* "वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना। तस्येदु विश्वा भुवनाधि मूर्द्धनि वया इव रुरुहुः सप्त विस्रुहः॥"—इति ऋ० सं० ४ ५,९,१।

† 'वाग्वै देवानां मनोता, * * * अग्नौ मनोताः सङ्गच्छन्ते"—इत्यादि च ऐ० ब्रा० २, १, १०। "तेजोऽशितं त्रेधा विधीयते,—तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा, योऽणिष्ठः सा वाक्। अन्नमयं हि सोम्य! मन आपोमयः प्राणस्तेजोमयी वागिति"—इति च छा० ब्रा० १०, ५। "मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्"— इति शिक्षावचनञ्च पर्य्यालोच्यम्।

‡ "अयमेवाग्निर्वैश्वानर इति शाकपूणिः"—इति प० दै० का० ७, ५, २।

§ १भा० (९९ पृ०) १अ० १२ ख० (५०)।

'वया इव' शाखा इव "रुरुहुः सप्त विस्रुहः"। 'सप्त' सर्पणाः, 'विस्रुहः' विविधस्रवणाः भूत्वा ततः शाखा इव 'रुरुहुः' प्ररूढाः पृथिव्यां नद्यादिभावेन, ततः शाखा इव स्रोताः पृथिव्या उपरि, यथा-निम्नं विस्रवमाणा आपो लक्ष्यन्ते— इत्येतद् दृष्ट्वैव सवोचत्,— "तस्येद् विश्वा ०——० सप्त विस्रुहः"—इति॥ एव मत्र शब्दसाहूप्या-दर्थोपपत्तेश्च "विस्रुहः = आपः" "भवन्ति"—इत्युपपद्यते। 'भुवन'-शब्देन भूतान्येवोच्यन्त इति केचिद् वर्णयन्ति; चतुर्विधश्च भूतग्रामः, विस्रुहश्च वया इव रुरुहुः पृथिव्या उपरीति। 'सप्त'-शब्देनापि समुद्रानेव केचिद् वर्णयन्ति; ते हि पृथिव्याः शाखा इव लक्ष्यन्ते, विस्रवन्ति च॥

"वीरुधः(९)"—इति*, अनवगतम्। "विरोहणात्"—इत्यवगमः। "ओषधयो भवन्ति"—इत्यभिधेयवचनम्। "विरोहणात्"—इति हेतुनिर्देशः। "ओषधीः प्रति ०——० वीरुधः पारयिष्णवः"†। भिषज आथर्वणस्येय मार्षम्। ओषधिसूक्ते। अनुष्टुप्। हे 'ओषधीः' ओषधयः! 'प्रतिमोदध्वम्' इमं रुग्णं प्रति, अस्मान् प्रति वा। 'मोदध्वम्' मुदिताः हृष्टाः भवन्तु। कीदृश्यो यूयम्? 'पुष्पवतीः' पुष्पवत्यः, 'प्रसूवरीः' प्रकर्षेण सूयन्ते उपभोगायेति प्रसूवरीः। याश्च पुष्पवत्यो याश्च फलवत्यो याश्चाफला याश्चापुष्पाः, ताः सर्वाः। 'अश्वा इव' वड़वा इव 'सजित्वरीः' सह जैत्र्यः, 'वीरुधः', सर्वरोगान् जित्वा अस्माक मायुषः 'पारयिष्णवः' पारयित्र्यः सन्तु॥ एव मत्र

---

* १भा० ४२८ पृ० ११ पं०।

† "ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥"—इति ऋ० सं० ८, ५, ८, १।

"पुष्पवतीः प्रसूवरीः"—इत्येतस्मात् विशेषलिङ्गात् "वीरुधः = ओषधयः" "भवन्ति"—इत्युपपद्यते ॥

"नवग्वाभम्[१०]"— इति *, अनवगतम्। 'न वणदाभम्'- इत्यवगमः। "अश्नुवानदाभम्"—इति पर्यायेणाभिधेयवचनम्। अभ्यश्नुनेन अभिव्यापनेन यो दभ्नोति हिनस्ति, स नवग्वाभः। "त मु नः पूर्वे ०——० मतिभिः शविष्ठम्" †। भरद्वाजस्येय मार्षम्। ऐन्द्री। त्रिष्टुप्। सम्पातसूक्ते स गन्दिने ब्राह्मणाच्छंसिनः शस्ते शस्यते। "त मीमहे"—इति ‡, इयञ्च तत्रैव। 'तम्' इन्द्रम् 'नः' अस्माकम्, ये 'पूर्वे' 'पितरः' पितृगणाः, 'सप्त' सप्तसङ्ख्याकाः, ये पुराणेषु पठ्यन्ते। अथ वा 'सप्त' 'सृप्ताः', पूर्वतर मस्माल्लोकादमुं लोकम्, ते च 'नवग्वाः' नवगतयः§, अभिनवा हि तेषां गतिः ;—अर्द्धमासेऽर्द्धमासे भवति पितृयज्ञं प्रत्यागन्तुम्। अथ वा नवनीतगतयः ॥ नवनीते हि तेषां मनसो गतिर्भवति, — इद मस्माकं स्यादिति ; "स्वयं विलीनं पितॄणाम्"—इत्युक्तम्¶। 'विप्रासः'—इति, विप्राः = प्राप्तप्रज्ञाः, पितृलोकेऽवस्थिताः। 'मतिभिः' 'अभिवाजयन्तः' स्तुवन्त आसते। किंलक्षणं पुनरिन्द्रं मतिभिरभिवाजयन्त आसते? इति, उच्यते ;— 'नवग्वाभम्' योऽभिव्यापनमात्रेणापि दभ्नोति, कि

---

* १भा० ४१८ पृ० १५ पं०।

† "त मु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः। नक्षद्दाभं ततुरिं पर्वतेष्ठा मद्रोघवाचं मतिभिः शविष्ठम्॥"—इति ऋ० सं० ४, ६, १२. २।

‡ ऋ० सं ४, ६, १२ १। इत्यायनुपदं दर्शयिष्यति (१४३पृ० १०पं०)।

§, ॥ 'नवगतयो नवनीतगतयो वा"—इति प० दे० का० ११. ९, ७।

¶ "नवनीतेनाभ्यञ्जन्ति;—आज्यं वै देवानां सुरभि घृतं मनुष्याणा मायुतं पितॄणां नवनीतं गर्भाणाम्"—इत्यादि ऐ० ब्रा० १, १, ३।

मुत वेधेन? तम्। 'ततुरिम्' यस्य त्वरणशील:, तम्। 'पर्वतेष्ठाम्' यस्य मेघस्थायी, तम्। 'अद्रोघवाचम्' यस्य चाद्रोगधव्या वाक् अनतिक्रमणीया, तम्। 'शविष्ठम्' यस्य बलिष्ठ:, तम्। य एवङ्गुणविशिष्ट इन्द्र:, तं मतिभिरभिवाजयन्त आसते, सोऽस्माक मिदं नाम करोत्वित्येव माशीर्योज्या॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च योऽभ्यसनेन दृश्नोति, स नचद्दाभ इत्युच्यते॥

"अस्तृधोयु:(११)"—इति *, अनवगतम्। "अहृध्वायु:"—इत्यवगम:। "हृधु"-इति ह्रस्वनाम"†; तद्धि "निकृत्तम्" इव "भवति", ह्रस्वत्वात्। तस्य अकारेण प्रतिषेधे कृते 'अहृधु'—इति भवति। "त मीमह इन्द्र मस्य०——०हरिवो मादयध्यै"‡। 'तम्', वय मात्मन: पुत्रम् 'ईमहे' याचामहे। 'हरिव:!' त्वाम्। 'इन्द्रम्' ईश्वरम्। आह;—य: किंलक्षण: पुत्र:? इति, उच्यते;— स: 'अस्य' 'राय:' धनस्य परिपालने भोगे च समर्थ:। किंलक्षणस्य पुनर्धनस्य? इति, 'पुरुवीरस्य' बहुवीरैस्तद्वत:, 'नृवत:' च दासैस्तद्वत:, 'पुरुक्षो:' च बहुनिवासस्य, अनेकप्रकारस्येत्यर्थ:। न च परिपालनसमर्थ एव य: केवल मल्पकाल:, त मीमहे; किन्तर्हि? 'य:' च 'अस्तृधोयु:' अहृध्वायु:, दीर्घायुरित्यर्थ:। 'अजर:' च, यो दृढशरीर इत्यर्थ:। 'स्ववान्' च, य: सुष्ठु शत्रुणा मीरयिता। य:

* १भा० ४२८ पृ० १९ पं०।

† १भा० (२९९, २९० पृ०) ३अ० २ख० (९)।

‡ "त मीमह इन्द्र मस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः। यो अस्तृधोयुरजरः स्ववान् त मा भर हरिवो मादयध्यै॥"—इति ऋ० सं० ४, ९, ११, १।

एवङ्गुणविशिष्टः पुत्रः 'तम्' 'आ भर' आहर। 'हरिवो मादयध्यै' अस्माक मात्मनश्च मदनाय तर्पनायेत्यर्थः॥ एव मत्र "अस्तृधायुः"— इत्यनेन दीर्घायुरुच्यते, तस्याभीष्टत्वात्, प्रश्नस्याल्पाच॥

"निष्टृक्षाः[११]"—इति *, अनवगतम्। "निश्रय्यहारिणः"—इत्यवगमः; निश्रयया दृढया गत्या हरन्तः॥ ४ (२)॥

आजासः पूषणं रथे निश्रम्भास्ते जनश्रियम्। देवं वहन्तु बिभ्रतः॥ आवहन्त्वजाः पूषणं रथे निश्रय्यहारिणस्ते† जनश्रियं जातश्रियं हवदुक्थो महदुक्थो वक्तव्य मस्मा उक्थ मिति हवदुक्थो वा। बृबदुक्थं हवामह इत्यपि निगमो भवति ऋदूदरः सोमो मृदूदरो मृदुरुदरेष्विति वा। ऋदूदरेण सख्या सचेयेत्यपि निगमो भवति। ऋदूपे इत्युपरिष्टाद् व्याख्यास्यामः। पुलुकामः पुरुकामः। पुलुकामो हि मर्त्य इत्यपि निगमो भवति। असिन्वती असङ्खादन्त्यौ॥ असिन्वती बप्सती भूर्यत्त इत्यपि निगमो भवति। कपनाः‡ कम्पनाः क्रिमयो§ भवन्ति। मोषथा वृक्षं कपनेव

* १आ० ४२९ पृ० ८ पं०।

† "निश्रय्यहारिणस्ते" क, ख, ग। 'निश्रिय्यहारिणस्ते"—इति रोथ्स-सम्पादितयोः C. D पुस्तकयोः पाठः।

‡ "कपना" क, ख, ग।

वेधस इत्यपि निगमो भवति। भाऋजीकः प्रसिद्धभाः। धूमकेतुः समिधा भाऋजीक इत्यपि निगमो भवति। रुजाना नद्यो भवन्ति रुजन्ति कूलानि। सं रुजानाः पिपिष इन्द्रशत्रुरित्यपि निगमो भवति। जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वा*। क्षिप्ता जूर्णिर्न वक्षतीत्यपि निगमो भवति। परि घंसमोमना वां वयो गात्। पर्यगाद्वां घंस महरवनेनान्नम् † ॥५(४)॥

॥ इति षष्ठाध्यायस्य प्रथमः पादः ॥६, १-

"आजासः पूषणं ०——० वहन्तु बिभ्रतः"‡। भरद्वाजस्यार्षम्। 'आ वहन्तु' 'अजासः' अजाः, अश्वाः। 'निरुद्भाः' "निश्चय्यहारिणः"§। य एवंलक्षणा अश्वाः, ते आवहन्तु 'पूषणं' देवं 'रथे' व्यवस्थितं 'बिभ्रतः' धारयमाणाः। 'जनश्रियम्' "जातश्रियम्" उद्भूतश्रियमित्यर्थः॥ एव मत्र समानविभक्त्यन्तत्वात् 'अजासः'—इत्येतत् "निरुद्भाः"—इत्येतदश्वविशेषणम्। सति चाश्वविशेषणत्वे "निश्चय्यहारिणः" ॥ शीघ्रहारिणः, तस्याभीष्टत्वादागमनस्य॥

"इवदुक्थः(११)"—इति ¶, अनवगम्। "महदुक्थः"—इति, "वक्तव्यम् अस्मै उक्थम्—इति वा" अन्दसमाधौ। "इवदुक्थं हवा-

---

* "दूनोतेर्वा" क, ख, म।

† "महरवंनायान्नम्"—इति च-पुस्तकमात्रे, इतो प्राधान्यतया च लीकृतः।

‡ ऋ० सं० ४, ८, ११, ९।

§,‖ "निश्चय्यहारिणः"—इति क ह० पाठः।

¶ १भा० २१९ पृ० १४ पं०।

मह्वे ०——० मवसे*" । काश्यपस्यार्षम्† । प्रथमे पर्याये मैत्रावरुणस्य शस्त्रे तृचाशीतिषु च महाव्रते शस्यते । "उक्थम्"—इति शस्त्र मुच्यते‡, तद् यस्य बृहत् महत्, स बृहदुक्थः ; अथवा तद् यस्य वक्तव्यम्, स बृहदुक्थः । तं 'बृहदुक्थम्' इन्द्रम्, 'हवामहे' वय माह्व-यामहे, एतस्मिन् कर्मणि । 'सृप्रकरस्नम्' सृप्रबाहुम्, दीर्घबाहुम् 'ऊतये' अवनाय, रक्षणाय आत्मनः । 'साधु कृण्वन्तम्' साधुकारिणम्, नित्यकाल मेवास्य जगतः साधु करिष्यामीत्यभिप्रायम । 'अवसे' तस्यैव तर्पणाय, त मागतं सन्त मेतस्मिन् कर्मणि तर्पयिष्याम इत्ये-तेनाभिप्रायेणाह्वयामहे ॥ एव मत्र 'हवामहे'—इत्यनेन सम्बन्धात् "बृहदुक्थः = महदुक्थः, वक्तव्योक्थो वा"—इत्युपपद्यते । य एव हि महदुक्थो भवति, वक्तव्योक्थो वा स एव सुतरा माह्वयत इति ॥

"ऋदूदरः(१४)"—इति§, अनवगतम् । "मृदूदरः"—इत्यवगमः । "सोमः" अभिधेयः । ऋदूदरेण सख्या ०——० प्रतिरमेत्यायुः"|| । प्रगाथस्येय मार्षम् । त्रिष्टुप् । सौमी । सोमेन्द्रस्य श्यामाकस्य चरोः याज्यैषा, सोमचायिनः प्रायश्चित्तेष्टौ । 'ऋदूदरेण' मृदूदरेण सोमेन ;

* "बृहदुक्थं हवामहे सृप्रकरस्न मूतये । साधु कृण्वन्त मवसे ॥" - इति ऋ० सं० ६, २, १, ५ ।

† मेधातिथेरार्ष मिति वक्तव्ये काश्यपस्यार्ष मिति भ्रमादुक्त मिव अनुक्रमणीवि-रोधात् सायणविरोधाच्च । तथाह्यनुक्रमणिका—'प्रकृतानि चिंशन्मेधातिथिः"—इति, "काण्वो मेधातिथिरृषिः"—इति च सायणः (ऋ० सं० ६, २, १, १.)

‡ "उक्थ्यं वक्तव्यप्रशंसम्"—इति पं० दै० का० ११, २, १० । पुरस्ताच्च (१भा० २१२ पृ०द्रष्टव्यम् ।

§ १भा० ४३० पृ० १पं ।

|| "ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयं यः सोमो न्यधा-य्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥"—इति ऋ० सं० ६, ४, १९, ५

म्रद् हि सोमस्योदरम्, सुषिरत्वात्। अथ वा म्रदुग्य मुदरे स्यात् —इत्येव माशास्यते, पातृभिर्वमनाशङ्कया। तस्मात् म्रदूदरः सोमः, स पुनरेष म्रदूदरः मन्तृदूदर इत्युच्यते, तेन म्रदूदरेण। 'सख्या' समानख्यानेनैव केन चित् पुरुषेण, मित्रेण 'सचेय' संसचेयम्, संसेवेयम्। पुनरागामिषु 'यः' सोमः 'मा' मां 'न रिष्येत्' न हिंस्यात्, 'पीतः' सन्। यथाह मेतेन सोमेनाहिंसितः, तथा सचेयम्। हे 'हर्यश्व!' इन्द्र! सोमस्वामिन्! एतदस्तु नः। किञ्च 'अयं यः सोमः', 'न्यधायि अस्मे' निहितोऽस्मास्वासीत्। येनेमा मापद मापादिताः स्मो वमनद्वारेण। 'तस्मै' तदर्थम्। तेनास्माक मायुषो यदवखण्डनं कृतम्, तत्प्रतिपूरणाय। 'इन्द्रम्' 'प्रतिरम्' प्रतीर्णं मनवखण्डितं सर्वम् 'आयुः' 'एमि' याचामीत्यर्थः। सोमवमनवैगुण्यात् आयुषश्छेद माशङ्कमान इन्द्रं दीर्घ मायुर्ययाच यजमानाय॥ एतस्मिन् "म्रदूदरः = सोमः" प्रकरणात्, शब्दसारूप्याच्च॥

"म्रदूपे(२५)"—"इति*, उपरिष्टाद् व्याख्यास्यामः"—"म्रदूपे चिदृदूधा"—इत्यत्र †॥

"पुलुकामः(२६)"—इति ‡, अनवगतम्। "पुरुकामः"—इत्यवगमः। "इमं नु सोम मन्तितो ० —— ० कामो हि मर्त्यः" §।

* १भा० ४३० पृ० ५पं०।

† अत्रैवाध्याये ६ पा० ४खं०।

‡ १भा० ४३० पृ० ११ पं०।

§ "इमं नु सोम मन्तितो हृत्सु पीत मुप ब्रुवे। यत् सी मागश्चकृमा तत्सु मृळतु पुलुकामो हि मर्त्यः॥"—इति ऋ० सं० १, ४, २२, ५।

अगस्त्य-लोपामुद्रासंवादे अन्तेवासी ब्रह्मचारी इमां सौमीं शृण्वती मपश्यत्। ‘इमम्’, अहम् ‘सोमम्’ ‘अन्तितः’ अन्तिके अवस्थितम् ‘उप’गम्य चेतसा ‘ब्रुवे’। न च बहिरन्तिकेऽवस्थित मुपब्रुवे, किन्तर्हि? ‘पीतं’ सन्तं ‘हृत्सु’ एव, स्व एव हृदयेऽवस्थित मुपब्रुवे।—“यत् सीं मागश्चकृमा”। ‘यत्’ ‘सीम्’ सर्वतः सर्वप्रकारम् ‘आगः चकृम’ पापं कृतवन्तो वयम्। ‘तद्’ अयं सोमः ‘सुमृडतु’ सुष्ठु सुखविधि-परिणामं करोतु। किं कारणम्? इतः,— यस्मात् ‘पुलुकामो हि’ बहुकामो हि ‘मर्त्यः’। स बहुकामत्वात् मनुष्यस्वाभाव्यात् अवश्य मागः करोति, तदयं पीतः सोमः शमयत्वित्यभिप्रायः॥ एव मत्र ‘पुलुकाम’-शब्देन पुरुकामो बहुकाम उच्यते, ‘मर्त्य’-शब्दसामा-नाधिकरण्यात् साहृप्याच्च ॥

“असिन्वती(१०)”—इति *, अनवगतम्। “असङ्खादन्त्यौ”—इत्यर्थप्रतीतिः। “अपश्य मस्य ०——० भयन्तः”†। वैश्वानरस्याग्नेः सौचीकस्य वा वाजम्भरस्य वा सप्तेरिय मार्षम्। त्रिष्टुप्। आग्नेयी। ‘अपश्यम्’ अहम्। भगवतः अग्नेः ‘महतः’, ‘महित्वम्’ माहाभाग्यम्। ‘अमर्त्यस्य’ अमरणधर्मिणः। ‘मर्त्यासु’ मरणधर्मिणीषु, ‘विक्षु’ मनुष्य-प्रजासु इत्यर्थः। आह;—किम्पुनस्तन्माहाभाग्यम्? इति, उच्यते,— ‘नाना’ भावेनैते ‘हनू’ हननसमर्थे ज्वाले अवस्थिते ‘विभृते’ विविध मिव धृते सत्यौ ‘सम्भरेते’ एकत्र हरेते हवींषि दारूणि वा। सम्भृत्य च ‘असिन्वती’ “असङ्खादन्त्यौ” असङ्खादन्त्याविव; अथ वा असञ्चूर्ण-

---

* १आ० ४२० पृ० १६ पं०।

† “अपश्यं मस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु। नाना हनू विभृते

—ऋ० सं० ८ । ...

यन्त्याविव। अनेन प्रकारेण शीघ्रं 'वप्सती' भक्षयन्त्यौ। 'भूरि' अपि दारुजातं हविर्जातं वा;— यत् 'अत्तः' भक्षयतः; न च श्राम्यतः। एतदस्य माहाभाग्य मह मपश्य मस्मिन् मनुष्यलोके इति। छनुरूप-सम्बन्धात्* बह्वीष्वपि ज्वालासु द्विवचन मेव स्थितम्॥ एव मत्र छनुसम्बन्धात् "असिन्वती = अशङ्खादन्त्यौ"—इत्युपपद्यते॥

"कपनाः(१८)"—इति †, अनवगतम्। "कम्पनाः"—इति शब्द-समाधिः। "क्रिमयः भवन्ति"—इत्यभिधेयवचनम्। "आभ्राजि शर्द्धो ०——० नेषथा सुगम्" ‡। श्यावाश्वस्यात्रेयस्यार्षम्। मारुती। जगती। दाशरात्रिके त्रिवृत्स्तोमे प्रथमेऽहन्याग्निमारुते विनियुक्ता। "प्रशर्द्धायेत्याग्निमारुतः"—इति सूत्रणात् §। 'आभ्राजि' भ्राजते। 'वः' 'मरुतः!', तत् 'शर्द्धः' तद्बलम्। 'यत्' येन बलेन 'अर्णसं' मेघं वृद्धम्, उदकपूर्णम्, अनु प्रविश्य 'मोषथ' मुष्णीथ यूयम्; निरुदकं कुरुतेत्यभिप्रायः। कथम्पुनर्मोषथ? इति।—"वृक्षं कपनेव वेधसः"। 'कपनाः' "कम्पनाः" "क्रिमयः"‖ इव, 'वेधसः' वेद्धारः; यथा वृक्ष मनु प्रविश्य क्रिमयोऽन्तर्गतं दारुचूर्णं रसं वा मुष्णन्ति, एवं यूय मुदकं मुष्णीथ। अथ वा हे 'वेधसः' मेधाविनः! इति मरुद्वि-षय मेतत् सम्बोधनं स्यात्। यस्माद् यूय मेवमादिना प्रभावेन युक्ताः,

---

* "छनुरूपकसम्बन्धात्"—इति ख०।

† १भा० ४२० पृ० १५ पं०।

‡ "आभ्राजि शर्द्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः। अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम्॥"—इति ऋ० सं० ४, ३, १५, १।

§ "प्रशर्द्धायेति पञ्चदशर्चं दशमं सूक्तम्०——०मारुत्या यजेत आ० ९. ११.) इति"—इति ऋ० सं० ५, ४, दशमसूक्तारम्भे सा० भा० द्रष्टव्यम्।

‖ "क्रमयः"—इति ख-ग०।

अथैतस्माद् कारणात् अस्माक मेव 'अरमतिम्' अलमतिम्, पर्याप्तमतिम्, परिसमाप्तविद्यं यजमानं स्वकृतेनैव कर्मणा विद्यया वा यन्तम् इतो लोकादमुं लोकं 'सुगं' शोभनगमनं स्थानम्, यूय मपि 'अनु नेषथ' हे 'सजोषस:' सहप्रीता:! गमनानुग्रहेऽस्य वर्त्तध्व मित्यभिप्राय:। कथञ्च पुनर्नेषथ? 'चक्षुरिव' यथा गच्छत: पुरुषस्य चक्षुर्गमनानुग्रहे वर्त्तते, एव मनुनेषथैनं सुग मिति॥ एव मत्र वृक्षसम्बन्धात् "क्रिमय: = कम्पना:"; ते हि वृक्षं मुष्णन्ति, मोषयन्ति च कम्पयन्ति च यं खादन्ति, स्वय मेव वा कम्पन्ते चलनस्वाभाव्यात्॥

"भाऋजीक:(१९)"—इति *, अनवगतम्। "ऋजुभा:"—इत्यवगम:। "प्रसिद्धभा:"—इति पर्यायशब्देन निर्वचनम्॥ "देवो देवान् परिभू ०——० वाचा यजीयान्" † । आङ्गस्य हविर्द्धानस्यार्षम्। त्रिष्टुप्। 'देव:' त्वं दानादिगुणयुक्त:। हे भगवन्! अग्ने! 'देवान्' 'परिभू:' सर्वतो भवसि। 'ऋतेन' यज्ञेन सहित:। तदुक्तम्,—"अग्ने नेमिरराँ इव देवांस्त्वं परिभूरसि"—इति ‡। यस्त्व मेवम्प्रभाव:, तं त्वां ब्रवीमि;—'वह' प्रापय 'नो हव्यं' देवान् प्रति। 'प्रथम:' यस्मात् त्वं मनुष्यहोतार मपेक्ष्य, तस्मादेतत् कुरु। 'चिकित्वान्' स्व मधिकार मेतं जानान इत्यभिप्राय:। 'धूमकेतु:' धूमप्रज्ञान:,

* १भा० ४३१ पृ० ३ पं०।

† "देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान्। धूमकेतु: समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान्॥"—इति ऋ० सं० ७, ६, ११, १।

‡ ऋ० सं० ४, १, ५, ९।

धूमध्वजो वा। 'समिधा' समिन्धनेन 'भाऋजीकः' प्रसिद्धभाः। 'मन्द्रः' मदनः, तर्पयिता देवानाम्। 'होता' आह्वाता 'नित्यः'; इतरं मनुष्यहोतार मपेक्ष्याग्निरेव नित्यो होता*। 'वाचा' वागधिदेवताभावेनावस्थितः†। 'यजीयान्' यष्टृतरः,—मनुष्यहोतार मपेक्ष्य। एव मत्र "भाऋजीकः = प्रसिद्धभाः"—इत्युपपद्यते॥

"रुजानाः(१०)"—इति ‡, एतदेकं पदम्, अनवगतम्। 'रुजत्यः'—इत्यवगमः। "नद्यो भवन्ति"—इत्यभिधेयवचनम्। "रुजन्ति कूलानि"—इति हेतुनिर्द्देशः॥ "अयोद्धेव दुर्मदः०——०इन्द्रशत्रुः" § । हिरण्यस्तूपस्यार्षम्। अग्निष्टोमे निष्केवल्ये शस्यते। 'अयोद्धा इव' यथा कश्चित् अयोद्धा, 'दुर्मदः' दुर्मत्तः—वाङ्मात्रसारः। आह,—स यथा किं करोति? इति, उच्यते;—'आ हि जुह्वे' आह्वयतीत्यर्थः। क माह्वयति? 'महावीरम्' महाविक्रान्तम्, 'तुविबाधम्' बहूनां शत्रूणां बाधितारम्, 'ऋजीषम्' ऋजीषिण मित्यर्थः। तदुक्तम्,—"ऋजीषी वज्री"—इति ‖। त मेवम्प्रभाव मिन्द्र माहूय मेघो 'नातारीत्' इतरवद्दुर्मदः स तन्तुं शक्नोति। 'अस्य' इन्द्रस्य 'समृतिं' समागमं 'वधानां' प्रहाराणाम्, अतरमाणः या एताः नद्यः, 'संरुजानाः' ऊर्मिभिः कूलानि वहन्त्यो रुजन्ति, ताः प्रति विशीर्यमाणः

* "अग्निर्वै देवानां होता, तस्मिन्नेवाहमेव यदुत्तरवेदौ नाभिः"—इति ऐ० ब्रा० १, ५, १।

† "वाग् वा अनुष्टुप्"—इत्येवमादि च द्रष्टव्यम् ऐ० ब्रा० १, ५, १।

‡ १भा० ४२१ पृ० ६ पं०।

§ "अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्। नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः॥"—इति ऋ० सं० १, १, २०, १।

‖ पृ० १८ पृ० २२ पं०।

'पिपिषे' 'इन्द्रशत्रुः' इन्द्रस्य शातयितव्य इत्यर्थः। एव मत्र शब्दार्थोपपत्तेः "मद्यः = हृजानाः"—इत्युपपद्यते ॥

"जूर्णिः(२१)"—इति *, अनवगतम्। जवनाद् वा, द्रवणाद् वा, द्रवनाद् वा—इति शब्दसमाधयः। शक्तिः अभिधेया। "जवतेर्वा" गत्यर्थस्य जूर्णिः, "द्रवतेर्वा" गत्यर्थस्यैव जूर्णिः, "द्रुनोतेर्वा" हिंसार्थस्यैव जूर्णिः॥ "प्रप्रा वो अस्मे ० —— ० जूर्णिर्न वक्षति" †। परुच्छेपस्यार्षम्। अतिशक्वर्यतिच्छन्दाः। पृष्ठ्यस्य षष्ठेऽहनि निष्केवल्ये शस्यते। 'प्र'ब्रवीमि हे स्तोतारः! प्रब्रूत अस्मै। 'स्वयशोभिः' आत्मीयैः यशोभिः संयुक्ताः स्तुतीः। किं कारणम्? यस्मादेष 'इन्द्रः' स्तुतः 'ऊती' अविता, रक्षिता 'परिवर्गे' सङ्ग्रामे; यत्र हि प्राणाः परिवृज्यन्ते वियुज्यन्ते, तत्र अय मस्माकं रक्षिता भवति ‡। 'दुर्मतीनाम्' *पापमतीना मस्मच्छत्रूणां* हन्ता भविष्यति। त मेत मेवङ्गुणविशिष्ट मिन्द्रम् 'दरीमन्' दारयितृतमं दुर्मतीनां पुनःपुनः स्तुतः। आह —कथं पुनरसावस्माकं रक्षिता भविष्यति? इति, उच्यते;—'स्वयं' 'सा' § 'रिषयध्यै' रेषणाय भविष्यति; किञ्चिदप्यकृत्वास्माक मिन्द्रप्रभावात् स्वय मेव विनश्यतीत्यभिप्रायः; का पुनरसौ? इति,— "या न उपेषे अत्रैः"। 'या' अस्मान् 'उपेषे' उप आगच्छति 'अत्रैः'

* १भा० ४२१ पृ० ८ पं०।

† "प्रप्रा वो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन् दुर्मतीनाम्। स्वयं सा रिषयध्यै या न उपेषे अत्रैः। हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति॥"—इति ऋ० सं० १, १, १०, २।

‡ "भविष्यति"—इति क।

§ 'सा शक्तिः प्रवर्त्तमाना वा'— इति क०-पु०-टीप्पणी।

अहनैः रक्षोभिः प्रक्षिता, सा। "इते मंसुम्न वक्षति" *। 'ईम्'—इत्यनर्थकः। 'हता' सती इन्द्रेण 'न' 'वक्षति' †। अस्मान् प्रति 'चिप्ता' अपि च तैः पुनरादरेणापि रक्षोभिः 'जूर्णिः' अवसम्पन्नापि सती शक्तिः, 'न वक्षति'‡; अस्मान् प्रति न प्राप्स्यतीत्यर्थः॥ एव मत्र क्षेपणसम्बन्धात् "जूर्णिः = शक्तिः"—इत्युपपद्यते॥

"ओमना(२२)"—इति §, अनवगतम्। "अवनाय"—इत्यवगमः। "युवोः श्रियं०—०मोमना वां वयो गात्" ‖। वसिष्ठ स्येव मार्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। हे अश्विनौ! 'युवोः श्रियम्'। युवयोः या श्रीः तां 'परि अवृणीत' सर्वतः समभजत 'योषा'। आह,—कतमा? इति, उच्यते;—'सूरो दुहिता' सूर्यस्य दुहिता। कदा तां श्रिय मुषःसञ्ज्ञिका इव मवृणीत? 'परितक्म्यायाम्' रात्र्याम्, ऊर्द्ध्वं मर्द्धरात्रात्; सह्यश्विनोः कालः ¶। किञ्च "यद् देवयन्त मवथः शचीभिः" यस्मात् 'देवयन्तं' देवान् यष्टु मिच्छन्तम् यजमानम् 'अवथः' 'शचीभिः' स्वैः कर्मभिः। तेन कारणेन 'वां' 'परि अगात्' परिगच्छति। सर्वासु दिक्षु यजमानैर्दीयमानं युवां प्रति 'वयः' "अन्नं" हविर्लक्षणम्, 'घ्रंसं परि' प्रति अहनि प्राप्ते इत्यर्थः। पूर्वाह्णोह्यश्विनोर्यागकाल

*, †, ‡ अत्र सर्वत्रैव 'वक्ष्यति'—इति सयकारपाठः ख०-पुस्तके।

§ १अ० ४३१ख० १०पं०।

‖ "युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम्। यद्देवयन्त मवथः शचीभिः परि घ्रंस मोमना वां वयो गात्॥"—इति ऋ० सं० ५, ५, ११, ४।

¶ "तयोः काल ऊर्द्ध्वं मर्द्धरात्रात्"—इति दै० का० १२, १, १।

तदुक्तम्,—"प्रातर्यावाणा प्रथमा यजध्वम्"—इति *। क मर्थं पुरस्कृत्य ययोऽन्नं गच्छति? 'योजना' "अवनाय" तर्पणायेत्यर्थः। एव मश्विनोर्हविःसम्प्रदानसम्बन्धात् 'योजना'—इत्यस्य शब्दस्य "अवनाय"—इत्येव विपरिणाम उपपद्यते॥

ये चिदत्र "अवनेनान्नम्"—इत्येव मधीयते भाष्यम् †। तेषां योजना,—"अवनेन" तर्पणेन भवता निमित्तभूतेन 'पर्यगात्' "अन्नम्" इति॥

केचित् "अनेनान्नम्"—इत्येव मधीयते भाष्यम् ‡। तेषाम्,—"अनेन" मन्त्रेण "अन्नं" परिगच्छतीति योजना स्यादिति॥ ५(४)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)

प्रथमः पादः॥ ६, १॥

॥ द्वितीयः पादः॥

उपलप्रक्षिण्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा (इन्द्र ऋषीन् पप्रच्छ दुर्भिक्षे केन जीवतीति तेषा मेकः प्रत्युवाच शकटः § शाकिनी गावो जाल मस्यन्दनं वन मुदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तय इति सा निगद व्याख्याता)॥ १॥

---

* ऋ० सं० ४, ४, १८, १।

† क-ख-ग-ङ-पुस्तकेषु दृश्यत एव।

‡ मत्संगृहीतपुस्तकेषु रोथसंगृहीतपुस्तकेषु च नैवं क्वचिदपि।

§ "शकटं"—इति पाठः।

‖ कस्मीचित्कालमेनपाठो न दृश्यते क-ख-ग-पुस्तकेषु।

"उपलप्रक्षिणी(२१)"—इति *, अनवगतम् । "सक्तुकारिका" अभिधेया; सा हि "उपलेषु" यवान् "प्रक्षिणाति" हिनस्ति । एव मस्योपलप्रक्षिणीशब्दस्याप्रतीयमानार्थस्य विग्रहेणार्थप्रतीतिरवगमः। अथ "वा" "उपलेषु" "प्रक्षेपिणी" स्यात्, उपलेषु तप्तेषु भर्जनार्थं यवान् प्रक्षिपति; सा हि गौडेषु प्रसिद्धा। उपलान् वा यवेभ्यः प्रक्षिपति विचिनोतीत्यर्थः। सेयम् 'उपलप्रक्षेपिणी' सती 'उपलप्रक्षिणी'—इत्युच्यते ॥ १ (५) ॥

कारुरहं ततो भिषगुपलप्रक्षिणी नना। नाना धियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव॥ कारुरह मस्मि कर्त्ता स्तोमानां ततो भिषक् तत इति सन्ताननाम पितुर्वा पुत्रस्य वोपलप्रक्षिणी सक्तुकारिका नना नमतेर्माता वा दुहिता वा नानाधियो नानाकर्म्माणो वसूयवो वसुकामा अन्वास्थिता स्मो गाव इव लोक मिन्द्रायेन्दो परि स्रवेत्यध्येषणा। आसीन ऊर्द्धा मुपसिं क्षिणाति। उपस्थे प्रकलविद्वणिग् भवति कलाश्च वेद प्रकलाश्च। दुर्म्मिंषासः प्रकलविन्मिमाना इत्यपि निगमो भवत्यभ्यर्द्धयज्वाभ्यर्द्धयन्यजति। सिषक्ति पूषा अभ्यर्द्धयज्वेत्यपि निगमो भवतीक्ष ईशिषे। ईक्षे हि वस्व उभयस्य राजन्नित्यपि

* १मा० ४९१पृ० १९पं० ।

**निगमो भवति। श्रोणस्य स्रयणस्य। मध्वः श्रोण-स्याश्विना कण्वायेत्यपि निगमो भवति ॥ २ (६) ॥**

"कारुरहं ततो० —— ०मेन्द्रायेन्दो परि स्रव"*। शिशुराङ्गि-रसः, तस्यैव मार्षम्। पङ्क्तिः। ऐन्द्री। स्वदुष्कृतावस्थया किला-परिस्रवति सोमे पापसङ्कीर्त्तनादात्मशुद्धिर्भविष्यतीति मन्यमान आत्मान मेव निर्दिशन्नाह:—'अहं' तावत् कस्मिंश्चिदनादिकाले परेषां 'कारुः' स्तोमकर्त्ता स्तुतीनां प्रयोक्ता यज्ञकर्मणि होतृत्वेना-वस्थितो बहिर्वा यज्ञात् प्रियवक्ता लौकिकाभिर्वाचायुक्तिभिर्जिविका-परतया। 'ततः' मम पिता पुत्रो वा 'भिषक्' आसीत्, ब्रह्मा †; स हि प्रायश्चित्तरोगे उत्पन्ने यज्ञस्य भेषजं करोति। यदुक्तम्,—"भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति" ‡। इतरो लौकिको वा भिषक्। "ततः— इति सन्ताननाम; पितुर्वा पुत्रस्य वा" §। पितुर्हि सकाशात् पुत्रः तन्यते ‖। एव मपादाने कारके 'ततः' पिता; पुत्रः पुनः तन्यते अयं 'ततः', कर्मणि कारके।

* ऋ० सं० ७, ५, १५, २।

† ब्रह्मा ऋत्विग्विशेषः, स च सर्वेषा मृत्विजां कार्यद्रष्टा त्रिवेदविद् भवति। तथाच—"यदेतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्व मकरोत्"— इत्यादि (ऐ० ब्रा० ५, ५, ७)। "समुद्रोऽसि विश्वव्यचाः"—इत्यादि (ता० ब्रा० १, १, ४.) च द्रष्टव्यम्। श० ब्रा० सं० ५, ३३. अपि द्रष्टव्या।

‡ "यज्ञस्य हैष भिषग् यद् ब्रह्मा यज्ञायैव तद् भेषजं कृत्वा हरति"—इत्यादि ऐ० ब्रा० ५, ५, ९।

§ "स पितर मेत्याब्रवीत् तत हा वाव मह्यं ततामाभ्युरिति"—इति ऐ० ब्रा० ५, २, ९। किञ्च "स तथेत्युक्त्वा पुत्र मामन्त्रयामास ततायं वै मह्यं त्वा मददादन्न स्त्वयाहं मिमं यजा इति"— इति ऐ० ब्रा० ७, ३, ९।

‖ "प्रजा वै ततः; प्रजा मेवास्मा एतत् सन्तनोति"—इति ऐ० ब्रा० २,१,११।

'उपलप्रक्षिणी' सवनीयानां* पेष्टी; "ह्याँ पिनष्टि"—इति श्रुतम्। इतरेषां सक्तूनां पेष्ट्री। 'नना' "माता" ममासीत्; सा हि स्तनसम्प्रदानाद्युपकारार्थं मपत्यं प्रति नता भवति। "दुहिता वा" नना स्यात्; सापि हि परिचर्य्यार्थं पितुः प्रह्वीभवति†। यस्मिन् पक्षे पिता भिषक्, तस्मिन् पक्षे नना-शब्देन मातोच्यते; यस्मिन् पुनः पक्षे पुत्रो भिषक्, तस्मिन् पक्षे नना-शब्देन दुहितोच्यते। ते वय मेव मनादिकाले कस्मिंश्चिद् जीविकाप्रधानाः सन्तः 'नानाधियः' "नानाकर्माणः", यथोक्तेन क्रमेण कारुरह मित्येवमादिना 'वसूयवः' "वसुकामाः"; कथं नाम वसु लभेमहि, येन प्राणधारणं स्यादिति। एतेनाभिप्रायेण "अनु गा इव तस्थिम" अन्वास्थिताः स्मो लोक मिमम्। कथम्पुनरन्वास्थिताः स्मः? इति,—गाव इव; यथानेकैरुपकारप्रकारैर्लोक मन्वास्थिता गावः, एव मन्वास्थिताः स्मो वय मपीमं लोकम्। स त्वम् 'इन्दो!' विज्ञायैतदनेन स्वदुरितानुकीर्त्तनेन क्षयितकल्मषाः स्म इति मन्यमानः, एतस्माद् दशापवित्राद् 'इन्द्राय' इन्द्रार्थम् 'परि स्रव'; अस्माभिरेव मभ्यर्थ्यमानः कथं वा नपरिस्रविष्यसीत्यभिप्रायः॥ एव मत्र "उपलप्रक्षिणी = सक्तुकारिका", शब्दार्थोपपत्तेरित्युपपद्यते॥

"उपसि(१४)"—इति‡, अनवगतम्। "उपस्थे"—इत्यवगमः।

* 'धाना-सक्तु-करम्भादीनाम्'—इति क० पु० टीप्पनी। "तथा हि सवनानां रूपम्'—इत्यादि ऐ० ब्रा० १, २, ५ द्रष्टव्यम्।

† 'नना" १भा० ७४, ८० पृ० द्र०।

‡ १भा० ४२१ पृ० १पं०।

"पृक्षो अंगार०——०मन्वेति भूमिम्" *॥ वसुकस्य इन्द्रपुत्रस्य आर्षम्। ऐन्द्री। त्रिष्टुप्। महाव्रते महत्वतीये शस्त्रे शस्यते। 'पत्तः' पादतः रश्मिभिः इतः लोकात् यदादित्यो 'अगार' गृह्णात्युदकम्, तद् इन्द्रो मध्यस्थाने 'आसीनः' 'प्रत्यञ्चम्' आत्मानं प्रत्यञ्चितं प्राप्तम्, तेन भगवतादित्येन 'शीर्ष्णा' उत्सृष्टम् 'अत्ति' स्वीकरोतीत्यर्थः। तदेव मसौ स्वीकृत्य चतुर्षु वार्षिकेषु मासेषु पृथिवीलोकनिवासिनां जनानां 'शिरः प्रतिदधौ' शिरस उपरि दधाति। 'वक्षं' वरतर मुदकम् †। एव मय मिन्द्रो जगदुपकाराय प्रतिसंहृतम् एतां द्युलोकाख्यां गाम् आदित्योपसृष्टाम्, 'ऊर्द्धाम्' उपर्यवस्थिताम्, अन्तरिक्षलोके आसीनः 'उपसि' उपस्थे, आत्मन उपस्थाने, अन्तरिक्षलोके 'चिणाति' प्रचारयति। यच्च प्रचारयति, तदिमं लोकं प्रति पुनरुत्सृजति। तत् तेनोत्सृष्टं 'न्यक्' नीचैर्वर्षभावेन आगच्छति। ततः 'उत्तानां भूमिं' यथानिम्नम् 'अन्वेति'॥ एव मत्र "उपसि" —इत्यस्य शब्दसारूप्यात् अर्थोपपत्तेश्च "उपस्थे"—इत्येवार्थप्रतीतिः॥ "अपि वा शिर आदित्यो भवति"—इत्युक्तम् ‡, तस्मात् 'शीर्ष्णा' —इत्यत्रोपपद्यते शिरस्त्व मादित्यस्य॥

"प्रकलवित्(२५)"—इति§, अनवगतम्। 'प्रकलावित्'—इत्यवगमः। "वणिग्भवति"—इत्यभिधेयवचनम्। स हि "कलाश्च वेद प्रकलाश्च"।

* "पृक्षो अंगार प्रत्यञ्च मत्ति शीर्ष्णा शिरः प्रतिदधौ वरूथम्। आसीन ऊर्द्धामुपसि क्षिणाति न्यङ्ङुत्ताना मन्वेति भूमिम्॥"—इति ऋ० सं० ७, ७, १०, २।

† १भा० २०९ पृ० (१०), २११पृ० (१०) द्रष्टव्यम्।

‡ १भा० ४११पृ० ११पं०।

§ १भा० ४२१ पृ० २पं०।

कलासम्बन्धेनैवेह प्रकला उच्यन्ते, कला एव ह्यपेक्ष्य प्रकला भवन्तीति; यथा,—अधिष्ठान मपेक्ष्य प्रत्यधिष्ठान मिति। "इन्द्रेणैते तृत्सवो——० भोजना सुदासे" *। वसिष्ठस्यार्षम्। त्रिष्टुप्। ऐन्द्री। महाव्रते निष्केवल्ये दक्षिणे पक्षे शस्यते। 'इन्द्रेण' 'एते' 'तृत्सवः' दारयितव्याः मेघाः, 'वेविषाणाः' पुनः पुनः व्याप्यमानाः, 'आपः न' आप इव 'सृष्टाः' केन चित्, 'अधवन्त' अगच्छन्। 'नीचीः' नीचै-रित्यर्थः। उच्चैर्गतय एते सन्तः इन्द्रबलान्नीचैर्गतयः संवृत्ता इत्यभि-प्रायः। किञ्च; 'दुर्मित्रासः' सुमित्राण्यपि सन्तो ये अतिसन्धान-पराः, ते पुनर्दुर्मित्राः। के पुनस्ते? इति,—'प्रकलविदः' वणिज इत्यर्थः। ते यथा अभिद्रोहबुद्ध्या किञ्चिद् द्रव्य मल्पं ददति, एव मेते मेघाः पूर्व मल्पोदकदातारो भूत्वा अधुनेन्द्रबलोद्यताः सन्तः 'अक्षः' 'विश्वानि' सर्वाण्यशेषाणि 'भोजना' भोजनान्युदकानि † 'सुदासे' राजनि, यजमाने वा कल्याणदाने ‡॥ एव मल्पोदकाल्प-दानोपमासम्बन्धात् "प्रकलविद् = वणिग्"—इत्युपपद्यते॥ अवयव-प्रत्यवयवादिकलाः प्रकला-शब्देनोच्यन्ते, तेषु च वणिगेव निपुणो भवति, गणितकुशलत्वात्; न तथान्य इति॥

"अभ्यर्द्धयज्वा(२९)"—इति §, अनवगतम्। अभ्यर्द्धयन् अभिवर्द्धयन्

---

* "इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः। दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे"—इति ऋ० सं० ५, १ २०, ५।

† १भा० १११ पृ०, ११७ पृ० धननामसु (१८); १भा० ३९१ पृ० ११पं० "भो-जनानीति वा धनानीति वा"।

‡ "एतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवन मभिषिषेच तस्मा-दु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे"—इति ऐ० ब्रा० ८, ४, ७।

§ १भा० ४११ पृ० ८ पं०।

यो यजति। अभ्यर्द्धयतिरत्र दानार्थः। "मिम्यक्ष येषु ०——० अध्वनि प्रविक्ते" *। ऋजिश्वा नाम भारद्वाजः, तस्यैव मार्षम। वैश्वदेवे सूक्ते। त्रिष्टुप्। हे मरुतः! 'येषु' युष्मासु 'रोदसी' देवी, रुद्रस्य पत्नी 'मिम्यक्ष' पुनः पुनरेकतां गच्छति। "ह्रयक्षति, मियक्षति"—इति गति गतिकर्मसु पठितम् †। यस्य युष्माकं मध्येऽवस्थितः 'सिषक्ति' सेवते, 'पूषा' सूर्यः रश्मिभिः 'अभ्यर्द्धयज्वा' अभिवृद्धदानः। ते यूय मेवङ्गुणयुक्ता उच्यध्वे। श्रुत्वा 'हवम्' आह्वानम् 'यत् ह याथ' यदा यूय मायाथ अस्मान् प्रति, तदा 'भूमा' बहूनि बलानि, ध्वजाग्राणि वा 'रेजन्ते' कम्पन्ते। एतस्मिन् 'अध्वनि' अन्तरिक्षे। 'प्रविक्ते' विविक्ते, विस्तीर्णे इत्यर्थः॥ एव मत्र "पूषा अभ्यर्द्धयज्वा"; स हि स्वरश्मिपोषं पुष्यन्, भूतान्याभिमुख्येन वृद्ध्या योजयन्नभिमतानार्थान् भूतेभ्यो ददाति॥

"ईक्षे(२०)"—इति ‡, अनवगतम्। "ईशिषे"—इत्यवगमः। "नृवत्त इन्द्र नृतमाभि ०——० महि स्थूरं बृहन्तम्" §। भरद्वाजस्यार्षम्। त्रिष्टुप्। व्यूढस्य दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'नृवत् ते' यथा केचिदुत्पन्नप्रणयाः कश्चिदीश्वरं मनुष्यं स्तुतिभिः सम्भजेरन्, एवं वयं त्वां 'नृतमाभिः' मनुष्यतमयोग्याभिः 'ऊती' अवन्तीभिः तर्पयन्तीभिः स्तुतिभिः 'वंसीमहि' सम्भजेमहि।

* "मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्द्धयज्वा। श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते॥"—इति ऋ० सं० ४, ८, ८, ५।

† १भा० २२९, २३० पृ० गतिकर्मसु १०, ११ पं० (१२), (१३) टीप्पनी द्रष्टव्या।

‡ १भा ४३१ पृ० १३ पं०।

§ "नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः। ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम्॥"—इति ऋ० सं० ४, ९, ८, ५।

'वामं पार्थिवं' वननीयं धनम्। 'श्रोमतेभिः' श्रवणीयतमैः शब्दैः। केन पुनरर्थेन वंसीमहि ? इतः,— यस्मात् 'ईशे' ईशिषे, त्वम्, 'वस्वः' वसुनः, धनस्य ; 'उभयस्य' उभयलक्षणस्य,—दिव्यस्य पार्थिवस्य च वसुनः। त्वम्, हे राजन्! 'धाः रत्नम्' देहि धनम्। कीदृशं पुनर्देहि ? 'महि' महत्, वस्तुभूतम् ; 'स्थूरं' बहु बृहत्त्वञ्च बहुकार्यं-यत् स्यात्, तद् देहि ॥ एव मत्र वसुसम्बन्धात् 'ईशे'—इत्येष शब्दः "ईशिषे"—इत्येव मुपपद्यते ॥

"चोणस्य(१८)"—इति*, अनवगतम्। "चयणस्य"—इत्यवगमः। "युवं श्यावाय०——० अध्यधत्तम्" †। कक्षीवत आर्षम्। आश्विनौ। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'युवं' युवां हे 'अश्विनौ !' 'श्यावाय' राज्ञे 'रुशतीं' ज्वलितरूपां श्रियम् 'अदत्तम्'। युवा मेव च महतः 'चोणस्य' "चयणस्य" निवासस्य दातारौ 'कण्वाय' ऋषये। किञ्च, 'प्रवाच्यं' प्रकर्षेण वचनीयं श्रोतव्यं तत् 'वाम्' युवाभ्यां 'कृतम्', हे 'वृषणौ !' वर्षितारौ यत् 'नार्षदाय' ऋषये बधिरीभूताय 'श्रवः' श्रोत्रम् 'अध्यधत्तम्' अधिकं दत्तवन्तौ स्थः॥ एव मत्र दानसम्बन्धा-धिकाराच्छन्दसारूप्याच्च "चोणस्य = गृहस्य"—इति प्रतीयत॥

"चौणस्य(१८)"—इति एके मन्यन्ते। तत् पुनरनुपपन्नम्, "चय-णस्य"—इति हि भाष्यकारो निराह॥ २ (६)॥

* १भा० ४२२ पृ० १९ पं०।

† युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय। प्रवाच्यं तद् वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम्॥"—इति ऋ० सं० १, ८, १४, २।

अस्मे ते बन्धुः* । वयं मित्यर्थः। अस्मे यातं नासत्या सजोषाः । अस्मानित्यर्थः । अस्मे समानेभिर्वृषभ पौंस्येभिः । अस्माभिरित्यर्थः । अस्मे प्र यन्धि मघवन्नृजीषिन्। अस्मभ्यं मित्यर्थः। अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु। अस्मदित्यर्थः। ऊर्वं इव पप्रथे कामो अस्मे। अस्माकं मित्यर्थः। अस्मे धत्त वसवो वसूनि। अस्मास्वित्यर्थः। पाथोऽन्तरिक्षं पथा व्याख्यातम्। श्येनो न दीयन्नन्वेति पाथ इत्यपि निगमो भवत्युदक मपि पाथ उच्यते पानात्। आ चष्ट आसां पाथो नदीना मित्यपि निगमो भवत्यन्न मपि पाथ उच्यते पानादेव। देवानां पाथ उप वक्षि विद्वानित्यपि निगमो भवति। सवीमनि प्रसवे। देवस्य वयं सवितुः सवीमनीत्यपि निगमो भवति। सप्रथाः सर्वतः पृथुः। त्व मग्ने सप्रथा असीत्यपि निगमो भवति। विदथानि वेदनानि। विदथानि प्रचोदयन्नित्यपि निगमो भवति ॥ ३ (७) ॥

"अस्मे(१९)"—इति †, एतत् पदं सर्वविभक्त्यन्तम्। तस्मादनेकार्थम्। एक मेव ह्येतच्छन्दस्त्वं सप्तस्वपि विभक्त्यर्थेषु वर्त्तते, प्रकरणादिवशात् तस्य नियमो भवति। तद्यथा,

* "अस्मे ते बन्धुः" म०।
† १भा० ४२२ पृ० ३पं०

प्रथमायास्तावत्,—"अस्मे ते बन्धुः"*; "वय मित्यर्थः"। "तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती। अस्मे ते बन्धुः पुषेयम्"—इति †। सोमक्रयणस्य द्रव्या-पाकरणमन्त्रेषु अजायाः एषोऽपाकरणमन्त्रः। सोच्यते ;—हे अजे ! 'तपसः' अग्नेः त्वं 'तनूः' शरीरम् 'असि'; "अग्नेर्ह्येषा अजा"—इति-श्रुतम् ‡, "स एता एभ्यः प्ररोचयत्"—इति § च, तस्मादुपपद्यते अग्नेस्तनुत्व मजायाः। 'प्रजापतेः' 'वर्णः' वरणीया त्वम्। 'सहस्रपोषम्' अस्माकम्। 'पुष्यन्ती' एतस्मिन् कर्मणि अङ्गभाव मुपेहि। एव मजा मभिष्टुत्य अधुना सोमं ब्रवीति ;—हे सोम ! अनेन परमेण श्रेष्ठेन पशुना 'क्रीयसे'। किं कारणम् ? 'अस्मे' "वयम्" 'ते' तव 'बन्धुः' बान्धवः, विनियोक्तार इत्यभिप्रायः॥ एव मत्र प्रथमान्तेन 'बन्धु'-शब्देन सामानाधिकरण्यात् 'अस्मे'—इत्यस्य "वयम्"—इत्येवं प्रथ-मया विपरिणाम उपपद्यते॥

द्वितीयायास्तावत्,—"अस्मे यातं नासत्या सजोषाः"; "अस्मा-नित्यर्थः"। "आ श्येनस्य०——० उषसो व्युष्टौ" ‖। कक्षीवत आर्षम्। त्रिष्टुप्। आश्विनौ। प्रातरनुवाकाश्विनयोः शस्यते। 'आ

* य० वा० सं० ४, २१।

† "अग्नेस्तनूरसि"—इति च द्रष्टव्यम् (य० वा० सं० १, १५; ५, १)।

‡ "आग्नेयो वाव सर्वः पशुः"—इति ऐ० ब्रा० २, १. ६।

§ "अतएव छागमीव आग्नेयो रराट पुरस्तात्"—इति य० वा० सं० २४, १।

‖ "आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः। हवे हि वा मश्वि-ना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ॥"—इति ऋ० सं० १, ८, १८, ६।

यातम्' 'अस्मे' "अस्मान्" प्रति। हे 'नासत्या' नासत्यौ! 'अश्विना' अश्विनौ! कथञ्च पुनरायातम्? 'श्येनस्य' पक्षिणः 'जवसा' जवेन वेगेन, 'नूतनेन' नवतमेन। परिश्रान्तस्य हि श्येनस्यापि मन्दतरो जवो भवति। 'सजोषाः' मया सह प्रीयमाणौ, परस्परेण वा। 'वां' युवाम्। कस्मात्पुनरेवं ब्रवीमि? इतः,— यस्मात् 'हवे हि वाम्' आह्वयामि युवाम्। न वृथैव आह्वयामि; किन्तर्हि? 'रातहव्यः' दत्तहव्यः; युवा मु[द्दिश्य] 'उत्सृष्ट मेतद्धव्यं मया। तौ युवा मेतद् विज्ञाय 'शश्वत्तमायाः' आत्यन्तिकतमायाः 'उषसः' 'व्युष्टौ' व्युच्छेदन-काले आह्वयमानावागच्छतम्॥ एव मत्र "आयातम्"—इत्यनेन समन्वयात् 'अस्मे'—इत्यस्य "अस्मान्"—इत्येवं द्वितीयया विपरिणाम उपपद्यते॥

तृतीयायास्तावत्,—"अस्मे समानेभिर्वृषभ पौंस्येभिः"; "अस्माभिरित्यर्थः"। "भूरि चकर्थ॰——॰यद्ब्राम"*। इन्द्रमरुत्संवादे मरुतां मार्षम्। ऐन्द्री। त्रिष्टुप्। महाव्रते च व्यूढस्य दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। इन्द्र उच्यते,—स त्वं 'भूरि' बहु 'चकर्थ' कृतवानसि कर्म, तस्मिंस्तस्मिन् सङ्ग्रामे। तत्पुनः 'युज्येभिः' एव 'अस्मे' "अस्माभिः" एव संयुक्तः, 'समानेभिः' समानैः, 'पौंस्येभिः' बलैः। हे 'वृषभ' वर्षितः! नैकाकीत्यभिप्रायः। किञ्च; वय मपि 'भूरीणि' बहूनि कर्माणि 'कृणवाम' तस्मिंस्तस्मिन् सङ्ग्रामे। हे

* "भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः। भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम॥"—इति ऋ॰ सं॰ १, ६, १५, १।

'अविष्ठ' वसिष्ठ! 'इन्द्र!'। न च केवलं वाङ्मात्रेणैतद् ब्रूमः; किन्तर्हि? 'क्रत्वा' एव कर्मणैव। तत् सम्पादयामः, 'यद् वश्मः' यत् कामयामहे इत्यर्थः॥ एवमत्र "युज्येभिः"—इत्यनेन सम्बन्धात् 'अस्मे'—इत्यस्य "अस्माभिः"—इति तृतीयया विपरिणाम उपपद्यते॥

चतुर्थ्यास्तावत्,—"अस्मे प्र यन्धि मघवन्नृजीषिन्"; "अस्मभ्यमित्यर्थः"। "अस्मे प्र यन्धि०——०इन्द्र शिप्रिन्"*। घोरस्याङ्गिरसस्येय मार्षम्। त्रिष्टुप्। ऐन्द्री। जातकर्मणि विनियुक्ता। 'अस्मे' "अस्मभ्यम्" 'प्र यन्धि' देहि। हे 'मघवन्' धनवन्! 'इन्द्र!' 'ऋजीषिन्!' 'रायः' धनस्य, 'विश्ववारस्य' सर्वा आपदो यद् धनं वारयति तस्य, 'भूरेः' बहुनः, यस्य अधिपतिः त्वम्, तस्य अभिलषितां मात्रां देहि। किञ्च; 'अस्मे' "अस्मभ्यम्" 'शतं शरदः' शतं वर्षाणि 'जीवसे' जीवनाय 'धाः' देहि। 'अस्मे' "अस्मभ्यम्" 'वीरान्' पुत्रान् 'शश्वतः' दीर्घायुषः देहि। हे 'शिप्रिन्!'॥ एवमत्र "अस्मे प्र यन्धि"—इत्यनेन याच्ञार्थेन सम्बन्धात् 'अस्मे'—इत्यस्य "अस्मभ्यम्"—इति चतुर्थ्या विपरिणाम उपपद्यते॥

पञ्चम्यास्तावत्,—"अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु"; "अस्मदित्यर्थः"। "तस्य वयं०——०सनुतर्युयोतु"†। गर्गस्य भारद्वाजस्यार्षम्। षष्ठे मण्डले ऐन्द्री, त्रिष्टुप्। पुनरपि चेयमेव काचीवतः

* "अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः। अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्॥"—इति ऋ० सं० २, १, १०, ५।

† "तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम। स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु॥"—इति ऋ० सं० ४, ७, ११, २।

सुकीर्त्तिनामा, तेन दृष्टमेतत् सूक्तं दृष्टा । षष्ठे चाहनि पृष्ठ्यस्य, विश्वजिति चेयं तृतीये सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता । 'तस्य' इन्द्रस्य 'यज्ञियस्य' यज्ञार्हस्य 'वयम्' 'सुमतौ' शोभनेऽध्यवसाये 'स्याम' । 'अपि' चास्य 'भद्रे' भन्दनीये स्तुत्ये 'सौमनसे' शोभनसङ्कल्पे मनसि नित्य मेव स्याम । 'सः' 'सुत्रामा' इन्द्रः, 'स्ववान्' धनवान्, 'अस्मे' "अस्मत्तः" 'आराच्चित्' दूरतर मपनीय 'द्वेषः' द्वेष पापम्, ततः 'सनुतः' सन्तर्हितं कृतं यथा तं न पश्येम तथा ; 'युयोतु' नाशयत्वित्यर्थः । एव मत्र 'द्वेषः'—इत्यनेन सम्बन्धात् 'अस्मे'—इत्येतस्य "अस्मत्"—इत्येवं पञ्चम्या विपरिणाम उपपद्यते ॥

षष्ठ्यास्तावत्,—"ऊर्व इव पप्रथे कामो अस्मे"; "अस्माक मित्यर्थः"। "आ नो भर ०——० वसूनाम्"* । "उद्भृहरत्तः"†—इत्यस्या एवेय मनन्तरा। 'आ भर' आहर। 'नः' अस्मभ्यम्। हे 'इन्द्र !' 'भगम्' भजनीयं धनराशिम्, 'द्युमन्तं' दीप्तिमन्तम्। आहृत्य चास्मभ्यं देहि। तथा प्रभूतं देहि, यथा भुक्तशेषस्य 'प्ररेके' अतिरेके सति 'नि दधीमहि'। 'ते' तव स्वभूतस्य 'देष्णस्य' दानस्येत्यर्थः। कस्मात् पुनरेवं ब्रवीमि,—प्रभूतं देहीति ? इतः,— यस्मात् 'ऊर्व इव' यथा वडवामुखेऽवस्थितः ऊर्वोऽग्निः, अपः पिबन् 'पप्रथे' प्रथते, एव मयम् 'अस्मे' "अस्माकम्" 'कामः' प्रथते विस्तीर्यते । 'तम्' 'आ' आभिमुख्येन 'पृण' पूरय 'वसूनाम्' हे 'वसुपते !' ॥ एव मत्र

---

* 'आ नो भर भग मिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके । ऊर्व इव पप्रथे कामो अस्मे त मा पृण वसुपते वसूनाम् ॥"— इति ऋ० सं० ३, १, ४, ४ ।

† पृ० १२० पं० ४ प० द्रष्टव्या।

'कामः पप्रथे'—इत्यनेन सम्बन्धात् आत्मविषयत्वात् आशिषः 'अस्मे'—इति "अस्माकम्"—इत्येवं षष्ठ्या विपरिणाम उपपद्यते॥

सप्तम्यास्तावत्,—"अस्मे धत्त वसवो वसूनि" *। अत्र 'धत्त'—इत्यनेन सम्बन्धात् 'अस्मे'—इत्यस्य "अस्मासु"—इत्येवं सप्तम्या विपरिणाम उपपद्यते॥ सप्तदशेऽध्याये "सुगावो देवाः सुपथाः"—इति शेष उच्यत एव †॥

"पाथः(१०)"—इति ‡, अनवगतम्, अनेकार्थञ्च। "अन्तरिक्षम्" तावत् पाथ उच्यते। तत् पुनरेतत् "पथा व्याख्यातम्"; "पन्थाः पततेर्वा"—इत्यत्र §। "यत्रा चक्रुरमृता०——०मित्रावरुणोत सूर्य्यः" ‖। वसिष्ठस्यार्षम्। अस्याः प्रथमोऽर्द्धर्चः सौर्य इति प्रतिजज्ञे शौनको मैत्रावरुणो द्वितीय इति। एवं ह्याह;—"सूर्य्यः सौर्य्यां हि गीयन्त उद्वेतीत्यर्द्धपश्चमाः"—इति ¶। 'यत्र' यदा 'अस्मे' सूर्य्याय 'चक्रुः' कृतवन्तः 'अमृताः' देवाः 'गातुं' गमनमार्गम्, उदयादारभ्य यावदस्तमय इति, यदा चायमारब्धः सूर्य्यः 'श्येनो न' श्येन इव 'दीयन् अन्वेति' दीयमानः गच्छन् 'पाथः' "अन्तरिक्षम्" तेन मार्गेण। अथ तदा आरभ्य 'प्रति विधेम' 'वां' प्रतीत्य चेतसा युवाम्।

* ऋ० वा० सं० ८, १८।

† यास्कीयस्यैतस्य भाष्यस्य द्वादशे इति यावत्। प० दै० का० ११, ४, ८।

‡ १भा० ४११ पृ० ११ पं०।

§ १भा० २४६ पृ० ५पं०।

‖ "यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः। प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः॥—इति ऋ० सं० ५, ५, ५, ५।

¶ ऋ० सं० ७, ४, ८. सूक्तारम्भे सायणीयं द्र०व्यम्।

'उदिते' सूर्ये 'विधेम' परिचरेम वयम्। हे 'मित्रावरुणौ!' 'नमोभिः' नमस्कारैः 'उत' अपि च 'हव्यैः'॥ एव मत्र 'श्येनो न दीयन्नन्वेति पाथः'—इत्यनेन सम्बन्धात् "पाथः = अन्तरिक्षम्"—इत्युपपद्यते॥

अपठित मेतदन्तरिक्षनामसु *. इति अप्रतीतार्थम्। अथ वैव मन्वया स्यात्;—प्रथमस्यार्द्धर्चस्यार्थः सूर्यप्रधानत्वात् उत्तरार्द्धर्चा निराकाङ्क्ष एव। 'यत्र' यस्मिन् नभसः प्रदेशे 'गातुं' कृतवन्तः, 'अमृताः' देवाः सूर्यस्य। तेन एव प्रदेशेन 'श्येनः' इव 'दीयन्नन्वेति' अनुगच्छति 'पाथः' न तां भयदा मीश्वरोऽपि सन्नतिक्रामतीत्यर्थः॥

"उदक मपि पाथ उच्यते": "पानात्"। "अभि वो देवीं० ——० वुग्रः सुहस्तचत्ताः" †। वसिष्ठस्यार्षम्। व्यूढस्य दशरात्रस्य चतुर्थेऽहनि तृतीये सवने वैश्वदेवशस्त्रे शस्यते। हे ऋत्विजः! 'अभि' वदामि 'वः',—एनां 'देवीं धियं' यूयम् एतान् विश्वान् देवान् 'प्रति दधिध्वम्' धारयध्वम्। किञ्च; "प्र वो देवत्रा वाचं कृणुध्वम्"। 'प्र' ब्रवीमि च एतत् 'देवत्रा' देवगामिनीम् एतां 'वाचं' स्तुतिलक्षणाम् 'कृणुध्वम्'। किञ्च; "आ चष्ट आसां पाथो नदीनां वरुणः"। वरुणोऽपि देवः आदित्यः, 'आचष्टे' इव, प्रकथ-

* १भा० २४ पृ० १ख० ३य० (१)—(१६)।

† "अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम्॥ आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः॥"—इति ऋ० सं० ५, २, १५, ९-१०। न लेकेय सूक् चतुष्पदा; अपि त्विमे द्वे द्विपदे, "प्र शुक्रा पञ्चाधिका वैश्वदेवं आद्या एकविंशतिर्द्विपदाः"—इत्यनुक्रमणीवचनात्, "षोडशिन्या भूयिष्ठा इति द्विपदा। (९, ९.)"—इत्याश्वलायनशासनाचेति।

यतीव जनानां वर्षम्, तत्सृजन् 'आसां' 'नदीनां' स्वभूतम्, उदकं 'पाथः'। किंलक्षणः पुनर्वरुणः? आचष्टे;—'उग्रः' उद्गूर्णः, 'सहस्रचक्षाः' बहुदर्शन इत्यर्थः॥ एव मत्र 'पाथः'-शब्देन "उदकम्"—इत्युच्यते, नदीसम्बन्धात्॥

"अन्न मपि पाथ उच्यते"; "पानादेव"। "वनस्पते रशनया ०—— ० द्यावापृथिवी हवं मे" *। आप्री-सूक्ते वाध्र्यश्वस्य सुमित्रस्यैव मार्षम्। हे 'वनस्पते!' 'रशनया' 'नियूय' निबध्य 'देवानाम्' एतत् स्वभूतं 'पाथः' अन्नं हविर्लक्षणम् 'उप वक्षि' समीपं वहसि 'विद्वान्' जानानः। कस्मात् पुनरेवं ब्रवीमि? इतः;—यस्मात् 'स्वदाति' स्वादयति, सः 'देवः' त्वयोढ़ानि एतानि 'हवींषि'। यानि 'कृणवत्' अकरोत्, एष यजमानः। वनस्पति मेव मुक्त्वा पुनर्द्यावापृथिव्यावाह;— हे 'द्यावापृथिव्यौ!' 'वां' युवा मपि 'अवताम्' अवगच्छताम्, एनं 'हवम्' आह्वानं 'मे' मम॥

"सवीमनि[२१]"—इति †, अनवगतम्। "प्रसवे"—इत्यवगमः। "देवस्य वयं० —— ० चाम्नि भूमनः" ‡। भरद्वाजस्यार्षम्। जगती। गवामयने चतुर्विंशं नाम द्वितीय महः, तत्रेयं तृतीयसवने वैश्वदेवशस्त्रे शस्यते। 'देवस्य' 'सवितुः' सर्वार्थप्रसवितुस्तस्य वयं 'सवीमनि' 'श्रेष्ठे' प्रसवे सर्वार्थाभ्यनुज्ञाने, नित्यकालं 'वयम्' एव 'स्याम'।

* "वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान्। स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे॥"—इति ऋ० सं० ८, १, ११, ५।

† १भा० ४२२पृ० १८ पं०।

‡ "देवस्य वयं सवितुः सवीमनि श्रेष्ठे स्याम वसुनश्च दावने। यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः॥"—इति ऋ० सं० ५,१,१५, १।

'वसुनश्च' धनस्य च 'दावने' दाने श्रेष्ठे प्रवृत्ते, वयमेव सम्भारः स्याम। हे सवितः ! 'यः' त्वं 'विश्वस्य' सर्वस्यास्य 'द्विपदः' मनुष्यादेः, 'यः' 'चतुष्पदः' गवादेः, 'भूमनः' भूम्नः, 'निवेशने' च स्थितौ, 'प्रसवे च' सृष्टौ, प्रभुः 'असि'* । तस्य तव एवङ्गुणविशिष्टस्य प्रसवे च दाने च वयमेव अङ्गभूताः स्यामेति ॥ एतमत्र 'सवितुः'—इत्यनेन समन्वयात् 'सवीमनि'—इत्यस्य "प्रसवे"—इत्येवं विपरिणाम उपपद्यते ॥

"सप्रथाः(११)"—इति †, अनवगतम्। "सर्वतः पृथुः"—इत्यवगमः। "त्वमग्ने सप्रथा०—० वि तन्वते" ‡। सुतम्भरस्येय मार्षम्। गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे अग्ने! त्वमेव 'सप्रथाः' "सर्वतः पृथुः" विस्तीर्णः। 'जुष्टः' च आसेवितो यजमानैः। 'होता' आह्वाता देवानां भवसि। 'वरेण्यः' वरणीयः सर्वथापि। किं बहुना 'त्वया' एव हेतुभूतेनैते यजमानाः एतं 'यज्ञं' 'वितन्वते' विविधं तन्वते, विस्तारयन्ति। एतमत्र शब्दसारूप्यादर्थोपपत्तेश्च "सप्रथाः = सर्वतः पृथुः"—इत्युपपद्यते ॥

"विदथानि(१२)"—इति §, अनवगतम्। "वेदनानि"—इत्यवगमः। "होता देवो०—० प्रचोदयन्" ‖। विश्वामित्रस्यार्षम्।

---

* 'प्रसवे च' सृष्टौ, प्रसूतः' क।

† १भा० ४२४ पृ० २ पं०।

‡ "त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वि तन्वते॥"—इति ऋ० सं० ४. १, ५, ४।

§ १भा० ४२४ पृ० ५पं०।

‖ "होता देवो अमर्त्यः पुरस्तादेति मायया। विदथानि प्रचोदयन्॥"—इति ऋ० सं० ३, १, १९, १

गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। अग्नीषोमप्रणयने* विनियुक्ता। 'होता' आह्वाता, 'देवः' अग्निः, 'अमर्त्यः' अमरणधर्मा, 'पुरस्तात्' अस्य यज्ञकर्मणः, सोमस्य वा प्रणीयमानस्य 'एति' गच्छति, 'मायया' स्वया प्रज्ञया। एषाम् ऋत्विजाम् 'विदथानि' विज्ञानानि 'प्र' प्रकर्षेण 'चोदयन्' अनुगच्छन्नित्यर्थः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "विदथानि = वेदनानि"—इत्युपपद्यते॥ २ (७)॥

आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम॥ समाश्रिताः सूर्यमुपनिष्ठन्ते अपि वोपमार्थे स्यात् सूर्यमिवेन्द्रमुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः† स यथा धनानि विभजति जाते च जनिष्यमाणे च तं वयं भागमनुध्यायामौजसा बलेनौज ओजतेर्वौजतेर्वाशीराश्रयणाद्वाश्रपणाद्वाथेयमितराशीराशास्तेः। इन्द्राय गाव आशिरमित्यपि निगमो भवति। सा मे सत्याशीर्देवेष्विति च‡॥ ४§॥

* 'अग्नीषोमप्रणयने' क।

† "विभक्ष्यमानाः" क, ख, ग।

‡ "सत्याशीर्देवानिति च"—इति ङ०-सम्मतः

§ नेह खण्डसमाप्तिः ङ-च-पुस्तकयोः।

"आयन्त:(२४)"—इति *, अनवगतम्। "समाश्रिता:"—इत्येव मर्थप्रतीति। "आयन्त इव०——० न दीधिम:" †। बृहती। नृमेधस्य आङ्गिरसस्येय मार्षम्। अनर्व्वराति मितीय मनन्तरा चास्या:‡ महाव्रते बृहतीसहस्रे विनियोग:। 'आयन्त इव सूर्यम्' इवोऽनर्थक एतस्मिन् प्रथमेऽर्थे। "समाश्रिता:" समन्तादाश्रिता: 'सूर्यम्' "उप तिष्ठन्ते" रश्मय:। किम्? इति,—"विश्वेदिन्द्रस्य भचत"। 'इत्'—इत्यनर्थक एव। 'विश्वा' विश्वानि "सर्व्वाणि" 'इन्द्रस्य' "धनानि", सूर्य्यस्य स्वभूतानि, उदकानि, तेन प्रवृत्तानि "विभच्यमाणा:" विभक्तु मिच्छन्त:। अथ "वा" 'इत्'—इत्ययम् "उपमार्थे स्यात्", नानर्थक:। आह;—कथम्? इति, उच्यते;—"सूर्य मिवेन्द्र मुप-तिष्ठन्ते" यथा सूर्य्य महन्यहनि रश्मय उपतिष्ठन्ते, एवं मध्यस्थान मिन्द्र मुदकेश्वर मुपतिष्ठन्ते। तस्य "इन्द्रस्य" स्वभूतानि "सर्व्वाणि धनानि" उदकानि तेन प्रवृत्तानि, आत्मनो जनानां वा विभक्तु मिच्छमा-ना:। (किञ्च§) "वसूनि जाते जनमान ओजसा"। यथेन्द्र आदित्यो वा‖ 'वसूनि' धनानि 'जाते' "च" उत्पन्ने च 'जनमाने' "जनि-ष्यमाणे च," स्वेन 'ओजसा' ऐश्वर्य-"बलेन" "विभजति"। तथैव यथाविभक्त: तेन, "तं" 'भागं' भूतानि उपजीवन्ति, तदैश्वर्य्यानु-प्रवृत्त्यैव। यत एव मतो "वयम्" अपि "तम्" एव 'भागं' 'प्रति'

* १आ० ४३४ पृ० ७प०।

† ऋ० सं० ६, ७, २, २।

‡ ऋ० सं० ६, ७, २, ४। "प्रमार्थं प्रत्ययवद्भाति"—इति दे० चा० ५, १०।

§ नास्त्येतत् क-पुस्तके।

‖ "यथेन्द्रस्य चादित्यो" क।

'न दीधिमः'। अत्र 'न'—इत्यनर्थकः, अनेर्वा स्थाने। "तं वयं भाग मनुध्यायामः"—इति भाष्यकारो निराह॥ एव मत्र 'आयन्त इव सूर्यम्'—इति सूर्यसम्बन्धात् रश्मयोऽध्याहृताः, रश्मिसम्बन्धाच 'आयन्तः'—इत्येष शब्दः, समाङावुपसर्गावध्याहृत्य "समाश्रिताः"—इत्येव मुपसार्थे भवतीत्युपपद्यते॥

"ओजः",—"ओजतेर्वा" वृद्ध्यर्थस्य (चु०अ०प०); "उब्जतेर्वा" न्यग्भावार्थस्य (तु० प०) * ॥

"आशीः(२५)"—इति †, अनवगत मनेकार्थञ्च। "आशिरम्"—इत्यर्थप्रतीतिः। या यजमानस्य व्रतधुक्, ता माशिरं दुहन्ति। एतस्मिन् पक्षे दध्यभिधेयम्; तेन हि सोम उपश्रीयते, तस्मात्तदाशिर-मित्युच्यते। अथ"वा" "आश्रपणात्"; ईषद्धि तच्छृतं भवति दधिभावात्॥

"अथ" पुनः या "इयम्,—इतरा आशीः"? इयम् "आशास्तेः" आङ्पूर्वस्य शास्तेः (अदा०प०) अभिलाषार्थस्य॥

"इन्द्राय गाव०——० त्रिदत्"‡। प्रियमेधस्य आङ्गिरसस्येयमार्षम्। मध्यमे रात्रिपर्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'इन्द्राय' 'वज्रिणे' अर्थाय 'गावः' 'आशिरं' अपणार्थं पयः, यस्मै पुनः 'दुदुह्रे'। 'मधु' मध्वास्वादम्। 'यत्' 'सीम्' सर्वतः 'उपह्वरे'

---

* १भा० ९९, ११२ पृ० १प० ११पं० (४२); २१५ पृ० २प० ९पं० (१)। "ओजस्क बलतेजसोः"—इति कवि०।

† १भा० ४२४ पृ० १०पं०।

‡ "इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु। यत् सीमुपह्वरे विदत्॥"—इति ऋ० सं० ६, ५, ९, १।

उपगूढे ऊधःप्रदेशे, दोग्धा 'अविदत्' तत् क्षीरैर्दुदुहे ॥ एव मत्र गो-सम्बन्धात् 'आशीः'-शब्देन "आशिरम्" उच्यत इत्युपपद्यते ॥

"अथैव मितराशीराशास्तेः"—इति यदुक्तम्, तस्येद मुदाहरणम्;—"सा मे सत्याशीर्देवान् * गम्यात्। जुषन्तु ते समर्द्धयन्तु। जुष्टात जुष्टतरा पण्यात् पण्यतरा। अहेडता मनसा नु गच्छ यज्ञो देवान् गच्छतु"॥ प्रस्तरे† प्रह्रियमाणे यजमानो जपत्येनम्। 'सा' 'मे' मम 'आशीः', 'सत्या' यथाप्रार्थितेह 'देवान्' 'गम्यात्' प्राप्नोतु। 'जुषन्तु' 'ते' देवाः। श्रुत्वा च 'समर्द्धयन्तु'; 'जुष्टात्' अपि 'जुष्टतरा' प्रियादपि प्रियतरा, पण्यादपि 'पण्यतरा' स्तुतादपि स्तुततरा। किञ्च; 'अहेडता मनसा' अक्रोधवता मनसा प्रहितोऽस्माभिः हे प्रस्तर! त्व मपि 'देवान्' 'गच्छ'। 'यज्ञः' अपि 'देवान्' 'गच्छतु'। त्व मपि चान्यं यज्ञम्। तदयं याचामोऽमात्रपि देवान् गम्यात्॥ एव मत्र आशीरेव 'आशीः'-शब्देनाभिधीयते; आशिषो हि देवान् प्रति गमन मभीष्ट मिति ॥ ४ ॥

यदा ते मर्त्तो अनु भोग मानळादिद्‡ ग्रसिष्ठ ओषधीरजीगः ॥ यदा ते मर्त्तो भोग मन्वापदथ ग्रसितृतम ओषधीरगारीर्जिगर्त्तिर्गिरतिकर्म्मा§ वा

* "सत्याशीर्देवेषु"—इति यास्कीयपाठः सर्वत्रैव मूलपुस्तकेषु।

† प्रस्तरो दर्भमुष्टिः। अम० को० २, ७, २११ श्लो०। "यजमानः प्रस्तरः (ऐ० ब्रा० ९, १, ३)"—इत्यादि च द्रष्टव्यम्।

‡ "मानलादिद्" क, ख, ग।

§ "आगर्त्तिर्गिरतिकर्मा" क, ङ। "जीगर्त्तिर्गिरतिकर्मा" ग।

स्तृणातिकर्म्मा वा स्तृह्णातिकर्म्मा वा। मूरा अमूर न वयञ्चिकित्वो महित्व मग्ने त्व मङ्ग वित्से॥ मूढा वयं स्मोऽमूढस्त्व मसि न वयं विद्मो* महत्वा† मग्ने त्वं तु वेत्थ शशमानः शंशमानः। यो वां यज्ञैः शंशमानो ह दाशतीत्यपि निगमो भवति। देवो देवाच्या कृपा। देवो देवान् प्रत्यक्तया कृपा कृप् कृपतेर्वा कल्पतेर्वा॥ ॥ ५ (८) ॥

"अजीगः(२९)"—इति ‡, अनवगतम्। "अगारी:"—इत्यवगमः। "अर्चा ते०—० ओषधीरजीगः"§। दीर्घतमस इय मार्षम्। अश्वमेधेऽश्वस्तुतौ विनियुक्ता। 'अत्र' एतस्मिन् काले 'ते' तव हे अश्व! 'रूपम्' अहम् 'उत्तमम्' उत्कृष्टम् 'अपश्यम्'। 'जिगीषमाणं' जेतु मिच्छमानम् 'इषे' अन्ने जेतव्ये निमित्तभूते 'आ पदे गोः' उपरि भूम्याः शरपथे वेद्यां वा। यज्ञेनापि ह्यन्न मेवामुष्मिंल्लोके जीयते, तस्माद् वेद्या मित्येव मुपपद्यते। किञ्च; 'यदा' यस्मिन् काले 'ते' तव 'मर्त्तः' मनुष्यः 'अनुभोगम्' 'आनट्' प्राप्नोति, वाहयन् वा, अथ परिश्रान्तस्त्वम् 'ओषधीः अगारीः' ओषधीर्गृहाणि गिरसि वा। अन्ये हि प्राणिनः परिश्रान्ताः चरितुं न शक्नुवन्ति, त्वं तु

* "मूल्हा वयं स्मोऽमूल्हस्त्व मसि" क ग। "मूळ्हा वयं स्मोऽमूळ्हस्त्व मसि" ख।

† "महित्व" क, ख, ग।

‡ १भा० ४२५ पृ० १प०।

§ "अर्चा ते रूप मुत्तम मपश्यं जिगीषमाण मिष आपदे गोः। यदा ०—० रजीगः॥"—इति ऋ० सं० २, २, ११, १।

सुतरा मोषधीर्भक्षयसीत्येतदधिकं तव॥ एव मत्र श्रोषध्यस्य-सम्बन्धात् "जिगर्त्तिः, गिरतिकर्मा वा गृह्णातिकर्मा वा"—इत्यु-पपद्यते॥

"अमुरः[(१७)]"—इति *, अनवगतम्। "अमूढः"—इत्यवगमः। "मूरा अमूर॰—॰विश्पतिः सन्" †। चितस्याप्नस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्नग्ने! 'अमूर!' अमूढ! 'मूराः' मूढाः 'वयं' स्मः। भवतो माहाभाग्यपरिज्ञानं प्रति मन्दबुद्धित्वात् 'न वयं चिकित्वः' न वयं भवतः प्रभावस्यान्तं विजानीमः। हे 'अग्ने!' 'त्वम्' एव आत्मनो महिमानं "महत्त्वम्" ‡ माहाभाग्यम् 'वित्से' वेत्सि; कस्त्वन्यो माहाभाग्यस्यान्तं वेत्तु मर्हतीत्यभिप्रायः। किञ्च; 'शये' शयपरिमाणे प्रदेशे उत्तरवेद्याख्ये 'वव्रिः' विशेषात्मा, तव रूपाख्यः 'चरति' समिद्धत्वात् मुहुर्मुहुश्चरति। स त्व मनेन रूपेणोत्तरवेद्या मवस्थितो 'जिह्वया' ज्वालया तानि तानि हवींषि 'अदन्' भक्षयन् 'रेरिह्यते'। 'युवतिं' तां ता माहुतिं पुनः पुनः आस्वादयसि। 'विश्पतिः' विश्वस्य सर्व्वस्य पतिः, मनुष्यपतिर्वा 'सन्' यस्त्व मेवं करोषि हितैषित्वाद् यजमानानाम्, सोऽस्माक मिदं नाम कुर्व्वित्यभिप्रायः॥ एव मत्र 'मूढाः'—इत्यात्मनिन्दाद्वारेण अग्निः "अमूढः"—इत्यनेन स्तूयते इत्यस्य 'अमूर'-शब्दस्य "अमूढः" —इत्येव विपरिणाम उपपद्यते॥

---

* १भा॰ ४२५ पृ॰ ५प॰।

† "मूरा अमूर न वयं चिकित्वो महित्व मग्ने त्व मङ्ग वित्से। शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन्॥"—इति ऋ॰ सं॰ ७, ५, ११, ४।

‡ 'महित्वम्'— इति ख-नामकलिपुस्तके।

"शशमानः[२८]"—इति *, अनवगतम् । "शंसमानः"—इत्यव-गमः । "यो वां यज्ञैः ०———० गन्त मन्मयुः" † । दीर्घतमस आर्षम् । जगतीच्छन्दः । 'यः' यजमानः, युवां हे मित्रावरुणौ! 'यज्ञैः' निमित्तभूतैः 'शशमानः' "शंसमानः" स्तुवन् 'दाशति' ददाति हवींषि युवाभ्याम् । 'कविः' क्रान्तदर्शनः, 'होता' आह्वाता 'यजति' । 'मन्मसाधनः' मननसाधनः, विज्ञानसाधन इत्यर्थः । आह ;—तस्य किम् ? इति, उच्यते ;—'उपाहृतं गच्छथः' प्रत्यु-पागच्छथः युवाम्, 'वीथः' च 'अध्वरम्' अध्वाश्रितानि हवींषि । वय मपि च एवङ्गुणविशिष्टा एव । यतो ब्रूमः ;—'सुमतिं' शोभन-प्रज्ञं यजमानम् अनु लक्ष्य 'अच्छा गिरः' एता अस्मद्गिरः आभिमुख्येन 'गन्तम्' गन्तु मिच्छथो युवाम् । 'अस्मयू' अस्मान् कामयमानावित्यर्थः ॥ एव मत्र 'यज्ञैः शशमानः'—इति यज्ञसम्ब-न्धात् शब्दमाहुयाच्च "शशमानः = शंसमानः"—इत्येव मुपपद्यते ॥

"देवो दुवाच्या, कृपा[२९]"—इति ‡, एते § अनवगत । देवशब्दो ऽनयोरेव उपलक्षणार्थो ऽत्र समाम्नातः । देवः, दुवाच्या, कृपा,—इति त्रीणि एतानि पदानि । 'दुवाच्या'—इत्यस्य "देवान् प्रत्यर्चितया" —इत्यर्थप्रतीतिः । 'कृपा'—इत्यस्यापि "कल्पितया"—इत्येव मर्थ-

* १भा० ४२५ पृ० ८प० ।

† "यो वां यज्ञैः शंशमानो ह दाशति कविर्होता यजति मन्मसाधनः । उपाह-तं गच्छथो वीथो अध्वर मच्छा गिरः सुमतिं गन्त मस्मयू ॥"—इति ऋ०१,२,११,२ ।

‡ १भा० ४२५ पृ० १०पं० ।

§ १भा० ४२४ पृ० (२९)-टीप्पनी द्रष्टव्या ।

प्रतीतिः। "अग्निं होतारं०——० सर्पिषः"*। परुच्छेपस्यार्षम्। अतिच्छन्दाः अत्यष्टिः। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अग्निं' 'होतारम्' आह्वातारम् देवानाम् 'मन्ये'। 'दास्वन्तं' दानवन्तं दातृतमम्, 'वसुं' वासयितारम् सर्वस्य जगतः। 'सूनुं'—'सहसः' बलस्य पुत्रम्, 'जातवेदसं' जातप्रज्ञानम्। 'विप्रं न जातवेदसम्' विप्रमिव जातप्रज्ञानम्; यथा हि कश्चित् कश्चिन्मनुष्यं समानपृष्ठोदरपाणिपादं विप्रप्रज्ञानं यथावत् जानीयात्, एवं सह मग्निं यथावज्जाने। 'यः' अग्निः, 'स्वध्वरः' शोभनयज्ञः 'देवः'। 'ऊर्द्ध्वया' 'कृपा' कृपया सामर्थ्यात्मकया कल्पितया, 'देवाच्या' देवान् प्रत्यञ्चितया गत्या, 'घृतस्य' 'विभ्राष्टिं' विभ्रमम 'अनु वष्टि' आहुतिप्रलेपम्। 'शोचिषा' ज्वालया अनुकामयते वाञ्छति। "वष्टि"—इति कान्तिकर्म्मसु पठितम्†। 'आजुह्वानस्य' उपरि हूयमानस्य 'सर्पिषः' सर्पणशीलस्य। य मग्निं सह मेवं जाने, यश्चैवङ्गुणयुक्तः, स इदं नामास्माकं करोत्वित्यभिप्रायः॥ एवं मन्त्र "देवाच्या, कृपा"—इत्येतौ शब्दौ देवान् प्रत्यक्तया कल्पितयत्येव मुपपद्येते, शब्दसारूप्यादर्थोपपत्तेश्च ॥ ५ (८) ॥

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात्। अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी

---

* "अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम्। य ऊर्द्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः॥"—इति ऋ० सं० १, १, ११, १।

† १भा० १९९ पृ० १ख० ४ख० (७)

स्तोमं जनयामि नव्यम्॥ अश्रौषं हि बहुदातृतरौ* वां विजामातुरसुसमाप्ताज्जामातुर्विजामातेति† अस्व-दाक्षिणाजाः क्रीतापति माचक्षतेऽसुसमाप्त इव वरो-ऽभिप्रेतो जामाता जा अपत्यं तन्निर्म्मातोत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः स्याल्लाजानावपतीति वा लाजा लाजतेः‡ स्यं शूर्पं स्यतेः शूर्प मशनपवनं शृणातेर्वाथ सोमस्य प्रदानेन युवाभ्या मिन्द्राग्नी स्तोमं जनयामि (नव्यं§) नवतर मोमास इत्युपरिष्टाद् व्याख्यास्यामः॥ ६ (९)॥

॥ इति षष्ठाध्यायस्य द्वितीयः पादः॥ ६, २.

"विजामातुः(४०)"—इति ||, अनवगतम्। उपसर्गस्यापरिसमाप्त्यर्थे वृत्तिरत्रानवगमः। "असुसमाप्त इव वरोऽभिप्रेतः"—इति भाष्य-कारो निराह विगतजामातृभाव इव च; यो ह्यप्राप्तजामातृभावः स विजामातेत्युच्यते; स हि दाक्षिणात्येषु प्रसिद्धः। "अश्रवं हि ०——०जनयामि नव्यम् ¶"। कुत्सस्यार्षम्। त्रिष्टुप्। "अश्रौषम्"

* "बहुदायितरौ" क, ख, ग।
† "विजामातुरसमाप्ताज्जामातुर्विजामातेति" क, ख, ग।
‡ "लाजा राजतेः" क, ख, ग।
§ नैतत्पदं दृश्यते क-ख-ग-पुस्तकेषु।
|| १भा० ४२५ पृ० १७ पं०।
¶ ऋ० सं० ९, ७, २८, १।

अहम् युवाम्। हे 'इन्द्राग्नी!' 'भूरिदावत्तरा' भूरिदातारौ। कुतः? 'विजामातुः' "असुसमाप्तात् जामातुः" यो हि असमाप्तजामातृ-भावो भवति, स जामातृगुणहीनत्वात् बहुदानेन कन्या पितृ-नाराध्य तेभ्य आत्मानं रोचयति। ततोऽपि बहुतरस्य धनस्य दातारा-वह मन्योषं भवन्तौ। "उत वा घा स्यालात्"। "घा"—इत्य-नर्थकः। 'स्यालात्' अपि बहुदातारौ युवां मह मन्योषं भवन्तौ; स्यालोऽपि हि भगिनीप्रियचिकीर्षया बह्वेव ददाति। यत एव मह मन्योषं भवन्तौ, एतस्मात् कारणात् 'सोमस्य' 'प्रयती' प्रदानेन, हे इन्द्राग्नी! 'युवाभ्यां' 'स्तोमं' 'जनयामि' उच्चारयामि, 'नव्यं' नवतर मन्येभ्यः स्तोमेभ्यः॥ एव मत्र 'विजामातृ'-शब्देन "असुसमाप्तजामातृभावः" उच्यते, तस्य बहुदातृत्वादित्युपपत्तिः॥

"विजामातेति" "शश्वत्" प्रसिद्ध मेतत् "दाक्षिणात्याः* क्रीता-पति माचक्षते" तस्य निर्गुणत्वादात्मनः क्रीणाति कन्या मात्मनो भार्यार्थे। तस्मात् "असुसमाप्त इव" असौ "वरोऽभिप्रेतः"॥ "जामाता"। "जा अपत्यम्, तन्निर्माता" जामाता; स्त्रीत्वं हि मैथुनेन व्यवहारेणासौ निर्मिणोति, तेनासौ दुहितुः पतिर्जामाता भवति॥ "स्यालः आसन्नः संयोगेनेति" "नैदानाः" निदान-विदो मन्यन्ते। अथ "वा" "स्यम्"—इति "शूर्पम्" उच्यते; "स्यात्" तस्मादसौ गृहीत्वा विवाहे "लाजानावपति", तस्मात् स्यालः उच्यते।† "स्यं शूर्पम्", "स्यतेः (दि॰प॰)" धातोः प्रत्ये-

* "दाक्षिणाजाः" मूलपाठः।

† इत उत्तरं लाजापदनिर्वचनव्याख्यानं व्याख्यातृ सूचितम्।

पणार्थस्य; तेन हि तुषाः चिप्यन्ते॥ "शूर्पम् अशनपवनम्" तेन ह्यशनं पूयते। "शृणातेः (क्र्या०प०)" तद्धि शरमयं भवति॥

"ओमासः[41]"—"इति" *, एतत् पदम् "उपरिष्टाद् व्याख्यास्यामः" षष्ठदशेऽध्याये † "ओमासश्चर्षणीधृतः"—इत्यत्र ‡ ॥ ६(९)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)

द्वितीयः पादः॥ ६, २॥

---

॥ तृतीयः पादः॥

सो॒मान॑ं स्व॒र॑णं कृणु॒हि ब्र॑ह्मणस्पते। क॒क्षीव॑न्तं॒ य औ॑शि॒जः॥ सोमानां § सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्त मिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्म्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां॥ सोतारं मां ¶ प्रकाशनवन्तं कुरु ब्रह्मणस्पते॥ १ (१०)॥

"सोमानम्[42]"—इति ¶, अनवगतम्। "सोतारम्"—इत्यवगमः। "सो॒मान॑ं स्व॒र॑णं ०——० य औ॑शि॒जः" **। मेधातिथेः

* १भा० ४२९ पृ० ४पं०।

† यास्कीयस्यास्य निरुक्तग्रन्थस्य द्वादशेऽध्याये इति यावत्।

‡ ऋ० सं० १२, ४, ९।

§,|| "सोमानं" क, च।

¶ "मा" क, ख, ग।

** १भा० ४२९ पृ० ९पं०।

†† ऋ० सं० १, १, २४, १।

काक्षस्यार्षम्। अन्न्युपस्थाने विनियुक्ता; "सोमानं स्वरण मिति ब्राह्मणस्पत्ययोपतिष्ठेत"—इति सूक्तम् *। 'सोमानम्' अनेकेषां "सोमानां" "सोतारम्" अभिषोतारम्, माम्, 'स्वरणं' शब्दयितारम्, सुयशस्विनं 'कृणुहि' कुरु हे 'ब्रह्मणस्पते!'। कथं च पुनः "प्रकाशनवन्तं कुरु"? इति,—"कक्षीवन्तं य औशिजः"। लुप्तोपम मेतत्। 'यः' 'औशिजः' कक्षीवान्, त मिव। अत्र करोतिसम्बन्धात् "प्रकाशनवन्तम्"—इत्येतदध्याहृतं भाष्यकारेण। 'कक्षीवान्' "कक्ष्यावान्" कक्ष्यया तद्वान् †। "अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्"; स हि कक्षे उत्पन्नः, तदुत्पत्तिसंयोगात् कक्षीवान्। 'औशिजः' "उशिजः पुत्रः"। "उशिक्" पुनः "वष्टेः" कान्त्यर्थस्य ‡। एव मत्र 'सोमानम्'—इत्यस्य शब्दसारूप्यात् "सोतारम् सोमानाम्"-इत्येष विपरिणाम उपपद्यते॥

अपि चैव मन्यथा स्यात्;—योऽहं सोमानां सोता, कक्षीवान् औशिजः, तमेवङ्गुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते!॥ १ (१०)॥

इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निवाँ इव। ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्त

* "सोमानं स्वरणं कृणुहि ब्रह्मणस्पते" इत्यादि सा०भा० (ऋ०सं०१,१,३४,१)।
† "कक्षः", "कक्ष्या" च १भा० ११५ पृ० १पं०। "कक्ष्याः" तत्रैव १८२ पृ० १० पं०। (ऋ० सं० १, ११६—१२५ १, १२१, ४—५ ; ८, ७४ सूक्तानां द्रष्टा।
‡ १भा० १९९ पृ० १ख० ६ख० (७)। 'उशिजः'—इति मेधाविनामसु च (१भा० ३४२ पृ०) द्रष्टव्यम्।

मनवायं किमीदिने ॥ इन्द्रासोमावघस्य शंसितार मघं हन्तेर्निर्ह्रसितोपसर्ग आहन्तीति तपुस्तपतेश्चरुर्मृन्मयो भवति चरतेर्वा समुच्चरन्त्यस्मादापो ब्रह्मद्विषे (ब्राह्मणद्वेष्ट्रे*) क्रव्य मदते † (घोरचक्षसे ‡) घोरख्यानाय क्रव्यं विकृत्ताज्जायत इति नैरुक्ता द्वेषो धत्त मनवाय मनवयवं § यदन्ये न व्यवेयुरद्वेषस इति वा किमीदिने कि मिदानी मिति चरते कि मिदं कि मिद मिति वा पिशुनाय चरते पिशुनः पिंशतेर्विपिंशतीति ॥ २ (११) ॥

"अनवायं(४३)", "किमीदिन(४४)"—इति ||, एते अनवगते । 'अनवायम्'—इत्यस्य "अनवयवम्"—इत्यवगमः । 'किमीदिने'—इत्यस्य "किमिदङ्किमिदङ्कारी पिशुनः" ॥ "इन्द्रासोमा समघशंस ०——० मनवायं किमीदिने" ¶ । वशिष्ठस्यार्षम् । हे "इन्द्रासोमौ!" सन्तापन्तं भवन्तौ, 'अघशंसं' पापस्य "शंसितारम्", 'अभ्यघं' पाप मेव कर्त्तु मामिमुख्येन नित्यकाल मेव योऽवस्थितः, तं सन्तापयन्तम् । स च 'तपुः' युवाभ्यां सन्ताप्यमानः, "चरुरग्निवाँ इव" चरुरिव अग्निसंयुक्तः 'ययस्तु' क्षयं यात्वित्यर्थः । किञ्च; 'ब्रह्मद्विषे'

* नैतत्पदं दृश्यते क-ख-ग-पुस्तकेषु ।

† "मदने" क, ख, ग ।

‡ नैतत्पदं दृश्यते क-ख-ग-पुस्तकेषु ।

§ "धत्त मव्यवेय मनवयवं" क, ख, ग ।

|| १भा० ४२९ पृ० १२ पं० ।

¶ ऋ० सं० ५, ७, ५, १ ।

"ब्राह्मणद्विष्टे", 'क्रव्यादे' क्रव्य मदते पृष्ठमांसभक्षयित्रे, 'घोरचक्षसे' घोरदर्शनाय, 'द्वेष:' सर्वलोकद्वेष्यतां 'धत्तम्' युवाम्। 'अनवायम्' "अनवयवं" सकल मित्यर्थः। अथ "वा" "यदन्ये" 'अतद्रुह:' "अद्वेषस:" अद्वेष्टार: "न व्यवेयु:" व्यवेतुं वियोजयितुं घटमाना अपि न शक्नुयु:, तादृशं द्वेषो धत्तम्। 'किमीदिने' "पिशुनाय"—इत्यर्थः॥ एव मत्र 'अनवायम्'—इत्यस्य "अनवयवम्" अवियोजनं वा—इत्यर्थ-प्रतीतिः; तथाभीष्टत्वात्॥

किमिदी च पिशुन:; स हि "किमिदानीम्" वर्त्तते "इति" एव मन्वेषमाण: "चरते"; (अथ "वा" "किमिदं" वर्त्तते "इति" एव मन्वेषमाण: "चरते";*) स हि तस्य स्वभाव:॥ "चरु:, मृन्मयो भवति" मृदादिसञ्चितो भवति। "चरतेर्वा" "समुच्चरन्ति" हि "अस्मादाप:"॥ "क्रव्यं" मांसम्; तद्धि "विकृत्तात् जायते"॥ "पिशुन:" "पिंशते: (जु० प०)" धातो:; स हि स्वल्प मपि पापं "विपिंशति" विपुष्यतीत्यर्थः॥ २ (११)॥

कृ॒णु॒ष्व पाजः॒ प्रसि॑तिं॒ न पृ॒थ्वीं या॒हि राजे॒वाम॑वाँ॒ इभे॑न। तृ॒ष्वी मनु॒ प्रसि॑तिं द्रूणा॒नोऽस्ता॑सि॒ विध्य॑ र॒क्षस॒स्तपि॑ष्ठैः॥ कुरुष्व पाजः पाजः पालनात् प्रसिति मिव पृथ्वीं प्रसितिः प्रसयनात्तन्तुर्वा † जालं वा याहि राजे-वामात्यवानभ्यमनवान्स्ववान्वेराभृता गणेन गतभयेन

* बम्बईपुस्तकान्तर्गतानि पदानि ख-पुस्तके न दृश्यन्ते।
† "प्रसयनात्तन्तुर्वा" क, ख, ग।

हस्तिनेति वा तृष्वगानु प्रसित्या द्रूणानस्तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वासितासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तृप्ततमैः प्रपिष्ठतमैरिति वा। यस्ते गर्भं ममीवा दुर्णामा योनिं माशये। अमीवाभ्यमनेन व्याख्यातो दुर्नामा* क्रिमिर्भवति पापनामा क्रमिः क्रव्ये मेद्यति क्रमतेर्वा स्यात्सरणकर्मणः क्रामतेर्वा। अतिक्रामन्तो दुरितानि विश्वा। अतिक्रममाणा दुर्गतिगमनानि सर्वाण्यथवा यदेनया विद्वाऽपवीयते। व्याधिर्वा भयं वा। अघे परेहीत्यपि निगमो भवत्यमतिरमामयी मतिरात्ममयी। ऊर्ध्वा यस्यामतिर्भा अदिद्युतदित्यपि † निगमो भवति। श्रुष्टीति क्षिप्रनामाशु अष्टीति ॥ ३ (१२) ॥

"अमवान्(४५)"—इति ‡, अनवगत मनेकार्थञ्च। "कृणुष्व पाजः ०——० रक्षसस्तपिष्ठैः § ; वामदेवस्यार्षम्। अग्निचयने पुरुषव्याघारणे विनियुक्ता ; "राक्षोघ्नेन व्याघारयेत्"—इति सूत्रम् ‖ ॥ हे भगवन्नग्ने! 'कृणुष्व' "कुरुष्व" एतदात्मीयं 'पाजः' बलम्, 'प्रसितिं

* "दुर्णामा" क, च।
† "अदिद्युतत्त्वमीममौत्यपि"—इति क, च।
‡ १भा० ४२९ पृ० १० पं०।
§ ऋ० सं० ३, ४, १२, १।
‖ "कृणुष्वपाजोनाराक्षोघ्नम्"—इत्यनुक्रमणिका।

न' "प्रसितिमिव", वागुरातन्तु मिव, जाल मिव वा। 'पृथ्वीं' विस्तीर्णाम्। तत एव मेतद् विस्तीर्णं कृत्वा 'याहि' त्वं रक्षांस्यभिमुखः। कथं च पुनर्याहि? 'राजा इव' यथा राजा यायात् 'अमवान्' "अमात्यवान्" रीतियुक्तो विजयाय, तथा त्वं याहि *। अथ वा यथा "अभ्यमनवान्" रोगभूतः परेभ्यो भयदाता यायात्, तथा याहि। अथ वा यथा "स्ववान्" आत्मवित्तवान् सुभृतसैन्यो यायाद् विजयाय, तथा याहि। 'इभेन' "इराभृता" अन्नभृतेन "गणेन" सुपुष्टेन युक्तो यथा राजा यायात्, तथा याहि। अथ वा 'इभेन' "गतभयेन" शूरेण "हस्तिना" यथा यायात्, तथा याहि। किञ्च; "तृष्वी मनु प्रसितिं द्रूणानः"। क्षिप्र मनु प्रसृतया गत्या, सन्ततया गत्या। 'द्रूणानः' रक्षांसि हिंसन् याहि। कस्मात् पुनरेव मुच्यते? इतः;—यस्मात् 'अस्ता असि' "असिता" क्षेप्ता त्वं रक्षांसि प्रति दीप्तायाः अर्चिषः। स त्व मेव मागत्य 'विध्य' एतान् "रक्षसः" अस्मच्छत्रून् 'तपिष्ठैः' "तप्ततमैः" अर्चिभिः॥ एव मत्र राजोपमान-सम्बन्धात् "अमवान् = अमात्यवान्"—इत्येवमाद्युपपद्यते †॥

'पाजः'—इति बलनाम‡, "पालनात्; तेन हि पाल्यते। 'प्रसितिः'—"प्रसहनात्"; "तन्तुर्वा जालं वा" उभाभ्या मपि ताभ्या मभिभूयन्ते मृगाश्च मत्स्याश्च॥

"अमीवा[४९]"—इति§, अनवगतम्। "अभ्यमनेन" "अभ्यमन-

---

* "यथा राजा अमात्यवान् रीतियुक्तो विजयाय याति, तथा त्वं याहि" इति क।

† अम मित्यस्य "भयं वा बलं वा"—इत्यर्थो वक्ष्यति दै० का० १०, १, ८।

‡ १भा० ११५ पृ० १ख० ८ख० (२); ११९ पृष्ठायां च तद् निर्देष्टव्या।

§ १भा० ४२० पृ० ५ पं०।

वाम्”—इति यदुक्त माधस्ये मन्त्रे *, अनेनैव तद् “व्याख्यातम्” †। “यस्ते गर्भ ममीवा ०——० ममीनशत्” ‡। रक्षोहा नाम ब्राह्मणः, तस्येव मार्षम्। पुत्रकामस्य यजाकृतो नाम स्थालीपाकः, तत्रेयं विनियुक्ता। ‘यः’ ‘ते’ तव हे स्त्रि! ‘गर्भम्’ ‘अमीवा’ रोगभूतः, ‘दुर्णामा’ “पापनामा क्रिमिः” पापप्रदेशे नतः परिणतः उत्पन्नः, ‘योनिम्’ ‘आ’ गत्य ‘शये’ शेते गर्भहिंसिता। तम् अग्निः ब्रह्मणा सह ‘निर् अनीनशत्’ नाशयतु। ‘क्रव्यादं’ मांस-भक्षयितारम्॥ एव मन्त्र ‘अमीवा’-इत्यस्य “क्रिमिः” अभिधेयः; क्रिम्युपहने हि योनौ गर्भो न सम्भवतीत्युपपत्तिः॥

“दुरितम्(४७)”—इति §, अनवगतम्। “दुर्गतिगमनम्”-इति अर्थप्रतीतिः। “वैश्वदेवीं सूनृता मारभध्वं शुद्धा भवन्तो यज्ञियासः पावकाः। अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम”। ‘वैश्वदेवीं’ वाचं ‘सूनृतां’ सत्याम् ‘आरभध्वम्’ उपक्रम-ध्वम् वक्तुम्। तयैवंलक्षणया वाचा ‘शुद्धाः’ इह अनभिशस्ताः पूताश्च परलोके भवथ। ‘यज्ञियासः’ यज्ञियाः यज्ञसम्पादिनः। किञ्च; ‘अतिक्रामन्तः’ अतिक्रममाणा वयम्। तस्या वाचो माहाभाग्येन। ‘दुरितानि’ दुर्गतिप्रापकानि कर्माणि, ‘विश्वा’ विश्वानि। ‘शतं हिमाः’ शतं हेमन्तानां ‘सर्ववीराः’ अनवखण्डितपुत्रपौत्राः ‘मदेम’

* अत्रैव खण्डे पुरस्तात् १८४पृ० १०पं० ; १९१पृ० ५पं०।

† “व्याख्यातः”—इत्येव पाठः सर्वमूलपुस्तकेषु।

‡ यस्ते गर्भममीवा दुर्णामा योनिमाशये। अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत्॥”—इति ऋ० सं० ८, ८, १०, १।

§ १भा० ४२७ पृ० ९ पं०।

इच्छेमेत्यर्थः ॥ एव मथातिक्रमणसम्बन्धात् "दुरितम् = दुष्कृतम्"—
*इत्युपपद्यते; तस्य हि अतिक्रमण मभीष्ट मिति ॥*

"अमवा(४८)"—इति *, अनवगतम्। 'अपवयति'—इत्यवगमः।
रोगजातिर्वा अभिधेया भयजातिर्वा; तथा हि "विद्धः अप-
वीयते" अपवेक्ष्यते प्राणैः। "अमीवां चित्तम् (ऋ०सं० ८,५,२१,६)"
—इति उपरिष्टाद्व्याख्येयः † ॥

"अमतिः(४९)"—इति ‡, अनवगतम्। "अमामयी मतिः" अम-
तिः। एव मपि न प्रतीयत इत्याह;— "आत्ममयी" यस्य मतिः
असावमतिरित्युच्यते। कस्मासौ? आदित्यः; तस्य हि आत्मप्रकाश-
मयी मतिः। "अभि त्यं देवं ०——० कृपास्वः" §। नकु-
लस्यार्षम्। अतिच्छन्दाः; अग्निः। प्रवर्ग्ये शस्यते; सोमसम्माने
चाध्वर्यवे ‖ विनियुक्ता। 'अभि अर्चामि' 'त्यं' तम् अहम्, 'देवं'
सवितारम्'। 'ओण्योः' द्यावापृथिव्योः यान्यन्तरा भूतानि
वर्त्तन्ते, तेभ्यः सर्वेभ्यः सकाशात्। 'कविक्रतुं' क्रान्तप्रज्ञानम्,
'सत्यसवं' सत्याभ्यनुज्ञम्, 'रत्नधां' रमणीयानां धनानां दातारम्,

* १भा० ४२७ पृ० १२ पं०।

† ऋ० ६० ९, २, ११।

‡ १भा० ४१८ पृ० १पं०।

§ "अभि त्यं देवꣳ सवितार मोण्योः कविक्रतु मर्चामि सत्यसवꣳ रत्नधा मभि प्रियं मतिम्। ऊर्द्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणि रमिमीत सुक्रतुः कृपा स्वः॥"—इति सा० छ० आ० ५, १, २, ८।

‖ "सोमसाने चाध्वर्यवे"—इति क।

'अभि मतिम्' अभिमन्तारं सर्वार्थानाम्, ईश्वरत्वात्; 'प्रियं' च सर्वाभूतानाम्। 'ऊर्द्धा' 'यस्य' सवितुः 'अमतिः' आत्मप्रकाशमयी मतिः। आह,— कतमा पुनरसावूर्द्धा? इति,—'भाः' याः 'अदि-द्युतत्' अद्योतयत्। तम् अभ्यर्चामि। किञ्च; 'सवीमनि' प्रसवे यस्य सर्व मिदं प्रवर्त्तते; 'हिरण्यपाणिः' रश्मिपाणिः, सर्व मिदं जगद् 'अमिमीत' निर्मितवान्। 'सुक्रतुः' सुकर्मा। 'कृपा' स्वया सामर्थ्य-कल्पनया। 'स्वः' आदित्यः, सु अरण इत्यर्थः * ॥ एव मत्र 'अमति'-शब्देन आत्मप्रकाशगत आदित्यस्य विज्ञान मुच्यते; स हि प्रकाशसतत्त्वएव नान्यत्प्रकाशान्तर मपेक्षत इत्युपपत्तिः ॥

"श्रुष्टी(५०)"—इति †, अनवगतम्; "पुरन्धिः(५१)"—इति च‡। श्रुष्टीत्यस्य 'स्वशनम्'—इत्यवगमः; पुरन्धिरित्यस्यापि पुरां धीः—इत्यवगमः ॥ २ (१२) ॥

ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगन्नासत्या पुरन्धिम्। तानध्वरे यज्ञ उशतः कामयमानान्यजाग्ने श्रुष्टी भगन्नासत्यौ चाश्विनौ सत्यावेव नासत्यावित्यौर्णवाभः सत्यस्य प्रणेतारावित्याग्रायणो नासिकाप्रभवौ बभूवतुरिति वा पुरन्धिर्बहुधीस्तत्कः § पुरन्धिर्भगः पुरस्तात्तस्यान्वादेश इत्येक मिन्द्र इत्यपरं स बहुकर्म्मतमः

* २भा० २१० पृ० ७पं०।
†,‡ १भा० ४२८ पृ० ७पं०।
§ "पुरन्धिर्बहुभिस्तत्क." क, ख, ग। "पुरन्धिर्बहुधिस्तत्कः" रोथस् ।

**पुरां च दारयितृतमो वरुण इत्यपरं तं प्रशंसया स्तौति। इमा मू नु कवितमस्य मायामित्यपि निगमो भवति। रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः॥ समिद्धस्य रुशददर्शि पाज इत्यपि निगमो भवति॥ ४ (१३)॥**

"ते हि यज्ञेषु॰——॰नासत्या पुरन्धिम्" *। वसिष्ठस्यार्षम्। वैश्वदेवी। त्रिष्टुप्। 'ते' ये 'विश्वेदेवाः' 'यज्ञेषु' 'यज्ञियासः' यज्ञसम्पादिनः, 'ऊमाः' अवितारो रक्षितारः, अवनीया वा तर्पणीयाः, 'सधस्थं' वैश्वदेवं समानं स्थानम् 'अभि सन्ति' अभितिष्ठन्ते। किं तेषाम्? इति,— 'तान्' विश्वान् देवान् हे "अग्ने!" एतस्मिन् 'अध्वरे' "यज्ञे" 'उशतः' स्व मंशं, "कामयमानान्", 'श्रुष्टी' "क्षिप्रम्" अविलम्बमानः 'यक्षि' "यज"; 'नासत्या' "नासत्यौ चाश्विनौ" यज, 'पुरन्धिम्' च यज॥ एव मत्र यागस्य विघ्नभयात् क्षिप्रस्येष्टत्वात् "श्रुष्टि-इति क्षिप्रनाम"—इत्युपपद्यते †। अन्यत्र हि वक्ष्यति "श्रुष्टीवरीः = सुखवरीः"—इति ‡, तस्मादेतदनेकार्थ मपि भवति॥

"सत्यौ एव नासत्यौ—इति", "और्णवाभः" आचार्यो मन्यते। तौ हि सत्य मेव ब्रूतः, न कदाचिदप्यसत्यम् §। तस्मान्नासत्याविन्युच्यते। द्विः प्रतिषेधः प्रकृति मापादयति। अथवा "सत्यस्य"

---

* ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः। ताँ अध्वर॰——॰ पुरन्धिम्॥"—इति ऋ॰ सं॰ ५, ४, ९, ४।

† इतः पूर्वस्मिन् खण्डे उक्त मेतत् १८५ पृ॰ ११पं॰।

‡ चत्वैवोपरिष्टात् ४ पा॰ ९खण्डे।

§ "श्रयो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्? सत्यसंहिता वै देवा अनृतसंहिता वै मनुष्या इति॥"—इति ऐ॰ ब्रा॰ १, १, ९।

उदकस्य, (यज्ञस्य वा*) "नेतारौ" नासत्यौ; तथा हि "आग्रायणः" आचार्यो मन्यते। अथ "वा" ऐतिहासिकपक्षेण "नासिकाप्रभवौ बभूवतुरिति"† ॥

"पुरन्धिः"। पुरन्धिशब्दोऽत्र गुणपदत्वात् सन्दिह्यते इति विचार्यते।—"तत्कः पुरन्धिः?"—इति। "भगः" अत्र "पुरस्तात्";—'अष्टौ भगम्'—इति‡, "तस्य" अयम् "अन्वादेशः"—"इत्येकम्" आचार्यमतम्। नासत्यावनन्तरावपि मन्त्रौ न सन्दिह्येते द्विवचनवाच्यत्वात् तयोः,—एकवचनान्तत्वात् 'पुरन्धि'-शब्दस्य च। "इन्द्रः" उक्तः स्यात् पुरन्धिशब्देन,—"इत्यपरं" मतम्। किङ्कारणम्? "सः" हि इन्द्रः "बहुकर्मतमः" अन्येभ्यो देवेभ्यः। "धीः"—इति कर्मनामसु पठितम् §, तद्यस्य पुरु बहु स पुरन्धिः; (सचेन्द्रः। तस्मात् पुरन्धिः ||) इन्द्रः—इत्युपपद्यते। अथवा अन्येन पुरन्धित्व मिन्द्रस्य स्यात्;—"पुरां च दारयितृतमः" मेघपुरो ह्यसावेव दारयति। "वरुणः" पुरन्धिशब्देनोच्यते,—"इत्यपरम्" मतम्। किङ्कारणम्? "तं" हि अन्यत्रापि मन्त्रदृक् "प्रज्ञया" बुद्ध्या "स्तौति"। तद्यथा,—"इमा मू नु ०——० नद्यः समुद्रम्"¶। अत्रेरार्षम्। वारुणी।

---

* नैतत् दृश्यते ख-पुस्तके।

† ऋ० सं० ७, ४, १२, १—२ ऋचौ द्रष्टव्यो। किञ्च, मात्स्यैकादशे "नासापुटाभ्यामुत्सृष्टम्"—इत्यादि।

‡ अत्रैव मन्त्रे १८९ पृ० १३ पं०।

§ २अ० ११२ पृ० २ख० १ख० (२१)।

|| नास्त्येतत् क-पुस्तके।

¶ "इमा मू नु कवितमस्य मायां महीं देवस्य न किरा दधर्ष। एकं यदुद्ना न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम्॥"—इति ऋ० सं० ४, ४, २१, १।

त्रिष्टुप्। 'इमां' 'मायां' प्रज्ञां 'कवितमस्य' मेधाविनमस्य (द्योतमानस्य *) 'महीं' महतीं मायां 'न किरादधर्ष' न कश्चिदप्याधर्षयितुं शक्नोति। कतमां मायाम्? इति,—'एकम्' एनं सन्तं वरुणम् आदित्यम् †, 'यद्' एता 'उद्ना' उदकेन रश्मिना नद्यः 'एनीः' गमनशीलाः सतत मुदक मादाय आदित्यमण्डलं गच्छति। एवं मासमाहर्निशं सेता गच्छन्त्यो 'अवनयः' नद्य इव 'समुद्रं' सिञ्चन्त्यो 'न पृणन्ति' (न प्रीणयन्ति ‡) (बुद्ध्या §)। तेषां रश्मीनां च मायाम् एवंलक्षणां भगवतो वरुणस्य 'आ धर्षयितुम्' अभिभवितुं विज्ञातुं न शक्नोति कश्चिदपि कथयितुम्। कथ मप्ययं न सम्पूर्यत इति॥ एव मत्र वरुणः प्रज्ञया स्तूयते, धीरिति च प्रज्ञानाम ||; सा यस्य पुर्वी बह्वी, स पुरन्धिः। वरुणश्च प्रज्ञया स्तूयते, तस्माद् "वरुणः = पुरन्धिः"—इत्युपपद्यते ¶॥

"रुशत्[५९]"—इति **, अनवगतम्। "रोचतेर्ज्वलतिकर्मणः"—इति निर्वचनम्। "रोचनम्"—इत्यवगमः। "अबोधि होता॰

* नास्त्येतद् क-पुस्तके।

† "यो वा अग्निः स वरुणः"—इत्यादि ऐ॰ ब्रा॰ ६, ४, १०।

‡ नास्त्येतत् क-पुस्तके।

§ नास्त्येतत् ख-पुस्तके।

|| १भा॰ ३२४ पृ॰ ३ख॰ ६ख॰ (७)।

¶ "कवितमस्य॰——॰'यद्' यस्मात् 'एकम्' समुद्रम् 'उद्ना' उदकेन 'न पृणन्ति' न पूरयन्ति। काः? 'एनीः' एन्यः, शुभ्राः गमनशीला वा, 'सिञ्चन्तीः' उदकमासेचयन्त्यः, 'अवनयः' नद्यः। बह्व्यो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैक मपि समुद्रं पूरयन्तीति। इदं वरुणस्य महत् कर्मेति। अथ चान्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यम्, तस्य वरुणादिरूपावस्थानात्; एष ब्रह्मेत्यादिश्रुतेः॥"—इति सा॰ भा॰।

** १भा॰ ४२९ पृ॰ १पं॰।

-० स्तमंसो निरमोचि"*। गाथाश्वस्बुधयारार्षम्। आग्नेयी। त्रिष्टुप्। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अबोधि होता' बुध्यते होता 'अग्निः', 'यजथाय' यजमानाय, यष्टव्यतया देवान्। 'ऊर्द्धः' ज्वलनक्रियायोगात्। 'प्रातः अस्थात्' अग्निहोत्रिणां गृहेषु योऽवतिष्ठते, 'सुमनाः' च शोभनमनाः। 'समिद्धस्य' च यस्य 'रुशत्' रोचिष्णुर्वर्णः 'अदर्शि' दृश्यते। 'पाजः' च बलं यस्य 'अप्रमितम्', यस्य प्रभावतो 'महान्'। 'तमसः' च सर्वं मिदं 'निरमोचि' निर्मोचयति, बुध्यते देवान् यष्टव्यतया॥ एव मन्न्य-धिकाराद्‌च शब्दसाहूप्यात् "रुशत्"—"इति" एतत् "वर्णनाम"—इत्युपपद्यते ॥ ४ (१३) ॥

अस्ति॒ हि वः॑ सजा॒त्यं॑ रिशादसो॒ देवा॑सो॒ अस्त्याप्य॑म्। अस्ति हि वः समानजातिता रेशयदारिणो† देवा अस्त्याप्य माप्य माप्नोतेः सुदत्रः कल्याणदानः। त्वष्टा॑ सु॒दत्रो॒ वि द॑धातु॒ राय॒ इत्यपि निगमो॒ भवति। सुविद-त्रः कल्याणविद्यः। आग्ने याहि सुवि॒दत्रे॑भिर॒र्वाङि-त्यपि निगमो भवत्यानुषगिति नामानुपूर्वस्यानुषक्तं भवति। स्तृ॒णन्ति॑ ब॒र्हिरा॑नु॒षगित्यपि निगमो भवति।

* "अबो॑धि॒ होता॑ य॒जथा॑य दे॒वानू॒र्ध्वो अ॒ग्निः सु॒मनाः॑ प्रा॒तर॑स्थात्। समि॑द्धस्य॒ रुश॑ददर्शि॒ पाजो॑ म॒हान् दे॒वस्तम॑सो॒ निर॑मोचि ॥"—इति ऋ० सं० ३, ८, ११, १।

† "रेशयदाशिनो"—इति क, ख चिह्नितपुस्तकयोः।

तुर्वणिस्तूर्णवनिः। स तुर्वणिर्मंहनाँ अरेणुपौंस्य इत्यपि निगमो भवति। गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति। जुष्टं गिर्वणसे बृहदित्यपि निगमो भवति॥ ५ (१४)॥

"रिशादसः(१३)"—इति *, अनवगतम्। "रेशयदासिनः†"—इत्यवगमः। "अस्ति हि वः ०——० नव्यसे" ‡। मनोर्वैवस्वतस्येयमार्षम्। सतो बृहती। वैश्वदेवे सूक्ते। हे 'रिशादसः' "रेशयदासिनः"! §, 'देवासः' देवाः! यो हि रेशयति हिंसावान् भवति, तस्मै त आयुधान्यस्यन्ति। "रेशयदारिणः"—इति केचिदधीयते निर्वचनम्; तेषां रेशयन्तं हिंसन्तं दारयन्तीत्यर्थः। 'अस्ति' 'वः' युष्माकं 'सजात्यं' "समानजातिता" देवत्वम्, 'अस्ति' च युष्माकम् 'आप्यम्' आप्तव्यं मनुष्यैः, ईश्वरा यूय मित्यभिप्रायः। यत एव मतो ब्रवीमि;— 'प्रवोचत' यूयम् अस्मभ्य मनुजानीत। 'सुविताय' सुगताय, 'सुभोगाय' स्नानाय, 'सुम्नाय' सुखाय च पूर्वस्मै स्वभूताय, 'नव्यसे' नवतराय। कथं च पुनः प्रवोचत? इति,—'मक्षु' क्षिप्र मित्यर्थः। एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च "रिशादसः = रेशयदासिनः||, रेशय दारिणो वा"—इत्युपपद्यते॥

---

* १अा० ४१९ पृ० ६ पं०।

‡ अस्ति हि वः०——०सजात्यम्। प्रणः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे॥"—इति ऋ० सं० ६, २ ११, ५।

†, §, || "रेशयदासिनः"—इति च-पु०।

"सुदत्रः(५४)"—इति *, अनवगतम्। 'सुदानः'—इत्यवगमः। "ता नो रासन् ०——० विदधातु रायः" †। वसिष्ठस्यार्षम्। दश-रात्रस्य चतुर्थेऽहनि तृतीयसवने वैश्वदेवशस्त्रे द्विपदा एताः शस्यन्ते। 'ताः' देव्यः, 'नः' अस्मभ्यं 'रासन्' 'वसूनि' ददत्वित्यर्थः। किंल-क्षणाः देव्यः? 'रातिषाचः' हविर्दानं याः सचन्ते सेवन्ते। किञ्च; आभिमुख्येन स्थित्वा 'रोदसी' रुद्रस्य पत्नी 'शृणोतु', 'वरुणानी' च। किञ्च; 'वरुत्रीभिः' वरयितव्याभिः सहितः 'सुशरणः' स्वाश्र-यणो 'नः' अस्माकम् 'अस्तु'। 'त्वष्टा', 'सुदत्रः' "कल्याणदानः" 'विदधातु' च अस्माकम् 'रायः' धन मित्यर्थः॥ एव मत्र 'रायः'-सम्बन्धात् "सुदत्रः = कल्याणदानः"—इत्युपपद्यते॥

"सुविदत्रः(५५)"—इति ‡, अनवगतम्। 'सुविद्यः'—इत्यवगमः। "कल्याणविद्यः"—इत्यभिधेयवचनम्। "ये तातृषुर्देवत्रा ०——० पितृभिर्घर्मसद्भिः" §। शङ्खस्य यामायनस्यार्षम्। त्रिष्टुप्। पैत्री। पितृयज्ञे स्विष्टकृद्याज्यैषा। 'ये' 'तातृषुः' स्तीर्णवन्तः, 'देवत्रा' देवान् प्रति 'जेहमानाः' गच्छन्तः, 'होत्राविदः' स्तुतिविदः, 'स्तोमतष्टासः' स्तोमकर्त्तारः 'अर्कैः' मन्त्रैः स्तोमकर्त्तारः॥। यः

* १भा० ४२९ पृ० १० पं०।

† "ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु। वरुत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः॥"—इति ऋ० सं० ५, ६, १०, १।

‡ १भा० ४२९ पृ० १२पं०।

§ "ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः। आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः॥"—इति ऋ० सं० ७, ९, १८, ४।

‖ मन्त्रैः स्तोमप्रथनप्रकारश्च ताण्ड्ये महाब्राह्मणे द्वितीयतृतीययोर्द्रष्टव्यः।

एवंलक्षणः पितरः, तैः साकम् 'आ याहि'। हे 'अग्ने!' 'सुविदत्रेभिः' "कल्याणविद्यैः" 'अर्वाङ्' अस्माकमाभिमुख्येन, तैश्च साकम्। एवङ्गुणयुक्तैः 'पितृभिः' आगत्य 'सत्यैः' एतैः यथावदलंकृतैः 'कव्यैः' पितृदेवत्यैः 'घर्मसद्भिः' यज्ञसादिभिः हविर्भिस्तृप्ति मुपयाहि। अथ वा सत्यवादिभिः पितृभिः कव्यवाहैः साक मायाहीति। एवं पितृविशेषणत्वेनैव* योज्य मेतदपि पदद्वयम्॥ एव मच प्रस्तुसाहृप्यात् 'सुविदत्र'-शब्दः "कल्याणविद्य"-वाचीत्युपपद्यते॥

"आनुषक्[१०]"—इति †, अनवगतम्। "अनुषक्तम्"—इत्यवगमः। "आनानुपूर्व्यस्य"—इत्यर्थवचनम्। "आ घा ये अग्नि॰ ——॰ युवा सखा" ‡। त्रिशोकस्यार्षम्। इन्द्रीयस्से हुयमानेषु विनियुक्ता। 'ये' एव नित्य मग्निम् 'आ' आभिमुख्यमात्विजताः 'इन्धते' यजमानः, य एव यज्ञेषु 'बर्हिः' 'आनुषक्' "अनुषक्तं" 'स्तृणन्ति'; तेषा मेव 'इन्द्रः' 'युवा' नित्यः 'सखा' समानख्यानो याज्ञे कर्मणि भवति; नेतरेषा मयज्वनाम्। बर्हिःसम्बन्धात् 'आनुषग्'—इति "नाम" एतत् "आनुपूर्व्यस्य नाम"—इत्युपपद्यते॥

"तुर्वणिः[११]"—इति §, अनवगतम्। "तूर्णवनिः"—इत्यर्थवचनम्। तूर्णं हि यः सम्भजते, स तूर्णवनिता सन् तूर्णवनिरित्युक्तः।

* "पितृविशेषणत्वेनैव"—इति ख।

† १भा॰ ४३९ पृ॰ १० पं॰।

‡ "आ घा ये अग्नि मिन्धते स्तृणन्ति बर्हिरानुषक्। येषा मिन्द्रो युवा सखा॥" —इति ऋ॰ सं॰ ६, ५, ४१, १।

§ १भा॰ ४४॰ पृ॰ ४पं॰।

"स तुर्वणिर्महाँ०——०दामनि" *। इन्द्रस्य सव्यस माफ्सव्य-मार्षम्। जगती। ऐन्द्री। वैषुवतेऽहनि निष्केवल्ये शस्त्रे शस्यते। स इन्द्रः 'तुर्वणिः' तूर्णवनिता; इन्द्रो हि स्तोतारं तूर्णं सम्भजते। 'महान्' प्रभावतः। 'अरेणुपौंस्ये' अन्तरिक्षे हि यद् बलं भवति, तत्र न रेणवः सन्ति; तस्मादरेणुपौंस्य मित्युच्यते। "पौंस्यम्"—इति बलनामसु पठितम् †, तस्मिन् 'अरेणुपौंस्ये' बले अन्त-रिक्षे, सङ्ग्रामे वा ‡। 'गिरेः भृष्टिः' गिरिशृङ्ग मिव उच्छ्रितः भ्राजते। 'तुजा' वज्रेण प्रगृहीतेन 'शवः' शविष्ठो बलिष्ठ इन्द्रः। 'येन' वज्रेण 'शुष्णं'§ शोषयितारम्, 'असुरं' मेघम्, 'मायिनं' प्रज्ञावन्तम् 'आयसः' देवान् प्रति अयनशीलस्य सोमस्य 'मदे' प्राप्ते 'दुध्रः' दुर्द्धरः शत्रूणाम् 'आभृषु:' उपर्य्युपरि आत्मनो भवत मिच्छन् 'रामयन्नि दामनि' दाम्नीव न्यरमयत्, सुबध्नादित्यर्थः॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च "तुर्वणिः = तूर्णवनिः"—इत्युप-पद्यते॥

"गिर्वणसे(५८)"—इति ‖, अनवगतम्। 'गीर्वननीयः'—इत्यव-गमः। "गीर्भिः" स्तुतिभिः "एनं वनयन्ति"—इति अर्थवचनम्।

* "स तुर्वणिर्महाँ अरेणुपौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः। येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि॥" इति ऋ० सं० १, ४, ११, २।

† १भा० ३१५ पृ० २ख० ६ख० (२४) "पौंस्यानि"।

‡ १भा० ३६० पृ० २ख० १७ ख० (४०) "पौंस्ये"।

§ "येन वक्षेण हि मित्यं शुष्णं"—इति क।

‖ १भा० ४४० पृ० ७पं० "गिर्वणाः"।

"आमासु पक्व ०——० गिर्वणसे बृहत्" * । नृमेधसः प्रियमेधसो वा इय मार्षम् । बृहती । ऐन्द्रे सूक्ते । 'आमासु' अपक्वासु गोषु चीरं 'पक्वम्' 'ऐरयः' त्वम् इन्द्र! । तस्मादामा सती पक्वं दुह्रे इति ह विज्ञायते । तदिद मामायां सत्यां गवि शृतं पय इति । किञ्च; "आ सूर्यं रोहयो दिवि" 'आ रोहयः' 'सूर्यं' 'दिवि' द्युलोके इत्यर्थः । एव मिन्द्र मुक्त्वा स्तोतॄनाह,— अस्मै इन्द्राय एवङ्गुणविशिष्टाय 'घर्मं न' घर्म मिव सुतप्तं सुष्ठु सुगुणं 'सामन्' साम 'तपत' स्थानकरणानुप्रदानवदुच्चारयतेत्यर्थः । 'सुवृक्तिभिः' शोभनाभिः स्तुतिभिः 'जुष्टं' प्रियं 'गिर्वणसे' इन्द्राय स्तुतिसम्भक्ते । कतमत् पुनस्तत्साम? इति,—'बृहत्' †; तद्धि प्रिय मिन्द्रस्य । एव मत्र "गिर्वणाः = देवः" उच्यते, शब्दसारूप्यादित्युपपद्यते ॥ ५ (१४) ॥

अमूर्त्तं मूर्त्तं रजसि निपृत्ते ये भूतानि समकल्पन्निमानि ॥ असुसमीरिताः सुसमीरिते वातसमीरिता माध्यमका‡ देवगणास्ते§ रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति त आयजन्तेत्यतिक्रान्तं प्रतिवचनम् । अम्यक् सा त इन्द्र ऋष्टिः । अमाक्तेति वाभ्यक्तेति वा याहशिमन्

* "आमासु पक्व मैरय आ सूर्यं रोहयो दिवि । घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥"—इति ऋ० सं० ६, ६, ११, ७ ।

† तच्च साम सामवेदे आरण्यगानग्रन्थे १, २, १, ११ ।

‡ "माध्यमिका" ङ, च ।

§ "देवगणा ये" ङ, च ।

धायि तमपस्यया विदत् । याद्दृश्मेऽधायि त मपस्यया-
विदत् । उस्रः पितेव जारयायि यज्ञैः । उस्र इव गोपिता-
जायि यज्ञैः ॥ ६ (१५) ॥

"असूर्त्ते सूर्त्ते(४९)"—इति *, एते अनवगते । "असुसमी-
रिताः", "सुसमीरिते"—इत्यवगमः । "त आयजन्त ०——
०हान्यस्मिमानि" † । विश्वकर्मणो भौवनस्येय मार्षम् । वैश्वकर्मणीभ्यां
जुहोतीति सूक्त मग्निप्रणयने; तत्र विनियोगः । 'असूर्त्ताः'
असुः प्राणः, प्राणश्च वायुः; "योऽयं वायुः पवत एष प्राणः;"—इति
सूक्तम् ‡, तेन समन्तात् ईरिताः "असुसमीरिताः" वातसमीरिताः
इत्यर्थः । के पुनस्ते? "माध्यमका देवगणाः" मेघाः, इतरे च
मरुदादयः । ते वातेन समीर्यन्ते; वात एव हि तान् वहति ।
क्व पुनरेतेऽवस्थिताः समीरिताः? इति,—'सूर्त्ते' "सुसमीरिते"
विक्षिप्ते विस्तीर्णे इत्यर्थः । 'रजसि' अन्तरिक्षलोके 'निषत्ते'
निषण्णे इत्यर्थः । समीरिताः किं कुर्वन्ति? इति,—'ये भूतानि
समकृण्वन्' समस्तानि कृतवन्तः 'इमानि' । तेषां किम्? इति,—
'त आ यजन्ते' इति । "अतिक्रान्तं प्रतिवचनम्" प्रतिनिर्देशः प्रति-
वचन मुच्यते, स एव पूर्वकाले प्रयोगार्हः। यच्छब्दः पश्चात् प्रयुक्तः

* १भा० ४४० पृ० १४पं० ।

† त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूमना । असूर्त्ते सूर्त्ते
——० स्मिमानि ॥"—ऋ० सं० ८, २, १०, ४ ।

‡ "तस्मादाहुर्वायुः प्राणः"—इत्यादि ऐ० आ० २, २, १ ।

पश्चात्प्रयोगार्हश्च तच्छब्दः पूर्वं प्रयुक्तो मन्त्रपाठक्रमेण;—तदेतत् भाष्यकारेण प्रदर्शित मस्मिन् मन्त्रे "त आयजन्त इति अतिक्रान्तं प्रतिवचनम्"—इति। त आयजन्तेत्यस्य पादस्य समासेनैतद्भाष्यकारेण निर्वचन मुक्तम्। "ते रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति" ते मेघाः, रसेन उदकेन, पृथिवीं तर्पयन्तः, भूतानि सर्वाण्युत्पादयन्ति, स्थितिं च एषां कुर्वन्ति। 'आ यजन्त' 'द्रविणम्' उदकम्, आभिमुख्येन ददति सर्व मुदकम्, 'समस्मै' सर्वस्मिन् भूतजाते। एवं भूतान्युदकेन कुर्वन्ति अनुगृह्णन्ति च। अधुना दृष्टान्त माह;—'ऋषयः पूर्वे' विश्वसृजः, 'जरितारः न' 'भूमना' भूम्ना कर्मणा वार्षसहस्रिकेण सत्रेण; तैर्हि सर्वो भूतग्रामः पूर्वं सृष्टोऽनुगृहीतश्च। एव मत्र शब्दसारूप्यादर्थोपपन्नेश्च 'असूर्त्ते'-'सूर्त्ते'—इत्येतयोः "असुसमीरिताः"-"सुसमीरिते"—इत्येते शब्दसमाधी उपपद्येते॥

"अम्यक्(१०)"—इति *, अनवगतम्। "अमाक्ता इति वा, अभ्यक्ता इति वा" शब्दसमाधी। 'ऋष्टिः' अभिधेया; तां हि सङ्ग्रामे शत्रवो मन्यन्ते,—मा मेषा प्रत्यञ्चिता क्षिप्ता मा मेषा प्रत्यञ्चितेति। अथ वा "अभ्यक्तेति वा" अभिगतैव नित्यकालं शत्रून् प्रति भवतीति अम्यगित्युच्यते। "अम्यक् सा०——० दधति प्रयांसि" †। अगस्त्यस्यार्षम्। त्रिष्टुप्। ऐन्द्री। छन्दोगेषु द्वितीये-

* १भा० ४४१ पृ० १पं०।

† "अम्यक् सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति। अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि॥"—इति ऋ० सं० १, ४, ८, १।

ऽहनि मरुत्वतीये शस्त्रे शस्यते। 'अभ्यक् सा ते' यदेवंलक्षणा देषणा शक्तिः आभिमुख्येन मेघ मञ्चिता त्वया क्षिप्ता भवत्यात्मनस्तव या स्वभूता, अथ तदा मरुतोऽपि तदनुविवृत्त्यैव हे इन्द्र! 'अस्मे' अस्मदर्थं 'सनेमि' चिरन्तनम् 'अभ्वं' बहूदक मिह पातयितव्य मिति स्वान्यायुधानि मेघविदारणाय 'जुनन्ति' गमयन्ति। किञ्च; सर्वेषा मेवायुधानां मध्ये भावन्त्यैव शक्तिः 'अग्निरिव' 'अतसे' काष्ठे 'भुर्भुरुक्कान्' देदीप्यमान एतस्मिन् मेघे आस्ते। किञ्च; 'आपो न द्वीपम्' यथा ना द्वैप्या आपो द्वीपं परिवार्य्यात्मानं धारयन्ति; एव मेतानि मेघ्यानि 'पयांसि' उदकानि महत्त्वाद् दृष्टेः तानि मज्जयितु मशक्नुवन्ति द्वीप मिव परिवार्य्य धारयन्ति॥ एव मवाप्तेर्गत्यर्थस्य (भू० प०) 'अभ्यक्'—इत्येतद् वृष्टिसम्बन्धादित्युपपद्यते॥

"यादृश्मिन्(११)"—इति *, अनवगतम्। "यादृशे"—इत्यवगमः। "ज्यायांस मस्य०——०सो अरं करत्"†। अवत्सारस्येय मार्षम्। जगती। आग्नेयी। "तम्प्रत्नथा"—इत्येतस्मिन् सूक्ते ‡। उपहव्ये तृतीयसवने वैश्वदेवे शस्यते। 'ज्यायांसं' महत्तरम्। 'अस्य' 'यतुनस्य' (कर्मणि षष्ठ्यौ वा §) यतनशीलस्य भगवतः सूर्य्यस्य, 'केतुना' कर्मणा प्रज्ञया वा, 'ऋषिस्वरम्' ऋषिभिः स्वर्य्यते स्तूयते इत्यृषिस्वरः, त

* १भा० ४४१ पृ० ८पं०।

† ज्यायांस मस्य यतुनस्य केतुना ऋषिस्वरं चरति यासु नाम ते। यादृश्मिन् धायि त मपस्यया विदद्य उ स्वयं वहते सो अरं करत्॥"—इति ऋ० सं० ४, १, १४, २।

‡ ऋ० सं० ५मं० ४४सू० ११ ऋ०।

§ नास्त्येतत् क-पुस्तके।

स्वविस्तरम्, स्तुवन् 'चरति' प्रचरति। "यासु नाम ते" 'यासु' क्रियासु 'नाम' नमनं 'ते' तव हे भगवन् अग्ने! स एवं चरन् तासु क्रियासु, 'यादृश्मिन्' "यादृशे" कामे 'धायि' मनो धत्ते, 'तम्' तादृशं कामम् 'अपस्यया' क्रियया हविःस्तुत्यादिलक्षणया तव प्रसादात् 'अविदत्' अलभतेत्यर्थः। किञ्च; 'य उ स्वयं वहते' त्वां प्रति आदरवान् प्रापयति स्तुतीः, 'सः' एव 'अरं करत्' पर्याप्त मात्मनोऽभिप्रेत मर्थं करोति॥ एव मत्र शब्दसारूप्याद् 'यादृश्मिन्'—इत्यस्य "यादृशे" —इत्येवं विपरिणाम उपपद्यते॥

"जारयायि[११]"—इति *, अनवगतम्। "अजायि"—इत्यत्र- गमः। "सास्माकेभि०——०जारयायि यज्ञैः" †। भरद्वाजस्यार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। "सास्माकेभिः" —इति छान्दस मालम्। 'सः अग्निः' 'अस्माकेभिः' 'शूषैः' सुखैः स्तोत्रैः 'स्तवे' स्तूयते। 'एतरी न' अतिथिरिव। 'दमे' यज्ञगृहे यज्ञे 'आ' आभिमुख्येनावस्थितैः स्तूयते 'जातवेदाः' जातविद्यो वा जातधनो वा 'द्रन्नः' द्रुमान्नः 'वन्वन्क्रत्वा' वननीयकर्मा वननीयप्रज्ञानो वा। 'अनार्वा' अनर्वा, अनाश्रितः कश्चिदन्यम्। 'उस्रः पिता इव' साण्ड इव "गोपिता" गवां पिता 'जारजायि' "अजायि"। यथा साण्डः पुत्रपौत्रादिभिरनेकधा प्रजायते एवं यज्ञेषु विह्रियमाणः अनेकधा

* १भा० ४४१ पृ० १०पं०।

† "सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः। द्रुन्नो वन्वन्क्रत्वा- नार्वोस्रः पितेव जारयायि यज्ञैः॥"—इति ऋ० सं० ४, ५, १४, ४।

जायतेऽग्निः॥ एव मत्र 'आरजायि'—इत्यस्य "अजायि"—इत्यर्थप्रतीतिः॥ ६ (१५)॥

प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः॥ प्रास्थुर्वो जोषयमाणा अभवत सर्वेऽग्रगमनेनेति (वाग्रगरणेनेति*) वाग्रसम्पादिन इति वापि वाग्रमित्येतदनर्थक मुपबन्ध मादद्दीत। अस्तीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्। अस्तीन्द्र प्रस्थितानीमानि हवींषि चनो दधिष्व चन इत्यन्ननाम पचतिर्नामीभूतः। तं मेदस्तः प्रति पचताग्रभीष्टामित्यपि निगमो भवत्यपि वा मेदसश्च पशोश्च सात्त्वं द्विवचनं स्याद्यच ह्येकवचनार्थः प्रसिद्धं तद्भवति। पुरोला अग्ने पचत इति यथा। शुरुध आपो भवन्ति शुचं संरुन्धन्ति। ऋतस्य हि शुरुधः सन्ति पूर्वीरित्यपि निगमो भवत्यमिनोऽमितमात्रो महान् भवत्यभ्यमितो वा। अमिनः सहोभिरित्यपि निगमो भवति। जञ्झतीरापो भवन्ति शब्दकारिण्यः प्रदिवो† जञ्झतीरिवेत्यपि निगमो भवत्यप्रतिष्कुतेऽप्रतिस्कृतोऽप्रतिस्खलितो वा। अस्मभ्य मप्रतिष्कुत इत्यपि निगमो भवति।

---

* नैतद् दृश्यते क-ख-ग-पुस्तकेषु।

† "मुवतो"—इति ख-ग-ङ-च-पुस्तकानां पाठो हस्तिलिखितविरुद्धः पर मस्ति च ऋक्संहितायां "मुवती जञ्झतीरिव" इत्यपि निगमान्तरम् (ऋ०सं०४,१,९,९)।

ह्वाम्रदानः श्राघमानः। प्र त्वां मति मंतिरुच्छाम्रं-
दान् इत्यपि निगमो भवति ॥ ७ (१६) ॥

॥ इति षष्ठाध्यायस्य तृतीयः पादः ॥ ६, ३.

"अग्रिया[१३]"—इति *, अनवगतम्। "अग्रगमनेन" अग्रियाः। अग्र मेव अग्रियाः, अनर्थक एवाग्रशब्दे 'या'कार उपबन्ध उपात्तः— "अपि वाग्र मित्येतदनर्थक मुपबन्ध माददीत"—इत्युक्तं भाष्यकारेण। "अयं वो यज्ञ ०——० अग्रियोत वाजाः" †। वामदेवस्यार्षम्। आर्भवे त्रिष्टुप्। व्यूढस्य दशरात्रस्य पञ्चमेऽहनि तृतीये सवने वैश्वदेवे शस्यते। हे 'ऋभवः!' युष्माकम् 'अयं' 'यज्ञः' 'यम्' अह मकार्षम्। त मागत्य 'मनुष्वत्' मनुष्यवत्, 'प्रदिवः' प्रकर्षेण द्योतमानाः सन्तः, 'आदधिध्वे' धारयध्वे। एतद् 'वः' प्रब्रवीमि। किञ्च; "प्रवोऽच्छा जुजुषाणासो अस्थुः" प्रस्थितानि यान्येतानि हवींषि, तानि यूयं "जोषयमाणाः" देवैः सेव्यमाना वा आत्मना 'अग्रिया' 'अभूत' "अभवत"। 'उत वाजाः' अपि च हे वाजाः! यूय मग्येव मेव भवत॥ एवम् "अग्रगामिनः अग्रसम्पादिनो वा अग्र मेव वा= अग्रिया"; तथार्थोपपत्तेः शब्दसारूप्याच्च॥

"चनः[१४]—इति ‡, अन्ननाम" "पचता[१५]"—इति, "पचतिः

* १भा० ४४१ पृ० १पं०।
† "अयं वो यज्ञ ऋभवोऽकारि य मा मनुष्वत्प्रदिवो दधिध्वे। प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः॥"—इति ऋ० सं० ३, ७, १, २।
‡ १भा० ४४१ पृ० ७पं०।

नामीभूतः"—इति भाष्यकारो ब्रवीति। "अद्धीदिन्द्र ०——०यजमानस्य कामाः" *। इय मग्नियुतस्य वाग्निपूपस्य वार्षम्। त्रिष्टुप्। ऐन्द्री। 'अद्धि' भक्षय। हे 'इन्द्र!' 'प्रस्थिता' "प्रस्थितानि," 'इमा' "इमानि" 'हवींषि', 'चनः' अन्नम्, एतत् हविर्लक्षणम् 'दधिष्व' प्रक्षिप जठरे। 'पचता' पक्वानि इमानि हवींषि, अत एवं ब्रवीमि दधिष्वेति। 'उत सोमम्' अपि च सोमं दधिष्व। 'प्रयस्वन्तः' अन्नवन्तो वयं हवींषि कामयमानं 'त्वा' त्वां 'प्रति हर्य्यामसि' प्रतिहर्य्यामः, कामयामहे। "सत्याः सन्तु यजमानस्य कामाः"—इत्यभिप्रायेण। 'हवींषि'—इत्यनेन सम्बन्धात् 'पचता'—इत्येतदन्न-विषयं बहुवचन मुपपद्यते॥ "पचतिर्नामीभूतः"—इति धातुनिर्देशः॥

द्वितीय मुदाहरणं ब्रवीति, अर्थविशेषदर्शनादस्येति;—"तं मेदस्तः प्रति पचताग्रभीष्टाम्"—इति। 'तं' पशुं 'मेदस्तः' यतस्तस्य मेदो वपासहयोगि, ततः, तेन प्रदेशेन 'प्रत्यग्रभीष्टाम्' इन्द्राग्नी 'पचता' पक्व मित्यर्थः॥ एव मेतदेकवचनं भवति॥

"अपि वा" "मेदसश्च" वपासहयोगिनः "पशोः" पश्ववदानस्य चाभिधायक मेतत्; "सात्त्वं" सत्त्वविषयं "द्विवचनं स्यात्"। सन्ति ह्येवंरूपाणि द्विवचान्यपि तद्यथा;—'दैव्या होतारा भिषजा" †॥

किं कारण मुच्यते "द्विवचनम्" एतत् "स्यात्"—इति? अतः;—यस्माद् "यच्च हि एकवचनार्थः प्रसिद्धम्" एव, निःसन्देह मेव

* "अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्। प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः॥"—इति ऋ० सं० ८,६,२१,२।

† "दैव्यौ होतारौ, प्रयाजदेवौ। अयं चाग्निरसौ च मध्यमो वायुः॥"—इति तत्रैव महीधरः। य० वा० सं० २१, १८।

"तद् भवति ;—'पुरोळा* अग्ने पचतः'—इति यथा"। "पुरोळा अग्ने ०——० यविष्ठ्य" †। विश्वामित्रस्यार्षम्। गायत्री। आग्नेयी। आश्विनस्य द्विकपालस्य अतिरात्रे यदि स्विष्टकृद् भवति, तस्येयं पुरोऽनुवाक्या भवति। 'पुरोडाः' पुरोडाशः 'पचतः' पक्व इत्यर्थः। 'अग्ने' इत्यर्थः। भगवन् 'अग्ने'। 'वा'-'घ'—इति अनर्थकौ। न पक्वः, किन्तर्हि? 'परिष्कृतः' सुसंस्कृत इत्यर्थः। तं 'जुषस्व' सेवस्व हे 'यविष्ठ्य' युवतम! अथ वा मिश्रयितम!॥ एव मत्र 'परिष्कृतः'—इत्येतस्मादेकवचनसम्बन्धात् 'पचतः'—इत्येकवचन मेव सिध्यति॥

"मुरुधः(११)"—इति ‡, अनवगतम्। "आपो भवन्ति"—इति अभिधेयवचनम्। "मुरुचं संरुन्धन्ति"—इति निर्वचनम्। "मुरुधः"—इति न्याय्यम्। "ऋतस्य हि मुरुधः"—इति § दैवते शेषः ||॥

"अमिनः(१७)"—इति ¶ अनवगतम्। "अमितमात्रः"—इत्यवगमः; न यस्य मात्राणां मान मस्ति, सोऽमिन इत्युच्यते।

* निरुक्तमूलपुस्तकेषु तद्वृत्तिपुस्तकेषु च सर्वत्रैव "पुरोळा"—इत्येव पाठो दृश्यते परं प्रातिशाख्यानुसारेण तु "पुरोळा"—इति भवितव्यम्; ऋक्संहितापाठस्तु "पुरोळा"—इत्येव मेव दृश्यते सर्वत्र।

† "पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः। तं जुषस्व यविष्ठ्य॥"—इति ऋ॰ सं॰ ३, १, ११, २।

‡ १भा॰ ४४२ पृ॰ १०पं॰।

§ ऋ॰ सं॰ ३, ९, १०, ३।

|| 'दैवते' इत उत्तरस्मिन्नेव काण्डे (१०, ४, ४) 'शेषः' इह पठितादन्यो भागः।

¶ १भा॰ ४४३ पृ॰ १पं॰।

"अभ्यमितो वा" अनभिहिंसितो यः केन चिदसौ अमिनः। "महाँ इन्द्रो०——०कर्त्तृभिर्भूत्" *। भरद्वाजस्यार्षम्। त्रिष्टुप्। ऐन्द्री। दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते, माहेन्द्रस्य ग्रहोऽनयैव गृह्यते। 'महान्' प्रभावतः, 'नृवत्' मनुष्यवत्, 'आचर्षणिप्राः' आपूरयिता 'चर्षणीनाम्' मनुष्याणां कामैः; यथा हि मनुष्य ईश्वरः परितुष्टः कामैरवश्यं भृत्य मापूरयति, एव मिन्द्रोऽपि स्तोतारम्। 'उत द्विबर्हाः' अपि च द्वयोः स्थानयोः मध्यमोत्तमयोः परिवृढ़ः 'अमिनः' च अमितमात्रः, अथ वा अनभिहिंसितः केनचित्। केन पुनरमिनः? इति, उच्यते,— 'सहोभिः' बलैरित्यर्थः; न हीन्द्रस्य बलमात्राः केन चिन्मितपूर्वा इत्यर्थः, अनभिहिंसितपूर्वो वा केनचिदिन्द्रः। 'अस्मद्' अस्मदनुग्रहाय अस्मद्दर्शनाय 'वावृधे' वर्द्धते। 'वीर्याय' वीरकर्मणे वर्षार्थम्' 'उरुः' महान् परिमाणतः, 'पृथुश्च' विस्तीर्णो, यः, सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेताना मर्थानां 'सुकृतः' स्तुतिभिः एतैः कर्त्तृभिः ऋत्विग्भिः 'भृत्' भूयादित्यर्थः॥ एव मत्र 'अमिन'-शब्देन "अमितमात्रः" अनभिहिंसितमात्रो वा—इत्युच्यते शब्दसारूप्यादर्थोपपत्तेश्च॥

"जञ्झती:(१८)"—इति †, अनवगतम्। शब्दानुकरणात् "आपः"—इति प्रतीयन्ते। "आ हुक्मैरायुधा०——०त्मना दिवः" ‡।

* "महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्त्तृभिर्भूत्॥"—इति ऋ० सं० ४, ६, ०, १।

† १भा० ४०२ पृ० ९पं०।

‡ "आ रुक्मैरायुधा नर ऋष्वा ऋष्टीरसृक्षत। अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः॥"—इति ऋ० सं० ४, २, ९, ६।

श्यावाश्वस्यार्षम्। मारुती। पङ्क्तिः। 'आ' आभिमुख्येन 'ग्रवून्' आतयितव्यान् मेघान् प्रति 'आयुधा' एतान्यायुधानि 'हक्मैः' विहतानि, एताश्च 'ऋष्टीः' शक्तीः 'असृक्षत' असृजन्त हे 'नरः' मरुतः! किञ्च; 'अन्वेनान्' प्रहारान् 'विद्युतः' 'भानुः' आदित्यः 'इव' 'त्मना' आत्मना 'दिवः' द्युलोकाद् 'अर्त्त' अपगच्छन्तु। मेघेभ्यो हन्यमानेभ्यः तदन्वेव चापोऽपि 'अर्त्त' आगच्छन्तु। कथम्? इति,—'जञ्झतीः इव' "शब्दकारिण्यः" इव स्रोतस्याः "आपः" 'ऋष्वः' प्रभूता इत्यर्थः॥ एव मत्र शब्दानुकरणात् "आपः = जञ्झतीः" —इत्युपपद्यते॥

"अप्रतिष्कुतः(१६)"—इति *, अनवगतम्। "अप्रतिष्कृतः, अप्रतिस्खलितः वा"—इति शब्दसमाधौ। "स नो वृषन्०—— ० अस्मभ्य मप्रतिष्कुतः" †। मधुच्छन्दस आर्षम्। गायत्री। ऐन्द्री। पृष्ठ्याभिप्लवयोः प्रातःसवनिके आवापे विनियुक्ता, ब्राह्मणाच्छंसिनः शस्त्रे। हे 'वृषन्' इन्द्र! वर्षितः! यः त्वम् अनुगृहीता 'नः' अस्माकम्, 'सः' त्वं शृणु यत् कुरुष्व। 'अमुं चरुम्' अमु मन्तरिक्षचरणशीलं मेघम्। हे 'सत्रा दावन्' सततदान! 'अपावृधि' अपावृणु, उदकदानार्थं मस्मभ्यम्। 'अप्रतिष्कुतः' न हीन्द्रः "प्रतिष्कृतः" परान् प्रति पराङ्मुखः कृतपूर्वः केनचित्, अथ वा "अप्रतिस्खलितः" सङ्ग्रामेषु॥ एव मत्र 'अप्रतिष्कुत'-शब्दः "अप्रतिष्कृत"-वाची अथ वा "अप्रतिस्खलित"-वाची, तथार्थाविरोधः॥

---

* १भा० ४४२ पृ० १९ पं०।

† "स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि। अस्मभ्य मप्रतिष्कुतः॥"—इति ऋ० सं० १, १, १४, १।

"ग्राग्रदानः(३०)"—इति *, अनवगतम्। "ग्राग्राद्यमानः"—इत्यवगमः। "अभि सिध्मो०——०मतिरच्छाग्रदानः"†। हिरण्यस्तूपस्यार्षम्। गोषव-विवधयोर्निष्केवल्ये शस्यते। 'अभि अजिगात्' अभ्यगच्छत्। 'अस्य' इन्द्रस्य स्वभूतः, 'तिग्मः' उत्साहवान् वज्रः शत्रून् प्रति 'सिध्मः' साधयिता शत्रूणाम्। 'वितिग्मेन' तीक्ष्णेन 'वृषभेण' वर्षप्रवर्त्तकेन। 'पुरः' मेघपुरः असुरपुरो वा 'अभेत्'। किञ्च; 'समसृजत् वज्रेण वृत्र मिन्द्रः'। स च भिद्यमानः 'प्रातिरत् स्वां मतिं' "न दातव्य मुदक मेषाम्"—इत्येतां मतिं स्वां 'प्रातिरत्' प्राजहादित्यर्थः। 'ग्राग्रदानः' पुनः पुनः "ग्राग्राद्यमानः" इन्द्रेण॥ एव मत्र "ग्राग्रदानः = ग्राग्राद्यमानः"—इत्युपपद्यते, शब्दस्वारूप्यादर्थाविरोधाच्चेति॥ ७ (२६)॥

इति निरुक्तवृत्तौ एकादशस्याध्यायस्य (षष्ठाध्यायस्य)
तृतीयः पादः॥ ६, ३॥

॥ चतुर्थः पादः॥

सृप्रः सर्पणादिद मपीतरत्सृप्र मेतस्मादेव सर्पिर्वा तैलं वा। सृप्रकरस्न मूतय इत्यपि निगमो भवति। करस्नौ बाहू कर्मणां प्रस्नातारौ सुशिप्र मेतेन व्याख्या-

---

* १भा० ४४२ पृ० १७ पं०।

† "अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत्। सं वज्रेणासृजद् वृत्र मिन्द्रः प्र स्वां मतिं मतिरच्छाग्रदानः॥"—इति ऋ० सं० १, २, ३, २।

तम्। वाजे सुशिप्र गोमतीत्यपि निगमो भवति शिप्रे हनू नासिके वा हनुर्हन्तेर्नासिका नसतेः। वि ष्यस्व शिप्रे वि सृजस्व धेने इत्यपि निगमो भवति। धेना दधाते रसु रमणात्। स चित्रेण चिकिते रंसु भासेत्यपि निगमो भवति। द्विबर्हा द्वयोः स्थानयोः परिवृह्ळो* मध्यमे च स्थान उत्तमे च। उत द्विबर्हा अमिनः सहोभिरित्यपि निगमो भवत्यक्र आक्रमणात्। अक्रो न बभ्रिः समिथे महीनामित्यपि निगमो भवत्युराण उरु कुर्वाणः†। दूत ईयसे प्रदिव उराण इत्यपि निगमो भवति॥ १ ‡॥

"सृप्र(७१)"—इति §, अनवगतम्। 'सर्पः'—इत्यवगमः। "सर्पणात्"—इति निर्वचनम्। "इदम् अपि इतरत् सृप्रम्", "एतस्मादेव" स्यात्, यदेतत् "सर्पिर्वा तैलं वा"; तदपि हि सर्पति। "सृप्रकरस्न मूतये"—इति ‖ निगमः। "हवदृकथं हवामहे"—इति व्याख्यातः शेषः¶। "करस्नौ बाहू, कर्मणां प्रस्नातारौ" निर्वर्त्तयितारावित्यर्थः ** ॥

* "परिवृढो" घ।
† "उरंवपूर्णः" क।
‡ नात्र खण्डसमाप्तिः क-च-पुस्तकयोः।
§ १भा० ४४४ पृ० १पं०।
‖ ऋ० सं० ६, २, ९, ५।
¶ पृ० १४९ पृ० १पं०। तत्रैव "*" टीप्पन्यां पाठो द्रष्टव्यः।
** १भा १९० ७) द्रष्टव्यम्।

"सुशिप्रः[७१]"—इति *, अनवगतम्। तत् पुनः "एतेन" एव सूत्रशब्देन "व्याख्यातम्" सर्पतेरेवैतदपि †; "शिप्रे = हनू, नासिके वा", ते यस्य शस्ते, स सुशिप्रः। "वाजे सुशिप्र गोमति"—इति ‡ निगमो "विश्वा मखित्वम्"—इति व्याख्यातः §। नास्मिन् मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्ग मस्तीति, अतः "शिप्रे हनू नासिके वा"—इत्युक्त्वा विशिष्टतलिङ्ग मन्यदुदाहरणं ब्रवीति;—"वि ष्यस्व शिप्रे"—इति। "मादयस्व ०——०प्रति नो जुषस्व" ‖। कुत्सस्येय मार्षम्। ऐन्द्री। जगती। दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'मादयस्व' हर्षयस्व 'स्वम्' आत्मानम् हे 'इन्द्र!' 'हरिभिः' अश्वैः, 'ये' 'ते' तव स्वभूताः, तैः सह। कथं च पुनर्मादयस्व? इति,—'विष्यस्व' विमुञ्चस्व 'शिप्रे' सृप्रे, दीर्घे हनू हविर्भक्षणाय, नासिके वा गन्धाघ्राणाय; एवं मादयस्वात्मान मिति। 'विसृजस्व धेने' आधस्त्ये दंष्ट्रे वा, 'जिह्वोपजिह्विके वा'—इत्येके; तयोर्हि अन्नं धीयते। किञ्च; 'आ त्वा वहन्तु हरयः' हृष्टाः सन्त आवहन्तु त्वां हरयः अस्मान् प्रति। हे 'सुशिप्र!' 'उशन्' कामयमानः 'हव्यानि' हवींषि एतानि अस्मत्प्रत्तानि। स्तुतिभिरस्माभिराचेवितः 'प्रति जुषस्व नः' प्रति

* १भा० ४४४ पृ० ५पं०।

† पु० २१० पृ० ११पं०।

‡ ऋ० सं० ६, १, १, १।

§ पु० १११ पृ० ६पं०; तत्रैव "*" चीह्नान्तर्गतो पाठो द्रष्टव्यः।

‖ "मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने। आ त्वा सुशिप्र हरयो वहन्तूशन् हव्यानि प्रति नो जुषस्व॥"—इति ऋ०सं०१, ७, १९, ४।

यं वेवस्व नः कामैरित्यभिप्रायः॥ एवं मन्त्र माद्गलसम्बन्धात्, हविः-सम्प्रदानसम्बन्धाच्च "शिप्रे = हनू नासिके वा"—इत्युपपद्यते॥

यत्तदुक्तम्,—"शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः"—इति *, एतद् व्याख्यानम्,—"शिप्रे = हनू नासिके वा"—इति † ॥

"हनुः, हन्तेः (अदा॰प॰)" धातोः। "नासिका, नसतेः" "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति हि वक्ष्यति ‡ ॥

"रंसु(७१)"—इति §, अनवगतम्। 'रमणीयेषु'—इत्यवगमः। "रमणात्"—इति निर्वचनम्। "आयन्मे अभ्वं॰——॰मुहुरा युवा भूत्" ||। वोमाकृतेर्भार्गवस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'आ पनन्त' आभिमुख्येन पनन्त, अस्तुवत। 'मे' मम स्वभूते कर्मणि। 'अभ्वं' महान्तम् अग्निम्, 'वनद:' वननीयस्य हविषो दातारः ऋत्विजः यं 'वर्णं' वरं वृण्वन्ति अस्मदर्थम्, तेभ्यः 'उशिग्भ्यः' मेधाविभ्यः। न मसौ वरणं प्रार्थनां 'न अमिमीत' न हिनस्ति। किन्तर्हि? यथाप्रार्थित मेव समर्द्धयतीत्यर्थः। किञ्च; 'सः' अग्निः 'चित्रेण' चायनीयेन भासा युक्तः 'रंसु' रमणीयेषु स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा 'चिकिते'। किंलक्षणो 'यः' अग्निः? इति,—'जुजुर्वान्' पुनः पुनः जरावान् अपि

* १भा॰ ४०४ पृ॰ १४ पं॰।

† पृ॰ ९१०पृ॰ १पं॰।

‡ नै॰ का॰ ७, ४, ४।

§ १भा॰ ४४४ पृ॰ १०पं॰।

|| "आयन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्। स चित्रेण चिकिते रंसु भासा जुजुर्वां यो मुहुरा युवा भूत्॥"—इति ऋ॰ सं॰ १, ५, १४, ५।

भूत्वा, 'सुकरा युवा भूत्' इन्धनक्षयात् पुनरिन्धनं प्राप्य तस्योपरि दीप्यमानो मुहुर्मुहुः युवैव भवति॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च 'रंसु'—इत्यस्य 'रमणीयेषु'—इति विपरिणाम उपपद्यते॥

"द्विबर्हाः(७४)"—इति *, अनवगतम्। 'द्विपरिवृढः'—इति न्याय्यम्। मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्यात्मना। "उत द्विबर्हाः"—इति † निगमः। "महाँ इन्द्रः"—इति व्याख्यातः शेषः ‡॥

"अक्रः(७५)"—इति §, अनवगतम्। 'आक्रमणः'—इति न्याय्यम्। "आक्रमणात्"—इति निर्वचनम्। प्राकारोऽभिधेयः। "अक्रो न बभ्रिः ०——० यह्वो अग्निः" ‖। विश्वामित्रस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'अक्रो न' अक्र इव, प्राकार इव। 'बभ्रिः' भर्त्ता, धारयिता। क? 'समिथे' सङ्ग्रामे। कस्य? 'महीनां' महतीनां शत्रुसेनानाम्। एवंलक्षणो योऽग्निः। किञ्च; 'दिदृक्षे यः' दृश्यते यः। 'सूनवे' सोमाभिषवकर्त्रे यजमानाय नित्यकाल मेव। 'भाऋजीकः' प्रसिद्धभाः, प्रसिद्धदीप्तिः, नित्योज्ज्वलित इत्यर्थः। किञ्च; सर्वस्य लोकस्य 'जनिता' जनयिता। 'उस्रिया उज्जजान' उस्रिया आकृतीः आत्मनि प्रक्षिप्ताः सतीः

* १भा० ४४४ पृ० १९ पं०।

† ऋ० सं० ४, ६, ७, १।

‡ पु० १००पृ० १पं०, तत्रैव "*" टीप्पन्यां पाठश्च।

§ १भा० ४४५ पृ० १पं०।

‖ "अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः। उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः॥"—इति ऋ० सं० १, ८, १५, १।

देवताहविःसमर्थेन रूपेण ऊर्ध्वाः 'यः' जनयति। अथ वा गाव एव वोस्त्रियाः स्युः, ता अपि असौ पशुकामकर्मणि अङ्गभावं गच्छन् जनयति। यश्च 'अपां गर्भः', यश्च 'नृतमः' मनुष्यतमः, यश्च 'यह्वः' महान्, 'अग्निः', स इदं नामास्माकं करोत्विति॥ एत मत्र छन्दसाद्यादर्थाविरोधाच्च "अक्रः = प्राकारः"—इत्युपपद्यते; असौ हि आक्रम्यते जनैः॥

"उराणः(२९)"—इति *, अनवगतम्। "उरु कुर्वाणः"—इत्यवगमः। "वेरध्वरस्य दूत्यानि०——०दिव आरोधनानि" †। वामदेवस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्नग्ने! 'वेः' त्वं जानीषे। किम्? 'अध्वरस्य' यज्ञस्य 'दूत्यानि' दूतकर्माणि, यानि दूतेन कर्त्तव्यानि। किञ्च; 'उभे अन्ता' उभावप्यन्तौ 'रोदसी' रोदस्योः 'विद्वान्' असि विजानीषे। किञ्च; समस्त मप्येतज्जगत् 'चिकित्वान्' असि; न ते विज्ञान-प्रतीघातोऽस्ति कृत्स्नेऽपि जगति; विजानीषे सर्वाणि देवतास्थानानि। 'प्रदिवः' एव असि 'दूतः' चिरन्तनः सर्वेषां यजमानानाम्। यतोऽस्माभिस्त्व मेतस्मिन् कर्मणि 'दूतः' दूतत्वेन 'ईयसे' याच्यसे, स त्वम् 'उराणः' अल्प मपि कृतं हविः देवताहविःसमर्थं बहु कुर्वाणः। 'विदुष्टरः' विद्वत्तरः, मनुष्यहोतुः सकाशात्। 'दिव आरोधनानि'

* आ० ४४५ पृ० ५पं०।

† "वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी सञ्चिकित्वान्। दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि॥"—इति ऋ० सं० ३, ५, ७, १।

आरोढव्यानि देवतास्थानानि* प्रति वह एतानि हवींषीत्यभि-प्रायः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'उराणः'—इत्यस्य "उरु कुर्वाणः"—इत्येष विपरिणाम उपपद्यते॥१॥

स्तिया आपो भवन्ति स्त्यायनात्। वृषा सिन्धूनां वृषभ स्तियानामित्यपि निगमो भवति। स्तिपा स्तियापालन† उपस्थितान् पालयतीति वा। स नः स्तिपा उत भवा तनूपा इत्यपि निगमो भवति॥ जबारु जवमानरोहि जरमाणरोहि गरमाणरोहीति वा। अग्रे रूप आरुपितं जबारावित्यपि निगमो भवति। जरूथं गरूथं गृणातेः जरूथं हन्यक्षि राये पुरन्धिमित्यपि निगमो भवति। कुलिश इति वज्रनाम कूलशातनो भवति। स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः। स्कन्धो वृक्षस्य समास्कन्नो भवत्ययमपीतर स्कन्ध‡ एतस्मादेवास्कन्नं कायेऽहिः शयत उपपर्चनः पृथिव्यास्तुञ्जस्तुञ्जतेर्दानकर्म्मणः॥२ (१७)॥

"स्तियाः(७७)"—इति§, अनवगतम्। 'स्त्यायजाः' - इति न्याय्यम्।

* "दुरोहणं रोहति, स्वर्गो वै लोको दुरोहणम्"—इत्यादि, "आह्वय दुरोहणं रोहति"—इत्यादि च ऐ० ब्रा० ४. २, ५-६।

† "स्तिपा स्तूषां पालन" क, ख, ग। "स्तिपस्तासां पालन" क।

‡ "भवतीदमपीतरत् स्कन्ध" क, ख, ग।

§ १भा० ४४५ पृ० १० पं० "स्तियानाम्"।

"आपो भवन्ति"—इत्यभिधेयवचनम्। "स्त्यायनात्" संहननात् इत्यर्थः ; आप एव हि पार्थिवाना मवयवानां संहनने हेतुभूता भवन्ति ; अथ वा हिमप्रभावेन च ता आत्मनैव संहता भवन्ति। "वृषासि दिवो०——०मधुपेयो वराय"*। अंहोर्वांहस्यत्येय मार्षम्। ऐन्द्री। हे इन्द्र! 'वृषा असि' वर्षितासि 'दिवः', 'पृथिव्याः' च वर्षिता। 'सिन्धूनां' स्यन्दमानाम् अपाञ्च वर्षिता। 'स्तियानां' संहन्यमानाम् अपाम् ; अथ वा संहताना मात्मनैव हिमप्रभावेन। यावत् किञ्चित् सेचकर्म, तत् सर्वं त्वदधीन मित्यभिप्रायः। तस्मै ते एवंगुणविशिष्टाय 'वृष्णे' वर्षित्रे 'ते' तुभ्यम्। एष 'इन्दुः' सोमः, हे 'वृषभ' वर्षितः! 'पीपाय' पुनः पुनः आप्यायते ; अथ वा पानाय संस्कृतः, 'स्वादू रसः' स्वादुरससंयुक्तः' 'मधुपेयः' मधुरपेयः, 'वराय' तुभ्यं श्रेष्ठायेत्यर्थः॥ एत मन्त्र 'स्तिया'-शब्देन 'संहन्यः, संहता वा आपः' उच्यन्ते ; शब्दसारूप्यात् "स्त्यै शब्दसङ्घातयोः (भू०प०)" —इत्यस्य॥

"स्तिपाः(७८)"—इति†, अनवगतम्। "स्तियापालनः"—इत्यवगमः। 'कूपः' अभिधेयः ; स हि "उपस्थितान्" पाद्यन् "पालयति"। "यं त्वा पूर्व०——०यदिदं ते अस्मे"‡। वाध्र्यश्वस्य सुमित्रस्येय मार्षम्। त्रिष्टुप्। आग्नेयी। 'हे अग्ने!' 'यं त्वां' वध्र्यश्वः

---

* "वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम्। वृष्णे त इन्दुर्वृषभ पीपाय स्वादू रसो मधुपेयो वराय॥"—इति ऋ० सं० ४, ७, २०, १।

† १भा० ४४५ पृ० १५ पं०।

‡ "यं त्वा पूर्वं मीळितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व। स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे॥"—इति ऋ० सं० ८, १, १९, ४।

'ईळितः' अपि सर्वैर्मन्त्रदर्शिभिः, 'पूर्वं' 'समीधे' समेधिततराम्, उपचीर्णवान्, तं त्वा मद्य मपि समिन्धे; को हि नाम त्वां न समिन्ध्यात्। 'सः' त्व मिध्यमानः अस्माभिः 'इदं' हविः 'जुषस्व' संसेवस्व। किञ्च; य एव मस्माभिः ईड्यसे त्वम्, 'सः' 'नः' 'स्तिपाः' कूप इव 'तनूपाः' भव; कूपो हि तृष्णयार्त्तान् पाति पात्युदकसम्प्रदानेन। किञ्च; 'दात्रम्' दानम् 'रक्षस्व'। कतमत्? 'यदिदं ते' 'अस्मे' अस्मासु वर्त्तते इत्यर्थः॥ एव मर्थाविरोधाच्छब्दसारूप्याच्च "स्तिपाः = कूपः"—इत्युपपद्यते॥

"जबारु(७९)"—इति *, अनवगतम्। "अत्रमानरोहि"—इत्येव माद्याः शब्दसमाधयः। "त मित्न् न्वे इव समना——आरपितं जबारु" †। वामदेवस्यार्षम्। "वैश्वानराय मीळ्हुषे सजोषाः"—इत्येतस्मिन् वैश्वानरीये सूक्ते ‡। 'तम्' एव हे यजमान! त्वम् 'अभ्यश्याः' प्राप्नुयाः वैश्वानरं सूर्यम्। 'समना' समानयैव, तदनुरूपयैव स्तुत्या 'समानम्'। केन पुनरभ्यश्याः? 'क्रत्वा पुनती' स्वात्मपवनसमर्थेन कर्मणा प्रज्ञानेन वा। किंलक्षणः पुनर्यो वैश्वानरः त मभ्यश्याः? 'ससस्य पृश्नेः' स्वपनस्य § द्युलोकस्य 'पृश्नेः' प्राष्टवर्णस्य ‖ 'अधि' उपरि; स्वपन्तीव ¶ हि द्युलोको निस्सत्वात्। 'चर्मन्'

* १भा० ४४९ पृ० १पं०।

† "त मित्न् न्वे इव समना समानमभिक्रत्वा पुनती धीतिरश्याः। ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु॥"—ऋ० सं० ३, ५, १, २।

‡ ऋ० सं० ४म० १अ० ५सू०। वस्तुत एषा ऋक् न तु वैश्वानरीये; अपि त्वाग्नेये, तथा चानुक्रम्यते "भद्राः ऊनमिन्नो वाम्रस्य चाग्नेयं हि जगत्यादौति" (ऋ० सं० १०म० ९अ० १सू० सा० भा०)।

§ "स्वपनस्य" क। ‖ "प्राप्तवर्णस्य" क। ¶ "स्वपितीव" क।

चरणार्थम्। कथं नाम सौर्येण प्रकाशेन जनाम्वरेयुरित्यनेनाभिप्रायेण। 'स्वाद्' दीप्तिमत्। 'अग्रे' पूर्वसर्गादौ 'रपः आरुपितम्' 'रिपः'—इति विपरिणामः, भूम्या इत्यर्थः, 'आरुपितम्' आरोपितं देवैः, 'अवाह' मण्डलं यस्य। तं त्व सम्भ्रमाः। इह वा आदित्य आसीत्, स मार्ध्वा परिष्ठाोपरिष्टात् तासां प्रजानां न्यदधुरिति विज्ञायते ॥

एव मथ "अवाह=आदित्यमण्डलम्" उच्यते; तद्धि अवमानं गच्छन् नभसो मध्य मारोहति, जायते वा उदेतीत्यर्थः; अवमान मेव हि तत्रतत्रोदेति। "जरमाणरोहि" वा स्यात्; तद्धि जरमाणं* सर्वभूतानि रोहति। "गरमाणरोहि वा" तद्धि गरमाणं रसानारोहति ॥

"जल्हयम्(८०)"—इति *, अनवगतम्। "गल्हयम्"—इत्यवगमः। "गृणातेः (क्र्या०प०)"—इति धातुनिर्द्देशः। "त्वा मग्ने समिधा नो ०——० सदा नः" †। वसिष्ठस्यार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन् 'अग्ने!' 'वसिष्ठः' 'त्वां' 'समिधानः' सन्दीपयन् 'जल्हयं' स्तोत्रं 'हन्' गमयन् त्वां प्रति; "हन्ति, सेधति"—इति गतिकर्मसु पठितम् ‡। 'यक्षि' यजति। 'राये' धनप्राप्त्यर्थम्। 'पुरन्धिम्' बहुवर्मतमं धनसम्बन्धाद्वा बहुदातृतम मिति स्यात्। यस्त्वं वसिष्ठेन एव मिज्यसे, तं त्वां वय

* १मा० ४४९ पृ० ५पं०।

† "त्वा मग्ने समिधानो वसिष्ठो जल्हथं हन्यक्षि राये पुरन्धिम्। पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः॥"—इति ऋ० सं० ५, १, २१, ९।

‡ १अ० १ख० १४ श० (१०९), (११०)।

मपि यजाम एव। स त्वं 'पुरुनीथा' बहुप्रज्ञ! 'जातवेदः' अस्माभिरिज्यमानो 'जरस्व' उपस्तौतद्धविः अस्मत्प्रत्तम्। किञ्च; 'यूयम्' अस्मान् 'पात' रक्षत। एकस्यैव पूजनार्थं बहुवचनम्। 'स्वस्ति-भिः' स्वस्त्ययनैः, आशीःप्रयोगैः पात 'नः'। 'सदा' नित्य मेवेत्यर्थः। एव मत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च "जरूथम् = स्तोत्रम्" उपपद्यते ॥

"कुलिशम्(८२)"—इति *, अनवगतम्। "वज्रनाम"—इत्यभि-धेयवचनम्। "कूलशातनः"—इति शब्दसमाधिः। "अहन् वृत्रं० ——० उपपृक् पृथिव्याः" †। ऐन्द्री। त्रिष्टुप्। हिरण्यस्तूप-स्यार्षम्। अग्निष्टोमे निष्केवल्ये शस्यते। 'अहन्' हतवान्, हन्ति वा इन्द्रः 'वृत्रं' मेघम्। 'वृत्रतरम्'—इति तस्यैव वा विशेषणम्, अन्यो वा वृत्रतरो यः त मपि हन्ति। कथं पुनर्हन्ति? इति,—'व्यंसम्' विच्छिन्नसन्धिवन्धनं कृत्वा। केन पुनर्हन्ति? इति,—'वज्रेण महता' प्रहारेण। किञ्च; 'स्कन्धांसि इव' वृक्षशाखा इव, 'कुलिशेन' "कूलशातनेन वज्रेण" 'विवृक्णा' विवृक्णानि। स एवम् 'अहिः' आगमनो मेघः, छिद्यमानोऽस्याः पृथिव्याः 'उपपृक्' "उपपर्चनः", सम्प-र्कस्य कर्त्ता ‡ भूत्वोदकभावेन, अस्या मेव पृथिव्याम् 'अहिः' 'शयते' अगमयत्। अवस्थानमात्र मेव स्वप्नोऽभिमतः॥ एव मत्र वधसम्ब-न्धात् "कुलिशः = वज्रः"—इत्युपपद्यते ॥

---

* १भा० ४४९ पृ० ९पं० "कुलिशः"।

† "अहन् वृत्रं वृत्रतरं व्यंसम् इन्द्रो वज्रेण महता वधेन। स्कन्धांसीव० ——०पृथिव्याः॥"—इति ऋ० सं० १, २, ३९, ५।

‡ "उपपृक् उपपर्चनः, सम्पर्ककर्त्ता" क।

“तुञ्जे(८१)”—इति *, अनवगतम्। “तुञ्जतेः” दानार्थस्येति निर्वचनम्। ‘तुञ्जनम्’—इति स्यात्॥ २ (१७)॥

**तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम्॥ दानेदाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेर्बर्हणा परिबर्हणा। बृहच्छवा असुरो बर्हणा कृत इत्यपि निगमो भवति॥ ३ (१८)॥**

“तुञ्जेतुञ्जे०——०सुष्टुतिम्” †। मधुच्छन्दस आर्षम्। ऐन्द्री। गायत्री। प्रातःसवने ब्राह्मणाच्छंसिनः आवापे विनियुक्ता। ‘तुञ्जेतुञ्जे’ “दानेदाने” ‘ये’ ‘उत्तरे’ उत्तरोत्तरे दानपरितुष्टेन मया ‘स्तोमाः’ ‘इन्द्रस्य वज्रिणः’ चिन्त्यन्ते,—एतैः स्तोमैरसौ योग्यः स्तोतुमिति। किं तेषाम्? ‘न ‘विन्धे’ न ‘अस्य’ सर्वैरपि ‘ तैर्विन्दामि’ “सुष्टुतिं” “समाप्तिं स्तुतेः” इत्यर्थः। यावत्य एव स्तुतय उपादीयन्ते, ताः सर्वा एवेन्द्रं प्राप्य न्यूना भवन्तीत्यभिप्रायः॥ एव मत्र स्तोमसम्बन्धात् ‘तुञ्जे’-शब्दो दानपर्यायवचनः, तुञ्जतेश्च दानार्थस्य दर्शनात् ‡॥

“बर्हणा(८२)”—इति § अनवगतम्। “परिबर्हणा”—इत्युपसर्गाध्याहारेणार्थप्रतीतिः। परिबर्हणा = परिवृद्धिः, परिहिंसा वा ‖।

* १भा० ४४९ पृ० ११ पं० “तुञ्जः”।

† ऋ० सं० १, १, १४, ९।

‡ १भा० ९ख० १० ख० (९) “तुञ्जति”।

§ १भा० ४४९ पृ० १४ पं०।

‖ ‘बर्हणा”, ‘परिबर्हणा” इति पाठ सर्वत्रैवान्यस्थावकारान्वितं क-पुस्तके।

"अर्चा दिवे बृहते०——०रथो हि षः"* । सव्यस्य माधुच्छन्दसस्येन्द्रस्यार्षम्। जगती। ऐन्द्री। चतुर्थे पादे 'रथः, हि, सः'—इति पदानि। हे स्तोतः! 'अर्च' प्रोच्चारय इन्द्राय 'दिवे' द्योतनवते 'बृहते' च महते, 'शूष्यं' धनसंयुक्तम्, बलक्षतिसंयुक्तं वा वचः। किंलक्षणायेन्द्राय अर्च? इति,—'स्वक्षत्रम् यस्य' स्व मेव क्षत्रं धनं बलं वा यस्य; न कदाचिदपि यः परकीय माकाङ्क्षतीत्यभिप्रायः। किञ्च; यस्य 'धृषतः' धर्षयतः; शत्रून् 'धृषत्' एव † धृष्टं 'मनः' भवति, तदर्थं मर्चेति। किञ्च; येनेन्द्रेण 'बृहच्छ्रवाः' बृहद्घोषः, 'असुरः' मेघो वा। 'बर्हणा' परिवर्ह्या परिवृढेन बधेन परिहिंसया वा 'पुरः' अर्वाक् 'हरिभ्यां' प्राप्तेनैव तावदश्वौ हरी रथे युक्तौ न मसुरं प्राप्नुतः। अथेन्द्रेण शीघ्रास्त्रत्वाद् दूरपातित्वाच्च 'वृषभः' वर्षिता 'कृतः'। अथ च तावद् 'रथो हि षः' रंहणो हि शीघ्रः स मेघः। तथाहि,—येनेन्द्रेण पुरैव हरिभ्यां प्राप्तेः ‡ प्रहारैर्जर्जरीकृत्य वर्षिता कृतो मेघः §, त मभ्यर्च ॥ एवं मन्त्र शब्दसारूप्यादसुरसम्बन्धाच्च "बर्हणा = परिबर्हणा"—इत्युपपद्यते ॥ २ (१८) ॥

योऽअ॒स्मै घ्रं॒स उ॒त वा॒ य ऊध॑नि॒ सोमं॑ सु॒नोति॑ भव॑ति द्यु॒माँ अह॑। अपा॒प श॒क्रस्त॑त॒नुष्टि॑॥ मू॒हति

* "अर्चा॑ दि॒वे बृ॑ह॒ते शू॒ष्यं१॒ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑। बृ॒हच्छ्र॑वा॒ असु॑रो ब॒र्हणा॑ कृ॒तः पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः॥"—इति ऋ० सं० १, ४, १७, १।
† "धृषन्नेव" ख।
‡ "हरिप्राप्तेः" क।
§ "वर्षितातो मेघः" क।
‖ "शुक्रास्ततनुर्गाह" ख।

तनूशुभ्रं मघवा यः कवासखः ॥ घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन्रसा गोरूध उद्धततरं भवत्युपोन्नद्ध मिति वा स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते स यो-ऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति भवति ह* द्योतनवानपोहत्यपोहति शक्रस्तितनिषुं धर्म्मसन्ता-नादपेत मलङ्करिष्णु मयज्वानं तनूशुभ्रं तनूशोभयि-तारं मघवा यः कवासखो यस्य कपूयाः सखायः। न्याविध्यदिलीबिशस्य दृल्हा † वि शृङ्गिणं मभिनच्छुष्ण मिन्द्रः। निरविध्यदिलाबिलशयस्य दृढानि ‡ व्यभिन-च्छृङ्गिणं शुष्ण मिन्द्रः ॥ ४ (१९) ॥

"ततनुष्टि:(८४)"—इति §. अनवगतम्। "तितनिषुः"—अयं स्यात्। "यो अस्मै घ्रंस०——० कवासखः" ‖। प्राजापत्यस्य संव-रणस्यार्षम्। ऐन्द्री। जगती। 'यः' 'अस्मै' इन्द्राय 'घ्रंसे' "अहनि", 'उत वा' "अपि वा" 'यः' 'ऊधनि' "रात्रौ" 'सोमं' 'सुनोति' अभिषुणोति, नित्यकाल मेव यः सोमाभिषवे प्रयतते इत्यर्थः। तस्य किम्? इति,—स एव निश्चयेन 'द्युमान्' "द्योतनवान्" 'भवति'। अथ पुनः इतो यो विपरीतो भवति, पूर्वस्य पूर्वतनेभ्य "धर्मसन्तानात्" अनुष्ठितात् "अपेतम्" न मलं कर्मभिरित्येवंवादिनम् "अलङ्क-

---

* "भवत्यह" क, च।

† "दृल्हा" क, च; संहितायां मप्येव मेव।

‡ दृल्हानि" क, ख, ग।

§ १भा० ४४७ पृ० १पं० "ततनुष्टिम्"।

‖ ऋ० सं० ४, १, २, १।

रिष्णुम्" "अयज्वानम्" अयजनशीलम्, आत्मभक्षणपरं वा; विष-योपभोगपरतया स्ववित्तं "ततनिष्टुम्" अनेकैः प्रकारैः यो वित्तानि तनितु मिच्छति, तम्; अश्रद्दधानम् धर्मे *। 'शक्रः' शक्तः इन्द्रः, "अप ऊहति—अप ऊहति"†—उपसर्गाभ्यासदर्शनात् ऊहतेरप्यभ्यास आदरार्थं कृतः; पुनःपुनरपोहति नाशयतीत्यर्थः ‡। 'तनूशुभ्रम्' "शरीरशोभयितारम्"; ततनुष्टेरेवैतद् विशेषणम्। यश्च अन्योऽपि 'कवासखः' कपूयसखो भवति §, त मप्यपोहति। 'मघवा' धनस्वामी इन्द्रः; अवश्यम्भावी तस्य हि विनाश इत्यभिप्रायः॥ केचित्तु 'कवासख'-शब्दं 'तनूशुभ्र'-विशेषण मेव वर्णयन्ति ‖। इतरो विषयप्रधानोऽपि भूत्वा साधुसम्पर्कात् कदाचित् प्रपद्येत, इतरस्त्वसाधुसम्पर्कादत्यन्त-नष्ट एवेत्यनेनाभिप्रायेण॥ एव मत्र 'ततनुष्टि'-शब्देन 'विषयोपभोग-प्रधानः' उच्यते, शब्दार्थाविरोधादित्युपपत्तिः॥

"शंसः—इति अहर्नाम" ¶, "शस्यन्तेऽस्मिन् स्तोमाः" सूर्येण। "गोः 'ऊधः' उद्धततरम्"—इति शब्दसादृश्यप्रसक्तम्, तद्धि अन्येभ्यो ऽङ्गेभ्य उद्धततरं "भवति"। "उपोन्नद्धम्—इति वा"; तद्धि विशा-

* "ततं धर्मसन्ततिं नुदति, यष्टि कामयते कामानिति ततनुष्टिः"—इति तत्रैव सा० भा०

† "आपो ह अपोहति" क।

‡ "अपरोऽपशब्दः पूरणार्थः"—इति सा० भा०। पर मेतच्छिवरामविवरणम्; यत हि "अपोहत्यपोहति"—इति दर्शनात्।

§ कपूयशब्दार्थस्तु पुरस्तात् (११९ पृ०) द्रष्टव्यः। "कवासखः, कुत्सितपुरुष-सखा-यः"—इति सा० भा०।

‖ "तनूशुभ्र-विशेषणत्वे वर्णयन्ति" ख।

¶ १भा० ५४पृ०, ५७पृ० १ख० ६ख० (१)।

यते केन चित्रदुपक्षिप्य गोदरे नद्धु मिति। "स्नेहानुप्रदानसामा-न्यात् रात्रिरप्युध उच्यते"; सापि ह्यवश्यायानोषधिवनस्पतिलोक-कान् दधाति * ॥

"इलीबिशस्य(८४)"—इति †, एतदेकपद मनवगतम्। "इला-बिलशयस्य"—इत्यवगमः। 'मेघः' अभिधेयः; स हि इलाहेतोरुद-कस्य आत्मीयानि निर्गमनबिलानि संरुध्य शेते, तस्यैव वा बिलेषु इलाहेतुरुदकं शेते इति इलीबिशः। "न्याविध्यदिलीबिशस्य०——०मवधी. पृतन्युम्" ‡। हिरण्यस्तूपस्यार्षम्। ऐन्द्री। त्रिष्टुप। गोमवत्रि-वधयोर्निष्केवल्ये शस्यते §। 'न्याविध्यत्' "निरविध्यत्" निरताडयत्, 'इलीबिशस्य' "इलाबिलशयस्य" मेघस्य 'दृळ्हा' "दृढानि", दुर्भेद्यानि उदकसंरोधक्षमाणि स्थानानि। न च केवल मेतावदेव, किन्तर्हि? 'वि शृङ्गिणम् अभिनत्' शृङ्गिणं शिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः, 'शुष्णं' बलवन्तं मेघम्, 'इन्द्रः' एवं स्तूयमानः प्रत्यक्षीभूतः। प्रत्यक्षकृतः उत्तरोऽर्द्धर्चः। हे 'मघवन्!' 'यावत्तरः' यावद्बल मेतस्मिन् मेघेऽस्ति तावदेनं जहि। 'यावत्' च तत्र व्यथनसमर्थम् 'ओजः' बल मस्ति, या ते शक्तिः, तयैनं 'वज्रेण' 'शत्रुं' शातयितव्यम् 'अवधीः' जहीत्यर्थः। 'पृत-

* १मा० ४१४०, ४७४० १ख० ७ख० (१०)।

† १मा० ४४०४० ७पं० "इलीबिशः"।

‡ "न्याविध्य०——०शिङ्क्तः। यावत्तरो मघवन् यावदोजो वज्रेण शत्रु मवधीः पृतन्युम्॥"—इति ऋ० सं० १, ३, ३, ९।

§ "योनि मारैभमाद्यारैमारैभ दुर्दोघ्याहवन्। इन्द्रायद्यय बादयिन मवाद्-धाय यासता॥ चस्वायतो निराविध्यद्व्यादेवं क याय्ताः। व्याडवक् न किरादेवो न्याविध्यदेन मायुवक्॥"—इति ऋ० ब्रा० १। ४०, ४१।

न्युम्' पृतना मिच्छन्तम् ॥ एव मेव "इलीबिशः — मेघः" इत्युपाख्यानादर्थाविरोधाच ॥ ४ (१९) ॥

अस्मा इदु प्र भ॑रा तूतु॑जानो वृत्राय वज्र मीशा॑नः किये॒धाः। गोर्न पर्व वि र॑दा तिर॒श्चेष्य॒न्नर्णां॑स्य॒पां चरध्यै॥ अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्र मीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां* चरणाय भूमिर्भ्राम्यतेः। भूमिरस्तृ॒पिक्षन्मर्त्यानाम् मित्यपि नि॑गमो भवति। विष्पितो विप्राप्तः†। पारन्तो अस्य विष्पि॒तस्य॑ पर्षन्नित्यपि नि॑गमो भवति ॥ ५ (२०) ॥

"कियेधाः(८६"—इति ‡, अनवगतम्। "कियद्धाः", "क्रममाणधा वा"—इत्यवगमः। कियदप्युदक मपरिमाणं धारयतीति कियद्धा मेघः। क्रममाणो वा धारयतीति क्रममाणधा मेघ एव ॥ "अस्मा इदु प्रभ॑रा ०——० चरध्यै" §। नोधा नाम गौतमः, तस्येयं मार्षम्। त्रिष्टुप्। ऐन्द्री। आहीनिकेष्वहःसु अहीनसूक्ते विनियुक्ता। हे इन्द्र ! एष त्वः, 'कियेधाः' "कियद्धाः" कियदप्युदक मपरिमाणं धारयति, क्रममाणो वा धारयति। 'अस्मै' त्वं 'तूतुजानः'

* "मेघस्येष्यन्नर्णांस्यपां" क, ख, ग।

† "विष्प्रातः" क। "विष्प्राप्तः" ख, ग।

‡ १भा० ४४० पृ० ११पं०।

§ ऋ० सं० १, ४, १९, १।

"त्वरमाणः", 'वज्रं' 'प्रभर'। 'ईशानः' ईश्वरो यस्मात् त्व मस्माकं तस्मादेव मुच्यसे। किञ्च; प्रहृत्य वज्रं वज्रप्रहार मप्रूठस्यास्य मेघस्य 'गोर्न पर्व' गोरिव पर्वाणि 'विरद' विदारय; यथा गोविकर्त्ता गोः पर्वाणि 'विरदेत्' विच्छिन्द्यात्। एवं त्व मप्येतं मेघ मवयवशो 'विरद' विच्छिन्धि। कथञ्च पुनर्विरद? इति,—'तिरश्चा' वज्रेण तिर्यक् गामिना। केन पुनरर्थेन विरद? इति,—'इष्यन् अर्णांसि' उदकानीच्छन्। 'चरध्यै' "चरणाय" 'अपाम्', प्रजाभ्यो दातुम्। एव मस्माद् द्विशकलीकृतादापो निस्सरिष्यन्तीत्यनेनार्थेन विरद॥ एव मत्र "कियेधा = मेघः" शब्दसारूप्यादर्थाविरोधाच्च॥

"कियेधाः = इन्द्रः"—इत्येव मेके मन्यन्ते * ; स हि यदपि न ज्ञायते कियत्परिमाण मेतद् बल मिति, तदपि धारयति; क्रममाणो वा शत्रुबलं धारयतीति कियेधाः। एवं सति इयं योजना,—यस्मादीशानस्त्वं कियेधाश्च, तस्मात् प्रहर वज्र मिति॥

"भूमिः(८०)"—इति †, अनवगतम्। 'भ्रमणम्'—इत्यवगमः। "भ्राम्यतेः"—इति निर्वचनम्। 'अग्निः'—अभिधेयः॥ "इमा मग्ने० ——० स्तृषिहन्मर्त्यानाम्" ‡। हिरण्यस्तूपस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' 'इमां शरणिं' मरणलक्षणां हिंसाम्, इमां संसृतिं वा 'मीमृषः नः' मार्जयस्व नाशयस्व नः।

* "यद्वा क्रममाणं शत्रुबलं दधात्यवस्थापयतीति कियेधाः। हे इन्द्र! एवम्भूतं त्वम्"—इति सा० भा०।

† १भा० ४४० पृ० १० पं०।

‡ "इमा मग्ने शरणिं मीमृषो न इम मध्वानं य मगाम दूरात्। आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम्॥"—इति ऋ० सं० १, २, २५, १।

कतमां प्ररणिम्? 'इमम् अध्वानम्', 'यम्' एतं संसाराध्वानम् 'अगाम' गतवन्तो वयम्; अमुष्माल्लोकादिमँल्लोकम्। अस्मात्तु एतां संसार-छिंमाम्, एतां वा संसारसृतिम्, एनम् आर्जवं जवीभवन्त मस्माकं मार्जय त्वम्*। कस्मात् पुनरेव मुच्यसे? इतः,—यस्मात् 'आपिः' त्व मस्माकं प्राप्तः, अथवा व्यापयिता कृत्स्नस्य जगतो महिम्ना। 'पिता' च रक्षिता, 'सोम्यानाम्' सोमसम्पादिनां मनुष्याणाम्। 'प्रमतिः' च प्रकृष्टमतिः। 'भ्रमिः' च, त्व मेव संसारे भ्रामयिता पञ्चाग्नि-विद्योक्तेन प्रक्रमेण; त्वदधीन एव संसारो मोक्षश्च। 'ऋषिकृत्' च, दर्शनकर्त्तासि त्वम्, त्वदधीन मेव दर्शनं 'मर्त्त्यानां' मनुष्याणाम्। सर्वविज्ञानप्रकाशेनानुगृह्यास्मान् मोचयस्वास्मात् संसारादित्यभिप्रायः। देवयानेनैव पथा गमय, मा पितृयानेनेति॥ एव मत्र "भ्रमिः = अग्निः" अर्थाविरोधात् (विशेष्यते†)॥

"विष्पितः(८८)"—इति ‡, अनवगतम्। "विप्राप्तः"—इत्यवगमः। विस्तीर्णे इतश्चेतश्च, सर्वतो यः प्राप्तः, स विष्पितः। "इमे दिवो ०——० विष्पितस्य पर्षन्"§। "यदद्य सूर्य्ये ब्रवोऽनागाः"—इत्येतस्मिन् सूक्ते; अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः;—अन्याः सर्वा मैत्रावरुण्य इति। 'इमे'—इति द्वयोरेव मित्रावरुणयोः पूजार्थे बहुवचनम्। अर्यमा वा तृतीयः स्यात्;

* "एत मार्जवं जवीभवन्त्वस्माकं मार्जयस्व" ख।

† नैतद् दृश्यते ख-पुस्तके।

‡ १भा० ४४८ पृ० ९पं०।

§ इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति। प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन्॥"—इति ऋ० सं० ५, ५, १, १।

अत्रावपि हि अस्मिन् सूक्ते श्रूयते। शौनकाभिप्रायस्त्वेवं सति परीक्ष्यः। 'इमे' क्रियावत्त्वादार्थ्यमाणः 'दिवः' एतस्य 'अनिमिषाः' आदित्यकाः 'पृथिव्याः' पृथिवीलोकादित्यर्थः। 'चिकित्वांसः' सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः, 'अचेतसम्' अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं 'नयन्ति'। यत एव मतस्तानहं ब्रवीमि;—'प्राजे' प्रकृष्टे एतस्मिन् अजने मरणाख्ये मृत्युकाले उपस्थिते, (यदि*) 'गाधं' संसारगाहनसमर्थं कर्म, विज्ञानं वा 'अस्ति नः' अस्त्यस्माकम्, ततोऽस्य 'विष्पितस्य' "विप्राप्तस्य" संसाराध्वनो नद्या इव 'पारं पर्षन्' पारं यन्त्वित्यर्थः॥ एवं मन्त्र शब्दसारूप्यादर्थाविरोधाच्च "विष्पितः = विप्राप्तः" संसाराध्वा—इत्युपपद्यते॥ ५ (२०)॥

तन्नस्तुरीपं मद्भुतं पुरु वारं पुरु त्मना। त्वष्टा पोषाय विष्यतु राये नाभानो अस्मयुः॥ तन्नस्तूर्णापि महत्सम्भृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्त्वित्यस्मयुरस्मान् कामयमानो रास्पिनो रास्पी रपतेर्वा रसतेर्वा रास्पिनस्यायोरित्यपि निगमो भवत्यृञ्जतिः प्रसाधनकर्मा (आ व ऋञ्जसे ऊर्जां व्युष्टिष्वित्यपि निगमो भवति †) ऋजुरित्यप्यस्य भवति। ऋजुनीती नो वरुण इत्यपि निगमो भवति। प्रतद्वसू प्राप्तवसू। हरी इन्द्र प्रतद्वसू अभि स्वरेत्यपि निगमो भवति॥ ६ (२१)॥

* नास्त्येतत् क-पुस्तके।

† नैष पाठः क-ख-ग-पुस्तकेषु, दुर्गवृत्तौ चाग्रहीतश्च; इतो तु मतान्तरेण "आ नो गिरा"—इति निगम उद्धृतो व्याख्यातश्च।

"तुरीपम्(८९)"—इति *, अनवगतम्। "तूर्णापि"—इत्यव-गमः। 'उदकम्'-अभिधेयम्; तद्धि तूर्ण माप्नोति। "तन्नस्तुरीप॰ ——॰ नाभानो अस्मयुः" †। दीर्घतमस आर्षम्। त्वाष्ट्री। अनुष्टुप्। आप्री-सूक्ते। 'तत् नः तुरीपम्' तदस्माकं तुरीप मुदकम्, 'अद्भुतं' च "महत्" इत्यर्थः। "अद्भुतः, बर्हिष्ठः"—इति महन्नामसु पठितम् ‡। 'पुरुवारं' च बहुदेशान्तर मावृणोत्युदकम्; 'पुरुत्मना' बह्वात्मना। यदेवंलक्षण मुदकम्, तत् 'नः' अस्माकं 'नाभा' नाभौ मध्ये 'त्वष्टा' 'विष्यतु' विमुञ्चतु वर्षभावेन। 'अस्मयुः' 'अस्मान् अनुगृहीतुं "का-मयमानः' 'राये पोषाय' "धनस्य पोषाय" इत्यर्थः; वर्षे हि सति पशवः पुष्यन्ति। अथवा 'नाभानः' —इति त्वष्टुरेव विशेषणं स्यात्, 'नाभानः' न अदीप्यमानः, किन्तर्हि? दीप्यमान एव विष्यतु॥ एव मत्र माध्यमिकस्त्वष्टेति § विष्यत्वित्यनेन सम्बन्धात्, "तुरीपम् = उदकम्"—इत्युपपद्यते॥

"रास्पिनः(९०)"—इति ||, अनवगतम्। 'रापी'—इति वा स्यात्, 'रासी'—इति वा; "रपतेः वा" शब्दार्थस्य, "रसतेः वा" शब्दार्थस्यैव। रपणशीलो वा रसनशीलो वा यः, स 'रापी'। "उत त्या मे॰——॰रास्पिनस्यायोः" ¶। कक्षीवत आर्षम्। त्रिष्टुप्। वैश्व-

---

* १भा० ४४८पृ० ६पं०।

† ऋ० सं० २, १, ११, ४।

‡ १भा० १९९पृ० ७ख० १ख० (२२), (२४)।

§ "अथातो मध्यस्थाना देवताः (दै० का० १०, १, १)"—इत्यधिकृत्य यास्केन व्याख्यातत्वात् (दै० का० १०, २, ९)।

|| १भा० ४४८पृ० ९पं०।

¶ "उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै। प्र वो नपात मपां कृणुध्वं प्र मातरा रास्पिनस्यायोः॥"—इति ऋ० सं० १, १, १, ४।

ह्वये स्तुके। 'उत त्या' अपि तौ, अश्विनौ। 'मे' मम 'यशसा' हवि-र्लक्षणेन धनेन तर्प्यमाणौ, 'श्वेतनायै' उषसः कालेप्राप्ते 'व्यन्ता पान्ता' वीताम् भक्षयेतां पुरोडाशम्, पिबेतां सोमम्। यतो ब्रवीमि,—हे 'औशिजः' मेधाविनः! ऋत्विजः! 'हुवध्यै' आह्वयध्वं तावश्विनौ। किञ्च; 'प्र' ब्रवीमि 'वः',—'कृणुध्वम्' 'अपां नपातम्' अपि, एतस्मिन् कर्मणि भागिनम्। किञ्च; 'प्रमातरौ' द्यावापृथिव्यावपि सर्वभूतनि-र्मात्र्यौ कृणुतैव, एतस्मिन् कर्मणि भागिन्याविति। एतच्च वो ब्रवी-मि। कं च पुनरर्थं पुरस्कृत्य एतत् कुरुध्वम्? इति,—'रास्पिनस्य आयोः' रपणशीलस्य वा रमनशीलस्य वा शब्दकारिणो वर्षभूतस्योद-कस्य प्राप्त्यर्थम्, अथ वा स्तोतुः पुत्रस्य प्राप्त्यर्थम्। "आयवः"—इति मनुष्यनाम*॥ एव मत्र 'रास्पिन'-शब्देन उदकं स्तोता वाभिधीयते, शब्दसारूप्यादर्थाविरोधाच्च॥

"ऋञ्जतिः(९१)", "प्रसाधनकर्मा"†। "भाऋजीकः"—इत्य-नेन‡ गतार्थता मस्य मन्यमानो भाष्यकारो निगमं नाधीते॥

केचित्त्वत्र एतं शेष मधीयते। "दूतं वो॰——॰ ऋञ्जसे गिरा"§। वामदेवस्यार्षम्। गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'वः'—इत्येतस्य 'त्वम्'—इति विपरिणामः। हे यजमान!

* १भा॰ १०१पृ॰ १८पं॰ १पा॰ ३ ख॰ (१७)।
† १भा॰ ४४८पृ॰ १५ पं॰।
‡ पु॰ १५० पृ॰ १० पं॰।
§ "दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्। यजिष्ठ मृञ्जसे गिरा॥"—इति ऋ॰ सं॰ ३.५,८,१। क-घ-पुस्तकयोस्तु 'आवं ऋञ्जसे (ऋ॰सं॰८,३,८,१)"—इति निगमो दृश्यते।

त्वम् 'दूतम्', 'विश्ववेदसम्' सर्वप्रज्ञानम्, 'हव्यवाहम्' हविषां वोढारम्, 'अमर्त्यम्' अमरणधर्माणम्, 'यजिष्ठम्' यष्टृतमम्, 'ऋञ्जसे' प्रसाधयसि 'गिरा' स्तुत्येत्यर्थः॥ एवं मन्त्र "ऋञ्जतिः प्रसाधनकर्मा" दूतसम्बन्धात्॥

"ऋजु:(९१)"—"इत्यपि"*, "अस्य" एव ऋञ्जतेः "भवति"। "ऋजुनीती नो॰——॰देवैः सजोषाः"†। गोतमस्यार्षम्। वैश्वदेवसूक्ते। गायत्री। गवामयनस्य द्वितीयेऽहनि शस्यते मैत्रावरुणस्य शस्त्रे। 'ऋजुनीती' ऋजुनयनः, ऋजुप्रज्ञो वा 'वरुणः', 'नः' अस्मान् इतो लोकादमुं लोकं कर्मफलप्राप्त्यर्थं 'नयतु'। 'मित्रः' च 'विद्वान्' नयतु। 'अर्यमा' 'देवैः' 'सजोषाः' सहप्रीयमाणः नयतु॥ एवं मन्त्र 'ऋजु'-शब्देन प्रसिद्धं नयनम्, प्रसिद्धा वा मतिरुच्यते॥

"प्रतद्वसू(९२)"—इति‡, अनवगतम्। "प्राप्तवसू"—इत्यवगमः। 'अश्वौ' अभिधेयौ। "इह त्या सधमाद्या॰——॰प्रतद्वसू अभिस्वर"§। नारदस्येयं मार्षम्। उष्णिक्। महाव्रते औष्णिहो तृचाशीतिः, तस्यां शस्यते। हे 'इन्द्र!' 'इह' कर्मणि 'त्या हरी' तावश्वौ 'प्रतद्वसू' "प्राप्तवसू" प्राप्तधनौ; तयोर्हि ऋजीषं धानाश्च धनम्; स हि ताभ्यां यज्ञे भागः प्राप्तः। 'सधमाद्या' सहमदनौ

* १भा॰ ४४८ पृ॰ १८ पं॰ "ऋजुनीती"॥

† "ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः॥"—इति ऋ॰ सं॰ १, ६, १०, १।

‡ १भा॰ ४४९ पृ॰ १पं॰।

§ इह त्या सधमाद्या युजानः सोमपीतये। हरी इन्द्र प्रतद्वसू अभि स्वर॥"—इति ऋ॰ सं॰ ६, १, ११, २।

'युञ्जानः' युक्त्वा रथे, ततः 'सोमपीतये' सोमपानार्थम् 'अभिस्वर' अस्मान् प्रत्यागच्छ॥ एव मत्र "हरी"-इत्यनेन समन्वयात् "प्रतवस्व = प्राप्तवस्व" अश्वौ—इत्युपपद्यते॥ ६ (२१)॥

हि॒नोता॑ नो अध्व॒रं दे॑वय॒ज्या हि॒नोत॒ ब्रह्म॑ स॒नये॒ धना॑नाम्। ऋ॒तस्य॒ योगे॒ वि ष्य॑ध्व॒मूधः॑ श्रु॒ष्टीवरी॑र्भूतना॒स्मभ्य॑मापः॥ प्रहिणुत नोऽध्वरं देवयज्यायै प्रहिणुत ब्रह्म धनस्य सननाय ऋतस्य योगे यज्ञस्य योगे याज्ञे शकट इति वा शकटं शकृदितं* भवति शनकैस्तकतीति वा शब्देन तकतीति वा। श्रु॒ष्टीवरी॑र्भूतना॒स्मभ्य॑† मापः। (सुखवत्यो भवतास्मभ्य मापः‡) चो॒ष्कू॒यमा॑ण इन्द्र॒ भूरि॑ वा॒मम्। ददिन्द्र बहु वननीयम्। एध॑मान॒द्विळु॒भय॑स्य§ राजा॑ चोष्कू॒यते॒ विश॒ इन्द्रो॑ मनु॒ष्या॑न्॥ व्युदस्यत्येधमानानसुन्वतः‖ सुन्वतोऽभ्यादधात्युभयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तं सुमत्स्वयं मित्यर्थः। उप॒ प्रागा॑त्सु॒मन्मे॑ धायि॒ मन्म॑। उपप्रैतु मां (स्वयं¶) यन्मे** मनो-

* "शकृदटं" क, ख, ग।
† "सुखवरी भूतनास्मभ्य" क, ख। 'सुखवती —" ग।
‡ न दृश्यतेऽयं पाठः क-ख-ग-पुस्तकेषु परं दृश्यिसम्मतः।
§ "०द्विलुभयस्य" क, ख, ग।
‖ "व्युदस्यत्येधमानानवर्द्धयत्सुन्वतः" क, ख, ग।
¶ नास्त्येतत क-ख-ग-पुस्तकेषु।
** "यत्" क, ख, ग।

ऽध्यायि यज्ञेनेत्याश्वमेधिको मन्त्रो द्विविष्टिषु द्विव एष-णेषु ॥ ७ *॥

"हिनोत(९४)"—इति †, अनवगतम्। "प्रहिणुत"—इत्यवगमः। "हिनोता नो०——०भ्र्तनास्मभ्य मापः ‡। कवषस्येय मार्षम् §। अपोनप्त्रीयास्वत्तु ग्रम्यते। "हे ऋत्विजः! 'हिनोत' "प्रहिणुत" प्रगमयत, प्रोत्सर्पयत। एनम् 'अध्वरं' यज्ञम् 'देवयज्या' "देवयज्यायै" देवयजनार्थम्। किञ्च; प्रहिणुत 'ब्रह्म' स्तुत्याख्यं यथाशास्त्रदृष्टक्रमेण। 'सनये' लब्धये 'नः' अस्माकं धनानाम्। किञ्च; 'ऋतस्य' "यज्ञस्य" 'योगे' संयोगे यदेतत् 'ऊधः' इव सोमपूर्णम् अधिषवणचर्म वर्त्तते, अथ वा योगमस्यास्त्वकटं योगः; तद्धि तत्र युज्यते, तेनाधिषवणचर्मणः ऊधसोऽधस्तादवस्थितेनेति मन्यमानो भाष्यकारो|| ब्रवीति,—"याज्ञे शकटे—इति वा"; यदेतद् यज्ञशकटस्याधस्तादुपरि वाधिषवणचर्म, एतद् 'वि ष्यध्वम्' विमुञ्चध्वम्। ग्रहचमसस्थाल्यादिषु यो निषेकः सोमस्य, एतद् विमोचनम् अधिषवणचर्मोधसः; तद्धि सोम उत्सिच्यमाने श्लथीभवति, यथेतरद्गोरूधो दुह्यमानायां गवि। एव मृत्विज उक्त्वा अधुना ता एव सोमसम्मिश्रा अपो ब्रवीति,—यूय मपि हे 'आपः!' एभिः ऋत्विग्भिः उत्सिच्यमानाः 'श्रुष्टीवरीः' "सुखवत्यः" 'भूत' "भवत" 'अस्मभ्यम्'॥

* सप्तम खण्डसमाप्तिः क-च-पुस्तकयोः।

† १भा० ४४९ पृ० ४पं०।

‡ ऋ० सं० ७, ७, २९, १।

§ "दास्याः पुत्रः कितवोऽब्राह्मणः"—इत्यादि ऐ० ब्रा० २, ३, १।

|| "निरुक्तकारो"—इति सायणीयः पाठः।

एवमत्र 'प्र'-शब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण 'प्र'-शब्दोऽध्याहृतः, 'अध्वरम्'—इत्यनेन सम्बन्धाद्धिनोतेर्गत्यर्थत्व मुपपद्यते *॥"

"प्रहिणुत"—इति 'आपः' उच्यन्त इति केचित्॥

"शकटम्", "शक्वदितं भवति"। यदा अनड्वान् युक्तः, शकृत् मुञ्चति, तेनेत मिति। "शनकैस्तकतीति वा"; तद्धि भाराक्रान्तं शनकैर्गच्छति "शब्देन तकतीति वा": तद्धि शब्देन गच्छति॥

"चोष्कूयमाणः १६," "चोष्कूयते १७" इति †, एते अनवगते। धातुरेवाय मप्रतीतः। एते सुबन्ततिङन्ते; तदनयोः पूर्वं 'सुबन्तम्', उत्तरं तिङन्तम्। दानार्थे वर्त्तमानस्य "चोष्कूयमाण इन्द्र भूरि वामम्"—इति ‡ निगम मुक्त्वा 'ददिन्द्र"—इति हि पूर्वस्य निर्वचनं चकार भाष्यकारः॥ ॥ व्युदसने वर्त्तमानस्योत्तरस्य "चोष्कूयते विश इन्द्रो मनुष्यान्"—इति § निगम मुक्त्वा 'चोष्कूयते' —इत्यस्य शब्दस्य "व्युदस्यति"—इति निर्वचन माह भाष्यकारः॥ उभयत्रापि तु चोष्कूयति-शब्दस्त्वर्कीतवृत्तेन द्रष्टव्यः॥

"चोष्कूयमाण इन्द्र भूरि वामम्"—इत्यत्र शेषः,—"नि सर्वसेन इषुधीँरसक्त ०——० दधि प्रवृद्धः"॥ ।हिरण्यस्तूपस्यार्षम्। ऐन्द्री।

* व्याख्यान मेतत् समग्र मेव ऋग्भाष्ये सायणेनोद्धृतं सौलभ्य तत्रैव "एतस्या ऋचो व्याख्यानं निरुक्तटीकाया मुद्धृतम्' —इति।

† १भा० ४४९ पृ० ८पं०।

‡ ऋ० सं० १, २, १, २।

§ ऋ० सं० ४, ७, २२, १।

‖ "नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि। चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भू रस्मदधि प्रवृद्ध:॥"—इति ऋ० सं० १, २, १, २।

त्रिष्टुप्। उद्भिद्बलभिदोर्निष्केवल्ये शस्यते। 'न्यसक' न्यवधात् 'इषुधीन्' तूणान्, पृष्ठे रथस्य, 'सर्वसेनः' समग्रसेनः इन्द्रः। एवं तूणान् संनह्य बध्वा, गोधाङ्गुलित्रान् भूत्वा "स अर्यो गा अजति" इषुभिर्मेघान् छिन्दन् 'सम् अजति' समस्ताः क्षिपति, 'गाः' अपः, 'अर्यः' ईश्वरः इन्द्रः। कस्मै समजति? यस्य वष्टि। यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे कामयते, क्षेप्तुम्, तस्यैव क्षिपति, वर्षं प्रवर्त्तयत इत्यर्थः। एवं स्तूय-मानः स इन्द्रः प्रत्यक्षीभूतः; यतः प्रत्यवक्षत उत्तरोऽर्द्धर्चः। हे इन्द्र! चोष्कूयमाणस्त्वं ददत् उदकं जनेभ्यः 'भूरि' "बहु" 'वामं' "वननीयं" सस्य-सम्पत्करम्, भृश यत् कुरुष्व। 'मा पणिः भूः' मा वणिक्शीलोऽस्मान् प्रति मन्दोदकदाता कृपणो भूः। किन्तर्हि? प्रवृद्धोदकः उन्नतचित्तः, अस्मान् प्रति बहूदकदाता भव॥ एव मत्र 'मा पणिर्भूर्भूरि वामम्'—इत्येभिः पदैः सम्बन्धात् 'चोष्कूय-माणः'—इत्यस्य "ददत्"—इत्येव मर्थ उपपद्यते॥

एव मत्र दानार्थः 'चोष्कूयतिः', "एधमानद्विळुभयस्य"—इत्यत्र व्युदमनार्थः। अस्य शेषः,—"शृण्वे वीर०——०इन्द्रो मनुष्यान्" *। गर्गस्य बार्हस्पत्यस्येय मार्षम्। त्रिष्टुप्। ऐन्द्री। 'दमायन्'—इत्येकं पदम्। 'शृण्वे वीरः' अश्रौष महं वीर मिन्द्रम्, 'उग्रम्' उद्गूर्णवज्रम्। आदरार्थो द्विरभ्यासः, आदरं चार्थभूयस्त्वम्; "अभ्यासे भूयांस मर्थं मन्यन्ते" इति हि वक्ष्यति। अथवा 'उग्र' शत्रुं प्रति उद्गूर्णवज्रम्। 'दमायन्' दमयितारं शत्रूणाम्। कथम्पुनरश्रौषम्? इति,—'अन्य

* 'शृण्वे वीर उग्रमुग्रं दमायन्नन्य मन्यमतिनेनीयमानः। एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्॥"— इति ऋ० सं० ५, ७, १९, १।

मन्यम्' देवताविशेषम्, 'अतिनेनीयमानः' अतिशयेन स्वाभीष्टेन कामेन तुष्टूषया 'अमुष्मात् सुतात् कामान् प्राप्स्यथ'-इत्येवं पुनःपुनः नयमानः। किम्पुनर्लक्षणं वीर मश्नीषम्? इति,—'एधमानद्विट्' "एधमानान्" दीप्यमानानपि "द्वेष्टि" "असुन्वतः", सोमाभिषव मकुर्वाणान् अयज्वन इत्यर्थः। अत एवं वैपरीत्येन "सुन्वतोऽभ्याद्-धाति"—इत्यध्याजहार भाष्यकारः। क पुनरादधाति? 'सुकृतस्य लोके'—इति सामर्थ्याद् गम्यते। ये हि सुन्वते, त इष्टा इन्द्रस्य; ये न सुन्वन्ति, ते द्वेष्याः; इत्यभिप्रायः। 'उभयस्य राजा' "दिव्यस्य च" धनस्येश्वरः "पार्थिवस्य च" मानुषस्य च। किञ्च; 'चोष्कूयते' व्युदस्यति,—यो 'विशः' एधमानानसुन्वत इतरांश्च सुन्वतः 'मनुष्यान्' अभ्यादधाति सुकृतस्य लोके इति॥ एव मत्र 'एधमानद्विट्'—इत्यनेन सम्बन्धात् "चोष्कूयतिः, व्युदमनार्थः"—इति उपपद्यते॥

"सुमत्[१०]"—इति *, अनवगतम्। "स्वयम्"—इत्यवगमः। "उप प्रागात् सुमन्मे०——०चक्रमा सुबन्धुम्" †। दीर्घतमस आर्षम्। त्रिष्टुप्। अश्वदेवताका। अश्वमेधेऽश्वस्तोमीयेन षोडशा-हुतयो हूयन्ते, तत्रेयं विनियुक्ता। 'उप प्रागात्' "उप प्रैतु" "मां" प्रकर्षेण एतु। 'सुमत्' "स्वयम्" एव। 'यत्' यदनेन "यज्ञेन" प्राप्नुयाम् "इति"। 'मे' मम 'मनः' अपि "अध्यायि" (अनेकविधान् सङ्कल्पविकल्पान् चकार, तत्तदह मेव; अहं मनसा‡)

*भा० ४४९ पृ० १२ पं०।

† "उपप्रागात् सुमन्मेऽधायि मन्म देवाना माशा उप वीतपृष्ठः। अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्॥"—इति ऋ० सं० १, १, ८, १।

‡ नास्त्येष पाठः क-पुस्तके।

ध्यातवानित्यर्थः। किम्पुनस्तत्? 'मन्म' मननीय मर्थजातम्। किञ्च; अय मपि 'वीतपृष्ठः' कान्तपृष्ठोऽश्वः 'उपप्रागात्' उपगच्छतु। 'देवानाम्' 'आशाः' यम् एतं वयं देवानां 'पुष्टे' पोषणाय 'चकृम' कृतवन्तः। 'सुबन्धुम्' शोभनयूपबन्धनम्। त मेत मुपगच्छन्तम् 'अनुमदन्ति' अनुमन्यन्ताम् 'विप्राः ऋषयः' मेधाविनः॥ एव मत्र शब्दसारूप्यादर्थोपपत्तेश्च 'सुमत्'—इत्यस्य "स्वयम्"—इत्येष विपरिणाम उपपद्यते॥

"आश्वमेधिकोऽयं मन्त्रः"—इति प्रकरणोपप्रदर्शनार्थ माह; मन्त्रार्थं निर्ब्रुवता प्रकरण मप्युपेक्षितव्य मिति, एतदनेन प्रदर्शितं भवति॥

"दिविष्टिषु[(८८)]"—इति *, अनवगतम्। "दिव एषणेषु"—इत्यवगमः। याभिः क्रियाभिर्दिव मिच्छन्ति गन्तुं ता दिविष्टयः॥७॥

**स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु। स्थूरः समाश्रितमात्रो महान् भवत्यणुरनु स्थवीयांस मुपसर्गो लुप्तनामकरणो † यथा सम्प्रति कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा कुरुः कृन्ततेः क्रूर मित्यप्यस्य भवति कुलं कुष्णातेर्विकुषितं भवति इतो व्याख्यातो जिन्वतिः प्रीतिकर्म्मा। भूमिं पर्ज्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इत्यपि निगमो भवति॥ ८ (२२)॥**

**॥ इति षष्ठाध्यायस्य चतुर्थः पादः॥ ६.४.**

---

* १भा० ४४९ पृ० १५ पं०।

† "मुपसर्गलुप्तो नामकरणो" क, ख, ग।

"स्थूरं राधः ०——० तुर्वशेष्वमन्महि" *। मेधातिथेरार्षम्। बृहती। दान मनया प्रशस्यते। 'स्थूरं' स्थूलं महत्, 'राधः' धनम्, 'शताश्वं' अश्वशतसंयुक्तम्। 'कुरुङ्गस्य' राज्ञः, 'दिवस्य' महतः, 'सुभगस्य' शोभनस्य 'दिविष्टिषु' क्रियासु दक्षिणाभूतं सर्वेष्वपि 'तुर्वशेषु' मनुष्येषु याः रातयः दत्तयः, तासु च; एतदेव स्थूल मित्येवं वयम् 'अमन्महि' मन्यामहे इत्यर्थः॥ एव मत्र 'दिविष्टि'-शब्देन 'क्रिया' उच्यते; ताभिर्हि द्युलोक मिष्यते गन्तुम्॥

"स्थूरः, समाश्रितमात्रो महान् भवति"; समस्ता हि तत्र मात्रा आश्रिता भवन्ति। स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते,—"स्थवीयांस मनु" यो वर्त्तते, सः "अणुः"—इत्युच्यते। अन्वित्ययम् "उपसर्गः" "लुप्तनामकरणः" येन प्रत्ययेन न्याय्य मेतन्नाम स्यात्, सोऽत्र लुप्तो न श्रूयत इत्यर्थः। कथं लुप्तः? इति,—"यथा सम्प्रति" —इति। अस्मिन्नामकरणलोपेन प्रयोगसिद्धिः; साम्प्रतम्—इति हि न्याय्यम्, तथापि सम्प्रतीत्येव मपि वर्त्तमानकालविषयप्रयोगः प्रसिद्धः; एवमिहाप्यनुशब्दे। "कुरुङ्गो नाम राजा बभूव"। "कुरुगमनाद्वा" कुरुङ्गः; स हि कुरून् प्रति पुत्रत्वेन गतो जेतुं वा †। "कुलगमनाद्वा"; शत्रुकुलानि हि स नित्य मेव याति विजेतुम्। "कुरुः कृन्ततेः;" स हि शत्रून् कृन्तति ‡। "क्रूरम्"—"इति" एतत् "अपि",

* स्थूरं ०—— ० दिविष्टिषु। राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि॥" —इति ऋ० सं० ५, ७, ११, ४।

† "तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः"—इत्यादि ऐ० ब्रा० ८, ३, ३।

‡ "कुरवः" १भा० २५० पृ० २य० १८ ख० (१)।

"अस्य" एव क्नूतेः "भवति"*। "कुलं कुष्णातेः (क्र्या०प०)"; तद्धि "विकुषितम्" इव "भवति", विस्तीर्णत्वात् ॥

"दूतः(९९)"—इति†, अनवगतम्। "जूतः"—इति न्याय्यम्। "जवतेर्वा द्रवतेर्वा"—इति व्याख्यातम्‡॥

"जिन्वतिः(१००)"§, "प्रीतिकर्मा"—इति अर्थवचनम्, अप्रतीतार्थत्वात्। "ममान मेतत्"—इत्यत्र उपरिष्टाद् व्याख्यास्यामो द्वादशेऽध्याये‖ ॥ ८(२२)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)
चतुर्थः पादः ॥ ६,४ ॥

॥ पञ्चमः पादः ॥

अमत्रोऽमात्रो महान् भवत्यभ्यमितो वा। महाँ अमत्रो वृजने विरप्शीत्यपि निगमो भवति। स्तवै वज्र्यृचीषमः। स्तूयते वज्र्यृचा समोऽनर्शराति मनस्तोलदान मश्लीलं पापक मश्रिमद्विषमम्¶। अनर्शरातिं वसुदा मुपस्तुहीत्यपि निगमो भवत्यनर्वाप्रत्यृतो-

---

* १भा० १८० पृ० १४० १९ स० (७)।
† १भा० ४४९ पृ० १८ पं०।
‡ पृ० १६पृ० ८पं०; ५ पृ० १पं०।
§ १भा० ४५० पृ० ४पं०।
‖ दै० का० ७, ५, ६। क-पुस्तके "द्वादशाध्याये"—इति पाठो नास्ति।
¶ "मश्रिमद्विषमम्" क, ख, ग। "मश्लीम—" रोथस्त डौ०।

ऽन्यस्मिन्। अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्द्धया नव्यमर्कैः। अनर्वमप्रत्यृतमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा बृहस्पतिं वर्द्धय* नव्यमर्कैरर्चनीयैः स्तोमैरसामि सामिप्रतिषिद्धं सामि स्यतेः। असाम्योजो विभृथा सुदानवः। असुसमाप्तं बलं विभृत† कल्याणदानाः॥ १ (२३)॥

"अमत्रः[१०१]"—इति ‡, अनवगतम्। "अमात्रः"—इति शब्दसमाधिः। "महान् भवति"—इत्यर्थवचनम्; यो हि महान् भवति, न तस्य मात्राः प्रमातुं शक्यन्ते, अतोऽमात्रमत्र इत्युच्यते। "अभ्यमितो वा" स्यात्, अनभिहिंसितः केन चित्। "महाँ अमत्रो वृजने०——०हर्यश्व मम्न्दत्"§। विश्वामित्रस्यार्षम्। त्रिष्टुप्। ऐन्द्री। पृष्ठ्यस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवने अच्छावाकस्य शस्त्रे सम्पातं नाम सूक्तम्||, तत्रेयं विनियुक्ता। 'महान्' प्रभावतः। 'अमत्रः' च अपरिमाणमात्रः, 'इन्द्रः' 'वृजने' सङ्ग्रामे 'विरप्शी' विरावणशीलः, 'उग्रम्' उद्गूर्णम् अभ्युद्यतम्, 'शवः' शत्रुबलम् 'पत्यते' पातयते। 'धृष्णवोजः' धर्षयितृ यस्य ओजः,

* "वर्द्धया" क, ख ग।

† "बिभृथ" क. ख. ग।

‡ १भा० ४५० पृ० १पं०।

§ "महाँ अमत्रो वृजने विरप्श्युग्रं शवः पत्यते धृष्ण्वोजः। नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्व ममन्दन्॥"—इति ऋ० सं० ३, १, १९, ४।

|| पृष्ठ्याभिप्लवषडहयोर्माध्यन्दिनसवनेऽच्छावाकशस्त्रे चातुर्विंशिकातिदिष्टस्यात्तौमस्तकस्य स्थाने चौणि सम्पातसूक्तानि, तत्रापोतमावर्ज मेतत् प्रथमं सूक्तम्। सूचितञ्च,—"इमा नु त्विच्छन्ति त्वा"—इति आ० ७, ५।

वत्तम्, तत् 'पत्यते'। किञ्च; 'नाह विव्याच' 'नैनं' व्याप्नोति 'पृथिवी', नापि द्यौः, उपमानत्वेन। कदा पुनरेवं भवति? 'यत्' यदा 'सोमासः' सोमाः 'हर्य्यश्वम्' इन्द्रम् 'अमन्दन्' अतर्पयन्नित्यर्थः॥ एव मत्र 'अवः', 'पत्यते', 'हजने'—इत्यनेन सम्बन्धात् "अमात्रः = महान्" —इत्युपपद्यते॥

"ऋचीषमः(१०२)"—इति *, अनवगतम्। ईकारोऽत्रागमगतः। "ऋचा समः"—इत्यवगमः। "इह श्रुत इन्द्रो०——०सुक्रे अमात्या"†। विमदस्यार्षम्। आस्तारपङ्क्तिः‡। ऐन्द्री। स पुनरैन्द्रो वा प्राजापत्यो वा वासुक्रस्य वा वसुक्रतः। पृष्ठ्यस्य षतुर्थेऽहनि निष्केवल्ये शस्यते। 'श्रुतः' विख्यातः सर्वासु दिक्षु, 'इह' एतस्मिन् कर्मणि, 'अस्य' 'सवे' विजेतुं स्तूयतेऽस्माभिः 'वज्री'। किंलक्षणः? 'ऋचीषमः' "ऋचा समः" यावतैवार्थेन युक्तोऽचार्य्यते ऋक् स्तुत्यभिप्रायेण, तावानेवासौ भवत्यैश्वर्य्ययोगात् §। किञ्च; 'मित्रो न' मित्र इव, यथा हि कश्चिदाप्तो मित्रो जनेषु यशः कुर्य्यात्, एवं य इन्द्रो 'यशः' 'आ चक्रे' आभिमुख्येन सर्वासु दिक्षु करोति। किंलक्षणं पुनर्यशः करोति? 'असामि' असमाप्त मनन्त मित्यर्थः। य एवङ्गुणयुक्त इन्द्रः, सोऽस्माभिरिह स्तूयते॥ एव मत्र स्तुतिसम्बन्धात् शब्दसारूप्याच "ऋचीषमः = ऋचा समः"—इत्युपपद्यते॥

* १भा० ४५० पृ० ९ पं०।

† "इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः। मित्रो न यो जनेष्वा यशश्चक्रे असाम्या"—इति ऋ० सं० ७, ७, ९, १।

‡ "पुरस्ताद्बृहती" क।

§ "ऋचीषमः। "यच्चाव इन्द्र ते (सा० सं० आ० आ० १, १, १)"—इत्यादिकया स्तुत्या समानगुण इत्यर्थः।"—इति सा० भा०।

"अनर्शरातिम्[(१०३)]"–इति *, अनवगतम्। "अनश्लीलदानम्" –इत्यवगमः। विग्रहप्रसङ्गस्याश्लीलशब्दस्यार्थं माह,–"अश्लीलं पापकम्"–इति। न यस्याश्लीला रातिर्दानम्, सोऽनर्शरातिः। शब्दसाहश्यप्रसङ्ग माह,–"अश्लीलम्–अश्रिमद् विषमम्" तत्साहश्यो-पपत्तितोऽश्लील मित्युच्यते †। "अनर्शरातिं०——०चोदयन्" ‡। "आर्यन्न इव सूर्य्यम्"–इत्यस्या अनन्तरैव §। मेमस्यार्षम् ‖। ऐन्द्री। सतोबृहती। हे स्तोतः! 'अनर्शरातिम्' अपापदानम् ¶, एनम् इन्द्रम् 'वसुदां' वसु-दातारम्, 'उप' उपगम्योपगम्य चेतसा 'स्तुहि'। किङ्कारणम्? यस्माद् 'भद्राः' भन्दनीयाः 'इन्द्रस्य' 'रातयः' दत्तयः। किञ्च; 'सः' 'अस्य' 'कामम्' अभिप्रायं 'विधतः' दधतः, कामिनां कामान् 'न रोषति' न पीड़यति। 'मनः' च 'इन्द्रस्य' आत्मनः 'दानाय' 'चोदयन्' भवति, य एवं स्तुत्वा याचते॥ एवमत्र शब्दसाहश्या-द्र्थाविरोधाच्च "अनर्शरातिम्=अनश्लीलदानम्"—इत्युपपद्यते॥

"अनर्वा[(१०४)]"—इति**, अनवगतम्। "अप्रत्यृतः"–इत्यवगमः। यः "अन्यस्मिन्" न आश्रितो भवति, स्वप्रधान एव, सः 'अनर्वा'–

---

* १भा० ४५० पृ० १२ पं०।

† "कोषस्तु स्त्रियः पाद्यमिकोटयः"—इति अम० को० १, ८, ९१। "अश्रीरं चित्=अमङ्गल मपि"—इति सा० भा० (ऋ० सं० ४, ९, १५, ९)।

‡ "अनर्शरातिं वसुदा मुप स्तुहि भद्रा इन्द्रस्य रातयः। सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्॥"—इति ऋ० सं० ९, ७, २, ४।

§ पृ० १७१ पृष्ठे सा ऋग् द्रष्टव्या।

‖ "चितस्यार्षम्" क।

¶ "अनर्शरातिम्=अपापकदानम्, अपापिष्ठस्य दातारमित्यर्थः"— सा०भा०।

** १भा० ४५० पृ० १७ पं०।

इत्युच्यते। "अनर्वाणं वृषभं०——०नवमानस्य मर्त्ताः"*। अङ्गिरस्यार्षम्। बार्हस्पत्या। त्रिष्टुप्। हे स्तोतः! 'अनर्वाणं' स्वेन महिम्ना युक्तम्, अप्रतिगतं कश्चिदन्यं प्रत्यधीनत्वेन†, 'वृषभं' वर्षितारम्, 'मन्द्रजिह्वम्' "मन्दनजिह्वम्"; हर्षकरो हि तस्य जनानां स्तनयित्नुघोषः; "जिह्वा, घोषः"—इति हि वाङ्नामसु पठितम्‡। 'बृहस्पतिं' 'वर्द्धय'। 'नव्यं' स्तुत्यम्, 'अर्कैः' मन्त्रैः। किंलक्षणं बृहस्पतिम्? इति,—'गाथान्यः' स्तुतिप्रापणार्हाः 'देवाः', 'सुरुचः' सुदीप्तिमन्तः, 'यस्य' शुश्रूषम् 'आ' आभिमुख्येन स्थित्वा 'शृण्वन्ति' आदरेण, 'मर्त्ताः' च। 'नवमानस्य' नवो हि मानः तस्य, अहन्यहनि अनया स्तुत्या स्तुत्यस्य भवति, तेनासौ नवमानः, (तस्य; अथ वा 'नवमानस्य'§) प्रशामतः इत्यर्थः। अथ वाय मन्यो मन्त्रार्थः स्यात्, ऐतिहासिकपक्षेण,—'मन्द्रजिह्वः' हर्षकरी हि जिह्वा, तस्य स्तुतिः। 'गाथानीः' स एव पौरोहित्येन गाथाः स्तुतीर्नयति प्रापयति देवान् प्रति। स एव च 'सुरोचनः'। तस्यैव च 'नवमानस्य' स्तुवतो 'देवा आशृण्वन्ति', 'मर्त्ताः' च। "बृहस्पतिर्वै देवानां पुरोहितः"—इति ह विज्ञायते||। तस्मादेव मप्युपपद्यते। एवं मन्त्रार्थाविरोधात् "अनर्वा = अप्रत्यृतः"—इत्युपपद्यते॥

* "अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः। गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः॥"—इति ऋ० सं० १, ५, ११, १।

† "अनर्वाणम् = अगन्तारं स्तोतुरधीन मित्यर्थः"—इति सा० भा०।

‡ १भा० ७४ पृ० १अ० ११ख० (२९),(३०)।

§ नास्त्ययं पाठः क-पुस्तके।

|| "तद्व्येतदृषिणोक्तम्"—इत्याद्यैतरेयके द्रष्टव्यम् (८,५,२)। तदुपजीविकरत्वेन तथैव तद्ग्निनेति खण्डे (२, २, ९)।

"असामि(१०५)"—इति *, असवगतम्। सामीति समाप्त मुच्यते, तस्य प्रतिषेधः असामि॥ "असाम्योजो•——•सृजत दिवम्" †। कालस्यार्थम्। मतो इरती। मारुतौ। हे 'सुदानवः' "कल्याणदानाः" मरुतः! यूयम् 'असामि' अपरिसमाप्तम् अनन्तम्, 'ओजः' "बलम्", 'शवः' अभिवृद्धिरूपस्य बलम् 'बिभृथ' धारयथ। 'असामिधूतयः' असमाप्तगतयः। धवनं धूतिः; "धवति, धावति"—इति गतिकर्मसु पठितम् ‡। एतत् कुरुध्वम्। य एषः 'ऋषिद्विष्टा' क्रोधद्वेष्टा, तस्मै हे मरुतः! 'परिमन्यवे' प्रकृष्टक्रोधाय इषुम् इव 'द्विषं' सर्वलोकद्वेष्यतां 'सृजत' क्षिपत॥ एव मत्र "असामि = असुसमाप्तम्§"—इत्युपपद्यते, अर्थाविरोधात्॥ १ (२२)॥

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा। भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्॥

मा चुक्रुधं त्वां‖ सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिं मिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यत इति¶ (गल्दा धमनयो भवन्ति गलन मासु धीयते**)। आ त्वा विशन्त्विन्दव

* १अा० ४५,२४० ५पं०।

† "असाम्योजो बिभृथा सुदानवोऽसामिधूतयः शवः। ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥"—इति ऋ० सं० १, २, १९, ५।

‡ १अा० २२८४० (७४), (७५) टी०।

§ "असामि = असमाप्तम्" क।

‖ "मा" क, ख, ग।

¶ "याचिष्यतीति" क, ख, ग।

** नैष पाठः क-ख-ग-पुस्तकेषु।

**आ गल्दा धमनीनाम्। नानाविभक्तीत्येते भवत आगलना* धमनीना मित्यचार्यः। (२४†)**

"गल्दया(१०१)"—इति ‡, अनवगतम्। 'गलितधानी स्यात्' गलितं हि तस्यां धीयते। "धमनिर्भवति"—इत्यभिधेयवचनम्, नाड़ीत्यर्थः। "मा त्वा सोमस्य०——०न याचिषत्"§। मेधातिथेरार्षम्। ऐन्द्री। वृहती। महाव्रते वृहतीसहस्रे विनियुक्ता। हे इन्द्र! 'मा चुक्रुधं त्वा' मा क्रोधयेयम् 'अहं' 'सोमस्य' 'गल्दया' "गालनेन" धमनेन, पूरणेन सोमस्य 'सदा' नित्यकाल मपि 'याचन्' 'गिरा' गीत्या स्तुत्या च 'सवनेषु' यज्ञेषु। कथञ्च पुनर्मा चुक्रुधम्? इति। 'भूर्णिम् न' 'मृगम्' इव। भ्रमणशीलो भूर्णिः। कः पुनरसौ? व्याघ्रो वा सिंहो वा; स हि भ्रमणशीलो बिभर्त्ति च शृगालादीन्। तेनेन्द्र उपमीयते। यथा शृगालादयो लाङ्गूललालनादिनोपचारेणोपसर्पमाणः तं न क्रोधयन्त्येव मह सोमसम्प्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुधं भवन्त मिति। अथ मतम्,—यदि मम क्रोधाद् बिभेषि, मास्मान् याचेथा इति। "क ईशान न याचिषत्" को हि नाम सोऽस्ति लोके, य ईशान मीश्वरं न "याचिष्यते"? न ह्ययाचतां तृप्तिः सिध्यति॥ एव मत्रेन्द्रस्य या 'गलना' धमनिः, यया सोम

* "भवतो गलना" क, ख, ग।

† अत्रैव चतुर्विंशखण्डसमाप्तिः क-च-पुस्तकयोः, खण्डप्रतीकपाठसम्मतश्च।

‡ १भा० ४५१ पृ० १५ पं०।

§ ऋ० सं० ५, ७, ११, ५।

आगल्यते सा, तेनैव आगलनेन उपलक्ष्यमाणा "गल्दा"—इत्युच्यते; न ह्यत्र मर्थविरोधोऽस्ति।

"गल्दा धमनिर्भवति"—इत्यस्य * भाष्यकारवाक्यस्य मन्त्रे माच धमनिलिङ्गं विशिष्ट मस्तीत्यतो विशिष्टलिङ्ग मन्यदुदाहरणं ब्रवीति,—"आ त्वा विशन्त्विन्दवः"—इति †। हे इन्द्र! 'आ विशन्तु' 'त्वा' त्वाम् 'इन्दवः' सोमाः। कथञ्च पुनराविशन्तु त्वा मिन्दवः? 'आगल्दा धमनीनाम्' याः "आगलनाः" धमनयः, याभिरनुप्रविष्टाः सन्तो नवं मद मुत्पादयन्ति; अधोवाहिन्यो याः; ताभिराविशन्तु। शेषो सुगमः ‡॥ एव मिह 'धमनी'-शब्दसह-योगी 'गल्दा'-शब्द इति कृत्वा "आगल्दा = धमनिः"—इति उपपद्यते॥

"नानाविभक्तीत्येते" पदे "भवतः"—'गल्दया', 'गल्दा'—इति; न तु नानार्थे। आह,—कोऽभिप्रायः? इति उच्यते,—पूर्वस्मिन् मन्त्रे § यद्यपि धमनिशब्दो नास्ति, तथापि निगमे 'गल्दा'-शब्देन धमनिरेवोच्यते। तत्र "गल्दा धमनीनाम्"—इत्येतदेव ज्ञापक मित्यभिप्रायः। 'गल्दया'—इति तृतीयान्तम्, 'गल्दाः'—इति प्रथमाबहुवचनान्तम्। एतदनयोर्नानाविभक्तित्वम्॥ (२४)

**न पापासो मनामहे नारायासो न जल्हवः ॥।**

* "गल्दा धमनयो भवन्ति" —इत्येव मद्दृष्टमूलपुस्तकपाठस्वरूपः।

† सा॰ सं॰ छ॰ आ॰ ३, १, १, ४; उ॰ आ॰ ८, १, १, १?

‡ १भा॰ ८४ पृ॰ ११ख॰ (५४, टीकाया मप्येव मेव।

§ पृ॰ २४४ पृ॰ १६ पं॰।

|| "जल्हवः" क, ख, ग।

**न पापा मन्यामहे नाधना न ज्वलनेन हीना अस्त्यस्मासु ब्रह्मचर्य्य मध्ययनं तपो दानकर्मेत्यृषिरवोचद्द-कुरो भास्करो भयङ्करो भासमानो द्रवतीति वा॥ २ (२५)॥**

"जल्हवः(१००)"—इति *, अनवगतम्। "ज्वलनहीनाः"—इत्यवगमः। "न पापासो ०——० कृणवामहे" †। भर्गो नाम प्रगाथपुत्रः, तस्येय मार्षम्। ऐन्द्री। बृहती। तस्या मेव दचाग्नीत्यां विनियुक्ता। 'न' वयं 'पापासः' "पापाः" इत्येवं 'मनामहे' "मन्यामहे"। किङ्कारणम्? अस्त्यस्मास्वपापत्वे हेतुः,—'ब्रह्मचर्यम्, अध्ययनम्, तपः, दानकर्म' च। अथ मतम्,—एतैरपि युक्तो यो निर्धनः, स पाप एवेति? तच्च न। किङ्कारणम्? 'न अरायासः' न वय मधनाः। अथापि स्याद्धनवत्त्वेऽपि सति अनाहिताग्नित्वात् ज्वलनहीनत्वेन पापवत्त्व मिति? तदपि न। किङ्कारणम्? 'न जल्हवः' न वयं "ज्वलनहीनाः", किन्तर्हि? आहिताग्नयो वयम्। तदेतदध्ययनाद्यपापत्वहेतुभूतं सर्व मस्मास्वस्ति। किञ्च; 'यदिन्न्विन्द्रं' यस्माद् वयम् इन्द्रं 'वृषणं' वर्षितारम्, एतस्मिन् यज्ञकर्मणि 'सखायं' सहभूतस्य सोमपानस्य ख्यापयितारम्, अमीभिः सह मया सोमः पीत इत्येवं वक्तारं 'कृणवामहे'। तस्मात् न वयं पापाः, नापि वय मरायासः, नापि जल्हवः,—इत्येव मात्मानं मन्यामहे; न हि पापाना मधनाना मनाहिताग्नीनां

* १भा० ४५१ पृ० १८ पं०।

† "न पापासो मनामहे नारायासो न जल्हवः। यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै॥"—इति ऋ० सं० ६, ४, १०, १।

च इन्द्रः सखा भवतीत्यभिप्रायः॥ एव मप "अहृव:—अलनहीना:" शब्दशाकृप्यादर्थाविरोधाच॥

"बकुर:(१०८)"—इति *, अनवगतम्। "भास्कर:, भयङ्कर:, भासद्दवणो वा"—इति शब्दममाधय:॥२ (२५)॥

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय॥

(यव मिव वृकेणाश्विनौ निवपन्तौ†) वृको लाङ्गलं भवति विकर्त्तनाल्लाङ्गलं लङ्गतेर्लाङ्गूलवद्वा‡ लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वान्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ दस्युं बकुरेण ज्योतिषा§ वोदकेन वार्य ईश्वरपुत्रो|| बेकनाटाः खलु कुसीदिनो भवन्ति द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वा। इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्त्वा पणीँरभि। इन्द्रो यः सर्वान्¶ बेकनाटानहर्दृशः सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति वाभिभवति कर्मणा पणींश्च** वणिजः॥३ (२६)॥

---

* १भा० ४५२ पृ० ३पं०।

† नैष पाठः क ख-ग-पुस्तकेषु।

‡ "लगते०— " क ख, ग।

§ "ज्योतिषो" क, ख ग।

|| "ईश्वरः पुत्रो" क, ख ग।

¶ "इन्द्रः सर्वान्"—इत्येव क, ख. ग।

** "कर्मणापर्यिंश्च" क।

"यवं वृकेणाश्विना०——०रार्याय"*। कक्षीवत आर्षम्। आश्विनी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'यवं' यवादि धान्यं 'वृकेण' लाङ्गलेन†। 'वपन्ता' "वपन्तौ" युवाम् 'अश्विना' हे "अश्विनौ!" तत्कृतौ, यत्कृते महानुग्रहे‡ सति वर्षादौ लाङ्गल-कर्मणः फलसम्पद् भवतीत्यतः तावेवाश्विनौ वपन्ता वित्युच्यते। 'इषम्' "अन्नम्" 'दुहन्ता' "दुहन्तौ" प्रपूरयन्तौ 'मनुषाय' "मनुष्याय"। 'दस्रा' शत्रूणां दासयितारौ दंसयितारौ वा, कर्मणां कृष्यादीनां कारयितारौ वा वर्षाद्यनुग्रहेण, एतावेवंविधं कर्म कार-यन्तौ कुर्वाणौ वा। 'अभिदस्युम्' दासयितार मनाकालं दुर्भिक्षं 'धमन्ता' धमन्तौ विनाशयन्तौ, कृत्स्नं जगदभिपुष्यन्तौ युवाम्। केन पुनरभिधमन्तौ? इति,—'बकुरेण' जलसमूहेन, ज्योतिःसमूहेन च; मध्यस्थानो ह्युदकसमूहेन, द्युस्थानो ज्योतिषा, सस्य मनुगृह्णाति; ततो दुर्भिक्षं ध्वस्यते जगच्च पुष्यति। किञ्च; युवां मेव 'उरुज्योतिः चक्रथुः' विस्तीर्ण मविकलं चक्षुः चक्रथुः। 'आर्याय' "ईश्वरपुत्राय", ऋज्राश्वाय; स हि युवाभ्यां मन्धीभूतः चक्षुष्मान् कृत इत्यभिप्रायः॥ एव मत्र ज्योतिःसमूह उदकसमूहस्य 'बकुर'-शब्देनोच्यते, शब्दार्था-विरोधात्। "ज्योतिषा वोदकेन वा"—इति भाष्यपाठः§॥

"बेकनाटान्(१०९)"—इति‖, अनवगतम्। "द्विगुणकारिणो वा", "द्विगुणदायिनो वा", 'द्विगुणकामिनो वा'—इति शब्दसमाधयः।

* ऋ० सं० १, ८, १०, १।

† "हकः" पु० ९९—१०५ पृ०। य० वा० सं० १२, ७१।

‡ "हे अश्विनौ! त्वत्कृतमहानुग्रहे" क।

§ एवञ्च क-ख-पुस्तकयोः पाठ एव सम्यगिति भावः।

‖ १भा० ४५२ पृ० ७पं०।

"इन्द्रो विश्वान्०——०अस्तृतम्" *। प्रागाथः कलिर्नाम, तस्यार्षम्। ऐन्द्री। बृहती। महाव्रते बार्हस्पत्यां इषाग्नीत्यां विनियुक्ता। 'इन्द्रः' 'विश्वान्' "सर्वान्" 'बेकनाटान्' "कुसीदिनः" वृद्धिजीवनान्, 'अहर्दृशः' यैरिहैव जन्मनि सूर्यो दृष्टो न पुनर्द्रक्ष्यन्तीत्यर्थः। अथ वा "ये इमानि" एव "अहानि पश्यन्ति" विषयभोगप्रधानाः, नास्तिकतया; "न" पारलौकिकेष्वहःसु;—अस्य दुष्कृतस्य कर्मणः कोऽपि फलपरिणामो भविष्यतीत्येवं भावि न पश्यन्ति; तानभिभवति †। 'कत्वा' स्वेन "कर्मणा"। 'उत पणीन्' अपि पणीन्। "पणिर्वणिग् भवति"; न हि विशुद्धेन कर्मणा व्यवहरन्ति। याभिरेतत् कर्म करोति, याभिः पुनरेवमादीन् दुष्कृतकारिणो (वि ‡) भवति, 'कत् उ मध्रीः' क ता महत्यः सेनाः? 'अस्य' इन्द्रस्य 'अधृष्टाः' अनाधर्षितपूर्वाः परैः, 'तविषीः' यास्य महत्यः। 'कत् उ वृत्रघ्नः' क च वृत्रघ्नः इन्द्रः? यस्य 'अस्तृतम्' अनुपहतं बलम्, येनैतान् हन्तीति॥ एवमत्र "बेकनाटाः = कुसीदिनः", अर्थाविरोधादित्युपपद्यते §॥ २ (२६)॥

* "इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि। कद्नू मध्रीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम्॥"—इति ऋ० सं० ६, ४, ४९, ५। इत्यर्द्धयोः पाठव्यतिक्रमश्च दृश्यते।

† अत एव कुसीदजीविनां मनौ निन्दा स्मर्यते,—"प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्"—इति ८, १०२।

‡ नैतद् दृश्यते क-पुस्तके।

§ "बेकनाटान्,— अनेन कुसीदिनो वृद्धिजीविनो वार्द्धुषिका उच्यन्ते। कथं तद्व्युत्पत्तिः? बे—इत्यपभ्रंशो द्विशब्दार्थे। एकं कार्षापणं स्वधिकाय प्रयच्छन् द्वौ मह्यं दातव्य मित्यभिनयेन दर्शयन्ति, ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः, नाम।" इति सा० भा०।

जीवान्नो अभि धेतनादित्यासः पुरा हथात्। कद्ध स्थ हवनश्रुतः॥ जीवतो नोऽभिधावतादित्याः पुरा हननात् क नु स्थ ह्वानश्रुत इति मत्स्यानां जाल मापन्नाना मेतदार्षं वेदयन्ते मत्स्या मधा उदके स्यन्दन्ते माद्यन्तेऽन्योन्यं भक्षणायेति वा जालं जलचरं भवति जलेभवं वा जलेशयं वांहुरोंऽहस्वानंहुरण मित्यप्यंस्य भवति। कृण्वन्नंहूरणादुर्वित्यपि निगमो भवति। सप्त मर्यादाः कवयस्ततक्षुस्तासा मेका मिदभ्यंहुरो गात्। सप्त मर्यादाः कवयश्चक्रुस्तासा मेका मप्यधिगच्छन्नंहस्वान् भवति स्तेयं तल्पारोहणं* ब्रह्महत्यां भ्रूणहत्यां सुरापानं† दुष्कृतस्य कर्म्मणः‡ पुनः पुनः§ सेवां पातके ऽनृतोद्य मिति बत इति निपातः खेदानुकम्पयोः॥४(२७)

"अभिधेतन(११०)"—इति॥, अनवगतम्। "अभिधावत"—इत्यवगमः। "जीवान्नो०——०हवनश्रुतः"¶। उक्त मार्षं भाष्यकारेणैवात्रोपप्रदर्शनार्थम्, एवं सर्वत्र परिज्ञेय मार्ष मिति**।

---

* "स्तेय मतल्पारोहणं" क, ष।

† "सुरापाणं" क, ष।

‡ "दुष्कृतकर्मणः" क, ख, ग।

§ "पुनः सेवां" क।

|| १भा० ४५२ पृ० १५ पं०।

¶ ऋ० सं० ९, ४, ५१, ५।

** अत्रेय मनुक्रमणिका,——"त्याम् नु सैका मत्स्यः साम्मदो मैत्रावरुणिर्मान्यो-वा बहवो वा मत्स्या जालनद्धा आदित्यामस्तुवन्"—इति।

गायत्री। आदितेयी। 'आदित्यासः' हे "आदित्याः!" 'जीवात् नः' "जीवतः" अस्मान् 'अभिधेतन' "अभिधावत" यूयम् 'पुरा हथात्' "पुरा हननात्" (अहतान्*) अस्मान्सम्भावयतेत्यभिप्रायः। 'क्व ह स्थ' "क्व नु स्थ" यूयम्? येन न शृणुत क्षिप्रं नाभिधावत हे 'हवनश्रुतः!' ते ह्याह्वानमाह्वानं शृण्वन्ति॥ एवं मत्र 'पुरा हथात्'—इत्यमेन सम्बन्धात् "अभिधेतन—अभिधावत"—इत्यर्थविपरिणाम उपपद्यते॥

एवंवा मत्स्यवधकारणाभिभूतस्यैतदार्षम, मत्स्यानां वा केचिन्मन्यन्ते। "मत्स्याः, मधौ उदके स्यन्दन्ते"; मधु इत्युदकनाम†, तत्र हि ते स्यन्दन्ते गच्छन्ति। "स्यन्दति, कसति"—इति गतिकर्मसु पठितम्‡। "माद्यन्ते" हृष्यन्ति "अन्योन्यं भक्षणाय—इति वा", मत्स्या हि इतरेतरभक्षजीविनः। "जालम्, जलचरं भवति"; तद्धि जले चरति। "जले भवं वा" जले वा भवति। "जलेशयं वा" जले वा शेते इति जालम्॥

"अंहुरः(१११)"—इति§, अनवगतम्। "अंहस्वान्"—इत्यवगमः। रो मत्वर्थे। "अंहुरणम्—इत्यप्यस्य भवति"—इति प्रासङ्गिकम्; एव मपि हि प्रयोगो भवतीति। "त्रितः कूपे०——०अस्य रोदसी"-"सप्त मर्यादाः"—इत्येते॥ त्रितस्यैव कूपे पतित-

* नास्त्येतत्पदं क-पुस्तके।
† १भा० ९१, १०१ पृ० (११)।
‡ १भा० २२१ पृ० १पं० १४पं० (५), (९)।
§ १भा० ४५१ पृ० १८ पं०।
|| इह प्रथमा, "त्रितः कूपेऽवहितो देवान् हवत ऊतये। तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी॥"—इति ऋ० सं० १, ७, १२,१। उत्तराभिस्त उत्तर मेव दर्शयिष्यति।

स्यार्षे । एतयोः पूर्वा कुत्सस्य वा । वैश्वदेवी । पङ्क्तिः । प्रातरनुवाकाश्विनयोर्विनियुक्ता । 'त्रितः' 'कूपे' 'अवहितः' पतितः, 'देवान्' 'हवते' आह्वयते, 'ऊतये' रक्षणायात्मनः । तस्य आह्वानं 'बृहस्पतिः शुश्राव' । "वित्तं मे अस्य रोदसी"—इत्येतत् पुनःपुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुः । कि मित्येतदसौ श्रावयाञ्चकार ? इति,—'कृण्वन्' 'अंहूरणात्' अंहस्वतः कूपात् आत्मनः । 'उरु' विस्तीर्णं त्राणं कुर्वन् ॥ एवं मन्त्र "अन्धकूपः = अंहूरणः"—इत्युपपद्यते, प्रकरणाविरोधात् ॥

"सप्त मर्यादाः०——०धरुणेषु तस्थौ" * । 'सप्त मर्यादाः' सप्त स्थितीः 'कवयः' मेधाविनः, हिरण्यगर्भ-मनु-प्रभृतयः 'ततक्षुः' कृतवन्तः । नित्या एव हि ताः, तैस्तु तत्प्रख्यापकोऽनुस्मरणार्थो ग्रन्थसन्दर्भोऽभिव्यञ्जितः ; एतदेव करण मित्युपचर्यते । "तासा मेका मिदभ्यंहुरो गात्" । 'इत्'—इत्यनर्थकः, अप्यर्थे वा । 'तासां' मर्यादानाम् 'एकाम्' "अभिगच्छन्" अभिक्रामन् "अंहस्वान् भवति" । 'गात्'—इत्येतत्, अभेः समीप माकृष्य "एका मप्यभिगच्छन्"—इति । कतमाः पुनस्ता मर्यादाः ? इति,—"स्तेयम्", "तल्पारोहणम्"—इत्येवमाद्याः † । यः पुनरेतानभिगच्छति, तस्य किम् ?

* "सप्त मर्यादाः०——०गात् । आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥"—इति ऋ० सं० ७, ५, २२, ९ ।

† सायणस्तु,—"सप्त मर्यादाः,—कामजेभ्यः क्रोधजेभ्यश्चोद्धृताः ; पानम्, अक्षाः, स्त्रियः, मृगया, दण्डः, पारुष्यम्, अन्यदूषणम्'—इति सप्त मर्यादाः । यद्वा स्तेयम्०——०इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः ।"—इत्याह ।

इति,—सः 'आयोः' अयनस्य सूर्यस्य 'स्कम्भे' स्कम्भने मण्डले 'उपमस्य' सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य 'नीडे' निलयने स्थाने, यानि धरुणानि धारयितॄणि स्थानानि 'अप्रथ्वंसीनि' आभूतसम्प्लवस्थायीनि, तेषु 'तस्थौ' तिष्ठति। आह,—कस्मिन् काले इति? उच्यते,—'पथां विसर्गे' विषयानुप्रवेशमार्गभूताना मिन्द्रियाणां 'विसर्गे' विसर्जनकाले प्राप्ते, मृत्युकाल इत्यर्थः॥ मर्यादासम्बन्धात् स्पष्टतर एष निगम इत्यतो द्वितीय उपात्तः, स्मृतिसमाचारस्थानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येवं मन्त्रे एत्रोपश्रुत्य सर्व एव समाचारः विशिष्टैः स्मृतिकारैः सन्दृष्टो न स्वतन्त्र इति* ॥

"बत—इति निपातः, खेदानुकम्पयोः"। "बत(११९)"—इति†, अनवगतम्; अनेकार्थश्च। "निपातः"—इति पदजात्यवधारणम्। "खेदानुकम्पयोः"—इत्यर्थवचनम्॥ ४ (२७)॥

बतो बतासि यम नैव ते मनो हृदयञ्चाविदाम।
अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव

* मनावपि द्रष्टव्यम्। तथाहि;—(१) स्तेयम्—११ अ० ५४, ५७, ९९—१०१; १२ अ० ५७। (२) तल्पारोहणम्—११अ० ५४, ५८, १०३—१०६, १७०, १७१; १२ अ० ५८. (३) ब्रह्महत्याम्—११अ० ५४, ५५, १७२—१८६; १२ अ० ५५। (४) भ्रूणहत्या—११ अ० ८७ (ब्रह्महत्यासमानम्)। (५) सुरापानम्—११ अ० ५४, ५६, ९०—९८; १२ अ० ५६। दुष्कृतस्य कर्मणः (अतिपातकादीनामन्यतमस्य ११ अ० २२९ श्लो०) पुनःपुनः सेवाम्—११ अ० २३०—२३३। (७) पातके ऽतीवाघम्? अनेनाघ मिति पाठे तु पापकर्मणां साहाय्यकरण मिति प्रतीयते—११ अ० ५७, १०९—१८१।

† १भा०–४५३ पृ० ४पं०।

वृक्षम्। बतो बलातीतो * भवति दुर्बलो बतासि यम नैव ते मनो हृदयञ्च विजानीमोऽन्या † किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षं लिबुजा ‡ व्रततिर्भवति लीयते विभजन्तीति व्रततिर्वरणाच्च श्रयनाच्च § ततनाच्च वाताप्य मुदकं भवति वात एतदाप्याययति। पुनानो वाताप्यं विश्वश्चन्द्र मित्यपि निगमो भवति। वने न वायो न्यधायि चाकन्। वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा वेति च य इति च चकार शाकल्य उदात्तं त्वेव मा-ख्यात ‖ मभविष्यदसुसमाप्तश्चार्थो रथर्यतीति सिद्धस्तत् प्रेप्सू रथङ्कामयत इति वा ¶। एष देवो रथर्यतीत्यपि निगमो भवति (२८**)। धेनुं न इषं पिन्वत मसक्राम्। असंक्रमणीम्॥ ५ †† ॥

॥ इति षष्ठाध्यायस्य पञ्चमः पादः ॥ ६. ५.

* "बलाद्तितो" क. ख, ग।

† "विजानाम्यन्या" क, ख, ग।

‡ "लिबृजा" क. ख. ग।

§ "सयनाच" क, ख।

‖ "उदात्तं त्वेतदाख्यात" क, ख, ग।

¶ "रथं कामयन्त इति वा" क। "रथं कामयन्त इति वा" ख, ग। "रथं कामयन्ति इति वा" क।—सर्व एवैते पाठा इति विवदाः।

** अत्रैवाष्टाविंशत्खण्डसमाप्तिः क-ख-पुस्तकयोः।

†† नात्र खण्डसमाप्तिः क-ख-पुस्तकयोः; पादसमाप्तेस्तु प्रसङ्गोऽपि न।

"बतो बतासि०——०वृक्षम्" *। यमी, यमं ब्रवीति—"दुर्बलः" 'बत' दुर्बलहृदयः त्वम्, अधर्मभीरुर्मोहमयस्त्वम्। एव मसकृन्मया प्रार्थ्यमानः खेद मुप यासि,—नेच्छसि मया सम्भोगं स त्वं सर्वथा ह्यनु-कम्प्यः, शोच्य इत्यर्थः। अथ वा 'नैव' 'ते' तव 'मनः' सङ्कल्पम्, 'हृदयं' चहृत मध्यवसायञ्च 'विजानीमः'। अथ वा लक्ष्यस्ते मयाभिप्रायः;—'अन्या किल त्वां' मत्तो विशिष्टतरा योषित्, 'परिष्वजाते' "परिष्वङ्क्ष्यते" †; ततः 'किल' त्वं मां तयापहृतचेतस्त्वात् नेच्छसि परिष्वक्तुम्। कथञ्च पुनरन्या त्वां परिष्वङ्क्ष्यते ‡? 'कक्ष्येव युक्तम्', 'लिबुजेव वृक्षम्'। 'कक्ष्या' कक्षजाता 'इव' सुदृढा, 'लिबुजा' वल्ली, यथा 'युक्तम्' आत्मना संयुक्तम् समीपजं परिष्वजेत् परिवेष्टयेत, एवं किल त्वा मन्या परिष्वङ्क्ष्यते इति॥ एव मत्र प्रकरणाविरोधात् 'बत'—इत्येष निपातः खेदानुकम्पयोः॥ अत्र 'कक्ष्येव युक्तम्'—'लिबुजेव वृक्षम्'—(इत्येकः 'इव'-शब्दोऽनर्थकः; अथ वोपमानद्वय मेव स्यात्,—कक्ष्येव च, लिबुजेव च §,—) यथा कक्ष्या च लिबुजा च परिष्वजनीयौ अश्वत्थवृक्षौ परिष्वजेते, एवं परिष्वङ्क्ष्यते इति॥

"वाताप्यम्(११२)"—इति ||, अनवगतम्। "उदकं भवति"—इत्यभिधेयवचनम्। "वातः" हि "एतत्" उदकम् "आप्याययति" प्रीतं करोति। अथ वा आप्यायतिर्वृद्ध्यर्थः स्यात्; पुरो

* ऋ० सं० ७, ६, ८, ३।
†,‡ उभयत्रैव "परिष्वक्ष्यते" क।
§ नास्त्येष पाठः क-पुस्तके।
|| १भा० ४५२ पृ० ६पं०।

वातेन हि वृष्टिभूत मुदकं संवर्द्धते। "नू नो रयि०——०र्वसुर्जग-म्यात्" *। नोधसो गौतमस्यार्षम्। पावमानी सौमी। हे सोम! 'नु नः' क्षिप्र मस्माकम् 'रयिम्' धनम् 'उपमास्व' उपनिर्मिमीष्व। 'नृवन्तं' पुत्रपौत्रैः सहितम्। 'पुनानः' पूयमानः। 'वाताप्यम्' उदकं प्राप्य द्रवीभूतः। 'चन्द्रं' चायनीय मुदकम्। 'विश्वः' च सर्वः पूयमानः। किञ्च; 'प्रतारि' प्रतीर्णं दीर्घं कुरु—हे 'इन्दो' सोम! 'वन्दितुः' स्तोतुः 'आयुः'। किञ्च; तथा उपमास्व, यथा 'प्रातः' नित्य मेव 'धियावसुः' कर्मवसुः। इन्द्रः त्वां पातु मस्माकम् 'आ जगम्यात्' आगच्छेदित्यर्थः॥ एव मत्र "वाताप्यम् = उदकम्" अर्थाविरोधाच्छब्दोपपत्तेश्च॥

"चाकन्(११९)"—इति †, अनवगतम्। "चायन्"—इति, "कामयमानः"—इति शब्दसमाधौ॥ "वने न वायो०——०तमः सुपावान्" ‡। वसुक्रस्येय मार्षम्। ऐन्द्री। त्रिष्टुप्। 'वने न' "वने इव" (वृक्षे इव §)। शकुनिः, स्वे नीडे वाय मात्मीयं पुत्रं 'न्यधायि' निदधाति 'शिशुकम्' अजातपक्षम्। स यथा तत्र निहितः 'चाकन्' "चायन्" पश्यन्, भयाद् द्विशो निरीक्षमाणः आसीत्; अथ वा "कामयमानः" तदुत्सुकमना आसीत्॥ एव मथ मस्मासु वृक्षस्य नीडभूतेषु शकुनि-

* "नू नो रयि मुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्। प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात्॥"—इति ऋ० सं० ७, ४, ९, ५।

† १भा० ४५५ पृ० १५ पं०।

‡ "वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः। यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः सुपावान्॥"—इति ऋ० सं० ७, ७, ११, १।

§ न दृश्यते इदं पदे क-पुस्तके।

पुत्रभूतः, 'शुचिः' व्यपगतसर्वदोषः युवयोः स्वभूतः, 'सोमः'। हे 'भुरण्यौ' भर्त्तारौ अश्विनौ! क्षीप्रौ वा; भुरण्युरिति क्षिप्रनामेति*। किञ्च; यस्य सोमस्य 'पुरुदिनेषु' बहुष्वहःसु 'इन्द्रो होता' इन्द्रोऽप्याक्राता भवति,—ममायं सोमः स्यादिति। किंलक्षणः पुनरिन्द्र आक्राता? यः 'नृणां नृतमः' मनुष्याणामपि मनुष्यतमः, शूराणामपि मध्ये शूरतम इत्यर्थः। 'नर्यः' च नृभ्यो हितः, यः 'क्षपावान्' च रात्रिपर्यायेषु सोमभागी। एवङ्गुणयुक्तेन यः सोम इन्द्रेणापि प्रार्थ्यते, अस्मासु वर्त्तमानः, स युवां प्रति 'अजीगः' नित्यकालमेव गच्छतीत्यर्थः॥

एवन्तावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते, तदसाधु; ऐन्द्रे हि सूक्ते प्रथमैवेयमृग् भवति†। तत्र पुनः पृष्ठ्यस्य षष्ठेऽहनि सोमे वर्द्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते‡। हे 'भुरण्यो' भर्त्तारौ, देवतानाम् पती! य एषः सोमोऽस्मासु निहितः, 'शुचिः' व्यपगतदोषः, शकुनिपुत्र इव, 'वने' वनावयवे वृक्षे, 'चाकन्' पश्यन्निव कामयमान इव वा इन्द्रम् आस्ते। यः सोमः, तस्य किम्? इति,—यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आक्राता अभूत्; अपि नाम मामनेन सोमेन स्तुयुरिति। किंलक्षणः पुनराक्राता यस्येन्द्रः? इति,—नृणां नृतमः नर्यश्च क्षपावांश्च। समानमेतत् पूर्वेणैवार्थेन। यमेवमिन्द्रः प्रार्थयते, स एषः

* १आ० १५७ पृ० २ख० १५ ख० (१४); २११ पृ० ९पं।

† "वनेनवंत्यष्टर्चं चयोदशं सूक्तम्, वसुक्रस्यार्षं त्रैष्टुभमैन्द्रम्, आनुक्रान्त्य वनेनाद्यामिति।"—इति तत्रैव सा० भा०।

‡ "सोमे वर्द्धमाने ब्रा० चन्त्य मर्या वने न वायः"—इति आ० ७. ११।

सोमः, तं प्रत्यञ्चीगः, गच्छतीत्यर्थः । अथ वा स एषः सोमो-ऽस्माभिरुदीर्यमाणः, तस्येन्द्रस्य गुणान् गृह्णातीति स्यात्; "जिगर्त्तिः० ——०गृह्णातिकर्मा वा"—इति ह्युक्तम् * ॥ एव मत्र 'चाकन्'—इत्यस्य "चायन्"—इति, "कामयमानः—इति वा"—इत्येतौ विपरिणामावुपपद्येते, शब्दसारूप्यादर्थाविरोधाच्च ॥

एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, त माह भाष्यकारः,—"वा—इति च, यः—इति च, चकार शाकल्यः"—इति। शाकल्यः पदकारः। तदेतद् विचार्यमाणं न साधु भवति, किङ्कारणम्? "उदात्तं त्वेव माख्यात मभविष्यत्"। 'एवम्' एतस्मिन् पदद्वये सति, यदेतत् 'आख्यातं' त्वधायीति, एतत् 'उदात्तम् अभविष्यत्'; यद्वृत्तात्परस्य नित्य माख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते†, न चेद मुदात्तम्; तस्मात् 'यः'–इति नेदं यद्वृत्तम्। किन्तर्हि? 'वायः'—इति एकं पदम्। किञ्च; "असुसमाप्तश्चार्थः" अपुष्कलः; एव मेतस्मिन् पदद्वये सति मन्त्रस्यार्थो ऽसुसमाप्तो भवति। कथम्? द्विपदत्वे हि सति 'वा'-शब्दस्यार्थेन केन चिद् भवितव्यम्, न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति। तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे, 'वायः'–इत्येतदेकपद मेव; "शकुनिपुत्रः" एव चास्याभिधेयः उपपद्यते ॥

* पु० १७४ पृ० १७५ ।

† लक्षणविदः; पाणिन्यादिव्याकरणप्रवक्तार इति यावत् । तथा च सूत्रम् "यद्वृत्तान्नित्यम"—इति पा० ८, १. ६६ ।

"रथर्यति(११५)"—इति *, अनवगतम्। 'रथं इर्यति'—इत्यवगमः; इर्यति-शब्दोहि प्रेप्सायाम्; "रथं" हि यः "कामयते", स रथर्यति। "एष देवो०——०वग्वनुम्" †। शुनःशेपस्यार्षम्। पावमानी सोमी। गायत्री। यावस्तुत आवापे। 'एषः' सोमो 'देवः' 'रथर्यति' रंहण मात्मनो गमन मिच्छति। 'पवमानः' 'दशस्यति' दान मात्मन इच्छति; कथं नाम मां देवेभ्यो दद्युरिति। किञ्च; 'आविष्कृणोति' प्रकाशीकरोति 'वग्वनुम्' वचो वननीयम्, दत्त मां देवेभ्य इति॥ एव मत्र "रथर्यति = रथप्रेप्सुः" शब्दसाहृप्यादेतदुपपद्यते॥ (२८‡)

"असश्चाम्(११६)"—इति §, अनवगतम्। "असङ्क्रमणीम्"—इति शब्दसमाधिः। "पुरु हि वां०——०राति मग्मन्" ||। भरद्वाजस्यार्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। 'पुरु' बहु 'देष्णं' दानं 'वां' युवाभ्यां यज्ञे यस्मात् हे 'पुरुभुजौ' बहुभोजिनौ! अश्विनौ! तस्मात् युवां ब्रूमः,—'धेनुं नः' तर्पयित्री मस्मभ्यम् 'इषम्' अन्नलक्षणम् 'पिन्वन्तम्' प्रचारयन्तम्, 'असश्चाम्' असङ्क्रमणशीलाम् अनपायिनीम् अस्मत्तः; अथ वा असङ्क्रमणशीलां

* १मा० ४५४ पृ० १पं

† "एष देवो रथर्यति पवमानो दशस्यति। आविष्कृणोति वग्वनुम्॥"—इति ऋ० सं० ९, ७, १०, ५।

‡ अत्रैव पञ्चमखण्डसमाप्तिः पादसमाप्तिश्च इतिसम्मता परं मूलविवरेति कलामादरणीयेत्यस्माकम्। अष्टाविंशखण्डसमाप्तिस्तु क-च-पुस्तकानुसृतैव परं न तत्रापि पाद व्यवस्थेति।

§ १मा० ४५४ पृ० ४पं०।

|| पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वत मसश्चाम्। स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वां मनु रातिं मग्मन्॥"—इति ऋ० सं० ५, १, ७, २।
.मे वह्नमान का"

याम्, 'इयम्' इड्-हेतुदक मस्मदर्थं प्रचारयत मिति स्यात् । किम्पुनः तद् युवयोर्वऊदानम्? इति,—'सुतश्च' सुत-श्चत्त्वांश्च सोमो युवयोरन्नम् । हे 'माध्वी' मधुपौ ! 'सुष्टुतिश्च' शोभनाभिः स्तुतिभिः सुष्टु स्तुतः, 'रमाश्च' आज्यादयः, य एते 'राति' पुरोडाशस्यानुगच्छति, सर्व एते युवयोरेव । तस्माद् ब्रवीमि,—पिबत मिति ॥ एव मत्र शब्दमाहूप्यादर्थाविरोधाच्च 'अस्कम्'—इत्यस्य शब्दस्य "अस्कृमणीम्" —इत्येष विपरिणाम उपपद्यते । इडभिधेया, द्यौर्वा ॥ ५ * ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)

पञ्चमः पादः ॥ ६, ५ ॥

---

॥ षष्ठः पादः ॥

आधवं आधवनात् । मतीनां च साधनं विप्राणां चाधव मित्यपि निगमो भवत्यनवब्रवोऽनवक्षिप्तवचनः । विजेषकृदिन्द्र इवानवब्रव इत्यपि निगमो भवति ॥ १ (२९) ॥

"आधवः(११०)"—इति ‡ अनवगतम् । "आधवनात्"—इत्यवगमः; आकम्पनादित्यर्थः । "मंसीमहि०——०चाधवम्" । ऐन्द्रस्य

* पादान्वितमूलपुस्तकानुरोधत एवेह पञ्चमखण्डसमाप्तिः पञ्चमपादसमाप्तिश्च स्वीक्रियतेऽस्माभिः, इत्तौ लिखतः प्रागेव ।

† १भा० ४५४ पृ० ११पं० ।

‡ "मंसीमहि त्वा वय मस्माकं देव पूषन् । मतीनां च साधनं विप्राणां चाधवम् ॥"—इति ऋ० सं० ७, ७, ११, ४ ।

विमदृश्यार्षम्। अनुष्टुप्। पौष्णी। 'मंहीमहि' त्वां हे 'पूषन्'! 'देव!' 'मतीनां' च प्रज्ञाना मस्माकं साधयितारम्; आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते। किञ्च; ये चान्ये 'विप्राः' प्राप्तप्रज्ञाः मेधाविनः, तेषाम् 'आधवम्' आकम्पयितारं त्वय मेव। तथा त्व मात्मनो गुणवत्तां दर्शयसि, यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च "आधवः = आकम्पयिता"—इत्युपपद्यते॥

"अनवब्रवः"(११८)—इति *, अनवगतम्। "अनवच्छिन्नवचनः"—इति अवगमः। "विजेषकृदिन्द्र ——॰यत आ बभूथ" †। मन्योरार्षम्। त्रिष्टुप्। मान्यवे सूक्ते। श्येनादिषु निष्केवल्ये शस्यते। 'विजेषकृत्' विजयकृत्, 'इन्द्रः इव अनवब्रवः' इन्द्र इवानवच्छिन्नवचनः; न हीन्द्रस्य केनचिदाच्छिद्यते वचः। हे 'मन्यो!' यस्त्वम् अनवच्छिन्न-वचनः इन्द्र इव, स त्व मस्माकम् 'अधिपाः' अधिष्ठाय पाता 'भव'। किञ्च; हे 'सहुरे' शत्रूणां सहनशील! 'प्रियं त' यत् 'नाम', तेन त्वां 'गृणीमसि' नित्य मेव स्तुम इत्यर्थः। किञ्च; 'विद्म' जानीमो वयम् 'तम्' 'उत्सम्' उत्स्यन्दनम्, 'यतः' त्वम् 'आ बभूथ'॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च "अनवब्रवः = अनवच्छिन्नवचनः"—इत्युपपद्यते॥ १ (२९)॥

* १भा॰ ४५४ पृ॰ १४ पं॰।

† "विजेषकृदिन्द्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ॥"—इति ऋ॰ सं॰ ८, ३, १९, ५।

अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ अदायिनि काणे विकटे काणो *ऽ(!)विक्रान्तदर्शन इत्यौपमन्यवः कणतेर्वा स्यादणुभावकर्म्मणः कणतिः शब्दाणुभावे† भाष्यतेऽनुकणतीति मात्राणुभावात्कणो‡ दर्शनाणुभावात्काणो विकटो विक्रान्तगतिरित्यौपमन्यवः कुटतेर्वा स्याद्(विपरीतस्य§) विकुटितो भवति गिरिं गच्छ सदानोनुवे शब्दकारिके। शिरिम्बिठस्य सत्वभिः। शिरिम्बिठो मेघः शीर्यते बिठे (बिठ मन्तरिक्षम्||) बिठं बीरिटेन व्याख्यातं तस्य सत्त्वैरुदकैरिति स्यात्तैष्ट्वा चातयामोऽपि वा शिरिम्बिठो भारद्वाजः कालकर्णोपेतोऽलक्ष्मीर्न्निर्णाशयाञ्चकार तस्य सत्त्वैः कर्म्मभिरिति स्यात्तैष्ट्वा चातयामश्चातयतिर्न्नाशने पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवतीन्द्रोऽपि पराशर उच्यते (परा¶) शातयिता यातूनाम्। इन्द्रो यातूना मभवत्पराशर इत्यपि निगमो भवति। क्रिविर्दती विकर्त्तनदन्ती। यचा

* "काणे" ङ।

† "शब्दानूभावे" क, ख, ग।

‡ "मात्राणूभावात्काणो" ङ, "मात्राणूभावात्कणा" ख।

§, ||, ¶ नैतानि द्वयन्ते क-ख-ग-पुस्तकेषु।

**वो दियुद्दन्ति क्विर्दतीत्यपि निगमो भवति। करूलती कल्दतौ* (अपि वा देवं कञ्चित् कृत्तदन्तं दृष्ट्वैव मवक्ष्यत् †)॥ २(३०)॥**

"सदान्वे(११९)"—इति ‡, अनवगतम्। "सदानोनुवे"—इति शब्दसमाधिः। "अरायि काणे०——०चातयामसि" §। शिरिम्बिठस्य भारद्वाजस्य आर्षम्। अनुष्टुप्। दुर्भिक्षाधिदेवतोच्यते, कालकर्णी वा अलक्ष्मीः ‖। हे 'अरायि' "अदायिनि!" दुर्भिक्षाधिदेवते! अथ वा हे अलक्ष्मि! दुर्भिक्षेण पीड़ितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याभिभूतानाम्। 'काणे' दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति, अन्नाभावात्; अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते; लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति सोच्यते। 'विकटे' दुर्भिक्षे दुर्बलत्वात् विकटैव प्राणिनां गतिर्भवति; अलक्ष्मीरपि तद्रूपा। 'गिरिं गच्छ' माचात्मस्थानं कार्षीः। 'सदान्वे' "सदानोनुवे शब्दकारिके"; दुर्भिक्षे हि क्षुत्पीडिताः प्राणिनो निश्वसन्तः सदैव शब्दं कुर्वन्ति; अलक्ष्मीरपि तद्रूपा,—पिशाचादीनि नित्य मव्यक्तं शब्दं कुर्वन्ति;—पिशाचाद्या हि गृहं नसुनायन्तस्थिति लोके वक्तारो भवन्ति, एतत् प्रसिद्धम्। 'शिरिम्बिठस्य' मेघस्य स्वभूतैः 'सत्वभिः' 'उदकैः"; "सत्वम्"—इति ह्युदकनामसु पठि-

* "कनकती कनदृतौ" ग।
† नास्त्येष पाठः क ख-ग-ङ पुस्तकेषु।
‡ १भा० ४५५पृ० १पं०।
§ ऋ० सं० ८, ८, १९, १।
‖ "अरायि शिरिम्बिठो भारद्वाजोऽलक्ष्मीघ्नम्।"—इत्यनुक्रमणी।

नाम्यते। "अपि वा शिरिम्बिठो भारद्वाजः", "तस्य सर्वैः नामभिः" *, तेन यानि दृष्टानि नामानि, सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नामयामः॥ एव मत्र शब्दार्थाविरोधात् "सद्रान्वे"—इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते॥

निगमप्रसक्तान्यधुनोच्यन्ते;—"राति, रासति"—इति दानकर्मसु पठितः†, तस्य प्रतिषेधपूर्व्वस्य 'अ-रायि'—इति भवति। "कणतिः, शब्दाणूभावे भाष्यते,—अनुकणतीति"; "मात्राणूभावात्" "कणः" श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्" "काणः"। अथ वा "काणः = विक्रान्तदर्शनः"—"इत्यौपमन्यवः"; विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात्। "काणः = अविक्रान्तदर्शनः"—इति वा, मन्दचक्षुष्ट्वात्। "विकटः = विक्रान्तगतिः" विकृतगतिरित्यर्थः ‡। अथ "वा" "कुटतेः" धातोः "स्यात्"; असौ हि "विकुटितो भवति", कुब्जीभूत इत्यर्थः। "विठम्"—इत्यपठित मन्तरिचनामसु, तत् पुनरेतत् "बीरिटेन व्याख्यातम्"; अत्र ह्युक्तम्,—"बीरिट मन्तरिक्षम्, भियो वा भासो वा ततिः" §। तस्मिन् "विठे" यः "शीर्यते", सः "शिरिम्बिठो(११०) मेघः" ||। "अपि वा शिरिम्बिठो भारद्वाजः", सोऽनेन सूक्तेन "अलक्ष्मीः निर्नाशयाञ्चकार"—इति निदान मन्वाख्या-

* "तस्य सर्वैः कर्मभिः"—इत्येव पाठोऽस्मद्हस्तेषु रोथहस्तेषु च सर्वमूलपुस्तकेषु। सायणेनाप्येव मेव पाठ उद्धृतः ऋग्भाष्ये।

† १भा० ३५५पृ० २ख० २० ख० (४, ५)।

‡ "विकटः = विक्रान्तगतिरित्यर्थः" क।

§ पृ० १११ पृ० १९ पं०।

|| १भा० ४५५ पृ० ४पं०।

तम् * । अथापि योऽलक्ष्म्याभिभूतो भवति, स आस्यदघ्ने उदकेऽवतीर्य सूक्तमेतज्जपति, तस्यालक्ष्मीर्निनश्यति † ॥

"पराशरः(१२१)"—इति‡, अनवगत मनेकार्थञ्च। "पराशीर्णः" —इत्यवगमः। "प्र ये गृहाद०——०व्युच्छान्"§। वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते त्रिष्टुप्। प्रकर्षेण 'ये' 'अममदुः' तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु। हे इन्द्र! 'त्वाया' त्वया सह 'पराशरः' च 'शतयातुः' बहूनां रक्षसां यातयिता; तेन हि रक्षोघ्नं सत्र माहृत मासीदिति भारते श्रूयते। 'वसिष्ठः' च इत्येवमादयः। किं तेषाम्? इति,—'न' 'ते भोजस्य' भोगिनः तव 'सख्यं' सखिभावं 'मृषन्त' मार्जयन्ते नाशयन्तीत्यर्थः। 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः', 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः। तेषा मेव सुप्रभाता रात्रयः इत्यभिप्रायः। एव मत्र "ऋषिः = पराशरः" वसिष्ठसम्बन्धात् ॥

"इन्द्रोऽपि पराशर उच्यते"; स हि "परा" परितः "शातयिता" "यातूनां" यातयितव्यानाम्, असुरादीना मिति। "इन्द्रो यातूना मभवत् पराशरः"—इति‖। व्याख्यातः शेषः¶ ॥

"क्रिविर्दती(१२२)"—इति**, अनवगतम्। "विकर्त्तनदन्ती"—

* "निदानं व्याख्यातम्" क।

† "जपहोमादिभिरिदं सूक्त मलक्ष्मीनाशकरम्"—इति सा० भा०।

‡ १भा० ४५५ पृ० ९ पं०।

§ "प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान्॥"—इति ऋ० सं० ५, ९, १८, १।

‖ ऋ० सं० ५, ७, ९, १।

¶ १भा० ४५० पृ० ११ पं०।

** १भा० ४५५ पृ० १२ पं०।

इत्यवगतमः। "यूयं न उग्रा०——०बर्हणा"*। अगत्यस्यार्षम्। जगती। हे 'मरुतः!' 'उग्राः' उद्गूर्णाः, 'अरिष्टग्रामाः' अनुपहिंसित-सङ्घाताः यूयम्, अस्माकं 'सुचेतुना' शोभनेन प्रज्ञानेन, एतां 'सुमतिं' शोभनां मतिम् 'पिपर्त्तन' पूरयत पालयत वा। केन पुनः पूरयत? कुतो वा पूरयत? इति,—"यत्रा वो दिद्युत्"। 'यत्र' यस्मिन् मेघे 'दिद्युत्' आयुधं क्षिप्तं युष्माभिः, त मेव मेघं 'रदति' विलिखति, विदारयति वर्षार्थम्। किंलक्षणा पुनर्दिद्युत्? इति,—'क्रिविर्दती' विकर्त्तनसमर्थैः दन्तैः या रदति। कथम्पुनर्या रदति? "रिणाति पश्वः सुधितेव" इति। यथा 'पश्वः' पशोः अङ्गानि 'रिणाति' पृथक् करोति, 'सुधिता' स्वधित्या, 'बर्हणा' परिवृढया हिंसया, एव मस्मिन् मेघे दिद्युदः ता रदन्ति। ततः प्रभ्रष्टेनोदकेन सुमति मस्माकं पिपर्त्तन॥ एव मन्त्रार्थाविरोधाद्दायुधं 'क्रिविर्दती'-शब्देनोच्यत इत्युपपद्यते॥

"करूळती(१२२)"—इति †, अनवगतम्। "कृत्तदती"—इत्यवगमः॥ २ (३०)॥

**वामंवामं त आदुरे देवो ददात्वर्यमा। वामं पूषा वामं भगो वामं देवः करूळती॥ वामं वननीयं भवत्यादुरिरादरणात्तत्कः करूलती भगः पुरस्तात्तस्या-न्वादेश इत्येकं पूषेत्यपरं सोऽदन्तकोऽदन्तकः पूषेति च**

* "यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन। यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा॥"—इति ऋ० सं० १, ४, १, १।
† १भा० ४५५ पृ० १७ पं०।

आख्यानम्। इनो विश्वं इन्द्र मृध्रवाचः दासमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु। अवीरां मिव मा मयं शरारुरभि मन्यते। अबला मिव मा मयं बालोऽभिमन्यते संशिशरिषुरिदंयुरिदं कामयमानोऽयापि तदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यप्यर्थः। अश्वयुर्गव्यूरथयुर्वसूयुरित्यपि* निगमो भवति॥ ३(३१)॥

"वामंवामं त०——०देवः करूळती"†। वामदेवस्यार्षम्। ऐन्द्रे सूक्ते। अनुष्टुप् रात्रिपर्याये प्रशास्तुः शस्त्रे विनियुक्ता। 'वामं वामम्'—इति भूयस्त्वार्थोऽभ्यासः; "अभ्यासे भूयांस मर्थं मन्यन्ते"—इति हि वक्ष्यति। यद्यत् सुष्ठु "वननीयम्" इष्टम्, 'ते' तव धनम्, तत्तत् हे 'आदुरे' आदरवन्! यजमान! स हि यागं प्रति नित्यम् आदृतो भवतीत्यत एवं सम्बोध्यते—हे आदुरे!। 'वामं ददात्वर्यमा'। यदर्यम्णो 'वामं' "वननीयम्" इष्टम्, आत्मनो धनम्, तत् असौ तुभ्यं 'ददातु'। किञ्च; 'वामं पूषा' ददातु। 'वामं भगः' ददातु। 'वामं देवः करूळती' ददात्वित्येतदेवानुवर्त्तते। 'करूळती'—इत्येतद् गुणपदत्वात् सन्दिह्यते, "तत्" एतत् विचार्यते—"कः करूळती?"-इति। "भगः पुरस्तात्" 'करूळती'-शब्दस्य। "तस्य" एवायम् "अन्वादेशः" सन्निधानसामर्थ्यात्।—"इत्येकम्" आचार्यमतम्। "पूषा—इति अपरम्"।

* "रथयुर्वसूयुरिन्द्र इत्यपि" क, च

† ऋ० सं० ३, ९, १२, ४।

किङ्कारणम्? "सः" हि पूषा "अदन्तकः"। आह,—कुत एतत्? इति उच्यते,—"अदन्तकः पूषा—इति च ब्राह्मणम्"। (प्राशित्र-भागब्राह्मणे हि श्रूयते,—"तत् पूष्णे पर्य्याजह्रुः, तत् पूषा प्राश्नात्, तस्य दन्तो निर्जघान; * तस्मादाहुः,—अदन्तकः पूषा"—इति †)। यत् पुनरेतदुक्तं सन्निधिसामर्थ्याद् भगः करूलती स्यादिति। अकारण मेतत्;—"यस्य येनार्थसम्बन्धो दूरस्थ मपि तस्य तत्। अर्थतो ह्यसमर्थाना मानन्तर्य्य मकारणम्"—इति न्यायविदः पठन्ति॥ तस्मात् पूषैव 'करूळती'—इत्युच्यते‡, अदन्तकत्वा-दर्थोपपत्तेश्चेति॥

"दनः(१२४)"—इति §, अनवगतम्। "दानमनसः"—इत्यवगमः। "दनो विश इन्द्र •——• कुत्साय रन्धीः" ‖। अगस्त्यस्यार्षम्। हे 'इन्द्र!' 'दनः' "दानमनसः" एव एतान् अस्मभ्यं 'विशः' "मनुष्यान्", "कुरु" 'मृध्रवाचः' "मृदुवाचः"। कस्मात् पुनरेव मुच्यते? इतः,—'यत्' यस्मात् त्वम् 'सप्त' सप्ताः, 'पुरः' मेघपुरः, 'शारदीः' शरत्कालोत्थाः, संवत्सरोत्था वा; संवत्सरोऽपि हि शरदित्यु-च्यते,—"स जीव शरदः शतम्"—इति ¶ लिङ्गात्। 'शर्म' सुख मिच्छन्

* ब्राह्मणमन्ये तु इह 'तथेन्द्रं तदाह'"—इत्यधिकं दृश्यते।

† श० प० ब्रा० सु० ७२ पृ०। बम्बमौपिकाकमैतपाठस्तु क-पुस्तके नास्ति।

‡ 'करूलती'—शब्दः प्रातिशाख्यशासनात् संहितापाठे 'करूळती' भवति; इतो यत्र यत्र प्रतीकत्वेन गृहीतः, तत्र तथाप्येव मेव, नान्यत्र।

§ १भा० ४५९ पृ० ५पं०।

‖ दनो विश इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त्। ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः॥"—इति ऋ० सं० १, ४, ९, १।

¶ ब्रा० स० ब्रा० १, ५, १०।

जनानां 'दर्त्' दारयसि। किञ्च; 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' उपगमितवानसि इमं लोकं प्रति 'अपः'। स्वभाव एवैष तव लोकाननुगृह्णीतु मित्यभिप्रायः। किञ्च; "यूने वृत्रम्"। यौतिः स्तुत्यर्थः*। स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे 'वृत्रं धनं'† 'रन्धीः' सम्पादितवानसीत्यर्थः। यत एव मुपकारे प्रसक्तो भवान् स्तोतॄणा मन्येषाञ्च जनानाम्, तस्माद् ब्रूमोऽस्माक मपि एतान् मृद्वाचः कुरु मनुष्यानिति॥ एव मत्र 'दनः'—इत्यस्मिन् पदे दकारे "दानमनसः"—इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, 'न'-कारस्यासम्योगे विभज्योदाहृतः; तथार्थोपपत्तिदर्शनात्। "कुरु"—इत्येतच्चार्थपरिसमाप्त्यर्थ मध्याहृतम्। उत्तरास्त्रयः पादा हेतुभावेन; 'सप्त यत् पुरः'—इत्येतस्मात् सर्वनामसम्बन्धात्॥

"शरारुः (११५)"—इति ‡, अनवगतम्। "संशिशरिषुः"—इत्यवगमः। "अवीरा मिव ०——० दिन्द्र उत्तरः" §। पङ्क्तिः। ऐन्द्री। इन्द्रपत्नी एवं ब्रवीति,—'अवीरा मिव' "अबला मिव" अपरिग्रहा मिव। 'माम् अयं' 'शरारुः' "बालः" मूर्खः "संशिशरिषुः" संशरितु मिच्छन् शरीरं तित्यक्षुरित्यर्थः। 'अभि मन्यते' अभिभविष्याम्येता मित्येव मन्यते; क्षुद्रया बुध्या। नहुषो ऽन्यो वा कश्चित्;

* १भा० २२१ पृ० ३प० १४ खं० (१७)।
† १भा० ९११ पृ० १प० १० खं० (१०)।
‡ १भा० ४५९ पृ० ७पं०।
§ "अवीरा मिव मामयं शरारुरभि मन्यते। उताह मस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः॥"—इति ऋ० सं० ८, ४, १, ५।

"नक्षत्रेण हीन्द्राण्यभिभवितु मारब्धासीत्"—इत्याख्यानं श्रूयते *।
"उताह मस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी? 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी;—'मरुत्सखा' यः 'इन्द्रः' 'विश्वस्माद्' सर्वस्माद् यश्च 'उत्तरः' 'जगतः' उद्यततरः प्रभावेन, स मे वीरः; तदयं वालो न मन्यते, येन मामभिभवितु मिच्छतीत्यभिप्रायः ॥ एव मत्र "शरारुः= संशिशरिषुः", शब्दसारूप्यादर्थोपपत्तेश्च ॥

"इदंयुः(१२९)"—इति †, अनवगत मनेकार्थञ्च। इद मिति यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। 'युः'—इत्येष शब्दोऽप्रसिद्धः कामयतेऽर्थे, तेनानवगत मेतत् स्यात्। "नामाधियो वसूयवः"—इत्यनेन ‡ गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति। वार्त्तिककारेणाप्युक्तम्,—"निगमत्वाद्दुत्कर्षो भवति पदम्"; तद्धितः, तथा धातुः, उपसर्गगुणः, निपाताश्च मन्त्रगताः सर्वथा लभ्याः ॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थे भाष्यते"। आह,— कि मुदाहरणम्? "वसूयुरिन्द्रः"—इति, वसुमानित्यर्थः। "इन्द्रो अश्रायि ०——० प्रयन्ता" §। सव्यत्व मापन्नस्येन्द्रस्येय मार्षम् ‖।

* "वृषाकपिर्नामेन्द्रस्य पुत्रः, स चेन्द्राणीन्द्रवैते त्रयः संहताः संविवादं कृतवन्तः"—इति तत्रैव सूक्तारम्भे सा० भा०।

† १भा० ४५९पृ० १२पं०।

‡ पृ० १५५पृ० ८पं०।

§ "इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता ॥"—इति ऋ० सं० १,४,११,४।

‖ "अङ्गिरा इन्द्रतुल्यं पुत्र मिच्छन्नभ्यध्यायत्, तस्य हतीन्द्र एवास्य पुत्रोऽजायतेति ॥"—इत्यनुक्रमणी।

। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। यः 'इन्द्रः' 'श्नथयि' शृणाति, हिनस्तीत्यर्थः। 'धृष्णुः' धृष्णुविक्रमः, अजिह्मयोधी; अथ वा शोधयिता योधानां प्रहारैः, सुधीर्वा स्यात्*। क्व पुनः शृणाति? 'निरेके' सङ्ग्रामे यत्रैकोऽप्यन्यः सहायो नास्ति, तत्र एक एव शत्रून् हन्ति। 'पत्येषु' प्रार्जितायुधेष्वपि पदेषु सङ्ग्रामेषु। किञ्च; 'स्तोमो न' स्तोम इव। यः प्रधानः त्रिवृत् स्तोमः, पञ्चदश इति हि व्यपदेशः; क्षेमे प्रभवति स्तोमेन तस्य प्राधान्यात्†। किञ्च; यः इन्द्रः 'दुर्यो न' दुर्य 'इव यूपः' यः प्रधानः। तस्य किम्? इति,— स इन्द्रः 'अश्वयुः' अश्वैस्तद्वान्। 'गव्युः' गोभिः तद्वान्। 'वसूयुः' अन्नैर्वसुभिः तद्वान्। एवङ्गुणविशिष्टो 'यः इन्द्रः', सः 'रायेषु' धनेषु जनानां दातव्येषु 'क्षयति' इष्टे। 'प्रयन्ता' प्रकर्षेण दातेत्यर्थः‡॥ एव मत्र 'वसूयुः'—इत्ययं यु-शब्दः "तद्वदर्थे"। किङ्कारणम्? न ह्रीन्द्रो वसु कामयते, सुपूर्णत्वात्; परिशेषात् अयं "तद्वदर्थे भाष्यते"—इत्युपपद्यते॥ ३ (२१)॥

**किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दुह्रे॒ न त॑पन्ति घ॒र्म्मम्। आ नो॑ भर प्र॒मग॑न्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन्रन्धया नः। किं ते कुर्वन्ति कीकटेषु गावः कीक-**

* मूले तु "सुध्यः"—इति पाठः। "धीरिति कर्मनाम शोभना वीर्यनाम्"—इति च सायणः।

† ताण्ड्यद्वितीयचतुर्थाध्यायौ द्रष्टव्यौ।

‡ "रायः" इति मूलपाठः। "रायः प्रयन्ता, धनस्य दाता; 'इन्द्र इत्' इन्द्र एव यजमानानाम्"—इत्याह च सायणः।

टा नाम देशोऽनार्यनिवासः कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा नैव* चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यं माहर नः प्रमगन्दस्य धनानि मगन्दः कुसीदी माङ्गदो मा मागमिष्यतीति† च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः‡ प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः पण्डको वा पण्डकः पण्डगः§ प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति|| तस्तम्भे¶ नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिररणात्तन्नो मघवन्नन्धयेति रध्यतिर्वशगमने बुन्द इषुर्भवति (वुन्दो वा**) भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥ ४ (३२)॥

"कीकटेषु(११०)"—इति††, अनवगतम्। "किङ्कृताः"—इति शब्दसमाधिः, "किं क्रियाभिः—इति" "वा"। "किं ते कृण्वन्ति० ——० रन्धया नः"‡‡। विश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्।

* "किं क्रियाभिरभिप्रेप्सा नैव" क, ख, ग।

† "माङ्गदो मां गमिष्यतीति" क, ख, ग।

‡ "प्रमगन्दोऽत्यन्तः कुसीदः कुलीनः" क, ख, ग।

§ "पण्डक" क, ख। "पण्डगः" ग।

|| "व्रीलयति" क, ख, ग।

¶ "तस्थं" क, ख, ग। इत्यसम्मतश्च।

** नास्त्येष पाठः क-ख-ग-पुस्तकेषु।

†† १भा० ४५०४० ३प०।

‡‡ ऋ० सं० ३, ३, २१, ४।

इन्द्र! याः 'कीकटेषु' अनार्यदेशनिवासिषु मनुष्येषु 'गावः', ताः 'ते' तव 'किम्' कमुपकारं कुर्वन्ति? न कश्चिदपीत्यभिप्रायः। "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि घर्मे तप्यमानेऽङ्गभावं गच्छन्ति; नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः। यत एव मतो ब्रूमः,—"आ हर नः" ताः गाः; वयं तव, ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः। किञ्च; यदप्येतत् 'प्रमगन्दस्य' वृद्धिजीविनो धनम्, एतच्च तथा अस्मभ्य माहर; तदपि न क्रियासु "तत्स्थं" विनियुज्यते, वयं तद् विनियोक्ष्याम इत्यभिप्रायः। "प्रमदको वा" नित्यप्रमुदितो विषयपरः प्रमगन्दः स्यात्। "पण्डको वा" नपुंसकः प्रमगन्दः स्यात्। तयोर्वा धनानि क्रियासु न विनियुज्यन्ते, शब्दमाहृप्यथ प्रमगन्दशब्दे उभयोरस्ति; तस्मात् तावप्युपद्येते। "नैचाशाखं मघवन्रन्धया नः"। यदनेषा मन्यतमस्य नीचशाखाप्रसूतस्य नीच-वंशप्रसूतस्य दीनतुल्यस्य धनम्, तत्*। हे 'मघवन्!' शीघ्रं 'रन्धय' संसाध अस्मद्वशं कुर्वित्यर्थः॥

एव मत्र 'कीकटाः' "किं कृताः" किं ते कृताः? इत्येव मभिव्याहार मर्हन्ति, न तैः कश्चिदर्थोऽस्ति; न ते देवपितृमनुष्याणा मुपकारं कुर्वन्तीत्यर्थः। अथ "वा" "किं क्रियाभिः?"— "इति" एवं "प्रेप्साः" ते नास्तिका एवमभिप्राया इत्यर्थः।

* नीचासु शूद्रयोनिषूत्पादिता शाखा पुत्रपौत्रादिपरम्परा येन स नीचाशाखः। * * *। तस्यस्मभ्य धनं नैचाशाखम्॥"—इति चतैव सा॰ भा॰।

एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च "कीकटाः = अनार्यदेशनिवासिनः" —इत्युपपद्यते * ॥

"मगन्दः = कुसीदी"—इत्युच्यते; स हि "माम्"-इयात् अद्यतनोऽर्थः, अयञ्च "आगमिष्यति"—इत्येव मनुचिन्त्य, परेभ्यो धनानि "ददाति"। "तदपत्यं प्रमगन्दः, अत्यन्तकुसीदिकुलीनः" तद्धितार्थे प्रः, प्रमगन्दः; 'प्रस्कण्वस्य'—इति † यथा। "प्रमदकः" प्रमादशीलः;—"अय मेवैको लोकोऽस्ति, न परः"—"इति" एवं "प्रेप्सुः" नास्तिकः। "पण्डकः" तृतीया प्रकृतिः; स हि "पण्डगः" पण्डं गच्छति, स्त्रीरूपत्वात्। "प्रार्दकः"—इति "वा" स्यात्; "प्र" प्रकर्षेण ह्यसौ "अर्दयति" अङ्गानैः सह स्त्रीत्वेन गच्छति "आण्डौ"। कस्मात् तौ "आण्डौ"? "आणौ इव व्रीडयति"; तौ ह्यसौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्द्धमानः "आणौ इव व्रीड़यति" सम्भ्रमतीत्यर्थः ‡ ॥

"बुन्दः(१९८)"—इति §, अनवगतम्। "इषुर्भवति"—इत्यभिधेयवचनम्। "भिन्दो वा भयदो वा भासमानो द्रवतीति वा"—इति शब्दसमाधयः ॥ ४ (३२) ॥

* कीकटो मगधः। तथाहि—"कीकटेषु गया पुण्या, पुण्यं राजगृहं वनम्। च्यवनस्याश्रमः पुण्यो, पुण्या नदी पुनःपुना ॥"—इति शब्दकल्पद्रुमधृतं वायुपुराणवचनम्।

† प्रस्कण्वः = काण्वः ऋ० सं० १. ४४—५०; ८. ४९; ९. ९५

‡ "आचाः समोतेः"—इत्यादि भाष्य मस्याज्ञात मेव स्थितम्।

§ १भा० ४५७ पृ० ९पं०।

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ॥
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥
तुविक्षं बहुविक्षेपं* महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्मय† उभौ ते बाहू (रण्यौ‡) रमणीयौ साङ्ग्राम्यौ ऋदूपे§ अर्दनपातिनौ गमनपातिनौ (शब्दपातिनौ दूरपातिनौ‖) वा मर्म्मण्यर्दनवेधिनौ गमनवेधिनौ (शब्दवेधिनौ दूरवेधिनौ¶)वा ॥ ५ (३३)॥

"तुविक्षं ते ०——० ऋदूवृधा"—इति**। "निराविध्य०——०स्वाततम्"—इति"†† च। कुरुस्तुतेरार्षमेतदृग्द्वयम्। ऐन्द्री। सतोबृहती पूर्वा; गायत्र्युत्तरा। हे इन्द्र! 'तुविक्षं' "बहुविक्षेपम्" बहूनां विक्षेपाणां——,'सुकृतं' शोभनानि हि येन कर्माणि क्रियन्ते तम्; अथ वा शोभनं कृतम्, 'सूमयं' च सुखकरं सुहृदाम्। किम्पुनस्तत्? 'धनुः'। किञ्च; "साधुर्बन्दो हिरण्ययः" 'साधयिता' शत्रूणां शत्रुसङ्घातानां वा 'बुन्दः' इषुः "हिरण्ययः" हिरण्यविकृत इत्यर्थः। किञ्च; 'उभा ते बाहू' उभावपि ते बाहू, 'रण्या'

* "बहुविक्षं" क, ख, ग।
† "हिरण्मय" क, ख, ग।
‡ नास्त्येतत् क-ख-ग-पुस्तकेषु।
§ "साङ्ग्राम्यावृदूपे" क, ख ग।
‖,¶ नेमौ पाठौ दृश्येते क-ख-ग-पुस्तकेषु।
** ऋ० सं० ६, ५, २०, ६।
†† ऋ० सं० ६, ५, २०, १।

"रमणीयौ" स्वायतौ पीनौ च, अथ वा "साङ्ग्राम्यौ" रणयोग्यौ, 'सुसंस्कृतौ' समलङ्कृतौ, 'ऋदूपे' "अर्दनपातिनौ" अर्दनेन हि गमनेन क्षेपणेन तौ शत्रून् पातयतः । 'ऋदूवृधा' ऋदिति मर्माच्यते, तत्र यौ विध्यते तौ ऋदूवृधौ मर्मवेधिनावित्यर्थः । भाष्य मत्र न सम्यगिव लक्ष्यते ; तस्य सम्यक् पाठोऽन्वेष्यः, ततो योज्यम् * । एव मत्र धनुःसम्बन्धाद् "बुन्दः = इषुः" ॥ ५ (३३) ॥

निराविध्यद्गिरिभ्य आ धारयत्पक्व मोदनम् । इन्द्रो बुन्दं स्वाततम् ॥ निरविध्यद्गिरिभ्य आ धारयत्पक्व मोदन मुदकदानं मेघम् । इन्द्रो बुन्दं स्वाततं वृन्दं बुन्देन व्याख्यातं वृन्दारकश्च ॥ ६ (३४) ॥

"निराविध्य०——० स्वाततम्" † । 'पक्वम्' बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, 'इन्द्रः' 'निरविध्यत्' । विद्धा च तावत् 'आ धारयत्' यावन्निरुदकः संवृत्त इति । कथं निरविध्यत् ? इति,—'बुन्दं' 'स्वाततम्' स्वाकृष्ट माकर्णीकृत्वा । एव मत्राकर्षणसम्बन्धात् "इषुः = बुन्दः"—इत्युपपद्यते ॥

"वृन्दम्(११९)"—इति ‡, एतत् पदम् "बुन्देन" एव "व्याख्यातम्" ; अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दे ॥

* "एषा निगमा एक मपि पदं विशाय यास्केन व्याख्याता । तदेव लिख्यते ॥"—इति सा० भा० ।

† ऋ० सं० ६, ५, १०, १ ।

‡ १अा० ४५७ पृ० ९पं० ।

"वृन्दारकस्य" 'वृन्देन' एव "व्याख्यातः"। इत्थी वृन्दारकः प्रकरणवशाद्वान्यः कश्चित् * ॥ ६ (३४) ॥

**अ॒यं यो होता॒ किरु॒ स य॒मस्य॒ क म॒प्यू॑हे॒ यत्स॒म॒ञ्जन्ति॑ दे॒वाः। अह॑रहर्जायते मा॒सिमा॒स्यथा॑ दे॒वा द॑धिरे हव्य॒वाह॑म्॥ अयं यो होता कर्त्ता स यमस्य क मप्यन्न† मभिवहति यत्समश्नुवन्ति देवा अहरहर्ज्जायते मासे-मासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाह मुलब मूर्खौतेहंणोतेर्वा। महत्तदुल्बं स्थवि॑रं तदा॑सी-दित्यपि निगमो भवत्यूबीस मपगतभास मपहृतभास मन्तर्हितभासं‡ गतभासं वा ॥ ७ (३५) ॥**

"किः(१२०)"—इति §, अनवगतम्। "कर्त्ता"—इत्यवगमः। "अ॒यं यो होता॒०——० हव्य॒वाह॑म्"||। ऋचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्¶, तत्रेयं विश्वेदेवाना मार्षम्। आग्नेय्यौ।

---

* अम० को० १, १, ६; २, १, ११२; ३, ३, ११। "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु"—इति मेदिनी।

† "क मप्यूहेऽन्न" ङ, च।

‡ "मनन्तर्हितभासं" क, ख, ग।

§ १भा० ४५७ पृ० १९ पं०।

|| ऋ० सं० ८, १, ११, ३।

¶ अत्राह सायणः,—"इहात्रयोऽर्थं तैत्तिरीयब्राह्मणम्। 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्, ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्त्तिं मा रिष्यतीति स निलायत सोऽपः प्राविशत् तं देवाः प्रैष मैच्छन्नित्यादि (तै० सं० २. ६. ६.)।

'यः प्रथम' अग्निः, 'होता' आह्वाता देवानां पृथिवीस्थानः। किं तस्य? इति—'किः उ सः' 'यमस्य' भगवत आदित्यस्य ; अग्नेर्हि सकाशात् प्रातरादित्यः प्रसूयते। तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्वोपतिष्ठन्त इति *। "यस्मिन् वृक्षे सुपलाशे (ऋ० सं० ८,७,२३,१.)"—इत्यस्या मृचि यमल मादित्यस्य वक्ष्यति †। किञ्च ; 'कम् अपि ऊहे' "क मप्यन्नम् अभिवहति"। "कम्"—इत्यन्ननाम ‡, अन्न मपि चाय मेवाभिवहति। कतमत्? 'यत्' एतत् हविर्लक्षणं 'समश्नन्ति' "समश्नुवन्ति" 'देवाः'। अश्नुतिरत्र प्रकरणवशाद् भोजनार्थः। किञ्च ; अय मेव 'अहरहः' अहन्यहनि अग्निहोत्रिणां गृहेषु उद्बोध्यमानो महान् 'जायते'। 'मासिमासि' जायते पितृयज्ञेषु, "अर्द्धमासे ऽर्द्धमासे" च दर्शपूर्णमासेषु च। यस्मादेवङ्गुणविशिष्टो ऽय मग्निः, 'अथ' एतस्मात् कारणात् एत मग्निं सर्वे 'देवाः' 'दधिरे' "निदधिरे" 'हव्यवाहम्' हविषां वोढार मित्यर्थः। एव मत्र शब्दसारूप्याद् 'यमस्य'-इत्येतस्माच्च षष्ठीयोगात् 'किः'-इत्यस्य "कर्त्ता"-इत्येष विपरिणाम उपपद्यते॥

"उल्बम्(१२१)"—इति §, अनगतम्। 'जरायु'—इत्यवगमः। "ऊर्णोतेः"—इति धातुनिर्देशः। 'ऊर्णम्'—इति स्यात्। "वृणोतेर्वा" स्यात् ; तेन हि गर्भ आवृतो भवति। "महत्तदुल्ब' ०——० स्तन्वी

* "अग्निर्वैश्वानरः प्राच्यावयत्, तस्य यद्रेतसः प्रथम मुद्दीप्यत, तदसावादित्यो-ऽभवत्"—इति च ऐ० ब्रा० ३, ३, १०।

† प० दै० का० ११, ३, ८।

‡ १भा० ४०९ पृ० (१४) द्रष्टव्यम्।

§ १भा० ४५८ पृ० २पं०।

देव एकः।"*। 'महत्' परिमाणतः, 'तत्' 'उल्बं' जरायु 'आसीत्', 'स्थविरं' चिरन्तनञ्च तदासीत्। येन त्वम् 'आवेष्टितः' आवृतः, हे भगवन्! अग्ने! 'प्रविवेशिथ' प्रविष्टवानसि 'पूर्वम्' आदिसर्गे 'अपः'। किञ्च; 'विश्वाः' सर्वा तन्वः तव, हे 'जातवेदः!' 'बहुधा' अनेकेषु अभिधानेषु वर्त्तमानाः अपश्यत् 'एकः देवः' प्रजापतिः, कोऽन्यस्ततः तव तनूना मन्तं वेत्तु मर्हतीत्यभिप्रायः॥ एवं मन्त्र 'जरायु' 'उल्ब'-शब्देनोच्यते, आवेष्टनसम्बन्धादित्युपपद्यते॥

"ऋबीसम्(१९२..."—इति†, अनवगतम्। "अपगतभासम्"—इत्येवमाद्याः शब्दसमाधयः। 'पृथिवी'-अभिधेया; सा हि कृष्ण-च्छाया‡। तस्मादपगतभास मित्येवमाद्याः शब्दसमाधय उपपद्यन्ते॥ ७ (२५)॥

**हिमेनाग्निं घ्रंस मवारयेथां पितुमतीमूर्ज्ज मस्मा अधत्तम्। ऋबीसे अत्रि मश्विनावनीत मुन्निन्यथुः सर्वगणं स्वस्ति॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसं महर-वारयेथा मन्नवतीं चास्मा१ ऊर्ज्ज मधत्त मग्नये योऽय मृबीसे पृथिव्या मग्निरन्तरौषधिवनस्पतिष्वप्सु त मुन्नि-न्यथुः सर्वगणं सर्वनामानं गणो गणनाद्गुणाश्च यद्दृष्ट**

* "महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः। विश्वा अपश्यद्-[illegible]ा ते अग्ने जातवेदस्तन्वो देव एकः॥"—इति ऋ० सं० ८, १, १०, १।

† [illegible]० ४५८ पृ० ७पं०।

‡ [illegible]ाया" क। 'ऋबीसे = अपगतप्रकाशे, पीडायन्त्रगृहे"—सा०भा०।

रोषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनौ कर्म तेनैतौ* स्तौति स्तौति ॥ ८ (३६) ॥

॥ इति षष्ठाध्यायस्य षष्ठः पादः ॥ ६. ६.

"हिमेनाग्निं ०——० सर्वगणं स्वस्ति" † । कक्षीवत आर्षम् । त्रिष्टुप् । आश्विनी । प्रातरनुवाकाश्विनयोः शस्यते । हे अश्विनौ! 'हिमेन' "उदकेन" अतिप्रवृद्धं "ग्रीष्मान्ते", 'अग्निम्', 'घ्रंसम्' "अह्नः"-लक्षणम्, इमांल्लोकान् दिधक्षन्त मिव, युवाम् 'अवारयेथाम्'। वारयित्वा च 'पितुमतीम्' "अन्नवतीम्" पुरोडाशाद्यन्नसहिताम्, 'ऊर्जम्' आज्यलक्षणाम्, युवाम् 'अधत्तम्' 'अस्मै' अग्नये हविर्भाजे; वर्षानुग्रहपूर्विकया ओषधिनिष्पत्त्या। किञ्च; "ऋबीसे अत्रि मश्विनावनीतम्" युवा मेव हे 'अश्विनौ!' "योऽयम्" 'ऋबीसे' "पृथिव्याम्" अग्निरनुप्रविष्टोऽन्तः, येनेमानि पृथिवीगर्भेषु उपनिहितानि तिन्दुकादीनि पच्यन्ते, य मवेच्योक्तम्,—"ऋबीसपक्वं नाश्नीयात्" इति । 'तम् उत् निन्यथुः' युवाम्, ओषध्याद्यन्तर्वर्त्तिन मोषध्यादिरूपेणैव । 'सर्वगणं' "सर्वनामानम्" अग्निरेव ह्यय मनेनौषध्यादिरूपेणावस्थितः, सर्वैर्नामभिः अभिधीयते, अग्नेः सर्वोत्पत्तिदर्शनात् ‡ । कम्पुनरर्थं पुरोधाय उन्निन्यथुः? इति,—

* "तेनैनौ" क, ख, ग ।

† ऋ० सं० १, ८, ९, २ ।

‡ "अग्निर्वै देवयोनिः, सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्मशरीर ऊर्द्धः स्वर्गंलोक मेष्यतीति"—इति, "अग्निः सर्वा देवताः"—इति च ऐ० ब्रा० २, १, २ ।

'स्वस्ति' स्वस्त्ययनायास्य जगतः; ओषध्याद्यभावेन हि सर्व मेव जग-द्भज्यत॥ एव मत्र 'स्वबीस'-शब्देन "पृथिवी"—इत्युच्यते॥

"गणः, गणनात्"; स हि गण्यते बहुसंयोगात्। "गुणश्च" गुणोऽपि गणनादेव; असावपि हि गण्यत एव,—द्विगुणः, त्रिगुणः इति। निगमप्रसक्त मेतदुक्तम्॥

अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थ माह,—"यद् वृष्ट ओषधयः उद्यन्ति प्राणिनश्च पृथिव्याम् तदश्विनो रूपम्" सोऽश्वि-नोरधिकारः, तदश्विनोर्माहाभाग्यम्। "तेन" माहाभाग्यलक्षणेन रूपेण "एतौ" अश्विनौ मन्त्रदृक् "स्तौति" * ॥ ८ (३६)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य † )
षष्ठः पादः ॥ ६,६ ॥

इति श्रीजम्बूमार्गाश्रमवासिनः आचार्य-भगवद्दुर्गस्य कृतौ
ऋज्वर्थायां निरुक्तवृत्तौ
एकादशोऽध्यायः (षष्ठोऽध्यायः ‡ ) समाप्तः ॥ ६ ॥

* "अथेद माख्यानम्।—अत्रि मृषि मसुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निनाबाधिषत। तदानीं तेन ऋषिणा स्तुतावश्विनावग्नि मुदकेनोपशमय्य तस्मात् पीडायन्त्रगृहादविकलेन्द्रियवर्गं सन्तं निरगमयता मिति॥"—इति सर्वैव सा॰ भा॰।

†, ‡ २भा॰ १४९४॰ "¶" द्रष्टव्यम्।

([1]त्वमग्ने[2]ऽस्सा[3]तृणाउद्दृषा[4]ऽऽजास[5]उपसप्रक्षिणी[6]कादरद्द-
[7]मस्मे[8]तेश्वायन्तइ[9]वाश्वं[10]हिसोमान[11]मिन्द्रासोमा[12]क्तृणु[13]ध्वतां-
अध्वरे[14]ऽस्तिहि[15]वो[16]ऽस्वर्त्तेंप्रवे[17]ाच्छा[18]स्टप्रस्तुञ्जे[19]तुञ्जेयो अस्मा-
[20]अस्माद्दु[21]तन्नस्तु[22]रीपं हिने[23]ातामचे[24]ामा[25]त्वानपा[26]पासोयवं-
द्दके[27]णजीवा[28]न्नोबते[29]ाधेनुं ने[30]ाऽरायिका[31]णेवामंवामं[32]किन्ते[33]तु-
विक्ष[34]न्तेनिरा[35]विध्यद[36]यंयोहिमेनाग्निं षट्त्रिंशत्॥ *)

॥ इति निरुक्ते पूर्वषट्के षष्ठोऽध्यायः ॥ ६ ॥

(यावन्तो मन्त्राः सर्वशाखासु, तेषु यानि, गुणपदानि लक्षणो-द्दिष्टतः, तानि सर्वाण्येव व्याख्यातानि ॥ † )

( नैगमं काण्डं समाप्तम् )

॥ इति नैरुक्तपूर्वार्द्धः समाप्तः ‡ ॥

* १भा० १४९ पृ० "**" द्रष्टव्यम्।

† एषोऽन्तिम इतिकर्त्तव्योऽस्य दुर्गाचार्यस्यैव, पर मध्यायसमाप्तिसूचक मितीत्यादि-वाक्यादनन्तर मस्ति क-ग-घ-पुस्तकेषु; ख-पुस्तके तु दैवत-व्याख्यारम्भोपक्रमे; स एव साम्यमित्यस्माकम्।

‡ क-ख-पुस्तकयोरेवैष पाठो दृश्यते, अन्यत्र (ग-घ-ङ-च-पुस्तकेषु) न कि मपि।

# ( अथ उत्तरषट्कम् )

## ॥ अथ सप्तमाध्यायः * ॥

तत्र,

### ॥ प्रथमः पादः ॥



॥ ॐ३म् ॥ अथातो दैवतं तद्यानि नामानि प्राधा-न्यस्तुतीनां देवतानां तद्दैवत मित्याचक्षते सैषा देवतोपपरीक्षा यत्काम ऋषिर्यस्यां देवताया मार्थ-पत्य † मिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्या-त्मिक्यश्च तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्यु-ज्यन्ते प्रथमपुरुषैश्चाख्यातस्य ॥ १ ॥

* ख-पुस्तके तु पतिस्तुत्यध्याय एवायं सप्तमत्वेन व्यवहृतः, व्याख्यापयन्ति च तथै-वानेकाचार्याः। परं तन्न समीचीनम्; निघण्टौ तन्मूलदर्शनाभावेन तस्य परि-शिष्टरूपत्वात्, तदुपक्रमे एव "व्याख्यातं दैवतम्"—इति दर्शनाच्च दैवतकाण्डा-नन्तरमुत्तरषट्कात्पर मेव तस्य निवेशो न्याय्यः।

† "मर्यपत्य" च, घ-नाम-हस्तिपुस्तके च।

॥ ॐनमः * ॥ (समाप्तं चैकपदिकं प्रकरणं मन्त्रानुदैवतं तद्भवति, यस्याय मादिः "अथातो दैवतम्" इति। (यावन्तो मन्त्राः सर्वशाखासु, *तेषु यानि गुणपदानि लक्षणोद्देशतः, तानि सर्वाण्येव व्याख्यातानि†)* द्वयोः प्रकरणयोः—नैघण्टुकैकपदयोः‡; संविज्ञातपदानि तु प्रधान-स्तुतिभाग्देवताविषयाणि अग्न्यादीनि, सर्वमन्त्रेष्ववशिष्यन्ते; तानि च पुनरमूनि समाम्नातान्यस्मिञ्छास्त्रे अग्न्यादीनि देवपत्न्यन्तानि§। अतस्तद्व्याचिख्यासयेद मारभ्यते।—॥) "अथातोदैवतम्"—इति। 'अथ'-शब्दोऽधिकारार्थः। 'अतः'-शब्दः क्रमे, हेतौ वा। प्रकरण-द्वयादनन्तर मिद मवश्यं समाम्नायानुक्रमप्राप्तं व्याख्यातव्य मित्येवं क्रमे; दैवत मन्तरेण न शक्यो देवतापदार्थः सम्यगवबोद्धुम्, देवतापरिज्ञानानुबद्धस्त्वखिलः पुरुषार्थ इत्यतः; दैवतं प्रकरणं व्याख्यास्याम इति वाक्यशेषः॥

एवं हेतौ आह;—किं सतत्त्वं पुनस्तद्दैवतं प्रकरणम्? इति, उच्यते,—"तद्यानि ०——० मित्याचक्षते"। 'यानि नामानि प्राधान्यस्तुतीनाम्' अग्न्यादीनां देवपत्न्यन्तानां 'देवतानां', 'तद्' दैवतं प्रकरणम् 'इति' एव माचार्याः 'आचक्षते'; निरूढा चेय मेतस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः॥

* ख-पुस्तकपाठ एषः; अन्यत्रान्यत्र तु लेखकादिभेदेन मङ्गलाचरणभेदः, स च सुव्यक्तत्वेव; द्रष्टव्यस्तौ मङ्गलाचरणान्तादावेवैकत्र (१भा० १पृ०)।

† क-ग-घ-पुस्तकेष्वितः पुरस्तादेवैष पाठः (२८१ पृ० ८पं०)।

‡ १भा० १४५—१४६ पृष्ठयोर्द्रष्टव्यौ।

§ १भा० ४५६ पृष्ठातः ४६० पृष्ठान्तानि।

|| नास्त्येवैषोपक्रमग्रन्थः क-ग-घ-पुस्तकेषु।

"सैषा देवतोपपरीक्षा"। सा, या पुरस्तात् प्रकरणमात्रयोपन्यासे नैघण्टुक मिदं देवताना मप्राधान्येनेद मिति—"तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवत मित्याचक्षते, तदुपरिष्टाद् व्याख्यास्यामः"—इति प्रतिज्ञाता *, सा, इदानीं प्रकरणद्वये † निर्दिष्टे यथाप्रकरणोपन्यासेनैवावसरप्राप्ता, सामान्यविशेषतः स्वलक्षणसतत्त्वोपपत्तिभिः एकैकस्या देवताया उपगम्योपगम्य परीक्षा; वर्तिष्यत इति वाक्यशेषः। इद मिहोक्तम्,—प्राधान्यस्तुतिभाञ्जि यानि देवताभिधानानि, तत्समुदायो दैवतं प्रकरणम् ‡, तद् व्याख्यास्यामः इति §)। तस्य पुनरिय मेव समासतो व्याख्या यद्देवतोपपरीक्षणम्, तदभिधानव्युत्पत्ति-तत्स्तुत्युदाहरण-तन्निर्वचनानि ‖॥

तत्पुनरेतत् सर्व मपि मन्त्राधिदैवतलक्षण मनुक्त्वा न शक्यं व्याख्यातुम् ¶, मन्त्राधीनत्वात् सर्वस्यास्य; अतो मन्त्रदेवतालक्षणविदिधारयिषया ब्रवीति;—"यत्काम०——०भवति"। यदर्थवस्तु कामयमानः, 'ऋषिः' 'यस्यां देवतायाम्' अभिष्टुतायाम्, 'आर्थपत्यम्' अर्थपतिभाव मात्मनः 'इच्छन्' अमुष्याः देवतायाः प्रसादेनाह

* १भा० १४१ पृ० ७पं० ( १अ० ६पा० १ख० )।

† तत्र प्रकरणद्वयम, पूर्वषट्कान्तर्गतं, पूर्वभागान्तर्गतं पूर्वार्द्धान्तर्गतं, वा नैघण्टुकं नैगमञ्च नाम १भा० ७पृ०—१भा० १८२ पृ० द्रष्टव्यम्।

‡ निघण्टुपञ्चमाध्यायात्मकम्, यत्रैव अग्न्यादीनि देवपत्न्यन्तानि देवताभिधानानि समाम्नातानि (१भा० ४५६—४६० पृ० )।

§ नास्त्येष पाठः घ-पुस्तके।

‖ तदेदं देवतोपपरीक्षणं तृतीयपादान्तम्, ततश्च "अथातोऽनुक्रमिष्यामः"—इत्यारभ्य विशेषतो व्याख्यानम्।

¶ द्र०—१भा० (११६ पृ०) १अ० ६पा० १ख०, (१८८ पृ०) १अ० १पा० ४ख०।

मनुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय 'स्तुतिं प्रयुङ्क्ते', 'तद्दैवतः' एव 'स मन्त्रो भवति' *। एतत् मन्त्रे देवतालक्षणम्। एतेन लक्षणेन सर्वमन्त्रेषु देवतोपलक्ष्या। अथ वा देवताया यस्यार्थस्येयं देवता दातुं समर्थेति जानानः स्तुतिं प्रयुङ्क्ते येन मन्त्रेण, सा प्राधान्यस्तुतिभाग्देवता। सा पुनरियं स्तुतिः, चतुर्विधा ;—नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ; "स्तुतिर्नामरूप-कर्म-बन्धुभिः"—इत्युक्तम् ॥

ऋच एव हि प्रायेणातितरां मपि हितार्थाः, न तथा यजूंषि ; तासु हि विज्ञातासु यजूंष्यपि विज्ञातान्येव भवन्ति †। तस्मादृच एव पुरस्कृत्य ब्रवीति ;—"तास्त्रिविधा ऋचः"—इति। याः कास्तु सर्ववेदेषु 'ऋचः', 'ताः' सर्वा अपि 'त्रिविधाः' एव भवन्ति ॥

तद्यथा ;—"परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च"—इति ॥

*तत् त्रैविध्यं सामान्यत उद्दिश्य अधुना प्रत्येकं लक्षणतो ब्रवीति,* उदाहरणैश्च दर्शयति। 'तत्र' तस्मिन् त्रैविध्ये परोक्षकृतानामृचा मेतल्लक्षणं भवति ;—"परोक्षकृताः ०——० आख्यातस्य" ॥ १ ॥

* "स मन्त्रोऽर्थाद् भवति"—ख-नाम पु० ।

† साम्नां देवतापरिज्ञानाय तु देवताध्यायनाम दैवतं वा प्रसिद्धं सामवेदीयं पञ्चमं ब्राह्मण मेव विद्यते। तथा हि तस्यैव ब्राह्मणग्रन्थस्य भाष्यस्य भूमिकाया माह सायणः,—"तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा। देवताध्यायसंज्ञस्तु पञ्चमो व्याक्रियतेऽधुना॥ साम्नां निधनभेदेन देवताध्ययमादृयम्। पञ्चमोऽपि सामतोऽस्तौ दैवताध्याय उच्यते॥"—इत्यादि। तस्य हि ब्राह्मणस्येद मारम्भवाक्यम्,—"अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी"—इति। "एतास्सामदेवता इति तु"—इति च तद्व्याख्यानं सायणीयम्।

इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्र मिद्याविनो बृहदिन्द्रेति इत्सवो वेविषाणा इन्द्राय साम गायत नेन्द्रादृते पवते धाम किञ्चनेन्द्रस्य नु वीर्याणि प्र वोच मिन्द्रे कामा अयंसतेत्यथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्व मिति चैतेन सर्वनाम्ना। त्व मिन्द्र बलादधि। वि न इन्द्र मृधो जहीत्यथापि प्रत्यक्षकृता स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि। मा चिदन्यद्वि शंसत कण्वा अभि प्र गायतोप प्रेत कुशिकाश्चेतयध्व मित्यथाध्यात्मिक्य उत्तमपुरुषयोगा अह मिति चैतेन सर्वनाम्ना॥ २* ॥

तत्रयैतान्युदाहरणानि आनुपूर्व्येणैव सप्तस्वपि विभक्तिषु इन्द्रो दिव इत्येवमादीनि ;—

"इन्द्रो दिव०——० इन्द्रः" †। रेणोर्वैश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्। सूर्यस्तुत्येकाहनिष्केवल्ये विनियुक्ता। 'इन्द्रो दिवः' 'ईशे' ईष्टे। 'इन्द्रः' एव 'पृथिव्याः' ईष्टे। 'इन्द्रः' एव 'अपाम्' ईष्टे वर्षकर्मादिना। 'इन्द्रः' एव 'पर्वतानां' मेघानाम् ईष्टे। 'इन्द्रः' एव 'वृधाम्' अतिप्रवृद्धाना मपि भूताना मीष्टे। 'इन्द्रः' एव

च 'मेधिराणां' यज्ञैस्तद्वता मीढे। 'इन्द्रः' एव हि 'योमे' अर्थसंयोगे प्राप्तव्ये, 'क्षेमे' च परिपालने कर्त्तव्ये 'हव्यः' आह्वातव्यो नान्यः कश्चित्समर्थः एतत्कर्त्तु मित्यभिप्रायः। प्रथमाया मेतदुदाहरणम्। इन्द्र इत्येतस्मादुपपदा दीप्र इत्येष प्रथमपुरुष इति प्रतीयते, नोत्तमपुरुष इति॥

"इन्द्र मिद्०——० रनूषत"*। मधुच्छन्दस आर्षम्। महाव्रते महदुक्थे शिरसि शस्यते। हे 'गाथिनः' सामगाः! 'इन्द्र मित्' इन्द्र मेव यूयं बृहता साम्ना[†] अभिष्टुत। यूय मपि हे होतारः! 'अर्किणः' 'अर्केभिः' अर्कैर्ऋग्भिः मन्त्रैः[‡] इन्द्र मेवाभिष्टुत। यूय मपि च हे अध्वर्यवः! इन्द्र मेव 'वाणीभिः' वाग्भिर्यजुर्मयीभिः सर्ववेदेषु 'अनूषत' अभिष्टुत। द्वितीयाया मेतदुदाहरणम्॥

"इन्द्रेणैते०——०मदामे"§। इति तृतीयस्या मुदाहरणम्। व्याख्यातः शेषः॥॥

"इन्द्राय०——०पनस्यवे"¶। नृमेधस आर्षम्। माध्यन्दिनेष्वहःसु स्तोत्रियानुरूपतृचे तृतीयसवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता।

---

* "इन्द्र मिद् गाथिनो बृहदिन्द्र मर्केभिर्किणः। इन्द्रं वाणी रनूषत॥"—इति ऋ० सं० १, १, १२, १।

† "त्वा मिद्धि हवामहे (ऋ० सं० ४, ७, १७, १.=सा० सं० उ० आ० ३, १, ५, १.)"—इत्यस्या मृच्युत्पन्नेन बृहत्सामकेनेत्यर्थः। तच्च साम आरण्यगाने (१, १, २७.) द्रष्टव्यम्।

‡ 'अर्च्यमानैर्मन्त्रैः' ग। "अर्को मन्त्रो भवति"—इत्याद्युक्तं पुरस्तात् ११ पृ०।

§ १आ० ७४पृ० १ख० ११ख० (११)।

|| पु० १५९ पृ० (१ख० २पा० १ख०) द्र०।

¶ "इन्द्राय साम गायत विप्राय बृहते बृहत्। धर्मकृते विपश्चिते पनस्यवे॥"—इति ऋ० सं० ६, ७, १, १।

हे उद्गातारः! 'इन्द्राय' बृहत्साम 'गायत'। 'विप्राय' मेधाविने 'बृहते' महते 'धर्मकृते' कृतधर्मणे 'विपश्चिते' विदुषे 'पनस्यवे' पन इच्छते, आत्मनः स्तुति मिच्छते। चतुर्थ्या मेतदुदाहरणम्॥

"सूर्यस्येव०——०किं चन"*। रेणोर्वैश्वामित्रस्येय मार्षम्। पावमानी सौमी। जगती। यथा सूर्यस्य रश्मयस्तमसां 'द्रावयित्नवः' द्रावणशीला, एव मेते 'मत्सराः' सोमाः, पापानां द्रावणशीलाः। किञ्च; 'प्रसुपः' प्रसूता एतेर्ऋत्विग्भिः 'साकम्' इन्द्रं प्रति 'ईरते' गच्छन्ति इत्यर्थः। गत्वा च 'तन्तुं ततं' तन्तु मिव तन्त्ववयवाः 'परिसर्गासः' 'आशवः' परिसृताः 'यथा' व्याप्नुवन्ति, एव मेतं पातार मिन्द्रं स्वामिनं प्रत्यश्नुवन्ति व्याप्नुवन्तीत्यर्थः। कस्मात् पुनरेवं क्रमः? इतः,—यस्मात् 'नेन्द्रादृते' सोमः प्रातःसवनादीनां सोमसवनस्थानानां किञ्चिदपि ('धाम'†) 'पवते' पूयते ‡। तस्मादेवं ब्रूमहे,—इन्द्र मेवैते व्याप्नुवन्तीति। पञ्चम्या मेतदुदाहरणम्॥

"इन्द्रस्य नु०——०पर्वतानाम्" §। हिरण्यस्तूपस्येय मार्षम्। निष्केवल्ये शस्यते। 'इन्द्रस्य' अहं 'वीर्याणि' वीरकर्माणि 'प्र वोचम्'। 'यानि' 'चकार' 'प्रथमानि' अकृतपूर्वाणि अन्यैः। 'वज्री' वज्रसंयुक्तः।

* "सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साक मीरते। तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किञ्चन॥"—इति ऋ० सं० ७, १, ११, १।

† "इन्द्रस्य धाम्नो यज्ञत्वं च "अयाडिन्द्रस्य०—० प्रिया धामानि (य० वा० सं० २१,४७)"—इति मन्त्रवर्णाद् गम्यते।

‡ "इन्द्रं वर्जयित्वा अन्यद्देवशरीरं प्रति गच्छतीति वा"—इति च-डीप्पनी।

§ "इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री। अहन्नहि मन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम्॥" —इति ऋ० सं० १, २, ३१, १।

'अहन् अहिम्' हतवान् मेघम् । 'अनु ततर्द अपः' वर्षार्थं पुनः पुनश्च 'प्राभिनत्' । 'वक्षणाः' उदकवहनशीलाः 'पर्वतानाम्' मेघानाम् । इत्यादीनि वीर्याणीह मिन्द्रस्य प्रवोच मिति । एषाऽन्या मेतदुदाहरणम् ॥

"इन्द्रे कामा अयंसत दिव्यासः पार्थिवा उत । तं मू षु ग्रणता नरः ॥"—इति । हे स्तोतारः! ये दिव्याः कामाः, ये च पार्थिवाः, ते इन्द्रे एव उपनिबद्धाः; तं प्रार्थयत; स हि कामाना मीष्टे । 'तं सू षु' तं सुष्ठु कामप्राप्त्यर्थं 'ग्रणत' स्तुत, हे 'नरः!' । समाख्या मेतदुदाहरणम् ॥

उक्तं परोक्षकृतमन्त्रलक्षणं सोदाहरणम् ॥

अधुना प्रत्यक्षकृतमन्त्रलक्षण मुच्यते; तदधिकारार्थोऽयम् 'अथ'-शब्दः । "अथ प्रत्यक्ष०——०सर्वनाम्ना" । 'मध्यमपुरुषयोगाः' मध्यमेन पुरुषेण संयुक्ता ये मन्त्राः, ते प्रत्यक्षकृताः । 'त्व मिति चैतेन सर्वनाम्ना' संयुक्ताः, ते च प्रत्यक्षकृताः । यत्र त्व मित्येवं श्रूयते, तत्राविद्यमानोऽपि मध्यमः पुरुषोऽध्याहार्यः *; यत्र तु मध्यमः पुरुषः श्रूयते, तत्राविद्यमान मपि 'त्वम्'—इत्येतत् सर्वनामाध्याहार्यम्; सम्बन्धिशब्दत्वादनयोः । "त्व मिन्द्र बलादधि", "वि न इन्द्र मृधो जहि"—"इति" चैते उदाहरणे ।——

"त्वमिन्द्र०——०वृषेदसि" † । देवजामयः सूक्तं ददृशुः ।

* "मध्यमपुरुषयुक्तं माख्यात मध्याहार्यं मित्यर्थः"—इति ब-कौमुदी ।

† 'त्व मिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन् वृषेदसि ॥"—इति ऋ० सं० ८, ८, ११, १ ।

तत्रैवं महाराजिके पर्याये प्रयास्तुः स्तोत्रे विनियुक्ता । हे 'इन्द्र' ! 'त्वम्' 'बलादधि जायसे' 'सहसः' अभिभवनसमर्थात् *, 'ओजसः' तेजसः † । किञ्च ; त्वं हे 'वृषन्' वर्षितः ! 'वृषा असि' वर्षिता असीत्यर्थः ॥

"वि न इन्द्र०——०तमः" ‡ । शासस्य भारद्वाजस्येय मार्षम् । वैमृधस्य हविषो याज्या । हे 'इन्द्र !' 'वि जहि' 'नः' एतान् 'मृधः' मृधकर्तॄन् § शत्रून् । किञ्च ; 'नीचा' नीचैः 'यच्छ' तान् । 'पृतन्यतः' येऽस्माभिः सह पृतन्यन्ति, पृतनां कर्त्तुमिच्छन्तीत्यर्थः । किञ्च ; 'योऽस्मान्' 'अभि दासति' अभ्युपक्षपयितुमिच्छतीत्यर्थः । तम् 'अधरं' 'तमः' 'गमय', नाशयेत्यर्थः || ॥

"अथापि०——०स्तोतव्यानि" । युष्मत्प्रयोगैर्हि क्वचित् स्तोतारः सम्बध्यते । तद्यथा,—"मा चिदन्यद् वि शंसत", "कण्वा अभि प्र गायत", "उप प्रेत कुशिकाश्चेतयध्वम्"—इति" चैतान्युदाहरणानि ।—

"माचि०——शंसत" ¶ । प्रगाथस्येय मार्षम । बृहती । इन्द्रा-

* "'सहसः' परेषा मभिभावकाद् 'बलात्' 'अधि' 'जातः' असि । अधिः पञ्चम्यर्थानुवादकः । शत्र्वादिवधहेतुभूताद् बलाद्धेतोस्त्वं प्रभावी भवसीत्यर्थः ।" —इति सा० भा० ।

† "ओजसः ओजो नाम बलहेतु हृदयगतं धैर्यम्, तस्मादपि त्वं जातोऽसि ॥" —इति च सा० भा० ।

‡ "वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । यो अस्माँ अभिदासत्यधरं गमया तमः ॥"—इति ऋ० सं० ८, ८, १०, ४ ।

§ 'सङ्ग्रामकारिणः"—इति सा० भा० ।

|| "अधरं निकृष्टम्, तमः अन्धकारं मरणलक्षणं गमय प्रापय"—इति सा०भा०

¶ मा चिदन्यद् वि शंसत सखायो मा रिषण्यत । इन्द्र मित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ।"—इति ऋ० सं० ५, ७, १०, १ ।

विनियुक्ता। हे स्तोतारः! 'सखायः!' 'मा' 'अन्यत्' किं 'चित्' अपि 'शंसत' विविधाभिः स्तुतिभिः। 'मा' च 'रिषण्यत' चेतसा मागच्छत अन्यद् देवतान्तरम्*। किन्तर्हि? 'इन्द्रम् इत्' इन्द्र मेव 'वृषणं' वर्षितारं 'स्तोत' स्तुत। 'सचा' सहभूताः, एतस्मिन् 'सुते' सोमे। 'मुहुः' मुहुश्च हे होतारः! उक्थानि 'च' 'शंसत'॥

"क्रीळं वः०——०गायत"†। काण्वस्येय मार्षम्। कैलीनस्य हविषो याज्या। 'क्रीळं' शत्रूनपि दृष्ट्वा यत् क्रीडनशीलम्‡, 'मारुतं'§ 'शर्द्धः' बलम्, 'अनर्वाणम्' अनाश्रित मन्यत्र; स्वप्रभावयुक्त मेवेत्यभिप्रायः, 'रथेशुभं' रथे स्थितं शोभिष्ठम्, हे 'कण्वाः' मेधाविनः ऋत्विजः!॥ एतत् 'अभि प्र गायत' एतद् 'वः' ब्रवीमि॥

"उपप्रेत०——०पृथिव्याः¶। विश्वामित्रस्येय मार्षम्। हे 'कुशिकाः' स्तुतिक्रोष्टार ऋत्विजः!** 'उप प्र' 'इत' गच्छत। 'चेत-

* "मा रिषण्यत। मा हिंसितारो भवत। अन्यदीयस्तोत्रोच्चारणेन हर्षोपक्षीणा मा भवत"—इति सा० भा०।

† "क्रीळं वः शर्धो मारुत मनर्वाणं रथेशुभम्। कण्वा अभि प्रगायत॥"—इति ऋ० सं० १, ३, ११, १।

‡ 'क्रीडनशीलम्' ग, घ। "क्रीड् विहारे (भू० प०), पचाद्यच्।"—इति "विहरणशीलम्"—इति च सा० भा०।

§ "मरुतां सम्बन्धि * * * यद्वा ममूत्रार्थऽनुदात्तादेरञ्"—इति सा० भा०।

|| "कण्वगोत्रोत्पन्ना महर्षयः। यद्वा मेधाविन ऋत्विजः"—इति सा० भा०।

¶ "उप प्रेत कुशिकाश्चेतयध्व मश्वं राये प्रमुञ्चता सुदासः। राजा वृत्रं जङ्घनत् प्रागपागुदगथा यजाते वर आ पृथिव्याः॥"—इति ऋ० सं० ३, ३, ११, १।

** "हे कुशिकाः' कुशिकगोत्रोत्पन्नाः, हे पुत्राः"—इति सा० भा०।

यध्वम्' विजानीध्व मेतद्,——यथैवः 'राजा' 'वृत्रं' मघु' 'अहनत्' हतवान्, सर्वासु दिक्षु *, 'अथ' एवं सर्वहन्ता अमित्रो भूत्वा 'वरे' श्रेष्ठे प्रदेशे 'पृथिव्याः' ('यजाते') यजते। ते यूय मेतद् विज्ञाय उपप्रगच्छत। उपप्रगत्य चैत माश्वमेधिकम् 'अश्वम्' 'मुञ्चत' उत्सृजत, विधानतः प्रोच्याश्वमेधयागाय †। योऽय मेतस्मिन् 'सुदासे' ‡ कल्याणदाने यजमाने वर्त्तते॥

एव मेतेषु युष्मद्गुणपदप्रयोगेषु सम्बद्धाः स्तोतारः स्तोतव्यानि तु यानि देवतान्तानि, तानि परोक्षकृताभिसम्बन्धीनि। एवंलक्षणं मन्त्रजात मुपेक्षितव्यम्॥

"अथा०——०योगाः"। उत्तमेन पुरुषेण या ऋचो युक्ताः, ता आध्यात्मिक्यः। "अह०——०नाम्ना" या उक्ताः, तास्व आध्यात्मिक्यः। अत्रापि यत्राह मित्येतत् सर्वनाम श्रूयते, तत्राविद्यमान-मपि ह्युत्तमपुरुषसम्बद्ध माख्यातपद मध्याहर्त्तव्यम्; यत्र चोत्तम-पुरुषसम्बद्ध माख्यातपदं श्रूयते, तत्राविद्यमान मपि 'अहम्'—इत्येतत् सर्वनाम अध्याहार्यम्; सम्बन्धिशब्दत्वादनयोः॥ २॥

## यथैतदिन्द्रो वैकुण्ठो लवसूक्तं वागाम्भृणीय मिति(२१)

* मन्त्रस्थानां "प्राक् अपाक् उदक्'—इत्येतेषा मेव पदानां व्याख्यान मेतत्। सायणस्तु 'पूर्वपश्चिमोत्तरेषु देशेषु' व्याचष्टे, समीचीनतरश्चैतत्।

† 'राये'—इत्यव्याख्यात मेव स्थितम्। सायणस्तु 'दिग्विजयेन धनलाभाय'—इत्यर्थं कृतवान्।

‡ 'सुदासः'—इत्येव मूलपाठः। 'पैजवनस्य राज्ञः'—इति च सायणीयोऽर्थः।

§ इहैव द्वितीयखण्डसमाप्तिः क-च-पुस्तकयोः।

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिका अथापि स्तुतिरेव भवति नाशीर्वाद इन्द्रस्य नु वीर्याणि प्र वोच मिति यथैतस्मिन् सूक्ते* ऽथाप्याशीरेव न स्तुतिः सुचक्षा अह मक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयास मिति तदेतद्बहुल माध्वर्यवे याज्ञेषु च मन्त्रेष्वथापि शपथाभिशापौ। अद्या मुरीय यदि यातुधानो अस्मि। अधा स वीरैर्दशभिर्वि यूया इत्यथापि कस्य चिद्भावस्याचिख्यासा। न मृत्युरासीदमृतं न तर्हि। तम आसीत्तमसा गूल्ह† मग्रे। अथापि परिदेवना कस्माच्चिद्भावात्। सुदेवो अद्य प्रपतेदनावृत्। न वि जानामि यदि वेद मस्मीत्यथापि निन्दाप्रशंसे। केवलाघो भवति केवलादी। भोजस्येदं पुष्करिणीव वेश्मेत्येव मक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा चैव मुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति॥ ३॥

"यथा एतद्" उदाहरणत्रय माध्यात्मिकम्,—"इन्द्रो०——०मिति" एवमादि। एव मप्यन्येऽप्याध्यात्मिका मन्त्रा उपेक्षितव्याः।

विकुण्ठा नाम आसुरी बभूव, तस्याः किल तपसः प्रभावेमापत्यत्व मिन्द्र आ जगाम; स वैकुण्ठो नाम बभूव। तस्यात्मस्तुति-

* "यथैतस्मिन्सूक्ते" क, च।
† "गूळ्ह" क, च।

संयुक्त मेवमादि ब्रह्म प्रादुरभूत् *,—"अहं०——०भोजनम्" †। 'अहम्' एव 'भुवम्' अभवम् 'वसुनः' धनस्य 'पूर्व्यः' प्रथमः ‡ 'पतिः'। किञ्च; साम्प्रत मप्यह मेव पतिः। 'अहम्' एव च शत्रुभ्यः सकाशात् समस्तानि 'धनानि' 'जयामि' §। 'शश्वतः' नित्यकाल मेव। किञ्च; 'माम्' एव 'हवन्ते' आह्वयन्ति 'पितरं न' पितर मिव, तासु तास्वार्त्तिषु 'जन्तवः' मनुष्याः। किञ्च; 'अहम्' एव 'दाशुषे' दत्तवते हवींषि, यजमानाय 'विभजामि' यथार्हं 'भोजनम्' धन मित्यर्थः॥

"इति वा०——०पा मिति" ‖। लवरूके स एव लवो ब्रवीति, —('इति वा इति') एवञ्चैवञ्च 'मे मनः' वर्त्तते। आह,—कथम्? इति। उच्यते,—'गा मश्वम्' गां च अश्वं च 'सनुयाम्' सम्भोजयेम् एतान् यजमानानिति। अथैव मतितरां प्रत्युपकाराभिप्राये सति किमर्थं ब्रूते? 'कुविद्' बहु अहं 'सोमस्य अपाम् इति'॥

* "अहं भुव मित्येकादशर्चं षष्ठं सूक्तम्। पूर्वसूक्तेन सप्तगुना स्तुतो इन्द्रः सविन्द्रमादिसूक्तत्रयेण स्वय मात्मान मस्तौत्। तस्माद् वैकुण्ठस्येन्द्रस्य वाक्यत्वाद् 'यस्य वाक्यं स ऋषिः'—इति परिभाषयेन्द्र ऋषिः; वैकुण्ठस्येन्द्रस्य च स्तूयमानत्वाद् 'या तेनोच्यते सा देवता'—इति परिभाषयेन्द्र एव देवता।"—इति सा० भा०। सप्तगुराङ्गिरसः।

† "अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम्॥"—इति ऋ० सं० ८, १, ५, १।

‡ "पूर्व्यः मुख्योऽसाधारणः"—इति सा० भा०।

§ "स मित्यकीभावे, सह जयामि"—इति सा० भा०।

‖ "इति वा इति मे मनो गा मश्वं सनुया मिति। कुवित् सोमस्यापा मिति॥" —इति ऋ० सं० ८, ६, २९, १। "इति वा इति त्रयोदशर्चं सप्तमं सूक्तं गायत्रम्। इन्द्रो लवरूप मास्थाय सोमपानं कुर्वन् तदानी मृषिभिर्दृष्टः सन् स्वात्मान मनेन सूक्तेनास्तावीत्। अतो लवरूपापन्न इन्द्र ऋषिः, स एव देवता॥"—इति सा० भा०।

"अहं रुद्रेभिः०——०मुश्विनो भा" *। वागाम्भृणीये वागेव ब्रवीति †। 'अहम्' एव 'रुद्रैः', 'वसुभिः', 'आदित्यैः', ('विश्वदेवैः') विश्वैश्च देवैः सह भृता 'चरामि' स्तुतिरूपेण। 'अहम्' एव ('मित्रा-वरुणा') मित्रावरुणौ ('उभा') उभावपि, 'इन्द्राग्नी', ('अश्विना') अश्विनौ च ('उभा') उभावपि 'बिभर्मि' हविषा ; मत्पूर्वकं हविः-सम्प्रदानं सर्वदेवताभ्य इत्यभिप्रायः ॥

"परोक्षकृताः०——०प्रत्यक्षकृताश्च मन्त्राः", भूयिष्ठाः शाखा-न्तरेषु बहवः ; "अल्पशः" क्वचित् "आध्यात्मिकाः" लक्ष्यन्ते। आत्मान मेव स्तोतव्य मधिकृत्य येऽभिव्यक्तास्तदिह शास्त्रे आध्या-त्मिका उच्यन्ते ॥

"अथापि" क्वचित् "स्तुतिरेव भवति", "नाशीर्वादः"; नत्र पुनराशीर्योज्या‡। किं कारणम्? आशिषो ह्यर्थे स्तुतिः प्रयुज्यते। आह,—कि मुदाहरणम्? इति। उच्यते,—"इन्द्रस्य०——०स्तुमि" (ऋ० सं० १,७२,१)। अत्र हि स्तुतिरेव श्रूयते, नाशीः; सा पुनर्योज्येति § प्रतिपादितम्।——। "अथापि" क्वचिद् "आशीरेव,

* "अहं रुद्रेभिर्वसुभिश्चराम्यह मादित्यैरुत विश्वदेवैः। अहं मित्रावरुणोभा बिभर्म्यह मिन्द्राग्नी अह मश्विनोभा॥"—इति ऋ० सं० ८, ७, ११, १।

† "अह मित्यष्टर्चं नवोदशं सूक्तम्। अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मवि-दुषी स्वात्मान मस्तौत्; अतः सर्षिः। सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता। तेन ह्येषा तादात्म्य मनु भवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाह मेव सर्वं भवामीति स्वात्मानं स्तौति।"—इति सा० भा०। इद मेव 'देवीसूक्तम्'—इत्युच्यते मार्कण्डेयपुराणान्तर्गतदेवीमाहात्म्ये च "देवीसूक्तं परं जपन्"—इति विधानात् तस्याश्च सप्तशतिकायाः स्तुतेः पुरस्तादस्य पाठव्यवहारश्च।

‡,§ नैते व्याख्याने मूलसम्मते—इत्यस्माकम्, मूलपाठतस्तथावगतेर्विज्ञाभावात्।

न स्तुतिः"। तद्यथा,—"सुचक्षा०——०भूयास मिति" "तदेतद्" एवंलक्षणं मन्त्रजातम् "आध्वर्यवे" वेदे* "बहुलं" प्रायेण दृश्यते। "याज्ञेषु च मन्त्रेषु" कर्मकरणेष्वितरयोरपि† वेदयो-रिष्टाशीरेव भवति, न स्तुतिरेव केवला; यत्राप्याशीरेव केवला, तत्रापि तस्यार्थस्य या देवतेष्टा, तस्याः स्तुतिर्योज्या। किं कारणम्? न ह्यनभिष्टुता देवता आशिषं समर्द्धयति॥

"अथापि शपथाभिशापौ" भवतः। "अद्या मुरीय०——०इति" —इत्येक मुदाहरणं द्वयोरपि। वसिष्ठः किल राक्षसस्त्वम्—इत्यभि-युक्तः, सोऽनयर्चा शपथं प्रतिपेदे; परञ्चाभिशशाप‡।

"अद्या०——०नेत्याह"§। अद्यैवाहं म्रिये; 'यदि यातुधानः' स्याम्? यदि वा 'आयुः' 'ततप' तप्तवानहं कस्य चिदपि पुरुषस्य। अथ पुनरयातुधान मेव मां सन्तं यो मोघ मनृतं यातुधानस्त्व

* यजुषीति यावत्।

† एतच्च व्याख्यानं न सुश्लिष्टमस्माकम्; अथर्ववेदस्याग्रहणात्। यज्ञार्थाः ये मन्त्राः, ताः सर्वा एव याज्ञाः; यदि चाथर्ववेदे सोमसम्पाद्यानां सत्रादीनां नास्ति दर्शनं पर मस्त्येव तत्रापि कारीष्यादयो यागाः, सन्ति च तेषु बहवः स्तुतिमन्त्रा आशीर्म-न्त्राश्च। अत्र च यास्केन 'मन्त्रेषु'—इत्यस्य 'याज्ञेषु'—इति विशेषण मुपन्यस्तं तेना-याज्ञा अपि मन्त्रा विद्यन्त एवेति यास्कमतं परिस्फुटम्। एवञ्च "यज्ञार्थे एव वेदाः प्रवृत्ताः"—इति वादिनः प्राभाकरादयो मीमांसकाः परास्ताः।

‡ 'अत्र केचिदाहुः।—श्रुत्वा पुत्रशतं पूर्वं वसिष्ठस्य महात्मनः। वसिष्ठं राक्ष-सोऽसि त्वं वासिष्ठं रूप माश्रितः। अहं वसिष्ठ इत्येवं जिघांसू राक्षसोऽब्रवीत्। अत्रोत्तरा ऋषी दृष्टा वसिष्ठेनेति नः श्रुतम्'—इति।"—इति ऋ० सं० ५, ७, ७, २. सा० भा०।

§ "अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य। अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह॥"—इति ऋ० सं० ५, ७, ७, ५।

"अथापि परिदेवना, कस्माच्चिद् भावात्:—'सुदेवो अद्य प्रपतेदनावृत्', 'न वि जानामि यदि वेद मस्मि—इति"। उदाहरणे।

"सुदेवो०——०अद्युः" *। पुरूरवस आर्षम्। त्रिष्टुप्। परिदेवना। 'सुदेवः' स शोभनो देवः स्यात्, यो ह्यनया प्रियया उर्वश्या वियुक्तो भृगुप्रपातम् ('अनावृत्') अनावर्त्तमानः 'अद्य प्रपतेत्'। ('परावतं परमां गन्तवै उम्') पतितश्च दूराद् दूरतरं गच्छेत्, ('अध') अथ गत्वा 'शयीत' मृतः सन् 'निर्ऋतेः' भूमेः 'उपस्थे' उपरि। ('अधा') अथ 'एनं' तां मवस्थां मापन्नं 'वृकाः' विकर्त्तितारः अश्वशृगालादयः 'रभसासः' रभस्वन्तो वेगवन्तः 'अद्युः' भक्षयेयुः। नाहं सुदेवः किन्तु स सुदेवो यस्तया वियुक्त एतामवस्थां माप्नुयादित्येव मेषा "परिदेवना" संशयोत्थापनम् †॥

"न वि जानामि०——०भाग मस्याः" ‡। दीर्घतमस आर्षम्। अस्यवामीये §। 'न' एतत् अहं ('वि') विस्पष्टं 'जानामि',—'यदि वा इदम् ॥ अस्मि' कारणं परं ब्रह्माख्यम्? अथ वा इदं

---

* "सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ। अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः॥"—इति ऋ० मं० ८, ५, ७, ४।

† सायणेन त्वस्याः सर्वेण एव व्याख्यानान्तरं कृतम्, तदपि द्रष्टव्यम्।

‡ "न वि जानामि यदि वेद मस्मि निण्यः सन्नद्धो मनसा चरामि। यदा मागन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भाग मस्याः॥"—इति ऋ० मं० १, २, २१, १।

§ अस्यवामीयं नाम ऋग्वदीय-प्रथममण्डल-द्वाविंशानुवाकस्यादिमं सूक्तं दैर्घतमसम्। द्विपञ्चाशदृचं तत्र सूक्तं सप्तविंशीयम्। "सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्विषात्"—इति ऋग्वि० १, २९। सूक्तस्यास्य प्रथमा ऋक् "अस्य वामस्य पलितस्य"—इति, अत एवेदमस्यवामीय मित्युच्यते। इत्यनुक्रमणी। सायणीयं तद्व्याख्यानञ्च विशेषतो द्रष्टव्यम्।

॥ "यत्, इव, इदम्"—इति पदकारपठितः पदच्छेदः।

तत्कार्यं द्वैत मस्मीति। अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्त्तमानो 'निण्यः' अन्तर्हितः, अविद्यया 'सन्नद्धः' च। अनेकैः सन्देहग्रन्थिभिः 'मनसा' उभे अपि द्वैताद्वैते 'चरामि' गच्छामीत्यर्थः। एवं सति 'यदा' 'मा आ अगन्' माम् आगच्छेत् 'प्रथमजा' बुद्धिः; सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते 'ऋतस्य' भगवत आदित्यस्य स्वभूता; तस्य हि प्रकृष्टा बुद्धिः, प्रक्षीणसर्वसंशया, तया सर्व मिद मसंशयं परिज्ञाय किं मह्यं कारणमतत्त्व उत द्वैतमतत्त्व इति। ततः 'अस्याः' कृत्स्न-प्रज्ञातायाः 'वाचः' 'भागम्' अहम् ('अश्नुवे') अश्नुयाम्, यदियं कृत्स्ना वागभिवदति तत्सर्वं मह माप्नुया मित्यर्थः* ॥

एव मय मात्मनिन्दापूर्वको विलापः परिदेवनेत्युच्यते; यदि नाम एवं स्यात् साधु स्यादिति ॥

"अथापि" मन्त्रेषु "निन्दाप्रशंसे" भवतः। तद्यथा,—"केवलाघो भवति केवलादी", "भोजस्येदं पुष्करिणीव वेश्म"—"इति"। एते उदाहरणे†।

"मोघ०——०केवलादी"‡। भिक्षुर्नामाङ्गिरसस्तस्येय मार्षम्§। त्रिष्टुप्। अददतो निन्दा। 'मोघं' वितथम् 'अन्नं' 'विन्दते'

* "ऋतस्य यात् इत्"—इत्येतानि नेह व्याख्यातानि; सायणव्याख्यानं द्रष्टव्यम्; तेन तस्या ऋचो विस्तृतं भाष्यं कृतम्।

† यथाक्रमेण निन्दा-प्रशंसयोः बोद्धव्ये इति यावत्।

‡ "मोघ मन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी॥"—इति ऋ० सं० ८, ६, २२, १।

§ अत्र भिक्षुरिति संज्ञा, गृहीतचतुर्थाश्रमः, भिक्षुको वा? विचार्य्यमस्ति।

*प्राप्नोति*। आह,—कः? इति। उच्यते,—यः 'अप्रचेताः' अप्रकृष्टज्ञानः। 'सत्यम्' अहं 'ब्रवीमि',—'वध इत् स तस्य' वध एव सोऽन्नलाभस्तस्य; वरं मरणं तेनान्न मित्यभिप्रायः। किम्पुनः कारणं मोघ मशावत्त्वं विन्दते? इति। उच्यते,—'न' असौ 'अर्यमणम्' आदित्यं 'पुष्यति'; ('नो') नापि 'सखायं' समानख्यानं मनुष्यम्; न देवान् पुष्णाति, नापि मनुष्यानित्यभिप्रायः। यत एव मतः 'केवलाघो भवति' सः 'केवलादी' आत्मनैव केवलं योऽन्न मत्ति, न देवपितृमनुष्येभ्यो ददाति, स केवल मघ मेव प्राप्नोति। तदुक्त मन्यत्रापि;—"भुञ्जते तेऽह्यघं पापा ये पचन्त्यात्मकारणात्"—इति*। तस्माद् वध एव स तस्यान्नलाभ इत्युपपद्यते; न ह्यसत्यन्ने प्रत्यवेयाददददन्न मित्यभिप्रायः; अन्नसंयोग एव ह्यत्र वधोऽभिप्रेतः†।—

केचित्त्वेन मनध्यात्मविद मप्रचेतसं मन्यन्ते‡; स ह्यस्मिन् शरीरे विवचितः। 'न अर्यमणम्' आदित्यान्तरपुरुषं भोक्तारं पश्यति, ('नो') नापि 'सखायं' प्राणवायुम्; स हि भुज्यमानेऽन्ने करणभावं पुष्णातीति सखा; केवलं, त्वमात्रविद्वानात्मान मेव भोक्तार मत्र पश्यति, अतः स 'केवलाघो भवति'; यदि स देवताः पश्येदेव ता अन्नभोक्त्रीः, स हि तत्र भुक्तेन न केवलाघः स्यादिति§॥

* "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्"—इति म० ३।११८।

† सायणभाष्ये एष एवार्थः परिव्यक्तः।

‡ अत्रैव ऋचि श्रुतस्य 'अप्रचेताः'—इति पदस्य 'अनध्यात्मवित्'—इति अर्थम् स्वीकुर्वन्तीति भावः; एवञ्चाध्यात्मिक एष मन्त्रः।

§ नैषोऽर्थो मनोरमोऽस्माकम्, नापि सायणसम्मतः।

"भोजाया०——०चित्रम्" *। दक्षिणा नाम प्रजापतेर्दुहिता †, तया सूक्त मात्मनः स्तुतिसम्बद्धं दृष्टम्। तत्रैषा त्रिष्टुप्। दातृप्रशंसा। 'भोजाय' राज्ञे ‡ 'अश्वम्' 'आशुं' शीघ्रं 'सं मृजन्ति' सम्मार्जयन्ति स्नापयन्ति भृत्याः। किञ्च; 'भोजाय' उद्वहनार्थं मन्यान् वरानपास्य ("शुम्भमाना") स्वलङ्कृता शोभमाना 'कन्या' 'आस्ते'; स हि ता मर्हतीत्यभिप्रायः। किञ्च; 'भोजस्य' 'इदं' 'वेश्म' गृहं 'परिष्कृतं' संस्कृतं 'पुष्करिणी इव', ("देवमाना इव") पुष्करैर्दैवतं विमान मिव § 'चित्रं' चायनीय मित्यर्थः। तदेतत् सर्व मप्यस्य जन्मान्तरप्रतितिविशिष्टदक्षिणासहितात् कर्मणोऽन्येभ्यः कर्मभ्यः सकाशात् फलातिरैक्य मित्येव मेषा दक्षिणाप्रशंसा ॥

यथैव मिह मन्त्रद्वये निन्दा प्रशंसा च, "एव मक्षसूक्ते ‖ द्यूतनिन्दा च कृषिप्रशंसा च" भवतीति विषयोपप्रदर्शनार्थं माह।

"अक्षैर्मा०——०मर्यः" ¶। मूजवान्नामा ऋषिपुत्रस्तस्येय मार्षम्। त्रिष्टुप्। 'अक्षैः मा दिव्य'—इति अक्षदेवनप्रतिषेधः; तत्र हि

* "भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना। भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम्॥"—इति ऋ० सं० ८. ६, ४ ५।

† दक्षिणायाः प्रजापति-दुहितृत्वे हेतुः ऋ० सं० ८, ६, २, १ सा० भा० द्रष्टव्यम्।

‡ "भोजाय = दात्रे"—इति सा० भा०।

§ नभोमण्डल मिवेत्यर्थः। सायणेन त्वर्थान्तरं कृतम्।

‖ ऋ० सं० म०१०, अ०२, सू०५. "प्र वेपा इति चतुर्दशर्चं पञ्चमं सूक्त मैलूषस्य कवषस्यार्षम् मूजवतः पुत्रस्याक्षस्य वा"—इति सा० भा०।

¶ "अक्षैर्मा दीव्यः कृषि मित् कृषस्व वित्ते रमस्व बहु मन्यमानः। तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः॥"—इति ऋ० सं० ७, ८ ५,१।

बहवोऽनर्थाः सन्ति। 'कृषि मित् कृषस्व'—इति कृषिविधानम्। तस्यां हि बहवो गुणाः सन्ति। 'वित्ते रमस्व' स्वल्प एवोपार्जिते 'बहु' एतदेवेति 'मन्यमानः'; मा वित्तलोभेन दीव्यः, निज मपि वित्तं हारयिष्यसि, कृषिं पुनरेतस्मात् कारणात् कृषस्व। हे 'कितव!' 'तत्र' तस्यां कृषौ 'गावः' सन्ति, ('तत्र') तस्यां च 'जाया'। "तत् पुनरेतत् 'मे' मम 'सविता' देवः, 'अर्यः' ईश्वरः, ('वि') श्रुति-स्मृत्यनुशासनद्वारेण विविध मनेकप्रकारम् आ 'चष्टे'; उभे अपि होमे श्रुतिस्मृ॰ मन्वादिद्वारेण आदित्यान्तरपुरुषप्रभवे एव, अत इद मुक्तं सवितैर्वैतन्मम विचष्ट इति॥

"एवम्" अनेन प्रकारेण "उच्चावचैरभिप्रायैः" बहुभिः, अथ वा प्रकृष्टाप्रकृष्टमध्यमैः मन्त्राभिव्यक्तिनिदानभूतैः "ऋषीणां" "मन्त्रदृष्टयः" मन्त्रदर्शनानि "भवन्ति"; विद्यमानाना मेव हि मन्त्राणा मृषयो येन केन चिन्निमित्तेन निदानभूतेन निन्दा-हर्ष-शोक-प्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति; न तु कर्त्तार इत्य-भिप्रायः। तदप्यार्षानुक्रमण्यां निदान मार्षं च उभय मुपेक्षितव्यम्; परिज्ञानार्षनिदानो हि सुख मनेकविषयं मन्त्रार्थ मवबोद्धुं शक्नोतीति। तदेत दिह लक्षणोद्देशतो भाष्यकारेण प्रदर्शितम् *॥ ३॥

तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा यद्दे-वतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्त्यथान्यत्र

* मन्त्राणां तात्पर्य्यानेकत्वे च हेतुः प्रदर्शितः; यदि हि एक एव द्रष्टा एक मेवार्थं मुद्दिश्य सर्वान् मन्त्रान् प्रणयेयुः, तर्हि सर्वेऽपि मन्त्रा एकतात्पर्य्यकाः स्युः। न तथात्र; अत्र तु बहूना मृषीणां बहूनर्थान् साधयितुं बहुमन्त्रदर्शनानि सम्पन्नानि अत एव सर्वेषां मन्त्राणां नैकविध्य मिति मन्त्राणां तात्पर्य्यवैविध्ये हेतुप्रदर्शनम्।

**यज्ञात् प्राजापत्या इति याज्ञिका नाराशंसा इति नैरुक्ता अपि वा सा कामदेवता स्यात्प्रायोदेवता वास्ति ह्याचारो बहुलं लोके देवदेवत्य मतिथिदेवत्यं पितृदेवत्यं याज्ञदेवतो मन्त्र इत्यपि ह्यदेवता देवतावत् स्तूयन्ते यथाश्वप्रभृतीन्योषधिपर्यन्तानि ॥ ४* ॥**

"तद् ये अनादिष्टदेवता मन्त्राः"। इहैतदुक्तम्;—"यत्काम ऋषिर्यस्यां देवतायां मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति"—इति†। तदेतद् प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षण मुपपद्यते; ये त्वनादिष्टदेवतालिङ्गा मन्त्राः, तेषु देवता कथ मन्वेष्याः? इति तदेतद् विचार्यत इत्युपयुक्तस्तच्छब्दः। ये अनादिष्टदेवतालिङ्गा मन्त्राः, "तेषु" "देवतोपपरीक्षा" देवतायाः अतः परं परीक्षा‡ उपपत्तितो वर्त्तिष्यत इति वाक्यशेषः।

"यद्देवतः स यज्ञो वा यज्ञाङ्गं वा, तद्देवता भवन्ति"। यद्देवतः स यज्ञो यस्मिन् यज्ञे ते अनाविष्कृतदेवतालिङ्गा मन्त्रा विनियुज्यन्ते, तद्देवता एव हि ते भवन्ति। तद्यथा,—"आग्नेयो ऽग्निष्टोमः"—इति श्रूयते§, तत्र योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स्यात्, स आग्नेय एव स्यात्; प्रकरणाद्धि सन्दिग्धदेवतेषु देवतानियम

---

* नात्र खण्डसमाप्तिः क-च-पुस्तकयोः।

† पृ० १८५ पृ० ८ पं०।

‡ 'तेषु देवता उन्नीयाः, अतः परं परीक्षा' च।

§ "स वा एषोऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्त मग्निस्तोमं सन्त मग्निष्टोम मित्याचक्षते"—इत्येवमादि ऐ० ब्रा० ३, ४, ५।

इति न्यायः। "यज्ञाङ्गं वा"। प्रातःसवने यो विनियुज्यते स आग्नेयः, यो माध्यन्दिने स ऐन्द्रः, यस्तृतीयसवने स आदित्यः *।

आह,—"अथ अन्यत्र यज्ञात्" कथं मन्त्रेषु देवतापरिज्ञान मिति अथ पुनरन्यत्र यज्ञाद् ये वर्त्तन्ते, येषा मुच्छन्नप्रयोगः; "उच्छन्नयज्ञो वा एषः"—इत्युच्छन्नता मपि दर्शयत्येव ब्राह्मणम्। तेषूच्छन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु,—"किं ब्राह्मणस्य पितरं पृच्छसि किन्नु मातरम्। श्रुतविदस्मिन् वेद्यं स पितामहः॥"—इत्येवमादिषु कथ मन्वेष्या देवता? इति। शृणु,—"प्राजापत्याः" ते मन्त्राः "इति याज्ञिकाः" मन्यन्ते। किं कारणम्? अनिरुक्तो हि प्रजापतिः; अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतस्मात्सामान्यात्। "नाराशंसाः" ते "इति नैरुक्ताः" मन्यन्ते। नराशंसोऽग्निर्यज्ञो वा। वक्ष्यति हि,—"यज्ञ इति कात्थक्यः अग्निरिति शाकपूणिः"—इति †। यज्ञशब्देन च विष्णुरुच्यते "विष्णुर्वै यज्ञः" इति ह विज्ञायते ‡। "अग्निर्हि भूयिष्ठभाग् देवतानाम्"—इति §, अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेयः स्यात्। सर्वदेवताश्रयणाच्च "अग्निर्वै सर्वा देवताः" अत्र वै सर्वा वसति देवतेति ह विज्ञायते ‖। यस्मिन्नपि पक्षे नाराशंसो यज्ञः, तस्मिन्नपि

* ऐ० ब्रा० २प० ४ख० ८खण्डे, ३पं० १ख० २खण्डे च द्रष्टव्यम्

† इहैव काण्डे परस्तात् ८, १, २।

‡ ऐ० ब्रा० १प० १ख० ४ख०।

§ ऐ० ब्रा० १प० १ख० २खण्डप्रभृतिषु द्रष्टव्यम्।

‖ ऐ० ब्रा० १प० १ख० १ख०।

पक्षे यज्ञप्रभवत्वादस्य* जगतो यज्ञस्य श्रैष्ठ्यम्; अपरियदस्य श्रेष्ठमाप्नोति न्यायः। केचित्तु 'येन नराः प्रशस्यन्ते, स नाराशंसो मन्त्रः' —इति पश्यन्तो मनुष्यस्तुतयस्ता इत्येवं मन्यन्ते। तदुक्तम्; न हि मनुष्याणा मनाविष्कृतलिङ्गैर्मन्त्रैः स्तुतिरुपपद्यते, दुर्बोध्यत्वात् तेषां मन्त्रबुद्धित्वाच्च मनुष्याणा मिति॥

"अपि वा सा कामदेवता स्यात्"। अपि वैव मन्यथा स्यात् सा ऋक्, स मन्त्रः, योऽनाविष्कृतलिङ्गः, स कामदेवतः स्यात्; कामतो ह्यौच्छातस्तस्मिन् देवता कल्पयितव्येत्यभिप्रायः। किं कारणम्? गुणपदमथो हि सः; न हि तत्र देवतासंविज्ञानपदम् अन्यतमदेवताविशेषप्रख्यापक मस्ति, यतो विशेषात् कस्याश्चिदेकस्यां देवताया मन्याभ्यो व्यावृत्त्यावतिष्ठेत, गुणपदानाञ्च सर्वेषां सर्वदेवताश्रयत्वादैश्वर्ययोगात् सर्वासां देवताना मिति।

"प्रायोदेवता वा" तस्मिन् मन्त्रे स्यादिति वाक्यशेषः। प्राय इति ह्यधिकार उच्यते। यद्देवताधिकारे ह्यध्ययनपाठानुक्रमे योऽनाविष्कृतदेवतालिङ्गो मन्त्रो भवति, स तद्देवत एवेति बोद्धव्यम्। तद्यथा,—अग्न्यधिकारे वर्त्तमाने आग्नेय एव मन्त्रो भवति, इन्द्राधिकारे चैन्द्र एवेति। अथ वा प्राय इति बाहुल्य मुच्यते। तद्यथा,—अनृतप्रायो देवदत्त इत्युक्ते अनृतबहुल एवेति गम्यते। एव मिहापि प्रायोदेवतेत्युक्ते बहुलदेवतेति स्यात्। किं कारणम्?

* "प्रजापतिर्यज्ञ मसृजत, यज्ञं सृष्ट मनु ब्रह्मक्षत्रे असृज्येताम्"—इत्यादि, "प्रजापतिरकामयत प्रजायेय भूयान्त्स्या मिति, स तपोऽतप्यत, स तपस्तप्त्वेमांल्लोकानसृजत पृथिवी मन्तरिक्षं दिवम्। * * *। योऽसौ तपति, स प्रजापतिः यज्ञ सतनुत"—इत्यादि च ऐ० ब्रा० ७, ४, १.—५. ५, ७।

"अस्ति ह्याचारो बहुलं लोके" अस्ति ह्येयं लोके बहुलस्य भूयस्त्वेन प्रसिद्धिः। निर्दिष्टेभ्यो द्रव्येभ्यो यदन्यदवशिष्यते, तत् साधारणं भवति। तद्यथा, कश्चित् निर्दिशति,—इदं मे "देवदेवत्यं" द्रव्यम्, इदं मे "अतिथिदेवत्यम्", इदं मे "पितृदेवत्यम्"—इति। तत्रैवं निर्दिष्टे ततो राशेर्यदन्यदवशिष्यते, तद्देवपितृमनुष्याणां साधारणं भवति। तथा चरुनिर्वपणकर्मणि इदं देवताना मिति निरुप्त मभिमृश्येदं नः सहेति शेष मभिमृशति सर्वसाधारणत्वप्रख्यापनार्थम्, एव मिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनादिष्टदेवतालिङ्गो मन्त्रराशिः स्यात्, सर्वसाधारणत्वाद् बहुदेवतो वैश्वदेवः स्यादिति॥

आह,—कः पुनरेतस्मिन् विचारे निश्चयः? उच्यते,—"याज्ञदैवतो मन्त्रः" योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स याज्ञो वा स्याद् दैवतो वा। "विष्णुर्वै यज्ञः"—इति* ह विज्ञायते। विष्णुः पुनरादित्य एव नैरुक्तानाम्, द्युस्थाने समाम्नानात्; "यच्च किञ्चित् प्रवह्लित मादित्यकर्मैव तत्"—इति हि वक्ष्यति†। तस्मादादित्यदैवतः स मन्त्रः, इति स्यात्। अथ वा दैवतः स मन्त्रः, देवता अस्मिन् देवतेति दैवतः; अविशिष्टं हि देवतात्व मग्नावेवं सर्वदेवताभिवादात् "अग्निर्वै सर्वा देवताः"—इति‡ ह विज्ञायते, "अग्निर्वै देवतानां भूयिष्ठभाग्"—इति§ च। 'अपरिग्रहं च प्रधानगामि'—इति न्यायः;

* ऐ० ब्रा० १प० १ख० ४ख०।

† परस्मादिहैवाध्याये ३पा० ४ख०।

‡ ऐ० ब्रा० १प० १ख० १ख०।

§ ऐ० ब्रा० १प० ५ख० १खण्डप्रभृतिषु द्रष्टव्यम्।

तस्मादाग्नेयः स मन्त्रः स्यादिति ॥ तथदुपोद्धात उक्तम् "नाराशंस इति नैरुक्ताः"—इति, तदेव कात्थक्य-शाकपूणि-मतेनावधृतं यज्ञोऽग्निरेवेति ; तौ हि नैरुक्ताविति ॥

"यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति"—इत्येवमादीना मपरो व्याख्यामार्गः।—'यद्देवतः स यज्ञः' यद्देवतं प्रधानं हविः; तद्यथा,—प्रकृताविन्द्रं सान्नाय्यं माहेन्द्रं वा, तत्संस्कारपरा इषेत्वादयः (य०वा०स०१,१.), तेनाविष्कृतदेवतालिङ्गा ऐन्द्रा एव भवन्ति, माहेन्द्रा वा। यद्देवते चाधिकारे चोदकेन प्रदिश्यन्ते, तद्देवता एव भवन्ति। तद्यथा,—कुविदङ्गेति प्राजापत्यग्रहणे विनियोगात् प्राजापत्य एव भवति *। यज्ञाङ्गं वेत्याघाराद्यभिप्रायेण। "वृषभोऽसि शाक्वरः"—इत्यनाविष्कृतदेवतालिङ्गः पूर्णस्रुचासादनमन्त्रः, स्रोचे विनियोगात्, तस्य च प्राजापत्यत्वात् प्राजापत्यः ॥

"अथान्यत्र यज्ञात्"। क्वान्यत्र यज्ञात् कर्मणो मन्त्राणां विनियोगः? उपाकरण-ब्रह्मयज्ञ-जप-प्रायश्चित्तेषु नैष्ठिक-ब्रह्मचारिणश्च। 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण † याजयति वाध्यापयति वा स्थाणुं वर्च्छति, गर्त्ते वा पतति, प्रवामीयते, *** यातयामान्यस्य छन्दांसि भवन्ति'—इति‡ प्रत्यवायश्रवणात् सर्वत्रान्वेष्या § देवतेत्यारभ्यव्य सथान्यत्र यज्ञादिति ॥

---

* "कुविदङ्ग नमसा"—इति ऋ० सं० ७, ९१, १। "कुविदङ्ग प्रति"—इति ऋ० सं० १०, ९४, १२। "कुविदङ्ग यवमन्तो"—इति ऋ० सं० १०, १३१, २; य० वा० सं० १०, ३२; १९, ६; २३, ३८।

† 'अविदितार्षेयच्छन्दोदैवतमन्त्रेण'—इति ग, घ।

‡ सा० वे० आ० ब्रा० १प्र० १ख०।

§ 'सर्वत्र पर्येष्या' ग, घ।

"प्राजापत्या इति याज्ञिकाः"। प्रजापतिस्तेषूपाकरणादिकर्मसूपास्य इति याज्ञिका मन्यन्ते; स ह्यनिरुक्त इत्यनिरुक्ततासामान्यात्। "नाराशंसा इति नैरुक्ताः" सौर्या वा आग्नेया वेति। "अपि वा सा कामदेवता स्यात्" अनाविष्कृतदेवतालिङ्गे मन्त्रे या विचार्यते देवता, कस्मिन् देवता स्यात्? इति, सा कामतः कल्प्या; इच्छात इत्यर्थः। गुणपदमयत्वात् तस्य। न मन्त्रवाक्यसामर्थ्याद् देवता नियम्यते तत्र; किन्तर्हि? प्रयोक्तुरिच्छासामर्थ्यात्। अथ वा प्रयोक्ता यत्कामस्तं मन्त्रं प्रयुङ्क्ते, तस्य कामस्य या देवता अधिपतिः, ता मेव तस्मिन्नभिसन्दधीत। "प्रायो देवता वा" समान मव पूर्वेण *।

"अपि ह्यदेवता देवतावत् स्तूयन्ते"। "यत्काम ऋषिर्यस्यां देवताया मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते"—इति मन्त्रदेवतालक्षण मुक्तम्, तदुपपद्यते देवाना मार्थपत्यसम्बन्धात्; अनाविष्कृतदेवतेष्वपि संविज्ञातपदाभावात् कल्प्यते देवता कामस्य अधिपतिरपि। यत्र तु स्फुटम् अदेवता देवतावत् स्तूयन्ते ननु तत्रैतल्लक्षणं व्याहन्यते? तद्यथा,—"अश्वप्रभृतीन्योषधिपर्यन्तानि"†। एतस्मिन् वर्गे कानि चित् सत्त्वानि, कानि चिद् द्रव्याणि; अश्वादीनि सत्त्वानि,

* पृ० ९०७ पृ० ९ पं०।—। अत्रास्माते त्वेतदुपन्यस्येष निष्कर्षोऽर्थः,—यज्ञादन्यत्र उपाकरणादौ गृह्यसूत्रादिविहितानां मन्त्राणां सर्वेषा मेव प्रजापतिर्देवतेति याज्ञिकमतम्; नैरुक्तानां न च तत्रास्ति सम्मतिः; नैरुक्तमते तु कश्चित् (यत्र नरप्रशंसा चार्थतो गम्यते तत्र) नाराशंसाः कश्चित् कामदेवताः, कश्चित्त प्रायोदेवताः प्रकरणानुसारतः विचाद्य इति।

† १भा० ४९४-४९५ पृ०; ५ २, १—११।

अश्वादीनि द्रव्याणि । तानि च पुनरासन्न मर्थं चेतयन्ते ; नातीतम्, नानागतम् इति ; आत्मनो ऽपि च हिताहितं न प्रतिपद्यन्ते । तानि कथ मभिष्टुतानि, स्तोतुरभिमतस्यार्थस्य पतित्वं करिष्यन्ति ? न हि तानि स्तुतिनिन्दे विशेषतो विदुः । अपिचाश्वादिषु चित्तिरपि* काचिदस्ति, न त्वचादिष्वपावस्ति ॥ ४ ॥

अथाप्यष्टौ द्वन्द्वानि स न मन्येतागन्तूनिवार्थान्† देवतानां प्रत्यक्षदृश्य मेतद्भवति माहाभाग्याद् देवताया एक आत्मा बहुधा स्तूयत एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्त्यपि च सत्त्वानां प्रकृतिभूमभिर्ऋषय स्तुवन्तीत्याहुः प्रकृतिसार्वनाम्न्याच्चेतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः कर्मजन्मान आत्मजन्मान आत्मैवैषां रथो भवत्यात्माश्व आत्मायुध मात्मेषव आत्मा सर्वं देवस्यदेवस्य‡ ॥ ५ (४) ॥

॥ इति सप्तमाध्यायस्य प्रथमः पादः§ ॥ ७. १.

||तस्मात् "सः" शिष्यः मेधावी "न मन्येत" न जानीयात्,—

* "चित्तिरपि"—इति ख-पाठः ।

† "मन्यतागन्तूनिवार्थानां" क, ख, ग ।

‡ देवस्येत्यस्य द्विर्वचनं न दृश्यते ङ-च-पुस्तकयोः ।

§ नात्र पादसमाप्तिः क-पुस्तके । ङ-च-पुस्तकयोस्तु पादनियमो नैव ।

|| मूलोक्त मष्टौ द्वन्द्वानीत्यव्याख्यात मेव स्थितम् । अष्टौ च तानि 'उलूखलमुसले"—इत्यादीनि १भा० ५, ९, १९—२९ द्रष्टव्यानि ।

सम्यगविरुद्ध मेतद्यत्रेण लक्षण मुच्यत इति। अपि च सुतरां न मन्येत,—"आगन्तुनिवार्थाम् देवतानाम्" मन्यमानः। लोके ताव-देते मनुष्याणा मनित्याना मश्वादयो ऽर्थाः, आगन्तवः अपायिन-श्चानित्याः। तद्यदि देवताना मप्येव मेव, ततस्तासां तेषां चानित्य-त्वात् स्तुतिरनर्थिका। अपि च "प्रत्यक्षदृश्य मेतद् भवति" प्रत्यक्ष एवैतद् दृश्यते। यथा—उपकरण मश्वादयः, उपकर्त्तव्या मनुष्याः। देवताना मपि चेन्द्राग्निसूर्यप्रभृतीना मुपकरणं हरिरोहिद्वह्निप्रभृ-तयोऽश्वाः। तस्मादुभयेषा मुपकरणोपकर्त्तव्यतासामान्यात् मनुष्या-श्ववदनित्यत्व मिति युक्तम्।

यत् स शिष्यो न मन्यते नैतत् सम्यग् विधीयत इति, तस्मात् प्रतिसमाधातव्य मित्युपोद्धृत्य उत्तर मुच्यते *;—"माहाभाग्यात् देवतायाः एक आत्मा बहुधा स्तूयते" यस्मात्, तस्मात् सर्व्व मेतत् सम्यगिति। भज्यत इति भागः सेव्यत इत्यर्थः। तत् पुनरैश्वर्यं महत्। "अणिमा महिमा लघिमा प्राप्तिः प्राकाम्य मेव च। ईशित्वं च वशित्वं च यत्र कामावसायिता †॥"—इत्येव मनेन महदैश्वर्येण भज्यते। महदेतदैश्वर्यं भजत इति वा महाभागा देवता, तद्भावो माहाभाग्यम, तस्माद् माहाभाग्याद्धेतोरेकोऽपि सन् देवतात्मा बहुधा स्तूयते, प्रकृतिभेदेन वा अप्रकृतिभेदेन वा वर्द्धमानः; निगमोऽपि हि भवत्यैश्वर्यप्रख्यापकः;—"रूपं रूपं मघवा बोभ-

* "प्रतिसमाधातव्य मेतदिति उत्तर मुच्यते"—इति ख, ग।

† "विभूतिर्भूतिरैश्वर्य मणिमादिक मष्टधा"—इत्यमरः (१।१८)। पातञ्जलीय-योगशास्त्रस्य विभूतिनाम-तृतीयपादे "ततोऽणिमादिप्रादुर्भावः" –इत्यादिके पञ्च-चत्वारिंशत्तमे सूत्रे, राजमार्त्तण्डादिषु चैतद्विवरणं विस्तरतो द्रष्टव्यम्।

वीति"—इति * । यथा यथा च लक्ष्यं तथा लक्षणं प्रवर्त्तयितु मर्हति, दृष्टानुविधानाच्छन्दसः; छन्दसि हि लक्ष्ये यावदभिधानं देवतानामात्मविधिव्यवस्था। संवादसूक्तानि च कयाशुभादीनि † इन्द्रमरुदादिसंवादव्यपदेशहेतुना गमयन्ति, तदशक्य मपासितुम्। तथा त्रिस्थानानां यान्यसङ्करवर्त्तीनि हविर्वहनरसादानलक्षणा-न्यग्नीन्द्रसूर्याणां कर्माणि लिङ्गान्यर्थदर्शनहेतुपरिच्छिन्नानि त्रित्वं गमयन्ति ‡, तदपि चाशक्य मपासितुम्। तथाचैकात्म्य मिन्द्रं मित्रं वरुण मग्नि मित्यादयो गमयन्ति निगमाः §, तदप्यशक्य मपासितुम्। त्रिष्वपि चैतेषु पक्षेषु ऐश्वर्य मपरिहीणं देवतायाः। तत्रैवं सत्यैकात्म्यं तावदाश्रित्य प्रतिसमाधानम्।—

"एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति"। माहाभाग्या-देकस्य देवतात्मनः प्रकृतिभेदेन चाप्रकृतिभेदेन चेति। चेतनाचेतन-विकरणधर्मित्वादात्मानं‖ विकुर्वतोऽस्य अन्ये देवाः प्रत्यङ्गानि भवन्ति। अग्नीन्द्रसूर्याणां परस्परापेक्ष मन्यत्वम्; अनन्यत्वं त्वेकेन देवतात्मना महता सह। यथा घटादीनां मृदा; न ह्यङ्गिन

---

* "रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्। त्रिर्यद्दिवः परि मुहूर्त मागात् स्वैर्मन्त्रैरनृतुपा ऋतावा॥"—इति ऋ० सं० ३, ३, १०, ३। "इन्द्रो मायाभिः पुरुरूपः"—इत्यपि द्रष्टव्यः। ऋ० सं० ४, ७, ३३, ३।

† ऋग्वेदीयप्रथममण्डलस्य त्रयोविंशोऽनुवाके पञ्चदश सूक्तानि। तत्र कयाशुभीयं नाम पञ्चदशर्चं माद्यं सूक्तम्। यत्रेन्द्रागस्त्यमरुतां संवादः प्रतिपाद्यते। एतस्याद्या ऋक् कया शुभा सवयस इति १, १२, १, १।

‡ यास्कोऽत्रैवानुपद मेव स्वयं वक्ष्यति।

§ "इन्द्रं मित्रं वरुण मग्नि माहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान माहुः॥"—इति ऋ० सं० २, ३, २२, ६।

‖ "चेतनविकरणधर्मित्वात्"—इति ख, ग।

मङ्गान्यतिरिच्यन्ते, भेदेनाग्रहणात्। न चाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति; न ह्यधिष्ठान मनपेक्ष्य प्रत्यधिष्ठानं नाम भवति। तस्मादग्नीन्द्रसूर्य्यात्मकस्य देवतात्मनोऽङ्गानि,—जातवेदो-वायु-भग-प्रभृतीनि*, शकुन्यश्वप्रभृतयश्च प्रत्यङ्गानि†। स एष महानात्मा अग्नीन्द्रसूर्याद्यङ्गप्रत्यङ्गभावेन व्यूह मनुभवन् एकोऽपि सन् बहुधा स्तूयते॥

"अपि च" एवं कृत्वा "सत्त्वानाम्" अश्वादीनां "प्रकृतिभूमभिः ऋषयः स्तुवन्तीत्याहुः"। प्रक्रियन्ते अस्यां सर्वे विकाराः इति प्रकृतिः, स सत्तालक्षणो महानात्मा हिरण्यगर्भ इति। वक्ष्यति हि,—"स एष महानात्मा सत्तालक्षणः, तत् परम्, तद् ब्रह्म ०——० स भूतात्मा, सैषा भूतप्रकृतिः"—इति‡। तस्या भूमा बहुत्वम्; अनेकधा विपरिणामः स्थावरजङ्गमभावेन। प्रकृतेर्भूमानि बहुलानि यानि सत्त्वानां तैरनन्यविषयत्वं पश्यन्तः कार्यकारणयोरनन्यत्वात् कारण-महिमभिः तान्यश्वादीन्यभिष्टुवन्तीत्याहुरात्मविदः। तद्यथा,—"द्यौस्ते पृष्ठं पृथिवी शरीर मात्मान्तरिक्षम्"—इत्येवमादीनि§। आत्मैव सर्वं स्थावरजङ्गम मित्यवेत्य अश्वमेधे 'मूलेभ्यः स्वाहा, शाखाभ्यः स्वाहा'—इत्येवमादिभिस्तेन तेन वैशेषिकेण स्थावरजङ्ग-मात्मना प्रकृतेरभिन्नेनावस्थानेनावस्थितो महानेवात्मेज्यते; न ह्यदेवता याग मर्हति। यत्रचान्यदपि किञ्चिदेवम्प्रकार मदे-

---

*,† १मा० ५ख० १—९ खण्डे द्रष्टव्यानि; इह चोपरिष्टात्।
‡ प० १३ख० १पा० ३ख०।
§ य० वा० सं० २१, १०। "पृथिवी मुधस्थं"—इत्येव तन्त्रत्यपाठः।

वताभिमत मिष्यते। गृह्ये च वलिप्रकृतिकर्मादौ* सर्वत्र स एवेत्युपेक्ष्यम्॥

"प्रकृतिसार्वनाम्नराच्च" एतदुपपन्नम्; नैताः (अदेवताः†) देवतावत् स्तूयन्ते, किन्तु महानेवाय मात्मा विश्वरूपः स्तूयत इति। प्रकृति-सार्वनाम्न्यादिति। नतिमात्रं नाम, नामनं सञ्ज्ञा‡ सर्वत्वेन नाम सर्वनाम, (प्रकृतेः सर्वनाम प्रकृतिसर्वनाम, तद्भावः प्रकृतिसार्व-नाम्नम्, तस्मात् प्रकृतिसार्वनाम्न्यात् हेतोः। यस्मात् महाभाग्ययुक्ता देवता, §) प्रकृतिः; यस्माच्च सर्वत्वेन नता, तस्माद्धेतोर्नैताः (अदे-वताः ||) देवतावत् स्तूयन्ते।

अपि चैतदभिहितम्,—'आगन्तूनिवार्थान् मन्यमानो हरिरो-हिद्धरितादीनिन्द्रादीनां मनुष्याश्ववदनित्यत्व मवेत्य न सम्यगभि-धीयत इति स न मन्येत'—इति¶। अत्र ब्रूमः,—मनुष्यधर्मविपरीतो हि देवताधर्मः, अनैश्वर्यान्मनुष्याणा मैश्वर्य्याच्च देवतानाम्। तत् कथम्? इति। अतो भेद माश्रित्य प्रतिसमाधीयते;—"इतरेतर-जन्मानो भवन्ति"। इतरेतर-प्रकृतयो देवाः, ऐश्वर्यात्; न मनुष्याणा मियं शक्तिरस्ति, अनैश्वर्यात्। मनुष्याणां हि पिता, पुत्रं जनयतीति पिता प्रकृतिः; न पुनरिच्छन्नपि पुत्रः पितरं जनयति। देवानां त्वग्नेः सूर्यो ऽजायत;—"एष प्रातः प्रसुवति"—इति ह विज्ञायते,

* "यथापराम् वलीन्०—०प्रथमो वलिर्भवत्योषधिवनस्पतिभ्यः (गो० गृ० १प्र० ४ख० ६सू०)"—इत्येवमादावित्यर्थः।

† "नतिमात्रं नामनं संज्ञा"—इति च।

‡, §, || नैतेऽशाः ख-ग-पुस्तकयोर्दृश्यन्ते।

¶ प० २१२पृ० १५पं०—२१४पृ० ६पं०।

तस्मात् सूर्यस्याग्निः प्रकृतिः* । सूर्याच्चाग्निः सायं जायते, तस्मादग्नेः सूर्यः प्रकृतिः† । अदितेर्दक्षो दक्षाच्च अदितिरिति। अथाध्यात्मेऽपि;—कोष्ठ्यादग्नेर्नाद इन्द्रः, बलादिन्द्रान्मथ्यमानः अग्नि रित्येवमादि ‡। स एष सर्वथाप्यचिन्त्यो देवताधर्मः। तासां मान-स्यान्महाभाग्यम् । नचैवं सत्यशक्य मध्यवसातुम्,—यथा मनुष्याणा मागन्तवोऽश्वादयस्तथैव देवताना मपीति। तस्माद् दोषानुपपत्ति-रनागन्तुत्वाद् देवाश्वादीना मिति ॥

अथ किमर्थ मीश्वरा मन्त्रो देवता जायन्ते? इति,—"कर्मज-न्मानः" कर्मफलसिद्धये लोकस्य अग्नि-वायु-सूर्या जायन्ते; न ह्येतेभ्य ऋते लोकस्य कर्मफलसिद्धिः स्यात्—विद्यमान मपि चैश्वर्य मैश्वर्य-वति न प्रख्याति मियात्, ईशितव्य मर्थ मप्रतीत्य §। तस्मादै-श्वर्यप्रख्यापनाय जायन्ते ‖ ।

कर्मफलसिद्धौ लोक मनुजिघृक्षन्तः कुतः पुनर्जायन्ते?—"आत्म-जन्मानः" योऽसावेक आत्मा बहुधा स्तूयत इत्युपात्तः, सर्वमूर्त्तिस्थितौ उपरतसर्वमूर्त्तिः; प्रलये भावाख्यः सन्मात्रः, सर्गकाले षोढात्मानं

* "अग्निर्वैश्वानरः प्राच्यावत्, तस्य यद्गतमः प्रथम मुदद्दीप्यत, तदसावादित्यो-ऽभवत्"—इति ऐ० ब्रा० ३,२,१० । "अग्नेर्वा आदित्यो जायते"—इति च ऐ० ब्रा० ८, ५, ५ ।

† "उद्यन् वा"—इत्याद्यैतरेयकं द्रष्टव्यम् (५, ५, ९)। "आदित्यो वा अस्तं यन्नग्नि मनुप्रविशति"—इति च ऐ० ब्रा० ८, ५, ५ ।

‡ "बलान्मथ्यमानोऽधिजायते"—इत्याद्यैतरेयकं च द्रष्टव्यम् (८, ५, ५)।

§ "ईषितव्य मर्थंप्रतीत्या"—इति ख, ग ।

‖ अपिचेत्यादि-कर्मजन्मान इत्यन्तस्य यास्कीयग्रन्थस्य प्रकृतिवादे तात्पर्य मिति दुर्गाचार्यीय मिदं व्याख्यानं नास्मभ्यं रोचते ... मनोरमम्।

विभज्य जगद्धात्रं बिभर्त्ति*, तस्माज्जायन्त इत्यात्मजन्मान:। क एव तस्मान्न जायते? इति चेत्, सत्यम्! सर्वं तस्माद् जायते न कामकारेण, देवास्तु त मात्मानं पश्यन्तो योगेन ततः कामकारतो जायन्ते। कि मेषां जन्म? यदेषा मिच्छतां सङ्कल्पानुविधायिकर्मानुरूपं यथाकाल मात्मनः कार्यकारण मुत्पद्यते, तदेतेषां जन्म; तदनीश्वराणां नास्ति †॥

यतस्त्वीश्वरास्ते तस्मादात्मनस्तत्सङ्कल्पानुविधायित्वात् "आत्मैवैषां रथः भवति, आत्मा अश्वः, आत्मा आयुधम्, आत्मा इषवः, आत्मा सर्वं देवस्य"। तत्र यदुक्तम्,—'अश्वादीनि सत्त्वानि, अचरथप्रभृतीनि च द्रव्याणि अदेवताः'–इति ‡, एतदयुक्तम्। देवता एवेमाः, रथादिरूपेण हि देवतैवात्मानं विकृत्य प्रकृतिभेदेन रथादिसाध्य मर्थं साधयति। सा तद्रूपा सती रथादिस्तुत्या स्तूयते, सा च स्तुतिसमवेत मर्थं माशासितं स्तोतुस्तेनैव रूपेण साधयितु मल मिति§॥

तस्मात् "माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि‖" तासा

* अस्ति विपरिणमते इत्यादयः षड् भावाः १भा० ९४पृ० १पं० द्रष्टव्याः।

† सर्वं व्याख्यान मेत दसङ्गतम्, यास्कीयवचनतात्पर्यविरोधात्; न हि कस्मिंश्चिदपि पदार्थे आत्मवादिना मनात्मदर्शनसम्भवः।

‡ पृ० ११२पृ० ११पं०—११३पृ० ५पं०।

§ इद मपि व्याख्यानं तथैव। अस्मन्मते तु,—'एषाम्' आत्मवादिनां मते 'आत्मा एव रथः, आत्मा (एव) अश्वः, आत्मा (एव) आयुधम्, आत्मा (एव) इषवः, सर्वम् (एतत् चराचरम्) देवस्य आत्मा (एव) भवति' न हि आत्मान मृते किञ्चिदस्तीति सर्वथा मेव पदार्थाना मात्मत्वं तदनुगतं देवत्वं च निर्विवाद मित्यात्मदृष्टीनामात्मवादिनाम् ऋषयो रथादीनपि स्तुवन्त इत्यात्मवादिमतेऽप्येते एव यास्कवचनतात्पर्य मिति।

‖ एतच्चानुपद मेव षष्ठे खण्डे वक्ष्यति; तेन च प्रकृतिप्रदर्शने तात्पर्यम्।

मेव त्रिमूर्त्तीना मग्न्यादीनां माहाभाग्यादैश्वर्ययोगादात्मान मनेकधा विकुर्वतीना मेकैकस्याः प्रतिविकारं नामधेयप्रतिलम्भात् तेनैव रूपेण धारयन्त्यात्मान मिति "यत्कामऋषिर्यस्यां देवताया मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते"—इत्यस्य* लक्षणस्याव्याघातः, तस्मात्सम्यगेवोक्त मिति। अथ वा स्तुतिमत्त्वन्यायेन चतुर्द्दशेऽध्याये† "यज्ञसंयोगात् राजा स्तुतिं लभेत"—इत्यत्र‡ पुनः प्रतिसमाधास्यामहे ॥ ५ ॥

॥ इति निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य) प्रथमः पादः ॥ ७, १ ॥

---

॥ द्वितीयः पादः ॥

तिस्र एव देवता इति नैरुक्ता अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानस्तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्त्यपि वा कर्मपृथक्त्वाद्यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति तथाभिधानानि यथो एतत्कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्म्माणि कुर्युस्तत्र संस्थानैकत्वं सम्भोगैकत्वञ्चोपेक्षितव्यं यथा पृथिव्यां मनुष्याः पशवो देवा इति

---

* पृ० ८८५ पृ० ८वं०।

† चतुर्द्दशेऽध्याये—यास्कीयनैवक्तनवमे इति बोध्यम्।

‡ इदंच परस्तात् ९, १, १ द्रष्टव्यम्।

स्थानैकत्वञ्च* सम्भोगैकत्वञ्च दृश्यते यथा पृथिव्याः पर्ज्जन्येन च वाय्वादित्याभ्यां च सम्भोगो ऽग्निना† चेतरस्य लोकस्य तत्रैतन्नरराष्ट्र मिव ॥ १ (५) ॥

"तिस्र एव देवता इति नैरुक्ताः"—इति उपोद्घातः। "सैषा देवतोपपरीक्षा"—इत्यधिकारे‡ वर्त्तमाने "यत्काम ऋषिर्यस्याम्"—इत्येवमादि मन्त्रलक्षणदेवता मुक्तम् §, तत्पुनरदेवतात्वादश्वादीनाम् "आ नो मित्रो वरुणो अर्यमा"—इत्येवमादिषु व्याहन्यमान मपेक्ष्य "स न मन्येत"—इत्येव मादिनाक्षिप्ते‖ "माहाभाग्यात् देवताया एक आत्मा बहुधा स्तूयते"—इत्येवमादिना¶ "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्"—इत्यवमादिभ्यो** मन्त्रवाक्येभ्यः—"अथातो विभूतयोऽस्य पुरुषस्य"—इत्येवमादिभ्यश्च ब्राह्मणेभ्यः—"एष इन्द्र एष प्रजापतिः"—इत्येवमादिभ्यश्चैकात्म्ये सामर्थ्य मुन्नीयात्मवित्पक्षेण आत्मैवेदं सर्वम्—इत्यैकात्म्य मुक्तम्††। आत्मविदां ह्यात्मन्युपजातविशिष्टभावनाना मात्मशरीरस्थाना मात्ममय मेवेदं सर्व मनुपश्यता मात्मार्थः सर्वो वेदो ऽन्या च सर्वा वाक्;

* "स्थानैकत्वं" क, च।
† "सम्भोगो अग्निना" क।
‡ पृ० २८५पृ० ७पं०; २८७पृ० १पं०।
§ पृ० २८५पृ० ८पं०; २८०पृ० १२पं०।
‖ पृ० ३११पृ० ९पं०।
¶ पृ० ३११पृ० ७पं०।
** ऋ० सं० ८, ४, १७, १।
†† पृ० ३१२पृ० १२पं० 'आत्मा सर्वं देवस्य'—इति।

न ह्यात्मनो ऽन्यद् व्यतिरिक्त मभिधेय मस्ति, स तमेवाह् यद्-भिधान मभिदध्यात्। अथ पुनरुपक्रमः पुरुषार्थस्य,—प्रथम मनिश्रेणीफलकस्थानीयेन* केवलेनाधियज्ञेन तत्र चावधाने अधि-दैवताध्यात्मज्ञानं किञ्चिद् विदुषः पृथगात्मनो देवताः पश्यतः, परिच्छिन्नफलाभिप्रायस्याधियज्ञं प्रयुञ्जमाणस्य पूर्वजन्माविद्यावा-सितान्तःकरणस्याभिधानस्तुतिभेदाभ्यां विधिमन्त्रार्थवादविद्यारसेन† यथायथं पृथगिव देवताः प्रकाशन्ते। तदुक्तम्,—"अथ योऽन्यां देवता मुपास्ते अन्योऽसावन्योऽह मस्मीति न स वेद"—इति। तदाहुः,—"आत्मयाजी श्रेयान् देवयाजी वा? इति, आत्मयाजीति ह ब्रूयात्" तदेवं ब्रह्म देवता-वृक्षस्य मूलम्, ऐकात्म्य मात्मविदः प्रत्यवभासते; (यात-...नन्तु याज्ञिकाः, प्रतिविधिमन्त्रप्रधानात्; यथात्रशिष्यते, तन्नैरुक्तात् प्रत्यवभासते‡) अत इद मुच्यते,—"तिस्र एव देवता इति नैरुक्ताः"। तिस्र इति सङ्ख्या। एवेत्यवधारण मितरौ पक्षौ अपेक्ष्य॥

कतमास्ताः? इति,—"अग्निः पृथिवीस्थानः, वायुः वा इन्द्रः वा अन्तरिक्षस्थानः, सूर्यः द्युस्थानः"। कयोपपत्त्या चित्वं परिजगदुः? स्थानभेदात्, प्रत्यक्षलिङ्गादन्यार्थदर्शनाच्च; लिङ्गं त्रिधा हि भवति,—"विश्वकर्मा ह्यजनिष्ट देव आदिद् गन्धर्वो अभवद् द्वितीयः। तृतीयः पिता जनितौषधीना मपां गर्भं व्यदधात् पुरुत्रा §॥"—इत्यत्र,

* "प्रथमनिश्रेणीफलकस्थानीयेन" ख. ग

† "विधिमन्त्रार्थवादविद्यावसेन" ख. ग

‡ नैषोऽंशो दृश्यते क-पुस्तके।

§ ऋ० सं० ७० वा० सं० १०, ११।

"अजस्य नाभावध्येक मर्पितम् *"—इत्यन्यार्थदर्शनाच । "प्रजापतिर्वै त्रीन् महिम्नोऽसृजताग्निं वायुं सूर्यम्"—इति † "प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यो रसान् प्रावृहदग्निं पृथिव्या वायु मन्तरिक्षात् सूर्यं दिवः"—इति ‡ "अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः"—इति । "तिस्रः"—इति प्रकृतेः स्वरूपग्रहणात् स्थानभेदं त्रित्वे हेतु मुपसंस्थापयति । कुतो नियमः? अग्न्यादीनां पृथिव्यादिषु निगमेभ्यः;—"पृथिव्यसि जन्मना वशासाग्निं गर्भ मधत्थाः, अन्तरिक्ष मसि जन्मना वशासा वायुं गर्भ मधत्थाः, द्यौरसि जन्मना वशामाऽऽदित्यं गर्भ मधत्थाः"—इत्येवमादिभ्यो निगमेभ्यः ॥

"वायुर्वेन्द्रो वा"—इति कि मेकस्य पर्यायवचनावेतौ शब्दौ, उताभिधेयौ भिद्येते? इति । कुतः सन्देहः? उभयथा हि प्रसिद्धिः;—प्रत्यभिधानस्यार्थभेदो दृष्टः,—गौः अश्वः इति; यथाभिधानभेदेऽपि चैकार्थता दृष्टा,—हस्तः करः पाणिः इति यथा । अतो युक्तः संशय इति । याज्ञिकपक्षे तावददोषः । अर्थभेदेऽपि चैतेषां यावन्त्यभिधानानि तावत्यो देवताः, अस्य पुनराचार्यस्य स्वसिद्धान्तावलम्बिनः "तिस्र एव देवताः"—इति प्रतिज्ञातवतः कुतो वाय्विन्द्रशब्दयोरर्थभेदः? भेदे हि प्रतिज्ञाहानिः स्यात्, अपि च भेदेऽभिप्रेते नैकवचनेन निरदेक्ष्यदन्तरिक्षस्थान इति; अभिधानमात्रे भिन्नेऽप्य-

* ऋ० ८, १, १०, ६

† "प्रजापतिरकामयत"—इत्याद्यैतरेयकं ब्राह्मणम् (५.५,७) ।

‡ शा० ब्रा० ४ प्र० १० ख० । परमस्ति तत्र किञ्चिद् पाठभेदः

भिधेयस्य चाभेदे अन्तरिक्षस्थान मित्यनुपपत्तेः। यद्येकत्ववचनो विशेष्योऽन्तरिक्षस्थानशब्देन विशेष्यते; इतरथा ह्यन्तरिक्षस्थानी इत्यवक्ष्यत् द्वयोर्विशेष्ययोः। अपि च "वायवायाहि दर्शत"-इति * वायोः प्राधान्यमृति मुदाहृत्य तां निहत्य तस्यां सोमपानसम्बन्ध मुपलक्ष्य,—ऐन्द्रत्वं च सोमस्यावेत्य "अंशुरंशुष्टे"—इत्येतस्मिन्, "आ त्व मिन्द्राय प्यायस्व", "तुभ्य मिन्द्रः प्यायताम्"—इति † मान्य-चेन्द्रशब्दात् मुख्याभिसम्बन्धिनो मध्यमात् सोमपानं सम्भवतीति प्रतीत्य ‡ वायुशब्दस्येन्द्रशब्दस्य समानार्थतां दृढ मवधार्य मन्यमानो वायुशब्दस्य मध्यमादर्थान्तरे वृत्ति मपर्यायशब्दत्वादिन माचिपन्नाह "क मन्यं मध्यमादेव मवक्ष्यत्"—इति §। उत्तर मपि च य मुदाजहार निगमं "तस्यैषा परा भवति"-इत्युपोद्धत्यैतदैन्द्रा-देव सूक्ताद् "अस्येन्द्रस्य वायोर्यथा भक्तो न विदस्येत्, तथा अन्न मेव मभिवहेयुः"—इति वायुशब्दस्येन्द्रविशेषणत्वं प्रतीत्य इन्द्रप्रधानत्वात् सूक्तस्य च इन्द्र उपात्तः ‖। तस्मादाचार्यस्य मध्यमपर्यायवचनावेतौ शब्दाविति ॥

सत्यपि तु पर्यायवचनत्वे मुख्यतरः सम्बन्धो मध्यमस्येन्द्रशब्देन, तथा वायुवरुणरुद्रादिभिः। तत् कुतः? तथा निगमे दर्शनात् ;—"सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः। स प्रथमो

* ऋ० सं० १, १, ७, १।—प० १०, १, ९।
† य० वा० सं० ५, ७।
‡ पृ० ५९ पं० ९ ऋ० "इन्द्रः सोमस्य काणुका"—इत्यादि द्रष्टव्यम्।
§ १०, १, २। परस्तादिहैव वक्ष्यति।
‖ परस्ताद्वक्ष्यति तदनन्तरमेव १०, १, १—२। परं तत्र नैवं पाठः

वृहस्पतिस्त्रिकित्वाँस्तस्मा१ इन्द्राय सुत मा जुहोत स्वाहा"—इति। सा प्रथमा संस्तुतिरित्येतस्मिञ्छुक्रामन्थिनोर्ग्रहणमन्त्रे यो मध्यमो वरुणोऽपि मित्रोऽग्निः, तस्मै इन्द्राय सुतम् आ जुहोत इति वरुणादीन्यनुक्रम्य विशेषतस्तुचतुर्थ्यन्तेन इन्द्रशब्देन सम्प्रदानेन सम्बध्नाति तस्मै मध्यमायेन्द्रायेति, तस्मात् सम्प्रदानेन सामानाधिकरण्यात् मन्त्रान्ते मध्यमशब्देन्द्रशब्दयोर्मुख्यतरः सम्बन्ध इति गम्यते; यथा मध्यमस्य ज्योतिषो मुख्यः सम्बन्ध इन्द्रशब्देन, तथेतरयोरपि पार्थिवोत्तमयोरग्निसूर्यशब्दाभ्याम्, प्रसिद्धतरत्वात् सम्बन्धस्य, न तथेतरैर्जातवेदः-प्रभृतिभिः। सति च गौणमुख्यत्वे युक्तं यदग्न्यभिधानेन प्रसिद्धतरसम्बन्धेन पार्थिवस्य ज्योतिष उपदेशः क्रियते, न जातवेदःप्रभृतिभिः; तथोत्तमस्य सूर्यशब्देन उपदेशः क्रियते, न सवितृ-भग-प्रभृतिभिरिति॥

कस्मात् पुनर्मध्यमस्य शब्दद्वयेनोपदेशः क्रियते, पार्थिवोत्तमयोरेकैकेन? इति। मध्यमस्य हि द्वौ कर्मात्मानौ विद्युद्वाय्वाख्यौ। तयोरनित्यदर्शन एको विद्युदाख्यः, नित्यदर्शनस्तु वाय्वाख्यः त्वगिन्द्रियप्रत्यक्षः। तत्कथं नाम त्रिष्वपि स्थानेष्वभिमानिन्यो देवताः कर्मात्मभिरवैषम्येण प्रत्यक्षत एवोपदिष्टाः स्युः? इत्यतो "वायुर्मध्यमस्थानः"—इति वाय्वाख्येन कर्मात्मना मध्यमस्थान मुद्दिश्यामुख्यत्वाद् वाय्वभिधानस्य, मुख्यत्वाच्चेन्द्राभिधानस्य "इन्द्रो वा"—इत्याह। एव मुभयं कृतं भविष्यति,—अनुपरतक्रियाव्यापारता च मध्यमस्य वाय्वाख्येन कर्मात्मना इतरज्योतिर्वद् दर्शिता भविष्यति, मुख्येन चेन्द्रशब्देन मुख्यः सम्बन्धो ऽपरिहापितो भविष्यतीत्युभय मुक्तम्,—

"वायुर्वेन्द्रो वान्तरिक्षस्थानः"—इति। न तु पार्थिवोद्ग मयोर्द्वौ द्वौ कर्मात्मानौ स्तो यथा मध्यमस्थानस्य, तस्माददोषो मध्यमस्याभिधान-द्वयोक्ताविति ॥

आह;—यदिद मभिधानबहुत्वं जातवेदो वैश्वानर इत्येवमादि, किन्नु सत्यनत् किं कृतम्? इति। उच्यते,—"तासां महाभाग्यात् एकैकस्या अपि बहूनि नामधेयानि भवन्ति"। तासा मेव निर्गुणा मग्न्यादीनां महाभाग्यात् ऐश्वर्ययोगात् एकात्मान मनेकधा विकुर्वतीनाम् एकैकस्याः प्रतिविकारं जातवेदः, वैश्वानरः, वरुणः, रुद्रः, अश्विनौ, उषा इत्येवमादीनि बहूनि नामधेयानि भवन्ति, प्रतिस्थानं स्वप्रकृत्यभेदादेकात्म्यवदेवैकत्वं न जहाति सा सा देवतेति ॥

"अपि वा कर्मपृथक्त्वात्"। अपि चैवं विकरणधर्मित्वादभिन्नप्रकृतीनां बहुनामता। अपि वा स्वं स्व मात्मान मविकुर्वतीना मेवानेककर्मयोगात् पृथक्कर्महेतुको नामधेयलाभः स्यात्। को दृष्टान्तः? "यथा,—होता, अध्वर्युः, ब्रह्मा, उद्गाता,—इति अपि एकस्य सतः" कुण्डपायिना मयने। तत्र हि सप्त दीक्षन्ते, त एव च स्वयं कर्म कुर्वते; तेषां षट्, षोडशानां पर्यायेण कर्म कुर्वते, तत् कर्म कुर्वाणाः तदाख्या भवन्ति*; यथा लोके कारक-लावक-पाचकादयः। तदेतत् प्रदर्शितं भवति,—न किञ्चिदप्यत्र गौण

* यथा ह्यग्निष्टोमादौ षोडश दीक्षिता भवन्ति, षोडशानाञ्च तेषां होत्राध्वर्यवौद्गात्रादीनि षोडश कार्याणि यथासङ्ख्य मुपदिश्यन्ते, नैवं कुण्डपायिना मयने; अत्र हि सप्तैव दीक्षा विधीयन्ते। तत्र यजमान एकः, अपरे षट्; त एव च षड् ऋत्विजो होतृ-पोतृ-नेष्ट्रादीनां मृत्विक्स्थानि पर्यायेण कुर्वन्ति, तत्तत्कर्मकरणकाले च तत्तदाख्याञ्च लभन्त इति।

मभिधानम्, संविज्ञानपदत्वे त्वग्न्यादीनां संज्ञाशब्दानां तेषां कारकादिशब्दैरेष विशेषो यदग्न-नयनादिगुणयोगेऽप्यसति नाग्न्यादीन् जहति; कारकादिशब्दास्तु करणादियोगमनन्तरमेव कारकादीन् जहति। एव मेतदगौणत्व मभिधानाना मपेक्ष्योक्तम्,—"अपि वा कर्मपृथक्त्वात्"—इति। अपि वैश्वर्यादुभयथापि शक्यप्रतीघात उपपद्यत एकैकस्या अपि बहुनामतेति॥

अपि वा पृथगेव स्युः पृथग्घि स्तुतयो भवन्ति"। अपि चैवं यथोक्त मेकैकस्या महाभाग्यात् कर्मपृथक्त्वाद्वा बहुनामता। अपि वा पृथक् पृथक् अत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन स्युरिति याज्ञिका आहुः,—"पृथक् हि स्तुतयो भवन्ति"—इति। कुत एतत् याज्ञिका आहुः? इति। अधियज्ञे हि स्तुतिनियमो भवत्यभिधाननियमश्चेति। अधियज्ञ मिति व्याख्येयम्*,—"पृथग्घि स्तुतयो भवन्ति"—इति। हीति हेतौ, यस्मात् पृथक् पृथक् अग्न्यादीनां स्तुतयो भवन्ति।—पृथगग्नेः—"अग्नि मीळे"—इत्येवमाद्याः†, पृथग् जातवेदसः—अग्निलिङ्गं सूक्तम् "प्र नूनं जातवेदसम्"—इति‡, पृथगिन्द्रस्य—"हरिभ्याम्"§, पृथग्वायोः—"नियुद्भिः"‖, पृथक् सूर्यस्य—हरिद्भिः¶,

* इतोऽनन्तरं "यज्ञ मिति च"—इत्यधिकं ख-म-पुस्तकयोः।

† ऋ॰ सं॰ १, १, १, १।—उपरिष्टाच्च दर्शयिष्यतीत्येव ७, ४, २।

‡ ऋ॰ सं॰ ८, ८, ४९, १।—उपरिष्टाच्च दर्शयिष्यतीत्येव ७. ४. ७।

§ "हरी" १भा॰ १५१. १५२ पृ॰ (१)। ऋ॰ सं॰ १, २, ५, १. इत्यादयः।

‖ "नियुतः" १भा॰ १५२, १५५ पृ॰ (१०)। ऋ॰ सं॰ ५, ९, १४, २. इत्यादयः

¶ "हरितः" १भा॰ १५१, १५४ पृ॰ (१)। ऋ॰ सं॰ १. ८, ७, ४. इत्यादयः।

पूष्णोऽजाभिः *, अरूणीभिर्गोभिरुषसाम् †। स्तुतिव्यवहारे ‡ च प्रायश्चित्तम्, तदनुपपन्नश्च पर्यायवचनत्वे तेषाम्। ते वयं स्तुतिनियमात् पश्यामः पृथक् पृथगग्नि-वैश्वानरप्रभृतय इति ॥

"तथाभिधानानि"। यथैव हि स्तुतिभेदात् स्तुत्यभेदः, एवमेवाभिधानभेदादभिधेयभेदोऽपि भवितु मर्हति। प्रसिद्धतरं चेदं लोके प्रत्यभिधान मर्थभेद इति, न तथैकस्यानेकाभिधानता। तस्मात् पृथग् पृथगग्निजातवेदोवैश्वानरादिशब्दाना मभिधेया इति स्थितिः। स्तुतिष्वेव हि अभिधानभेदत इति समानार्थता हेत्वाः? इति चेत्, न; विधावप्यभिधाननियमदर्शनात्;—"आग्नेय मष्टाकपालं निर्वपेत्" इति § येनैवाभिधानेन चोद्यते, तेनैव निर्वपणादारभ्य समाप्यते, तस्मादसमानार्थतेति ॥

"यथो एतत्" यत्पुनरेतदुक्तम् "कर्मपृथक्त्वादिति"। अनैकान्तिक एष दृष्टान्तः; दृष्टो हि प्रकृतिभेदात् प्रतिकर्मभेदः, सा च पृथक्त्वादिव्यवस्था माहाभाग्यादित्याचार्येणात्र पृथक्त्वे हेतुर्न प्रयुक्तः ‖; दृष्ट एव हि याज्ञिकपक्षे प्रत्यभिधान मर्थभेद इति। तत् किं सैकत्वं नास्त्येव? तन्नास्ति; गुणतः ॥

* "अजाः" १भा० १५९, १५४ पृ० (५)। ऋ० मं० ९, २, ९, ४. इत्यादयः।

† "अरुण्यो गावः" १भा० १५१, १५५ पृ० (७)। ऋ० मं० १, १, ९, १. इत्यादयः।

‡ व्यवहारोऽत्र व्यत्ययो बोध्यः। तथा चाग्निस्तुतो जातवेदसः स्तुतिमन्त्रपाठो जातवेदसः स्तुतौ चाग्निस्तुतिपाठ इत्येवमादिः। "स्तुतिव्यत्ययभिचारे"—इति ख-पाठः, "स्तुतिव्यभिचारे"—इति ग-पाठः।

§ "पुरोडाशमग्निर्निर्वपेदष्टाकपालं प्रातः सवने"—इति (१, २, ५.). 'अग्नयेऽग्निवतेऽष्टाकपालं पुरोडाशं निर्वपेत्"—इत्यादि च (७, १, ५—७) ऐ० ब्रा०।

‖ "हेतुर्न प्रत्युक्तः,' ख, ग।

कथम्? "तत्र संस्थानैकत्वं सम्भोगैकत्वं च उपेक्षितव्यम्"। तत्र तस्मिन् पृथक्त्वे सति संस्थानैकत्वं सम्भोगैकत्वं च उपपत्तित ईक्षितव्यम्। तत्र दृष्टान्तः,—"यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वम्, सम्भोगैकत्वं च दृश्यते"। सह स्थानतया एकत्वं स्थानैकत्वम्; पृथिवीत्युक्ते यावतां सह भावेन समानं स्थानम्, ते सर्वे तद्ग्रहणेन गृह्यन्ते; एव मुत्तरयोरपि स्थानयोः। एवम्प्रकार मेकत्वं सम्भोगैकत्वं चोपेक्षितव्यम्। सम्भोगहेतुक मेकत्वं सम्भोगैकत्वम्। सम्भोगो नाम इतरेतरोपकारित्वम्, समानकार्यतेत्यर्थः। तच्च पुनर्भिन्नस्थानाना मपि भवति, किं मङ्ग पुनः समानस्थानाना मिति। "यथा पृथिव्याः पर्जन्येन च, वाय्वादित्याभ्यां च सम्भोगः"। कथम्? पृथिव्योषध्युत्पत्तौ स्वकार्यारम्भे पर्जन्यवाय्वादित्यकृत मुपकार मपेक्षते। तदुक्तम्,—"त्रयस्तपन्ति पृथिवी मनूपाः"—इति *। "अग्निना च इतरस्य लोकस्य"। तदप्युक्तम्,—"अग्निर्वा इतो वृष्टिं समीरयति, "दिव जिन्वन्त्यग्नयः"—इति † च। तदेवम्प्रकार मेकत्वं कार्यैकत्वात् स्थानैकत्वाद्वा भाक्तं न प्रतिषिध्यते, लोकेऽपि समानकार्यता भवति येषां तेषा मैक्य मित्युच्यते॥

कः पुनरत्राविरोधी भेदाभेदे दृष्टान्तः? इति। उभये हि प्रमाणं

* ऋ० सं० ७, ७, १९, २। "इन्द्रस्थानीया पर्जन्यो वायु रादित्य इत्येते 'त्रयः' देवाः 'पृथिवीं' भूमिं तत्रस्था ओषधीरित्यर्थः 'तपन्ति' वृष्टिशीतोष्णैः सन्तापयन्ति। कीदृशाः? 'अनूपाः' वर्षादीना मानुपूर्व्येण वप्तारः प्रभावयितारः प्रवेप्तार इत्यर्थः"—इति सा० भा०।

† ऋ० सं० १, २ ११, ५। "अग्नयः आहवनीयाद्याः स्वे ऊते 'दिवम्' आदित्यादिद्युलोकस्थान् देवान् 'जिन्वन्ति' प्रीणयन्ति"—इति सा० भा०।

भेदाभेदवादिनः—आत्मविन्नैरुक्तयाज्ञिकाः; न हि ते स्वमनीषिकया भेदाभेदौ प्रकल्पयन्ति, किन्तर्हि? मन्त्रार्थं मुद्दिश्य। तस्माद् वक्तव्यः समञ्जसो दृष्टान्तः? उच्यते;—"तत्र एतत् नरराष्ट्रम् इव"। यथा राष्ट्र मित्यभेदः, नरा इति भेदः; एवं पृथिव्यग्निरित्यभेदः, जातवेदा वैश्वानर इति भेदः। एव मुत्तरयोरपि स्थानयोः। तथा आत्मेत्यभेदः, लोकाश्च लोकिनश्चेति भेदः। सर्वत्रैव सामान्यविशेषधर्मो द्रष्टव्यः। पुरुषबुद्ध्यपेक्षातश्च गुणप्रधानतोऽपेक्षा पुरुषानुरागविशेषतः॥

तत्रैवं सति आत्मविद आत्मनि चित्वनानात्वे गुणीकृत्य तदङ्गप्रत्यङ्गभावेन कल्पयित्वैक मात्मानं पश्यन्ति। तथा नानात्वैकत्वे नैरुक्ता इति चित्वे, तथा चित्वैकत्वे याज्ञिका नानात्वे। एव मेषा मविरोधः। अस्ति हि शब्दार्थयोः वक्तृ-प्रतिवक्तृवशेन तद्बुद्ध्यपेक्षया अन्वयव्यतिरेकाभ्यां वर्त्तितु शक्तिः; न तु स्वाभाविक मभिधानाभिधेयसम्बन्ध मकृतक मप्रच्यवमानावभिधानाभिधेयौ जहीताम्; न ह्यग्नेरवभास्यं प्रत्यवभासनशक्तिः, अवभास्यस्य चावभास्यमानता शक्तिर्व्यवधानमन्तरेण विहन्यते; न ह्यकृतकं स्वय मप्यधीतको विकल्पते। वैदिकानां पदवाक्यप्रमाणाना मात्मभावानुशयवशेनात्मविन्नैरुक्तयाज्ञिका वेदस्याविपर्यासिनी मप्यध्यात्माधिदैवाधियज्ञविषयनियता मर्थाभिधानशक्तिं विपर्यासिनी मिव मन्यमाना परस्परतो विपर्यस्यन्ते। तदेतत् सर्वथापि भेदाभेदवर्त्ति देवतासतत्वं यथायथं वक्तृप्रतिवक्तृवशेन प्रख्याति मुपनयत्। स्तुतिरूपकेणात्मनोऽर्थसतत्वं तथाभूतं मन्त्रैराविष्क्रियते। तदुक्तम्,—"तत्रोपमार्थेन युद्धवर्णा

भवन्ति"—इति *, दर्शितश्चैतन्मन्त्रेण,—"न त्वं युयुत्से"—इति †। निष्ठितरूपत्वेन स्वे स्वे विषयेऽध्यात्मादौ परमार्थतया ऐकात्म्ये निष्ठा, तदन्तत्वाद् वाचः। तदुक्तम्,—"यतो वाचो निवर्त्तन्ते"—इति ‡॥ १॥

अथाकारचिन्तनं देवतानां पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानान्यथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते। ऋष्वा त इन्द्र स्थविरस्य बाहू यत्सङ्गृभ्णा मघवन् काशिरित्ते। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः। आ द्वाभ्यां हरिभ्या मिन्द्र याहि कल्याणीर्ज्जाया सुरणं गृहे ते। अथापि पौरुषविधिकैः कर्मभिः। अद्धीन्द्र पिब च प्रस्थितस्य। आश्रुत्कर्ण श्रुधी हवम्॥ २ (६)॥

"अथाकारचिन्तनं देवतानाम्"। आह,— माहाभाग्याद् देवताया विकरणधर्मित्वादनियम आकारे, अथ नियमः? नन्वैश्वर्यव्याघातान्माहाभाग्याद्देवताया इत्येतद्व्याहन्यते, तस्मादथाकारचिन्तनं देवताना मित्येतदनारभ्यम्? उच्यते;— आरभ्य मेव। प्रकृतिमन्ता मनपेक्ष्य विकरणं नाम देवताधर्मो नास्ति, तस्मात् प्रकृतिश्चिन्त्यते

* १ भा० ११७ पृ० १ अ० ५ पा० १ ख० द्रष्टव्यम्।

† "यदन्तर०—०विविद्मे (ऋ० सं० ८, १, १५, १.)"—इति चोदाहृतं तत्रैव ११९ पृ०। तत्पूर्वञ्च (१०१ पृ० १९ पं०, १०८ पृ० १८ पं०, १०८ पृ० १५ पं०, ११२ पृ० १० पं०, ११५ पृ० १९ पं०) द्रष्टव्यम्।

‡ तै० उप० २, ९।

देवतायाः। अपि च, यत एवेश्वरा देवास्तत एवोभयभावित्वात् किं साकारवत्त्वं स्वभावो देवतायाः अथ वा निराकारवत्त्वम्? इति सतत्त्वपरिज्ञानाय चिन्त्यते॥

अस्तु तावदियं चिन्ता; किमिद मविशेषेण पक्षत्रय मस्याश्चिन्ताया विषयः*, उत वा कस्मिंश्चिदेवैकस्मिन् पक्षे इयोर्वैतच्चिन्त्यते? इति॥

इह तावदात्मविदा मेक आत्मा स प्राग्विकारापत्तेः सन्मात्र उदस्तसर्वाकृतिः, सर्गस्थित्योरुपात्तसर्वाकृतिः; तदत्र समात्रनाकृतिः, सर्वाकृतिर्वा? इत्यनास्पदभूतो†ऽस्याश्चिन्ताया आत्मवित्पक्षः।

अथ पुनर्यदासावुपात्तविज्ञानात्मा नैरुक्तपक्षाभिमत मग्निवायुसूर्यभावं बिभर्त्ति, तदापि (प्रत्यक्षत्वादविषयत्व मस्याश्चिन्तायाः।‡) प्रत्यक्षत्वात्तेषा मपौरुषयविध्यस्य तत्पक्षेऽप्याकारचिन्ता विषयाभावादुदस्यत एव§।

अथ पुनर्याज्ञिकानां यावदभिधानं देवतापक्षत्रादिनाम्|| अग्निवायुसूर्याभिधानानि प्रत्यक्षार्थाभिधानसम्बन्धीनि; जातवेदारुद्रेन्द्रपर्जन्याश्विप्रभृतीन्यप्रत्यक्षार्थाभिसम्बन्धीनि; शब्दमात्रं प्रत्यक्षम्। अभिधानानां लोके दृष्ट माकृतिपदार्थवत्त्वम्, अनाकारार्थवत्त्वञ्च;

* आत्मवित्पक्षः, नैरुक्तपक्षः, याज्ञिकपक्षश्चेति वेदार्थविषये त्रयः पक्षा विद्यन्ते।

† "इत्यनास्पदभूते"—इति ख, ग।

‡ नास्त्ययं पाठः ख-ग-पुस्तकयोः।

§ एवञ्च नैरुक्तमते प्रत्यक्षदृश्याग्न्याद्यतिरिक्तः कश्चनस्तानदधिष्ठातृपुरुषो नास्त्येवेति सिद्धान्तः, अयमेव च प्रकृतिवाद इत्युच्यते।

|| मीमांसादर्शनदर्शितमार्गेष्वितानामिति यावत्।

रुद्रेन्द्रादीनां शब्दानां मन्त्रगतानां लौकिकैर्मनुष्यादिशब्दैर्वाय्वात्माकाशादिभिर्वाभिधानवत्त्वं तुल्यम्? तत्रैतद् भवति, अप्रत्यक्षत्वाद्रुद्राद्यभिधानाना मर्थस्य,—किन्नु खल्वमी रुद्रादिशब्दाः मनुष्यादिशब्दवदाकारवदर्थनार्थवन्तः, उत वाय्वात्माकाशादिशब्दवदनाकारेण? इति॥

एत मय मस्याश्चिन्ताया याज्ञिकपक्षो विषयः "अपि वा पृथगेव स्युः"—इति*। अतएव याज्ञिकपक्षादनन्तर मिद मारब्धम्,—"अथाकारचिन्तनं देवानाम्"—इति†॥

किं माकारस्य चिन्त्यते,— किं मस्ति उत नास्ति? इति। यद्यस्ति कीदृशः? इह द्विविधा आकारिणोऽर्थाः,—चेतनाश्चाचेतनाश्च। तत्र चेतना मनुष्यादयः, अचेतनाश्च पाषाणादयः। तत्रैतद् भवति किं ममी मनुष्यादिवच्चेतना उत पाषाणादिवदचेतना द्रव्यमात्रम्?—इत्युपोद्धृत्य संशयः॥

तद्युदासाय पक्षः परिगृह्यते,—"पुरुषविधाः स्युः इति एकम्"—इति। मन्त्रप्रत्यय मस्तित्वं देवताया अभ्युपगतम्,—यत्काम इत्युपक्रम्य तद्दैवतः स मन्त्रो भवतीति‡; सति हि देवतास्तित्वे तद्दैवतत्वं मन्त्रस्य। यदि चैव माकारोऽपि! तत्प्रत्यय एव भवितु

* अस्याध्यायस्य पञ्चमखण्डे (११२ पृ०) माहाभाग्यादित्यादिना देवस्येत्यन्तेन च आत्मवित्पक्ष उक्तः, तदुत्तरस्मिन् खण्डे (११० पृ०) नित्य एवेत्यादिना एतदित्यन्तेन ग्रन्थसन्दर्भेण नैरुक्तपक्षोक्तः, ततस्तत्रैव अपि वा पृथगित्यादिना लोकइत्यन्तेन च याज्ञिकपक्षोऽप्युक्तः।

† यदि चैतदारम्भणं तथेत्यादि-ग्रन्थयोपसंहारवाक्यादनन्तरं न तु याज्ञिकपक्षादव्यवहितमेव, तथापि याज्ञिकपक्षादनन्तरमेव मन्यते, उपसंहारवाक्यस्यापि याज्ञिकपक्षपातित्वस्वीकारात्; अयं लौकाकारोऽपि हि याज्ञिक एवेति।

‡ पृ० १८५ पृ० ७ अ० १ पा० १ ख० द्रष्टव्यम्।

मर्हति? अस्ति चेदं पौरुषविध्यं मन्त्रेषु देवतासम्बन्धीनि। यत उच्यते,—"पुरुषविधाः स्युः इति एकम्"। मन्त्रेषु दर्शनम् इति वाक्यशेषः। 'पुरुषविधाः' पुरुषप्रकाराः, पुरुषविग्रहा इत्यर्थः॥

कोऽत्र हेतुः? "चेतनावद्वद्धि स्तुतयो भवन्ति"। 'हि'-शब्दो हेत्वर्थः; यस्माच्चेतनावता मिव स्तुतयो मन्त्रा अभिधायका भवन्ति। पूर्वो वतिर्मत्वर्थे, उत्तरस्तुल्यार्थे; तस्मात् पुरुषाकारविग्रहा इति।

ननु चैतन्य मपुरुषाकारविग्रहाणा मपि गवादीना मस्ति? न, नास्ति। न तु ते विवेकक्षमा आसन्नचेतनाः; लोकेऽपि यस्य हिताहितविवेकलक्षणं विशिष्टं संविज्ञानं न भवति, त मधिकृत्य ब्रुवते निश्चेतनोऽय मिति। एव मेते च गवादयः सत्यपि चैतन्ये आसन्नचेतनत्वान्न विदुः श्वस्तनम्, न लोकालोकाविति ज्ञायते; तस्मादचेतना इवोपेक्ष्यन्ते। पुरुषस्तु वेद श्वस्तनम्, वेद लोकालोकौ; मर्त्येनामृतत्व मीप्सतीति। तस्माद्धिताहितपरिज्ञानात् पौरुषविध्यस्यैव सिषाधयिषितत्वादनपेक्ष्यसामान्यं विशिष्टचैतन्यः पुरुषो नियम्यते। यथैव चेतयमाना अर्थान् पुरुषाः श्रूयन्ते, तथैव देवता अपि। तस्मात् "पुरुषविधाः स्युः"—इत्युपपन्नम्॥

"तथाभिधानानि" यथैव पौरुषविध्य मुपपद्यते चेतनावन्मदृशस्तुतिभिः तत्प्रति ताः कारणं भवति, तथैव संवादसूक्तेषु परस्पर मभिधानानि उक्तप्रत्युक्तानि सम्बद्धार्थानि परस्परतः, कयाशुभीयादिषु कुतस्त्व मिन्द्रेत्येवमादीनि* तस्मात् पौरुषविध्यं देवतानाम्॥

---

* "यत् कयाशुभीयम्; एतेन वै इन्द्रोऽगस्त्यो मरुतस्ते समजानत"—इति ऐ० ब्रा० ५, २, १। ऋक्संहितायाः प्रथममण्डलं मयोविंशशततमसूक्तारम्भे एव कयाशुभीयं नाम सूक्तम्। तत्र पञ्चदश ऋचः सन्ति। तेषु "कुतस्त्वमिन्द्र" इत्येषा तृतीया।

अथाप्यस्य मपरो हेतुः पौरुषविध्ये देवतानाम्,—"पौरुषविधिकैरङ्गैः संस्तूयन्ते"। पौरुषविध्यानि यान्यङ्गानि, तैः संस्तूयन्ते। तद्यथा,—"ऋष्वा त इन्द्र स्थविरस्य बाहू", "यत् सङ्गृभ्णा मघवन् काशिरित्ते"।—

"उरुं नो०——०बृहन्ता" *। शंयोरार्षम्। त्रिष्टुप्। ऐन्द्री। एकादशिन्या मैन्द्रस्य पशोर्वपाया याज्या। 'उरुं' विस्तीर्णं 'लोकं' यः त्वम् ('नः') अस्मान् 'अनुनेषि' अनुनयसि; स्वेन सुकृतेन कर्मणा गच्छतां गमनानुग्रहे वर्त्तसे। 'स्वर्ज्योतिः' आदित्यसमानं प्रकाशेन लोकम्, 'अभयम्', 'स्वस्ति' स्वस्त्ययनाय। तस्य 'ते' तव वयम् 'इन्द्र!' ('ऋष्वा') ऋष्वौ एतौ रेषणौ शत्रूणाम्, 'स्थविरस्य' महतः 'बाहू' हस्तौ, ('बृहन्ता') बृहन्तौ महान्तौ, ('शरणा') शरणौ आश्रयणीयौ नित्यम् 'उप स्थेयाम' उपतिष्ठेमेत्येतदाशास्महे॥

"यत् सङ्गृभ्णा मघवन् काशिरित्ते"—इति †। व्याख्यातः शेषः ‡। एव मस्मिन् मन्त्रद्वये बाहुमुष्टिसम्बन्धदर्शनात् स्तुत्यस्येन्द्रस्य पौरुषविध्यम्; अन्यथा हि वितथाभिधानत्वं मन्त्रयोः, तथा च सत्यानर्थक्यं मन्त्राणाम्, सर्वेषां शास्त्रस्य च तदर्थलक्षणभूतस्य। तस्मा द्भूदित्यवश्य मेवेष्टव्यं पौरुषविध्यं देवताना मिति॥

"अथापि" अस्य मप्यपरो हेतुः पौरुषविध्ये देवतानाम्—"पौरुष-

---

* "उरुं नो लोक मनु नेषि विद्वान्त्स्वर्ज्योतिरभयं स्वस्ति। ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता॥"—इति ऋ० सं० ४, ७, ११, २।

† ऋ० सं० ६, १, १, ५।

‡ पृ १११, ११२ द्र० (१, १, १,)।

विधिकैः द्रव्यसंयोगैः"। तद्यथा,—"आ द्वाभ्यां हरिभ्या मिन्द्र याहि", "कल्याणीर्जाया सुरणं गृहे ते"।—

"आ द्वाभ्या०——०मृधस्कः *"। गृत्समद ऋषिः। ऐन्द्री। त्रिष्टुप्। हे भगवन्! 'इन्द्र!' यदि तावत् तव द्वौ हरी सन्निहितौ, ततस्तावेव रथे युक्त्वा, ताभ्याम् ('हरिभ्याम्') 'आ याहि'। अथ चत्वारः? ततस्तैः ('चतुर्भिः'), अथ षट्? ततस्तैः ('षड्भिः'), अथाष्टौ? ततस्तैः ('अष्टाभिः'), अथ दश? ततस्तैः ('दशभिः') 'आ' याहि †। इदं 'सोमपेयं' सोमपानकर्म प्रति। किम्? इति। एवं ब्रूमहे,—'अयं' 'सुतः' सोमोऽभिषुतः त्वदर्थम्, स त्वम् हे 'सुमख' सुधन! 'मा' केन चित् 'मृधः' संग्रामं ('कः') कार्षीः; अविलम्बित मागच्छेत्यभिप्रायः ‡॥

"अपाः सोम०——०दक्षिणावत्" §। विश्वामित्रस्यार्षम्। त्रिष्टुप्। हारियोजनस्यानुवाक्या। हे भगवन्! 'इन्द्र!' ('अपाः') पीतवानसि 'सोमम्' एतस्मिन् कर्मणि। स त्वं पुनः 'अस्तं' गृहं 'प्र याहि'। यस्मात् तव 'कल्याणीः जायाः', 'तत्र' 'बृहतः' च 'रथस्य' 'निधानं' रथशाला, 'विमोचनं' च 'वाजिनः' जित्वा

* "आ द्वाभ्यां हरिभ्या मिन्द्र याह्या चतुर्भि रा षड्भिर्हूयमानः। आष्टाभिर्दशभिः सोमपेय मयं सुतः सुमख मा मृधस्कः॥"—इति ऋ० मं० २, ४, १९, ४।

† "यद्यपीन्द्रस्य द्वावेव हरी, तथापि तयोःविभूतिभेदात् नानात्वम्; अतोऽत्रकुल मविरुद्धम्" इति सा० भा०।

‡ इह व्याख्यायाम् 'आ हूयमानः'—इत्यंशश्चैत मेव क्षिप्तम्।

§ 'अपाः सोम मस्त मिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते। यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत्॥"—इति ऋ० मं० ३,३,१०,१।

सङ्ग्राम मागतस्य, 'दक्षिणावत्'* अन्यदपि, 'सुरणं' यद्यद्रमणीयं तत्तत्सर्वं ('ते') तव 'गृहे' वर्त्तते। तस्मात् पुनरस्तं प्रयाहि॥

—एव मेतयोर्मन्त्रयोर्हरिगृहजायारथाभिसम्बन्धात् पौरुषविध्य मिन्द्रस्य; न ह्यपौरुषविध्ये सति सम्बन्धो जायादिभिरस्ति॥

"अथापि" अय मपरो हेतुः पौरुषविध्ये। कतमः? "पौरुषविधिकैः कर्मभिः" संस्तूयन्ते देवताः। तद्यथा,—"अद्धीन्द्र पिब च प्रस्थितस्य", "आ श्रुत्कर्ण श्रधी हवम्"।—

"इदं हवि०——०प्रस्थितस्य"†। अग्नियुतो नाम स्थौरपुत्रः, तस्यार्षम्‡। त्रिष्टुप्। ऐन्द्री। हे 'मघवन्!' 'इन्द्र!' 'इदं' 'हविः' आज्यादिकम्, 'तुभ्यं रातम्' मनसास्माभिः निरुप्तम्, पूर्वं निर्वपणादौ संस्कारकाले। तदिदानीं हे 'सम्राट्!' ('अहृणानः') अहृणन् 'प्रति गृभाय' प्रतिगृहाण। अपि च 'तुभ्यं' त्वदर्थ मेवायं 'सुतः' अभिषुतः सोमः। अपि च हे 'मघवन्!' त्वदर्थ मेवैषः पुरोडाशः 'पक्वः'। स त्वम् अस्य सोमस्य 'प्रस्थितस्य' 'अद्धि पिब च' स्व मंश मिति शेषः।

"आ श्रुत्कर्ण०——० दन्तरम्"§। मधुच्छन्दस आर्षम्। अनुष्टुप्। ऐन्द्री। श्रोतारौ यस्य कर्णौ अप्रतिहतश्रवणौ सर्वत्र, स भवति

* "दक्षिणावत् प्रयोजनवद् भवति"—इति सा० भा०।

† "इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळहृणानो गृभाय। तुभ्यं सुतो मघवन्तुभ्यं पक्वो३द्धीन्द्र पिब च प्रस्थितस्य॥"—इति ऋ० सं० ८, ६, २१, १।

‡ "पिब स्थौरोऽग्नियुतोऽग्नियूपो वा"—इत्यनुक्रमणी।

§ "आ श्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः। इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम्॥"—इति ऋ० सं० १, १, १०, २।

श्रुत्कर्णः, तस्य सम्बोधनम्—हे 'श्रुत्कर्ण!' ('आ') आभिमुख्येन 'श्रुधि' शृणु त्वम् ('हवम्') आह्वान मस्माकम्। श्रुत्वा च 'नू चित्' पुराण इव 'दधिष्व' धारयस्व, एताः अस्मद्-'गिरः' हृदयेन। किञ्च; हे भगवन्! 'इन्द्र!' 'मम' 'इमं स्तोमम्' 'युजः' त्वद्युक्तस्य त्वां प्रत्यादृतस्य पुनःपुनरपि ब्रुवतः 'कृष्व' कुरुष्व श्रोतुम् 'अन्तरम्' क्षण मित्यर्थः।

एव मनयोर्मन्त्रयोरध्याशृणुहीति आमन्त्रणपूर्वकादरश्रवणपूर्वको विनियोगः, स न सम्भवत्यपौरुषविधे; न हि गवादयोऽध्याशृणु-हीत्युक्ताः किञ्चित् प्रत्ययन्ते। तस्मात् कार्यकारणसन्निवेशो मनुष्य-वद्देवतानाम्, कार्यकारणापेक्षं च विज्ञानम्। तदेव मेतेभ्यो मन्त्र-दर्शनेभ्यः स्थितं पौरुषविध्यं मन्त्रदेवताना मिति ॥ २ (६) ॥

अपुरुषविधाः स्युरित्यपर मपि तु यद् दृश्यते ऽपुरुष-विधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत्पौरुषविधि-कैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभिक्रन्दन्ति हरि-तेभिरासभिरिति ग्रावस्तुतिर्यथो एतत्पौरुषविधिकैर्द्रव्य-संयोगैरित्येतदपि तादृश मेव सुखं रथं युयुजे सिन्धुरश्वि-न मिति नदीस्तुतिर्यथो एतत्पौरुषविधिकैः कर्मभिरि-त्येतदपि तादृश मेव होतुश्चित् पूर्वे हविरद्य माशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषवि-

**धाना मेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैष चाख्यानसमयः ॥ ३ (७) ॥**

**॥ इति सप्तमाध्यायस्य द्वितीयः* पादः ॥ ७. २.**

"अपुरुषविधाः स्युः इत्यपरम्" दर्शन मिति वाक्यशेषः। तदुक्तम् "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति विज्ञायते †। तदाहुः "नैतदस्ति यद्देवासुरम्"—इति, "न त्वं युयुत्से"—इत्यपि चैतदुक्त मेव ‡।

"अपि तु यद् दृश्यते" देवानां किञ्चित् "अपुरुषविधम्" अपुरुषप्रकारं तदित्यर्थः। "तद्यथा— अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमाः—इति"। प्रत्यक्षत एतान्यपुरुषप्रकाराणि इत्येतेषा मतोऽन्यथाभ्युपगमे दृष्टहानिः स्यात्! न चैतदिष्टम्। तस्मादपुरुषविधा अग्न्यादयः, तत्सामान्याददृष्टा इन्द्रादयोऽप्यपुरुषविधाः; न हि मनुष्यत्वे तुल्ये के चिदाकारिणः के चिदनाकारिण इति, तथैव देवताना मपि हि न्यायः। तस्मादपुरुषविधा इति॥

"यथो एतत् चेतनावद्वत् हि स्तुतयः भवन्ति इति§, अचेतनान्यपि एवं स्तूयन्ते; यथा—अक्षप्रभृतीनि ओषधिपर्यन्तानि ‖"। तस्मात् चेतनावत् स्तुतिमत्त्व महेतुः पौरुषविध्ये देवतानाम्, अचेतनेष्वप्यक्षादिषु चेतनावत्स्तुतेर्दृष्टत्वादिति॥

* प्रथमाद्यध्यष्टमखण्डात्मक एषः प्रथमः पादः क-पुस्तके।

† १भा० ११७पृ० १अ० ५पा० १ख० द्रष्टव्यम्।

‡ १भा० ११०पृ० १०पं० द्रष्टव्यम्।

§ इतः पुरस्ताद्देवायं प्रथमहेतुरुक्तः २२१पृ० ९पं० ; २२४पृ० ४पं०

‖ १भा० ४९४पृ० ५अ० १ख० (४)--(११)।

"यथो एतत् पौरुषविधिकैः अङ्गैः संस्तूयन्ते इति" अयं मप्यहेतुः*, व्यभिचरितत्वात्; "अचेतनेषु अपि एतद् भवति", तद्यथा—"ग्रावस्तुतिः"। "एते वदन्ति०——०माशत"†। अर्बुदस्यार्षम्। जगती। ग्रावस्तुतिः। 'एते' 'ग्रावाणः' अभिषवकर्म कुर्वाणाः वदन्ति। कथम्? 'शतवत्' शत मिव। 'सहस्रवत्' सहस्रमिव। शब्दबाहुल्याभिप्रायम् 'अभिक्रन्दन्ति' आह्वयन्ति सोमपातॄन्—आगच्छतास्माभिरभिषुतं सोमं पातु मिति। 'हरितेभिः' सोमसंसर्गाद् हरिद्वर्णैः 'आसभिः' आस्यैः। तत्र या इयं 'विष्टी' व्याप्तिः ग्राव्णाम, एतया 'सुकृत्या' शोभनया क्रियया एते 'सुकृतः' शोभनस्य कर्मणः कर्त्तारः 'होतुः चित् पूर्वे' होतुरपि अग्नेः, मानुषहोतुर्वा‡ पूर्वं प्रथमतरम्, 'हविः' एतत सोमाख्यम्, 'अद्यम्' अदनीयम् 'आशत' अश्नन्ति। अभिषवे सोमसंयोगमात्र मशन मुपचर्यते ग्राव्णाम्। तस्मादपौरुषविध्य मिति; न हि ग्राव्णां यथाभूतान्यास्यानि सन्ति, यत्संयोगेन च स्तूयन्ते, तद्वदिन्द्रादीना मप्ययथाभूतैर्बाहुमुख्यादिभिः स्तुतिः स्यात्। तस्मादहेतुरयं यत् "पौरुषविधिकैरङ्गैः संस्तूयन्ते"—इति। तस्मादपुरुषविधाः॥

"यथो एतत् पौरुषविधिकैः द्रव्यसंयोगैः इति§, एतद् अपि तादृशम् एव" औपचारिकम्, रूपकमात्र मित्यर्थः; यथैव हि आस्यादिकल्पना दृष्टव्यभिचारित्वाद् ग्रावप्रभृतिषु न सम्भवति रूप-

* इतः पुरस्तादेव पूर्वपक्षेऽयं च द्वितीय-हेतुरुक्तः २२१पृ० ७पं०; २२५पृ० १पं०।

† "एते वदन्ति शतवत् सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत॥"—इति ऋ० सं० ८, ४, १९, १।

‡ "मनुष्यहोतुर्वा" ख, ग।

§ एतदप्युक्तं हेत्वन्तरं पुरस्तात् पूर्वस्मिन पक्षे २२१पृ० ८पं०; २२५पृ० १८पं०।

कमात्रं स्तुत्यर्थं सङ्कल्पतो वाक्यादिकार्यसिद्धिः, एवं हरिरथगा-याद्स्तुतयो रूपकमात्र मिति । अपि च "सुखं रथं युयुजे सिन्धुरश्विनम्— इति नदीस्तुतिः" न चास्यां स्तुतौ यथाभूतार्थस्यो-पपत्तिरस्ति, असम्भवात् । कथ मसम्भवः? न ह्युदकात्मिकाया नद्या वहन्त्या रथेऽवस्थानं सम्भवति ।

"सुखं रथं०——०विरप्शिनः *" । सिन्धुक्षिन्नाम प्रियमेधसः पुत्रः, तस्येय मार्षम् । जगती । नदीस्तुतिः । 'सुखं' सुखहेतुं लो-कस्य, 'रथं' रंहण मुदकम् ('युयुजे') युक्तवती 'सिन्धुः' नदी 'अश्वि-नम्' अशनेन व्यापनेन तद्वन्तम् उदकरथम् । तेन 'वाजम्' अन्नम् 'सनिषत्' सम्भजनवती उत्पादितवती 'अस्मिन्' 'आजौ' सङ्ग्रामे यतो यतो गच्छति, ततस्ततो व्रीह्यादि अन्नम् अभिनिष्पादयती-त्यर्थः । यस्मादेवाय मुदकरथोऽन्न मभिनिष्पादयति, तस्मात् तस्य 'महान्' 'महिमा' माहाभाग्यं 'पनस्यते' स्तूयते स्तोतृभिः । 'अदब्धस्य' अनुपहिंसितस्य, 'स्वयशसः' स्वायत्तकीर्त्तेः, 'विरप्शिनः' विरपणशीलस्य शब्दकारिण इत्यर्थः । रथ मिव अश्विनम् इति केचित् ॥

तदेवमादिष्वसम्भवात् मुख्यार्थकल्पनायाः, सर्वत्र रूपकप्रवादाः स्तुतय इत्युपेक्ष्यम् ॥

"यथो एतत् पौरुषविधिकैः कर्मभिः†—इति, एतद् अपि तादृ-शम् एव ।—'होतुश्चित् पूर्वे हविरद्य माशत (ऋ०सं०८,४,२९,२)'

* "सुखं रथं युयुजे सिन्धुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ । महान् ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥"—इति ऋ० सं० ८, ३, ७, ४ ।

† एतयोर्वाक्ययोरनन्तरं परस्तात् पूर्वपक्षे एव २०१पृ० १०पं० ; ३२०पृ० ५पं० ।

इति" अशनभक्तिक्रियया ग्रावाणः स्तूयन्ते, न च पुनर्ग्राव्णां यथाभूत मशन मस्ति। तस्मादिद मपि रूपक मेव॥ "एते वदन्ति"—इत्यत्र व्याख्यातम्* ॥

"अपि वा उभयविधाः स्युः"। उभयहेतुप्रामाण्यात्† ॥

"अपि वाऽपुरुषविधाना मेव सताम्" पृथिव्यादीनां "कर्मात्मान एते स्युः" अपुरुषविधाः क्षितिजलादयः‡। परे तु§, अधिष्ठातारः पुरुषविग्रहाः; एव मुभयोः प्रत्यक्षागमयोरप्यनुग्रहः कृतो भविष्यति। "यथा,—यज्ञः यजमानस्य" कर्मात्मा; इद मेतेनाङ्गं संस्क्रियते, इद मेतेनाङ्ग मुपचीयत इति संस्कृत ममुष्मिंल्लोके परैति इति च विज्ञायते||।

"एष च आख्यानसमयः"। भारते चाख्यानसमय एष एव सिद्धान्त इत्यर्थः¶।—पृथिवी, स्त्रीरूपेण भारावतारणाय ब्रह्माणं ययाचे। अग्निश्च ब्राह्मणरूपेण वासुदेवार्जुनावुभौ खाण्डवं ययाचे। पुरुषरूपेणाग्निरूपेण च खाण्डवं ददाह।—इत्येवमादि** ॥

---

* मूलोक्तं चेतनावद्वदित्युदाहरणमिति यावत्। पृ० ८३८पृ० १०पं०।

† देवाना माकारचिन्तने (८३१पृ० ५पं०) अयमेव तृतीयः पक्षः।

‡ एष एव सिद्धान्तपक्षश्चतुर्थो मीमांसकसम्मतः।

§ टीकाकारसमकालवर्त्तिनस्त्विति यावत्।

|| एवञ्च देवाना माकारचिन्तने पुरुषाकृतिमत्त्वाभाव एव देवाना मिति यास्कीयसिद्धान्तः, कर्मणा मेव फलदानशक्तिरित्येव देवताकल्पनं चित्यादीना मिति च मीमांसकमत माहत मिति।

¶ एषा तु टीका परमतसम्मतैव, न तु यास्कसम्मता, मूले भारतपदस्यादर्शनात् न हि च भारतात् परं निरुक्त मिति। यास्कमते तु एषेत्यादिपदस्यायमर्थः—'एषः' कथिताकारचिन्तनविचारः 'आख्यानसमयः' सर्वेष्वेव मन्त्रेषु देवताव्याख्यानस्य सङ्केत इत्यनेन वाक्येन स विचार उपसंहृतो यास्केनेति।

** महाभारतीयादिपर्वणि ऊनविंशं पर्व खाण्डवदाहकं नाम, तद् द्रष्टव्यम्।

तदेतच्चतुर्द्धा भिद्यते, मन्त्रार्थदर्शनादेव।—(१)पौरुषविध्यम्*, (२)अपौरुषविध्यम्†, (३)कर्मात्मोभयविध्यम्‡, (४)नित्य मौभयविध्य मेवेति। सर्वं चैतदुपपद्यते, माहाभाग्ये सत्यैश्वर्यात्; कथमिव देवता न स्यात्— अमूर्त्ता, मूर्त्ता, एकधा, द्विधा, बहुधा चेति यथा तु वर्त्तमाना मपश्यन् मन्त्रदृशः तथा तथा अस्तुवन्; सर्वथैवादोषः, फलदर्शनात्§। नानावस्थादर्शनवदाख्यातृणां परिदेवनानिन्दादिष्वपि चेन्द्रादीनां कामकारतस्तद्रूप मवस्थितानां सा सा स्तुतिरेव, न निन्दा। उक्तञ्च;—"हीना न निन्दा, स्तुतिरेव साख्या देवान् मर्त्तः सम्यगभिष्टुयात् कः। अशक्तिचये ऽप्यध्यवस्यन्ति शिष्टाः स्तोतुं न पश्यन्ति गतिं यतोऽन्याम्॥ ॥"—इति॥ ३ (७)॥

॥ इति निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य)
द्वितीयः पादः¶ ॥ ७. २.

---

* पु॰ ३३१पृ॰ ५पं॰ "पुरुषविधाः स्युरित्येकम्"—इत्यादि-प्रथमः पक्षो द्रष्टव्यः।

† पु॰ ३३८पृ॰ १२पं॰ "अपुरुषविधाः स्युरित्यपरम्"—इत्यादि-द्वितीयः पक्षः।

‡ पु॰ ३३८पृ॰ २१पं॰ "अपि वोभयविधाः स्युः"—इत्यादि-तृतीयः पक्षो द्रष्टव्यः। वस्तुतोऽस्मन्मते तु तृतीयपक्षे उभयविध्य मेव देवाना मुररीकृतम्, न तु तत्र किञ्चिदपि विशेषण मन्वेषणीयम्।

§ पु॰ ३३८ पृ॰ २१पं॰ "अपि वा"—इत्यादि-चतुर्थो मीमांसकपक्षो द्रष्टव्यः। अत्र त्वस्मन्मते नोभयविध्यं नापि क्रियातो विभिन्नत्व मुक्तं देवानाम्; अत एव हि "यथा यज्ञो यजमानस्य"—इति दृष्टान्त उपपद्यते। तथा हि,—'यजमानस्य यथा यज्ञः' (यज्ञः, अनुष्ठानम्, क्रिया, कर्म इति च पर्य्यायवचनम्) देवता भवति, तस्यापि स्तुतिश्रुतेः; तथैव अग्निस्तुतिक्रियादीना मेव देवत्वं फलप्रदत्वञ्च; न तत्र फलप्रदस्य कस्यचिदपि देवस्याकारचिन्तने प्रयोजनीयत्व मस्तीति मीमांसकमत मप्यनुसृतीतम्। एतेन वज्रहस्तपुरन्दरसमागमनात् कुम्भभङ्गभीतिरप्यपाकृता।

|| कारीर्य्यादौ वृष्ट्यादिदर्शनादिति भावः। इद मेव फलसंवादाख्यं मानम्।

¶ क-पुस्तके त्विहैव प्रथमपादसमाप्तिः, ख-ग-पुस्तकयोस्तु नास्त्येव पादविभागः।

॥ तृतीयः पादः ॥

तिस्र एव देवता इत्युक्तं पुरस्तात्तासां भक्तिसाहचर्यं व्याख्यास्यामोऽथैतान्यग्निभक्तीन्ययं लोकः प्रातःसवनं वसन्तो गायत्री त्रिवृत् स्तोमो रथन्तरं साम ये च देवगणाः समाम्नाताः प्रथमे स्थाने ऽग्नायी पृथिवीलेति स्त्रियोऽथास्य कर्म वहनञ्च हविषा मावाहनञ्च देवतानां यच्च (किञ्चिद्*) दार्ष्टिविषयिक मग्निकर्मैव तदथास्य† संस्तविका देवा इन्द्रः सोमो वरुणः पर्ज्जन्य ऋतव आग्नावैष्णवञ्च हविर्न त्वृक्संस्तविकी दशतयीषु विद्यते ऽथाप्याग्नापौष्णं हविर्न तु संस्तवस्तत्रैतां विभक्तिस्तुति‡ मृच मुदाहरन्ति— ॥ १ (८) ॥

अथाकारचिन्तनव्यवधानाद् देवताचयाधिकारस्य तद्विशेषविवक्षया तदनुस्मृतये च स एतत् प्रकरोति ;—"तिस्रः एव देवताः— इति"§। यः पुनस्तत्र विशेषो विवक्षितः, स उच्यते ;—"तासां भक्तिसाहचर्यं व्याख्यास्यामः"। तासा मेव तिसृणां भक्तिसाहचर्यम्। भक्तिश्च साहचर्यञ्च, भक्तिकृतं वा साहचर्य्य मिति। लोकादीना मेवाग्न्यादिभिर्भजनं भक्तिः, सहचरभावः साहचर्यम्। तत् किमर्थम् ?

* नास्त्येतत् पदं क-ख-ग-पुस्तकेषु
† "मग्निकर्मैतदथास्य" ख, च।
‡ "विभक्तिस्तुति" ग।
§ पुरस्तात् द्वितीयपादारम्भे एव यावत (२२०पृ० ११पं०)।

उच्यते,—अमंविज्ञातपदे मन्त्रे भक्त्या माहचर्य्येण वा यथा देवता गम्यतेत्येवमर्थं भक्तिसाहचर्य्य मुच्यते ॥

यद्येव मुच्यतां तर्हि कानि किम्भक्तीनि? इति । तदुच्यते;— "अथ एतानि अग्निभक्तीनि" । अथेति विशेषाधिकारे । अग्निं भजन्त, अग्निना वा भज्यन्ते—इत्यग्निभक्तीनि । कतमानि? "अयं लोक:"—इत्येवमादीनि * अग्निभक्तीन्यवगन्तव्यानि । "ये च देवगणा: समाम्नाता: प्रथमे स्थाने" । तद्यथा;—आप्री †, अश्वा: ‡, ग्रावाण: §, अभीशव: ‖ इत्येवमादीनि ¶ । "अग्नायी, पृथिवी, इला— इति स्त्रिय:" । 'इला, पृथिवी, अग्नायी'—इति क्रमेण

* इत्यन्तरं यामेत्यन्तानि षट्, मूले एव द्रष्टव्यानि । पर मिच तानि कथं न व्याख्यातानि? व्याख्यातव्यान्येवेत्यस्माकम् ।

† आप्रीशब्देन निघण्टु-पञ्चम-द्वितीये पठिता इध्मादयो द्वादश गृह्यन्ते १भा० ४९१४० द्रष्टव्यम् । तच तु मानम्.—"अथात आप्रिय:"—इत्यारभ्य "इतीमा आप्रीदेवता अनुक्रान्ता: "—इत्यन्तो यास्कग्रन्थः परस्तादागमिष्यन्ति (८, १ १.—२, १.)

‡ १भा ४९४, ४९९, ५० ५, २, ।४) ; परस्ताच ९अ० १पा० ७, ८ ख० ।

§ १भा० ४९४, ४९९ ५० ५.२, ।५) ; परस्ताच ९अ० १पा० ८, ९ ख० ।

‖ १भा० ४९५ ४९८ ५० ५, २. (११) ; परस्ताच ९अ० २पा० ५ ख० ।

¶ निघण्टुपञ्चमाध्यायस्य प्रथमादिखण्डत्रये प्रथमस्थानदेवता: समाम्नाता: (१भा० ४५९—४७४२०,; परस्ताच्चाच "अथातोऽनुक्रमिष्याम:"—इत्यारभ्य "यजेति मन्त्रेष."— इत्यन्तानि तद्व्याख्यानानि ,७अ० ४पा० १ख०—९ख०)। तदत्र यानि वक्ष्यमाणानि पदानि, तद्वाच्या एव प्राथमिकदेवगणा: उच्यन्त इति टीकाकृन्मतम् । परे तु "ये च देवगणा: समाम्नाता: प्रथमे स्थाने"— इत्युक्त्या प्रथमादिखण्डत्रयपठितानां मग्न्यादीनां सर्वेषा मेव ग्रहः; अग्नाय्यीत्यादिस्त्रियां पुनरुक्तेव तु 'तद्भक्तीन्यन्त'-न्यायेनेत्याहुः ।

समस्ते* क्रमभेदोऽग्नायी तत्समाम्नायानाम् सन्निकृष्टतरा, न तथा पृथिवीति; तस्मात् प्रथम मुच्यते; ततः पृथिव्याश्रयमनन्यादग्नेर्न तथेला, परोक्षादभिधेयस्य। 'आप्री'-मध्ये 'तिस्रोदेवीः' इत्यत्र इला, भारत्याः द्युस्थानाया अनन्तरं श्रूयमाणा;—"आ नो यज्ञं भारती तूयमेत्विळा मनुष्वत् (ऋ० मं० ८.६.६.२)"—इति† कथं पृथिवीस्थाना? इति। उच्यते;—अनुयाजेषु सामर्थ्यात्; "द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञ मावीदिहैवेलया वसुमत्या"—इत्यतः सामर्थ्य मुन्नीय वसुसाहचर्यात् इहैवेलयेति चाग्निभक्तिरिलेत्याह, रुद्रैः साहचर्यात् सरस्वती मध्यस्थाना, आदित्यैः साहचर्यात् भारती द्युस्थानेति ॥

"अथास्य कर्म" अथास्याग्नेः कर्म सद्भावि, अनन्यदेवतागामि, यत्संयोगादसत्यप्यग्निशब्दे आग्नेय एव मन्त्रो भवति। "वहनं च हविषाम्"—इत्येवमादि। "दार्ष्टिविषयिकम्" दृष्ट्यनुग्रहो यस्य विषयः, तद्दार्ष्टिविषयिकम्; प्रकाशादि कर्मेत्यर्थः। "अग्निकर्मैव तत्"—इति पुनर्वचन मादरार्थम्; आध्यात्मेऽपि यावान् कश्चित् प्रकाश इति ॥

"अथास्य संस्तविका देवाः" यैः सह अग्निः स्तूयते। तद्यथा,

---

* निघण्टौ पञ्चमाध्यायस्य द्वितीयखण्डे 'तिस्रो देवीः'—इति दृश्यम्। तत्र तिसृषु भारतीळासरस्वतीषु देवीषु इलाया एव स्थिय इह प्रहण मभीष्टम्; 'पृथिवी'—इति तु तदुत्तरस्मिन् खण्डे षड्विंशं पदम्; तत्रैव च पञ्चविंशं पदम् 'अग्नायी'।—इति क्रमः समाम्नायपाठस्य (१ भा० ४६१. ४६४ पृ०)।

† 'भारती, इला, सरस्वती'—एवं क्रमपठिताः श्रुतिमन्त्रेऽस्मिन् तिस्रो देव्यो बुध्यन्ते। तिस्रोदेवीरिति तु आप्रीमध्ये पठितं दृश्यते (१भा० ४१६पृ० ५प० १ख० १०.), व्याख्यास्यति चेतोपरिष्टात् (८ अ० २पा० ६ख०), उदाहरिष्यति च तत्रैवेमं मन्त्र मानो यज्ञ मिति। तदेतत्सर्वं तत्रैव द्रष्टव्यम्।

—"इन्द्रः, सोमः"—इत्येवमादयः। मन्त्रस्वभावप्रदर्शनाय संस्तवोदाहरणम्। अग्नेः पूर्वनिपाताद् देवताद्वन्द्वे मुख्यता *।—

"अग्निरिन्द्रश्च दाशुषो"—इति †। विश्वामित्रस्येय मार्षम्। विराट्। अनुष्टुप्। आग्रयणे विनियोगः। हे भगवन्! 'अग्ने!' त्वम् 'इन्द्रः च' 'देवा' देवौ, अस्य 'दाशुषः' दत्तवतः हवींषि, यजमानस्य 'दुरोणे' यज्ञगृहे 'सुतावतः' अभिषुतवतः 'यज्ञम्' सोमम्। ('अमर्धन्ता') मृधं सङ्ग्रामं कुर्वाणौ अन्तरा केन चित् सह। 'सोमपेयाय' सोमपानार्थम् 'उपयातम्' इत्येतदाशास्महे॥

"अग्नीषोमाविमम्"—इति ‡। सोमेन सह संस्तवः। गोतमस्यार्षम्। अनुष्टुप्। पौर्णमासे अग्नीषोमस्यानुवाक्या। हे 'अग्नीषोमौ!' युवां मुच्येथे। 'इमं' 'हवम्' आह्वानं 'मे' मम 'सु' सुष्ठु 'शृणुतम्' 'वृषणौ' वर्षितारौ। श्रुत्वा चागच्छतम्। आगत्य च 'प्रतिहर्यतं' प्रतिप्रेप्सतं, मया पूर्वं प्रेप्सितौ प्रति कामयेथाम् इमानि सूक्तानि श्रोतुम्। श्रुत्वा चेमानि 'भवतं' 'दाशुषे' युवां हविर्दात्रे 'मयः' सुखानित्यर्थः॥

"त्वं नो अग्ने वरुणस्य"—इति §। वरुणेन संस्तवः। वामदेव-

---

* "अभ्यर्हितञ्च (पा० २, २, ३४ सू० वा०)"—इति वचनात् अग्नीन्द्रौ, अग्नीषोमौ—इत्यादाविति भावः।

† अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम्। अमर्धन्ता सोमपेयाय देवा॥"—इति ऋ० सं० ३. १, १५, ४।

‡ "अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम्। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः॥"—इति ऋ० सं० १, ६. १८, १।

§ "त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्॥"—इति ऋ० सं० ३, ४, ११, ४।

स्यार्षम्। त्रिष्टुप्। अवभृथे विनियोगः। हे भगवन्! 'अग्ने!' 'त्वम्' ('नः') अस्मान् यथावत् 'विद्वान्' जानानः भक्ता मम एते इति। 'वरुणस्य देवस्य' यः अस्मान् प्रति 'हेलः' क्रोधः, तम् अनेनाव-भृथकर्मणा 'अव यासिसीष्ठाः' अपगमय। किञ्च; यः त्वं 'यजिष्ठः' यष्टृतमः, देवानां होतृत्वे वर्त्तमानः 'वह्नितमः' वोढृतमश्च हविषाम्, स त्वं पुनः 'शोशुचानः' देदीप्यमानः तेषु तेषु कर्मसु ('विश्वा') विश्वानि सर्वाणि 'द्वेषांसि' द्वेष्याणि ('प्र') प्रकर्षेण 'अस्मत्' अस्मत्तः 'मुमुग्धि' मुञ्च अवयाजयेत्यर्थः॥

"अग्नीपर्जन्या०——०धत्त मस्मे"*। पर्जन्येन संस्तवः। भरद्वाज-स्यार्षम्। त्रिष्टुप्। हे 'अग्नीपर्जन्यौ!' युवाम् उभौ। 'अव-तम्' अवगच्छतम् इमां 'धियं' इदं कर्म प्रति, 'मे' मम 'अस्मिन्' 'हवे' आह्वाने 'सुहवौ' स्वाह्वानौ 'सुष्टुतिं' शोभना मिमां स्तुतिं श्रोतुम्। आगत्य च श्रुत्वा इमाम् 'इडाम्' अन्नम् 'अन्यः' एकः 'जनयत्' जनयतु; 'गर्भम् अन्यः' गर्भ मेको जनयतु। तौ युवा मेवं प्रतिसंवत्सरं 'प्रजावतीः' प्रजासंयुक्ताः 'इषः' अन्नानि ('आ') आभिमुख्येन स्थित्वा 'धत्तं' दत्तम्, 'अस्मे' अस्मभ्य मित्यर्थः॥

"अग्ने देवां०——०ऋतुना"†। ऋतुभिः संस्तवः। मेधा-तिथेरार्षम्। गायत्री। ऋतुयाजेषु विनियोगः। हे भगवन्! 'अग्ने!' 'देवान्' 'इह' अस्माकं कर्मणि 'आ वह'। आहूय

* "अग्नीपर्जन्याववतं धियं मेऽस्मिन् हवे सुहवा सुष्टुतिं नः। इळामन्यो जनयद् गर्भमन्यः प्रजावतीरिष आ धत्तमस्मे॥"—इति ऋ० सं० ४, ८, १९, १।

† "अग्ने देवाँ इहा वह सादया योनिषु त्रिषु। परि भूष पिब ऋतुना॥"—इति ऋ० सं० १, १, १८, ४।

देवान् 'सादय' 'योनिषु त्रिषु' सवनेषु त्रिषु । एतान् यथाकालं यज । अमुना प्रकारेण 'परि भूष' सर्वतो देवयागेनालङ्कुरुष्व एतं यज्ञम्, आत्मना 'पिब' चैतं सोमम् 'ऋतुना' सह ॥

"आग्नावैष्णवं हविः" । हविर्ग्रहणात् हविष एव सम्प्रदानार्थत्वम् । या ऋचः ताः संस्तवेनाग्नाविष्णोः सन्ति ।—

"अग्नाविष्णू सजोषसेमा वर्द्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥"—इति । वामदेवस्येय मार्षम् । गायत्री । आग्नावैष्णवे हविषि विनियोगः । हे 'अग्नाविष्णू' ('सजोषसा') सजोषसौ नित्यं सह जोषणौ नित्यं समानप्रीतौ 'वां' युवां सुच्येथे । ('इमाः') एताः युष्मद्-'गिरः' अस्मत्स्तुतयः 'वर्द्धन्तु' वर्द्धयन्तु युवाम् । वृद्धौ च सत्यां सम्यक्सम्प्रदेयैः 'द्युम्नैः' द्योतनवद्भिः ('वाजेभिः') अन्नैरभ्युद्यतैः ('आगतम्') अस्मान् प्रत्यायातम् ॥

"न त्वक् संस्तविकी दशतयीषु विद्यते" । 'न'—इति प्रतिषेधः । 'तु'-शब्दोऽवधारणार्थः । 'ऋक्' 'संस्तविकी' संस्तवयुक्ता, 'दशतयीषु' दशमण्डलावयवप्रविभागेन तायत इति दशतयः ऋग्वेदः, तस्य शाखाः दशतय्यः, तासु सर्वासु एकापि हविष्यविनियुक्ता शास्त्रमध्यपातिनी ऋक् अग्नाविष्णोः संस्तविकी नास्ति । स्यादप्यन्यत्र संस्तविकी, न तु दशतयीषु । असंस्तवेन वा दशतयीष्वपि इत्युत्सर्गं दर्शयति, एव मेतन्मया निपुण मन्विष्यत इति ॥

अथाप्यय मपर उत्सर्गः;—"अथाप्याग्नापौष्णं" "हविः" एव, "न तु संस्तवः" । तस्मिंस्तु हविषि किन्तु पृथक् पृथगेव अग्निः स्तूयते पूषा च "तत्र" तस्मिन् संस्तवे अग्निपूष्णोः "एतां विभक्तस्तुतिम् ऋचम्" "उदाहरन्ति" नैरुक्ताः—॥ १ (८) ॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः। पूषा त्वेतः प्रच्यावयतु विद्वाननष्टपशुर्भुवनस्य गोपा इत्येष हि सर्वेषां भूतानां गोपायितादित्यः स त्वैतेभ्यः* परि ददत् पितृभ्य इति सांशयिकस्तृतीयः पादः पूषा पुरस्तात्तस्यान्वादेश इत्येक मग्निरुपरिष्टात्तस्य प्रकीर्त्तनेत्युपरम्। अग्निर्देवेभ्यः सुविदत्रियेभ्यः। सुविदत्रं धनं भवति विन्दतेर्वैकोपसर्गाद्दक्षतेर्वा स्याद्द्युपसर्गात् ॥ २ (९) ॥

"पूषा त्वेतः"—इति†। देवश्रवमो यामायनस्यार्षम्। त्रिष्टुप्। पुनः (अवस्य‡) कर्णे प्रमीतानुमन्त्रणे विनियोगः। सः प्रमीत उच्यते। 'पूषा' भगवान् "आदित्यः" पथा मधिपतिः, सः ('त्वा') त्वाम् 'इतः' मनुष्यलोकाद् विशिष्टेन पथा 'प्रच्यावयतु' 'विद्वान्' अव्यवहितज्ञानः। सर्वत्र ज्ञानाव्यवधानादेव च 'अनष्टपशुः'§। 'भुवनस्य गोपाः'। 'भुवनस्य' भूतजातस्य 'गोपाः' रक्षिता। उपर्यवस्थितः 'सः' पूषा, एवंलक्षणः, ('त्वा') त्वां प्रगमय्य 'एतेभ्यः'

---

* 'गोपायिता स त्वैतेभ्यः'' क, ख, ग।

† ऋ० सं० ७, ६, १३, ३।—इत्येवमादीनां चतसृणा मृचां दीक्षितमरणे विनियोग माश्वलायनः। ६, १० सू० द्रष्टव्यम्।

‡ नास्त्येतत् ग-घ-पुस्तकयोः।

§ "अनष्टपशुः अविनश्वरपशुयुक्तः; यस्मिन् सर्वे पशवस्तिष्ठन्ति न तु नश्यन्तीत्यर्थः।"—इति सा० भा०।

चन्द्रमण्डलोपान्तवासिभ्यः 'पितृभ्यः' 'परिददत्' परिददातु। तदुक्तम्,—"दक्षिणायनात् पितृलोकम्"—इति। 'अग्निः' अपि चैतेभ्यः उत्क्रम्य 'देवेभ्यः सुविदत्रियेभ्यः' ये विद्युतो मध्ये निवसन्ति, तेभ्यः परिददातु। तदप्युक्तम्,—"चन्द्रमसो वैद्युतम्"—इति*। स त्व मेव मुभावपि देवलोकपितृलोकावभ्यश्नुहीत्याशीः प्रमीतस्य। उक्तञ्च,—"ये देवयानाः पितृयानाश्च लोकाः सर्वांस्ताननृणाः सञ्चरेम"—इति† ॥

"स त्वैतेभ्यः०—०इति सांशयिकः तृतीयः पादः" संशयोऽस्मिन्नस्तीति सांशयिकः, तृतीयः पादोऽस्या ऋचः। कथं कृत्वा? यथा,—"पूषा पुरस्तात्" 'पूषा त्वेतश्च्यावयतु'—इति; "तस्य अन्वादेशः—इति एकम्" सामर्थ्याद्दर्शनम्। तथा व्याख्यात मेव। त्रयः पौष्णाः पादाः, एक एवाग्नेयः एव मियं विभक्तस्तुतिः। अथ वा द्वावुत्तरावाग्नेयौ। तत्र अर्थयोजना,—पूष्णा प्रच्यावितं सन्तं सोऽग्निर्वक्ष्यमाणस्त्वा मेतेभ्यः पितृभ्यो देवेभ्यः सुविदत्रियेभ्यः परिददातु; मा पितृभ्यः प्रेतेभ्य इत्यभिप्रायः। तं प्रेतं दिष्ट मितोऽग्नय एव हरन्तीत्यपेक्ष्य सर्वनाम्नश्चोत्तरेणाप्यग्निशब्देन सम्बन्ध मविरुध्यमानं व्यपेक्ष्य अकल्पयत्। "अग्निः उपरिष्टात्, तस्य प्रकीर्त्तना—इति अपरम्"—इति ॥

* "विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः"—इति परिमरः ऐ० ब्रा० ८, ५, ५।

† "देवयानान्—देवाः येर्मार्गैर्यन्ति गच्छन्ति तान् (ऋ० सं० १, ५, १८, १.)"—इति, "पितृयाणम्—पितरो येन मार्गेण गच्छन्ति तम्(ऋ० सं० ७, ५, १०, ७)"—इति च सा० भा०।

"सुविदत्रं धनं भवति" *,—"विन्दतेः वा" ("एकोपसर्गात्") सु-इति एतेन एकेन उपसर्गेण उपसृष्टात्। "ददातेः वा' ("द्व्युपसर्गात्") सु-विभ्यां द्वाभ्याम् उपसर्गाभ्यां युक्तात्। तद् यथा मस्ति, ते सुविदत्रियाः † ॥ २ (८) ॥

अथैतानीन्द्रभक्तीन्यन्तरिक्षलोको माध्यन्दिनं सवनं ग्रीष्मस्त्रिष्टुप् पञ्चदशस्तोमो बृहत्साम ये च देवगणाः समाम्नाता मध्यमे स्थाने याश्च स्त्रियोऽथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च ‡ बलकृतिरिन्द्रकर्मैव तदथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिर्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुरथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च § पूषा वातेन च पर्ज्जन्यः ॥ ३ (१०) ॥

"अथ एतानि इन्द्रभक्तीनि"—इति। पूर्ववत् सर्वम् "अन्त-

* १भा० ३३९ पृ० ४पं० ३सू० (५५)। उक्तं च पुरस्तात् "सुविदत्रः = कल्याणविद्यः"—इति १९१पृ० ९, २, ५। १९५पृ० ११पं० तट्टीकायाञ्च द्रष्टव्यम्।

† "सुविदत्रं ज्ञानं धनं वा, तदर्हाः सुविदत्रियाः; छान्दसो घ-प्रत्ययः।"—इति सा० भा०।

‡ "या च काचिद्" क, च, ग।

§ "सोमो वायुना च" क, च ग।

रिक्षलोकः''—इत्येवमादि*। "ये च देवगणाः समाम्नाताः" मरुदादयः†। "याश्च स्त्रियः" अदित्याद्याः‡॥

"अथ अस्य कर्म"।—"रसानुप्रदानम्" अवश्यायनम्, वर्षादि, "वृत्रवधः" मेघवधः, "या च का च बलकृतिः" अन्यापि। "इन्द्र-कर्म एव तत्"—इति आदरार्थं पुनर्वचनम्; अपि कीटपिपीलिकादिषु, यद्बलेन क्रियते सर्वम्, इन्द्र-कर्मैव तदिति॥

"अथ अस्य संस्तविकाः देवाः"। "अग्निः, सोमः"—इत्येवमादयः। तद्यथा,—

"इन्द्राग्नी रोचना दिवः"—इति§। विश्वामित्रस्यार्षम्। गायत्री। ऐन्द्राग्ने हविषि विनियोगः। हे 'इन्द्राग्नी' 'रोचना' रोचनौ दीपनौ हविषा च उदकेन च 'दिवः' 'परिभूषथः वाजेषु' अस्मान् सर्वतः; येनान्नेषु स्वामित्वेन भवेमहि, तथा कुरुतम्।

* वृत्रहत्यामित्यन्तं षट्क मिहैव मूले द्रष्टव्यम। तेषां व्याख्यानानि कथं न कृतानि ?

† निघण्टुपञ्चमाध्यायस्य चतुर्थपञ्चमयोः खण्डयोरेव मध्यमस्थानदेवताः समाम्नाताः (१भा० ४७५ ४९० पृ०)। तेषाञ्च व्याख्यान मिहैवापरिष्टाद् नवम-दशमयोः "अथातो मध्यस्थाना देवताः"—इत्यारभ्य "मरुद्भिः सह रोदसी"—इत्यन्तेन वक्ष्यति। तत्र यानि बह्वर्थकानि, तान्येव माध्यमिक-'देवगण'-वाचकानीति यावत्। तथा च "मरुतः (८)", 'रुद्राः (९)"—इत्येवमादीनि द्रष्टव्यानि। "परं तु ये च देवगणाः समाम्नाताः"—इत्युक्त्या चतुर्थपञ्चमखण्डपठितानां सर्वेषा मेव ग्रहः; स्त्रिणां पृथगुपादानन्तु विशेषप्रख्यापनायेति।

‡ विंशतिसङ्ख्याकाश्च ताः निघण्टुपञ्चमपञ्चमे (१९) (२९) पठिताः; व्याख्यास्यमानाश्चेहापरिष्टादेकादशे "अथातो मध्यस्थानाः स्त्रियः"—इत्यारभ्य आ अध्यायपरिसमाप्तेः।

§ "इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद् वां चेति प्र वीर्यम्॥"—इति ऋ० सं० ३, १, १२, ४।

'मद' वीर्य्यम् ('वाम्') भवतोः ('प्र') प्रहृष्टम् भवम् 'चेति' जाने; येन परिभावयथो यागेषु सोऽहम् पुरः। अत एव माशास्महे॥

सोमेन संस्तवः,—"इन्द्रासोमा सम॒घंस॑मम्"—इत्यत्र व्याख्यातः*॥

वरुणेन संस्तवः,—"इन्द्रावरुणा युवमध्वराय नः"—इति व्याख्यातः प्रैषः†॥

"इन्द्रा पूषणा"—इति‡ पूष्णा संस्तवः। भरद्वाजस्येय मार्षम्। गायत्री। ऐन्द्रापौष्णे हविषि विनियोगः। हे 'इन्द्रापूषणौ!' 'सख्याय' समानख्यानाय, 'स्वस्तये' स्वस्त्ययनाय च, 'वाजसातये च' अन्नसननाय च 'हुवेम' आह्वयामहे युवां वयं नित्यं यज्ञेषु इद माशास्महे॥

"इदं वामास्ये हविः"—इति§ बृहस्पतिना संस्तवः। वामदेवस्यार्षम्। गायत्री। ऐन्द्राबार्हस्पत्ये हविषि विनियोगः। हे 'इन्द्राबृहस्पती!' 'इदं' 'हविः' यद् वयं दद्मः, तत् 'प्रियम्' इष्टम् 'आस्ये' 'वाम्' अस्तु। यत् च इदम् 'उक्थं' 'शस्यते', 'मदः च' प्रतिगरेण सह, तच्च वां प्रिय मस्तु। इत्येतदाशास्महे॥

* पृ० १८१३० ४अ० २पा० १ख०।

† पृ० ८, ११५० ५अ० १पा० १ख०। मूले सेषाहं न व्याख्यातः।

‡ "इन्द्रा नु पूषणा॑ व॒यं स॒ख्याय॑ स्व॒स्तये॑। हु॒वेम॒ वाज॑सातये॥"—इति ऋ० सं० ४, ८, ११, १।

§ "इ॒दं वा॑मा॒स्ये॑ ह॒विः प्रि॒यमि॑न्द्राबृहस्पती। उ॒क्थं मद॑श्च शस्यते॥"—इति ऋ० सं० ३, ७, ०५, १।

"विश्वं सत्यं ०——० जिगातम्" * मघवानावित्यनया ऋचा संस्तव:। उत्कृष्टमदस्य मार्षम्। त्रिष्टुप्। 'विश्वं' सर्वं जगत् 'सत्यं' सत्यमिद मस्ति। किञ्च; हे 'मघवाना' मघवानौ धनवन्तौ 'इन्द्राब्रह्मण-स्पती!' युवा मुच्येथे। 'युवोः' युवयोः सर्वम् एतत् स्वभूतम्। किञ्च; यत: सर्वस्येशानौ स्थः, अतः ('आपश्च') आपोऽपि 'न प्रमिनन्ति' न हिंसन्ति, 'व्रतम्' कर्म 'वां' युवयोः यथासङ्कल्पं वर्त्तते। यौ युवाम् एव मतिमहानुभावौ, तौ ('नः') अस्माकम् ('अच्छ') आभिमुख्येन इदं 'हविः' 'जिगातम्' आगच्छतं भोक्तुम्। ('युजा') युजौ 'इव' सहचारिणौ ('वाजिना') वाजिनौ रथाद् विमुक्तौ बुभुक्षू स्वम् 'अन्नम्'। इत्येतदाशास्महे॥

"इन्द्रापर्वता ०——० मदन्ता" † पर्वतेन संस्तवः। विश्वा-मित्रस्येव मार्षम्। त्रिष्टुप्। हे 'इन्द्रापर्वता' इन्द्रापर्वतौ! ('देवा') देवौ युवा मुच्येथे। 'बृहता' महता रथेन, महतोदकरंहणेन उदक-दानेन 'वामीः' वननीयाः 'इषः' अन्नानि 'आवहन्तम्' ईरयन्तं, व्रीह्यादीनि प्रेरयन्तम्। 'सुवीराः' शोभनवीराः। ततः स्वे काले ईजानाना मस्माकं 'वीतं' भक्षयतम् 'हव्यानि' पुरोडाशादीनि 'अध्वरेषु'। 'वर्द्धेथाम्' च 'गीर्भिः' स्तुतिभिः पुनःपुनः प्रतिकर्म 'इलया' अन्नेन ('मदन्ता') मदन्तौ तृप्यन्तौ। इत्येतदाशास्महे॥

* "विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वाम्। अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम्॥"—इति ऋ० सं० २, ७, ९, १।

† "इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः। वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता॥"—इति ऋ० सं० २, २, १८, १।

"इन्द्राकुत्सा ०—— ० तमांसि" * कुत्सेन संस्तवः। अवस्योरार्षम्। त्रिष्टुप्। ('इन्द्राकुत्सा') हे इन्द्राकुत्सौ! ('वहमाना') वहमानौ उह्यमानौ रथेन। युवां ब्रुवे। 'आ वहन्तु वाम्' 'मत्याः' अश्वाः 'अपि' 'कर्णे' नित्यं कर्मणि। ततश्च कर्मणा परितोषितः, अस्माभिः 'निःषीमद्भ्यः' 'निर्धमथः' सर्वतः शरीरं 'सधस्थात्' समानस्थानादन्तरिक्षादद्भ्यः अपः। ततः ओषध्याद्युत्पत्त्या काल्यं कुर्वाणौ। 'मघोनः' महान्त्येतानि 'तमांसि' 'हृदः' हृदयस्य छादकानि अनाकाम्यभयकृतानि 'वरथः' वारयथः। इत्येतदाशास्महे॥

"इन्द्राविष्णू ०—— ० वीरान" † विष्णुना संस्तवः। वसिष्ठस्यार्षम्। त्रिष्टुप्। त्रैधातव्यां विनियोगः। हे 'इन्द्राविष्णू!' युवां 'दृंहिताः' स्थिरीकृताः 'शम्बरस्य नवतिं नव च पुरः' मेघस्य असुरस्य वा स्वभूताः पुरः 'अश्थिष्टम्' हतवन्तौ स्थः। तांश्च त्वा मेघान्तर्गताः 'शतं' 'वर्चिनः' दीप्तिमतः अन्नवतो वा 'सहस्रं च साकम्' अवस्थितान् सहभावेन एकनिश्चयान् 'हथः' हतवन्तौ स्थः। 'अप्रति' अप्रतीकारान् 'वीरान्' 'असुरस्य' शम्बरस्य स्वभूतान्। यौ युवा मेतदतिदुष्कर मकार्षम्, तावस्माक मपि शत्रून् हथः। इत्येतदाशास्महे॥

"इन्द्रवायू इमे सुता"—इति ‡ वायुना संस्तवः। मधुच्छन्दस

---

* "इन्द्राकुत्सा वहमाना रथेना वा मत्या अपि कर्णे वहन्तु। निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि॥"—इति ऋ० सं० ४, १, २०, ४।

† "इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्। शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान्॥"—इति ऋ० सं० ५, ६, २४, ५।

‡ "इन्द्रवायू इमे सुता उप प्रयोभिरागतम्। इन्दवो वा मुशन्ति हि॥"—इति ऋ० सं० १, १, २, ४।

आर्षम्। गायत्री। उपात्तद्विकर्मात्मनोऽपि हि मध्यमस्य एकस्यापि वाग्विन्द्रभावेन विकरणधर्मित्वात् द्वित्वं बिभ्रतः नैरुक्तपक्षेऽपि द्विवचनसंस्तुतिरविरुद्धा; यथा एकस्योदकस्य द्विपात्रस्थस्य द्विवचनोक्तिः। ऐन्द्रवायवस्य ग्रहस्य पुरोऽनुवाक्येयम्। हे 'इन्द्रवायू!' युवा-मुच्येथे। 'इमे' 'सुताः' अभिषुताः 'इन्दवः' सोमाः इत्यर्थः। सुसंस्कृताः सोमा यस्माद् 'उशन्ति' कामयन्ते युवा मात्मपानाय, तस्मात् उपागच्छतम् पातु मेतान्। कथं पुनरुपागच्छतम्? 'प्रयोभिः' अन्नैः अस्मत्सम्प्रदेयैरभ्युद्यतैः। इत्येतदाशास्महे॥

"अथापि मित्रो वरुणेन संस्तूयते"। 'अथ'-शब्दः प्रकृतात् इन्द्राद् विशेषतो मित्रादीन् प्रकरोति। 'अपि'-इति सम्भावने। प्रकृताभ्यस्तिसृभ्यो देवताभ्यः पराण्यपरेणाभिधानेन संस्तवयुक्तानीति। भेदपक्षे अविरोध एव; नैरुक्तपक्षे यद्विरुद्धाभास मिव किञ्चिदत्र, तदिन्द्रवायुसंस्तवे प्रतिसमाहितम्*। 'मित्रो वरुणेन'—इत्येव मादिषु या प्रथमया निर्दिश्यते, सा मुख्या स्तुतिः; या तृतीयया निर्दिष्टा, सा अमुख्या†॥

"आ नो मित्रा ०——० सुक्रतू"‡। विश्वामित्रस्यार्षम्। गायत्री। मैत्रावरुण्याः पयस्यायाः पुरोऽनुवाक्या। ('मित्रावरुणा') हे मित्रा-वरुणौ! 'सुक्रतू' शोभनकर्माणौ! युवा मुच्येथे। 'गव्यूतिम्' गोयूतिम्,

* एतत्पृष्ठाद्यपङ्क्तेन एव 'उपात्तद्विकर्मात्मनोऽपि हि'—इत्यादिना।

† उत्तरत्रापि "पूष्णा रुद्रेण च सोमः"—इत्यादौ सर्वत्रैवं बोध्यम्।

‡ "आ नो मित्रावरुणा घृतैर्गव्यूति मुक्षतम्। मध्वा रजांसि सुक्रतू॥"—इति ऋ० सं० ३, ४, ११, ६।

यवचोद्कोत्पत्तये ‘रजांसि’ च ग्रोयतेर्धान्यानि स्थानानि व्रीह्या-दिधान्योत्पत्तिक्षेत्राणि, तानि च व्रीह्याद्युत्पत्तये ‘मध्वा’ मधुरेण सस्यसम्पत्करणेन (‘घृतैः’) घृतेन उदकेन ‘नः’ अस्माकम् ‘उक्षतम्’ सिञ्चतम्। इत्येतदाशास्महे॥

“पूष्णा रुद्रेण च सोमः”। सोमापूष्णा ०——० नाभिम्” * पूष्णा सोमस्य संस्तवः। गृत्समदस्यार्षम्। त्रिष्टुप्। सोमापौष्णस्य चरोः पुरोऽनुवाक्या। सोमापूष्णौ चन्द्रसूर्यौ, तावुच्यते। (‘सोमा-पूषणा’) हे सोमापूषणौ! युवां (‘जनना’) जननौ जनयितारौ ‘रयीणां’ धनानाम्, (‘जनना’) जनयितारौ च ‘पृथिव्याः’। ‘जातौ’ जातमात्रौ एव युवां ‘विश्वस्य’ सर्वस्य ‘भुवनस्य’ भूतजातस्य ‘गोपौ’ गोप्तारौ बभूवथुः। ‘देवाः’ च रश्मयः युवा मेव ‘अमृतस्य’ उदकस्य ‘नाभिं’ नहनं बन्धनम्, आधारं सर्वलोकस्य ‘अकृण्वन्’ सदा कुर्वन्ति। युवा मिदं नाम अस्माकं कुरुत मित्याशिषा निरा-काङ्क्षम्॥

“सोमारुद्रा ०——० अस्मत्” † रुद्रेण संस्तवः। भरद्वाजस्येय मार्षम्। त्रिष्टुप्। सोमारौद्रस्य चरोः पुरोऽनुवाक्या। (‘सोमारुद्रा’) हे सोमारुद्रौ! युवा मुच्येथे। एतानि सर्वाणि ‘भेषजानि’ ‘अस्मे’ अस्माकं ‘तनूषु’ शरीरेषु ‘धत्तम्’। किञ्च; ‘अवस्यतम्’ नित्य

* “सोमापूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः। जातौ विश्व-स्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्॥”—इति ऋ० सं० २, ८, ९, १।

† “सोमारुद्रा युव मेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम्। अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृत मेनो अस्मत्॥”—इति ऋ० सं० ५, १, १८, १।

मस्मानवितु रचितु मिच्छतम्। किञ्च; 'यत्' ('नः') अस्माकम् मनोवाक्कायैः 'कृतम्' 'एनः' किञ्चित् अस्ति, 'तनूषु' तत् 'युयुतम्' 'अस्मत्तः'॥

"अग्निना च पूषा" मध्यमस्थानेन * च द्युस्थानेन च † संस्तव इति; पार्थिवेन प्रतिषेधात् ‡। ऋचं नोदाहरति; मृग्य मुदाहरणं येन संस्तवः॥

"वातेन च पर्जन्यः"। "धर्त्तारो दिव ०——० मे हवम्" §। वसुकर्णस्यार्षम्। त्रिष्टुप्। 'धर्त्तारः दिवः ऋभवः' 'सुहस्ता' शोभनहस्तौ ('वातापर्जन्या') वातापर्जन्यौ च, 'आपः' च, ('ओषधीः') ओषधयश्च, 'भगः' च, 'रातिः' दाता, 'वाजिनः' ‖ च, ('धर्त्तारः') धारयितारः, ('दिवः') द्योतनवन्तः ये उक्ताः उदकस्य। 'महिषस्य' महतः 'तन्यतोः' सर्वार्थतनितुः। ('हवं') हवन माह्वानम् 'नः' अस्माकम् 'आयन्तु' आगच्छन्तु। आगत्य च 'प्रतिरन्तु' प्रतीर्णाः कुर्वन्त्वेता अस्मद्-'गिरः' वर्द्धयन्त्वित्यर्थः। वातापर्जन्याविति अत्र संस्तवः॥ ३ (१०)॥

* १भा० ४७५पृ० ५ख० ४ख० (११)। इह च प० १०, ९, १०।

† इहैवोपरिष्टाद् वक्ष्यति,—"अग्निरप्यदितिरुच्यते"—इत्यादि ११, ३, २।

‡ पु० "अथाप्यग्नापौष्णं हविर्न तु संस्तवः"—इति ६४४पृ० ९पं०।

§ "धर्त्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः। आप ओषधीः प्रतिरन्तु नो गिरो भगो रातिर्वाजिनो यन्तु मे हवम्॥"—इति ऋ० सं० ८, २, १२, ५।

‖ "अग्निर्वायुः सूर्यस्ते वै वाजिनः"—इति तैत्तिरीयब्राह्मणम्।

अथैतान्यादित्यभक्तीन्यसौ लोकस्तृतीयसवनं वर्षा जगती सप्तदशस्तोमो वैरूपं साम ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियोऽथास्य कर्म रसादानं रश्मिभिश्च रसधारणं* यच्च† किञ्चित् प्रवल्हितमादित्यकर्मैव तच्चन्द्रमसा वायुना संवत्सरेणेति संस्तवः ॥ ४ ‡ ॥

"अथैतान्यादित्यभक्तीनि"—इति। पूर्ववद् "असौ लोकः"—इत्येवमादि। "सूर्यो द्युस्थानः"—इति § पूर्व मधिकृत्य "अथ एतानि आदित्यभक्तीनि"—इति इहाब्रवीत् स्वपचोद्योतनानुस्मृतये ‖ ॥

"ये च देवगणाः समाम्नाताः उत्तमे स्थाने" आदित्यादयः ¶। "याश्च स्त्रियः"—उषाः**, सूर्या††, वृषाकपायी‡‡, सरण्यूः§§, देवपत्न्यः ‖‖ इति ॥

* "रसाधारणं" ङ, च।

† "यत्तु" क. ख, ग।

‡ नात्र खण्डसमाप्तिः ङ-च-पुस्तकयोः।

§ पृ० २२० पं० १९८०।

‖ एवञ्च असौलोक इत्यस्य द्युलोक इत्यर्थो बोध्य इति भावः।

¶ १भा० ४९०पृ० ५ख० ९खं० (१४)—(२०)। पद्मणपठिताः सर्वा एव वा।

** १भा० ४९०पृ० ५ख० ९खं० (१)। पत्नार्थश्चैव ११, ४, १९।

†† १भा० ४९०पृ० ५ख० ९खं० (२)। परस्तावश्चैव १२, १, ७।

‡‡ १भा० ४९०पृ० ५ख० ९खं० (४)। परस्तावश्चैव १२, १, ८।

§§ १भा० ४९०पृ० ५ख० ९खं० (५। परस्तावश्चैव १२, १, ९।

‖‖ १भा० ४९० पृ० ५ख० ९खं० (२१)। परस्तावश्चैव १२, ४,१०।

"अथास्य कर्म"—"रसादानम्"—इत्येवमादि; "यच्च किञ्चित् प्रवल्हितम् आदित्यकर्म एव तत्" *।

"चन्द्रमसा, वायुना, संवत्सरेण इति संस्तवः"। अल्पत्वात् स्वशब्दैरेव ब्रवीति, नाधिकारवचनं करोति अथास्येति †॥

"पूर्वापरं०——०जायते पुनः" ‡। चन्द्रमसा संस्तवः। सूर्याया-स्वार्षम्। जगती। राजयक्ष्मेष्ट्यां वैश्वदेवस्य चरोः पुरोनुवाक्येषा। 'पूर्वापरं चरतः' सूर्याचन्द्रमसौ पूर्वपक्षे पूर्वः सूर्यः अपरश्चन्द्रमाः, अपरपक्षे पुनरपरः सूर्यः पूर्वश्चन्द्रमाः। एवम् 'एतौ' चरण मनु-परन्तौ चरन्तौ सर्वदा चरतः। तौ पुनः 'मायया' योगैश्वर्ययुक्तया कयापि प्रज्ञयेति कस्तत्वं वेद; न ह्ययोगिनौ एवं शक्तौ चरितु मिति। अपि चैतदपि चित्रम्,—यदपरिखिद्यमानौ आभूतसम्प्लवात् 'शिशू' इव 'क्रीलन्तौ'। 'अध्वरं' यज्ञ मभिनिष्पादयन्तौ सर्व मिदं 'परि यातः' परि गच्छतः। तत्कथमिति,—"विश्वान्यन्यो भुवनाभिचष्टे"। 'विश्वानि' ('भुवना') भुवनानि भूतानि 'अभिचष्टे' अभिपश्यति 'अन्यः' आदित्यः; अथैतान्यभिद्रष्टव्यानि उपकारकत्वेन

* अचोक्तानां रसादानादीनां स्वरूपनिर्णयो विशेषतः प्रवल्हितपदस्यार्थः टीकाकारस्य कर्त्तव्य एव; पर मत्रे मूक एवास दुर्गाचार्यः। किञ्च, अयं लोक इत्यादीना मग्निभक्तित्वं कुतः? अन्तरिक्षलोक इत्यादीना मिन्द्रभक्तित्वञ्च कुतः? कुतो वा असौलोक इत्यादीना मादित्यभक्तित्वम्? इत्यपि नोक्त मच तेन।

† यथा च पूर्वपूर्वचोक्तम् "अस्य संस्तविकाऽदेवाः"—इति (३४ पृ० ७पं०, ३५१ पृ० ९पं०) नाच तथेति भावः।

‡ "पूर्वा॒प॒रं च॑रतो मा॒यये॒तौ शि॒शू क्रीळ॑न्तौ॒ परि॑ यातो अध्व॒रम्। विश्वा॑न्य॒न्यो भुव॑नाभि॒चष्ट॑ ऋ॒तूँर॒न्यो वि॒दध॑ज्जायते॒ पुन॑ः॥"— इति ऋ० सं० ८, ७, १२, १।

तथैव सत्त्वानि पश्यति । 'ऋतून्' 'अन्यः' चन्द्रमाः '(वि)दधत्' अभि-
निष्पादयत् स्वगत्या । ('पुनः') पुनःपुनः प्रतिमासं ('जायते') जायमानः उदेति अस्तमेति च * । अमंस्तवैनोऽऽप्तरोऽर्थः । यावेत-देव मत्यद्भुतं किमपि चरणं चरतः, तावेतौ अगदमस्मद्यश-मानं कुरुत मित्याशिषा निराकाङ्क्षः ॥

वायुना संस्तवः "सप्त ऋषयः प्रतिहिताः (य० वा० सं० ३४, ५५)"—इत्यत्र । तत्र 'जाग्रतो अस्वप्नजौ'—इत्येतस्मिन् पादे "वा-य्वादित्यौ"—इति वक्ष्यति † ॥

संवत्सरेण च संस्तवः "पञ्चपादं पितरम् (ऋ० सं० १,२,२६, १.)"—इति व्याख्यातः ‡ ॥ ४ ॥

**एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दस्तोमपृष्ठस्य भक्तिशेष मनुकल्पयीत शरदनुष्टुबेकविंशस्तोमो वैराजं सामेति पृथिव्यायतनानि हेमन्तः पङ्क्तिस्त्रिणवस्तोमः शा-क्वरं सामेत्यन्तरिक्षायतनानि शिशिरोऽतिच्छन्दास्त्रय स्त्रिंशस्तोमो रैवतं सामेति द्युभक्तीनि ॥ ५ (११) ॥**

"एतेषु एव स्थानव्यूहेषु ऋतुच्छन्दस्तोमपृष्ठस्य भक्तिशेष मनु-कल्पयीत" । ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च ऋतुच्छन्दः-

* "यद्युभयोरपि पुनर्जन्मास्ति तथापि सूर्यस्य सर्वदा प्रहरैः उदयो नाभिप्रेतः, चन्द्रस्य तु ह्रासवृद्धिसद्भावात् पुनःपुनः जायत इत्युक्तिर्युक्ता । 'चन्द्रमा वै जायते पुनः'—इत्यादिश्रुतेः"—इति मा० भा० ।

† उपरिष्टादिदेव 'वाय्वादित्यौ', 'प्राज्ञयात्मा तैजसश्च'—इति चाधिदैवत मध्यात्मं चोभयविधं व्याख्यानं द्रष्टव्यम (१२, ४, १) ।

‡ १भा० ४६० पृ० १०पं० ; ४६५पृ० ४पं ।

स्तोमपृष्ठम्, तस्य ऋतुच्छन्दःस्तोमपृष्ठस्य। ऋतुभक्तिशेषम्*, छन्दोभक्तिशेषम्†, स्तोमभक्तिशेषम्‡, पृष्ठभक्तिशेषञ्च§॥

तद्यथा;—"शरत्, अनुष्टुप्, एकविंशस्तोमः, वैराजं साम—इति पृथिव्यायतनानि"। अनग्निलिङ्गेऽपि चेन्मन्त्रे एतेषा मन्यतमं स्यात्, स आग्नेय इति प्रतिपत्तव्यम्। एव मेवोत्तरयोरपि स्थानव्यूहयोः। व्यूहो नाम विस्तारः। "हेमन्तः, पङ्क्तिः, त्रिणवस्तोमः, शाक्वरं साम—इति" ("अन्तरिक्षायतनानि") अन्तरिक्षलोकायतनानि। "शिशिरः, अतिच्छन्दाः, त्रयस्त्रिंशस्तोमः, रैवतं साम—इति" "द्युभक्तीनि" द्यां भजन्त इति द्युभक्तीनि; अपिवा आदित्यं भजन्त इति द्युभक्तीनि। विभक्तिग्रहणं प्रनाडिकोपदर्शनार्थम्; एतेषां स्तुतिः सा स्तुतिसङ्क्रमणन्यायेन स्थानाधिपतेः सूर्यस्य स्तुतिरिति। सर्वत्रैवम्॥५(११)॥

---

* "पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन, तावान् संवत्सरः"—इति ऐ० ब्रा० १, १, १। "षड् वा ऋतवः, ऋतुश एव तत् संवत्सर माप्नुवन्ति"—इति ऐ० ब्रा० ४, ३, १। "तां वासन्तिकाभ्यां मासाभ्या मन्वयुञ्जत * * * तां ग्रैष्माभ्यां तां वार्षिकाभ्यां तां शारदाभ्यां तां हैमन्तिकाभ्यां मासाभ्या मन्वयुञ्जत * * * तां शैशिराभ्यां मासाभ्या मन्वयुञ्जत तां शैशिराभ्यां मासाभ्या माप्नुवन्नाप्नोति"—इति च ऐ० ब्रा० ४, ४, ५।

† छन्दांसि वा अन्योन्यस्यायतन मभ्यध्यायन्। गायत्री त्रिष्टुभश्च जगत्यै चायतन मभ्यध्यायत्, त्रिष्टुप् गायत्र्यै च जगत्यै च, जगती गायत्र्यै च त्रिष्टुभश्च"—इति, "सा गायत्री गर्भ मधत्त सानुष्टुभ मसृजत, त्रिष्टुप् गर्भ मधत्त सा पङ्क्ति मसृजत, जगती गर्भ मधत्त सातिच्छन्दस मसृजत"—इति च ऐ० ब्रा० ४, ४, ५; ६।

‡ त्रिवृदादयः षट् स्तोमाः सामवेदीयाः सन्ति। तत्प्रयथनप्रकारादयश्च सामवेदीये ताण्ड्य महाब्राह्मणे द्वितीयाद्यध्यायत्रये स्पष्टं स्फुटम्।

§ "बृहच्च वा इद मग्रे रथन्तरं चास्तां * * * तद् वैरूप मसृजत * * * तद् वैराज मसृजत * * * तच्छाक्वर मसृजत * * * तद्रैवत मसृजत * * * षट् पृष्ठान्यासन्"—इति ऐ० ब्रा० ४, ४, ६। "पृष्ठ· षडहो भवति"—इत्यादिकञ्च ताण्ड्यम्।

## ॥ तिसृणां देवानां भक्तयो भक्तिशेषाश्च ॥

॥ तत्र '*'—एतच्चिह्नयुक्ताः सर्वत्र भक्तिशेषाः ज्ञेयाः ॥

| | अग्नेः | इन्द्रस्य | आदित्यस्य |
|---|---|---|---|
| लोकाः ... | पृथिवी | अन्तरिक्षम् | द्यौः (१) |
| सवनानि ... | प्रातः | माध्यन्दिनम् | तृतीयम् (२) |
| ऋतवः(३)... | वसन्तः<br>शरत्* | ग्रीष्मः<br>हेमन्तः* | वर्षा<br>शिशिरः* |
| छन्दांसि(१०) | गायत्री (४)<br>अनुष्टुप्* (५) | त्रिष्टुप् (६)<br>पङ्क्तिः*(७) | जगती (८)<br>अतिच्छन्दाः*(९) |
| स्तोमाः (११) | त्रिवृत् (४)<br>एकविंशः*(५) | पञ्चदशः(६)<br>त्रिणवः*(७) | सप्तदशः(८)<br>त्रयस्त्रिंशः*(९) |
| सामानि ... | रथन्तरम्(४)<br>वैराजम्*(५) | बृहत् (६)<br>शाक्वरम्*(७) | वैरूपम्(८)<br>रैवतम्*(९) |
| देवगणाः ... | निघ० ५। १—३। | ५। ४,५। | ५। ६। |
| स्त्रियः ... | तत्रैव | तत्रैव | तत्रैव |
| कर्माणि ... | हविर्वहनम्<br>देवावाहनम्<br>दार्ष्टिविषयिकम् | रसानुप्रदानम्<br>वृत्रवधः<br>बलकृतिः | रसादानम्<br>रसधारणम्<br>प्रवह्लितम् |

## ॥ तिसृणां देवानां संस्तविका देवाः ॥

अग्नेः ... इन्द्रः, सोमः, वरुणः, पर्जन्यः, ऋतवः। आग्नावैष्णवम्, आग्नापौष्णं च हविः ; न तु संस्तवः(१२)।

इन्द्रस्य ... अग्निः, सोमः, वरुणः, पूषा बृहस्पतिः, ब्रह्मणस्पतिः, पर्वतः, कुत्सः, विष्णुः, वायुः, मित्रो वरुणेन, सोमः पूष्णा, सोमो रुद्रेण, पूषा अग्निना, पर्जन्यो वातेन।

आदित्यस्य ... चन्द्रमाः, वायुः, संवत्सरः।

(१) "स तपस्तप्त्वेमांल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्। * * *। तेभ्यो ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः (ऐ० ब्रा० ५, ५, ७)"—इति श्रुतेः पृथिव्यादिलोकाना मग्न्यादिभक्तित्वम्।

(२) "अग्नये वसुभ्यः प्रातः सवने। * * *। इन्द्राय रुद्रेभ्यो मध्यन्दिने। * * *। विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने (ऐ० ब्रा० ३, २, २)"—इत्यादिश्रुतेः प्रातरादिसवनाना मग्न्यादिभक्तित्वम्।

(३) ऋतूनां विभक्तित्वं च गमयन्नाहैतरेयके "देवासुरा"—इत्युपक्रम्य "त इमांल्लोकान् सतोषपसदो द्विद्विरेकैका मुपायंस्ताः षट् सम्पद्यन्त, षड् वा ऋतवः"—इत्यादिना (१, ४, ६)। "वसन्तेन ऋतुना"—इत्याद्यश्च षट् ऋचो द्रष्टव्याः। य०वा० सं० २१, २३—२८। वसन्तादीना मग्न्यादिभक्तिनिदानन्तु आयुर्वेदविदो विदन्ति च।

(४) "अग्निर्वै देवता प्रथम महर्वहति त्रिवृत्स्तोमो रथन्तरं साम गायत्री-च्छन्दः"—इति, "अभित्वाशूर नोनुमः (सा० सं० छ० आ० ३, १, ५, १। ऊ० गा० २, १, ११) * * *—इति रथन्तरं पृष्ठं भवति"—इति च ऐ० ब्रा० ४, ५, १।

(५) "वाग् वै देवता चतुर्थमहर्वहत्येकविंशस्तोमो वैराजं सामानुष्टुप् छन्दः"—इति, "पिबा सोम मिन्द्र मन्दतु त्वा (सा० सं० छ० आ० ५, १, १, ८। गे० गा० १०, २, ११) * * *—इति वैराजपृष्ठं भवति"—इति च ऐ० ब्रा० ५, १, ४।

(६) "इन्द्रो वै देवता द्वितीय महर्वहति पञ्चदशस्तोमो बृहत्साम त्रिष्टुप् छन्दः"—इति, "त्वा मिद्धि हवामहे (सा० सं० छ० आ० ३, १, ५, २। ऊ० गा० १, १, २७) * * *—इति बृहत्पृष्ठं भवति"—इति च ऐ० ब्रा० ४, ५, २।

(७) "गौर्वा देवता पञ्चम महर्वहति त्रिणवः स्तोमः शाक्वरं साम पङ्क्तिश्छन्दः"—इति ऐ० ब्रा० ५, २, १। "महानाम्नीभ्यश्च स्तुवते शाक्वरेण साम्ना"—इत्यादि। ऐ० ब्रा० ५, २, २। महानाम्न्यस्तु स्वनामप्रसिद्धे सामवेदीयार्चिकग्रन्थविशेषे, तत्साम च सामवेदीयं महानाम्नीसामेति प्रसिद्धम् गानग्रन्थचतुष्टयेभ्यः पृथगेव।

(८) "विश्वे वै देवा देवतास्तृतीय महर्वहन्ति सप्तदशस्तोमो वैरूपं साम जगती-च्छन्दः"—इति, "यद् द्याव इन्द्र ते शतम् (सा० सं० छ० आ० ३, २, ४, ६। ऊ० गा १, १, १—८) * * *—इति वैरूपं पृष्ठं भवति"—इति च। ऐ० ब्रा० ५, १, १।

(९) "द्यौर्वै देवता षष्ठ महर्वहति त्रयस्त्रिंशः स्तोमो रैवतं सामातिच्छन्दाश्छन्दः"—इति, "रेवतीर्नः सधमादे (सा० सं० छ० आ० २, २, १, ९। ऊ० गा० २, १,

१७—१८) * * *—इति रैवतं पृष्ठं भवति"—इति च। ऐ० ब्रा० ५, ४, ७।

(१०) छन्दःसाले तु सप्त छन्दांसि दृश्यन्ते। यथा हि पैङ्गलसौत्रेऽध्याये —"छन्दः (१), गायत्री (२), गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः (१४)"—इति सूत्रादिषु; ऐतरेय ब्राह्मणेऽपि च "अग्नेर्गायत्री, सवितेरुष्णिहा, सोमस्यानुष्टुभा, बृहस्पतेर्बृहत्या, मित्रावरुणयोः पङ्क्त्या, इन्द्रस्त्रिष्टुभा, विश्वेदेवा जगत्या"—इति ८, ६, १। यास्कोऽप्यय मुपरिष्टाद् (१२, १, ७) वक्ष्यति च "सप्तऋषयः सप्त छन्दांसि"—इति। इह तु तेषां पञ्चाना मेव देवतानिर्णयो ध्वनित इति विचार्यम्। बृहत्याश्चैन्द्रेवभक्तित्वादिह प्रवेशो न सम्भवतीत्यपि मन्यायतेऽस्माभिः। तथाचैतरेयकम्,—"चयस्य वा एते"—इत्यादि। ४, ४, १। अतिजगत्यादीना मतिच्छन्दसान्तु सप्ताना मेवादित्यभक्तित्व मुपदिश्यते। तल्लक्षणञ्च सोदाहरणं श्रूयते ऐतरेयके। तथाहि,—"त्रिकद्रुकेषु महिषो यवाशिरम् (सा० सं० उ० आ० ५, १, २, १, अष्टिः), प्रोष्वस्मै पुरोरथम् (सा० सं० उ० आ० ९, १, १४, १, अतिजगती)—इत्यतिच्छन्दसः शंसति। छन्दसां वै यो रसोऽत्यक्षरत् सोऽतिच्छन्दस मभ्यत्यक्षरत् तदतिच्छन्दसोऽतिच्छन्दस्त्वम्"—इति ४, १, ३। इत्यादीनां विच्छन्दसान्तु सप्तानां क निवेशः स्तोकार्थे इति च चिन्तनीय मेव स्थितम्।

(११) देवा वा असुरैर्विजिग्याना ऊर्द्धाः स्वर्गं लोक मायंस्तोऽग्निर्दिविस्पृगूर्द्ध उदश्रयत सः स्वर्गाय लोकस्य द्वार मवृणोदग्निर्वै स्वर्गस्य लोकस्याधिपतिस्तं वसवः प्रथमा आगच्छन् * * * तं ते त्रिवृता स्तोमेनास्तुवन्। * * * तं रुद्रा आगच्छन् * * * तं ते पञ्चदशेन स्तोमेनास्तुवन्। * * * त मादित्या आगच्छन् * * * तं ते सप्तदशेन स्तोमेनास्तुवन्। * * * तं विश्वेदेवा आगच्छन् * * * तं त एकविंशेन स्तोमेनास्तुवन् (ऐ० ब्रा० ३, ४, ४)"—इत्यादौ, "विश्वे त्वा देवा आनुष्टुभेनच्छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना रोहन्तु (ऐ० ब्रा० ८, ४, २)"—इत्यत्र चैकविंशस्तोमस्य वैश्वदेवत्व श्रूयते, विश्वदेवाश्च द्युस्थानभागिन इति कथ मेकविंशस्याग्निभक्तिशेषत्व मित्यपि चिन्तनीयम्।

(१२) "आग्नावैष्णवं पुरोडाशं निर्वपन्ति"—इत्याद्याग्नावैष्णवहविषो विधायकं ब्राह्मणम्। ऐ० १, १, १। "अग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः"—इति च ऐ० ब्रा० १, १, ४। आग्नापौष्णहविष उदाहरणन्तु मूले एव द्रष्टव्यम्।

सर्व्व मेतन्मन्त्राश्रय मित्युक्तम्, त एव तावत् मन्त्राः कस्मात्? इति वक्तव्य मत आह :—

**मन्त्रा मननाच्छन्दांसि छादनाद्यजुर्यजतेः* साम सम्मित मृचा स्यतेर्वर्चा समम्मेन इति नैदाना गायत्री गायतेः स्तुतिकर्म्मणस्त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम् ॥ ६ † ॥**

"मन्त्राः मननात्" ; तेभ्यो ह्यध्यात्माधिदैवाधियज्ञादि ‡ मन्तारो मन्यन्ते, तदेषां मन्त्रत्वम् § ॥

ते पुनश्छन्दोमयाः, नाच्छन्दसि वागुच्चरतीति ‖ अथ "छन्दांसि" कस्मात्? "छादनात्"। "यदेभिरात्मान माच्छादयत् देवा मृत्योर्बिभ्यत, तच्छन्दसां छन्दस्त्वम्"—इति विज्ञायते ॥

अथ "यजुः" कस्मात्? "यजतेः" धातोः; तेन हि विशेषत इज्यते, सर्वत्र याज्यान्ते वषट्कारविधानात् ¶ ॥

* "छन्दांसि छादनात् स्तोमः स्तवनात् यजुर्यजतेः" ङ, च।

† नात्र खण्डसमाप्तिः ङ-च-पुस्तकयोः।

‡ न जानेऽत्रादिपदात् पुनः कस्य ग्रहण मभीष्टं टीकाकृतः?

§ "मनो वै दीदाय मनसो हि न किञ्चन पूर्व मस्ति, मन एव तत् सम्भावयति मनः संस्कुरुते"—इति ऐ० ब्रा० २. ५, ८।

‖ "छन्दांसि छन्दयतीति वा"—इति सां दै० ब्रा० ३, १९।

¶ छन्दःप्रभृत्यन्तरा न वागुच्चरतीत्येव मित्र प्रकृतिप्रदर्शनं कर्त्तव्यम्, यजुषो साम्नश्च ग्रहणाय। यजुरपि छन्दोविशेषमेव, सामापि छन्दोमूलक मेवेति सङ्कीर्ण-मनस्त्व मित्र मादरणीयम्; मूले तु तयोरपि लक्षणे उक्ते तत्राप्यवतरणी वक्तव्येव टीकाकृताम्।

अथ "साम" कस्मात्? तद्धि "सम्मितम् ऋचा" यावती ऋक् तावदेव परिमाणतः। "अस्यतेः वा" क्षेपणार्थस्य (दि॰ प॰); प्रक्षिप्त मिव हि तत् ऋचि भवति। विज्ञायते च "तस्मादृच्यध्यूढं साम गीयते"†। अथ वा "स्यतेः वा" इति। "षो अन्तकर्मणि (दि॰ प॰)"; अन्त्यं तत् कर्म भवति, संहिता—पदम्—साम इति। "ऋचा समं मेने—इति नैदानाः"। 'ऋचा' एतत् 'समम्' इत्येवं प्रजापतिः 'मेने' ज्ञातवान्। अथ वा आत्मान मेव 'ऋचा समं' 'मेने' ज्ञातवत्, तत् साम्नः सामत्वम्। इत्येवं 'नैदानाः' मन्यन्ते। निदान मिति ग्रन्थः, तद्विदो नैदानाः‡॥

"छन्दांसि छादनात्"—इत्युक्तम्, तानि च पुनरमूनि गायत्री-प्रमुखानि। अतो गायत्रीं निराह,—"गायत्री, गायतेः स्तुति-कर्मणः§" तया हि गीयन्ते स्तूयन्ते देवताः॥ ॥ ६ ॥

**उष्णिगुत्स्नाता भवति स्निह्यतेर्वा स्यात्कान्तिकर्म्मण उष्णीषिणो वेत्यौपमिक मुष्णीषं स्नायतेः ककुप् ककुभिनी भवति ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वानुष्टुबनु-**

* अस्मन्मते तु अध्वरक्रियथैव यज्ञदेहनिर्माणात् यजने यजुष एव प्राधान्यम्।

† छान्दोग्यब्राह्मणस्य तृतीयप्रपाठके पञ्चमादिखण्डत्रयं बहुत्र द्रष्टव्यम्।

‡ एतच्चातिपाण्डित्यमूलकं व्याख्यानम्; यास्ककाले हि निदानग्रन्थस्य तु प्राग-भाव एव; पश्चाच्च नैदानशब्देन शब्दमूलान्वेषिणो नैरुक्ता एवेत्यस्माकम्। वस्तुतः "साम सम्मितम्"—इत्यादिर्व्याख्यानं सर्व मेव न रोचते सामगेभ्यः।

§ छा॰ दै॰ ब्रा॰ ३. १ तत्राप्येव मेव। तथाच तत एवोद्धृतमिद मिति, गम्यते।

|| "अष्टाक्षरा वै गायत्री (ऐ॰ ब्रा॰२, ?, १२"—इति, "अष्टाक्षरा गायत्र्यभवत् * * * साष्टाक्षरा गायत्री प्रातः सवन मुदयच्छत् (ऐ॰ ब्रा॰ ३, २, ४,"—इति च, "चतुर्विंशत्यक्षरा गायत्री (ऐ॰ ब्रा॰ ३, ४, १)"—इत्यपि द्रष्टव्यम्।

ष्टोभनाद्गायत्री मेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम् ॥ ७ * ॥

अतः पर मुष्णिगादीनि छन्दांसि चतुरुत्तराणि तानि; तत्प्रसङ्गेनैव निराह।—

तत्र तावत्, "उष्णिक्" "उत्स्नाता" गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्वेष्टिता इव "भवति"। उष्णिग्गायत्र्यौ आगतश्चेति। "स्निह्यतेः वा स्यात् कान्तिकर्मणः" स्निग्ध मिष्टं देवतानां कान्त मेतच्छन्दः। "उष्णीषिणी इव वा,—इति औपमिकम्"। चत्वार्यक्षराण्यस्याः उष्णीष मिव लक्ष्यन्ते, तेनोष्णिक्†। अथोष्णीषं कस्मात्? "उष्णीषम्", "स्नायतेः" ग्रीवार्थस्य; गूढं हि तद् भवति गूढम्‡॥

"ककुप्", "ककुभिनी" इव "भवति"। सैवोष्णिक् आगतेन पादेनोपहितेन मध्यतः ककुबित्युच्यते; स तस्याः ककुबिव मध्यतो भवति, तेन ककुभिनीव ककुप्§। अथ "ककुप्" कस्मात्? "कुजतेः" "वा" कौटिल्यार्थस्य, "उब्जतेः" "वा" न्यग्भावार्थस्य; नतं हि तद् भवति॥

"कुब्जश्च" कुब्जोऽप्यनयोरेवान्यतरस्मात्|| ॥

* नात्रापि खण्डसमाप्तिः क-च-पुस्तकयोः।
† "चतुरश्चतुरः प्राजापत्यायाः"—इति पि० सू० ३, ११।
‡ सर्वमेतदेवमेव सा० दै० ब्रा० ३, ४।
§ "ककुप् ककुद्मिणीत्यौपमिकम्"—इति सा० दै० ब्रा० ३, ५।
|| सर्वमेतदेव मेव सा० दै० ब्रा० ३, ६।

"अनुष्टुप्", "अनुष्टोभनात्"। किमिय मनुष्टोभन मिति? "गायत्री मेव त्रिपदां सतीं चतुर्थेन पादेन अनुष्टोभति,—इति च ब्राह्मणम्"। एमतं 'च'-शब्देन समुच्चिनोति। गायत्री, त्रिभिरष्टाक्षरैः पादैः समाप्यते, तस्यास्तु पुनरपरः चतुर्थः पादो भवति, येन ता मेव अनुष्टुप् अनुष्टोभति, तस्मादनुष्टुप् * ॥ ७॥

**बृहती परिबर्हणात् पङ्क्तिः पञ्चपदा त्रिष्टुप् स्तोभत्युत्तरपदा का तु त्रिता स्यात्तीर्णतमञ्छन्दस्त्रिवृद्वज्रस्तस्य स्तोभतीति वा यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुब्ब मिति विज्ञायते ॥८(१२)॥**

"बृहती", "परिबर्हणात्" परिवृद्धासौ भवति, अनुष्टुभश्चतुर्भिरक्षरैः; उक्तं हि—"बृहती जागतस्त्रयश्च गायत्राः"—इति † ॥

"पङ्क्तिः", "पञ्चपदा" पञ्चभिः पादैः पङ्क्तिरित्युच्यते ‡ ॥

* "अनुष्टुबनुष्टोभनात्। अनष्टोदिति च ब्राह्मणम्"—इति च सा॰ दै॰ ब्रा॰ ३, ७—८। "अथातश्छन्दांस्येव व्यतिषजति" इत्यादि चैतरेयकं द्रष्टव्यम् ४, १, ३।

† "बृहती बृंहतेर्वृद्धिकर्मणः"—इति सा॰ दै॰ ब्रा॰ ३, ११। "षट्त्रिंशदक्षरा वै बृहती। * * *। ते वै दशभिरेवाक्षरैरिमं लोक माप्नुवन् दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्या मेवास्मिन् लोके प्रत्यतिष्ठन्"—इत्यादि च ऐ॰ ब्रा॰ ४, ५, ९।

‡ "पङ्क्तिः पचिनी पञ्चपदा"—इति सा॰ दै॰ ब्रा॰ ३, १२। पङ्क्तयश्च विविधाः सन्ति। तल्लक्षणानि तु छन्दःशास्त्रीयपङ्क्त्यध्याये द्रष्टव्यानि। "पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः पशवश्छन्दांमाः पशूना मवरुद्ध्यै"—इति ऐ॰ ब्रा॰ ५, २, ५।

अथ "त्रिष्टुप्" कस्मात्? ततो त्रिष्टुब्धोत्तरं पदं निराह,— "स्तोभत्युत्तरपदा" स्तोभतिर्धातुरुत्तरं पदं यस्याः, सेयं स्तोभत्युत्तरपदा। "का तु त्रिता स्यात्?" अथ पुनः पूर्वपदे येयं त्रिता त्रित्वं श्रूयते 'त्रि'—इति, एतत् किमर्थं मिति? "तीर्णतमं" स्तुततम मिदं "छन्दः", गायत्र्यादिभ्यो बहुत्वात्, सेयं तीर्णतमा च स्तोभति च त्रिष्टुप्। "त्रिवृद् वज्रः, तस्य स्तोभति इति वा" वज्र मायुधम्, तच्च पुनः प्रायः त्रिसन्धि—शरो वेणुः शृङ्गं शल्य मिति विज्ञायते, तस्य स्तोभति स्तुतिः। अथवा ऐन्द्र मेतच्छन्दः, वज्रं चेन्द्रभक्ति, तस्मादुपपद्यते। "यत् त्रिः अस्तोभत्, तत् त्रिष्टुभः त्रिष्टुप्त्वम्—इति विज्ञायते"* ॥ ८(१२ ॥

जगती गततमं छन्दो जलचरगतिर्वा† जल्गल्यमानोऽसृजदिति च ब्राह्मणं विराड्विराजनाद्वा विराधनाद्वा विप्रापणाद्वा विराजनात्सम्पूर्णाक्षरा विराधनादूनाक्षरा विप्रापणादधिकाक्षरा पिपीलिकमध्येत्यौपमिकं पिपीलिका पेलतेर्गतिकर्मणः ॥ ९‡ ॥

"जगती", "गततमं छन्दः" अन्त्य मित्यर्थः। अतःपर मतिच्छन्दांसि। "जलचरगतिर्वा" जलोर्मिप्रकारो हि तस्याः प्रस्तारः।

* स्रा० दै० ब्रा० ३, १४-१५-१९. द्रष्टव्यम्। 'एकादशाक्षरा वै त्रिष्टुप्"—इत्यादि ऐ० ब्रा० १, २, १। "अक्षरा त्रिष्टुप्, सैकादशाक्षरा भूत्वा माध्यन्दिनं सवन मुदयच्छत्"—इति च ऐ० ब्रा० ३, ३, ४। "त्रिष्टुभिन्द्रस्य वज्रः"—इत्यादि च ऐ० ब्रा० १, १, १।

† "जलचलगतिर्वा" क, ख, ग।

‡ नेह खण्डसमाप्तिः छ-च-पुस्तकयोः।

"जगत्यमानोऽसृजत्—इति च ब्राह्मणम्"। 'ग्लै हर्षक्षये (भ्वा० प०)'। क्षीणहर्ष इव किलैतां प्रजापतिः ससृजे, इदर्थेत्यर्थः ; न हि छन्दांसि क्रियन्ते नित्यत्वादेव छन्दसाम् *॥

विराजः पुरस्तात् त्रिष्टुप् निरुक्ता, बाहुल्यादधियज्ञे च प्रयोगभूयस्त्वात्। अथ पुनर्विराजं निराह,—"विराट्", विराजनाद् वा, विराधनाद् वा, विप्रापणाद् वा"। "विराजनात्, सम्पूर्णाक्षरा" साकल्याद् विराजत इव। "विराधनात्, ऊनाक्षरा"; वैकल्याद् विराध्यन्तीव हि सा। "विप्रापणाद्, अधिकाक्षरा"; विप्रुतेव हि सा स्वरूपात् †।

"पिपीलिकमध्या इति औपमिकम्" मध्यान्त्याक्षरपादा या, सा पिपीलिकमध्येव भवति, पिपीलिकस्वरूपा। "पिपीलिका" कस्मात्? "पेलतेः" ("गतिकर्मणः") गत्यर्थस्य ‡॥९॥

## इतीमा देवता अनुक्रान्ताः सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः काश्चिन्निपातभाजोऽथोताभिधानैः संयुज्य हविश्चोदयतीन्द्राय वृत्रघ्न (इन्द्राय वृत्रतुर§)

* सा० दै० ब्रा० ३, १७. प्राय एव मेव पाठोऽपि। 'द्वादशाक्षरा वै जगती"—इत्यादि ऐ० ब्रा० ३, १, १। "एकाक्षरा जगती सा द्वादशाक्षरा भूत्वा तृतीयसवनमुदयच्छत्"—इति च ऐ० ब्रा० ३, ३, ४।

† सा० दै० ब्रा० ३, ११. तत्राप्येव मेव। "दशाक्षरा विराट्"—इत्यादि ऐ० ब्रा० १ ५, १०। "त्रिंशदक्षरा वै विराट्"—इत्यादि च ऐ० ब्रा० ८, १, ४। "पञ्चपदा पङ्क्तिः * * * तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सम्पद्यन्ते सा दशिनी विराट्"—इत्यादि च ऐ० ब्रा० ५, २, ४।

‡ सा० दै० ब्रा० ३, ९; १०. तत्राप्येव मेव।

§ नास्त्येतांऽशः क-ख-ग पुस्तकेषु टीकाविवरणे च।

इन्द्रायांहोमुच इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद्यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत्समामनेऽथोत कर्मभिर्ऋषिर्देवता स्तौति वृत्रहा पुरन्दर इति तान्यप्येके समामनन्ति भूयांसि तु समाम्नानाद् व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति यथा ब्राह्मणाय बुभुक्षितायौदनं देहि स्नातायानुलेपनं पिपासते पानीय मिति ॥ १० (१३) ॥

॥ इति सप्तमाध्यायस्य तृतीयः पादः ॥ ७. ३.

"इति इमाः देवताः अनुक्रान्ताः"। इतिकरणः प्रकरणसमाप्त्यर्थः। अथ वा इतिकरणेनाभिनयेन दर्शयन्निव ब्रवीति। एवमनेन प्रकारेण यथापरिभाषितेन "यत्काम ऋषिः"—इत्येवमादिना *। इमा देवता अनुक्रान्ताः— अग्निः, जातवेदाः, वैश्वानरः—इत्येवमाद्याः † समासतो निर्णीता इत्यर्थः। ताः पुनः "सूक्तभाजो हविर्भाजः"। काश्चित् हविर्भजन्ते न सूक्तम्, काश्चित् सूक्तं भजन्ते न हविः, काश्चित् उभयं भजन्ते। वक्ष्यति हि— "इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि सूक्तभाञ्जि हविर्भाञ्जि, तेषामेतान्यहविर्भाञ्जि"— इति ‡। "ऋग्भाजस्तु भूयिष्ठाः" प्रायेणेत्यर्थः। तद्यथा,—आप्रीसूक्ते एकैका ऋचं भजन्ते लक्षणभेदा-

* सप्तमाध्यायारम्भेणेति यावत्। पृ० २८५ पृ० द्रष्टव्यम्।

† निघण्टु-दैवतकाण्डपठिता इत्यर्थः। १भा० ४१९—४९० पृ० द्रष्टव्यम्।

‡ दशमोपरिष्टात् १०, ४. ५ द्रष्टव्यम्। तानि च तेन चाहेति।

दिभिः*। अर्द्धर्चभाजोऽपि कश्चिदुपेक्षितव्याः। तद्यथा,—"अथ: सूर्याय गीयन्त उद्वेतीत्यर्द्धपञ्चमा:"†। "यथो युक्:"—इत्यस्याः पूर्वोऽर्द्धर्चः सौर्यः शौनकस्य उत्तरो मैत्रावरुणः‡। पादभाजोऽपि कश्चिदुपेक्षितव्याः। तद्यथा,—"नवो नवो भवति जायमानः (ऋ० स० ८, ३, २३, ४)"—इत्यस्याः आदित्यदैवतो द्वितीयः पादो भवति§। भूयिष्ठग्रहणाच्च दर्शयति अममाम्नाता अपि सन्ति, ता अप्युपेक्षितव्या इति; तास्त्र यथालक्षणं त्रिपु स्थानेषु कल्प्याः। तद्यथा,—परमेष्ठि-ग्रह-नक्षत्र-सर्प-लाङ्गल-कुसुम्भकप्रभृतीनि॥

"काश्चित् निपातभाजः"-इति। निपातो हि द्विविधः। देवतान्तरैः सह साधारण्येनोपस्तुतो नैघण्टुकत्वेन च। तत्र साधारणं नाम तद्यथा,—"विधाता धात्रा व्याख्यातः। तस्यैष निपातो भवति बहुदेवताया ऋचि। सोमस्य राज्ञः" इति‖। अस्यां सोमप्रभृतिभिः सह विधानात् श्रूयते साधारण्येन। नैघण्टुकत्वेन पुनः तद्यथा,—"पृथिवी व्याख्याता। तस्या एष निपातो भवत्यैन्द्राग्न्या ऋचि। "यदिन्द्राग्नी परमस्यां पृथिव्याम्"—इति¶। ताभ्या मिन्द्राग्निभ्यां

* ऋ० सं० १०म० ९अ० ११सू० एकादशर्चं साप्रीसूक्तम्। अस्य सूक्तस्य एकादशाना मेवर्चां देवता विभिन्ना इति भावः।

† इति तु अनुक्रमणीवचनम्। उद्वेतीति (७म० ४अ०) षडर्चं सप्तमं सूक्तम्, तस्य आद्यायतस्रः पञ्चम्याः पूर्वार्द्धश्च सूर्यदेवत्याः, अवशिष्टास्तयोऽर्द्धर्चा मित्रावरुणदेवत्या इति तदर्थः।

‡ उद्वेतीत्यस्मिन्नेव सूक्ते यत्रा यकृत्तितीय ऋक् पञ्चमी (ऋ० सं० ७, ४, ८, ५)।

§ "आदित्यदैवतो द्वितीयः पाद इत्येके"—इति चोपरिष्टाद् वक्ष्यति ११,१,९।

‖ उपरिष्टात् वक्ष्यति इत्थैव, तदेतत्तत्रैव द्रष्टव्यं भविष्यति ११, १, ११।

¶ एतच्चोपरिष्टाद् वक्ष्यतीत्येव,तदिदं तत्रैव द्रष्टव्यं भविष्यति ११, १, ११।

सह साधारण्येन पृथिवी न स्तूयते, किन्तर्हि? प्राधान्येनैन्द्राग्न्योदेवोपादीयते। एवं तावदत्र मिश्राधिकारे काश्चिन्निपातभाज इति द्विप्रकारो निपात उक्तः॥

अथाय मपरो निपातप्रकार उपेक्ष्यः; तद्यथा,—अत्यन्तनैघण्टुकम्, देवताभिधान मनत्यन्तनैघण्टुकञ्च। तत्र अत्यन्तनैघण्टुकं नाम अत्यन्त मदृष्टस्वप्रधानस्तुतिः। तद्यथा आदित्यस्य स्वः-पृश्निः-प्रभृतिभिः*। अथ पुनः दृष्टस्वप्रधानस्तुतिमद्देवतापदं वाक्यार्थोपजनितपारतन्त्र्य माक्षिप्तस्वाभिधेयसामर्थ्य मुपमानशब्देन स्व मर्थं मन्यस्मिन् देवतापदे प्रधाने वाक्यार्थसामर्थ्योपजनितप्राधान्यसामर्थ्ये यत् निगमयति, अनत्यन्तनैघण्टुकं तद् भवति। तद्यथा,—“अग्निरिव मन्यो”—इति†। अग्निशब्द इवेत्यनेनोपमानशब्देन वाक्यार्थोपजनितसामर्थ्येनाक्षिप्तस्वाभिधेयसामर्थ्यो विशेष माकाङ्क्षन् सम्बोधनान्तं मन्युशब्दं वाक्यगतैः पदैरुन्नीयमानसामर्थ्य मर्थनिवेशनपक्षे स्व मर्थं मन्युशब्दे निगमयन् निपततीति नैघण्टुकं तदिति‡। एव मनेकप्रकारो निपात उपेक्ष्यः॥

“अथ उत अभिधानैः संयुज्य हविः चोदयति”। ‘अथ’—इति विशेषाधिकारे। ‘उत’—इत्यप्यर्थे। अपर मपर मभिधान मपेक्ष्यापेक्ष्य। तद्यथा,—अभिधानैः संयोज्य विशेषणशब्दैः तच्चैतदभिधान

* १भा० ३१, ३७७—३७८ पृ०; २भा० ११०पृ० १अ० ४पा० १ख०।

† ऋ० सं० ८, ३, १९, २। “मन्युः” १भा० निघ० २, १३; ५, ४। इह चोपरिष्टात् (१०, ४, २) विशेषो द्रष्टव्यः।

‡ “वाक्यार्थोपजनितसामर्थ्येन पारतन्त्र्य माक्षिप्तस्वाभिधेयसामर्थ्यविशेष * * * मर्थनिवेशनापेक्षे * * * नैघण्टुकं सम्पद्यते”—इति ग, घ।

मिन्द्रादिसंविज्ञानाद् दृढ मिन्द्रादौ देवतार्थे आम्नायविधौ प्रयोगे च हविश्चोदयति ॥

तद्यथा,—"इन्द्राय वृत्रघ्ने एकादशकपालं निर्वपेत्" इति, तथा "इन्द्रायांहोमुचे इति"—"इन्द्रायांहोमुचे एकादशकपालं निर्वपेत्"—इति* ॥

ततः किम्? "तान्यप्येके समामनन्ति"। 'एके' नैरुक्ताः 'तान्यपि' गुणपदानि वृत्रहांहोमुक्प्रभृतीनि, अग्न्यादौ देवतापदसमाम्नाये पृथक् पृथक् 'समामनन्ति' अहं तु न समामने। कस्मात्? "भूयांसि तु समाम्नानात्" यानि तेषु गुणपदानि वृत्रहांहोमुक्-प्रभृतीनि समामनन्ति, ततोऽन्यान्यपि 'भूयांसि' बहुतराणि सन्ति एव, माहाभाग्यात् देवतायाः गुणाना मियत्ता नास्ति; तेषां तु सर्वेषां समाम्नाने समाम्नायस्यापरिनिष्ठैव स्यात्, तथा च सति तेषां शास्त्रे असमाप्तिः; तन्मापि मा भूदित्यतः "यत् तु संविज्ञान-भूतं स्यात् प्राधान्यस्तुतिः, तत् समामने" इति। यदेतत् संविज्ञान-भूतं रूढ मगौणं केवल मपि निर्विशेषणं लब्धप्रधानस्तुतिदेवतापद मग्न्यादि, तत् समामने; न गौणं व्रतभृत्-व्रतपत्यादि † ॥

* 'पुरेवा एताम् देवा अक्रत यत्पुरोडाशास्तत्पुरोडाशानां पुरोडाशत्वं तदा-हुरनुसवनं पुरोडाशान् निर्वपेत् अष्टाकपालं प्रातःसवन एकादशकपालं माध्यन्दिने सवने द्वादशकपालं तृतीयसवने"—इत्यादि ऐ॰ ब्रा॰ ९, २, ५।

† ऋक्संहितायाम् न दृश्यते व्रतभृत्पदं, नापि व्रतपतिरिति; अन्यत्र त्वस्त्येव "सोऽग्नये व्रतभृतेऽष्टाकपालं पुरोडाशं निर्वपेत्"—इति, "सोऽग्नये व्रतपतयेऽष्टाक-पालं पुरोडाशं निर्वपेत्"—इति च ऐ॰ ब्रा॰ ७, ९, ८। "अग्ने व्रतपते व्रतं चरि-ष्यामि"—इत्यादि च शा॰ स॰ ब्रा॰ १, १, ९—११।

अथवा तान्यप्येके समामनन्तीत्यत उत्तरस्य "भूयांसि तु समाम्ना-नात्"—इत्यस्यापरोऽर्थः। भूयांसि एव तेषां समाम्नानात् (गुणानि*) समाम्नातानि स्युः, न किञ्चिदतिरिक्तं प्रयोजनम्; वचनात् केवलं गुरु शास्त्रं सम्पद्यते, तस्मा भूत् इत्यर्थः॥

"अथ उत कर्मभिः ऋषिः देवता स्तौति—वृत्रहा, पुरन्दरः"—इति। स वृत्रहा, शतक्रतुः, पुरन्दरः, गोत्रभिद्, वज्रबाहुः इति। "तानि अपि एके समामनन्ति" तानि अपि एके कर्मनामधेयानि समामनन्ति। को विशेषः पूर्वेभ्यः समाम्नातेभ्यः? विधिदर्शनात् पूर्वेण हविश्चोदयति(इति†)वचनात् स्तुतिदर्शनादिकर्मभिर्ऋषिर्देवताः स्तौ-तीति वचनात् "भूयांसि तु समाम्नानात्" इति स एव दोषः॥

"व्यञ्जनमात्रं तु तत्, तस्याभिधानस्य भवति"। वृत्रहा पुरन्दर इति यदेवमादि गुणपदम्, 'तत्' तस्यैवेन्द्रादेः संविज्ञातपदस्य 'व्यञ्जन-मात्रं' विशेषणमात्रं भवति; न पृथक् प्रधानम्, केवलस्य सम्बन्धात् स्तुत्या। यथालोके—"ब्राह्मणाय बुभुक्षिताय ओदनं देहि, स्नाताय अनुलेपनम्, पिपासते पानीयम्—इति"। यो बुभुक्षितः, तस्मै इति यथा तु बुभुक्षितशब्दो विशेषणम्, केवलस्य बुभुक्षितशब्दस्य निशेषतः क्वचिदनवस्थानात्। एवं वृत्रहा पुरन्दर इत्येवमादीनां विशेष्य मप्राप्यानवस्थानाद् व्यञ्जनमात्रता; न स्वप्रधानता। तस्मा-न्नैतान्यहं समामने॥१० (१३)॥

इति निरुक्तभाष्यार्थोपनिबद्धौ द्वादशस्य (सप्तमस्य) तृतीयः पादः समाप्तः॥७. ३.

---

* नैषोऽशः ग-घ-पुस्तकयोरन्यच परं तत्र तथाप्यस्पष्टाक्षर एव।

† नैतत्पदं मस्ति क-पुस्तके।

॥ चतुर्थः पादः ॥

अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गन्नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति ॥ १ (१४) ॥

"अथातोऽनुक्रमिष्यामः"। सामान्यतः परिख्यातोऽग्न्यादिर्देवपत्न्यन्तो देवतापदसमाम्नायः*, विशेषत इदानीं प्रतिपद मनु व्याख्यास्यते, तदर्थ मधिकारवचनम्,—'अथ' इति।

'अतः'—इति आनन्तर्य्ये। सामान्यात् पारिभाषिकाद् व्याख्यानादनन्तरात् ('अनु') आनुपूर्व्वेण यथासमाम्नातं 'क्रमिष्यामः' कथयिष्यामो वर्णयिष्यामो व्याख्यायेति वाक्यशेषः। सा च पुनर्व्याख्या (१) अभिधाना(२)भिधेया(३)भिधानव्युत्पत्ति(४)प्राधान्यस्तुत्यु(५)दाहरण(६)तन्निर्वचनविचा(७)रोपपत्त्य(८)वधारणक्रमलक्षणा। तद्यथा,—(१)"अग्निः"—इत्यभिधानम्, (२)अयं पार्थिवः इत्यभिधेयम्, (३)"अग्रणीर्भवति"—इत्यभिधान-

* पृ० १८५पं० "अथातो दैवतम्"—इति, १८९ पृ०"६" टीप्पणी च द्रष्टव्या।

व्युत्पत्तिः, (४)"अग्निं मीळे"—इति प्राधान्यस्तुत्युदाहरणम्, (५)अग्निं मीळे="अग्निं याचामि" इति तन्निर्वचनम्, (६)"स न मन्येताय मेव अग्निः"—इति विचारः, (७)"यस्तु सूक्तं भजते यस्मै हवि-र्निरूप्यते"—इत्युपपत्तिः, (८)"अय मेव सोऽग्निः"—इत्यवधारणम्*। एवम्प्रकारया व्याख्यया प्रतिपद मनुक्रमिष्यामः ॥

तत्रैतद् भवति कोऽय मग्निः? इति। आत्मा—इत्यात्मविदः; "एकं सद् विप्रा बहुधा वदन्ति (ऋ० म० १,३, २२, ६)"—इति मन्त्रदर्शनात्†। अविवक्षितस्थानविशेषो निर्ज्ञाततदभिधानो देवता-विशेषो लोकवेदप्रसिद्धः कर्माङ्ग मिति याज्ञिकाः‡। विवक्षित-स्थानविशिष्टकर्मा मध्यमोत्तमाभ्यां ज्योतिर्भ्यां मन्यः पार्थिवोऽय मग्निरिति नैरुक्तसमयः§। त्रितयाभ्युपगमात्तत्सम्पिपादयिषयेद मा-रभ्यते।

"अग्निः पृथिवीस्थानः तं प्रथमं व्याख्यास्यामः"—इति। पृथि-व्येवास्य विशेषतः स्थानम्; न अन्तरिक्षम्, न द्यौः इति पृथिवी-स्थानः; तत्र कर्माधिकारात् तस्य। तिष्ठत्यस्मिन् इति स्थानम्। यस्मात् पृथिवी अस्य स्थानम्, तस्मात् सन्निकर्षाल्लोकानुक्रमाच्च न ह्यसति कारणे प्रथमातिक्रमो न्याय्य इति त मेव प्रथमं व्याख्या-स्यामः ॥

* सर्वत्रैतदनुपद मेव वक्तु मारभते पञ्चमखण्डाक्तं यावद्।
† पुरस्तात् ११२ पृ० "एक आत्मा"—इत्यादिकं तद्व्याख्यानञ्च द्रष्टव्यम्।
‡ पुरस्तात् ११० पृ० "अपि वा पृथगेव स्युः"—इत्यादिकं तद्व्याख्यानञ्च द्रष्टव्यम्।
§ पुरस्तात् ११० पृ० "तिस्र एव देवता."—इत्यादिकं तद्व्याख्यानञ्च द्रष्टव्यम्।

"अग्निः कस्मात्"। देवताभिधाने देवता आत्मनः परोक्षीकृत्य परोक्षीकृतं तत्र मर्पितम्, परोक्षप्रिया इव हि देवाः प्रत्यक्षविषय इति हि विज्ञायते। तन्निर्वचनादागमप्रामाणिकं देवताताद्भाव्य मनुभवतीति अवेत्य तन्निर्विवक्षया "अग्निः कस्मात्?" इत्युपोद्धृत्य "अग्रणीः भवति"—इत्येवमादिना अग्निशब्दं निराह। सर्वत्रैवं देवतापदे उपोद्घातोपन्यासौ द्रष्टव्यौ। आत्मवित्पक्षे तु सर्व मभिधान मात्मार्थ मेवेति सर्वावस्थ मात्मानं सर्वाभिधानव्युत्पत्तितो निरुच्य याथात्म्यतः परिज्ञाय सर्वात्मन आत्मनः सर्वावस्थं विभूतिताद्भाव्य मनुभवतीति सर्वपदव्युत्पत्तिप्रयोजनम्। स्मर्यते हि,—"शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति"—इति * ॥

"अग्रणीः भवति"—इति। अग्निशब्दं विगृह्य वाक्यीकृत्य, इदंवाक्यपदवर्णनिष्कर्षणसमुदायोपजनितस्य अग्निशब्दस्य अग्रशब्दात् गकार मुपलभ्य अग्रशब्दं कर्माभिधायिनं पूर्वपदत्वेन व्यवस्थाप्य नयतिं च पर मुत्तरपदस्थं कर्त्तव्यार्थात्मने† व्यवस्थाप्य अग्निशब्दं निराह,—अथ कोऽर्थः? इति। सर्वस्वर्थस्वभावात्मान मग्रं नयति, सर्वत्र तथोपकरोति यथा अग्रं सम्पद्यत इत्यर्थः। अग्रशब्दः प्रधानवाची, स एव वा अग्रं नयति। सेना वा अग्रे नयति सेनाण्ये-

* अत्रार्थे श्रुतिमानश्चाह पस्पशायां पतञ्जलिः;—"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव (ऋ० सं० ८, ६९, १२)। सुदेवो असि वरुण! सत्यदेवोऽसि, यस्य ते सप्तसिन्धवः सप्तविभक्तयः, ८, ७, २)। काकुदं तालु। काकुर्जिह्वा सा अस्मिन्नुद्यत इति काकुदम्। सूर्म्यं सुषिरामिव अनुक्षरन्ति तद्यथा शोभनां सूर्मिं सुषिरा मग्निरन्तः प्रविश्य दहति, एवं सप्तसिन्धवः सुषिरामिव। सप्तविभक्तयः ताल्वनुक्षरन्ति, तेनासि सत्यदेवः। सत्यदेवाः स्यामेत्यध्येयं व्याकरणम्"—इति।

† "कर्त्तर्यात्मनि च" ग, घ।

ऽवस्थित इत्येके; विज्ञायते हि,—"अग्निर्वै देवानां सेनानीः" इति * ॥

अथ वा "अयं यज्ञेषु प्रणीयते" प्रथमं यज्ञेषु प्रणीयते; न तावत् किञ्चिदप्यन्यत् क्रियते यावदयं न प्रणीयत इति, ततोऽस्मिन् प्रत मुपेत्यान्यानि कर्माणि क्रियन्त इति † ॥

अथ वा "अङ्गं नयति सन्नममानः" यत्रायं सन्नमयति साधनत्वेन वैदिके वा लौकिके वार्थे, तत्र सन्नममान एवात्मानं प्रधानीकृत्य सर्व मन्यदात्मनोऽङ्गतां नयति गुणीकरोतीत्यर्थः। अथ वा "अङ्गं नयति सन्नमानः" तृणे वा काष्ठे वा यत्र सन्नमति आश्रयति, तत् आत्मनोऽङ्गतां नयति, आत्मसात् करोतीत्यर्थः ॥

स्थ। "अक्नोपनो भवति इति स्थौलाष्ठीविः"। स्थूलाष्ठीवतः पुत्रः स्थौलाष्ठीविः आचार्यः स एवं मन्यते,—अथ मक्नोपनो यस्माद् भवतीति तस्मादग्निरिति। कि मिद मक्नोपनः इति? अत आह, —"न क्नोपयति"। एव मपि न गृह्यते क्नोपयतेरप्रसिद्धार्थत्वात्। अतः पुनर्ब्रवीति प्रसिद्धेनार्थेन,—"न स्नेहयति विरूक्षीकरोतीत्यर्थः; स हि तस्य स्वभावः ॥

"त्रिभ्यः आख्यातेभ्यः जायते इति शाकपूणिः"। त्रयाणा माख्याताना मभिधेयाः क्रिया अत्र लक्ष्यन्ते, ता उपादाय हेतुत्वेनाग्निशब्द आत्मानं लभते। तद्यथा,—"इतात्", 'इण गतौ

* अत एव ऋक्संहितायाम्,—"सेनानीर्नः सङ्करे ऽन्त एधि" इति ८, १, १९,१।
† "ते ऽग्रे ऽग्निनाग्नि मयजन्त"—इति ऐ० ब्रा० १, १, ५। "अग्नये प्रणीयमानायानुब्रूहि"—इत्यादि च द्रष्टव्यम्। ऐ० ब्रा० १, ५, १

(अदा० प०)'—इत्यस्मादित्यर्थः । "अक्तात्, दग्धाद् वा" अनक्तेर्वा दहतेर्वा विकल्प एतयोः । ततो "नीतात्" इति, 'णीञ् प्रापणे (भ्वा० प०)'—इत्येतस्मात् । धातवः केवलं निर्दिष्टाः । किं कुत आदत्ते ? इत्यत आह,—"सः खलु" शाकपूणिः "एतेः" धातोः "अकारम् आदत्ते" । नन्वेतेरकार एव नास्ति, अतः कि मादत्ते ? सत्यं नास्ति ; वर्णसामान्येन तद्विकार मादाय इणोऽर्थदर्शनात् अग्नौ शब्दार्थ-सम्बन्धनित्यत्वाद्, अर्थे च गुणभूतत्वाच्छब्दस्य, ततः तं व्यापादय-त्यकारत्वेन । अथ वा रूपानेकत्वादिणो यथावस्थितस्याकारो भवति, तथा रूप मवस्थाप्य ततोऽकार मादत्ते ; दर्शितं चैतत्—"एतेः कारितं च यकारादिं चान्तकरणम्"—इत्यत्र *; भवति चास्य ण्यन्ते रूपम् 'आययति'--इति †, अत्र अकारः, ततः आदत्ते । "गकारम्, अनक्तेः वा दहतेः वा" इतकुत्वजश्त्वयोर्विकल्पेन । "नीः परः" एषः ह्रस्वः । एति च व्यनक्ति च रूपाणि, अथ वा एति च दहति च नयति च हवींषि देवेभ्यः इति अग्निः साधीयस्तरः । एता एतद्धातु-वाच्या. क्रियाः एष करोति इति "अग्निः" ॥

"तस्य" एतत्प्रचितलक्ष्यप्रधानस्तुतिसम्बन्ध मभिधान मुपलक्ष्य देवतापदसमाम्नाये समाम्नात मग्निरिति ‡, तस्य "अग्नि मीळे"—इत्येतत्प्रमुखा अग्निकर्मलिङ्गलिङ्गिताः सर्वा आग्नेय्य ऋचः उदा-हरणम् ; न पुनरसति कारणे मुख्यातिक्रमो न्याय्य इति ऋग्वेदप्रथमा मिमा मृच मुदाजहार "तस्य एषा भवति"—इति,— ॥ १ (१४) ॥

* १भा० ८९पृ० १अ० ४पा० १ख०; तद्व्याख्यानञ्च ९१पृ० द्रष्टव्यम् ।
† "णौ गमिरबोधने"– इति पा० । इह तु बोधनार्थ एव ।
‡ १भा० ४५९ पृ० ५अ० १ख (१) ।

अग्नि मीळे* पुरोहितं यज्ञस्य देव मृत्विजम्। होतारं रत्नधातमम्। अग्नि मीळे ऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च† देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानान्दातृतमन्तस्यैषापरा भवति॥ २ (१५)॥

"अग्नि मीळे (ऋ०मं०१,१,१,१)" इति। मधुच्छन्दस आर्षम्। गायत्री। आश्विने विनियोगः। यः अग्निः देवपुरोहितः पाकयज्ञे, अस्माकं यज्ञे यश्च ऋत्विक्, होता यज्ञस्य, रत्नधातमश्च दातृतमो रत्नानाम्, त महं रत्नानि याचे इति समस्तार्थः॥

अथैकपदनिरुक्तम्।—"ईड़िः" धातुः "अध्येषणाकर्मा" याच्ञाकर्मेह; अन्यच "पूजाकर्मा वा" अपि‡। "पुरोहितः व्याख्यातः", "पुर एनं दधति"—इति§। "यज्ञः च" व्याख्यातः, "प्रख्यातं यजतिकर्मा"—इति‖। "देवः", "दानाद् वा" ददाति ह्यसौ ऐश्वर्याणि।

* "अग्नि मीळे"—इति क, ख, ग।

† "यज्ञस्य" क, ख, ग।

‡ "पूजाकर्मा वा"—इति वा-पदश्रवणात् अथापि पक्षे पूजार्थो यास्कसम्मत एवेत्यस्माकम्, सायणभाष्येऽप्येव मेव।

§ १भा० २०१पृ० १अ० ६पा० १ख०।

‖ १भा० ११० पृ० १अ० ४पा० १ख०।

"दीपनाद् वा" दीपयति ह्यसौ तेजोमयत्वात्। "द्योतनाद् वा" धात्वन्यत्व मर्थैकत्वम्। "द्युस्थानो भवति—इति वा" पक्षे अर्थवत्त्वं निर्वचनस्य। अथ वा अग्नेोऽत्रापि द्युस्थानौ; सामान्यं हि द्यौः स्थानं देवतानाम्*, तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे। "होतारं=ह्वातारम्" देवानाम्†। "और्णवाभः" तु "जुहोतेः" 'हु दानादानयोः (जु॰प॰)'—इत्यस्य मन्यते "होता इति"। "रत्न-धातमम्=रमणीयानां धनानां दातृतमम्"॥

ततः "तस्य" एव अग्नेः "एषा अपरा" ऋक् "भवति"। समानसंहितत्वादपरेति वा द्वितीयेत्यर्थः। सा पुनः किमर्थम्? इति। अमुना प्रकारेण सर्वा एतस्या मुदाहरण मेतत्कर्मयुक्ता ऋच उपेक्ष्या इत्युपप्रदर्शनार्थम्॥ २ (१५)॥

**अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त। स दे॒वाँ एह व॑क्षति। अग्निर्यः पूर्वैर्ऋषिभिरीलितव्यो (वन्दितव्यो‡) ऽस्माभिश्च नवतरैः स देवानिहावहत्विति स न मन्येताय मेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते ततो नु मध्यमः॥ ३ (१६)॥**

---

* "देवा वा असुरैर्विजिग्याना ऊर्द्ध्वाः स्वर्गं लोक मायन्"—इत्यादि (ऐ॰ब्रा॰ २, ४, ४), "परो वा अस्माल्लोकात् स्वर्गो लोकः"—इत्यादि (ऐ॰ ब्रा॰ ९, ४, ४) च द्रष्टव्यम्।

† "अग्निर्वै देवानां होता, तस्यैतद्धोतृसदनं यदुत्तरवेदी नाभिः"—इति ए॰ ब्रा॰ १, ५, ९। "अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्"—इति सा॰ भा॰।

‡ नैतत्पदं दृश्यते क-ख-ग-पुस्तकेषु।

भाष्यकारो मन्त्रयोर्नित्यसम्बन्ध इति दर्शयन्। "अग्निः यः" "पूर्वेभिः" "पूर्वैः" चिरन्तनैः 'ऋषिभिः' "ईडितव्यः" ईडनं पूजनं करोति, "अस्माभिश्च" "नवतरैः" ईडितव्य इति वर्त्तते। स किं करोति ? इत्याकाङ्क्षिते निराकाङ्क्षं क्रियते,—"सः देवान्" "इह" एतस्मिन् कर्मणि अस्माकम् "आ वहतु" इति लोटा निराह भाष्यकारः आशिष माकाङ्क्षिता मपेक्ष्य। ऋज्वेकपदनिरुक्तम् ॥

सङ्कीर्णत्वादस्यभिधानस्य अतःपरं विचारः ;—"स न मन्येत" —इत्येवमादिना आक्षिप्य विचारः। ननु नित्ये स्वार्थाभिधेयसम्बन्धे अभिधानाना मर्थान्तरवृत्तितैव नास्ति, कुतः सङ्करः? इति। अथाप्यर्थान्तरवृत्तिता। जहत्स्वार्थं मर्थान्तर मुपसङ्क्रामदनित्यतां सम्बन्धस्य द्योतयति। नैव जहत्स्वार्थं मभिधान मभिधेयान्तरे वर्त्तते किन्तर्हि? द्वे अभिधानस्य शक्ती; गौणी मुख्या च। तयोर्गौणी गुणसाम्यात्; यस्मात् कस्माच्चित् गुणात् सर्वत्र वर्त्तते, तस्यास्त्वयाविध एव सम्बन्धः, सर्वार्थो नित्यः समर्थप्रकरणोपपदपरतन्त्रः। मुख्यत्वे विनियोगेन लोकवेदप्रसिद्धा स्व एवार्थे वर्त्तते। तदेव मसङ्करेऽपि शब्दानां मुख्यगौणार्थवर्त्तिनां सङ्कर इवामेधसां प्रतिभाति * ॥

का कस्य शब्दस्य गौणी शक्तिः? का कस्य मुख्या? इति तत्प्रवि-

---

* वृत्तिर्द्विधा। जहत्स्वार्था, अजहत्स्वार्था च। स्वावयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम्। स्वावयवार्थसंवलितसमुदायार्थबोधिकात्वं मजहत्स्वार्थात्वम्। एकमर्थं साम, प्रभूता सेना—इति पूर्वोदाहरणम्। राजपुरुष इत्यादि परत्रेति। विस्तरस्तु मञ्जूषादौ द्रष्टव्यः

वेकार्थ मिद मुपोद्धन्ति चोदकरूपेण "स न मन्येत" इति। 'सः' शिष्यः, 'न मन्येत' न जानीयात् सम्यगेतदभिहितम् "अथ सेवाग्निः" पृथिवीस्थानः "इति"। कस्मात् पुनर्न मन्येत? इतः,—यस्मात् "अपि एते उत्तरे ज्योतिषी" मध्यमस्य उत्तमस्य "अग्नी उच्यते" *। कथम्? इत्यत आह,— एतत् तावत् पार्थिवं ज्योतिः, आवाहनक्रियायोगात् "अग्नि मीळे"—इत्येतस्यां च यथा भवतोऽग्निं तथैवोच्यते, "ततः नु" वय मपि यथा "मध्यमः" अग्निशब्देनोच्यते तत्कर्मयोगाच्च स एवाग्निः, तथेमा ऋच मुदाहरिष्यामः,—॥ २(१६)॥

अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥ अभिनमन्त समनस इव योषाः समनं समननाद्वा सम्माननाद्वा कल्याण्यः स्मयमानासो अग्नि मित्यौपमिकं घृतस्य धारा उदकस्य धाराः

* एवमादिषु स्थानेषु मध्यमशब्देन वायुरिन्द्रो वा ग्रहणीय इति सायणस्य। तथा हि,—"मध्यमस्थानस्थो वायुरिन्द्रो वा * * * वैद्युतोऽग्निर्हि मध्यमस्थानाज्जायते"—इति ऋ० सं० १, ४. २५, ६ सा० भा०। अस्मन्मते त्विह वैद्युतोऽग्निरेव मध्यम इति बोध्यः। तथा च "उत्तरे ज्योतिषी" वैद्युताग्निः सूर्यश्च। अतएव निघण्टौ मध्यमस्थानदेवतानामसु (५, ४, १२) "अग्निः"—इति, उत्तमस्थानदेवतासु (५, ६, ९) "सूर्यः"—इति च दृश्यते। अग्निसूर्ययोरभेदः। तथाहि,—अग्निर्वा आनरः प्राच्यावयत्, तस्य यद्रेतसः प्रथम मुदीप्यत, तदसावादित्योऽभवत्"—इति ऐ० ब्रा० ३, ९, १०। "सोऽग्निर्देविस्त्रमूर्ध्वं उदश्रयत। सः स्वर्गस्य लोकस्य द्वार मरुणात्, अग्निर्वै स्वर्गस्य लोकस्याधिपतिः"—इति च ऐ० ब्रा० ३, ४, ४। अग्नीन्द्रसूर्याणां त्रिरूपा मेव देवतानां ज्योतिःस्वरूपत्वं च श्रूयते—"अग्निर्ज्योतिः", "इन्द्रो ज्योतिः", "सूर्यो ज्योतिः"—इति च ऐ० ब्रा० १, ४, ७। "अग्निमयीः पुरः, त्रिपुरं पर्यास्यन्"—इति, "अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठत् (ऐ० ब्रा० २, ६, ६)"—इति चाग्नेस्त्रिलोकस्थत्वं बोध्यते।

समिधो नसन्त नसतिराप्नोतिकर्म्मा वा नमतिकर्मा वा। ता जुषाणो हर्यति जातवेदाः। हर्यतिः प्रेप्साकर्मा विहर्यतीति *। समुद्रादूर्मिर्मधुमाँ उदारदित्यादित्य मुक्तं मन्यन्ते समुद्राद्ध्येषोऽद्भ्य उदेतीति च ब्राह्मण मथापि ब्राह्मणं भवत्यग्निः सर्वा देवता इति तस्योत्तरा-भूयसे निर्वचनाय ॥ ४ (१७) ॥

"अभि प्रवन्त" इति[†]। वामदेवस्यार्षम्। सप्तमेऽहनि द्वपराचस्य आज्यशस्त्रे विनियोगः। 'अभिप्रवन्त' ("अभि नमन्त") आभिमुख्येन नमन्ति प्रह्वीभवन्ति। 'घृतस्य' "उदकस्य" 'धाराः'। क मभि प्रह्वीभवन्ति? मध्यमम् 'अग्निम्'। कथम्? इति,—'समना इव योषाः' ("समनसः") समानमनसः। एकस्मिन् भर्त्तरि यासां मनांसि वर्त्तन्ते, ताः समनसः। ता यथा 'कल्याण्यः' रूपयौवनादिगुणसम्पन्नाः, 'स्मयमानासः' स्मयमानाः ईषद्धसन्त्यः हर्षमुपजनयन्त्यो भर्त्तुस्तं प्रति परिष्वजनाय अभिनमेयुः, तथा मध्यमस्थान मग्निं घृतस्योदकस्य धाराः 'समिधः' समिन्धयन्त्यः 'नसन्त' प्राप्नुवन्तीत्यर्थः। तास्व तास्व पुनः सः 'जातवेदाः' मध्यमस्थानो वैद्युतोऽग्निः, 'जुषाणः' प्रीयमाणः 'हर्यति' पुनःपुनः प्रेप्सति, अभिकामयते ॥

एव मेतस्मिन् मन्त्रे युगपदविधानात्, पार्थिवे घृताहुतिष्वन-

---

* "प्रेप्साकर्माभिहर्यति" क, ख, ग।

† ऋ० सं० ३, ८, ११, २। "अग्निरूर्यांवजीवृताना सम्पतन्ते देवता"—इति।

मन्त्रेणोच्यत इति स्फुट मर्थ्यैव मन्त्रस्य "ब्राह्मणम्",—"समुद्रादूर्मि-र्मधुमाँ उदेति"—"इति च" *; न च पार्थिवः समुद्रात् उदेति, विरोधात् तस्य उदकेन; तस्मादादित्योऽत्राग्निरभिप्रेत—इति नाक-मर्थ मुदाहरणम्। "अथ अपि ब्राह्मणं भवति,—'अग्निः सर्वा देव-ताः'-इति"। अथ खलु अथ मपरः मन्त्रोऽग्निशब्दस्य ब्राह्मणं भव-ति,—"अग्निः सर्वा देवताः"—इति † ॥

"तस्य" च ब्राह्मणस्य "उत्तरा" ऋक् "भूयसे" बहुतराय "निर्वचनाय",—— ॥ ४ (१७) ॥

इन्द्रं मित्रं वरुण मग्नि माहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरि-श्वान माहुः॥ इम मेवाग्निं महान्त मात्मान‡ मेक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निं दिव्यं च गरुत्मन्तं दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा यस्तु सूक्तं भजते यस्मै हविर्नि-रुप्यतेऽय मेव सोऽग्निर्निपात मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ ५ (१८)॥

॥ इति सप्तमाध्यायस्य चतुर्थः पादः॥ ७.४.

* "यज्ञो वा एष प्रातरुदेत्यपः सायं प्रविशति"—इति ऐ॰ ब्रा॰ ४, ३, ९।

† "अग्निः सर्वा देवताः, सोमः सर्वा देवताः; स यदग्निषोमीयं पशु मालभते सर्वाभ्य एव देवताभ्यो यजमान आत्मानं निष्क्रीणीते"—इति ऐ॰ ब्रा॰ ९, १, २।

‡ "महान्तं आत्मानं" क. म।

"इन्द्रं मित्रम्"—इति *। अस्यवामीयेषा †। 'इन्द्रम्, मित्रम्, वरुणम्'—इत्येतैरभिधानैः 'अग्निम् आहुः' तत्त्वविदः। 'अथो' अपि च योऽयं 'दिव्यः' ("दिविजः") दिवि जायते, 'सुपर्णः' सुपतनः, 'गरुत्मान्' "गरणवान्", स्तुतिभिः तद्वान्, रश्मीनां वा गरिता आदित्यः; अयमपि 'सः' एवाग्निरित्याहुः ‡। किं बहुना "इममेवाग्निम्" 'एकं' "महान्तम्" "आत्मानम्" अनन्यत्वेन पश्यन्तः 'विप्राः' "मेधाविनः" आत्मविदः 'बहुधा वदन्ति'—'अग्निम्, यमम्, मातरिश्वानम्' इति §॥

एवमाद्यैरभिधानैरेतस्यैव सा विसृष्टिः; एष उ ह्येव सर्वे देवाः इति च विज्ञायते। तस्माद् युक्तं यत्र मन्येतायमेवाग्निरिति॥

अत्र प्रतिसमाधानम्।—सत्यमेतत् सर्वं एतेऽग्निशब्देन स्तूयन्ते; न तु प्रधानतः; किन्तर्हि? गुणतः स्तूयन्ते। यतो ब्रवीति,—"यस्तु सूक्तं भजते, यस्मै हविः निरूप्यते, अयम् एव सः अग्निः"। तु-शब्दः पूर्वपक्षव्यावर्त्तकः, परमतव्युदासार्थः। यः सूक्तं भजते, प्रधानतः

* ऋ० सं० २, ३, २२, ६ ; १, २२, ८. ४६ ; अ० सं० ९, ८।

† "अस्य वामस्य"—इत्यादिकं द्विपञ्चाशदृगात्मकं सूक्तमस्यवामीयमित्युच्यते। "सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषात्"—इति ऋग्वि० १, २६।

‡ य० वा० सं० १२, ४. "सुपर्णोऽसि गरुत्मान्"—इत्यस्य महीधरकृतं व्याख्यानञ्च द्रष्टव्यम्।

§ "यमु मादित्य मैश्वर्य्यविशिष्ट मिन्द्र माहुः। ***। यमु मेवादित्य मेक मेव वस्तुतः सन्तं विप्रा मेधाविनो देवतातत्त्वविदो बहुधा वदन्ति। ***। सूर्य्यस्य सर्वात्मकत्वेन सर्वात्म्य मुक्तं भवति। अत्र ये केचित् 'अग्निः सर्वा देवताः (ऐ० ब्रा० १, १, २)"—इत्यादिश्रुतितोऽय मेवाग्निरत्तरे अपि ज्योतिषी इति मत्वाग्नेरेव सर्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति, तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः, न तस्मिन् गुह्येन्द्राद्यात्मकत्वकथनम्।"—इति सा० भा०।

स्तुत्यत्वेनेत्यर्थः ; यस्मै च हविर्निरूप्यते, चोदनासामर्थ्यात्—"आग्नेय मष्टाकपालं निर्वपेत्" इति। 'अय मेव सोऽग्निः' पार्थिवः ; अग्निश-ब्दस्य विशेषतोऽत्र लोके वेदे च प्रसिद्धेः;—'अग्नि मानय—अग्निं प्रणय' इति, एत मेव हि लोकः प्रतिपद्यते ; न मध्यमं नाप्युत्तमम्। न च प्रसिद्धिबाधो न्याय्यः, शास्त्रचोदिता अपि खदिर-पलाशादयो लोकप्रसिद्धित एव प्रतीयन्ते*। तस्मादग्निशब्देन पार्थिवस्य ज्योतिषो मुख्यः सम्बन्धः ; गौण इतरयोर्मध्यमोत्तमयोः। यथा अग्निशब्देन मध्य-मोत्तमयोः, न तथा मध्यमोत्तमाभ्यां विद्युत्सूर्यशब्दाभ्यां लोकप्रसिद्धा मुख्यः सम्बन्धः। एवञ्चेत् सुष्ठूक्तम्,—"यस्तु सूक्तं भजते यस्मै हवि-र्निरुप्यते, अय मेव सोऽग्निः" इति। एतदेव चात्र विचारे प्रयोजनम्, —आग्नेयेषु सूक्तेषु हविःसम्प्रदानेषु स्तुत्यत्वेन भोक्तृत्वेन चैत मेवो-पासीतेति ॥

अथ पुनर्योऽयं मध्यमोत्तमयोर्ज्योतिषोरग्निप्रवादः, स कथम्? इति,—"निपातम् एव एते उत्तरे ज्योतिषी, एतेन नामधेयेन भजेते"। निपातो नाम अप्राधान्यम्, भक्तिरित्यर्थः ॥ ५ (१८) ॥

इति निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य)

चतुर्थः पादः† ॥ ७. ४.

* तथा चैतरेयकम्;—"खादिरं यूपं कुर्वीत स्वर्गकामः" इत्यादि, "बैल्वं यूपं कुर्वीतान्नाद्यकामः"—इति, "पुष्टिकामो वै समां समां वै बिल्वो गृभीतः"—इत्यादि, "पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशस्तेजस्वी ब्रह्मवर्चसी भवति"—इत्यादि। २, १, १।

† रोयल्एसियाटिकपुस्तकेषु नेह अध्यायसमाप्तिः; तन्मते तु षट्पादात्मक एव सप्तमाध्यायः। अस्मद्देशेषु तु पादाम्नितसर्वमूलपुस्तकेषु सर्वटीकापुस्तकेषु च सप्तपादात्मक एवाय मध्याय इति भेदः।

॥ पञ्चमः पादः ॥

**जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो * जातवेदस्त्व मिति ब्राह्मणं तस्मात् सर्वान्तून् पशवोऽग्नि मभिसर्पन्तीति च तस्यैषा भवति ॥ १(१९) ॥**

"जातवेदाः"—इति† वक्तव्यम्। स पुनरेष माध्यभाग्यात् कर्मपृथक्त्वादग्निरेव? अथ वा पृथगभिधानस्तुत्यन्तरसम्बन्धाद् देवतान्तरम्। "जातवेदाः कस्मात्"? स हि "जातानि वेद"; न हि तदस्ति जात मस्मिंल्लोके यदसौ न वेद सर्वज्ञ इत्यर्थः। "जातानि वा एनं विदुः" स एव धातुः, कारकान्यत्वं केवलम्। "जाते जाते विद्यत इति वा" विदेः सत्तार्थस्याधिकरणे कारके; न तदस्ति जातं यत्रासौ नास्ति। "जातवित्तो वा जातधनः" जातशब्दः पूर्वपदम्, वित्तशब्द उत्तरपदम्; जात मस्य वित्त मिति जातवेदाः। "जातविद्यो वा जातप्रज्ञानः" जातशब्द एव पूर्वपदम्, विदेर्ज्ञानार्थस्योत्तरपदत्वम्; निसर्गत एवास्य जातं प्रज्ञान मित्यर्थः। "ब्राह्मणम्" अपि च भवति, जनेर्विदेश्च जातवेदा इति,— "यत्तज्जातः पशूनविन्दत—इति"। 'यत्' असौ 'तत्' तदा 'जातः' जातमात्र एव निसर्गतः 'पशून्' 'अविन्दत' अलभत, "तज्जातवेदसो जातवेदस्त्वम्—इति" विज्ञायते। यतश्चैतदेवम्, "तस्मात्" अद्यत्वेऽपि स्वाम्यय

* "पशूनविन्दत तज्जातवेदसो"—इति क,ख,ग।

† १आ० ५ ख० १ख०(२); ४९०पृ० (२)।

मस्माक मिति मन्यमानाः "पशवः" "सर्वान् ऋतून्" प्रति, अपि ग्रीष्मे, "अग्निम् अभिसर्पन्ति" * ॥

"तस्य" जातवेदसः स्तुत्युदाहरणम् "एषा" ऋक् भवति—
॥ १ (१८) ॥

(जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ जातवेदस इति जातवेदस्यां चैवञ्जातवेदसेऽर्थाय सुनवाम सोम मिति प्रसवायाभिषवाय सोमं राजान ममृत मरातीयतो यज्ञार्थं मनिस्मो निदहाति निश्चयेन दहति भस्मीकरोति सोमो ददित्यर्थः। स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकुलां तारयति दुरितात्यग्निरिति दुरितानि तारयति तस्यैषा परा भवति॥२॥ †)

प्र नूनं जातवेदस मश्वं हिनोत वाजिनं। इदं नो बर्हिरासदे॥ प्रहिणुत जातवेदसं कर्मभिः समश्नु-

* "२...तवेदस्यं शंसति। * * *। सोऽब्रवीज्जाता वै प्रजा अनेनाविद मिति, यदब्रवीज्जाता वै प्रजा अनेनाविद मिति, तज्जातवेदस्य मभवत्, तज्जातवेदसो जातवेदस्त्वम्"—इति ऐ० ब्रा० २, ५, १२।

† इतिकला नस्य वाक्यस्य नेह व्याख्यानं कृतम्, माप्यसौ दृश्यते एव क-च-पुस्तकयोः; चतुर्दशे अध्याये चतुर्थपादे (५ ख०) निरुक्त एव सर्वपुस्तकेषु, तत्रैवास्य व्याख्यानञ्च द्रष्टव्यं भविष्यति परं तत्राप्यस्ति पाठभेदः।

वाजिन मपि वोपमार्थे स्यादश्व मिव जातवेदस मितीदं तो बर्हिरासीदत्विति तदेतदेक मेव* जातवेदसं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येताय मेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी† उच्येते ततो नु मध्यमः। अभि प्रवन्त समनेव योषा इति तत्पुरस्ताद्याख्यात मथासावादित्य उदु त्यञ्जातवेदस मिति तदुपरिष्टाद्याख्यास्यामो यत्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽय मेव सोऽग्निर्जातवेदा निपात मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ॥ ३ (२०) ॥

॥ इति सप्तमाध्यायस्य पञ्चमः पादः ॥ ७.५.

"प्रनूनं जातवेदसम्"—इति ‡। श्येनस्याग्निपुत्रस्यार्षम्। गायत्री। हे स्तोतारो यूय मुच्यध्वं। ('प्र हिनोत') "प्र हिणुत" प्रेरयत स्तुतिभिरेतं 'जातवेदसम्', 'अश्वम्' "कर्मभिः" सर्व मेतत् जगत् "अश्नुवानम्" व्यापयन्तम्, 'वाजिनम्' वेजनवन्तं वन्नस मर्चिभिः, अथ वा "अश्व मिव" इति लुप्तोपमम्, हव्यैर्वास्तौयत्वात् §, 'वाजिनं'

* "तदेतदेक मिव" क, ग; "तदेक मेव" घ,—इत्युभावेव हस्तिविषयो।

† "जातवेदसा" क, घ, ग।

‡ ऋ० सं० ८,८,४९,१। "जातवेदोगुणकोऽग्निर्देवता"—इति तत्र सा० भा०।

§ "तस्मादश्वः समभवत्"—एतत्प्रभृति द्रष्टव्यम्। ऐ० ब्रा० ६,६,११। "देवा वै ब्रह्मौयेनाग्ना स्वर्गं लोक मायन्"—इत्यादि "तस्मादेतद्वषवदाम्यं भवति"—इत्यन्तं चापाख्यानं द्रष्टव्यम्। ऐ० ब्रा० ५,१,१।

तेजनवन्तं ज्वलनस्वभावं शोचिषम्। किमिति प्रह्विणुत? इत। इतः,—आसत्तुम् इति कृत्यार्थे केनवा*—"इदं नो बर्हिरासदे"। "इदम्" अस्मत्कर्म, बर्हिषोपलक्षितं बर्हिः। कथं नामास्मदभिमतार्थमिदम् माभिमुख्येन सादेदित्येव मर्थं प्रह्विणुतेति॥

इदानीं मुत्सर्गं दर्शयति प्रयोजनार्थम्, "तदेतदेकमेव जातवेदस्यं गायत्रं तृचम्" †—इत्यादि। तदिति दशतयीष्वस्यानुमतये परोक्षनिर्देशः, एतदिति प्रत्यक्षेण प्रनून मित्यनया सन्निधाकृत्योपदिशति, गायत्र मिति छन्दोनिर्देशः त्रिवर्जितप्रयोजनार्थः, तृच मिति एतत्सूक्तस्य सङ्ख्यानिर्देशः ‡, दशतयीषु सर्वास्वपीति निर्द्धारणे सप्तमी, 'विद्यते' अस्तीदे। ततः किं यद्येतदेवैकं जातवेदस्यं गायत्रं तृचं दशतयीषु विद्यते? शृणु,—बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेदस्यैर्मन्त्रैरधियज्ञं प्रयोजनमस्ति, न चैते बहवः सन्ति सर्वास्वपि दशतयीष्वेतदेवैकं तृचं मुक्त्वा। तत्र किं कर्त्तव्यम्? इति,—"यत्तु किञ्चिदाग्नेयम्" मन्त्रजातम् गायत्रे एव छन्दसि अजातवेदोलिङ्ग मपि, "तत्" "जातवेदसानाम्" मन्त्राणां "स्थाने" विनि-"युज्यते" शास्त्रेण। तेन किं सिध्यति भवति?

* "कृत्यार्थे तवै-केन्-केन्य-त्वन"—इति पा० ३, ४, १४।

† "ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि"—इति पा० ६, ३, ३४. वा० वा०।

‡ प्रनून मिति सूक्तम् १०म० १८८सू० तृचं सप्रविंशम्। तत्र "प्रनूनं जातवेदसम्"—इति प्रथमा, "अस्य प्रजातवेदसो"—इति द्वितीया, "या रुचो जातवेदसो"—इति तृतीया।

§ गायत्रं तृचं सूक्तं त्वेक मेव जातवेदस्य मिति निर्द्धारणम्, "जातवेदसे सुनवाम (ऋ० सं० १, ७, ७, १)"—इति तु त्रैष्टुभ मैन्द्रम्; एव मन्यत्रापि बोध्यम्।

अग्निरेव जातवेदा इति*, कर्मपृथक्त्वात् माहाभाग्याद्वा इति; इतरथा हि प्रयोगवैकल्यं स्यात्, न चान्यद्देव मन्यस्य स्थाने प्रयुज्यते। यथा चाय मनर्थान्तर मग्निर्जातवेदा एतस्माद् विधिलिङ्गात्, तथा वैश्वानरप्रभृतयोऽपीत्युपेक्ष्यम्† ॥

"स न मन्येत"—इति पूर्ववद् विचारः‡; केवलम् "अभि प्रवन्त"—इत्यत्राग्निपदविचारे अग्निशब्दो विशेष्य आसीत्, जातवेदः-शब्दोऽस्य गुणपद मिति; इह तु जातवेदः-शब्दविचारे पुनः "अभि प्रवन्त"—इत्यस्मिन्नेवोपात्ते मन्त्रे गुणपद मग्निशब्दो जातवेदः-शब्द-स्येत्येतावदुपेक्ष्यम्§॥

यथा तु पूर्वस्मिन् "समुद्राद्र्मिः"—इति आदित्यस्याग्नित्वो-पपत्तावुदाहरणम्, तथेह—"अथ असौ आदित्यः,—'उदु त्यं जात-वेदसम् (ऋ० सं० १, ४, ६, १)'—इति" जातवेदस्त्वोपपत्तौ। तदेतत् प्रतिपद मुदाहरणम् "उपरिष्टाद् व्याख्यास्यामः"—"जात-वेदसं सूर्यं मुद्वहन्तीति तु विशेषणविशेष्यसामानाधिकरण्यैकवाक्य-प्रसिद्ध्या स्वनिगमसिद्ध मस्मिन् मन्त्रे जातवेदाः सूर्यः"—इति‖। तस्मात् सुष्ठूक्तं यत् "स न मन्येत अयम् एव अग्निः" जातवेदाः इति¶ ॥

---

* "यो जातं जातवेदसीति जात इतरो जातवेदा इतरः" इति ऐ० ब्रा० १,२,५।
† "अग्निर्वा एष वैश्वानरः"—इति ऐ० ब्रा० ८,५,१।
‡ पुरस्तात् २८४ पृ० १४ पं० ; २८६ पृ० १पं०।
§ पुरस्तात् ३८६ पृ० ६ पं०।
‖ इहैवोपरिष्टाद् १२ अ० १पा० १५ ख०।
¶ पुरस्तात् २९५ पृ० ४ प० द्रष्टव्यम्।

"यः तु सूक्तं भजते, यस्मै हविः निरुप्यते, अयम् एव सः अग्निः जातवेदाः"—इति। "यस्तु सूक्तं भजते, यस्मै हविर्निरुप्यतेऽय मेव सोऽग्निर्जातवेदाः"—इति पूर्ववत् प्रसिद्धिरेव विशेषहेतुः। यद्यपि मन्त्रदर्शन मविशिष्टं त्रयाणा मपि ज्योतिषां जातवेदस्त्वे, तथापि पार्थिवोऽग्निरितरयोः प्रसिद्ध्या विशेष्यते; जातवेदस्त्वं हि यथा प्रसिद्ध मस्मिन्नग्नौ, न तथा वैद्युते, नापि सूर्ये इति। "निपात मेवैते उत्तरे ज्योतिषी", ("एतेन") जातवेदा इत्यनेन "नाम-धेयेन भजेते" इति। व्याख्यातम्* ॥ ३ (२०) ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य) पञ्चमः पादः ॥ ७. ५.

॥ षष्ठः पादः ॥

वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात्प्रत्यृतः† सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति ॥ १ (२१) ॥

"वैश्वानरः"—इति वक्तव्यम्‡, तदर्थ मुपोद्घ्नन्ति—"वैश्वानरः कस्मात्?" "विश्वान् नरान्" इतो लोकात् अमुं लोकं "नयति", हेतुकर्तृत्वेन सर्वासु प्रवृत्तिषु अय मेव नरान् नयति। यथा पञ्चाग्नि-विद्याया मुच्यते—"अपि वा सति तस्मिंस्सर्वाः प्रवृत्तयः फलवत्यो

* पुरस्तात् ३९१ पृ० १५ पं० द्रष्टव्यम्।
† "प्रात्यृतः" क, ग।
‡ १ भा० ४५८ पृ० ५ पं० १ पं० (१); ४९० पृ० (१)।

नराणां भवन्तीति हेतुकर्तृत्वेन सर्वासु प्रवृत्तिष्वय मेव नरान् नयति प्रवर्त्तयतीति वैश्वानरः” * । अथ वा “विश्वे एनं नराः नयन्ति इति वा”, कर्मकारकम् ; स नीयमानः तासुतासु क्रियास्वङ्गभावं नरैः कर्म सम्पद्यते । “अपि वा” “विश्वानरः एव” कश्चित् “स्यात्” । स पुनः कस्मात्? “प्रत्यृतः सर्वाणि भूतानि” विश्वानि ग्रयौ भूतानि ‘प्रति ऋतः’ प्रविष्ट इत्यर्थः । “तस्य” विश्वानरस्य अपत्यं “वैश्वानरः” ॥

“तस्य” वैश्वानरस्य “एषा” प्राधान्यस्तुतिर्ऋक् “भवति”—

॥ १ (२१) ॥

**वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनाना †मभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण॥ इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्येण राजा यः सर्वेषां भूताना मभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति तत्को वैश्वानरो मध्यम इत्याचार्या वर्षकर्मणा ह्येनं स्तौति ॥ २ (२२) ॥**

“वैश्वानरस्य सुमतौ”—इति ‡ । कुत्सस्यार्षम् । पृश्न्याभिप्लवयोश्चतुर्थपञ्चमयोरह्नोराग्निमारुतस्य प्रतिपत् । ‘इतः’ पृथिवीलोकात् ओषधिवनस्पतिभ्यः यः ‘जातः’, ‘विश्वम् इदं वि चष्टे’

* “वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्”—इत्यादि कठोपनिषदि १, ७ ।
† “भुवनाना” च । छान्दस मेवैतत् ।
‡ ऋ० सं० १, ७, ६, १ । १आ० ६८ सू० (१) ।

"सर्व मिद मभिपश्यति"। यश्चाभिद्रष्टव्य उपकारकत्वेन, दर्शयति वा प्रकाशकत्वेन। यश्च ('यतते') "सं यतते" 'सूर्येण' सङ्गच्छते स्वेन भासा। 'राजा' च "यः" ('भुवनानां') "सर्वेषां भूतानाम्" ('अभिश्रीः' "अभिश्रयणीयः") आश्रयणीयः। "तस्य वयम्" एवङ्गुणयुक्तस्य 'वैश्वानरस्य' नित्यं ('सुमतौ') "कल्याण्यां मतौ" उपकारप्रवृत्ताया मात्मनो यथाभिमतार्थसाधिकायाम् 'स्याम'।—इत्येतत् आशास्महे। लोकेऽपि हि स्तूयत एव पूर्वम्, पश्चात् प्रार्थ्यत इत्याचार्यः पश्यन् मन्त्रेष्वप्यय मेव न्याय इत्युपदर्शनार्थं पदानां क्रमं बिभेद; कल्याण्यां मतौ स्यामेत्याशिषा च समापयाञ्चक्रे॥

अनेकतिङि चैतस्मिन् मन्त्रे प्रतितिङ् वाक्यभेदे प्राप्ते यत्तदोरध्याहारेण "राजा यः सर्वेषां भूताना मभिश्रयणीयः, तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम"—इत्येकवाक्यतया सामर्थ्य मुन्नावयाञ्चकार। एकोऽत्रार्थपतिर्वैश्वानरः, यतः कल्याणी आशास्यते मतिः, त मेभिः शब्दैरभिष्टौति, मन्त्रिष्ठते स्तुतिरिति। अथ मेकवाक्यतान्यायः प्रायशो मन्त्रेषु, क्वचित् पुनः प्रत्याख्यात मर्थ मपेक्ष्य एकस्मिन्नपि मन्त्रे वाक्यभेदो भवत्येव। तद्यथा,—"सूर्या त्वः पोषम् (ऋ० सं० ८,२,२४,६,)" इत्यत्र * प्रतिपादं वाक्यसमाप्तिः। अन्येषा मपि च मन्त्राणा माकाङ्क्षितार्थिनां परस्पर मेकवाक्यता भवति, तदपि चोपप्रदर्शयिष्यति —"गेनां पावक चर्षसा (ऋ० सं० १,४,८,१)"—इत्यत्र † ॥

* १भा० ११ ष० १ख० २पा० ६ख० द्रष्टव्यम्।

† तथाहि,—"तत्ते वयं स्याम इति वाक्यशेषेणाऽपि योजयिष्या मन्वयः तेन योगे"—इति ११ अ० २पा० १ख०।

'तत् को वैश्वानरः"—इति। अतः प्रभृति विचारः। तदिति वाक्योपादाने। कोऽयं वैश्वानरः? इति। कुतः संशयः? आगमविप्रतिपत्तेः; विश्वानरविद्यायां तावत् 'आत्मा'-इत्यात्मविदः; इन्द्रादित्यवाय्वाकाशोदकपृथिव्यादयश्च पृथक् पृथगेव वैश्वानरत्वेन विज्ञायन्ते। अपि च "मध्यमः" वैश्वानरः इति नैरुक्ताः केचित् "आचार्याः" मन्यन्ते। कस्मात्? "वर्षकर्मणा ह्येनं स्तौति" मन्त्रदृक्। हि शब्दो हेत्वर्थः, वर्षकर्मणैनं वैश्वानरं यस्मान्मन्त्रदृक् स्तौति॥२ (२२)॥

**प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते। वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत्॥ प्रब्रवीमि तन्महित्त्वं* माहाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघमथासावादित्य इति पूर्वे याज्ञिकाः ॥ ३ †॥**

कथम्? इति। अत आह;—"प्र नू महित्वम्" इति ‡। गोतम आर्षम्। त्रिष्टुप्। वैश्वानरोऽग्निर्देवता। ('प्र वोचम्')

* "तन्महत्त्वं" ख, ग, घ; परं इतिविरुद्धः।

† नात्र खण्डसमाप्तिः क-घ-पुस्तकयोः।

‡ ऋ॰ सं॰ १, ४, २५, ६। "अथेदं विश्वानीयम्"—इत्यादिकं सायणीयम् भाष्यमत्र द्रष्टव्यम्।

"प्रब्रवीमि" अहम्। 'महित्वम्' "माहाभाग्यम्", स्तुत्या। कस्य? 'वृषभस्य' "वर्षितुरपाम्"। 'यम्' अन्येऽपि 'पूरवः' "पूरयितव्याः मनुष्याः" कामैः, 'वृत्रहणम्' "मेघहनम्", 'सचन्ते' "सेवन्ते" "वर्षकामाः" स्तुतिभिः। तन्माहाभाग्यं प्रब्रवीमि:—यदसौ वर्षिता 'वैश्वानरः' 'अग्निः', 'दस्युं' दासयितार मुपक्षयितारं रसानाम्; शुष्यन्ति हि तदनुद्गमे शस्यानि, कर्मणां वोपदासयितार मना-वृष्टिद्वारेण, तं दस्युम्, 'शम्बरम्' "मेघम्" उदकवन्त मुदकपूर्णम्, 'जघन्वान्' हतवान्,—('अव भेत्') "अवाभिनत्" व्यदारयत्, विदार्य च 'अधूनोत्' वर्षभावेनाकम्पयत् अचारयत् 'काष्ठाः' अपः। यः, तस्याहं वर्षप्राप्त्यर्थं प्रावोचं माहाभाग्यम्; स वर्षत्वस्माक मित्यभि-प्रायः॥

एव मेतस्मिन् मन्त्रे वैश्वानरस्य वर्षकर्मणैकवाक्यतासम्बन्धात् नान्यो मध्यमाद् वैश्वानर इत्याचार्या मन्यन्ते। स्थितं तावदेवम्*॥

"असौ आदित्यः,—इति पूर्वे याज्ञिकाः"। असाविति कर्म्मा-त्मनैन मुपदिशन् ब्रवीति, माभूद् गौणः कश्चित् प्रत्यय इति। विधिमन्त्रार्थवादेभ्यो† यज्ञमतत्त्व मुन्नीयैनं यज्ञं प्रयोगतः प्रथमं ये चक्रुः, ते 'पूर्वे याज्ञिकाः' साक्षात्कृतधर्माण इत्यर्थः। त एन मेव माहुः—'असौ आदित्यः इति'। कया पुनरुपपत्त्या त एव माहुः? इति। विध्यनुकरणप्रसिद्ध्या॥ ३॥

* मध्यम एवाग्निर्वैश्वानरः। अयं प्रथमपक्षः। मध्यमाग्निश्च विद्युदिति नैरुक्ताचार्यसम्मतः। सायणमते तु मध्यमशब्देनेह वायोरिन्द्रस्य वा ग्रहणम्। ऋ० सं० १, ४, १५, ६. सा० भा०।

† विध्यादिलक्षणं तु मीमांसापरिभाषादिषु स्फुटम्।

एषांल्लोकानां* रोहेण सवनानां रोह आम्नातो रोहात्प्रत्यवरोहश्चिकीर्षितस्ता मनुकृतिं होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते सोऽपि न स्तोत्रियमाद्रियेताग्नेयो हि भवति तत आगच्छति मध्यस्थाना देवता रुद्रश्च मरुतश्च ततोऽग्नि मिहस्थान मत्रैव स्तोत्रियं शंसति ॥ ४ † ॥

कथम्? इति। यतः तस्मात आह:—"एषां लोकानां रोहेण सवनानां रोह आम्नातः"। य एव हि लोकाना मारोहणानुक्रमः, पृथिवी—अन्तरिक्षम्—द्यौः इति, सएव सवनाना मपि क्रमः, प्रातः-सवनम्—माध्यन्दिनम्—तृतीयसवनम् इति। ततः किम्? कस्मिंश्चित् कर्मणि रोहप्रातिलोम्येन "रोहात् प्रत्यवरोहः" "चिकीर्षितः" कर्त्तु मीप्सितः, तदुपव्याचक्ष्महे। स एव होता प्रातःसवनं पृथिवी-लोकभक्ति शंसति, संस्तुतत्वात्; ततो माध्यन्दिन मन्तरिक्षलोकभक्ति शंसति संस्तुतत्वात्; ततस्तृतीयसवनं द्युलोकभक्ति शंसति, संस्तुतत्वात्। प्रतिभक्तिसंस्तुतत्वाच्च शंसन्—स पृथिवीलोकात् अन्तरिक्षलोक मारूढो भवति, अन्तरिक्षलोकाद् द्युलोकम्; स च द्युलोक मारोहन् द्युलोकभक्ति तृतीयसवनं शंसति, तदपि शंसन् द्युलोक मारूढो भवति। सः अग्निष्टोमसाम्नि यज्ञायज्ञिये ‡ यत् शस्तम् आग्नि-

* "एषां लोकानां" ख, घ।　　† नात्रापि खण्डसमाप्तिः क-ख-पुस्तकयोः।

‡ "यज्ञायज्ञा वो अग्नये (सा० छ० आ० १प्र० १अ०४, १)"—इत्यस्या मृच्युत्पन्नं गेयगाने पठितं चतुर्थं साम (१प्र० १अ० १५सा०) यज्ञयज्ञिय मित्युच्यते। आर्षेय-ब्राह्मणं तत्र नियामकम्। अग्निष्टोमसंस्थारम्भे व्यवहार्यत्वात् तदेव अग्निष्टोमसामेति व्यपदिश्यते।

मारुतं* तत्कर्मलोकप्रत्यवरोहानुकृतिं चिकीर्षन् "वैश्वानरीयेण सूक्तेन" "प्रतिपद्यते" प्रारभते। तद्यथा—"वैश्वानराय पृथुपाजसे (ऋ० म० ३, १, ३, सू०)" इति† प्रतिपत्। "योऽपि न स्तोत्रियम् आद्रियेत; आग्नेयो हि भवति"। प्रत्यवरोहे क [illegible] म च पुनराग्नेयोऽयं स्तोत्रियः, अग्निश्च पृथिवीस्थानः; तद्यदि तमाद्रियेत, न प्रत्यवरोहानुकृत्यारम्भः कृतः स्यात्। अन्येषु शस्त्रेषु च युक्तं यदूर्ध्वमारुहमाणः स्तोत्रियेण प्रतिपद्यते, इह पुनरवरूहमाणो द्युस्थानाधिदेवताः शंसमानः क्रमेण वैश्वानरीयेण सूक्तेन प्रतिपद्यत इति. तेन ज्ञायते आदित्यो वैश्वानर इति॥

अपि च सुतरां प्रत्यवरोहानुकरणमेतदिति गम्यते, येन "तत आगच्छति मध्यमस्थाना देवता—रुद्रश्च मरुतश्च"। 'ततः' वैश्वानरीयात् सूक्तात् प्रत्यवरोहानुकरणाभिप्रायेण शस्तात् प्रत्यवरुह्य मध्यस्थाना देवता आगच्छति मध्यस्थानेऽभिशंसितुम्। कतमाः? रुद्रश्च मरुतश्च‡। तद्यथा—"आ ते पितर्मरुतां सुम्नमेतु (ऋ० म० २, ४, ११, सू०)" इति§। ततोऽपि मध्यस्थानात् पृथिवी

* आग्निमारुतं नाम अग्निमरुद्देवताकम्, शस्त्रप्रगीतलक्षणं ज्ञेयम्।

† अस्य सूक्तस्य जगतीच्छन्दः, वैश्वानराग्निर्देवता, अग्निष्टोमे आग्निमारुते शस्त्रे विनियोगः। आ० सू० ५. २०. द्रष्टव्यम्।

‡ रुद्रस्य च मरुतां पितृत्वम् "इदं पित्रे मरुताम् (ऋ०म० १, ८, ९, १)"—इत्यस्या व्याख्यानावसरे आख्यायिकामुखेनावदत् सायणः।

§ "आ ते पितर्मरुतां * * * इति तिस्रः"—इति आ० सू० ३. ८। अत्राह शौनकः।—"चतुर्दशीं मृगाङ्किकां कृत्वास्य जुहुयाद्घृतम्। आ ते स्तोमेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः। पूर्वं मासार्धमेकान्ते स्थापयित्वा च शङ्करम्। हविःशेषेण वर्तेत क्षान्तः सतन्द्रितः। पूर्णमासे जयन्मृत्युं रोगैश्च परिमुच्यते।"—इति ऋग्वि० १।३०।

स्थानं प्रत्यवरुह्य अत्रैव तं स्तोत्रियं शंसति,—"यज्ञायज्ञा वो अग्नये (ऋ० सं० ६, ४, ५. सू०)" इति* । तदेव मेतस्माद् विध्यनुकरणात् पश्याम आदित्यो वैश्वानर इति ॥ ४ ॥

अथापि वैश्वानरीयो द्वादशकपालो भवत्येतस्य हि द्वादशविधं कर्माथापि ब्राह्मणं भवत्यसौ वा आदित्योऽग्निर्वैश्वानर इत्यथापि निवित्सौर्यवैश्वानरी भवत्या यो द्यां भात्या पृथिवी मित्येष हि द्यावा-पृथिव्यावाभासयत्यथापि छान्दोमिकं सूक्तं सौर्यवैश्वा-नरं भवति दिवि पृष्टो † अरोचतेत्येष हि दिवि पृष्टो‡ अरोचतेत्यथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति ॥ ५ § ॥

"अथापि वैश्वानरीयो द्वादशकपालो भवति" । देवतागुण-सामान्येन हि अधियज्ञेषु गुणविधयः कल्प्यन्ते, वैश्वानरीयश्च सर्वत्र द्वादशकपालः । "एतस्य हि" "द्वादशविधं" द्वादशमासप्रविभाग-लक्षणं "कर्म" । तेनैतस्मादपि देवतागुणकपालविध्यनुकरणात् पश्याम आदित्यो वैश्वानर इति ॥

* आग्निमारुते यज्ञायज्ञा व इत्ययं स्तोत्रियप्रगाथः । आ० सू०५.२०. द्रष्टव्यम् ।
†, ‡ "स्पृष्टो" ग ।
§ नात्रापि खण्डसमाप्तिः क-च-पुस्तकयोः ।

"अथापि निवित् सौर्यवैश्वानरी भवति"। निविदित्याकृति-विशिष्टो मन्त्रः, शस्त्रमध्यपाती*। स तथा भवति यथा सूर्यो वैश्वानर इति न पार्थिवो न मध्यम इति। कथम्? इति। भवति हि तत्रैतत् पदम्,—"आ यो द्यां भात्यापृथिवीम्" इति। न च पुनरादित्यादन्योऽवभासयते द्यावापृथिव्यौ; यत उच्यते,—"एष हि द्यावापृथिव्यावाभासयति"॥

* "निवित्"—इति निघण्टौ वाङ्नामसु (१भा० १४पृ० १२)। "नितरां वेदयति ज्ञापयति स्व मभिप्रेयम्"—इति देवराज (१भा० ८६पृ० (१२)। "तान् पूर्वया निविदा हूमहे (ऋ० म० १,६,१५,२)"—इत्यत्र 'तान्' विश्वेदेवान्, 'पूर्वया' पूर्वकालीनया नित्यया, निविदा वदाभिकया वाचा। निविदिति वाङ्नाम। यद्वा 'निविदा' "विश्वेदेवाः सोमस्य मत्सन्"—इत्यादिकया वैश्वदेव्या वयं 'हूमहे' आह्वयामः"—इति, "स पूर्वया निविदा (ऋ० मं० १, ७, ३, २)"—इत्यत्र "'सः अग्निः, 'पूर्वया' प्रथमया "अग्निर्देवेद्ध"—इत्यादिकया 'निविदा',—इति च, "'निविदं' प्रसिद्धां स्तुतिम् (ऋ० मं० २, ४,१८, ६·१०, ६"—इति च, "निविदः पूर्व्याः (ऋ० मं० १, ७, १५, ६)"—इत्यत्र "'पूर्व्याः' चिरन्तनीः 'निविदः' वाङ्नामैतत्, शस्त्रलक्षणवाचः"—इति च, "निविदा भनन्त (ऋ० ३,५, १६,१)"—इत्यत्र "मरुत्वतीयशस्त्रे प्रयुज्यमानानि मरुत्स्तोत्रो मरुद्गण इत्यादीनीन्द्रकर्मप्रतिपादकानि कानि चित् पदानि निविच्छब्देनोच्यन्ते"—इति च, "के चिन्निविदा मनानाः (ऋ० मं० ५,१,१०,५)"—इत्यत्र "'केचित्' बह्वृचाः 'मनानाः' अग्न्यादीन् स्तुवन्तो 'निविदः' शंसन्ति"—इति च भाष्यव्याख्यानानि। "अन्नं वा आहावः अन्नं निवित् * * * द्वादशपदा वा एषा निविद् (ऐ० ब्रा० ७, ५, १)"—इत्यादि, "यद् विश्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम् (ऐ० ब्रा० २, १, ९)"—इति, "गर्भा वा एत उक्थानां यन्निविद (ऐ० ब्रा० २, १,१०)"—इत्यादि, "सौर्या वा एता देवता यन्निविदः (ऐ० ब्रा० २, १, ११)"—इत्यादिकञ्च द्रष्टव्यम्। इहैव च पुनः सप्तमपादस्य द्वितीयखण्डे व्याकरिष्यत्यय मेव टीकाकारः।

"अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति"। कतमत्? "दिवि पृष्टो अरोचत—इति"*। न च पुनरादित्यादन्यो दिवि पृष्टो रोचते; यत उच्यते,—एष हि "दिवि पृष्टो अरोचत"। 'दिवि पृष्टः' द्युलोके स्पृष्टः अवस्थित इत्यर्थः, 'अरोचत' रोचते दीप्यते। कोऽसौ? इति। 'अग्निर्वैश्वानरः', 'बृहन्' महान् इत्यर्थः। स रोचमानः किं करोति? 'ज्योतिषा' स्वेन 'बाधते' 'तमः' नाशयत इत्यर्थः॥

"अथापि हविष्पान्तीयं सूक्तं[†] सौर्यवैश्वानरं भवति[‡]"। कथम्? इति। भवति हि तत्र मन्त्रः—सूर्यो वैश्वानर इति समर्थः। तद्यथा,— "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् (ऋ० सं० ८, ४, १२, २)"—इति[§]। वैश्वानरं केतुं कर्त्तारमह्ना मकृण्वन्निति। नैव तावदादित्यादन्यस्याह्नां कर्त्तृत्वमुपपद्यते पार्थिवे मध्यमे वा; आदित्य एव ह्युदयास्तमयाभ्यामहानि करोति। तेन वयमेतैर्हेतुभिः पश्यामः सूर्यो वैश्वानर इति‖॥ ५॥

* "दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन्। क्ष्मया वृधान ओजसा चनोहितो ज्योतिषा बाधते तमः॥"—इति य० वा० सं० ३३, ९२। ऋ० सं० ६, ७, ६, १०.—५ १, ७, १. ऋचौ च द्रष्टव्ये।

† ऋग्वेददशममण्डले सप्तमे हविष्पान्त मित्येकोनविंशत्यृचं चतुर्थं सूक्तम्। एतच्च व्यूढस्य दशरात्रस्य पञ्चमेऽहनि आग्निमारुते शस्त्रे निविद्धानं भवति। आ० श्रौ० सू० ८, ८. द्रष्टव्यम्।

‡ "सूर्यो वैश्वानरगुणकोऽग्निश्च समुदितो देवता। तथाचानुक्रान्तम्, * * * सौर्यवैश्वानरीय मिति"—इति सा०।

§ हविष्पान्तीये तस्मिन् सूक्ते द्वादश्या ऋचः पूर्वार्द्ध एषः।

‖ आदित्य एव वैश्वानर इति पूर्वपक्षिणामभिमतः। अयं द्वितीयपक्षः। "तदेतत्मतद्वय मप्यनुपपन्नम्"—इत्याह सायणः। ऋ० सं० १, ४, १५, ६. भा० द्र०।

अयमेवाग्निर्वैश्वानर इति शाकपूणिर्विश्वानरावेते* उत्तरे ज्योतिषी वैश्वानरोऽयं यत्ताभ्यां जायते कथन्त्वय† मेताभ्यां जायत इति यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो‡ भवति मध्यमधर्मैव तावद्भवत्युदकेन्धनः शरीरोपशमन उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः ॥ ६ ¶ ॥

"अयम् एव अग्निः वैश्वानरः, इति शाकपूणिः"। न मध्यमो न सूर्यः; किं तर्हि? अयमेव पार्थिवः अग्निः §। केन हेतुना? तद्धितोत्पत्तिसामर्थ्यात् ||। कथम्? इति। "विश्वानरावेते उत्तरे ज्योतिषी"। तदुक्तम्,—"अपि वा विश्वानर एव कश्चित् स्यात्, तस्यापत्यं वैश्वानरः" इति। तदिदमुपपद्यते,—"वैश्वानरः अयम् यत् ताभ्यां जायते"। तस्मात् तद्धितेन व्यपदेशेन पार्थिवोऽग्नि-र्वैश्वानर इति ॥

---

* "विश्वानरावित्यर्थेते" ङ, च।

† "कथन्त्वय" क, ख, ग।

‡ "यावदनुपात्तो" क, ख ग।

§ माचापि मध्यमाग्निः ङ-च पुस्तकयोः।

|| "नरे संज्ञायाम्" इति (पा० सू० ६ ३, १२९) सिद्ध्यति विश्वानरः। स च मध्यमः (विद्युत्) इति आचार्यसम्मतः, सूर्य इति याज्ञिकसम्मतः। तदुत्पन्नत्वेन पार्थिवोऽग्निः वैश्वानर इति शाकपूणिर्वदति। अतोऽयमपत्योऽयम्।

¶ पार्थिवस्याग्नेरेव वैश्वानरत्वे इह षट् हेतवो वक्तव्याः; तथाच भाष्यः।

"कथन्त्वय मेताभ्यां जायते"। यत उच्यते,—"यत्र वैद्युतः"अग्निः, "शरणम् अभिहन्ति"। आश्रय मात्मनो दारु, उदकम्, अन्यद्वा 'अभिहन्ति' निहन्ति, अभिगच्छति प्राप्नोतीत्यर्थः। किं तत्र तत् दीप्यते, स च पुनः "यावदनुपात्तो भवति" मनुष्यैरस्पृष्टो भवत्य-परिगृहीतो वा। किं तावत्? "मध्यमधर्मैव तावत् भवति"। कः पुनर्मध्यमस्य धर्मः? यदसौ "उदकेन्धनः शरीरोपशमनः" उदके-नेन्धते दीप्यते स्वमस्वभावकेन शरीरेण काष्ठेनान्येन वाप्रतिहत-मूर्त्तिस्वभावकेन पार्थिवधातुवञ्चलेनोपशाम्यति, स मध्यमस्य धर्मः। तदनत् स्थानजात्यादिकृतं स्वाभाव्य मद्दतुकं ज्योतिषो न भवति प्रथमस्य धर्मः। स च पुनः "उपादीयमानः एव" "अयम्" पार्थिवोऽग्निः "सम्पद्यते"। कथम्? उपात्तो हि मनुष्यैः स्वजातिधर्मं हित्वा पार्थिवधर्मं प्रतिपद्यते। कथम्? इति। "उदकोपशमनः शरीरदीप्तिः"। विपर्यस्तधर्मा मध्यमेन सम्पद्यते। एवन्तावन्मध्यमा-दयं विश्वानरात् स जायते, तेनायं तदपत्य मिति भवति हि तद्धि-तार्थोपपत्त्या वैश्वानरः* ॥ ६ ॥

अथादित्यादुदीचिप्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसंस्पर्श-यन्† धारयति तत्प्रदीप्यते सोऽय मेव सम्पद्यते तथा-प्याह‡। वैश्वानरो यतते सूर्येणे ते। न च पुनरात्म-

---

* "वैद्युतोऽग्निर्हि मध्यमस्थानाज्जायते। भूमिनिपतनानन्तर मय मेव पार्थि-वोऽग्निः सम्पद्यते"—इति सायणः। ऋ० सं० १, ४, २५. ९. भा० द०।

† "मसंस्पर्शं" ख, ग।

‡ "तथाप्याह" क, घ; इतिपुस्तकयोश्च।

नात्मा* संयततेऽन्येनैवान्यः संयतत इत इम मादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवं मवक्ष्यत्† ॥ ७‡ ॥

अथ पुनरादित्यात् कथं जायते ? आह :—"अथादित्यादुदीचिप्रथमसमावृत्त आदित्ये"—इत्येवमादि। 'अथ' शब्दः आनन्तर्य्ये; प्रकृतादर्थादर्थान्तर मधिकरोति। उदीचीं दिशं प्रति प्रथमसमावृत्तः आदित्यः, तस्मिन् 'उदीचिप्रथमसमावृत्ते' उदगयनादौ इत्यर्थः। कथम् ? इति। "कंसं वा मणिं वा परिमृज्य" य मादित्यमणि मित्याचक्षते। "प्रतिस्वरे" प्रत्यातपे। "यत्र शुष्कगोमयम् असंस्पर्शयन् धारयति, तत् प्रदीप्यते", "सोऽय मेव सम्पद्यते" यः शुष्कगोमयेऽग्निर्जायते। स एव मादित्यादपि कंसाद्वा मणेर्वा जायते, असावपि च वैश्वानर इत्युच्यते, तदपत्यापत्तयाप्यस्य वैश्वानरत्व मुपपद्यते। अथाप्याह, तद्धितविग्रहव्यपदेशात् तावदेव मुपपद्यते—अन्य आदित्यात् तावद्वैश्वानरः§ ॥

"अथापि" अय मपरो व्यपदेश एकवाक्ये विभक्त्यन्तरकृतः सूर्यवैश्वानरयोर्भेदं गमयति॥। तद्यथा—"वैश्वानरो यतते सूर्येण"

* "पुनरात्ममात्मानं" ङ, च।

† 'मवक्ष्यत्" क, ङ, च।

‡ मात्रापि खण्डसमाप्तिर्दृश्यते ङ-च-पुस्तकयोः।

§ "आदित्यप्रकाशादपि घर्मकाले सूर्यकान्तादिमणिभ्योऽग्न्युत्पत्तिः प्रसिद्धा" —इति ऋ० स० १, ४, १५, ९. सा० भा० द्र०।

॥ पार्थिवस्याग्नेरेव वैश्वानरत्वं षट् प्रेतयो वक्ष्यन्त्याः, तत्रायं द्वितीयः।

इति* मन्त्रदृगाह। प्रथमान्तस्य वैश्वानरशब्दस्य तृतीयान्तेन सूर्य-शब्देन विभक्तिभेदाद् विशेषणविशेष्यभावेन सामानाधिकरण्यं नास्ति। एतदेवासामानाधिकरण्य मपेक्ष्य अनेकत्वं वैश्वानर-सूर्यशब्दयो-र्ब्रवीति,—"न च पुनरात्मनात्मा संयतते"। किं तर्हि? "अन्येने-वान्यः" "संयतते" सङ्गच्छते; यथा देवदत्तो यज्ञदत्तेन। तत् कथ मयं संयतते सूर्येण? इति। यत आह,—"इत इम मादधाति"। इतो लोकादोषधीभ्यः शरादिभ्यो वनस्पतिभ्यो वा मथित्वा प्रत्य-क्षत एव इम मादधाति अभ्यादधातीत्यर्थः। 'अमुतः' मण्डलात कर्मात्मनः "अमुष्य" च आदित्यमण्डलाधिष्ठातुः स्वभूताः "रश्मय." "प्रादुर्भवन्ति"। "इतः" तेजःपिण्डाद् "अस्य" तदधिष्ठातुः "अर्चिषः" प्रादुर्भवन्तीति वर्त्तते। "तयोः भासोः संसङ्गं दृष्ट्वैव मवक्ष्यत्" मन्त्रदृक् "वैश्वानरो यतते सूर्येण—इति† ॥ ७ ॥

## अथ यान्येतान्यौत्तमिकानि‡ सूक्तानि भागानि वा सावित्राणि वा (सौर्याणि वा §) पौष्णानि वा वैष्णवानि वा (वैश्वदेवानि वा ||) तेषु वैश्वानरीयाः

* ऋ० सं० १. ५९, ५ सू० वैश्वानरीयनिविद्धानम्, तत्र या प्रथमा, तस्याश्चतुर्थ-पादोऽयम्। "निविद्धानं निविदा ह्येव स्तात्र मतिशस्तं भवति"—इत्यादि ऐ० ब्रा० ३, १, ११।

† "वैश्वानरोऽग्निः * * * प्रातरुद्यता सूर्येण च यतते। संयतते सङ्गच्छते। उद्यन्तं वाव आदित्य मग्निरनु समारोहतीति तैत्तिरीयकम। यद्वा पार्थिवस्याग्नेः तेजांस्यूर्द्ध्वं गच्छन्ति, सूर्यकिरणाश्चाधोमुखं प्रसरन्ति, तयोः सङ्गमनं दृष्ट्वा वैश्वानरो यतते सूर्येणेत्युषिर्ब्रूते।"—इति तत्रैव सा० भा०।

‡ "यान्येतान्यौत्तमकानि" क. ख, ग।

§, || "न स्त इमे क-ख-ग-पुस्तकेषु, नापि ङ्लिपुस्तकयोः।

एवं वैश्वानरीयेषु सूक्तेषु वैश्वानर मस्तोष्यन् मन्त्रदृशः। कथम्? इति। "उदेषीत्यस्त मेषीति विपर्येषीति"। इतिकरण एवं-शब्दार्थे; एव मुदेषि त्वं वैश्वानर!—एव मस्त मेषि—एवं विपर्येषि इति*। न च पुनरेतदुभय मप्यस्ति;—न हि वैश्वानरीयाः प्रवादा औत्तमिकेषु सूक्तेषु सन्ति, नाप्यादित्यकर्मणा वैश्वानरं स्तुवन्ति मन्त्रदृशः। तस्मान्नैष सूर्यो वैश्वानर इति॥

किञ्चाय मपरो विशेषहेतुरग्निर्वैश्वानर इति—"आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादाः भवन्ति" अग्निविशेषणत्वेन।—"वैश्वानर मृत आ जात मग्निम् (ऋ० मं० ४, ५, ८, १)"—इत्येवमादयः†॥

"अग्निकर्मणा च" "एनं" वैश्वानरं प्रायेण "स्तौतीति" "वहतीति पचतीति, दहतीति"। एवं वैश्वानर! वहसि हवींषि, पचसि पक्तव्यानि, दहसि दग्धव्यानि‡॥

तस्मादग्निरेव वैश्वानर इति स्थितम्‖

तदेते षट् हेतवः;—तद्धितेन विग्रहव्यपदेशात्(१), एकवाक्ये विभक्त्यन्तरव्यपदेशात्(२), औत्तमिकेषु सूक्तेषु अप्रवादात्(३), आदित्यकर्मणा असंस्तवात्(४), आग्नेयेषु सूक्तेषु प्रवादात्(५), अग्निकर्मणा च संस्तवात्(६) इति¶॥

* पार्थिवस्याग्नेर्वैश्वानरत्वेऽयं हेतुश्चतुर्थः।

† पार्थिवस्याग्नेर्वैश्वानरत्वेऽयञ्च हेतुः पञ्चमः।

‡ अग्निकर्म चोक्तं पुरस्तात् ६४४पृ० ७, २, १ ख०।

§ पार्थिवस्याग्नेर्वैश्वानरत्वेऽयं हेतुः षष्ठः।

‖ एवञ्च तृतीयपक्षोऽय मेव सिद्धान्तः।

¶ (१) ४०८पृ० १९ पं०। (२) ४१० पृ० १७ पं०। (३) ४१२ पृ० ११ पं०। (४) ४१२ पृ० ४ पं०। (५) ४१२ पृ० १० पं०। (६) ४१२ पृ० १२ पं०।

तत्पुनरेतदग्नेर्वैश्वानरत्वं स्थित मप्यस्थित मिव परपक्षहेतुस्व-निराकृतेषु ; अतः तन्निराकरणाय प्रस्तौति । "अथो एतत्"—इति । यत् पुनरेतदुक्तं वर्षकर्मणा यस्मात् स्तौति, तस्मान्मध्यम इति* । "अस्मिन्नपि" पार्थिवेऽग्नौ "एतदुपपद्यते" वर्षकर्म ॥ ८ ॥

**समान मेतदुदक मुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वन्ति दिवञ्जिन्वन्त्यग्नयः ॥ इति सा निगद व्याख्याता ॥ ९ (२३) ॥**

**॥ इति सप्तमाध्यायस्य षष्ठः पादः ॥ ७. ६.**

कथम् ? इत्यत आह—"समान मेतत्" इति† । 'समानम्' एक मेवेदम् 'उदकम्' उदकत्वेनाविशिष्टम्, "उच्चैत्यव चाहभिः" । 'उत् एति च, ऊर्द्ध्वं चैति, अहोभिर्निमित्तभूतैः पुनश्चाहोभिरेव अवाङेति ; दक्षिणोत्तरायणयोर्व्यक्तिभिः प्रतिसंवत्सर महान्यभिप्रेतानि । तदे-तदेकमेवोदकं पर्यायेणोत्तरायणदक्षिणायनयोः जगद्यात्रासिद्धये तदु-देति चावैति च वर्षकर्मभावेन । कथम् ? इत्यत आह— अवाङ् तावदेति ; 'भूमिं' 'पर्जन्याः' प्रार्जयितारो रसानां माध्यमिका देवगणा वर्षा समुतो कुर्वन्तो 'भूमिं' 'जिन्वन्ति' तर्पयन्ति ओषध्युत्पत्तये । एवं तावदवाङेति । अथ पुनरूर्द्ध्वं कथ मेति ? इत्यत आह ;—"दिवं जिन्वन्त्यग्नयः" । यथैवामुतो वर्षणेमा पर्जन्या जिन्वन्ति, तथै-वाहुतिप्रभवेन वर्षेण दिवं जिन्वन्त्यग्नयः ; आहुतयो ह्यग्नौ प्रक्षिप्ताः

---

* पु० ९ पा० १ ख० ७९९ पृ० १४ पं०, ४०१पृ० ९पं० ।

† ऋ० सं० २. ७, २१, ५ । एषा तु पुरस्तादग्येकस्योदाहृता "पद" न तस्या तत्र व्याख्या कृता । पु० ९, ४, ८.—१०९ पृ० ९ पं० ।

तेन दग्धास्ता रश्मिभिः कल्योदकभाव मापाद्य परमं सूक्ष्मं देवोपभोगयोग्यं द्यां प्रति वर्षभावेनोन्नीयन्ते तल्लोकनिवासिनां हृप्तये, ततस्त इह पुनर्वर्षं प्रकल्पयन्ति। तदुक्तम्—"अमुष्य लोकस्य का गतिरिति, अयं लोक इति होवाच"—इति‡।

एवञ्च सुतरा मय मपि च वर्षवान्; आहुतिमूलत्वात् सर्वस्य वर्षस्य। स्मर्यते च—"अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते" इति*। तच यदभूद् वर्षकर्मभावान्मध्यम इति, तदेतदवैशेषिकं मध्यमस्य वैश्वानरत्वेन लक्षणम्॥

अपि चाय मपरो मन्त्रः, यस्मिन्नग्निरादित्यो वर्षकर्मणा स्तूयते। तस्मात् सुतरा मनैकान्तो वर्षकर्माभिष्टवो मध्यमस्येत्यत आह—"कृष्णं नियानम्" इति† ॥ ८ (२३) ॥

॥ इति निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य) षष्ठः पादः॥ ७.६.

---

॥ सप्तमः पादः॥

**कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति। त आ ववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते॥ कृष्णं निरयणं रात्रिरादित्यस्य हरयः**

---

‡ छा० आ० १प्र० ८ख०।

* म० सं० ३अ० ७६ श्लो०।

† अभिमवाणे एव मन्त्रं दर्शयिष्यत्याचार्यः।

सुपर्णा हरणा आदित्यरश्मयस्ते यदामुतोऽर्वाञ्चः पर्यावर्त्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते घृत मित्युदकनाम जिघर्त्तेः सिञ्चति कर्म्मणोऽथापि ब्राह्मणं भवत्यग्निर्वा इतो वृष्टिं समीरयति धामच्छद्दिवि भूत्वा वर्षति* मरुतः सृष्टां वृष्टिं नयन्ति यदासावादित्योऽग्निं रश्मिभिः† पर्यावर्त्ततेऽथ वर्षतीति यथो एतद्रोहात्प्रत्यवरोहश्चिकीर्षित इत्याम्नायवचनादेतद्भवति यथो एतत्—॥ १‡ ॥

"कृष्णं नियानम्",-इति§ । दीर्घतमस आर्षम् । त्रिष्टुप् । वृष्टिकामस्य कारीर्यां सम्प्रये धामच्छदे अष्टाकपालम्, तस्य पुरोऽनुवाक्या ; तस्यां मैत्रायणीयके अग्निरय मादित्यीकृत्य स्तूयते इति प्रकरणादध्यवसीयते। 'कृष्णम्' । किं पुनस्तत् कृष्णम् ? ('नियानं') "निरयणं" निर्गतिः ; निर्गच्छन्त्यनेनेति 'नियानं' वर्त्म, पन्थाः । तच्च पुनरेतद् "रात्रिः आदित्यस्य" ; द्वे ह्यस्यायने शुक्लं चोत्तरम्, कृष्णं च दक्षिणम् ; सा हि दैवी रात्रिरभिप्रेता । ततो ब्रवीति रात्रिरादित्यस्य ज्योतिषः । स एष भगवानादित्यो यदा जगदनुग्रहाय गर्भ मुदक मात्मन्याधित्सुर्दक्षिणायणं प्रतिपद्यते, तदैते

---

* "धामच्छद्दिव खलु वै भूत्वा वर्षति" ङ, च ।

† "यदा खलु वा असावादित्यो न्यङ् रश्मिभिः" ङ, च ।

‡ नात्र खण्डसमाप्तिः ङ च-पुस्तकयोः ।

§ ऋ० सं० १, २, १९, १ । वर्षकामेष्ट्यां तिस्रः पिण्ड्या होतव्याः । तत्र कृष्णं नियान मिति कारीर्यस्यानुवाक्या । आ० श्रौ० १, १२ ।

'हरयः' रश्म-"हरणाः", 'सुपर्णाः' तस्य "रश्मयः" सर्वस्मादस्मा-ल्लोकात् 'अपो वसानाः' आत्मन्याच्छादयन्तः आददानाः 'दिवं' द्योतनवन्तम् एत मादित्यं प्रति 'उत्पतन्ति', तदुदकम् निधित्स-मानाः तस्मिन् गर्भत्वेन स एष आदित्य उत्तरायणं मासैः षड्भिः आहितोदकगर्भः सम्पद्यते। स एकः * परिषिक्तोदकगर्भो दक्षिणं वर्त्म प्रतिपद्यमानो नभस्यात् मासात् प्रभृति प्रसूयते। तदिद मुच्यते;— "त आ ववृत्रन्त्सदनादृतस्य" इति। 'ते' रश्मयः "यदा" "अमुतः" अमुष्माद् आदित्यात् 'ऋतस्य' उदकस्य 'सदनात्' सहस्थानात् 'आ ववृत्रन्' यदा "पर्यावर्त्तन्ते", ('आत्') "अथ" तदा वृष्टि-समनन्तर मेव 'घृतेन' "उदकेन" 'पृथिवी' 'व्युद्यते' विविध मुद्यते। "घृतम् इति उदकनाम†" 'पृथिवी व्युद्यत इति सामर्थ्यात्। तत् पुनः "जिघर्त्तेः सिञ्चतिकर्मणः"‡॥

एव मेतस्मिन् मन्त्रे मन्त्ररूपादादित्यः, प्रकरणादग्निः, उभय-थाप्यन्यो मध्यमात् वर्षकर्मणः कर्त्ता§॥

"अथापि ब्राह्मणम्" एतस्मिन् प्रकरणे यस्मिन्नयं मन्त्रो विनि-युज्यते; "अग्निर्वा इतो वृष्टिं समीरयति"–इत्येवमादि||। अग्निः इतो लोकाद् वृष्टिं समन्तत ईरयति। धूमभूता आप ओषधि-

* "स एव" ख-पाठः।

† १अा० १ख० १२ख० ९९, १०१ पृ० (१०)।

‡ "घृ क्षरणदीप्त्योः" धा० जु० १४।

§ इत्यत्र अग्नेर्वर्षहेतुत्वाद् वर्षकर्मत्व मप्यत्राहृतम्, ततश्च वर्षकर्मणापि क्वतो वैश्वानरोऽग्निरेवेति उदाहृतमन्त्रलिङ्गात्कथ्यत एव।

|| ता० ब्रा० ७प्र० "स होवाच किं मेऽन्नं भविष्यतीति"—इत्यादि १—१० ख०।

वनस्पतिभ्यो विनिवर्त्तमाना आकृतिभूतास्त्वमुं लोक माविशन्ति। अमुष्मिन्नेव धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिरिति ह विज्ञायते। ताः पुनरग्निस्थानाभिसम्पत्तिप्रकारिकया धामच्छदादित्यो भूत्वा धाम्नां छादयिता रश्मिभिर्मेघरूपैर्मध्यमस्थान मापादयति। एवं तेन सृष्टां वृष्टिं मध्यस्थानात्मरुतो वायवो मेघोदराणि विदार्य तेभ्यो विक्षिपन्तो वृष्टि मिमं लोकं नयन्ति प्रापयन्तीत्यर्थः"* ॥

अथापर मपि ब्राह्मणं भवति—"यदामावादित्योऽग्निं रश्मिभिः" इत्येवमादि† । तदेव मेतद् वर्षकर्म समानं सर्वेषाम्‡ इत्यहेतु-र्मध्यमस्य वैश्वानरत्वे भवति§ ॥

"यथो एतत्" यत् पुनरेतदुक्तं याज्ञिकपक्षे—"रोहात् प्रत्यव-रोहश्चिकीर्षितः इति"|| । अकारण मेतत् सूर्यस्य वैश्वानरत्वे। कस्मात् ? "आम्नायवचनात् एतत्" एवं "भवति", रोहात् प्रत्य-वरोह इत्यर्थवादमात्र मेव ॥

"यथो एतत्" यदपि चोक्तम्—॥ १ ॥

**वैश्वानरीयो द्वादशकपालो भवतीत्यनिर्वचनं कपालानि भवन्त्यस्ति हि सौर्य एककपालः पञ्चक**

* इत्थं खल्वग्नेर्वर्षकर्मत्वे ब्राह्मण मपि मानं प्रदर्शितम्।

† एतेन हि ब्राह्मणेन आदित्यस्यापि वर्षकर्मत्वं स्फुटम्।

‡ तथा च 'सर्वेषां' अग्निवाय्वादित्यानां 'वर्षकर्म' 'समानम्' एकरूप मेवेति।

§ एवञ्च वैश्वानरस्य मध्यमत्व वर्षकर्मणा स्मृत इति य उक्तो हेतुः (८९४पृ० १पं०), स खण्डित इत्यपास्त माचार्यमतम्।

|| पु० ४पा० ४ख० ४०९७० १पं०।

स्य यथो एतद्ब्राह्मणं भवतीति बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति पृथिवी वैश्वानरः संवत्सरो वैश्वानरो ब्राह्मणो वैश्वानर इति यथो एतन्निवित्सौर्य-वैश्वानरो भवतीत्यस्यैव सा भवति यो विड्भो मानु-षीभ्यो दीदेदित्येष हि विड्भ्यो मानुषीभ्यो दीप्यते* यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्य-स्यैव तद्भवति जमदग्निभिराहुत† इति जमदग्नयः प्रजमिताग्नयो वा प्रज्वलिताग्नयो वा तैरभिहुतो‡ भवति यथोएतद्धविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद् भवति ॥ २(२४) ॥

"वैश्वानरोयो द्वादशकपालो भवति"§—इति। एतदप्यकारणं सूर्यस्य वैश्वानरत्वे। कस्मात्? व्यभिचारात्; व्यभिचार्य्येतदित्यत आह;—"अस्ति हि सौर्य एककपालः पञ्चकपालश्च"। यदि हि देवतागुणाभिप्राय मभविष्यत् द्वादशविध मस्य कर्म, तस्माद् द्वादशकपाल इति। नन्वेवं सति सौर्य्योऽपि द्वादशकपाल एवाभविष्यत्; अभिधानमात्रं भिद्यते न कर्मेति, न च भवति सौर्य्यो द्वादशकपाल इति। तस्मादहेतुः कपालानि॥

* "दीदयति" क, ख, ग।
† "जमदग्निभिराऊतय" क।
‡ "तैराहुतो" क, ख, ग।
§ ५० १पा० ५ख० ४०५४० ४पं०।

यजमान मवतु। चित्रश्चित्राभिरूतिभिः। श्रवद् ब्रह्माण्यवसा-गमत्"—इतीयं निवित् आग्निमारुते शस्यते। "निवित् पुरोरुचः प्रैषा विश्वामित्रस्य सर्वशः।"—इति सर्वा विश्वामित्रस्यार्षम्। "अग्नि-र्वैश्वानरः सोमस्य मत्सत्" तृप्यतु। तृप्तश्च "प्रेमां देवो देवहूति मवतु"। 'प्र' प्रकर्षेण 'इमाम्' अग्निः वैश्वानरो 'देवः' 'देवहूतिं' देवाना मस्माक माह्वानम् 'अवतु' रक्षतु। यः 'विश्वेषां देवानां' 'समित्' समिन्धनः, स इदं करोतु। यश्च 'अजस्रं' नित्यं 'ज्योतिः'। यश्च 'विड्भ्यः' मानुषीभ्यः 'दीदेत्' देदीप्यते। यश्च 'द्युषु पूर्वासु' पूर्वेष्वहःसु 'इध्यानः' दीप्यमान एवासीत्। यश्चासौ 'अजरः' जरावियुक्तः 'उपसा मनीके' अग्निहोत्रादिषु द्योतते। 'यः' च 'आ' ('भाति') भासयति 'द्यां' सूर्यात्मना, 'आ' भासयति च 'पृथिवीम्' अग्न्यात्मना, 'आ' भासयति 'उरु' च 'अन्तरिक्षं' मध्यमात्मना। एवं त्रिभिर्ज्योतिर्भिः यश्च 'ज्योतिषा' 'यज्ञाय' 'शर्म' सुखं ('यंसत्') यच्छति, ददाति। सः 'अग्निः' वैश्वानरः 'इह' 'श्रवत्' शृणोतु अस्माकं स्तुतीः। 'इह' च कर्मणि 'सोमस्य' 'मत्सत्' तृप्यतु। किञ्च; 'प्रावत्विमां देवो देवहूतिं' 'देव्या धिया' देवानां या दात्री धीः प्रज्ञा, तया 'अवतु' रक्षतु। 'प्रेदं ब्रह्म, प्रेदं क्षत्रम्' ब्रह्म प्रावत्विदम्। 'प्रेमं सुन्वन्तम्' अभिषुण्वन्तं 'यजमानं प्रावतु'। 'चित्रः' चायनीयः पूज्यो वैश्वानरः, 'चित्राभिः ऊतिभिः' शोभनाभिः गतिभिः प्रीतिभिर्वा। ('श्रवत्') शृणोतु इमानि 'ब्रह्माणि' अस्माकं नित्यं च अस्मान् प्रति 'आगमत्' प्रत्यागच्छतु 'अवसा' पालना-भिप्रायेण मनसा कर्मसु। इत्येतदाशास्महे॥

"यथो एतत्" यत् पुनरेतदुक्तम्—"छान्दोमिकम्" छन्दोमयज्ञेषु दाशरात्रिकेषु * यत् "सूक्तं", तत् "सौर्यवैश्वानरम्"—इति[†], तदपि "अस्यैव" अग्नेः "भवति"। कथम्? इति। तत्र हि "एतद्" विशिष्टं पार्थिवाग्नेर्वाचकं लिङ्गं "भवति"—"जमदग्निभिराहुतः—इति"; जमदग्नयो ह्येनम् आहुतिभिर्जुह्वति; नादित्यम्, अभिधानात् असम्भवाच्च। तस्मादत्रापि यद्वैश्वानरलिङ्गं तदप्येतस्य पार्थिवस्याग्नेर्व्यञ्जकं भवति। "वृषा पावक दीदिहि"। 'वृषा' वर्षिता, हे वैश्वानर! 'पावक!' 'द्युमत्' दीप्तिमत्, यस्त्वं जमदग्निभिराहुतः, "अभिहुतः", स त्वं मस्माकं कर्मसु नित्यं 'दीदिहि' दीप्यस्व। इत्येतदाशास्महे। "जमदग्नयः" नित्यं "प्रजमिताग्नयः" प्रभृताग्नयः। "प्रज्वलिताग्नयो वा" ‡॥

"यथो एतत्" यदप्युक्तम्—"हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति इति§", "तद्" अपि "अस्यैव" "भवति"। कथम्? इति। यतस्तस्य सूक्तस्य या प्रथमा ऋक्, सा यथा आग्नेयी भवति; न सौरी, तथा निगद॥—(इद माग्नेयं सूक्तम्; न सौर्य मित्युपप्रदर्शनार्थम्) ॥ २ (२४)॥

* गायत्र्यादिभिश्छन्दोभिर्मीयन्ते इति छन्दोमास्त्रयोदशाः स्तोमाः, तैर्निष्पन्ना यज्ञाश्छन्दोमयज्ञाः सामवेदोपनिषद्ब्राह्मणविहिता गवामयनादिकाः, ते हि संवत्सरसाध्या अपि चतुरभिप्लविकैः षट्त्रिंशाहादिभिर्निष्पद्यन्त इति दाशरात्रिका अप्युच्यन्ते, तेष्वित्यर्थः।

† पु० ९पा० ५ख० ४०५पृ० ८पं०।

‡ १भा० १५८पृ० १ख० १८ख० (?) "अमत्"।

§ पु० ९पा० ५ख० ४०५पृ० १०पं०।

|| इत उपरश्लिष्टेव पाठे।

**ह॒विष्पान्त॑म॒जरं॑ स्व॒र्विदि॑ दि॒वि॒स्पृश्याहु॑तं॒ जुष्ट॑म॒ग्नौ । तस्य॒ भर्म॑णे॒ भुव॑नाय दे॒वा धर्म॑णे॒ कं स्व॒धया॑-पप्रथन्त ॥ हविर्यत्पानीय मजरं सूर्यविदि दिवि-स्पृश्यभिहुतं* जुष्ट मग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्य इम† मग्नि मन्त्रे-नापप्रथन्तेत्यथाप्याह‡ ॥ ३ (२५) ॥**

"हविष्पान्तम्"—इति §। सूक्त मेतत् मूर्द्धन्वत आङ्गिरसस्यार्षम्, वामदेवस्य वा। व्यूढस्य दशरात्रस्य पञ्चमेऽहन्याग्निमारुतस्य प्रतिपत्। 'हविः' कतमत्? "यत्" एतत् "पान्तम्" पानार्हं पानयोग्यं च देवानां च पुरोडाशादिनिर्दग्धस्थूलभाव मग्निना क्रियते। 'अजरम्' जरा विपरिणामः, यतः परं विपरिणामो नास्ति कश्चित्, तत्प्रविवेक मापादित मग्निना। यदेतत् 'स्वर्विदि' स्वः आदित्यः, तं वेत्ति यथासौ वेदितव्य इति; तदर्थं वा वेत्ति हविः, स स्वर्विदय मग्निः; न सूर्यः। भाष्यकारोऽपि व्यपदेशेन निराह—"सूर्यविदि" इति। 'दिविस्पृशि' द्या मसौ स्पृशत्यहन्यहनि हविरुपनयन्नादित्यम्। 'आहुतम्' "अभिहुतं" विस्पष्टम्। 'जुष्टम्' प्रियं देवानाम्। 'तस्य' हविषो 'भर्मणे' "भरणाय" सम्भरणाय बहुलीकरणाय; अपि नाम अय मग्निरित्येतद् बहु कुर्यादित्येव मर्थम्। "भावनाय च" विभू-

* "दिविस्पृश्याहुतं" क, च, ग।
† "कर्मभ्यो देवा इम" क, च।
‡ "मन्त्रेनापप्रथन्त। अथाप्याह" क, च।
§ ऋ० सं० ८, ४, ११, १.—१०, ७, ४, १।

नियुक्तुपजायेतत्थैव मर्थं मपि एतत् कथं नाम दैवतादग्निमग्निः कुर्यादिति 'धर्मणे' "धारणाय" अविच्छेदनाय। कथं नामैतत् दैवताभ्यां नित्यं प्रापयेदिति। "एतेभ्यः" "कर्मभ्यः" अर्थाय "इमम्" एव "अग्निं" पृथिवीस्थानं साधयते, 'स्वधया' "अन्नेन" हविषा, आज्येन पुरोडाशेन च। यदुक्तं निगमे घृतं चापां पुरुषं चौषधीना मिति। तदेतत् 'अपप्रयन्त' देवाः अन्तर्देयकार्यः॥

एव मेतस्मिन् सूक्ते प्रथमे मन्त्रे यदेतदग्निलिङ्ग मस्पृष्टं वैश्वानर-शब्देन, तदर्शमय मग्निवाचि। तत्पुनरेतत्सूक्तं 'हविष्पान्तीयम्' प्राग-वाग्नेयं करोति, प्राथम्यात्; प्रथमं लोके यो हि श्रूयते, स स्वेनाभि धानेनाव्यभिचारिणोपक्रम्यते स्तोतुम्, ततोऽन्यैर्भाक्तैः स्तूयते, त्वं राजा त्व मिन्द्र इत्येवमादिभिः। तथैव खल्वस्मिन् सूक्ते यो वैश्वानरशब्दः उत्तरत्र स तस्यैवाग्नेः पृथिवीस्थानस्य व्यञ्जनमात्रं भवति। तथा चाय मेव पृथिवीस्थानोऽग्निर्वैश्वानरः; न मध्यमः* ॥

तथेम मपरं मन्त्रं स्वपक्षादिभावयिषया अन्यस्मात् सूक्तात् भिन्नज्योतिर्लक्षण मानाय मध्यमोत्तमयोर्ज्योतिषोरन्यत्वव्यपदेशवतो वैश्वानरस्य निर्णिनीषन् प्रकरोति "अथाप्याह" इति॥ ३ (२५)॥

**अपा मुपस्थे महिषा अगृभ्णत विशो राजान मुप तस्थुर्ऋग्मियम्। आ दूतो अग्नि मभरद्विवस्वतो वैश्वा-नरं मातरिश्वा परावतः॥ अपा मुपस्थ उपस्थाने**

---

* एवञ्च "असौ वा आदित्यः"—इत्यादि (४०२पं० १५पं०—४०७पं०) वर्णितं याज्ञि-कमत मप्यपास्तम्।

महत्यन्तरिक्षलोक आसीना महान्त इति वाग्रह्लत माध्यमिका* देवगणा विश इव राजान मुपतस्थुर्ऋ-ग्मिय मृग्मन्त मिति वार्चनीय मिति वा-(पूजनीय मिति वा † )-हरद्यं दूतो देवानां विवस्वत आदित्या-द्विवस्वान्विवासनवान् प्रेरितवतः परागताद्वास्याग्निं वैश्वानरस्य मातरिश्वान माहर्त्तार माह मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वमिति मातर्याश्वनितीति वाथैन मेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति॥ ४ (२६) ॥

"अपा मुपस्थे"—इति‡। भरद्वाजस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। 'अपाम्' 'उपस्थे' "उपस्थाने" यत्रोपगम्य तिष्ठन्त्यापः सोऽपा मुपस्थः, अन्तरिक्षलोकः§, तस्मिन्नपामुपस्थे। "महति" विस्तीर्णे। सन्नाः 'महिषाः' "माध्यमिका देवगणाः"। अथवा 'महिषाः' तएव "महान्तः"। किं मकुर्वन्? 'अगृभ्णन्' "अगृह्णन्"। गृहीत्वा च ('विशः') "विश इव" मनुष्या इव 'राजानम्' परिवार्य 'उपतस्थुः'। 'ऋग्मियम्' ऋग्भिः स्तुतिभिः तद्वन्तम्, "अर्चनीयम्" अर्चनार्हं वा। कतमम्? इति। "यम्" 'आ अभरत्' "आहरत्"। 'दूतः' देवानां 'मातरिश्वा' "वायुः", 'अग्निं' वैश्वानरम्, कुतः?

* "माध्यमका" क, ख, ग।

† न विद्यत एतत् क-ख-ग-पुस्तकेषु।

‡ ऋ० सं० ४, ५, १०, ४।

§ अतएवाह मनुः—"मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम्"—इति (१, १३)। इह कुल्लूकभट्ट "समुद्राख्य मपां स्थानम्"—इति व्याख्यानन्तु नास्मन्मनोरमम्; "सरितः सागरान्"—इति (२४श्लो०) समुद्रोत्पत्तेर्वक्ष्यमाणत्वादिति।

'परावतः' ("प्रेरिततरः") प्रकर्षेण ईरिततरः, प्रेरिततरात्; "परा-गताद्वा" दूरतराद् 'विवस्वतः' आदित्यात्, विवासनक्रियया तमसां तदतमं पर्यटन् अन्तरिक्षे लोके गृहीत्वा चोपनम्य; विशां वा राजानं मातरिश्वा वायुः । स हि "मातरि अन्तरिक्षे" श्वय-न्मानशक्तिः "श्वसिति" गच्छति । अथ वा "मातरि" "आशु अनिति" गच्छति ॥

एवं सेनास्मिन् मन्त्रे यत आह्रियते, येन चाह्रियते, यश्चाह्रियते, सर्वे ते पृथग् व्यपदिष्टाः । यत [illegible] विवस्वत आह्रियते मातरिश्वना वैश्वानर इति । [illegible] सन्निधानव्यपदेशं सति साक्षाद् वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति ॥

अथ पुनर्यदुक्तमाकृत्य सूर्यादिसम्बन्धि विशेषलिङ्गं हविष्पान्तीयस्य सौर्यवैश्वानरत्व सूक्तम्—"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्"—इति, नान्यः सूर्यादह्नां कर्त्ता, तस्मात् सूर्योऽत्र वैश्वानर इति* । अत्र ब्रूमः—पार्थिव एवाग्निः सूक्ते प्रथमायामृचि प्रकृत्योत्तरास्वृचु एतस्मिन् सूक्ते प्रकृतिभूता स्तूयते, महत आत्मनो माहाभाग्यात् । अपि तर्हि सत्त्वान्यग्निप्रभृतीनि प्रकृति-भूतमभिः स्तूयन्ते†,—किमङ्ग पुनर्देवताः; तासामपि च विशेषतोऽग्निः;

---

* प्रदर्शितं परस्ताचैतत् हविष्पान्तीयं सूक्तमिति याज्ञिकपक्षसमर्थनाय । पु० ९पा० ५खं० ४०पृ० १०पं० ।

† तथा हि उक्तं परस्तात्;—"अपि सत्त्वानि देवतावत् स्तूयन्ते"—इत्येवमादि ३०७पृ० ४पं० । वक्ष्यति च नवमारम्भे—"अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते"—इत्यादि ।

यस्य मंत्रदेवतात्माभिवादः साक्षाद् "अग्निः सर्वा देवताः (ऐ० ब्रा० २,१,२)", "इन्द्रं मित्रं वरुणमग्निम् (ऋ० सं० २,३,२२,६.)" —इति*। तदेतदेतस्मिन्नेव सूक्ते स्फुटतर मुपदिश्यते। यथा पार्थिव एवाय मग्निः तेन तेन देवता विशेषेण देवतात्मना तत्स्थान मापन्न स्तूयत इति तदर्थं मिद माह॥

"अथैन मेताभ्यां† सर्वाणि स्थानान्यभ्यापादं स्तौति" एताभ्यां ये एते वक्ष्यमाणे, सर्वाणि स्थानानि पृथिव्यन्तरिक्षद्युलक्षणानि अभ्यापाद्य अभ्यापाद्य इत्यभ्यापादं स्तौति मन्त्रदृक्—॥ ४ (२६)॥

मूर्द्धा भुवो भवति नक्त मग्निस्ततः सूर्यो जायते प्रातरुद्यन्। माया मू तु यज्ञियाना मेता मपो यत्तूर्णिश्चरति प्रजानन्॥ मूर्द्धा मूर्त्त मस्मिन्धीयते मूर्द्धा यः सर्वेषां भूतानां भवति नक्त मग्निस्ततः सूर्यो जायते प्रातरुद्यन्त्स एव प्रज्ञां त्वेतां मन्यन्ते यज्ञियानान्देवानां यज्ञसम्पादिना मपो यत्कर्म चरति प्रजानन्त्सर्वाणि स्थानान्यनुसञ्चरते‡ त्वरमाणस्तस्योत्तरा भूयसे निर्वचनाय॥ ५ (२७)॥

"मूर्द्धा भुवो भवति"—इति§। "मूर्द्धा", मूर्त्त मस्मिन्" सर्वं

* पु० ७, ४, ४ ५ खण्डयोः। ३८७ ३९२ पृ०।

† इत उत्तरयोः खण्डयोः वक्ष्यमाणाभ्या मिति यावत्।

‡ "स्थानान्यनुसञ्चरति" क, ङ, च।

§ ऋ० सं० ८,४,११,१। इयन्तु तस्मिन्नेव हविष्यान्तीये ४०५पृ०१०पं०।

सत्त्वजात मुपनिबद्धं "धीयते"; यथा हि शिरसो वियोग तद्वतो-ऽवश्यं भावि मरणम्, एव मग्निवियोगेऽप्यवश्यं म्रियन्ते भूतानि इत्यतः* प्रधानम् 'अग्निः', 'मूर्द्धा' 'भुवः' भूलोकस्य भवति। विशेषतस्तु 'नक्तम्' रात्रौ तत्कृतत्वादालोकस्य, भूतानां चान्नपक्तेस्तत्-कृतत्वात्। तत् किमय मन्योऽग्निरन्यः सूर्य इति? न इत्युच्यते; "ततः सूर्यो जायते प्रातरुद्यन्" रात्रावग्निरेव लोकस्योपकारं कृत्वा 'ततः' अनन्तर मेव प्रभातायां रात्र्या माह्निकैरुपकारैरुपकरिष्यन् लोकस्य 'सूर्यो' भूत्वा 'जायते' 'प्रातरुद्यन्' "स एव" अय मग्निः। तस्य इयं 'माया'। क एनां जानाति? मायां "लतां" 'यज्ञियानां' "देवानाम्, यज्ञसम्पादिनाम्" स तत्त्वविदो मन्यन्ते। तत् किम्? इति। 'अपः' 'यत्' "कर्म" स्वाधिकारप्रयुक्तम्, आत्माधिकारप्रयुक्तम्, आदित्यात्मना अग्न्यात्मना च कर्त्तव्यम् 'प्रजानन्' प्रकर्षेण जानन् "सर्वाणि स्थानानि अनुसञ्चरते", 'तूर्णिः' "त्वरमाणः" कर्मकाल मपरिहापयन्नित्यभिप्रायः॥

"तस्योत्तरा भूयसे निर्वचनाय"। यथा चैतदेवं तथेय मपरा ऋक् भूयस्तर मेत मेवार्थं वक्ति। किं पूर्वया नोक्तं यदनया भूयस्तरं निरुच्यते? इति। स्थानद्वय मभिसम्पन्नः पूर्वया स्तुतः,—मूर्द्धा भुवो भवत्यग्निर्नक्तं ततः सूर्यात्मना प्रातरसावुदेति; अथ पुनरुत्तरया स्थानत्रय मभिसम्पन्नः स्फुटतरं स्तूयते,—इत्येतद् भूयस्त्वम्॥५॥(२७)

* "एव मग्निवियोगेऽप्यवश्यम्भावी विनाश इत्यतः" ख०।

† उत्तरयेत्यस्य इहैवेत उत्तरं प्रदर्श्यमानयेत्यर्थः; स्तुतेत्वियं "मूर्द्धा भुवो"-इत्यतो नाव्यवहितपरा, अपि तु सन्निहितेति ज्ञेयम्; वस्तुतस्तास्वन्तरिताया मप्युत्तरा व्यवहारो न दोषावहः।

स्तोमेन हि दिवि देवासो अग्नि मजीजनञ्छक्तिभी रोदसिप्रां। त मू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥ स्तोमेन हि यं* दिवि देवा† अग्नि मजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योः‡ पूरणं§ त मकुर्वंस्त्रेधाभावाय पृथिव्या मन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणं॥ तदग्नीकृत्य स्तौत्यथैन मेतयादित्यीकृत्य स्तौति ॥ ६ (२८) ॥

"स्तोमेन हि"—इति¶ । 'स्तोमेन' स्तुतिभिः, 'शक्तिभिः' "कर्मभिः" अग्निहोत्रादिभिः। 'दिवि' द्युलोके। एतम् 'अग्निम्' आदित्यात्मना। 'रोदस्योः' "द्यावापृथिव्योः" ('प्रां') "पूरणं" ('देवासः') "देवाः" 'अजीजनत्' अजनयत् यजमानाः; ते हि हविषां दातारः शश्वत् श्रद्धया। "एष नोदियाद् यद्येता मग्ना वाहुतिं न जुहुयादिति आहुतिभिरेवैनं जनयन्ति"—इति। 'तम् अकृण्वन्' त मेवाग्निं कृतवन्तः। 'त्रेधा भुवे कम्'। क मित्यनर्थको निपातः। "त्रेधा-भावाय", "पृथिव्याम्, अन्तरिक्षे, दिवि" च। 'सः' एव मवस्थितो

* "स्तोमेन यं हि" ङ, च।

† "दिवि देवासो" ङ, च।

‡ "मजनयन् कर्मभिर्द्यावापृथिव्योः" क, ख, ग।

§ "०पृथिव्यारापूरणं" ङ, च।

|| "इति ब्राह्मणम्" क, ख, ग।

¶ ऋ० सं० ८, ४, ११, ५। इयं खलु तस्मिन्नेव हविष्पान्तीये सूक्ते दशमी

जगद्यात्रामिद्धये मंत्रास्याः 'ओषधीः पचन्ति' ('त्रिरूपाः') सत्त्वरूपा इति॥

प्रकृतस्यैव शाकपूणेः पुनर्ग्रहणं स्वपक्षानुस्मृतये*। मद्गुरो ह्यस्मिन् सूक्ते आत्मविन्नैरुक्तयाज्ञिकानामिति।

ब्राह्मणमपि चैतमेवार्थं ब्रवीत्यथ मेवाग्निरादित्यो भवतीति,— "यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम्"†। 'अस्य'—इति व्यपदेशात् पार्थिवस्याग्नेः प्राधान्यं दर्शयति। उभाभ्यां पक्षाभ्यां व्यावृत्य स्वपक्षसाधनमुक्ता देवतामतत्त्व भाव्यमर निरूच्यते। एकमेवेदं ज्योतिः, ज्योतिष्ट्वाविशेषात्। तत्पुनरेतज्जगद्यात्रामिद्धये त्रिधा विभक्तं पृथिव्यामन्तरिक्षे दिवि च विभक्ताभिधानं सम्पद्यते; अग्निर्विद्युदादित्य इति।

तत्रैवं सति ज्योतिषो दिवि तृतीय मादित्याख्य मस्मिन् सूक्ते पूर्वास्वृक्षु "हविष्पान्तम्"—इत्येवमाद्यासु अग्नीकृत्य मन्त्रदृक् स्तौति; "अथैन मेतया पुनरादित्याकृत्य स्तौति"—॥६ (२८)॥

**यद्देदेन मदधुर्यज्ञियासो दिवि देवाः सूर्य मादितेयम्। यदा चरिष्णू मिथुना वभूता मादित्प्राप-**

---

* "अथ मेवाग्निर्वैश्वानर इति शाकपूणिः (ऐपा० ६ख०)"—इत्यतः प्रकृतः। वस्तुतोऽत्र "चेभ्राभावाय"—इत्यस्यैव व्याख्यानाय शाकपूणिमतोपादानमभीष्टं न तु सर्वत्रेति शाकपूणेरुल्लेखः।

† "अग्निर्वैश्वानरः प्राच्यावयन् * * * अथ यत् तृतीय मदीदेदिव त आदित्या अभवन्"—इति ऐ० ब्रा० ३, २, १०।

‡ "स्तोमेन हि"—इत्यस्मात् दशमृक् इति शेषः।

श्यन्भुवनानि विश्वा ॥ यदैन* मदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्य (मादितेय†) मदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा‡ थु इति नामकरणस्थकारो वा नयतिः परो§ वनिवा समाश्रितावन्योन्यं नयतो वनुतो वा मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वाथैन मेतयाग्नोक्त्य स्तौति ॥ ७(२९)॥

"यदैन मदधुर्यज्ञियासः"—इति‖। "यदैनम्" 'सूर्यम्' 'आदितेयम्' "अदितेः पुत्रम्" 'दिवि अदधुः' द्युलोके स्थापितवन्तः, 'देवाः' 'यज्ञियासः' यज्ञसम्पादिनः; यजमानाः याज्ञेन कर्मणा सर्वस्यास्यापूर्वकृतत्वाज्जगद्विरचनाप्रपञ्चस्य। रश्मयो वा देवाः सौर्या यदैन मुन्नीतवन्तः। 'यदा' चैतौ 'चरिष्णू' "सर्वदा सहचरणशीलौ" "मिथुनौ" "प्रादुः" 'अभूताम्' "उषाश्चादित्यश्च"। 'आत्' अथ तदा 'प्रापश्यत्' प्रकर्षेणापश्यत् 'भुवनानि' भूतानि, 'विश्वा' विश्वानि सर्वाणि॥

"मिथुनौ कस्मात्?" "मिनोतिः" तावदत्र "श्रयतिकर्मा"

---

* "यदैन" क, क-नामवृत्तौ च।

† न दृश्यत एतत् क-ख-ग-पुस्तकेषु।

‡ "०मिनोति श्रयतिकर्मा" क, ख, ग।

§ "नयतिपरो" क, ख।

‖ ऋ० सं० ८, ४, १२, १। एषा हविष्यान्तीये तस्मिन्नेव सूक्ते एकादशी।

मिथुनशब्दे पूर्वपदं 'मि'—इति। "थु'—इति नामकरणः" प्रत्ययः; "थकारो वा" नामकरणो विकल्पेन। "नयतिः परः" उत्तरपदे; "वनिर्वा" विकल्पेन। यदा तावत् 'थु'—इति नामकरणो नयतिश्च परः, तदा धातोः पूर्वत्वात् प्रत्ययस्य च परत्वात् 'मि-न-थुः'—इति प्राप्ते रूढेर्बलीयस्त्वात् मध्यान्तविपर्ययेण मिथुनावित्युक्तम्। अथ पुनर्यदा थकारो नामकरणः, तदा वनिरुत्तरः, तदा वकारस्य सम्प्रसारणम्, सम्प्रसारणपरपूर्वत्वं मध्यान्तविपर्ययः। थकारे च यः स्वरः, तस्य लोपः, थकारस्य उकार मुपसङ्क्रमेत। एवं मिथुनाविति सिध्यति। अथ कोऽर्थः? "समाश्रितौ" "अन्योऽन्यं" प्रति आत्मानं "नयतः", कालं वा समाश्रितौ भवतः परस्परं सम्भक्तौ। "मनुष्य-मिथुनौ अपि एतस्मात् एव"। अथ वा मेथन्तेर्मनुष्यमिथुनौ स्याताम्; तौ हि कर्मार्थं "मेथन्तौ" इव परस्परेण कालं नयतः॥

"अथ" पुनः "एनम्" आदित्यम् "एतया" उत्तरयर्चा* एतस्मिन्नेव सूक्ते होतृत्वेन "स्तौति"; होतृत्वं ह्यग्नेः कर्म न सूर्यस्य। तस्मादिद माग्निवैश्वानरीयं सूक्तम्॥ ७ (२८)॥

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद। आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत्॥ यत्र† विवदेते दैव्यौ होतारावयञ्चाग्नि-रसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति

---

* हविष्पान्तीयस्याद्यया; इह त्वनन्तरपठितयेति।

† तदुक्तं पुरस्तात् "वहनश्च हविषाम्" इत्यादि १४४५० ६पं०

**तत्सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं स मश्नुवानानां को न इदं विवक्ष्यतीति तस्योत्तरा भूयसे निर्वचनाय ॥ ८(३०) ॥**

"यत्रा वदेते"—इति*। 'यत्र' यस्मिन् कर्मणि 'वि वदेते' वेरुपसर्गस्यापकृष्य यत्र क्रियापदेन सामर्थ्यं तत्रानयनम्। कौ पुनस्तौ विवदेते? 'अवरः परश्च' "दैव्यौ होतारौ"—"अयं च अग्निः" पार्थिवः "असौ च मध्यमः" वायुः। कथं विवदेते? 'यज्ञन्योः' यज्ञनेत्र्योः। उभावप्यावां यज्ञस्य नेतारौ, तत् कतरः ('नौ') आवयोः "यज्ञे" "भूयः" बहु 'वेद' इति। तत्र य एते 'सखायः' "समानख्याना ऋत्विजः" यज्ञे विनियुक्ताः 'सचन्त' स मश्नुवते 'यज्ञम्', त एवं 'सधमादम्' सहमादम् "सहमदनम्" सहर्षम् उपश्रुत्य अनयोः 'आशेकुः' "आशक्नुवन्ति"। अथाशक्नुवन्तश्च किं ब्रूयुः? 'क इदं विवोचत्' "को न इदं विवक्ष्यतीति" कतर एतयोर्यज्ञे वेद? इति; उभावप्येतौ यज्ञे भूयोविदावित्यभिप्रायः॥

यथाग्निप्रधान मेतत् सूक्तं† होतृकर्मणोऽग्निसम्बद्धत्वात् विशेषलिङ्गेन न सूर्यप्रधानम्, तथा इय मपरा ऋक्‡ "भूयसे निर्वचनाय" बहुतराय निरुच्य वचनाय। पूर्वस्याः को विशेषः? अस्यां

* ऋ० सं० ८, ४, १२, १। हविष्पान्तीये लियं सप्तदशी।

† हविष्पान्तीयम् (ऋ० सं० १०, ७, ४)।

‡ इत उत्तर एव वक्ष्यमाणा: हविष्पान्तीये सूनविंशी (चरम्या)।

हि विभज्य वायोः केवलोऽग्निरेव स्तूयते; पूर्वस्मा सुभावपि भूयोविदावित्युक्तम्॥ ८ (३०)॥

यावन्मात्र मुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः। तावद्दधात्युप यज्ञ मायन् ब्राह्मणो होतुरवरो निषीदन्॥ यावन्मात्र मुषसः प्रत्यक्तं भवति प्रतिदर्शन मिति वास्त्युपमानस्य सम्प्रत्यर्थे प्रयोग इहेव* निधेहीति यथा सुपर्ण्यः सुपतना एता रात्रयो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञ मागच्छन् ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन्होतृजपस्त्व मग्निर्वैश्वानरीयो भवति देव सवितरेतन्त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणेतीम मेवाग्निं सवितार माह सर्वस्य प्रसवितारं मध्यमं वोत्तमं वा पितरं यस्तु सूक्तं भजते यस्मै हविर्निरूप्यतेऽय मेव सोऽग्निर्वैश्वानरो निपा मेवैत उत्तरे ज्योतिषी एतेन नामधेयेन भजेतेभ ॥ ९ (३१)॥

॥ इति सप्तमाध्यायस्य सप्तमः पादः ७. ९ ॥

"यः ... मो न प्रतीकम्"—इति†। अत्र 'न'कारः

* "इहेव" क, ख, ग।
† ऋ० सं० ८, ४, १९, २। हविष्पान्तीय त्वन्या (१९)।

सम्प्रत्यर्थ एव, उपमानासम्भवात्* । लोकेऽपि च "अस्ति उपमानस्य सम्प्रत्यर्थे प्रयोगः"—"इहेव निधेहीति यथा" इह सम्प्रति निधेहीत्यर्थः । मातरिश्वना कश्चित् पृष्टः दैव्यस्य होतुः अग्नेः यद् विज्ञानं तत् किं मयं ब्राह्मणो मनुष्यहोता यज्ञ मुपायन् बिभर्त्ति? इति । स तं प्रत्याह— हे 'मातरिश्वन्!' 'यावन्मात्रम्' 'उषसः' ('प्रतीकं') "प्रत्यक्तम्" प्रत्यञ्चितं प्रतिगतं प्रकाशस्य, "एताः" 'सुपर्ण्यः' "सुपतनाः" "रात्रयः" आत्मनि अनुप्रविष्टं ('वसते') छादयन्ति†, अभिभूय तमो वर्त्तन्ते स्वय मेव । अथवा वसतिर्दर्शनार्थः‡ । यावन्मात्र मुषसो रात्रिषु दृश्यन्ते, 'तावत्' इत्येव मपि स्वल्प मेव । एतावन्मात्र मयं स्वल्पविज्ञान उपायन् 'यज्ञं' 'ब्राह्मणः' होतृत्वे वृतो होतृषदने 'निषीदन्' 'दधाति' धारयति । दैव्यस्याग्नेः परस्य भूयोविदः, अवरः अन्योऽल्पविदिति अनुकरोत्यल्प मिति; मानुषो हि अग्न्यनुग्रहादेव अय मल्पविज्ञानेऽपि होता हौत्रं करोति इति पार्थिवोऽग्निर्विशेषतोऽभिष्टूयते ॥

तदेतदेवं कृत्वा सूक्त मग्निप्रधानकर्मत्वात् वैश्वानरीयम् । येऽत्र वैश्वानरशब्दाः, ते पार्थिवाग्निं भजन्ते विशेषणत्वेन ॥

"होतृजपस्त्वनग्निर्वैश्वानरीयो भवति" । एव मपि तु सति अयम् अनग्निः वैश्वानरः होतृजपः§ । "देव सवित रेतं त्वा वृणते-ऽग्निं होत्राय सह पित्रा वैश्वानरेण—इति" । एव मेतं जपं

* १भा० ४४पृ० १अ० १पा० १ख० द्रष्टव्यम् ।

† "वस आच्छादने"—इति अ० पं० १३ ।

‡ इह मार्गं मृग्यम् ।

§ "होतृजपं जपति"—इति ऐ० ब्रा० १, ५, ५ ।

वर्णयन्ति*। "इमम् एव अग्निं सवितारम् आह" पार्थिवम्, "सर्वस्य प्रसवितारम्" यज्ञद्वारेण "मध्यमं वा उत्तमं वा" "पितरम्" अस्य वैश्वानर माह। स ह तेन वैश्वानरेण पित्रा। एवं द्वौ पितापुत्राविति व्यपदेशात् पार्थिवादन्यो वैश्वानरः। स च पुनर्मध्यमो वोत्तमो वेत्येव मेव मय मनग्निर्वैश्वानरत्वेऽपि सति होत्रजपः॥

अत्रापि "यस्तु सूक्तं भजते, यस्मै हविर्निरूप्यतेऽय मेव सोऽग्नि-र्वैश्वानरः"। किं कारणम्? अनग्निर्वैश्वानरत्वेऽपि सति होत्रजपस्याय मेव पार्थिवोऽग्निर्वैश्वानर इत्यवध्रियते याज्ञिकपक्षे। आचार्यपक्षे च अय मेवैको मन्त्रो व्यपदेशहेतुरग्नेर्वैश्वानरत्वं ब्रवीति। सम्प्रति मन्त्रेणाग्नेर्व्यपदेशवता अग्नेर्वैश्वानरत्ववाचिना "आ दूतो अग्नि मभरद् विवस्वतो वैश्वानरं मातरिश्वा परावतः†"–इत्यनेन शाकपूणिपक्षेण स्वेनाव्यभिचारिणा समीभवति। तद्धितव्यपदेशादयस्तु पार्थिवस्य वैश्वानरत्वसाधका विशेषहेतवः षडव्यभिचारिणोऽतिरिच्यन्ते‡॥

एतस्माद् विशेषहेतुबाहुल्यात् अय मेव पार्थिवोऽग्निर्वैश्वानरः सूक्तभाक् हविर्भाक् च॥

"निपात मेवैते उत्तरे ज्योतिषी" वैश्वानर इति "एतेन नाम-धेयेन भजेतेभजेते" इति। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः॥

तदेव मेतस्मिन्§ 'वैश्वानर'-पदविचारप्रसङ्गे हविष्पान्तीयं सूक्तं

* "अग्निर्वै देवानां होता, तस्यैतद्धोतृषदनं यदुत्तरवेदी नाभिः"—इत्यादि ऐ० ब्रा० १, ५, १।

† "सुपा मुपस्थे मह्रिषा अस्तभ्णात् विशो राजान मुप तस्थुर् ऋग्मियम्। आ-दूतो०———०परावतः॥"—इति ऋ० मं० ४, ५, १०, ४।

‡ पुरस्तात् ४१२ पृ० ४१५ पं० द्र०।

§ "तावदेव मेतस्मिन्" ख०।

मुपक्षिप्य सूर्यो वैश्वानरः, अग्निर्वैश्वानरः इति एक मेवेदं ज्योतिः त्रिधा वर्त्तते इति मन्त्रस्य भावोपप्रदर्शनार्थं मुपवर्णितम्* ॥

ईदृशेषु शब्दार्थन्यायसङ्कटेषु मन्त्रार्थघटनेषु दुरवबोधेषु मतिमतां मतयो न प्रतिहन्यन्ते; वयन्त्वेतावदत्रावबुध्यामह इति॥ ९ (३१)॥

॥ इति निरुक्तवृत्तौ द्वादशाध्यायस्य (सप्तमाध्यायस्य)

सप्तमः पादः॥ ७, ७॥

इति ऋज्वर्थायां निरुक्तवृत्तौ

जम्बूमार्गाश्रमवासिनः आचार्यभगवद्दुर्गस्य कृतौ

द्वादशः† (सप्तमः) अध्यायः समाप्तः॥ ७॥

* "अग्निर्वा एष वैश्वानरः" ऐ० ब्रा० ८, ५, १। "तदेतदृचाभ्युक्तम्,—विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्। सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजाना मुदयत्येष सूर्यः"—इति प्रश्नोपनिषदि १, ८। "अय मग्नि र्वैश्वानरो योऽय मन्तः पुरुषे"—इत्यादि बृ० आ० उ० ५, ९। इत्यादयश्च श्रुतयो विचारणीयाः।

† १भा० १४९पृ० "ण" द्रष्टव्यम्।

(अथातइन्द्रोदिवःपरोक्षकृतास्तथेनतिस्रएवदेवता-
थाकारचिन्तनमपुरुषविधास्तिस्रएवपूषात्वेतोऽथैतान्य-
थैतानिमन्त्राजगत्यथातोऽग्निमीडेऽग्निःपूर्वेभिरभिप्रव-
न्तेन्द्रंमित्रंजातवेदाःप्रनूनंवैश्वानरोवैश्वानरस्यप्रनूम-
हित्वंकृष्णंनियानंहविष्पान्तमपामुपस्थेमूर्द्धाभुवस्तोमे-
नयदेदेनंयत्रावदेतेयावन्मात्र मेकत्रिंशत् ॥*)

॥ इति निरुक्ते (उत्तरषट्के) सप्तमोऽध्यायः ॥ ७ ॥

* १भा० १४९ पृ० "* *" द्रष्टव्यम्।

## ॥ अथ अष्टमाध्यायः ॥

तत्र,

### ॥ प्रथमः पादः ॥

द्रविणोदाः कस्माद्धनं द्रविण मुच्यते यदेन मभिद्रवन्ति* बलं वा द्रविणं यदेनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति ॥ १ ॥

'द्रविणोदाः'—इति†। एतद्दैवतापदं निर्वाच्यम्, तदर्थ मुपोद्घातः—"द्रविणोदाः कस्मात् ?" इति। तत्र पूर्वपद मेव तावत् प्रथमं विगृह्य निराह—"धनं द्रविण मुच्यते" इति‡। तत् कस्मात् ? "यदेन मभिद्रवन्ति"। कर्मकारकम्। यस्मादेतत् आभिमुख्येन तदर्थिनोऽवश्यं§ द्रवन्ति। "बलं वा" द्रविणम्‖। करणकारके। "यदेनेनाभिद्रवन्ति" यस्मादनेन संयुक्ताः सन्तः परानभिद्रवन्ति। "तस्य" धनस्य बलस्य वा "दाता" यो भवति, स "द्रविणोदाः"॥

"तस्य" प्राधान्यस्तुतियुक्ता "एषा" ऋक् "भवति" (यां दृष्ट्वा दैवतापदसमाम्नाये एष समाम्नातः)—॥ १ ॥

* "यदेनदभिद्रवन्ति" ङ, च।

† १भा० ४९१ पृ०। ५अ० १ख० (१)।

‡ १भा० २अ० १०ख० (२५) २११, २१८ पृ०।

§ "यस्मादेतदर्थिनोऽवश्यं" ख०।

‖ १भा० २अ० ९ख० (२१) २०५, २११ पृ०।

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे। यज्ञेषु देव मीळते॥ द्रविणोदा यस्त्वं* द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्तस्मात्पिबत्विति वा। यज्ञेषु देव मीळते। याचन्ति स्तुवन्ति वर्द्धयन्ति पूजयन्तीति वा तत्को द्रविणोदा इन्द्र इति क्रौष्टुकिः स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिरोजसो जात मुत मन्य एन मिति चाहाथाप्यग्निं द्राविणोदस माहैष पुनरेतस्माज्जायते। यो अश्मनोरन्तरग्निञ्जजानेत्यपि निगमो भवत्यथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति तेषां पुनः पात्रस्यैन्द्रपान मिति भवत्यथाप्येनं सोमपानेन स्तौत्यथाप्याह द्रविणोदाः पिबतु द्राविणोदस इति॥ २† ‡॥

"द्रविणोदा द्रविणसः"—इति। मेधातिथेरार्षम्। 'द्रविणोदाः'—इत्येतस्य प्रथमैकवचनान्तस्य कर्तृत्वेन श्रुतस्य क्रियापदेन बहुवचनान्तेन 'ईळते'—इत्यनेन वचनभेदादसामर्थ्य मपेक्ष्य स्तोतृत्वे चासम्भवं द्रविणोदसो देवतात्वात् स्तुत्यत्वेन सामर्थ्य मुन्नीय द्रविणोदसो यद्वृत्त मध्याहृत्य द्रविणोदसि अर्थपतात्वभिसम्बन्धात् स्तुतेरेक-

* "यस्त्वं" क, ख, ग।

† नात्र द्वितीयखण्डसमाप्तिः ङ-च-पुस्तकयोः।

‡ ऋ० सं० १, ७, ४, २।

वाक्यतायां सामर्थ्य मुन्नीनीषन् स्तुत्ये द्रविणोदसि द्रविणोदः-शब्दं कर्मत्वेन समर्थयाञ्चकार—"द्रविणोदा यः" देवः, "तं द्रविणोदसम्" इति॥

इदानीं 'द्रविणसः'—इत्यस्य 'ग्रावहस्तासः'—इत्यनेन ऋत्विग्विशेषेणासन्दिग्धेन प्रथमाबहुवचनेन सन्निकर्तृत्वेन विशेषणविशेष्यभावेन सामानाधिकरण्ये सामर्थ्य मुन्नीय तयार्थापत्तिसामर्थ्यादेकवाक्यतयाभिसम्बध्नाति।

यं द्रविणोदसं 'देवम्' 'अध्वरे' यज्ञे, अग्निष्टोमादौ 'यज्ञेषु' यजतिषु हविःसम्प्रदानेषु सवनेषु वा यागस्थानेषु 'द्रविणसः' ऋत्विजः; ते हि द्रविणं लप्स्यामहे इति सादन्ति कर्मणि, अथ वा "द्रविणमानिनः" धनस्य सखादेर्दापो वा देवताद्देस्य सम्भकारः, 'ग्रावहस्तासः'—इत्यभिषवणाभिप्रायम्। य सेते द्रविणसो ग्रावहस्तास ऋत्विजः अध्वरेषु यज्ञेषु द्रविणोदसं देवम् 'ईडते' "याचन्ति स्तुवन्ति वर्द्धयन्ति पूजयन्तीति वा", स द्रविणोदा देवोऽस्मभ्यं* द्रविणानि ददात्विति। एतदाशास्महे। आशिष मध्याहृत्य समाप्यते, य मीडते स इति, यत्तदोः परस्परापेक्षित्वात्। अथवैव मन्यथा निराकाङ्क्षतया परिसमाप्यते—"द्रविणसः तस्माद् पिबत्विति"। द्रविणोदा इत्यतः प्रथमैकवचनादविपरिणतादेव द्रविणस इत्यस्य पञ्चम्येकवचनत्वेन सोमाभिधानत्वे सामर्थ्य मुन्नीय पिबत्वित्याख्यात मध्याहृत्यावेव समापयाञ्चकार भाष्यकारः। एव मप्यस्ति सामर्थ्य मित्य-

* "देवोऽस्माकं" ख।

पप्रदर्शनार्थम्। तत् कथम्? इति। यं देवं द्रविणोदस मध्वरेषु यज्ञेषु ग्रावहस्ता ऋत्विज ईडते, स देवः द्रविणोदाः, द्रविणमस्मात् सोमात् द्रविणकं भक्तमादाय स्वमंशं पिबन्त्वित्येतदाशास्महे ॥

"तस्को द्रविणोदाः?"—इत्येतस्मादिदं विचार्य। तत्र तावत् "इन्द्र इति क्रौष्टुकिः" एव माचार्यो मन्यते। केन हेतुना? "स बलधनयोर्दातृतमः" अतिशयेन दाता इति। "तस्य च सर्वा बलकृतिः" अभिधानविग्रहे हि बलं द्रविणमित्युक्तम्, बलकृतिश्चेन्द्रस्य सर्वा *, तस्मादिन्द्रः। "ओजसो जातमुत मन्य एनम्—इति चाह" मन्त्रदृक्। अधिपतित्वकृत एवास्य बलेनाभिसम्बन्धः। तस्माद्युक्तं यत्तस्य दाता स्यात्। कथम्? इति। यतो मन्त्र एव निर्ब्रवीति।—

"अश्वादियाय"—इति †। 'यद् वदन्ति' यदा वदन्ति ('अश्वात्') अशनवतो मेघात् अयम् 'इन्द्रः' ('इयाय') आगच्छति 'इति'। तत्र सन्निधानमस्य प्रतीत्य तस्मादहं न तथा 'मन्ये'। कथन्तर्हि? 'ओजसः जातम्' बलराशेः कुतश्चिदतिमहतो जातम्। अहम् 'एनम्' मन्ये यथायमतिबलवत्त्वेन लक्ष्यते। अपि वा 'मन्योः' क्रोधात् दीप्तेर्वा अयम् 'इयाय', ततो 'हर्म्येषु' उदकाहरणाधिकारयुक्तेषु मेघवधकर्मसु 'तस्थौ' तिष्ठति। अथ वा किं जानीमः, कुतोऽप्ययमैश्वर्याज्जातः? इत्यतो ब्रूमः 'यतः' अयम् 'इन्द्रः' 'प्रजज्ञे'

* "या च का च बलकृतिरिन्द्रकर्मैव तत्"—इत्युक्तम्। पृ० ९५१ पृ० ८पं०।

† "अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम्। मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥"—इति ऋ० मं० ८, १, ४, ५।

इति। 'इन्द्रः' एव 'अस्य' स्वस्य जन्मनः तत्त्वं 'वेद', न कोऽप्यन्यो ज्ञास्यतीत्यभिप्रायः॥

अथाप्यस्य मपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे—"अग्निं द्राविणोदस माह" मन्त्रदृक्। स मन्त्रो मृग्यः*। के चित्तु "द्रविणोदाः पिबतु द्राविणोदसः" इत्येव मन्यन्ते†। यस्यापत्यं द्राविणोदसोऽग्निः, स एव द्रविणोदा इति॥

कस्य च पुनरस्य मग्निरपत्यम? इत्यत आह—"एष पुनः" अग्निः, "एतस्मात् जायते" इन्द्रात्। कुत एतत्? ऐन्द्रे हि निगमे श्रूयते—"यो अश्मनोरन्तरग्निं जजान" इति।

"यो हत्वाहिं०"—इति‡। हतोऽहनि दशरात्रस्य निष्केवल्ये विनियोगः। गृत्समदो ब्रवीति। ऐन्द्रं रूप मास्थितोऽसुरैर्हन्यमानः किं मा हथ, नाह मिन्द्र इति। कस्तर्हि इन्द्रः? 'यः' 'हत्वा' 'अहिम्' मेघम् 'अरिणात्' 'सप्त सिन्धून्' स्यन्दना आकाशनदीः "एला च इला च"—इत्येवमाद्याः§. 'यः' च 'गाः' अपः 'उदा-

* अस्मन्मते तु न ह्यत्र द्राविणोदसपदघटितमन्त्रोऽन्वेष्यः; अपि तु द्रविणोदा इन्द्र इति चेत् इन्द्राज्जातोऽग्निरिति यच्च श्रूयते एव मेव निगमो दर्शनीयः; इत्यर्थ्यत्यनुपदश्चात तथैव "यो अश्मनो अन्तरग्निं जजान"- इति भाष्यकारः स्वय मेव।

† ऋ० सं० १, ८, १, ४। परं तत्र तु द्रविणोदस इति पाठः, 'स द्रविणोदसो हवीरूपद्रविणस्य प्रदातृभ्य ऋत्विग्भ्यो हित."—इति च तत्र सायणव्याख्या। यास्कोऽप्युत्तरेषाम् द्विः स्मरिष्यति।

‡ "यो हत्वाहि मरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य। यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः।"—इति ऋ० सं० २, ६, ७, ३।

§ "आद्या बहुला च –इत्येवमाद्या." दु०। "सप्त गङ्गायमुनाद्या मुख्या नद्यो"—इति सा० भा०। तास्व "इमं मे गङ्गे (ऋ० सं० ८, ३, ६, ५)"—इति मन्त्रे आम्नाताः।

जत्' उदगमयत् 'अपधा' अपनयनेन उद्घाटनेन 'वलस्य' मेघस्य शिराणां छिद्राणाम्, 'यः' च 'अश्मनोः' अशनवत्योः* द्यावापृथिव्योः 'अन्तः' मध्ये 'अग्निं' 'जजान' जनयति, 'यः' च 'समत्सु' सङ्ग्रामेषु शत्रूणां 'संवृक्' सम्भेत्ता। ('जनासः') हे जनाः! 'सः' 'इन्द्रः'; नाहमिन्द्र इति ॥

"अथापि" अथ मध्ये [illegible] द्रविणोदस्त्वं । कतमत् ? इति । "ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति" । ऋतवो यैर्मन्त्रैरिज्यन्ते, ते भवन्त्यृतुयाजाः, तेषु ऋतुयाजेषु 'द्राविणोदसाः' द्रविणोदः-शब्दयुक्ताः प्रवादा भवन्ति । तत्र किम् ? तेषां ऋतुयाजानां यत् पात्रं येन च इज्यन्ते तदिन्द्रपात्रमिति सर्वे समाख्या भवन्ति । तद्यथा—"[illegible]"† । तथा—"होता यक्षद्देवं द्रविणोदमपाद्धोत्रादपोत्रादनेष्ट्रात्तुरीयं पात्र ममृक्त ममर्त्य मिन्द्रपानं देवो द्रविणोदा द्रविणसः स्वय मायुयात् स्वय मभिगूर्यात् स्वय मभिगूर्त्तया [illegible] सोमस्य पिबत्वच्छावाक यज"—इति । होता यक्षद् देवं द्रविणोदा मित्यच्छावाकस्य सम्प्रैषो मैत्रावरुणो ब्रवीति । अध्वर्युणा ऋतुभिः प्रेष्यऽतिप्रेषितः 'होता' 'यक्षत्' यजतु । कम् ? इति । 'देवं' 'द्रविणोदसम्' । स च

* "यस्य 'अश्मनोः' अश्नुते व्याप्नोत्यन्तरिक्ष मित्यश्मा मेघः, अत्यन्तमृदुकपर्योर्मे-घयोः, 'अन्तः' मध्ये वैद्युत मग्निं 'जजान' उत्पादयामास"—इति भा० भा० ।

† "अपाद्धोत्रादुत पोत्रादमत्तोत नेष्ट्रादजुषत प्रयो हितम् । तुरीयं पात्र ममृक्त ममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः ॥"—इति ऋ० सं० २,८,१, ४ । अस्य च व्याख्यानं परस्तात् दर्शयिष्यति (४४६ पृ० ६ पं०) ।

पुनर्द्रविणोदा देवः पूर्वम् 'अपात्' पीतवान् सोमं 'होत्रात्' सम्प्रदानात्। 'अपात्' च 'पोत्रात्' सम्प्रदानात्। 'अपात्' च 'नेष्ट्रात्' सम्प्रदानात्। अथ पुनरिदं 'तुरीयं' चतुर्थं सम्प्रदानम्, 'अमृक्तम्' अगूढम्, अपूर्ण मित्यर्थः* । 'अमर्त्यं' यत् पीत्वा न म्रियते ; अथवा अमनुष्ययोग्यम्, अमृक्तान् अनुपस्थित मन्यया देवतया अपरिभुक्तम्, 'इन्द्रपानम्' इन्द्रस्य पातुं योग्यम् । तदेतत् 'द्रविणोदाः' ('देवः') इन्द्रः अस्माभिः, प्रत्त मादरेण 'स्वय मायुयात्' स्वय मामिश्रीयात्, 'स्वय मभिगूर्यात्' स्वय मभ्युद्यच्छेत । ततः 'स्वयं' 'पिबतु' ('ऋतुभिः') ऋतुना कालेन सह 'सोमस्य' 'अभिगूर्त्तया' अभिमतया 'होत्रया' स्तुत्या प्रदीयमानं स्व सोमम् । हे 'अच्छावाक!' त्व मप्येतदेवं ज्ञात्वा 'यज' ॥

एव मेतस्मिन् इन्द्रस्य द्रविणोदः-स्तावति प्रैषे पात्रस्य 'इन्द्रपानम्'—इति समाख्या†, तस्मादिन्द्रस्तत् पिबतीति गम्यते । एवञ्चेत् प्राप्त मिन्द्रो द्रविणोदा इति ॥

"अथाप्ययम्" अपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे, यस्मादेनं "सोमपानेन स्तौति" । ऋतुयाजेष्वेव । "होत्रात् सोमं द्रविणोदः पिब ऋतुभिः"—इति‡ । न ह्यन्य इन्द्रात् सोमपानेन स्तूयते, तदर्थत्वात् सोमसंस्कारस्य ; भवति हि सोमाप्यायने च तत्संस्कारप्रधानो मन्त्रः । तद्यथा—"अंशुरंशुष्टे देव सोमाप्यायता मिन्द्रा-

* "अमृक्तम् अगूढम् देवेभ्यः अदत्तम् पूर्ण मित्यर्थ" ख।

† "इन्द्रपानस्य इन्द्रेण पातव्य."—इति सा॰ भा॰ (ऋ॰ सं॰ १, ५४, ९ : ६, ४४, १६ : ७, ४७, १ ; ९, ९६, २ ; १२ : १०, ३०, ९ ।

‡ "मन्दस होत्रा॰—॰पिब ऋतुभिः ॥"— इति ऋ॰ सं॰ १, ७, १६, १।

शंक्रमनविद*" इति । तस्माद् यत्र यत्र सोमपान [illegible] तत्र तत्रेन्द्र इति स्पष्टो न्यायः । प्रसिद्धतरं ह्येतत् । यदर्थं [illegible] संस्क्रियते, तस्मा एव [illegible] ।

"अथाप्याह—'द्रविणोदाः पिबतु द्राविणोदसः'—इति" यस्य 'द्राविणोदसः' अग्निः [illegible], स 'द्रविणोदाः' इन्द्रः 'पिबतु' [illegible] तस्यैवाग्नेर्यज्ञाक्रियेष्वेषा [illegible] । [illegible] अजायत [illegible] । [illegible] ।

समासाः पूर्वपक्षवचनाः [illegible] ।

अयमेवाग्निर्द्रविणोदा इति शाकपूणिराग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति । देवा अग्निं धारयन् द्रविणोदामित्यपि निगमो भवति यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं विद्यते यथो एतदोजसो जात मुत मन्य एन मिति चाहेत्यय मप्यग्निरोजसा बलेन मथ्यमानो जायते तस्मादेन माह सहसस्पुत्रं सहसः सूनुं सहसो यहुं

* ऋ० वा० सं० ५, ७ सोमस्य [illegible] । [illegible] । हे सोम ! 'देव !' 'ते' तव 'अंशुः' [illegible] सर्वात्मना 'इन्द्राय' इन्द्रप्रीत्यर्थम् 'आप्यायतां' वर्द्धताम । इति चैतदर्थः ।

† पृ० ४४४पृ० "[illegible] ।" टिप्पन्यां मन्त्रस्वरूपो द्रष्टव्य ।

‡ यमस्येत्यादि व्याख्यानस्य ख-पुस्तके 'नद्यान् मध्यदानात्'—इत्यतः परं दृश्यते पुरस्तादेव ४४५पृ० ३पं०) ।

§ होतायक्षदितिमन्त्रव्याख्यानेनैवेत्यर्थः (४४४ पृ० ११पं०) ।

यज्ञे। एतदग्निं द्राविणोदस माहर्त्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति। ऋषीणां पुत्रो अधिराज एष इत्यपि निगमो भवति यथो एतत् तेषां पुनः पात्रस्यैन्द्रपान मिति भवतीति भक्तिमात्रं तद्भवति यथा वायव्यानीति सर्वेषां सोमपात्राणां यथो एतत् सोमपानेनैनं स्तौतीत्यस्मिन्नप्येतदुपपद्यते। सोमं पिब मन्दसानो गणश्रिभिरित्यपि निगमो भवति यथो एतद्* द्रविणोदाः पिबतु द्राविणोदस इत्यस्यैव तद्भवति॥ ३ (२)॥

किं मम्म एभिर्हेतुभिरिन्द्रो द्रविणोदा इति? नेत्युच्यते—"अय मेवाग्निर्द्रविणोदाः" इति। "शाकपूणिः" मन्यते। 'अय मेव' यस्य पृथिवीस्थाने समाम्नानम्†। अपि च यदि मध्यमोऽभविष्यत्, ततो यान्येतानि माध्यमिकानि ऐन्द्राणि वा पार्जन्यानि वा बार्हस्पत्यानि वा, तेषु द्राविणोदसाः प्रवादा अभविष्यन्, मध्यमस्य कर्मणा चैनं रसानुप्रदानादिना अस्तोष्यन्; न चतदुभय मस्ति। किं तर्हि? आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादाः भवन्ति"। 'हि'-शब्दो हेत्वर्थः; यस्मादाग्नेयेष्वेव सूक्तेषु द्राविणोदसाः प्रवादाः विशेषणत्वेनाग्नेरेव भवन्ति, अग्निकर्मणा चैनं सूक्तेषु स्तौति नेन्द्रकर्मणा तस्मादय मेवाग्निर्द्रविणोदाः॥

* "गणश्रिभिरिति यथो एतद्"—इति क, ख, ग।

† १भा० ४५९ पृ० ५ पं० १, (१)।

"स बलधनयोर्दातृतमः" इति*। अकारण मेतत् इन्द्रस्य द्रविणोदस्त्वे। कस्मात्? यस्मात् "सर्वासु देवतास्वैश्वर्यं विद्यते"; अत ऐश्वर्यात् सर्वा एव बलधनयोर्दात्र्यो भवन्ति। तस्मादवैशेषिक मेतदिन्द्रस्य कारणं द्रविणोदस्त्वे॥

"यथो एतत्" यदप्युक्तम्, बलकृति मधिकृत्य,—"ओजसो जात मुत मन्य एनम्"—इति†। तदप्यवैशेषिक मिन्द्रस्य। कस्मात्? यस्माद् "अय मप्यग्निरोजसा बलेन मथ्यमानो जायते, तस्मादेनम् (अग्निम्) आह" मन्त्रदृक्। कि माह? "सहसस्पुत्रम्", "सहसः सूनुम्", "सहसो यह्वम्"। द्रुन्नः सर्पिरासुतिरित्येवमादयः शेषाः॥

"द्रुन्नः सर्पिरासुतिः"—इति‡। गृत्समदस्यार्षम्। गायत्री। आग्नेयी। अग्नौ विनियोगः समिदाधाने। द्रु-अन्नः 'द्रुन्नः' द्रुमान्नः, 'सर्पिरासुतिः' च सर्पिरासवो यस्य, सर्पिर्वोदक मासूते य आहुति-द्वारेण। 'प्रत्नः' च पुराणः, 'होता' 'वरेण्यः' वरणीयः 'सहसः' बलस्य यः 'पुत्रः' यः 'अद्भुतः' महान् विचित्रो वा। स इदं नाम अस्माकं करोत्वित्याशीर्गत माख्यात मध्याहृत्य समाप्यते॥

"त्वं ह्य यद्यविष्ठ्य"—इति§। विरूपस्यार्षम्। आग्नेयी।

* परस्तात् ४४०पृ० ९पं०।

† परस्तात् ४४०पृ० ७पं०।

‡ "द्रु॒न्नः स॒र्पिरा॑सुतिः प्र॒त्नो होता॒ वरे॑ण्यः। सह॑सस्पु॒त्रो अद्भु॑तः॥"—इति ऋ० सं० १, ५, १८, ९।

§ "त्वं ह्य यद्ध यविष्ठ्यः सहसः सूनवाहुत। ऋतावा यज्ञियो भुवः॥"—इति ऋ० सं० ९, ५, १४, २।

गायत्री । सामिधेनीष्वाग्नेयेऽन्नाद्यकामकर्मणि याज्या । हे 'यविष्ठ्य' युवतम ! 'सहसः' बलस्य 'सूनो' पुत्र ! 'यत्' यस्मात् 'आहुत' अभिहुत, 'ऋतावा' सत्यवान्, उदकवान् वा, 'यज्ञियः' यज्ञ-म्यादौ 'भुवः' भवसि । तस्मात् त्वां वयमपि ब्रूमः, स त्वमस्माकमप्येवं भवेत्येतदाशास्महे ॥

"अग्ने वाजस्य गोमतः"—इति * । उष्णिक् । गोतमस्यार्षम् । आग्नेयी । इष्टकोपधाने अग्नौ विनियोगः । हे भगवन् ! 'अग्ने !' 'सहसो यहो' बलस्य पुत्र ! 'जातवेदः !' यदेतद् वाजः अन्नम्, गोमत् गोभिः तद्वत्, त्वं तस्य 'ईशानः' ईश्वरः । अतो ब्रूमः— 'अस्मे' अस्मासु 'धेहि' स्थापय । अनयापि कुरुष्वैतत् 'महिश्रवः' महदेतत् श्रवो गवादि । इत्येतदाशास्महे ॥

"अथो एतत्" यत्पुनरेतदुक्तम्,—"अग्निं द्राविणोदसमाह" इति † । नेह मनेनाभिप्रायेण इन्द्रादयं द्रविणोदसो जायते, किन्तर्हि? "ऋत्विजः" "अत्र" एतस्मिन् "द्रविणोदसः" अग्नेः "उच्यन्ते" । ते पुनः कस्मात्? "हविषः दातारः"; देवानां हि हविर्द्रविणम्, तद्देते ददत इति द्रविणोदस एते । ततः किम्? "ते च एनं जनयन्ति" । "निगमोऽपि" हि "भवति" ऋत्विजामयमग्निः पुत्र इति । तद्यथा—"ऋषीणां पुत्रो अधिराज एषः"

* "अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि-श्रवः ॥"—इति ऋ० मं० १, ५, १७, ४ ।

† पुरस्तात् ४४०पृ० ७पं०

—इति। "अग्नावग्निश्चरति प्रविष्टः"—इति *। अनेन निर्मथ्यो ऽग्निरभिलक्ष्यते। यः 'एषः' 'अधिराजः' अधिकदीप्तिः, 'अग्नौ' आहवनीये 'अग्निः' निर्मथ्यः 'प्रविष्टः' 'चरति' ज्वलन्, 'ऋषीणाम्' ऋत्विजां 'पुत्रः' तैर्मथितः, 'तस्मै विधेम' तं परिचरामहे वयम्, अनेन आज्येन 'हविषा'। किम्? इति—'मा देवानां यूयुयाम भागधेयम्' इति। प्राप्त मेतदभिहोमाख्यं 'भागधेयं' स्रुवेणाभि-जुहोतीति। प्राप्ततोऽस्य अन्याख्यस्य देवस्य 'मा यूयुयाम' मा लोलुपामेत्यतो विधेम। अथ वा अस्मै अग्नये हविर्दद्मः। विधति दानकर्मापि भवति॥

"यथो एतत्" यत् पुनरेतदुक्तम्,—"ऋतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति, तेषां पुनः पात्रस्येन्द्रपान मिति (समाख्या) भवति"—इति †। एतदप्यकारणम्। कस्माद्? यस्माद् "भक्तिमात्रं भवति तत्" गुणतः संवादः; दुर्बला हि समाख्या, यतः अप्रा-मर्थ्यात् कुतश्चिद् गुणानुवादः,—"यथा वायव्यानीति" "सर्वेषां सोमपात्राणाम्" नानादेवतानां मपि सताम्॥

"यथो एतत्",—"सोमपानेन" एनं "स्तौतीति" ‡। इद मप्य-कारणम्। कस्मात्? यस्मात् "अस्मिन्नप्येतदुपपद्यते" सोमपानम्।

* "अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। तस्मै विधेम हविषा स्रुवेम मा देवानां यूयुयाम भागधेयम्॥"—इति तै० सं०। अस्ति चैष मन्त्रो वाजसनेयकेऽपि पाठभेदेन। शु० वा० सं० ५. ४।

† पुरस्तात् ४४०पृ० ६पं०।

‡ पुरस्तात् ४४०पृ० ११पं०।

कथम्? इति "सोमं पिब मन्दसानो गणश्रिभिः" इति। "अग्ने मरुद्भिः शुभयद्भिः"—इति*। हे भगवन्! 'अग्ने! वैश्वानर!' त्व मेभिः 'मरुद्भिः' मितरोचिभिः अर्चिभिः, 'शुभयद्भिः' भवन्तम् 'ऋकभिः' स्तवकर्तृभिः, 'गणश्रिभिः' गणशो भवन्त माश्रयद्भिः, 'पावकेभिः' पावयितृभिः, 'विश्वम् इन्वभिः' सर्व मिद मागच्छद्भिः, यद् दग्धम् 'आयुभिः' अयनशीलैः, 'प्रदिवा' चिरन्तनैः 'केतुना' प्रज्ञया कर्मणा वा 'सजूः' संयुक्तः, 'मन्दमानः' मोदमानः 'सोमं' 'पिब'। इत्येतदाशास्महे। अर्चिषोऽत्र मरुतः, ऋत्विजो वा मरुतः†; अन्यथा ह्यनुदाहरण मेवैष मन्त्रोऽग्नेः सोमपाने स्यात्, इतरैर्मरुद्भिः सम्बन्धात्॥

"यथो एतत्"—'द्रविणोदाः पिबतु द्राविणोदसः'—इति‡, "अस्यैव तद् भवति"। यत् पुनरेतदुक्तम्, ऋतुयाजेषु 'द्रविणोदाः पिबतु द्राविणोदसः'—इति, 'अस्य एव' अग्नेः 'तद् भवति'; अग्नेरपि सोमभागित्वात् ऋतुयाजेषु। भवति हि तेषु "वनस्पते०——० द्रविणोदः पिब ऋतुभिः"—इति§। वनस्पति-शब्दसामानाधिकरण्यात् सोमपानार्थे सम्बोधने द्रविणोदसो विशेषणविशेष्यभावसाम-

* "अग्ने मरुद्भिः शुभयद्भिरृक्वभिः सोमं पिब मन्दसानो गणश्रिभिः। पावकेभिर्विश्व मिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः॥"—इति ऋ० सं० ४, ३ १५, ८।

† "मरुतः"—इति ऋत्विङ्नामसु षष्ठं पदम् १भा० १५०, १५१ पृ०।

‡ पुरस्तात् ४४०पृ० ११पं०।

§ ऋ० सं० २, ८, १, २। अत्र सूक्ते 'द्रविणोदाः पिबतु द्रविणोदसः"—इति, नचैवं सम्पूर्णपठिता।

र्थ्याग्नि नान्यो वनस्पतेर्द्रविणोदाः। वनस्पतिश्च पुनरसंशय मग्निः; "वह्नि देवत्रा दिधिषो हवींषि"—इति* हविर्वहनकर्मसंयोगात्, स्विष्टकृद्विकारश्रुतेश्च वनस्पतेः। तस्मादग्निर्द्रविणोदा; नेन्द्रः॥

यत्पुनरेतदुक्तम्—इन्द्रार्थं सोमः संस्क्रियते, तस्मादिन्द्र एवास्य कौश्यः पाता; नान्य इति†। नैतदेवम्; सोमो ह्यन्यस्यै देवतायै मीयते, अन्यस्यै संस्क्रियते, अन्याभ्यश्च गृह्यते, हूयते च। तद्यथा। "अभि त्यं देवम्"—इति‡ सावित्र्या मीयते, "अंशुरंशुष्टे"—इति§ इन्द्राय संस्क्रियते, पुनरपि च मीयते|| "इन्द्रायाभिमातिघ्ने"—इत्येवमादिभिः। नानादेवताभ्यो गृह्यते च मित्रावरुणाद्याभ्यः। तथा च हूयते। तदेवं विधिवशाद् विचित्रा सोमतन्त्रगतिः। तत्रैवं सत्यशक्यं वक्तुं यत्र यत्र सोमः, तत्र तत्रेन्द्रः पाता इति। सम्भुक्ते चाग्निरिन्द्रेण सह प्रत्यक्ष मैन्द्राग्न ग्रहे "इन्द्राग्नी आगतम्"—इत्यत्र¶। भवति चाग्न्यर्थ मपि पृथक् ग्रहणं यजुषा सोमस्य "अग्नये त्वा रायस्पोषाय त्वा"—इति। तस्मादग्निरपि सोमस्य पाता स्याद्॥३(२)॥

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन्वीळयस्वा वनस्पते। आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं

---

* उपरिष्टादिम मत्र मत्रैवाध्याये प्रदर्शयिष्यत्यय मेवाचार्यः (३पा० ५ख०)।

† पुरस्तात् प्रदर्शितं "न ह्यन्य इन्द्रात्"—इत्यादि, "तस्मा एव प्रदीयते"—इत्यन्तं व्याख्यानं द्रष्टव्यम् (७४५पृ० १९पं०)।

‡ य० वा० सं० ४, २५। का० सू० ७, ७, ९. द्रष्टव्यम्।

§ य० वा० सं० ५, ७। का० सू० ८, १, ११. द्रष्टव्यम्।

|| "पुनरपि चाप्यायते" ख।

¶ ऋ० सं० १, १, ११, १; य० वा० सं० ७, ३१। "ऐन्द्राग्नं गृह्णाति"—इति च का० सू० ९, १२, १०। ऐन्द्राग्नग्रहविशेषः।

द्रविणोदः पिब ऋतुभिः॥ मेद्यन्तु ते वह्नयो वोळ्हारो* यैर्यास्यरिष्यन् दृढीभवायूय† धृष्णो अभिगूर्य त्वं नेष्ट्रीयाद्धिष्ण्याद्धिष्ण्यो धिषण्यो धिषणाभवो धिषणा (वाग्‡)धिषेर्दधात्यर्थे धीसादिनीति वा धीसानिनीति वा वनस्पत इत्येन माहैष हि वनानां पाता वा पालयिता वा वनं वनोतेः पिबर्त्तुभिः§ कालैः॥४ (३)॥

॥ इत्यष्टम. प्रायस्य प्रथमः पादः॥ ८. १.

यथा इह ऋतुयागेषु "मेद्यन्तु ते वह्नयः"—इति॥। गृत्समदस्यार्षम्। जगती। ऋतव्या। "ञि मिदा स्नेहने (दि॰प॰१३१)", तस्य लोटि मेद्यन्तु इति भवति। हे भगवन्! 'वनस्पते!' 'द्रविणोदः' ('मेद्यन्तु') स्निह्यन्तु एते 'ते' तव 'वह्नयः' "वोढारः" अश्वाः 'येभिः ईयसे' यैर्नित्यं गच्छसि। 'अरिषण्यन्' अहिंस्यमानः केनचिदपि। स त्व मेभिरश्वैरागत्य अस्मद्यज्ञं 'वीलयस्व' दृढ मात्मानं कुरुष्व, सोम मस्मत्प्रत्तं पातुम्। कथं चैनं पिब? 'आयूय' आमिश्रा मिश्रीकृत्याङ्गुल्या; स हि पानपातॄणां स्वभावो यदङ्गुल्या मन्थनम्। हे 'धृष्णो' शत्रूणां धर्षयितः! 'अभिगूर्य' अभ्युद्यम्य ततो ('नेष्ट्रीयात् धिष्ण्यात्') 'सोमं' नेष्ट्रा वषट्कृतं 'पिब' 'ऋतुभिः' कालैः सहेत्येतद् ब्रूमहे॥

---

* "वोळ्हारो" क, ख, ग।

† "दृळ्हीभवायूय" क, ख, ग।

‡ नास्त्येतत् पदम् क-ख-पुस्तकयोः।

§ "पिबर्त्तुभिः" क, ख, ग।

॥ ——— [illegible] इत्र मपि समयाभीष्टेव।

'धिष्ण्यः धिषण्यः" ; "धिषणा वाक्*", तदर्थं समो साद्यते ; तस्य पश्चादुपविष्टो होता शंसति। धिषणा कस्मात्? "धिषेः" धातोः "दधात्यर्थे" वर्त्तमानस्य ; सा हि वाग्, अर्थं धारयति ; शब्दार्थयोः सम्बन्धनित्यत्वात्†। अथ वा "धीसादिनीति वा, धीसानिनीति वा"। धीः प्रज्ञा, कर्म वा‡। सा एतस्यां सीदति ; सनोति वा, सम्भजते इयं वा ; तयोः सीदति सनोति वा, तन्निमित्तत्वात्। एवं धीशब्दात् पूर्वपदम्, सदेः सनोतेर्वा उत्तर-पदम्, धिषणा-शब्दस्य विकल्पेन ॥

"वनस्पते इति एनम् आह" द्रविणोदसम्, तस्मादग्निरित्यभि-प्रायः ॥

अथ कथं सग्निर्वनस्पतिः? "एष हि वनानां पाता वा पालयिता वा"। 'हि'-शब्दो हेत्वर्थः। यस्मात् 'एषः' 'वनानां' वृक्षादीनाम् अन्तर्गतोऽपि, समर्थोऽपि दग्धुम्, न तानि दहति, तस्मात् अयं तेषां 'पाता' रक्षिता, 'पालयिता' वेति। केवलं धात्वन्यत्वम्, स एवार्थः§ ॥

अथ "वनं" कस्मात्? "वनोतेः" सम्भजनार्थस्य‖ ; तद्धि दार्वादि-प्रयोजनार्थं सेव्यते। 'पिब ऋतुभिः' "कालैः", सह इति वाक्यशेषः ॥

* १भा० ७४ पृ०१ ख० ११ख० (४४)।

† "षिञ्जे शब्दार्थसम्बन्धे"— इति पस्पशायां पतञ्जलिः।

‡ १भा० ३२४पृ० १ख० ९ख० (७)—११२पृ० १ख० १ख० (११)।

§ "पा रक्षणे"—इति अदा० प०४९, "पाल रक्षणे"—इति चु० प० ७९।

‖ "वन, षण सम्भक्तौ"—इति धा० भ्वा० प० ४९२, ४९४।

एव मध्यमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक् च। निपात मेवैतत्,—मध्यमं ज्योतिः, उत्तमं च ज्योतिः, एतेन नामधेयेन भजेते इति*॥

एष देवतापदविचारन्यायः सर्वत्र देवतापदविचारार्थो यथासम्भव मुपादेयः प्रज्ञाविवृद्धये शिष्यस्येति॥ ४ (३)॥

इति ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशाध्यायस्य

(अष्टमाध्यायस्य) प्रथमः पादः॥ ८.१.

---

॥ द्वितीय पादः॥

अथात आप्रिय आप्रियः कस्मादाप्नोतेः प्रीणातेर्वाप्रीभिराप्रीणातीति च ब्राह्मणं तासा मिध्मः प्रथमागामी भवतीध्मः समिन्धनात् तस्यैषा भवति॥ १(४)॥

"अथात आप्रियः"। 'आप्रियः' इत्यादीनि†। आप्रीषु निर्वक्तव्यानि तानि पुनरमूनि प्रैषिके आप्रीसूक्ते। पाठक्रमनियमाद् विवक्षितक्रमाणीति देवतापदसमाम्नायेऽपि गृह्यमाणत्वात् पाठक्रमप्रयोजनस्य विवक्षितक्रमाण्येव तत्रैतद् भवति। इमान्यग्निजातवेदोवैश्वानरप्रभृतीनि किं विवक्षितक्रमाणि उत युगपदभिधानासम्भवात् अर्थत एषां क्रमः? इति॥

* द्रविणोदःशब्देन पार्थिवोऽग्निरेव प्रधानतो बोध्यः सर्वत्र, वैद्युतः सौरश्च प्रकरणादिवशात् बोध्यः इति निष्कर्षार्थः।

† १भा० ५९१ पृ० ५ख० १ख० (१)—(११)।

तत्र विवचितक्रमाणीति के चित्। कथम्? इति। इह तावत् स्थानानि भूर्भुवःस्वरिति पाठानुपूर्व्येव* नियतानीति तत्स्थानिना मप्यग्न्यादीनां स एव क्रमो गृह्यते, स गृह्यमाणो न न्याय्य उत्स्रष्टु मिति। अपि च सति क्रमप्रयोजने अग्निः पृथिवीस्थानो यस्मात्, तं प्रथमं व्याख्यास्याम इति† हेतुवचन मुपपद्यते; उत्तरत्र च, "तासाम् इन्द्रः प्रथमागामी भवति"—इति‡, "तेषा मश्वः प्रथमागामी भवति"—इति§, "तासां रथः प्रथमागामी भवति"—इति‖। तत्र तत्र प्रथमागामी भवतीति वचनं यथाप्रधान मभिधानं पूर्वं समाम्नात मित्यस्य न्यायस्योपप्रदर्शनार्थं मिति लक्ष्यते; इतरथा ह्यविवचितक्रमेषु प्रथमागामिवचन मकृत्वैव यत्किञ्चित् पद मुपाददीत। तदेतत् पृथिवीस्थाने सर्वत्र क्रमप्रयोजन मुच्यते।— पार्थिवस्य ज्योतिषो यथा 'अग्नि'-शब्देन प्रसिद्धतमः सम्बन्धः, न तथा 'जातवेदः'-शब्देन; यथा 'जातवेदः'-शब्देन, न तथा 'वैश्वानर'-शब्देन, यथा च 'वैश्वानर'-शब्देन, न तथा 'द्रविणोदः'-शब्देन। तान्येतानि¶ गुणविप्रकर्षात्, प्रसिद्धिविप्रकर्षाच्च अग्निशब्दात् विप्रकृष्यन्ते; इध्मादीनां तु व्यवधानेनाग्न्यभिधानत्व मित्यतितरां विप्रकर्षः; अश्वप्रभृतयस्तु स्थानमात्र मग्नेर्भजन्त इति इध्मप्रभृति-

* "मन्त्रानुपूर्व्येव" ख०।
† पुरस्तात् ६७८पृ० १पं०।
‡ अत्रैव खण्डे उपरिष्टात् (७५८ पृ० १९ पं०)
§ उपरिष्टात् ९अ० १पा० १ख०।
‖ उपरिष्टात् ९अ० २पा० १ख०।
¶ जातवेदाः, वैश्वानरः, द्रविणोदाः इति।

भ्योऽपि विप्रतिषिध्यन्ते। तेषा मपि च उद्दिष्टप्रमाणवृत्तयो* ऽसम्यक्निमत्तका इति † प्रथमम ; अनुदितप्रमाणवृत्तयस्तु‡ अत्वादयः§ ते पश्चाद्वाङ्क्षेभ्यः॥। इत्येवं सर्वत्र क्रमप्रयोजन मुपेक्ष्यम्।

शाकपूणिस्तु पृथिवीनामभ्य वत्वोपक्रम्य स्वय मेव सर्वत्र क्रमप्रयोजन माह। तदुक्तं वार्त्तिककारेण—"क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञा मवसादयेत्।"—इति॥

प्रकृत मिदानी मुपवर्ण्यते।—इध्मादीनां गुणाभिधानसामान्यं किञ्चिदस्ति, यतस्तेनाधिकारवचनम् "अथात आप्रियः"—इति। 'अथ' इति विशेषाधिकारे। 'अतः'—इत्यानन्तर्य्ये। 'आप्रियः' व्याख्यास्यन्त इति¶ वाक्यशेषः॥

इह कारणादभिधेये अभिधाननियमो नैरुक्तानाम्, तदर्थं मुपोद्धृत्य "आप्रियः" कस्मात्? "आप्नोतेः प्रीणातेर्वा"—इति निराह। आप्रिय ऋचः, तत्सम्बन्धात् देवता अपि। तथाहि दर्शयति—"आप्रीभिराप्रीणाति", "इतीमा आप्रीदेवताः"—इति ** च। ऋचस्तावत् आप्नुवन्ति प्रीणन्ति वा देवता इत्याप्रियः; अथ पुनर्देवता आप्यन्ते आप्रीयन्ते वा इत्याप्रियः॥

* "उद्दिष्टप्रमाणवृत्तयो" ख।
† १भा० ४९४ पृ० ५ ख० २ ख० (१), (१), (२)।
‡ "अनुदितप्रमाणवृत्तयस्तु" ख।
§ १भा० ४९४ पृ० ५ ख० २ ख० (४)—(१८)।
‖ १भा० ४९५ पृ० ५ ख० २ ख० (१९)—(३९)।
¶ इत आरभ्याध्यायसमाप्तिं यावत्।
** अत्रैवाध्याये उपरिष्टात् (२ पा० ९ ख०)।

"तासाम् इध्मः प्रथमागामी भवति" प्रथम मागन्तु मस्य आप्रीदेवतापदसमाम्नाये मौल मिति प्रथमागामी। कस्मात्? एतत्पूर्वकत्वादिज्याया:, अनित्यत्वाच्च तनूनपान्नराशंसयोरन्यतरस्य॥

"तस्य" इध्मस्य, समित्कलापस्य*, "एषा" प्राधान्यस्तुतिः "भवति"—॥ १ (४)॥

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः। आ च वह मित्रमहश्चिकित्वां त्वं दूतः कविरसि प्रचेताः॥ समिद्धो अद्य मनुष्यस्यमनुष्यस्य गृहे देवो देवान्यजसि जातवेद आ च वह मित्रमहश्चिकित्वांश्चेतनावांस्त्वं दूतः कविरसि (प्रचेताः †) प्रवृद्धचेता यज्ञेध्म इति कात्थक्योऽग्निरिति शाकपूणिस्तनूनपादाज्यं भवति नपादित्यननन्तरायाः‡ प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते तस्यैषा भवति॥ २(५)॥

* "काष्ठं दार्विन्धनं त्वेध इध्म मेधः समित् स्त्रियाम्।"—इति अम० को० व०।

† नास्त्येतत् पदं क-ख-ग-पुस्तकेषु।

‡ "शाकपूणिस्तनूनपान्नपादित्यननन्तरायाः"—इत्येव क, ख, ग।

"समिद्धो अद्य"—इति*। जमदग्नेरार्षम्। त्रैष्टुभम्। सूक्तमेवाद्याग्नेयं यास्कः†। हे इध्म! यस्त्वं 'समिद्धः' सन्दीप्तः, 'अद्य' एतस्मिन् विशिष्टे यजनीयेऽहनि, 'मनुषः' "मनुष्यस्यमनुष्यस्य" समानेऽहनि प्रवृत्तयागानां त्रैवर्णिकानाम 'दुरोणे' यज्ञगृहे 'देवः' दाता हविषां हेतुकर्तृत्वेन, 'देवः' दीपनो वा, द्योतनो वा, 'देवान्' दानादिगुणयुक्तान् एतान् हेतुकर्तृत्वेन यागाङ्गभाव मुपगच्छन् 'यजसि' हे 'जातवेदः!' जातवेदस आधार इति तदभिधानेन सम्बोध्यते; दृष्टा हि मन्त्रेषु क्वचित् तदभिधानप्राप्तिः; अथ वा जातवेदा अपि त्वदृतेऽनभिव्यक्तस्वशक्तिस्त्वदाधारत्वादशक्त एवायं यष्टुम्, तस्मात् जातवेदास्त्वदाधारो यजति यत्, तत् त्व मेव यजमात्युच्यते। अस्माक मप्येतस्मिन्नहनि हे 'मित्रमहः' मित्राणां पूजयितः! नित्य मभ्युपेक्षमाणः उपकारकर्त्ता‡ यजमानानां 'चिकित्वान्' जानानः 'आ च वह' आह्वय च, देवान् आहूय चैनान् यज; तथास्मिन् कर्मणि ज्वलनाङ्गभाव मुपेहि, यथैतस्मिन् कर्मणि हविः प्रतिजिघृक्षन्तोऽङ्गभाव मीयुर्देवाः, अपि च नैतदतिचित्रम्; यदेव मस्माक मस्मिन् कर्मणि वर्त्तथाः। किं कारणम्? यतो ब्रूमः—"त्वं दूतः कविरसि प्रचेताः"। अन्यावेशादग्निर्यदपेक्ष्योच्यसे,—'त्वम्' एव 'दूतः' सर्वयजमानानां त्वत्पूर्वकत्वाद् देवतायागस्य, 'कविः' क्रान्तदर्शनः—

* ऋ॰ सं॰ ८, ६, ८, १। अग्निचयनात्प्रभृते प्रागात्य पशौ सर्वेषां नित्य मिद माप्रीसूक्तम्। श्रा॰ ८, ९. द्रष्टव्यम्।

† यतो वक्ष्यत्ययं इति तत्—"यास्कस्यापि चैतदेवाभिमतम्"—इत्यादि (४६९ पृ॰ ८ पं॰)।

‡ "मभ्युपेक्षमाणोपकारप्रहर्त्ता" ख।

कान्तप्रकाशः सर्वत्र, 'प्रचेता.' प्रकृष्टप्रज्ञानः। यस्मात् त्वम् ऋत्विग्यजमानानां सायुज्ये हेतुः*, तस्य तत्र युक्त मस्माक माह्वय देवान् यष्टु मित्यतो ब्रूमहे—आह्वय चास्माकं देवान् यज च॥

"यज्ञेध्म इति कात्थक्यः"। कत्थकस्य पुत्रः कात्थक्य आचार्यः, स मन्यते,— योऽय मिध्म आधीयते प्रतिप्रणवं यज्ञे स एवाय मिति। नन्वेतस्मिन् मन्त्रे न तस्य लिङ्ग मस्ति? सत्यम्! नास्ति साक्षात्; प्रैषे तु "समिद्भ्यः प्रेष्य"—इति श्रूयते, युक्तं च यदर्थ मेव प्रेष्यते स एवेज्यते †। तस्मात् समिधा मेवेध्मभाव मुपगताना मग्निना सन्दीप्तानां समुदायापेक्ष मिदम्, व्यवहित मभिधान माप्रीगतं समिद्धो अद्येति समिध एव चेमा इज्यन्त इति स्पष्ट मैष्टिके होत्रे समिधो यजेति प्रेषितो होता "समिधः समिधो अग्न आज्यस्य व्यन्तु"—इति वषट्करोति ‡। तस्माद् युक्तं यत् कात्थक्यो मन्यते यज्ञेध्म इति §॥

अथ पुनरन्यः कथं मन्यतेऽत आह,—"अग्निरिति शाकपूणिः"। स पुनः कया उपपत्त्या अग्निं मन्यते? आरादुपकारित्वात्, प्रैषस्य सन्निपत्योपकारित्वाच्च ‖। यजतावाप्रियां यदाप्रीरूपं तद्

* "साफल्ये हेतुः" ख।

† "यज्ञो वै देवेभ्य उदक्रामत्, तं प्रैषैः प्रैष मैच्छन्, यत् प्रैषैः प्रैष मैच्छन् तत् प्रैषाणां प्रैषत्वम्"—इति ऐ० ब्रा० २, १, ९।

‡ "यदि देवतायै हविर्गृहीतं स्यात्तां ध्यायेद् वषट्करिष्यन्साक्षादेव तद्देवतां प्रीणाति, प्रत्यक्षाद्देवतां यजति"—इति ऐ० ब्रा० ३, १, ८।

§ "समिदसि"—इति व्याख्याने "हे इध्मकाष्ठ! त्वं 'समिदसि' अग्नेः समिन्धनं दीपन मसि"—इति महीधरः। य० वा० सं० २, ५।

‖ "सान्यङ्गानि द्विविधानि। सन्निपत्योपकारकाणि, आरादुपकारकाणीति च"—इत्यादि मी० प०।

बलवत्*। किञ्च पुनराप्रियो रूपम्? अन्वर्थता कथम्? इति शृणु। —"समिद्धो०——० देवान् यजसि जातवेदः। आ च वह मित्रमहश्चिकित्वान् दूतः कविरसि प्रचेताः॥" इति मन्त्रोक्तानि अभिधानानि कर्माणि च अग्नेरग्निपक्षे, गौणान्यन्यपक्षे; "गौणमुख्ययोश्च मुख्ये कार्यसम्प्रत्ययः"—इति न्यायात्†; तस्मादपि एतत्स्वरूपाया आप्रियो यजतावुपकारकत्वादाग्नेयत्वाच्च प्रयाजानां सम्बन्धाय स तया आप्रिया इज्यत इति याज्ञिकैर्मन्यते‡॥

यास्कस्यापि चैतदनभिमतम्; "आग्नेया इति तु स्थितिः"—इति अधिकरणान्ते हि वक्ष्यति§। एवं तर्हि अग्निरित्येतदेव समाम्नातव्यमासीत्, न इध्मः? इति। नैवम्। कस्मात्? समिद्धो अद्येत्येतदस्या साप्रिया मन्त्रलिङ्गमस्ति, न त्वग्निशब्दः; अतोऽस्यासमाम्नानम्, पौनरुक्त्यदोषाच्च। तर्हि अग्निशब्दोऽपि समानम्? इति चेत्, तदपि ह्याप्रियां नाप्नोति न, प्रैषिके समाम्नानात्, क्रियाविशेषत्वाच्च। आहूय चास्माकं देवान् यजति स एषोऽग्निः समित्कलापमिध्ममात्मत्वेनाभिसम्पन्नस्तदाख्यतामुपगतः तेनेध्माभिधानेनेज्यत इति

* "प्रैषेभिः प्रैषानाप्नोत्याप्रीभिराप्रीरहर्जन्यं। प्रयाजेभिरनुयाजान् वषट्कारेभिराहुतीः"—इति य० वा० स० १९. १९।

† "ओत् (पा० १, १, १५)"—सूत्रभाष्ये, परिभाषेन्दुशेखरे (१४) चैतद्व्याख्यानादिकं द्रष्टव्यम्।

‡ कथञ्च प्रयाजानामाग्नेयत्वं तद्वक्ष्यते दैवताध्यायान्तिमे खण्डे।

§ उपरिष्टाद्दैवताध्यायेऽस्मिन्नेव खण्डे। अधिकरणं च पञ्चाङ्गविचारः। तदाहाधिकरणमालायां माधवः—"एकैकस्याधिकरणस्य विषयः, सन्देहः, सङ्गतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवाः।"—इति।

इध्मशब्दः समाम्नातो नाग्निशब्द इति। सर्वत्र शाकपूणेरेव माप्रीष्वग्न्यर्थान्यभिधानानि *॥

शाकपूणिपक्षे मन्त्रयोजना—हे भगवन्! अग्ने! 'समिद्धः' यः त्वं सन्दीप्तः, 'अद्य' अस्मिन्नहनि, 'मनुषः' मनुष्यस्य 'दुरोणे' यज्ञगृहे 'देवः' दाता, दीपनः, द्योतनो वा, 'देवान्' दातॄन्, दीप्तान् वा 'यजसि' 'जातवेदः!' हविषा यजमानानां जातप्रज्ञान! स त्व मस्माक मपि हे 'मित्रमहः' मित्राणा मुपकारप्रवृत्त! 'चिकित्वान्' जानानः स्व मधिकारम्, आहूय देवान् यज चेति। किम्? ब्रूमहे —यस्मात् त्व मेव 'दूतः' सर्वयजमानानां भवसि। 'कविः' क्रान्तदर्शनः, 'प्रचेताः' प्रवृद्धप्रज्ञान इति॥

"तनूनपात्"—इति †। निर्वक्तव्यम्। तत्पुनरेतत् "आज्यम्" इति कात्यक्यः, "अग्निरिति शाकपूणिः"। यथा तावदाज्यं तथा निरुच्यते—"नपात्—इति अननन्तरायाः प्रजाया नामधेयम्" या पितुरनन्तरा, पुत्राख्या सा भवति; अननन्तरा, पौत्राख्येत्यर्थः। किं कारणम्? सा हि "निर्णततमा भवति" कथम्? पुत्रस्तावत् पितुर्नीचैर्नतो भवति, ततोऽपि नीचैर्नततमः पौत्रः। तत्रैतस्मिन् पक्षे यः 'तनू'-शब्दः पूर्वपदं तनूनपाच्छब्दस्य, तेन "गौः" "उच्यते"। सा कस्मात्? "तता अस्यां भोगाः" क्षीरदध्यादयः। ततः किम्?

* नैरुक्ते "ऊर्द्धा अस्य समिधो"—इत्यादेर्व्याख्यानारम्भे "द्वादशाप्रीदेवत्या उष्णिक्षो विषमपादा आग्नेय्योऽग्निना दृष्टा। अग्निः प्रजापतित्वेन स्तूयते तेन प्राजापत्या अपि। 'ता आग्नेय्यः प्राजापत्या यदग्निरपश्यत तेनाग्नेय्यो यत् प्रजापति मप्रीणात् तेन प्राजापत्याः' इति श्रुतेः"—इति महीधरः।

† १भा॰ ४९१ पृ॰ ५ ख॰ २ ऋ॰ (२)।

"तस्याः पयो जायते" तस्या पुत्रः पयः; "पयसः आज्यं जायते" तस्मात् तस्याः पौत्रः। एवं गोः तन्वाख्यायाः नपात् आज्यम्। तस्मात् तनूनपात्*॥

अग्निपक्षे "आपः" "अत्र" अस्मिन् अग्नेः तनूनपात्वेन "तन्वः" उच्यन्ते"। ताः कस्मात्? "तता अन्तरिक्षे"। ततः किम्? "ताभ्यः ओषधिवनस्पतयो जायन्ते", "ओषधिवनस्पतिभ्यः" "एषः" अग्निः "जायते"। तस्मादयमपां पौत्रः†॥

"तस्य" तनूनपातः—आज्यस्य अग्नेर्वा प्राधान्यस्तुतिः "एषा" "भवति"—॥ २ (४)॥

तनूनपात् पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व। मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः॥ तनूनपात् पथ ऋतस्य यानान् यज्ञस्य यानान्मधुना समञ्जन्त्स्वदय कल्याणजिह्व मननानि च नो धीभिर्यज्ञं च समर्धय देवान् नो यज्ञं गमय नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंस-

* "तनूनपातं यजति, प्राणो वै तनूनपात्; स हि तन्वः पाति, प्राण मेव तद् प्रीणाति, प्राणं यजमाने दधाति।"—इति ऐ० ब्रा० २, १, ४।

† अत एवैरिके "तनूनपादसुरो"—इत्यस्य व्याख्याया माह महीधरः—"तनूनाम्=अपाम्, नपात्—पौत्रः"—इत्यादि। एवञ्च मध्यमस्थानसमाम्नातेन "अपांनपात् (२भा० ४०५पृ० ५अ० ४ख० ११)"—इत्यनेनास्य न किमपि पार्थक्य मत एवाच दशमे वक्ष्यति—"अपान्नपात्तनूनपात्ता व्याख्यातः"—इति। उ० १० अ० २पा० ५ख०।

न्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति तस्यैषा भवति ॥ ३ (६)॥

"तनूनपात् पथ ऋतस्य"—इति*। हे 'तनूनपात्' आज्य! त्व मुच्यसे। एतान् 'पथः' मार्गान् सर्वान् 'ऋतस्य' यज्ञस्य 'यानान्' हवींषि, यज्ञे यान्युत्सर्पन्ति, तानि 'मध्वा' मधुरेण स्वादेन 'समञ्जन्' सम्क्षयन् 'स्वदय' स्वादुना सापादय। हे सुजिह्व!; जिह्वया हि ते एतदेवं कुर्वन् 'मन्मानि' "मननानि" यानि च वयं मन्यामहे-ऽर्थवस्तूनि भवाण्येतानि नः स्युरिति, तानि स्वाभिः 'धीभिः' स्वैः कर्मभिः, अभिघारणालङ्करणोपस्तरणादिभिः† 'ऋन्धन्' संसाधयन् स्वगुणैरुपकुर्वन् 'समर्द्धय' सम्पादय। अपि चैवं कुर्वन्नेतं यज्ञं 'समर्द्धय' सम्पादय। या काचिदापदुत्पद्यते यज्ञस्य तं प्रायश्चित्तेनाङ्गभाव मुपगच्छन् "गमय" 'देवत्रा' "देवान्" प्रति, स्विष्ट मध्वर मस्माकं च कुरुष्वेत्यर्थः।—एतदाशास्महे त्वत्तः॥

"अग्निरिति शाकपूणिः"। हे भगवन्! 'अग्ने!' 'तनूनपात्' त्वम् एतान् 'पथः' 'ऋतस्य' यज्ञस्य 'यानान्' हवींषि, 'मध्वा' मधुरेण पाककृतेन रसेन 'समञ्जन्' समभिव्यञ्जयन् 'स्वदय' मृष्टीकुरु। हे 'सुजिह्वः' स्वर्चिः! अथ वा हे सुवाक्! एतान्येवं कुर्वन्नस्मदभि-

* "द्विराज्यस्योपस्तीर्य वपा मवदाय द्विरुपरिष्टादभिघारयति"—इति ऐ० ब्रा० २, २, ४। एवमादिक द्रष्टव्यम्।

† ऋ० सं० ८, ६, ८, २। य० वा० सं० आश्वमेधिके द्वादशाप्रीषु द्वितीया (२९. २६)।

मतान्यर्थवस्तूनि नः संसाधयन् ‘यज्ञम्’ ‘स्वध्वन्’ समर्द्धयन् स्वसाम-र्थ्याच्च ‘देवत्रा’ देवप्रविष्टं कुरु।—इत्येतदाशास्महे वयं त्वत्त इति॥

“नराशंसः*, यज्ञः इति कात्थक्यः”। कस्मात्? “नराः अस्मिन् आसीनाः शंसन्ति”। नरशब्दः पूर्वपदम्, आसेर्निष्ठान्तस्य मध्यम्, शंसतेरुत्तरपदम्। अथ कोऽर्थः? ‘नराः’ मनुष्याः ‘अस्मिन्’ ‘आसीनाः’ उपविष्टाः ‘शंसन्ति’ इति नराशंसः। “अग्निरिति शाकपूणिः”। स कस्मात्? “नरैः” “प्रशस्यः” स्तुत्यः “भवति”[†]॥

“तस्य” नराशंसस्य “एषा भवति” प्राधान्यस्तुतिः—॥७(६)॥

**नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैः। ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या॥ नराशंसस्य महिमानमेषामुपस्तुमो यज्ञियस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि चेति वा तान्त्राणि चावापिकानि चेति वेल ईट्टेः स्तुतिकर्मण इन्धतेर्वा तस्यैषा भवति॥ ७ (६)॥**

“नराशंसस्य महिमानं मेषाम्”—इति[‡]। वर्त्तमान एव कर्मणि

---

* १ भा० ४६१ पृ० ५ अ० ७ ख० ४।

† “नराशंसं यजति। प्रजा वै नरो वाक् शंसः, प्रजां चैव तद् वाचं च प्रीणाति, प्रजां च वाचञ्च यजमाने दधाति।”—इति ऐ० ब्रा० २, १, ४। अस्ति च नराशंस-नाराशंसयोर्भेदः नाराशंस-पदव्याख्यानन्तु नवमे (९) वक्ष्यति। १ भा० ४६४, ४६६ पृ० (१) द्रष्टव्यम्।

‡ ऋ० सं० ५,१,१,१। य० वा० सं० आश्वमेधिके द्वादशाप्रीषु तृतीया (२९,२७)

ब्रवीति। योऽयमेषामभिमतफलदाता नराणां नराशंसो यज्ञः, द्रव्यदेवतात्यागात्मकः प्रयोगः, तस्य अधिष्ठाता; तद्धाग्नौ देवता-विशेषे जगदुत्पत्त्यनुग्रहबीजम्। 'नराशंसस्य' वयम् ('उपस्तोषाम') "उपस्तुमः" उपगम्य चेतसा 'महिमानं' माहाभाग्यम् विभूतिं 'स्तुमः' अभिकीर्त्तयामः। 'यजतस्य' "यज्ञियस्य" यजनसम्पा-दयितुः, प्रयोक्तुरभिमतफलसम्पादयितुः 'यज्ञैः' कर्मभिः युक्ताः उप-स्तुमः। तदेवमेतस्मिन्नुपस्थितमहिम्नि नराशंसे यज्ञे किमपरस्तु। —इत्याशास्महे। 'ये' 'सुक्रतवः' "सुकर्माणः" जगदनुग्रहप्रवृत्ताः 'शुचयः' निर्णिक्तसर्वपापाः 'धियं धाः' स्वाधिकारयुक्तानां कर्मणाम् अनु-वि-"धारयितारः", प्रज्ञानां वा। एवमादिगुणयुक्ताः 'देवाः' ते 'स्वदन्ति' "स्वदयन्तु" तानि ('हव्या', "हवींषि" 'उभयानि'। यदि सौमिकः पशुः, ततः "सोमं च" "इतराणि" पशुपुरोडाश-धानाप्रभृतीनि; अथ पृथक् सोमात्, ततः "तान्त्राणि" प्रयाजाज्य-भागस्विष्टकृत्प्रभृतीनि, "आवापिकानि च" प्रधानहवींषि*।—इत्ये-तदाशास्महे॥

"अग्निरिति शाकपूणिः"। योऽयमेषामभिमतोपकारकारी, नराणां प्रशस्यः, नराशंसोऽग्निः, तस्य वयम् 'उपस्तोषामः' "उप-स्तुमः" 'महिमानं' 'यजतस्य' यज्ञसम्पादयितुः 'यज्ञैः' कर्मभिः

* "यो वै यज्ञं नराशंसपङ्क्तिं वेद, नराशंसपङ्क्तिना यज्ञेन राध्नोति। द्विना-राशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनमेष वै यज्ञो नराशंसपङ्क्तिर्नराशंसपङ्क्तिना यज्ञेन राध्नोति य एवं वेद।"—इति ऐ॰ ब्रा॰ २, ३, ६। अत्रैव पुरोडाशधानादीनां हविष्पङ्क्तित्वं च वर्णितम्।

"परिबर्हणात्" परिच्छेदनात्; लूनं हि तद् भवति, परिवृढं वा *। "तस्य एषा" बर्हिषः प्राधान्यस्तुतिः "भवति"—॥ ५(८)॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम्। व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्॥ प्राचीनं बर्हिः प्रदिशा पृथिव्या वसनायास्याः प्रवृज्यते अग्रे अह्नां † बर्हिः पूर्वाह्णे ‡ तद्विप्रथते (वितरं ‡) विकीर्णतर मिति वा विस्तीर्णतर मिति वा वरीयो वरतर मुरुतरं वा देवेभ्यश्चादितये च स्योनं स्योन मिति सुखनाम स्यतेरवस्यन्त्येतत्सेवितव्यं भवतीति वा द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा तासा मेषा भवति॥ ६(९)॥

"प्राचीनं बर्हिः"—इति ‡। प्राच्यां दिशि यदस्थितं गतं जातं प्रागग्रं वा यत् स्तीर्यते, तद् भवति 'प्राचीनम्'। किम्पुनस्तत्? 'बर्हिः' "प्रवृज्यते" प्रच्छिद्यते लूयते, अथ वा "प्रवृज्यते" प्रस्तौ-

---

* "बर्हिर्यजति। पशवः वै बर्हिः, पशूनेव तत् प्रीणाति, पशून् यजमाने दधाति"—इति ऐ० ब्रा० ९, २, ४।

† "प्रवृज्यतेऽग्रेऽह्नां" क, च।

‡ नास्त्येतत् पदम् क-ख-ग-घु-ङ-कोषु।

‡ ऋ० सं० ८, ६, ४। य० वा० सं० आप्यमधिके द्वादशाप्रीषु पञ्चमी (२९,२९)।

र्यते। किम्पुनरेव मेव स्व-मनीषिकया? नेत्युच्यते,—"प्रदिशा" विधि-वाक्येन प्रागुदग्वा बर्हिश्छिनत्तीति सामर्थ्यात्, अथ वा "प्रदिशा" प्रस्तरणमन्त्रेण "देवस्य त्वा" -इत्यनेन *। स्तरणपक्षेऽपि "प्राचीनं बर्हिः स्तृणाति" इति विधिवाक्यम्, "ऊर्णम्रदा पिप्रथस्व"—इति † मन्त्रः। किमर्थं पुनस्तत् प्रवृज्यते? 'पृथिव्याः वस्तोः अस्याः'। पृथिवी वेदी, तस्याः 'वस्तोः' "वसनाय" आच्छादनाय। कदा च पुनस्तत् प्रवृज्यते? 'अग्रे अह्नाम्' "पूर्वाह्णे"; तदा हि प्रशस्यते दर्भस्तरणं लवनं वा। तत्प्रवृत्तं वा यथाकालं विविधं 'प्रथते'। विस्तीर्यते वेद्यां छाद्यमानायाम्। प्रवृज्यमाणं वा प्रस्तीर्यमाणं वा विप्रथते। 'वितरम्' विस्तीर्णादपि "विस्तीर्णतरम्", 'वरीयः' "वरतरम्" अन्येभ्यो यज्ञाङ्गेभ्यः श्रेष्ठतरम्, तदाधारत्वाद्धविषाम्; "उरुतरं वा" बहुतरं वा। किमर्थं पुनस्तत् प्रवृज्यते, विप्रथते वा? 'देवेभ्यः' "च", अदितये' "च" कथं नाम 'स्योनं' "सुखं" स्यादिति; बर्हिषा हि सगुणीकृतात्कर्मणो देवानां हविर्दातॄणां यजमानानाम् अभीप्सितेन फलेन योगो भवति, तत्सुखम्। 'अदितये' पृथिव्यै; बर्हिषा हि सगुणीकृतात् कर्मणस्त्वाहुतिद्वारेण वृष्टिर्भवति, तत ओषधिप्ररोहः। तत्सुखम्॥

नात्र ब्रवीत्यग्निरिति। तेन यज्ञाङ्ग मेवाभिमत मेतदिद मप्यस्या-चार्यस्य च तद्द्वारेणैव व्यवधानेनाग्निः स्तूयते, ऽपृथिव्यायतनत्वात्

* य० वा० सं० १, १० ; ११ ; २४ । ६, १० ; ३८। ११, ६, १८। १८, २०, २०, २ । ९७, ६ । ३८, १ ।

† ऋ० सं० १, ८, ११ ४ । यचौषा मेकादशर्चं आप्रीसूक्तं इयं चतुर्थी ।

नस्य। अपरे पुनरग्निवदपि योजयन्ति मन्त्रार्थदृशः। तत्पक्षे बर्हि-रित्यन्वभिधानम्*। प्रागच्यते प्रणीयत इति 'प्राचीनं बर्हिः' प्रवृक्कमाहवनीयाख्यं ज्योतिः। "प्रवृज्यते" प्रणीयते तत्पुनः 'प्रदिशा' वचनेन प्राङ्मुद्धरन्तीति। 'पृथिव्याः' वस्तोः "वसनाय"; अग्निनैव हि वेदिरनग्निका भवति। 'अग्रे अह्नाम्' "पूर्वाह्णे" तद्विविधं 'प्रथते' सामिधेनीप्रक्षेपात्। आज्यभागाधारादिषु च विस्तीर्णतरं विक्षिप्ततरं प्रथते। 'वरीयः' "वरतरम्" अन्येभ्यो ज्योतिर्भ्यः; "उरुतरं" महत्तरं "वा" 'देवेभ्यः' यजमानेभ्य इतरेभ्यो वा, 'अदितये' "च" पृथिव्यै कथं नाम 'स्योनं' स्यादिति॥

"स्योनम्-इति सुखनाम"†। "स्यतेः" धातोः अवपूर्वात्, तदेव हि "अवस्यन्ति" व्यवस्यन्ति, निवसन्ति प्राणिनः। "सेवितव्यं भवतीति वा" तद्धि सर्वस्य सेवनार्हं भवति॥

"द्वारः"-इति‡। निर्वचनम्। "यज्ञगृहद्वार इति कात्थक्यः"। ताः पुनरेताः "जवतेर्वा" जवन्ति हि ताभिः। "द्रवतेर्वा"। धात्वन्यत्वं सर्वथैकत्वम्। "वारयतेर्वा" वारणीया हि द्वारादेव निवार्यन्ते। "तासाम्" "एषा" प्राधान्यस्तुतिः "भवति"—॥ ६(८)॥

**व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः। देवीर्द्वारो बृहतीर्विश्व मिन्वा देवेभ्यो भवत**

* य० व० सं० २८, ११ "देवम्बर्हिः" इत्यादि मन्त्रव्याख्यानं द्रष्टव्यम्।
† नैघण्टुकस्मरणार्थमिदम्। १ भा० २१४, २१७ पृ० ३ अ० ६ ख० (१५)।
‡ १ भा० ४९१, ४९२ पृ० ५ अ० २ ख० (७)।

सुप्रायणाः॥ व्यञ्चनवत्य उरुत्वेन विश्रयन्तां पतिभ्य इव जाया ऊरू मैथुने धर्मे शुशोभिषमाणाः* वरतम[†] मङ्ग मूरू देव्यो द्वारो बृहत्यो महत्यो विश्व मिन्वा विश्व माभिरेति यज्ञे गृहद्वार इति कात्थक्योऽग्निरिति शाकपूणिरुषासानक्तोषाश्च नक्ता चोषा व्याख्याता नक्तेति रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ताव्यक्तवर्णा तयोरेषा भवति॥ ७ (१०)॥

"व्यचस्वतीः"—इति [‡]। 'याः' एताः विविधेनाञ्चनेन गमनेन युज्यन्ते 'व्यचस्वतीः', ताः। किं कुर्वन्तु ? 'उर्विया' उरुत्वेन महत्त्वेन 'विश्रयन्ताम्' विश्रियन्ताम्। कथम् ? 'पतिभ्यः न जनयः' "पतिभ्य इव जायाः" यथा पतिभ्यो जाया "ऊरू मैथुने धर्मे" विवृण्वन्ति ("शुशोभिषमाणाः") शोभयितु मिच्छमानाः प्रहर्षात्, एवं विश्रयन्ताम्। इदानीं मुत्तरोऽर्द्धर्चः प्रत्यक्षकृतः।— याः यूयं व्यञ्चनवत्यः एवं विश्रयध्वे, ततो ब्रवीति—हे "देव्यः" दानक्रियाहेतुभूताः! 'द्वारः !' "बृहत्यः" "महत्यः" 'विश्वम् इन्वाः' "विश्वम्" सर्वम् "आभिः" "एति" यज्ञोपकरण मिति विश्व मिन्वाः, यूय मुच्यध्वे। 'देवेभ्यः' एतेभ्यो हविर्दातृभ्यः ऋत्विग्भ्यः यजमानेभ्य इतरेभ्यो वा। 'सुप्रायणाः' सुप्रगमनाः 'भवत'।— इत्येतदाम्नाम्नहे॥

* "सुशोभिषमाणाः" म।

† "वरतर" क ख ग।

‡ ऋ० सं० ८, ६, ८, ५। य० वा० सं० आश्वमेधिके द्वादशाप्री षष्ठी (२९,५०)।

"अग्निः इति शाकपूणिः"। तत्पक्षे योजना।— अग्निरर्चिषो द्वारः। जवनात् द्रवणाद्वा। हविर्वा. ताभिर्जवति द्रवति वा, वारयति वा रक्षःप्रभृतीनीति द्वारः। 'व्यचस्वतीः' याः एताः विविधेनाञ्चनेन तद्वत्यः अग्नेरर्चिषः। ताः उरुत्वेन 'विश्रयन्ताम्'। कथम्? "पतिभ्य इव जायाः" ऊरू मैथुने धर्मे शोभयितु मिच्छमानाः। या यूयं विविधेनाञ्चनेन तद्वत्यः. यास्तैवं विश्रयध्व, ततो ब्रवीमि*। हे "देव्यः" "बृहत्यः" 'विश्व मिन्वाः' सर्वं हविर्याभिर्जवति, ता यूय मस्य हविषः 'सुप्रायणाः' सुगमनाः 'भवत' इति † ॥

"उषासानक्ता"—इति ‡ एकपदम्। अस्य विग्रहः—"उषाश्च नक्ता च"। अत्र "उषा व्याख्याता"—"उच्छतीति सत्या" इति§। "नक्तेति रात्रिनाम" ‖। तत् कस्मात्? "अनक्ति', क्लेदयति "भूतानि" "अवश्यायेन"—इति। अवश्य मेतदायन्तीत्यवश्यायाः प्रुष्वा। अनक्तेरकारलोपे नक्ता। "अपि वा नक्ता अव्यक्तवर्णा। नकारः प्रतिषेधे ; न अक्ता, न व्यक्ता, अनक्ता। यथा अहः सर्वं मभिव्यक्तरूपं भवति, न तथा रात्रिः। "तयोः" "एषा" प्राधान्यस्तुतिः "भवति"—॥७(१०)॥

आ सुष्वयन्ती यज॒ते उपा॑के उषासा॒नक्ता॑ सद॑-
तां नि योनौ॑। दि॒व्ये योष॑णे बृह॒ती सु॑रु॒क्मे अधि॒ श्रियं॑

---

* "ता वो ब्रवीमि" ख।

† "दुरो यजति। हविर्वै दुरो। हवि मेव तत् प्रीणाति, हवि मन्नाद्यं यजमाने दधाति"—इति ऐ० १, १, ४।

‡ १ भा० ४११, ४१२ पृ० ५ ख० २ म० (८)।

§ २ भा० ११३ पृ० १ ख० ६ पा० १ ख०।

‖ एतच्च निघण्टौ रात्रिनामसु पठितम्। १ भा० ४१ पृ० १ ख० ७ ख० (१०)।

शुक्रपिशन्दधाने ॥ सेष्मीयमाणे इति वा सुष्वापयन्त्या-विति वा सीदतामिति वा न्यासीदतामिति वा यज्ञिये उपक्रान्ते दिव्ये योषणे बृहत्यौ महत्यौ सुरुक्मे सुरोचने अधिदधाने शुक्रपेशसं श्रियं शुक्रं शोचतेर्ज्वलतिकर्म्मणः पेश इति रूपनाम पिंशतेर्विपिशितं* भवति। दैव्या होतारा दैव्यौ होतारावयं चाग्निरसौ च मध्यमस्तयोरेषा भवति ॥ ८ (११) ॥

"आ सुष्वयन्ती"—इति†। 'आसुष्वयन्ती' "सेष्मीयमाणे" परस्परं स्मयमाने, अथ वा "सुष्वापयन्त्यौ" सुप्तु जनान् स्वापयन्त्यौ। 'यजते' हेतुकर्त्तृत्वेन यजते "यज्ञिये" यज्ञसम्पादयित्र्यौ। 'उपाके' "उपक्रान्ते" उपगम्य इतरेतरं क्रान्ते। 'दिव्ये' दिविजे द्योतने। 'योषणे' सम्मिश्रे परस्परतः। 'बृहती' "बृहत्यौ महत्यौ"। 'सुरुक्मे' "सुरोचने" सुदीप्ते। ये एते एवमादिगुणयुक्ते उषासानक्ते 'अधिश्रियम्' श्रियम् "अधिदधाने" उपरि स्थापयन्त्यौ, ('शुक्रपिशम्') "शुक्रपेशसम्" शुक्ररूपां श्रियम्, ('आसदताम्') "आसीदताम्" एतस्मिन् स्वे "योनौ"। आकार उत्कृष्यते उपसर्गस्य हि क्रियापदेन सामर्थ्यम्,—"न्यासीदताम् इति" नियमेनासीदतामिति; निरुत्तरपदस्थोऽप्युपसर्गस्य तेनैव क्रियापदेन‡। नि-शब्दश्चोत्तरपदो वा पादपूरणः ॥

* "पिशतेर्विपिंशितं" क, ख, ग।

† ऋ० सं० ८,९,८,९। य० वा० सं० आश्वमेधिके ब्राह्मणेषु सप्तमी (२९,३१)।

‡ "छन्दसि परेऽपि। व्यवहिताश्च"—इति पा० सू० १, ४, ८१-८२।

न ब्रवीत्यग्निरिति, येन द्वित्वानुपपत्तिरिति केचित्। अपरे पुनर्वर्णयन्ति—उषा अह्नेर्दीप्तिः, नक्ता आकृतिर्दीप्तिः; शमयति तमः, आकृतिरनक्त्याञ्जेन। ते एते दोषाकृतौ मध्ये स्मयमाने इव 'यजते'। 'यज्ञिये' यज्ञसम्पादयित्र्यौ। 'उपाके' "उपक्रान्ते" परस्परतः। 'दिव्ये' द्योतने परस्पराश्रयणात्। 'योषणे' मिथोभूते। ('बृहती') बृहत्यौ, महत्यौ"। 'सुरुक्मे' "सुरोचने"। 'अधिदधाने' 'शुक्रपिशम्' "शुक्रपेशसम्"। एतस्मिन् यजमाने 'श्रियम्' ('आ मदताम्', "आमोदताम्"। एतस्मिन्नग्नौ "आमोदताम्" नियमेनाधिकं वा—इत्येतदाशास्महे*॥

"पेश इति रूपनाम†", "पिंशतेः' धातोः; तद्धि "विपिंशितं भवति" विकसितं भवति, यावदाश्रयभावित्वात्। विलिखित मिति केचिदन्याश्रितत्वात्॥

"दैव्या होतारा"—इति‡ वक्तव्यम्। "दैव्यौ होतारौ"—इति शब्दसमाधिः। "अयञ्चाग्निरसौ च मध्यमः"—इत्यभिधेयवचनम्। "तयोः" "एषा" प्राधान्यस्तुतिः "भवति"—॥८(११)॥

**दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै। प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः**

* "उषासानक्ता यजत्यहोरात्रे वा उषासानक्ताहोरात्रे एव तत्प्रीणात्यहोरात्रयो र्यजमानं दधाति"—इति ऐ० ब्रा० २, १, ४।

† स्मरणार्थमेतत्। अस्त्येव रूपनामसु निघण्टौ। १ भा० २१८ पृ० ३ अ० ७ ख० (१०)।

‡ १ भा० ४११, ४१२ पृ० ५ अ० १ ख० (९)।

**प्रदिशा दिशन्ता ॥ दैव्यौ होतारौ प्रथमौ सुवाचौ निर्म्मिमानौ यज्ञं मनुष्यस्य (मनुष्यस्य*) यजनाय प्रचोदयमानौ यज्ञेषु कर्त्तारौ पूर्वस्यान्दिशि यष्टव्यमिति प्रदिशन्तौ तिस्रो देवीस्तिस्रो देव्यस्तासामेषा भवति ॥ ६ (१२) ॥ ***

"दैव्या होतारा"—इति†। याविमौ "दैव्यौ होतारौ"। देवेषु भवौ दैव्यौ, देवावेव वा दैव्यौ; स्वार्थ एव तद्धितः। मनुष्यहोतारौ होतृ-मैत्रावरुणौ अपेक्ष्य‡। दैव्यौ होतारौ इति विशेषणम्। कौ पुनस्तौ? ('होतारा') "होतारौ" आह्वातारौ देवानाम्, वाय्वग्निकलक्षणौ§। ('प्रथमा') "प्रथमौ" मुख्यौ, मनुष्यहोतारावपेक्ष्य ('सुवाचा') "सुवाचौ" प्रशस्तवाचौ, सुस्तुतौ। 'मिमाना यज्ञम्' यज्ञनिर्मातारौ, नित्यं 'मनुषः' "मनुष्यस्य" 'यजध्यै' "यजनाय"।

* नास्त्येतत् पदं क-ख-ग-पुस्तकेषु।

† ऋ० सं० ८, ६, ९, १। य० वा० सं० चातुर्म्मासिके द्वादशाप्रीष्वष्टमी। १९.३२॥

‡ होता नाम ऋग्वेदी प्रधानर्त्विक्, मैत्रावरुणस्तु तस्य प्रधानसाहाय्यकारी ऋत्विक्। तयोस्तु धिष्ण्येषु मैत्रावरुणस्यापि धिष्ण्यमस्ति। "होता यजति * * * मैत्रावरुणो यजति"—इत्यादि तयोर्हौत्रविवरणं द्रष्टव्यम्। ऐ० ब्रा० ६, ६, १। "दक्षिणा आग्नीध्रातुः * * * दक्षिणं सक्थि मैत्रावरुणस्य"—इत्यादि च पश्वभागो द्रष्टव्यः। ऐ० ब्रा० ७, १, १। "मनो वै यज्ञस्य मैत्रावरुणो वाग् यज्ञस्य होता, मनसा वा इषिता वाग् वदति; यां ह्यन्यमना वदत्यसुर्या वै सा वागदेवजुष्टा"—इति च होतृ-मैत्रावरुणयोः सम्बन्ध उक्तः पर्यग्निविधौ। ऐ० ब्रा० २, १, ५।

§ "तौ याज्ञिकानां प्रि ..  द्वावग्नी (१, १, २५, १)"—इति, "अयश्च मध्यमस्थानश्चेत्युभौ (१, १, ११, ५)"—इति, "अग्नी पार्थिवान्तरिक्ष्यौ (१, ५, २१, १)"—इति, "अग्नी (७, ८, २१, १)"—इति, "अग्न्यादित्यौ (८, ६, ९, १)"—इति च ऋ० सं० सा० भा०। "दैव्या होतारा यजति प्राणापानौ वै दैव्या होतारा प्राणापानावेव तत् प्रीणाति प्राणापानौ यजमाने दधाति"—इति ऐ० ब्रा० २, १, ४।

'प्रचोदयन्ता' प्रचोदयमानौ 'विदथेषु' "यज्ञेषु" 'कारू' "कर्त्तारौ" ऋत्विजौ; नाग्निको यज्ञोऽस्तीत्यग्निर्निर्मिमीते, न चाभावनुपध्मातो वायुना ज्वलतीति वायुर्निर्मिमीते। विज्ञायते हि—"तस्मादेष नानुपध्मातो ज्वलति"—इति। स एष मैत्रावरुणो वायुर्गार्हपत्याद्-वदधियज्ञे वर्त्तमानस्य नित्यं चोदयिता, तन्मूलत्वाच्च यज्ञकर्मणः। तावेव देवाना माव्हातारौ उच्येते। यावेतावेवं 'प्रचोदयन्तौ' 'विदथेषु' यज्ञेषु, 'कारू' कर्त्तारौ मनुष्यहोतुः अनुयष्टव्य, नित्यं स्वाधिकारकर्मानुयष्टसन्निधानात्। यदेतत् ('प्राचीनं') प्राच्यां दिशि 'ज्योतिः' आहवनीयाख्यं प्रणीयते। प्रदिश्या मन्त्रेण प्राची मनु प्रदिशं प्रेहीति अनेन विधिवाक्यप्रदेशेन, अनेन वा "प्राञ्च मुद्धरन्ति"—इति। एतत् प्रणीय नित्यं यष्टव्य मित्येव मर्थं 'प्रदिशन्तौ' आज्ञापयन्ताविव यौ नित्य मनियोगेन स्वभावतो यज्ञोपकारे वर्त्तमानौ समाप्त्येवं वर्त्तेता मिति। एव माख्यात मध्याहृत्य समाप्यते, निराख्यातत्वान्मन्त्रस्य॥

"तिस्रो देवीः"—इति* पदम्। ताः पुनरेताः "तिस्रो देव्यः", प्रथमया ता निराह; तिस्र इति देवीशब्दस्य विशेषणम्। "तासाम् एषा भवति" प्राधान्यस्तुतिः—॥ ८ (१२)॥

**आ नो॑ य॒ज्ञं भार॑ती॒ तूय॑मे॒त्विळा॑† मनु॒ष्वदि॒ह चे॒तय॑न्ती। ति॒स्रो दे॒वीर्ब॒र्हिरे॒दं स्यो॒नं सर॑स्वती॒ स्वप॑सः**

* १आ० ४१२,. ४१३ पृ० ६खा० २खा० (१०)।
† "मु॒क्षिरो॑ा" क, ख, ग।

सदन्तु॥ ऐतु नो यज्ञं भारती क्षिप्रं भरत आदित्यस्तस्य भा इला च मनुष्यवदिह चेतयमाना तिस्रो देव्यो बर्हिरिदं सुखं सरस्वती च सुकर्म्माण आसीदन्तु त्वष्टा तूर्ण मश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा* स्यात्करोतिकर्मणस्तस्यैषा भवति॥ १० (१३)॥

"आ नो यज्ञं भारती"—इति†। आभिमुख्येन अस्माकं यज्ञ मागच्छतु। का पुनरसौ? इति। 'भारती' "भरत आदित्यः" सर्वभूतान्युदकेन बिभर्त्ति, "तस्य" स्वभूता "भाः" दीप्तिः। कथ मेतु? 'तूयम्' "क्षिप्रम्"‡। इला§ "च" पृथिवीस्थाना। "इहैवेलया‖ वसुमत्या"—इत्यनुयाजेषु उन्नीतसामर्थ्यात् पार्थिवत्वात्। ('मनुष्वत्') "मनुष्यवत्" 'इह' कर्मणि 'चेतयन्ती' "चेतयमाना" यथा मनुष्येण मनुष्य आहूतो भोक्तु मविलम्बमान आगच्छेत, क्षिप्र मेव मागच्छतु; सा ममेह कर्मणि हविर्भाक्तव्य मित्येव मर्थं जानाना। 'सरस्वती' "च" मध्यस्थानैव मेव 'चेतयन्ती' आगच्छतु। ता एताः¶ 'तिस्रः' अपि "देव्यः" 'स्वपसः' "सुकर्माणः" अस्मिन् कर्मणि 'इदं बर्हिः' 'स्योनं' "सुखं" प्राप्य एतस्मिन् ('आसदन्तु') "आसीदन्तु"।—इत्येतदाशास्महे**॥

---

* "॰स्त्वक्षतेर्वा" क, ख, ग।

† ऋ॰ सं॰ ८,१,८,१। य॰ वा॰ सं॰ आश्वमेधिके द्वादशाप्रीषु नवमी (२९.३३)।

‡ 'तूयं' शीघ्रम्—इति, क।

§ इळा—इति, ‖ "इहैवेडया—इति, ¶ एव मेताः—इति च ख-पाठाः।

** "तिस्रो देवीर्यजति प्राणो वा अपानो व्यानस्तिस्रो देव्यस्ता एव तत् प्रीणाति ता यजमाने दधाति"—इति ऐ॰ ब्रा॰ २, १, ४।

"त्वष्टा"—इति* वक्तव्यम्। अत्र तूर्णशब्दात् क्षिप्रवाचिनः पूर्वपदम्, अश्नोतेरुत्तरपदम्। क्षिप्रं व्याप्नोति, यदनेन व्याप्तव्यं भवति। "त्विषेर्वा" धातोः वृद्ध्यर्थस्य, वृद्ध एव नित्य समौ देवतात्वात्। "त्वक्षतेर्वा स्यात्" क्रियासामान्यमात्रवाचिनः, उत्कृष्टतनूकरणस्वार्थस्य†। "तस्य" "एषा" प्राधान्यस्तुतिः "भवति"—॥ १० (१३) ॥

**य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा। तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान्॥ य इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैरकरोद् भूतानि च सर्वाणि तमद्य होतरिषितो यजीयान् देवन्त्वष्टारमिह यज विद्वान् माध्यमिकस्त्वष्टेत्याहुर्मध्यमे च स्थाने समाम्नातोऽग्निरिति शाकपूणिस्तस्यैषापरा भवति ॥ ११ (१४) ॥**

"य इमे द्यावापृथिवी"—इति§। 'यः' "त्वष्टा" 'इमे' "द्यावापृथिव्यौ" सर्वेषां भूतानां "जनयित्र्यौ" 'रूपैः' नानाविधैः अनेकप्रकारैः "अकरोत्" "भूतानि च सर्वाणि"। अथ वा रूपैरिति कर्त्तैवानया तृतीयया लक्ष्यते ;— तत्तद्रूप मास्थाय 'यः' त्वष्टा द्यावा-

---

* १भा० ४६१, ४६२ पृ० ५ख० २ख० (११)।

† "तक्षू, त्वक्षू तनूकरणे"—इति धा० भ्वा० ६५५, ६५६।

‡ 'माध्यमकस्त्वष्टेत्याहुर्मध्यमे" क, ख, ग।

§ ऋ० सं० ८, ६, ६, ३। ऋ० वा० सं० आप्रसंधिके द्वादशाप्रीषु दशमी (१६, १४)।

पृथिव्यावकरोत् भूतानि च सर्वाणि * । किं तस्य त्वष्टुः? तं देवम् 'त्वष्टारम्' 'इह' अद्यैतस्मिन्नहनि कर्मणि वा हे होतः! 'यक्षि' यज 'विद्वान्' जानानः सयेद मवश्यं कर्त्तव्य मिति॥

माध्यमिकस्त्वष्टेति विचारः। तत्र तावत् "माध्यमिकः त्वष्टा—इति" "आहुः" आचार्याः, के चिन्नैरुक्ता एवं मन्यन्ते। 'माध्यमिकः'—इति सञ्ज्ञाप्रसिद्धिः। को हेतुः? "मध्यमे च स्थाने समाम्नातः"—इति †। किञ्च एतस्मिन्नेव मन्त्रे व्यपदेशात्। कथम्? य इमे द्यावापृथिव्यौ भूतानि च सर्वाण्यकरोत् तं देवं त्वष्टारं यजेति। त्वष्टुरन्यो यष्टा। स एव पुनः सम्बोध्यते हे होतरिति मनुष्यहोता; न चान्यः पार्थिवादग्नेर्होतास्ति ‡, तस्माद् यो यष्टा स पार्थिवः, य इज्यते स मध्यमस्त्वष्टेति। सर्वथान्त्यिमता माचार्यो देववर्द्धकिर्दाचायणीपुत्रो द्वादशाना मादित्याना मन्यतम इत्येतिहासिकाः §। कोऽत्र निश्चयः? अय मेव "अग्निरिति शाकपूणिः" ‖॥

कथं यत्तावन्मध्यमे च स्थाने समाम्नात इति? ¶ अकारणमेतत्—अय मप्यग्निर्मध्यमे स्थाने समाम्नात इति **। यत्पुनरेतद्

* "त्वष्टारं यजति। वाग् वै त्वष्टा, वाग्घीदं सर्वं ताष्टीव वाच मेव तत् प्रीणाति वाचं यजमाने दधाति"—इति ऐ० ब्रा० २, १, ४।

† १भा० ४०५ पृ० ५ख० ४ख० (२१)।

‡ "अग्निर्वै देवानां होता तस्यैष स्वो लोको यदुत्तरवेदी नाभिः"—इत्यादि ऐ० ब्रा० १, ५, २।

§ "तक्षेतिहास माचचते"—इत्यादि च वक्ष्यत्याचार्यः ११ अ० १ पा० १० ख०।

‖ अतएव "इह त्वष्टारम् (ऋ० सं० १, १, २५, ४)"—इत्यस्या व्याख्यायां "त्वष्टारं त्वष्टृनामक मग्निम्"—इत्याह सायणः।

¶ इहैव ४३६पं० ; ४००पृ० १०पं० मूलेऽपि।

** १भा० ४०५ पृ० ५ख० ४ख० (२२)।

व्यपदेशात् इति?* तदपि समान मिन्द्रेणापि त्वष्टृव्यपदेश इति—त्वष्टा दधदिन्द्राय शुष्म मिति†; अपि च व्यपदेशादन्यत्व मित्यशक्य मध्यवसातुम्: अनन्यत्वेऽपि हि व्यपदेशो भवति। तद्यथा—"अग्नि मग्न आवह"—इति। हे अग्ने! भगवन्! अग्निम् आवह इति व्यपदेशे सत्यनन्यत्वम्; न हि पार्थिवादन्यः सूक्तभाग् हविर्भाग् वा अग्निरस्ति, योऽनेन प्रसिद्धहोतृत्वाभिधानेनाह्वयेत, दृश्येत च—"स्वं महिमान मावह"—इति। स्विष्टकृति विशेषलिङ्गात् स्वय मेवात्मनात्मानं विधिवशात् आह्वानेन संस्कृत्य द्वैधं त्रैध मनेकधा वा यजति, अन्यद्वाभिनिर्वर्त्तयति। तद्वदिहापि कर्मात्मनः परो योऽस्य तत्क्षणक्रियालक्षणगुणम्, योग्यात्मा यदधिष्ठितः; कर्मात्मा सर्वरूपाणि पाकेन विकरोति। केन विकरोति? त मधिकृत्य उच्यते—"त्वष्टा रूपाणि विकरोति" इति‡। तदथ मुच्यते—मनुष्यहोत्रा यज त्व मिति। एवं तावद् व्यपदेशः शक्यप्रतिसमाधानः। यत्पुनरुक्तं देवशिल्पीति? § तत्तद्गुणसामान्याद्देवासावपि कौशलातिशय मपेक्ष्योच्यत इत्यदोषः॥ ॥

* पुरस्तादिहैव ४८२पृ० ७पं०।

† "त्वष्टा दधच्छुष्म मिन्द्राय"—इति य० वा० सं० २०, ४४।

‡ "त्वष्टा रूपाणि स हि प्रभुः (ऋ० सं २, ४, ९, ४)"—इत्यत्राह सायणः—"त्वष्टा यज्ञसाधनपात्राभिमानी देवः, रूपाणि योनौ सृष्टानि रेतांसि रूपाणि कर्त्तुं प्रभुर्हि। हि शब्दः अत्यन्तप्रसिद्धिद्योतनार्थः। 'रेतस्य सिक्तस्य त्वष्टा रूपाणि विकरोति'—इति श्रुतेः"—इति।

§ पुरस्तादिहैव ४८१पृ० ११पं०।

‖ तथा च "त्वष्टास्मै वज्रं स्वर्य्यं ततक्ष (ऋ० सं० १, ४, २१, २)"—इत्यस्य व्याख्यायाम् "त्वष्टा विश्वकर्मा, वज्रं ततक्ष तनूकृतवान्"—इत्याद्याह सायणः।

यथा चाग्निरेव नान्यः, तथा विशिष्टतरलिङ्गा "अपरा" ऋग् 'भवति"—॥ ११ (१४)॥

आविष्ट्यो वर्द्धते चारुरासु जिह्मानामूर्द्ध्वः स्वयशा उपस्थे। उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते ॥ आविरावेदनात्तत्यो वर्द्धते चारुरासु चारु चरतेर्जिह्मं जिहीतेरूर्द्ध्व उच्छ्रितो भवति * स्वयशा आत्मयशा उपस्थ उपस्थाने। उभे त्वष्टुर्बिभ्यतुर्जायमानात् (प्रतीची सिंहं प्रति जोषयेते †)। द्यावापृथिव्याविति वाहोराचे इति वारणी इति वा प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते ॥ १२ (१५)॥

॥ इति अष्टमाध्यायस्य द्वितीयः पादः ॥ ८.२.

"आविष्ट्यो वर्द्धते"—इति ‡। 'आविः' प्रकाशः। स कस्मात्? "आवेदनात्" सर्वस्य प्रकाशनात्। तस्मात् "तत्यः" तस्य तनिता 'आविष्ट्यः'। किंलक्षणः? 'चारुः' चरणशीलः, अनवस्थितः। किं करोति? 'वर्द्धते'। क्व? 'आसु' क्रियासु, प्रज्ञासु वा प्रसवाय। कस्य? 'जिह्मानाम्' कुटिलचेतसामपि मनुष्याणाम् अवैषम्येण

* "जिहीतेरूर्द्ध्व मुद्गतं भवति"—इति क, ख. ग।

† नास्त्येतत् क-ख-ग-पुस्तकेषु।

‡ ऋ० सं० १, ७, १, ५.=१, ९५, ५। "अस्य सूक्तस्यौषसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवता"—इति सा० भा०।

ऊर्द्ध मेव ज्वलति ; कुटिलाना मपीन्धनाना मकुटिल ऊर्द्ध मेवेति केचित् । एव मेव 'वर्द्धते'। 'स्वयशाः' "आत्मयशाः" पर मनाश्रित्य यशस्वी । 'उपस्थे' "उपस्थाने" यत्रासावुपनतस्तिष्ठति 'आविष्टः'। योऽय मेवमादिगुणयुक्तः त्वष्टा, तस्य 'त्वष्टुः' अग्नेः 'जायमानाद्' एव 'उभे' द्वे अपि 'बिभ्यतुः'। के पुनस्ते? "द्यावापृथिव्यौ इति"। यथाय मतिमहान् वर्द्धते, अवश्य मय मावां धक्ष्यतीति। "अहो-रात्रे इति वा"। सकृदुपज्वलिते महत्यग्नावनुपशाम्यति । अहो-रात्रयोरर्थवत्त्वाभावः। तस्मात् ते अपि बिभ्यतुः। अपि नामाय मेव मतिप्रवृद्धः आवा मन्यतर मनुच्छिन्द्यादिति *। "अरणी इति वा"। अवश्य मय मावां जातो यतो यदा तदा धक्ष्यतीति अतः अरणी अपि बिभ्यतुः। एवं बिभ्यत्यौ किं कुरुतः? नान्या गतिरस्तीति 'प्रतीची' नाम तं प्रत्यञ्चिते अभिमुखे 'सिंहं' "सह-नम्" अभिभवनम् 'प्रति जोषयेते' "प्रत्यासेवेते" उपकारकत्वेन ; कथं नाम य मावां न भस्मसात् कुर्यादिति ॥

एव मय मेवाग्निरिह त्वष्टेति ॥ १२ (१५) ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशस्य (अष्टमस्य) अध्यायस्य द्वितीयः पादः ॥ ८.२.

* "मुच्छिन्द्यादिति" ख ।

...Mohsin
Hooghly


॥ तृतीयः पादः ॥

## वनस्पतिर्व्याख्यातस्तस्यैषा भवति ॥ १ (१६) ॥

"वनस्पतिः" * अवसरप्राप्तः । स पुनरय मभिधेयतोऽभिधानतश्च "व्याख्यातः"; "एष हि वनानां पाता वा पालयिता वा"—इति † । "तस्य" "एषा" प्राधान्यस्तुतिः "भवति"— ॥ १ (१६) ॥

**उपाव सृज त्मन्या ‡ समञ्जन् देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ उपावसृजात्मनात्मानं समञ्जन् § देवाना मन्न मृतावृतौ हवींषि कालेकाले वनस्पतिः शमिता देवो अग्निरित्येते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च तत्को वनस्पतिर्यूप इति कात्थक्योऽग्निरिति शाकपूणिस्तस्यैषापरा भवति ॥ २ (१७) ॥**

"उपावसृज"—इति ‖ । 'उप' आश्रित्य 'अवसृज' एतत् पश्चाख्यं 'पाथः' । अनाश्रितविशेषः;—किं सय मग्निर्वा, यूपो वा इत्युच्यते? उत (वा ¶) अन्य एव कश्चित्? इति । उत्तरेऽर्द्धर्चे वनस्पतिशब्दः प्रथमा-

* १आ० ४९१, ४९४ पृ० ५ प० २ ख० (११) ।

† परस्तादिहैवाध्याये १पा० ४ख० ४५४पृ० ५पं० ।

‡ "उपाव सृजन् त्मन्या"—इति क, ख, ग ।

§ "उपावसृजात्मनात्मन्यासमञ्जन्"—इति क, ख, ग ।

‖ ऋ० सं० ८, ९, ९, १० । य० वा० सं० आश्वमेधिके द्वादशात्रीषेकादश (२९, ३५) ।

¶ नास्त्येतत् पदं ख-पुस्तके ।

सम्बन्धात् परोक्षः ; इह पुनरुपावसृजेति मध्यमपुरुषयोगात् प्रत्यक्षः कोऽप्यभिधीयत इति सुतरा मनाश्रितविशेषः इति विचारास्पद मिति। अतः परं विचारयिष्यति—"तत् को वनस्पतिः?" इति। 'त्मन्या समञ्जन्' "आत्मना आत्मानम्" अस्य पशोः 'समञ्जन्' समभिव्यञ्जयन् विशिष्टेन संस्कारेण स्वाधिकारसम्बन्धिना *। 'देवानाम्' एतत् 'पाथः' "अन्नम" एतदमुनैव प्रकारेण 'ऋतुथा' च "ऋतावृतौ" "कालेकाले" षण्मासादौ 'हवींषि' चैतान्यन्यान्यपि आज्यप्रभृतीनि 'उपावसृज' देवेभ्यो देहीति। किञ्च ; 'वनस्पतिः', 'शमिता देवः', 'अग्निः'—"इत्येते त्रयः"। त्रिग्रहणाद् देवशब्दोऽग्निविशेषण मिति दर्शयति। वनस्पतिश्च शमिता चाप्रत्यक्षदेवते एव, असन्दिग्धश्च देवोऽग्निरित्येते त्रयः ('स्वदन्तु') "स्वदयन्तु" स्वाङ्गता मापादयन्तु। 'मधुना' चोदकेन प्रोक्षणाद्यभिप्रायं 'घृतेन' चैतदस्माभिः संस्कृतं पाथः। —इत्येतदाशास्महे॥

"तत् को वनस्पतिः?"—इत्यादि विचारः †। तत्र तावद् "यूपः इति कात्थक्यः"। कस्मात् यद्यप्येतस्या मापिया मनाविष्कृतोऽग्नेर्विशेषः, तथापीयम् "अपरा" यूपाञ्जनीया ऋक्; या सन्निपत्य यूपाञ्जने यूप मभिधानेन संस्करोति। तद्यथा——॥ २ (१७)॥

अ॒ञ्जन्ति॒ त्वाम॑ध्व॒रे दे॑व॒यन्तो॒ वन॑स्पते॒ मधु॑ना॒ दैव्ये॑-

* "समञ्जन् अतिव्यञ्जयन् विशिष्टेन सम्बन्धिना"—इत्येव ख।

† "वनस्पतिं यजति। प्राणो वै वनस्पतिः, प्राण मव तत् प्रीणाति प्राणं यजमाने दधाति"—इति ऐ० ब्रा० २, १, ४। "वनस्पतिं यजति। प्राणो वै वनस्पतिर्जीवं हास्य हव्यं देवानप्येति यत्रैवं विद्वान् वनस्पतिं यजति"—इति च ऐ० ब्रा० २, १, १०।

न। यदूर्द्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे। अञ्जन्ति त्वा मध्वरे देवान् कामयमाना वनस्पते मधुना दैव्येन घृतेन च यदूर्द्ध्वं स्थास्यसि द्रविणानि च नो दास्यसि* यद्वा ते कृतः क्षयो मातुरस्या (उपस्थे †) उपस्थाने अग्निरिति ‡ शाकपूणिस्तस्यैषापरा भवति ॥ ३ (१८) ॥

"अञ्जन्ति त्वा"—इति §। विश्वामित्रस्यार्षम्। पुरोरुक्। "देवेभ्यो वनस्पते"—इति च‖। हे यूप! 'अञ्जन्ति त्वाम्' म्रक्षयन्ति त्वाम् ऋत्विग्यजमानाः। क्व? एतस्मिन् 'अध्वरे' यज्ञे। किमिच्छन्तः? ('देवयन्तः') देवान् यष्टुं कामयमानाः। केन अञ्जन्ति? हे 'वनस्पते!' यूप! 'मधुना दैव्येन' संस्कृतेन "घृतेन" इत्यर्थः, देवानां यन्मधु; विज्ञायते हि—"देवानां मधु यद् घृतम्" इति ¶। किमित्यञ्जन्ति? 'यद् ऊर्द्ध्वः तिष्ठाः' यस्मात् अक्तः त्वम् "ऊर्द्ध्वः स्थास्यसि" अञ्जनादनन्तर मुच्छ्रयिष्यन्ति त्वाम्। यस्माच्च ते 'क्षयः' 'मातुः अस्याः' पृथिव्याः 'उपस्थे' उपरि। क्षयो निवासः, स्थैर्यार्थे

* "धास्यसि" क, ख, ग।

† "नास्त्येतत् क-ख-पुस्तकयोः।

‡ "उपस्थानेऽग्निरिति"—इति क, ख, ग।

§ ऋ० सं० ३, १, ३, १।

‖ इत्येवानुपदं दर्शयिष्यत्यय मेवाचार्यः।

¶ "ऐक्षत्तमो यूप मनुब्रूहीत्याहाध्वर्युरञ्जन्ति त्वा मध्वरे देवयन्त इत्यन्वाहाध्वरे ह्येनं देवयन्तोऽञ्जन्ति वनस्पते मधुना दैव्येनेत्येतद्वै मधु यदाज्यं यदूर्द्ध्वस्तिष्ठा द्रविणेह धत्तादु यद्वा क्षयो मातुरस्या उपस्थ इति यदि च तिष्ठासि यदि च शयासै द्रविण मेवास्मासु धत्तादित्येव तदाह"—इति ऐ० ब्रा० २. १, १।

भवट:। तस्मात्त्वमस्य मूर्द्धः स्थास्यसि। तथा स्थित्वा पशुधारण-समर्थः, प्रधानक्रियापूर्वाङ्गं * भावयित्वा तद्द्वारेण तत्फलानि "द्रविणानि च" अवश्यम् अस्मभ्यं "दास्यसि",-इत्यतः समञ्जन्ति ॥

एव मस्मिन् समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः। तस्माद् यूपो वनस्पतिरिति † ॥

"अग्निः इति शाकपूणिः"। कस्मादिहाप्युपावसृजेति। अस्यानाविष्कृतवनस्पतिशब्दार्थत्वाद् भवतु परोक्षो यूपः, परम्परा अस्य ऋत्विर्वहनलिङ्गलिङ्गिता पुरोरुक् यजतौ सन्निपत्याग्नेर्वनस्पतिशब्देन अभिधायिका ऋग् भवति। तद्यथा——॥ ३ (१८)॥

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम्।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभीरजिष्ठैः॥

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण ऋतपर्णापि वाप-मार्थं स्याद्धिरण्यवर्णपर्णेति प्रदिवस्ते अर्थं पुराणस्ते सोऽर्थो यं ते प्रब्रूमो यज्ञस्य वह पथिभीरजिष्ठैर्ऋजतमै-

* 'अग्निहोत्रहोमेन स्वर्गं कुर्यादिति प्रकरणकल्पितेन महावाक्येन स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः प्रयोगविधिः। * * *। अत्राग्निहोत्रहोमः प्रधानम्; प्रणयनादिकं सर्वं मङ्गम"—इति, "विहितनिषिद्धकर्मणां तत्तद्वाक्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्मणां कालान्तरभाविफलसाधनस्योपपत्त्यर्थं मध्यतः पुण्यपापरूप मपूर्वं कल्पते"—इति च मी० प०। विस्तरतस्तु द्वादशलक्षण्यां द्रष्टव्यम्।

† "यूपः सोऽग्निः कर्त्तव्यः"—इति, "पालाशं यूपं कुर्वीत, तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशस्तेजस्वी ब्रह्मवर्चसी भवति"—इत्येवमादि च ऐ० ब्रा० २, १, १।

रजस्वलतमैः* प्रपिष्टतमैरिति† वा तस्यैषापरा भवति॥ ४ (१९)॥

"देवेभ्यो वनस्पते"—इति। वसिष्ठस्यार्षम्। हे 'वनस्पते!' 'अग्ने!' 'हिरण्यपर्ण' हिरण्योपमपर्ण! (ज्वलित!‡) 'देवेभ्यः' 'हवींषि' 'वहि' "वह"। कथम्? इति। 'प्रदक्षिणित्' प्रदक्षिणं देवानां यो हविर्वहन-धर्मः, तेन; पितृधर्मविपरीतेन। कथं वहनम्? 'रशनया' 'नियूय' निबध्य, सुनिपुणं यथा न किञ्चिदपि अत्र हविरनवेक्षितं (धूमभूतेन?) प्रधस्येत, तथा। अपि च 'ऋतस्य' "यज्ञस्य" 'पथिभिः रजिष्ठैः' य एव प्रसिद्धाः पन्थानो यज्ञस्य हविर्वहनाय देवान् प्रति ऋजुभ्योऽपि "ऋजुतमैः" यैः कालो नातिदीर्येत; "रजस्वलतमैर्वा" अत्यर्थं सुद-कवद्भिः; ते हि पथिकानां सुखाः; "प्रपिष्टतमैः" इति सुरूपतमैः॥ प्रहततमस्कैर्यैः असम्मोहः स्यात्, गच्छतस्तैः; न च पुनरविदितैं कर्मणि त्वां विनियुञ्ज्महे। यतो ब्रूमः—'प्रदिवः ते अर्थम्' चिरन्तन मेव 'ते' 'अर्थं' हविर्वहनाधिकारलक्षणं विद्मः। "अयं यो होता"—इत्येवमादि-

* "॰ऋजुतमैः रजस्वलतमै॰" क, घ।

† "रजस्वलतमैस्सपिष्टतमैरिति" क, घ। "प्रपिष्टतमैरिति" क, ग।

‡,§ इमे पदे ख-पुस्तके न स्तः।

‖ वक्ष्यत्यपिमे खण्डे—पिष्टतमयेत्यस्यार्थः सुरूपतमयेति (४९० पृ॰ ८ पं॰), "पि-ष्टम्, पेशः"—इति रूपनामसु च (१भा॰ ३१८ पृ॰ ७ पं॰ ९, १०), परं मूलपुस्त-कयोः इत्तिपुस्तकयोश्च प्रपिष्टतमैरिति ठकारमध्यपाठ एव दृश्यते; पुरस्ताच्च षष्ठेऽध्याये चमवानिति पदस्य व्याख्यानावसरे "तपिष्ठैः तप्ततमैः तप्ततमैः प्रपिष्टतमैः" इत्येव (१८५ पृ॰ २ पं॰)। तदत्र तत्त्वं धीमद्भिरनुसन्धेयम्।

मन्त्रेभ्यो "देवा दधिरे हव्यवाहम्"—इति*। अतो ब्रूमहे वहेति॥

एव मेतस्मिन् मन्त्रे हविर्वहनसंयोगाद् वनस्पतिशब्दस्याग्नि-रभिधेयः॥

अथ "एषा" वनस्पतेः अग्नेः "अपराः" ऋक् "भवति" (सा पुनः किमर्थम्? इति। प्रायोवृत्त्युपदर्शनार्थं बहुषु मन्त्रेष्वग्निर्वनस्पतिरिति)—॥ ४ (१९)॥

**वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान्। वहा† देवत्रा दिधिषो हवींषि प्र च दातार ममृतेषु वोचः॥ वनस्पते रशनया नियूय सुरूपतमया वयुनानि विद्वान् प्रज्ञानानि प्रजानन्वह देवान् (यज्ञे‡) दातुर्हवींषि प्रब्रूहि च दातार ममृतेषु देवेषु स्वाहा-कृतयः स्वाहेत्येतत्सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा तासा मेषा भवति॥ ५ (२०)॥**

"वनस्पते रशनया"—इति। वनस्पतेरेव याज्या। हे 'वनस्पते!' 'रशनया नियूय पिष्टतमया' "सुरूपतमया" अन्यथं दृढया एवमादि-गुणयुक्तया रशनया नियूय अप्रध्वंसनाय निबध्य 'वयुनानि' स्वाधि-

* "अयं यो होता०———०देवा दधिरे हव्यवाहम्॥"—इति ऋ० सं० ८, १, ११, ६। अत्राह सायणः—"एव मग्निरात्मानं स्वय मेवाक्रवान्" इति। इत ऊर्ध्वं मध्यपि "देवा दधिरे हव्यवाहम्"—इति दृश्यते। एव मन्यत्रान्यत्रापि।

† "वह" क, च।

‡ नास्त्येतत् पदं क-ख-ग-पुस्तकेषु।

कारयुक्तानि "प्रज्ञानानि" अस्मदुपकाराय 'विद्वान्' "जानानः" 'वह' एतानि अस्मत्प्रत्तानि 'हवींषि'। अस्य 'दिधिषोः' "दातुः" यजमानस्य अभिमतफलप्राप्तये 'देवत्रा' देवान् प्रति प्रदातारम् 'अमृतेषु वोचः' कथयस्व एनं "दातारम्" 'अमृतेषु' "देवेषु"; अमुना यजमाने एतानि हवींषि प्रत्तानि ॥

एव मग्निर्वनस्पतिः॥

यत्पुनरेतदुक्तं यूपाञ्जनीयायाम्—"यूपे वनस्पतिशब्दः" इति *, अत्र ब्रूमः—अग्निरेवासौ यूपान्तर्गतो यूपात्मना वर्त्तमानो यूपाञ्जनीयायां वनस्पतिशब्देनोच्यते। तदुक्तम्—"एष हि वनानां पाता पालयिता वा"—इति †। यस्मादन्तर्गतो वनानां वनानि न दहति, तस्मादेष वनस्पतिः। उक्तञ्च—"योऽयं मृद्बीषे पृथिव्या मग्निरन्तरोषधिवनस्पतिषु अप्सु त मुन्निन्यथुः सर्वगणं सर्वनामानम्"—इति ‡। सोऽय मग्निरेवानेन वनस्पतिशब्देन यूपाभिधानेन वनस्पतिरभिधेय इत्यदोषः॥

अपरे पुनः "अञ्जन्ति त्वा"—इति§, अधियज्ञात् पृथक्त्वेनाधिदैवत मुत्पाद्य शाकपूणिमतेनाग्नि मेव वर्णयन्ति। यद्यप्यधियज्ञे अस्य यज्ञाङ्गाभिवादः, तदापि नाधिदैवत मग्नि मभिधातु मस्याः परिहीयते सामर्थ्यं मन्त्रार्थे इति। तत् कथम्? "अञ्जन्ति त्वा मध्वरे देवयन्तः"। हे भगवन् अग्ने! 'अञ्जन्ति त्वाम्' आघाराद्यभि-

* इहैव पुरस्तात् ४८८ पृ० ४ पं०।

† पुरस्तादिहैवाध्याये १पा० ४ख० ४५४ पृ० ५पं०।

‡ पुरस्तात् १८०पृ० १५पं० ९ख० ८ख०।

§ पुरस्तादिहैव पादे १ख० ४८६ पृ० १८ पं०।

राहुतिभिः 'अध्वरे' यज्ञे 'देवयन्तः' देवान् कामयमानाः। यस्मात् त्वम् 'ऊर्द्धः' स्थास्यसि ज्वलिष्यसि, यश्च ते 'क्षयः' 'मातुः' वेद्याः 'उपस्थे' "उपस्थाने" उपरि उत्तरवेद्याः 'क्षयः' निवासः कृतः, तत्रोपज्वलितो "द्रविणानि" धनानि यज्ञसिद्धौ यज्ञफलान्यस्माक मवश्यं "दास्यसि"—इति, अतस्त्वा माहुतिभिरञ्जन्ति ॥

कात्यक्यपक्षेऽपि "देवेभ्यो वनस्पते"-"वनस्पतेरशनया नियूय"—इत्यनयोरर्थयोजना।— हे 'वनस्पते' वानस्पत्य! यूप! त्व मुच्यसे। 'हिरण्यपर्ण' ऋतपर्ण! वह एतानि 'हवींषि' अनुत्थिते त्वयि न एतानि उह्यन्त इति त्व मेवैषां वोढा इति प्रतीमहे। कथञ्च पुनर्वह? 'प्रदक्षिणित्' यथैतानि वोढव्यानि अविपर्यस्यन्नेतेन विधिना 'रशनया' एतया त्रिवृता 'नियूय' परिवीय त्व मात्मानम् 'ऋतस्य' यज्ञस्य ये पन्थानः रजिष्ठाः प्रदिवः चिरम्, तत एवाय मर्थस्त्वया हवींषि वोढव्यानीति। विज्ञायते च "यूपेन वा आहुतयः स्वर्गं लोकं यन्ति"—इति ॥——॥ "वनस्पते रशनया नियूय"। हे 'वनस्पते' वानस्पत्य! यूप! * 'रशनया' पिष्टतमया सुरूपतमया त्रिवृता 'नियूय' परिवीय त्व मात्मानं वह एतानि 'हवींषि', स्वाधिकारप्रयुक्तानि प्रज्ञानानि प्रजानन् प्रति दिधिषोः हविर्दातुः अर्थसिद्धये। "प्रब्रूहि च" एनं दातारम् 'अमृतेषु' देवेषु इति ॥

"स्वाहाकृतयः" निर्वक्तव्याः। काः पुनस्ताः स्वाहाकृतयः? याः यागार्थ माहूय उत्तमे प्रयाजे स्वाहाकारेण संह्रियन्ते, ताः स्वाहा-

* सायणस्त्वेतन्मन्त्र मनुवदन्नेव व्याख्यातवान्—"वनस्पते! वनस्पतिविकार! यूप!"—इत्यादिना।

हुतय:। ननु "सद्यो जातः"—इत्याग्नेयो मन्त्रः (४९४पृ०)? सत्य माग्नेयो मन्त्रः शौनकस्य, तथापि स्वाहाकृतयः समाम्नाताः*। किं कारणम्? "सद्यो जातः"—इत्यनुद्रुत्य अग्नेः स्तुतिमन्त्रे "स्वाहाकृतं हविरदन्तु देवाः"—इति सम्प्रदानम्। तच्च देवतार्थं सम्प्रदान मिति स्वाहाकृतयः समाम्नाताः; नाग्निरिति†॥

अथ स्वाहाकृतयः कस्मात्? स्वाहास्वाहेत्यनुकीर्त्तनेनास्या मुत्तमस्य प्रयाजस्य प्रैषसंस्कारः क्रियत इति स्वाहाकृतयः॥

अथ "स्वाहा—इति एतत्" कस्मात्? "सु" सुष्ठु "आह"—"इति वा"। यदेव सम्प्रदानदेवतायै किञ्चिदाज्यस्येत्यनेन मन्त्रेणाह तुभ्य मिद मिति, तदेव "सु-आह" शोभन माह। एव मस्य 'सुः' पूर्वपदम्, 'आह'—इत्युत्तरपदम्‡। अथ वा इद मन्यत् ब्राह्मणानुगतं निर्वचनम्,—"स्वा वागाहेति वा" इति। विज्ञायते हि "तं स्वा वागभ्यवदज्जुहुधीति तत् स्वाहाकारस्य जन्म"—इति। अत्र च स्व-शब्दः पूर्वपदम्, उत्तरपदं तथैव। अथ "स्वं प्राह इति वा"। को विशेषः पूर्वस्मात्? पूर्वपदेऽस्य कारकान्यत्वम्;—स्वा वागाहेति कर्त्तरि, स्वं प्राहेति कर्मणि; प्रपूर्वं चोत्तरपदं प्रकर्षद्योतनाय।

* १भा० ४९१, ४९४पृ० ५ख० १ऋ० (१३)।

† "स्वाहाकृतीर्यजति। प्रतिष्ठा वै स्वाहाकृतयः, प्रतिष्ठाया मेव तद्यज्ञ मन्ततः प्रतिष्ठापयति"—इति ऐ० ब्रा० १, १, ४। "का देवताः स्वाहाकृतय इति? विश्वेदेवा इति ब्रूयात्। तस्मात् स्वाहाकृतं हविरदन्तु देवा इति"—इति च ऐ० ब्रा० १, १, २।

‡ "स्वाहाशब्दो हविःप्रदानवाची सन् एतन्नामक मग्निविशेषं लक्षयति"—इति ऋ० सं० १, १, १५, ९. ऋग्व्याख्याने सायणः।

"स्वाहाकृतं हविः जुहोति इति वा" यदनेनैव हविर्जुहोतीति. तदेत्र सुण्वापाद्य यथाभिधान मग्नौ जुहोतीति हविःप्रधानोऽत्र निर्देशः* ॥

"तासाम्" स्वाहाकृतीनाम् "एषा" "भवति"— ॥ ५ (२०) ॥

सद्यो जातो व्यमिमीत यज्ञ मग्निर्देवाना मभवत्पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः॥ सद्यो जायमानो निरमिमित यज्ञ मग्निर्देवाना मभवत्पुरोगामयस्य होतुः प्रदिश्यृतस्य वाच्यास्ये स्वाहाकृतं हविरदन्तु देवा इतीमा† आप्रीदेवता अनुक्रान्ता अथ किं देवताः प्रयाजानुयाजा आग्नेया इत्येके ॥ ६ (२१) ॥

"सद्यो जातः"—इति‡। योऽय मग्निः 'सद्यः' 'जातः' "जायमानः" अनन्तर मेव 'व्यमिमीत यज्ञम्' निर्वर्त्तयति यज्ञम्। यस्य जातमात्र एव 'अग्निः देवानाम् अभवत्' पुरोगाः' "पुरोगामी" अग्रतो गामी प्राधान्येन। तस्य 'अस्य' 'होतुः' देवाना माह्वातुः 'प्रदिशि' प्राच्यां दिशि 'ऋतस्य' गतस्य प्रणीतस्य उत्तरवेद्यादिकल्पेन, 'वाचि' "आस्ये" वाचीत्यास्य मेवापेक्ष्य§। 'स्वाहाकृतं' स्वाहाकार-

* "याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवन्ति, ताभ्यः स्वाहेत्येवैनान्याहवनीयं मवकृतिं जुहुयात्" --इति ऐ० ब्रा० ७, ९, १।

† "देवा इति यजन्ति। इतीमा" ङ, च।

‡ ऋ० मं० ८, ४, ९, ५। य० वा० मं० आश्वमेधिके द्वादशाप्रीमन्त्रा (२९,२९)।

§ "वाचीत्यास्य मपस्य मपलभ्यत इति पाठान्तर मेवापेक्ष्य"—इति च।

वशात् मन्त्रेण प्रक्षिप्तं 'हविः' एतदाज्यम् 'अदन्तु' पिबन्तु 'देवाः' स्वाहाकृतयः ॥

"इति" इतिकरणोऽधिकारसमाप्त्यर्थः, प्रदर्शनार्थो वा। ("इ-माः") एता एव एकादश "आप्रीदेवताः" "अनुक्रान्ताः" इध्माद्याः*। ननु, द्वादशाना मनुकीर्त्तनम्? सत्यम्! अनुक्रान्तानां तु एकादश वनस्पत्यन्ताः, यासा मिह विचारः; न तु स्वाहाकृतिषु विचारोऽस्ति। तद्देवतासंस्कारपरत्वात् उत्तमस्य प्रयाजस्य यजतौ एकादशग्रहणात् एकादशप्रयाजविषय एवोत्तरो विचार इत्याचार्याभिप्रायो गम्यते†। ततः किम्? यद्यनुक्रान्तास्तान् प्रति विचारो वर्त्तिष्यते। ननु विचारित मेव "यज्ञेध्म इति कात्थक्यः, अग्निरिति शाकपूणिः"—इत्येवमादि?‡ सत्यम्, विचारित मेतत्। स तु प्रत्येक माप्रीदेवतापदेषु विचारः, अयन्तु सामान्यः प्रकरणगतश्चासा मेव विचारोऽनिश्चितानां निश्चयावधारणार्थः; निश्चितेन हि व्यवस्थितेन विधिना भवितव्यम्; अधियज्ञे यजतौ देवताध्यानाङ्गभावश्रवणात् तदेतद्विषय मनिश्चितम् ॥

"अथ"—इति विचाराधिकारवाचिना अथशब्देन विचार मधि-

* १इध्मः (समिन्), २तनूनपात्, ३नराशंसः, ४इळः (ईड्यः), ५बर्हिः, ६द्वारः, ७उषासानक्ता, ८दैव्याहोतारा, ९तिस्रो देवीः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः। "अथात आप्रियः (४५९२० ९पं॰)"—इत्याद्यनुक्रान्ताः। अत्र च ब्राह्मणम्—"आप्रीभिराप्रीणाति। तेजो वै ब्रह्मवर्चस माप्रियस्तेजसैवैनं तद् ब्रह्मवर्चसेन समर्द्धयति"—इति ऐ॰ ब्रा॰ २, १, ४।

† "एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयाजाः, एतेऽसोमपाः पशुभाजनाः"—इति ऐ॰ ब्रा॰ २, २, ८।

‡ पुरस्तादिहैवाध्याये १पा॰ १ख॰ ४५९ पृ॰ ११पं॰।

इत्योपोद्धन्ति—"अथ किन्देवताः प्रयाजाः"—इति*। का प्रयाजेषु देवताः? इति। प्रयाज इति आश्रुतादियजमानोपस्थानान्तक्रियाकलाप उच्यते। प्रयाजेषु हूयमानेष्विति प्रसिद्धत्वात्। कुतः संशयः? नानादेवता एव प्रयाजप्रवादाः। आप्रीणां वषट्कारेण सम्बन्धात् सर्वस्य चान्यस्य समञ्जसो विशेषभावः। एवं सति विप्रतिपत्तिराचार्ययोः कात्थक्य-शाकपूण्योः। तस्माद् व्यवस्थाप्यत इति॥

कथं नानादेवताः प्रयाजप्रवादाः? इति। तत्र तावत् "आग्नेयाः इति एके"। कुतः? "आग्नेया वै प्रयाजा आग्नेया अनुयाजाः"—इति च ब्राह्मणम्†। तत्र ये एतस्मिन्नर्थे सौचीकेनाग्निना विश्वैश्च देवैः परस्परसंवादे दृष्टे ऋचौ। स हि किल सौचीकोऽग्निर्विश्वैर्देवैः सह संवदते। त मूचुः—'एहि नो हवींषि वह' इति। स तानुवाच—'यज्ञे भागोऽस्तु' इति। ते तं प्रत्यचुः—'वृणीष्व' इति‡। सोऽनयार्चा§ वव्रे—॥ ६ (२१)॥

* "प्रयाजवदनुयाजं कर्त्तव्यम्"—इत्यादि ऐ० ब्रा० १, १, ४। "प्रयाजानेवात्र यजन्ति"—इत्यादि च ऐ० ब्रा० १, २, ९।

† "तस्मादाहुराग्नेयाः प्रयाजा आग्नेया अनुयाजा आग्नेय माज्य माग्नेयः पुरोडाशः"—इति कौ० ब्रा०।

‡ वज्रभूतेन वषट्कारेण देवानां हविर्वहनेन च हतेषु भ्रातृषु कनिष्ठः सौचीको नामाग्निर्वषट्कारहविर्वहनाभ्यां भीतो देवेभ्यो निर्गत्यापः प्राविशत्। स च मत्स्यैः प्रदर्शितः सन्नवेष्टुमागतैर्देवैः सह "महत्तदुल्वम् (ऋ० सं० १०, ४,९-१०-११)—इत्यादि सूक्तत्रयेण संवादं कृतवान्। विशेषतो तैत्तिरीयके द्रष्टव्यम्। तै० सं० २, ६, ६।

§ इत उत्तर मेव प्रशंसमानयोराचष्टेति यावत्।

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्तभागम्। घृतञ्चापां पुरुषञ्चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः॥ तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः। तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः॥ आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणं छन्दोदेवता इत्यपरं छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजा इति च ब्राह्मणमृतुदेवता इत्यपरमृतवो वै प्रयाजाः पशवोऽनुयाजा इति* च ब्राह्मणं प्राणदेवता इत्यपरं प्राणा वै प्रयाजा अपाना अनुयाजा इति† च ब्राह्मणमात्मदेवता इत्यपरमात्मा वै प्रयाजाः प्रजा अनुयाजा इति‡ च ब्राह्मणमाग्नेया इति तु स्थितिर्भक्तिमात्रमितरत्किमर्थं पुनरिदमुच्यते यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट् करिष्यन्निति ह विज्ञायते तान्येतान्येकादशाप्रीसूक्तानि तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमिति नाराशंसवन्ति मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्त्यतोऽन्यानि तनूनपात्वन्तितनूनपात्वन्ति॥ ७(२२)॥

॥ इत्यष्टमाध्यायस्य तृतीयः पादः॥ ८. ३.

---

* "ऋतवो वै प्रयाजा ऋतवोऽनुयाजा इति च ब्राह्मणं पशुदेवता इत्यपरं पशवो वै प्रयाजाः पशवोऽनुयाजा इति"—क, ख।

† "प्राणा वै प्रयाजाः प्राणा वा अनुयाजा इति"—क, ख।

‡ "आत्मा वै प्रयाजा आत्मा वा अनुयाजा इति"—इति क, ख। "—प्रजानुयाजा"—इति च।

"प्रयाजान् मे अनुयाजांश्च"—इति*। हे विश्वेदेवाः! 'प्रयाजान्'† ('मे') मम 'केवलान्' अनन्यदेवतासम्पृक्तान्, अथ वा निरवशेषान्। 'ऊर्जस्वन्तं' रसवन्तं सर्वस्य 'हविषः' अवधार्य 'दत्तभागं' 'यज्ञे' 'घृतस्य' 'अपां' सारभूतम्, ताभ्य उत्पन्नम् पिबेय सर्वं प्रथम माज्यभागे। 'पुरुषं च ओषधीनाम्' ओषधिमयानाञ्च हविषो मम पुरुष-पुरोडाशम् एवं नित्यं मम भागः स्यात्। मम 'अग्नेः' हे 'देवाः!' 'दीर्घ मायुः अस्तु'; यथा मत्पूर्वे भ्रातरः हविर्वहन्तः वषट्कारप्रवृक्णाः, नाहं तथा म्रषीष्टेत्यभिप्रायः। त्रयः पूर्वेऽग्नयः प्रागभव्यं वहन्ते देवेभ्यः, तान् वषट्कारः प्रावृश्चतेति॥ ——॥ एव मुक्तास्ते अनयोत्तरर्चानुजज्ञिरे तस्य तं भागम्।—तव 'प्रयाजा अनुयाजाश्च केवल ऊर्ज्जस्वन्तो हविषः सन्तु भागाः' यथा त्वयोक्तम्। अपि च किं बहुना, 'तवाग्ने! यज्ञोऽय मस्तु सर्वः' त्वदधीन एवायं यज्ञः सर्वोऽस्तु, किञ्च 'तुभ्यं नमन्तां प्रदिशश्चतस्रः' प्रदिशोऽन्तर्भूता दिक्ष्वेव दिङ्निवासीनि भूतानि भोग्यत्वेन कल्पन्ता मित्यर्थः॥ एवं तावदाग्नेयाः॥

अथ नानादेवताः प्रवादा इति यदुक्तम्‡, तदनुप्रदर्श्यते— "छन्दोदेवता इति" एवमादि। तत् कोऽत्र निश्चयः? "आग्नेयाः

* ऋ० सं० ८, १, ११, २-४। सौचीक-देवमंवादसूक्तेषु प्रथम एव सूक्ते ऽष्टमी-नवम्याविमे ऋचौ। तत्र प्रथमा सौचीकस्य, उत्तरा विश्वेषां देवाना मिति।

† "प्रयाजान् प्रधानस्य प्रमुखे यष्टव्यानेतन्नामकान् हविर्भागान्, तथानुयाजान् च प्रधानाद् पश्चाद् यष्टव्यानेतन्नामकान्, केवलान् असाधारणान्"—इति अत्रैव सा० भा०। आ० श्र० १, ९. च द्रष्टव्यम्।

‡ पूर्वव्याख्यानाने ४९९ पृ० ४ प०।

इति तु स्थितिः" तु शब्दोऽन्यप्रवादनिवृत्त्यर्थः। केन विशेषहेतुना आग्नेयत्व मवध्रियते? ब्राह्मणं मन्त्रश्चोभय माग्नेयत्वे; ब्राह्मणान्येव केवलान्यन्यदेवतात्वे, एतस्माद् विशेषहेतोरवधारयामः—आग्नेयाः इति॥

अथ कि मन्यदन्यतमम्? इति "भक्तिमात्र मितरत्" छन्दोदेवता—इत्येवमादि। तदुक्तम्—"बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"—इति *। "कि मर्थं पुनरिद मुच्यते" किं विचारणे प्रयोजनम्? इति। "यस्यै देवतायै हविर्गृहीतं स्यात्, तां मनसा ध्यायेद् वषट् करिष्यन्"†—"इति ह विज्ञायते"। मनसेति नामभिः संहितं हविर्देवतायै देवता मुपेयादेवमर्थश्च सर्वत्र विचारः। तथा हि दर्शितम्—"यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते"—इति ‡। मनसेति किमर्थम्? केन वान्येन ध्यायेत्? इति। शृणु—सर्वेन्द्रियविषयप्रत्याहृतेन मनसा यथाश्रुतगृहीतभावितानां देवानां नानात्वेकत्वचिन्तेष्वात्मनो हृदये विज्ञानमयी मालिख्य प्रतिकृतिं तच्चोक्त्यानन्यमनास्तत्काल मधीत्य याज्यां वषट् करिष्यंस्तदनुचिन्तनसंस्कारसन्तानैकरसेन मनसा हविष्यभिसन्धाय देवतां ध्यायेत् इत्यस्य विशेषस्य द्योतनायार्थप्राप्तस्यापि मनसो ग्रहणं मनसा ध्यायेदिति §।

* सप्तमेऽध्याये वैश्वानरीयविचारे द्रष्टव्यम्। ४२९ पृ० २ पं०।

† "साक्षादेव तद्देवतां प्रीणाति, प्रत्यक्षाद् देवतां यजति"—इति च तच्छेषः। ऐ० ब्रा० ३, १, ८।

‡ पुरस्तात् ४९५ पृ० ८ पं०।

§ "मनसा वा इषिता वाग् वदति, यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा। * * *। तन्मनसैवैतया वाचा देवेभ्यो हव्यं सम्पादयति"—इति ऐ० ब्रा० २, ५, ९।

ब्राह्मणं चैतदर्थ मेवोक्त माचार्य्येण; अत्र हि विशेषतः पुरुषार्थो बवन्ध इति; अतोऽन्यथा हि देवताचिन्तनशून्यं कर्म एतस्मिन् प्रधान-काले विकल मित्यफल मेव स्यात्। एष एव च ध्यानकालो यजमानस्य, आहुतिप्रक्षेपकाले न तथाऽन्येषा मप्यध्वर्युप्रभृतीना माहुतिप्रक्षेपव्याप्टतानाम्; लक्षणं हि होतेति॥

"तान्येतानि एकादश आप्रीसूक्तानि" अनुक्रान्तानि। दशधा* दशतयीषु †, तेषा मेकादशं ‡ प्रैषिक मिति §। इतीमानीत्युपप्रद-र्शनार्थं मितिकरणः, एष एव तेष्वपि निर्वचनविचारावधारणकल्पः॥

यस्तु तद्गतः कश्चिद् विशेषः, स उच्यते—"तेषां वासिष्ठम् आत्रेयम्"—इत्येवमादि। वसिष्ठेन दृष्टं "वासिष्ठम्", अत्रिणा दृष्टम् "आत्रेयम्", वध्र्यश्वेन "वाध्र्यश्वम्", गृत्समदेन दृष्टं "गार्त्स-मदम्" ||। "कः पुनरसौ विशेषः? "इति" एतानि "नाराशं-सवन्ति"। । अथ पुनः "मैधातिथं, दैर्घतमसम्, प्रैषिकम्"

* "दशान्यानि"—इति च।

† दशसङ्ख्यकाः ऋक्शाखाः दशतय्यः उच्यन्ते, तत्र दशसङ्ख्याकानि आप्री-सूक्तानि विद्यन्ते इत्यर्थः। यथाहि—मैधातिथम् १, ४, १। (२) दैर्घतमसम् १, ११, १। (३) आगस्त्य माङ्गिरसं वा १, १४, ९। (४) गार्त्समदम् २, १, १। (५) वैश्वामित्रम् ३, १, ४। (६) वासुश्रुत मात्रेयं वा ५, १, ५। (७) वासिष्ठम् ७, १, १। (८) काश्यपम् ९, १, ५। (९) वाध्र्यश्वम् १०, ६, १। (१०) जामदग्न्यम् १०, ९, ११।

‡ "इद मेकादशं"—इति च।

§ वाज० सं० ५ का० ६ अनु० १सू० (११ प्र० ११ सू०) १—११ म०।

|| "इदं साम"—इति पा० ४, २, ७। इह सामेत्यविवक्षितम्। अतएव वसि-ष्ठेन दृष्टं सूक्त मपि वासिष्ठ मित्येव। भाष्यं द्रष्टव्यम्।

—इति । मेधातिथिना दृष्टं "मैधातिथम्", "दीर्घतमसा दृष्टं "दैर्घतमसम्" प्रैष इति ग्रन्थः, तेषु यत् तत् "प्रैषिकम्"—"इति" तद्दिशोपवर्णितम् । एतानि "उभयवन्ति" । । "अतः अन्यानि यानि चत्वारि अवशिष्यन्ते*, तानि "तनूनपात्वन्ति" ॥

अत्र नाराशंसयाजिनो वसिष्ठादयः, तेभ्योऽन्ये तनूनपाद्याजिनः । तान्येतानि अमुना विभागेनावस्थितानि एकादश एकनिर्वचनावधारणानि ॥

अतोऽन्यानि दाशतयादाप्रीसूक्तवर्गात् सौत्रामण्यां चीणि†, अन्यश्वमेधयोरेकैकम्‡ । तत्र यानि सौत्रामण्यां तानि अनाग्नेयानीति न परिसङ्ख्यातानि, प्रैषिकेन तु क्रमणात् तेषाम् । आग्निकाश्वमेधिके तु कर्मान्तरेऽपि विनियुज्येते ; न केवल माप्रीषु ; इष्टकोपधाने—आग्निक मुत्तमायां चितौ "समास्त्वाग्न ऋतवो वर्द्धयन्तु (य० वा० स० २७, १.)"—इति, द्वादशाप्रीरण्येष्विति । एतदेव माश्वमेधिकं यजमानस्य—"समिद्धो अञ्जन् कृदरं मतीनाम् (य० वा० स० २९, १)" —इत्याप्रीभिर्हस्तं गृह्णातीति । अत आप्रीकार्य्ये

* वासिष्ठं वैश्वामित्रं काश्यपेयं जामदग्न्यं चेति चत्वारि ।

† तथाहि—य० वा० सं० २०, ३६—४६. एकादशर्चः प्रथमस्य पशोः आप्रियः ; २०, ५५—६६. द्वादशर्चो द्वितीयस्य पशोराप्रियः ; २१, १२—२२. एकादशर्चं तृतीयस्य उत्तमस्य वा पशोराप्रियः ।

‡ तथाहि—य० वा० सं० २७, ११—२२. द्वादशर्चं आप्रियः आग्नेये इष्टकाचितौ ऐष्टिके इति वा । य० वा० सं० २९, १—११ ऋचः आश्वमेधिकाप्रिय इति विवेकः । अपरश्चैक माप्रीसूक्तं दृश्यतेऽश्वमेधे (य० वा० सं० २९, २५—३६), तच्च दृश्यतव्या मपि श्रूयते (१०, ९, ११), परिगणितश्च जामदग्न्य मिति, ततो नात्र तस्य पुनरुल्लेखः कृत इति ध्येयम् ।

प्रयोगव्यभिचारादाप्रीसूक्तवर्गमध्यपठिते अपि न परिसङ्ख्याते आचार्य्येण। सौत्रामण्यां तु प्रथमस्य पशोर्या द्वितीया आप्री, तस्यामेकस्यामेव च नराशंस-तनूनपातौ—“नराशंसः प्रति शूरोऽमिमानस्तनूनपात् प्रति यज्ञस्य धाम (य० वा० स० २० ३७)”—इति। तत्र नराशंसयाजिनां वसिष्ठप्रभृतीनां यागे निपातवत् तनूनपात्पद मनर्थकम्, पादपूरणमात्रेणोपकारं मन्त्रे करोति; तथा तनूनपाद्याजिनां नराशंसपदम्। एष एव अन्यत्राप्येवंविधे देवतापदे प्रयोगादन्यथाभाविनि देवतापदानां निपातकल्पः। तद्यथा—अश्वहविषि अश्वप्रतिग्रहप्रायश्चित्ते “यदद्य सूर”—इति सौर्य्यमित्रावरुणानां याज्यानुवाक्ये, तयोः मित्रार्य्यम्णो यानि लिङ्गानि तानि निपातवद्भवन्ति*। तथा ‘प्र चित्र मर्कं गृणते तुराय”—इति, अत्र सम्बोधनान्त मप्यग्निपदं नैपातिकम्†, केवलं मारुते हविषि चातुर्मास्येषु वैश्वदेवप्रयोगे पुनः तदेवार्थवत् “आग्निमारुतीं पृश्नि मालभेत वृष्टिकामः” —इत्यत्र च प्रयोगे। एष एव देवतापदविचारः‡॥

यस्मिन् पक्षे सर्वे आग्नेयाः प्रयाजाः—“प्रयाजान्मे अनुयाजांश्च केवलान् (ऋ० स० ८,१,११,३-४)”—इति मन्त्रदर्शनात्, तस्मिन्

* “यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगः॥”—इति य० वा० सं० ३३, २०। इह मित्र इति पद मर्यमा इति पदञ्चाप्रधान मिति भावः।

† “प्र चित्र मर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः॥”—इति ऋ० सं० ५, १, ८, ४। इह ‘अग्ने’—इति पद मप्रधान मिति भावः।

‡ “एवं दुरवबोधो देवतापदविचारः”—इति क।

पक्षे 'तिस्रो देवीः'—इत्यत्र* 'भारती द्युस्थाना', 'मध्यस्थाना सरस्वती', 'पृथिवीस्थाना इला'—इति च तद्देवतात्रयं दुःप्रतिसमाधानम्। स्थानान्तरापत्तिस्तुत्या चाग्निरेव एता देवता इति प्रतिसमाधानम्। सौत्रामण्यां तूत्तमे पशौ "समिद्धो अग्निः समिधा सुसमिद्धो वरेण्यः"—इत्येता आप्रियः (य० वा० स० २१, १२—२२)। तासु तनूनपादेवैकः—"तनूनपाच्छुचिव्रतः"—इति (१३), नास्त्येव नराशंसः। तत्र नराशंसयाजिनां सौत्रामणीप्रयोगे कथं प्रयोगः?—किं तनूनपाच्छुचिव्रत इत्येतदेव प्रयुज्यताम्,—उतान्यतः कुतश्चिदाप्रीसूक्तादाहियतां नराशंस इति? न्यायविदो मेधाविनः समनुशंसन्ते विशेष मिति† ॥ ५ (२२) ॥

इति ऋज्वर्थायां निरुक्तवृत्तौ त्रयोदशस्य (अष्टमस्य) अध्यायस्य तृतीयः पादः॥ ८। ३॥

इति ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिनः आचार्य्यभगवद्दुर्गस्य कृतौ त्रयोदशः (अष्टमः) अध्यायः समाप्तः॥ ८॥

* पुरस्ताद्दिवैताध्याये ९ पादे ४७७ पृ० ४ पं०; ४७८ पृ० १८पं०।

† एष हि प्रश्नोऽशक्यप्रतिसमाधान इति मन्वान आह एविकम् 'न्यायविदः'—इत्यादि।

(द्रविणोदाःकस्माद्द्रविणोदाद्रविणोदसोमेद्यन्तुतेऽ-
यातश्चाप्रियःसमिद्धोअद्यतनुनपान्नराशंसस्याजुह्वानः-
प्राचीनंवर्हिर्व्यचस्वतीरासुष्वयन्तीदैव्याहोतारानोयज्ञं-
यइमेआविष्योवनस्पतिरुपावसृजाञ्जन्तित्वादेवेभ्योव--
नस्पतेरग्ननयासद्योजातःप्रयाजान्मे द्वाविंशतिः ॥*)

॥ इति निरुक्ते (उत्तरषट्के) अष्टमोऽध्यायः ॥ ८ ॥

* १भा० १४५पृ० "**" द्रष्टव्यम्।

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES.

Nos. 119, 151, 160, 171, 477, and 480.



# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SÁMAS'RAMÍ.

VOL. I.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1882.

# निरुक्तम् ।

## ( निघण्टुः )

अत्रिगोत्रश्रीदेवराजयज्वकृत'निर्वचन'नामटीकासहितम् ।

श्रीलश्री

वङ्गदेशीयासियातिक्समाजाभ्यर्थनया व्ययेन च

काव्यधीतवेदादि-वङ्गसामगेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

सम्पादितम् ।

**प्रथमो भागः ।**


कलिकाताराजधान्याम्

वामिसमिश्रम्यन्त्रे मुद्रितम् ।

शकाब्दाः १८०४ ॥

॥ अथ ॥

# ॥ निरुक्त(निघण्टु)-पठितपदानामकारादिक्रमेण सूची ॥



| पदम् | अर्थः | पृष्ठम् |
|---|---|---|
| मन्युः | क्रोधः | २९५ |
| ,, | मध्यस्थानदेवता | ४८० |
| ममसत्यम् | सङ्ग्रामम् | २७० |
| मयः | सुखम् | १९६ |
| मरुत्वाः | रश्मयः | ९७ |
| मरीचिपाः | ,, | ,, |
| मरुत् | हिरण्यम् | १२ |
| ,, | रूपम् | १२१ |
| मरुतः | ऋत्विजः | २५१ |
| ,, | मध्यस्थानदेवताः | ४८५ |
| मर्ताः | मनुष्याः | १८१ |
| मर्त्याः | ,, | १८० |
| मर्दति | गच्छति | २५० |
| ,, | हन्ति | २८० |
| मर्याः | मनुष्याः | १८० |
| मलिम्लुचः | स्तेनः | २६५ |
| मल्मलाभवत् | ज्वलत् | १५९ |
| महः | उदकम् | ११७ |
| महत् | ,, | ११६ |
| ,, | महत् | २९९ |
| महयति | अर्चति | २२६ |
| महाधने | सङ्ग्रामे | २७६ |
| महिषः | महान् | २०१ |
| मही | पृथिवी | १९ |
| ,, | वाक् | ९२ |
| ,, | गौः | ११० |
| मांश्चत्वः | अश्वः | १५० |
| माकिः | सर्वपदसमाम्नानाय | २९९ |

| पदम् | अर्थः | पृष्ठम् |
|---|---|---|
| मामरः | मद्यः | १४२ |
| मायते | [illegible]ते | २४४ |
| माया | प्रज्ञा | २२६ |
| मायुः | वाक् | ८५ |
| मातृकः | क्रुध्मः | २९७ |
| मार्ष्टि | गच्छति | २५७ |
| मान्दिन | महान् | २०४ |
| मित्रः | मध्यस्थानदेवता | ४७६ |
| मिनाति | गच्छति | २५६ |
| ,, | हन्ति | २८५ |
| मिनोति | ,, | ,, |
| मिमिड्ढि | याचस्व | २५२ |
| मिमीहि | ,, | ,, |
| मियक्षति | गच्छति | २२६ |
| मिम्यति | ,, | २४२ |
| मील्हः | धनम् | २२४ |
| मील्हम् | ,, | ,, |
| मीळ्हम् | ,, | ,, |
| मीळ्हे | सङ्ग्रामे | २७१ |
| मुषीवान् | स्तेनः | २६४ |
| मूषः | मूषिकाः | २९० |
| मृत्युः | मध्यस्थानदेवता | ४८४ |
| मृधः | सङ्ग्रामान् | २७२ |
| मेघः | मेघः | ७१ |
| मेधः | यज्ञः | २४७ |
| ,, | मेधावी | २९८ |
| मेधा | धनम् | २२७ |
| मेधाविनः | मेधाविनः | २९८ |

॥ इति ॥

---



# ॥ अध्यायानां खण्डानाञ्च सूची ॥

# निरुक्तम्।

अथैषा महती विप्रतिपत्तिः—किमिदं निरुक्तमिति? वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदाङ्गत्वप्रतिपादके शिक्षावाक्ये अन्यतमस्य निरुक्तस्यैव नाम श्रूयते न तु निघण्टोः। तथाहि—

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षु र्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥"-इति।

परं निरुक्तग्रन्थदर्शनात् विशेषतस्तदारम्भप्रस्तावदर्शनादेव स्फुटमुपलभ्यते नासौ कश्चिन्मूलग्रन्थोऽपि तु समाम्नायसङ्गृहीतपदपेटिकारूपस्य 'निघण्टु'-नामकस्य कस्यचित् टीकाग्रन्थ एवायमिति। तथाहि—"समाम्नायः समाम्नातः, स व्याख्यातव्यः; तमिमं समाम्नायं निघण्टव इत्याचक्षते"—इत्यादिः। तदत्र ऋक्संहिताभाष्यावतरणिकायामुक्तः सायणीयसिद्धान्त एव शरणम्। तद्यथा—

"अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य वसवः वाजिनः देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते। एतावन्ति पृथिवीनामान्येतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहितत्वात्। तदेतन्निरुक्तं त्रिकाण्डम्। तच्चानुक्रमणिकाभाष्ये दर्शितम्—

'आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा ।
तृतीयं दैवतं चेति समाम्नायस्त्रिधा मतः ॥
गोशब्दादिपारपर्यन्तमाद्यं नैघण्टुकं मतम् ।
जहाद्युल्बऋबीसान्तं नैगमं सम्प्रचक्षते ॥
अग्न्यादिदेवपत्न्यन्तं दैवतं काण्डमुच्यते ।
अग्न्यादिदेवताः क्षोणीस्थानाः इति सम्मताः ॥
वाय्वादयो भगान्ताः स्युरन्तरिक्षस्य देवताः ।
सूर्यादिदेवपत्न्यन्ता द्युस्थानदेवता इति ॥
गवादिदेवपत्न्यन्तं समाम्नायमधीयते ॥'-इति ।

एकार्थवाचिनां पर्यायशब्दानां सङ्घो यत्र प्रायेणोपदिश्यते, तत्र निघण्टुशब्दः प्रसिद्धः; तादृशस्यामरसिंह-वैजयन्ती-हलायुधादिषु दश निघण्टव इति व्यवहारात्। एवमत्रापि पर्यायशब्दसङ्घोपदेशात् आद्यकाण्डस्य नैघण्टुकत्वम्। तस्मिन् काण्डे त्रयोऽध्यायाः। तेषु, प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि; द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि। तृतीये तदुभयद्रव्यगततनुबहुत्व-ह्रस्वत्वादिधर्मविषयाणि॥ निगमशब्दो वेदवाची। यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात्। तस्मिन्निगमे एव प्रायेण वर्त्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात् तस्य काण्डस्य नैगमत्वम्॥ पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवत्वं विस्पष्टम्॥ पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपेक्षितया पदार्थस्योक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम्॥ तद्व्याख्यानञ्च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्या

स्तान्नाम्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः ॥"

एवञ्च निघण्टो रेवापरं नाम निरुक्तम्; किञ्च तात्स्थ्यात् तच्छन्ददतिन्यायात् यास्ककृतैव तदीयटीकापि निरुक्तमेवोच्यते इति फलितम् । अतो निरुक्तसम्पादने प्रवर्त्तमानेन मया आदौ निघण्टु-नामकनिरुक्तं ततश्च तट्टीका यास्कीया निरुक्तमिति प्रसिद्धा सम्पाद्यते; तत्र च यास्कीयनिरुक्ते आद्यकाण्डस्य प्रतिपदनिर्वचनादर्शनात् द्वितीयतृतीयकाण्डयोश्च व्याख्यातेष्वपि पदेषु प्रकृति-प्रत्ययादीनां स्फुटमनुपलब्धेः अपरापि टीका देवराजीया ऋज्वर्थनामिका निघण्टु-ग्रन्थेन साकमापाद्यते ॥

अथ निघण्टु-पाठभेद-सङ्ग्रहायापादित-पुस्तकानां नामकरणादिकं ज्ञाप्यते—

क . . . ऋज्वर्थाभिधटीकापुस्तकम् । विवरणम्—पत्राणि १६१, प्रतिपृष्ठपङ्क्तयः ११, पत्रपरिमाणम् १२ × ५॥ इञ्च । जीर्णमन्पाशुद्धम् ।

ख . . . मत्क्रीताधीतपुस्तकम् । वि०—प० २६, प्र० पृ० पं० ७, प० प० ६।। × ४ इञ्च । प्राचीनं शुद्धञ्च ।

ग . . . काशीवासि-मङ्गलदेवपुस्तकम् । वि०—प० १९, प्र० पृ० पं० ८, प० प० ९॥ × ३॥। इञ्च । प्राचीनतमं शुद्धञ्च ।

घ . . . ऋज्वर्थाभिधापरटीकापुस्तकम् । वि०—प० ३२, प्र० पृ० पं० १३, प० प० १०॥ × ४॥ इञ्च । अर्द्धाधिकखण्डितं स्पर्शासहमतिजीर्णमतिशुद्धञ्च ।

ङ . . . रडल्फरोथ-प्रकाशित युरोपमुद्रितपुस्तकम्। ग्र.दृम।

च . . . आदित्यारामसमाजीयपुस्तकम्। नि०—प्र ८, पृ० ५ पं०१०, प० प०१२ - ४। इत्थं। नवीनमताङ्कम्।

A, B, C, । रडल्फरोथ-सङ्गृहीतपुस्तकानि।
D, E, F । एषां विवरणानि तत्रैव द्रष्टव्यानि॥

पु०—पुरस्तात् द्रष्टव्यम्। प०—परस्तात् द्रष्टव्यम्।

मुद्रितातिरिक्तानामेषां लिपिकालनिर्णयेऽसमसमर्थः क ख च-पुस्तकेष्वलेखात् इतरेष्वलिमपत्राभावाच्च।

एषु:—ख, ङ, च, A, B, F-एषां षण्णामेकादर्शानुलिपित्वमिवैक्यं दृश्यते प्रायः सर्वत्रैव। येऽपि भेदा च-पुस्तके दृश्यन्ते, ते तु नूनमादर्शाक्षरबोधभ्रमसमूलका एवेति स्फुटमनुभूयते; सम्भाव्यते हि तुल्याकारप्रायाणां षकाररकारादीनां नागराक्षराणां भेदबोधानभिज्ञेन केनचिद् वाङ्गेन तथा लिखितं, यथा "रिपः"-इति लेखे 'रियः'-इति। एवं ग, C, D, E-इत्येषां चतुर्णामपि एकादर्शानुलिपित्वमिवेति।

अथ क-घ-पुस्तके द्वे एव कलिकातासंस्कृतविद्यामन्दिरादापादिते। तत्र घ-पुस्तकन्तु ऋज्वर्थटीका-सारसङ्गृहीतं ग्रन्थान्तरमिव बुध्यते, तस्य क-पुस्तकापेक्षया बहुशो न्यूनत्वदर्शनात्। परमनयोः प्रतीकपाठे ऐक्यमेव सर्वत्र प्रायः; क्वचित् ख-श्रेणीपुस्तकैः क्वचिच्च ग-श्रेणिकैश्च साम्यमपि। इह च सर्वत्रैव प्रायः क-पुस्तकमेव प्राधान्येनावलम्ब्यते, टीकायास्तदनुयायित्वात्; यत्र यत्र च टीकया सह टीकाधृतपाठस्य विरोधो लक्ष्यते, तत्र तत्र तु टीकासम्मतपाठः खादिपुस्तकीयोऽपि गृह्यत एव क्रियते च क-पुस्तकस्यानादरः॥

सम्पादकः।

# ॥ निरुक्तम् (निघण्टुः) ॥

## टीका-भूमिका ॥



महत्स्वत्यन्तकान्तारसञ्चारिकरिणं मुखे* ।
मदान्धदैत्यमातङ्गभङ्गे† केसरिणं‡ भजे ॥ १ ॥

नमस्त्रिधाम्ने शिपिविष्टनाम्ने§
निरुक्तविद्यानिगमप्रतिष्ठाम् ।
अवाप यास्को विविधेषु यागे-
ष्वनेन|| चाम्नायमभिष्टुवानः ॥ २ ॥

प्रणमामि यास्कभास्करं योहृत्तमसः प्रकाशितपदार्थः ।
यस्य भुवनत्रयीमिव गावः¶ प्रकटां त्रयीं वितन्वन्ति ॥ ३ ॥

वागीश्वरं वचोभिर्वसिष्ठमुख्यान्मुनींस्तपोभिश्च ।
अनुकृतवन्तं वन्दे पितामहं देवराजयज्वानम्? ॥ ४ ॥

---

* यस्य मुखं दृष्ट्वा अयं करीति बुध्यते, तमित्यर्थः । करी चासौ कीदृश इत्युच्यते तस्य विशेषणं कान्तारसञ्चारीति । कान्तारस्य च विशेषणं महत्स्वत्यन्त इति । अत्र त्रयी, पक्ष वेदत्रयपरम्, पक्षे त्रिलोकीपरम् ।

† मदान्धदैत्यरूपमातङ्गानां भङ्गं पराजयं दलनं वा दृष्ट्वा यः केसरीत्युपलभ्यते तम् ।

‡ यस्य देवस्य मुखदर्शनात् अयं करीति विक्रमदर्शनाच्चायं केसरीति बुध्यते, तं करित्वकेसरित्वोभयधर्माक्रान्तं महाबलं गजाननं देवं भजे इत्यर्थः ।

§ शिपिविष्टोऽत्र सविता, स च जगत्प्रभावता; ब्रह्म आदित्यो वा विचारान्तरम् । ( निरु० ५, ७-८-९ । ऋ० सं० ७, ९९, ७;—१००. ५;—६ ) ।

|| 'अनेन' सवित्रा प्रेरित एव 'यास्कः' [तथा च श्रूयते 'धियो यो नः प्रचोदयात्' ऋ० सं० ३, ६२, १०]; 'विविधेषु यागेषु' विविधयागसिद्ध्यर्थं [निमित्तात् कर्मयोगे ( २, ३, ३६ वा० )—इति सप्तमी ] 'आम्नायमभिष्टुवानः' सन् 'निरुक्तविद्यानिगमप्रतिष्ठाम्' 'अवाप' अतस्तस्मै नम इत्यर्थः ।

¶ किरणाः ।

तत्र तु 'दिवश्चादित्यस्य च साधारणनामानि स्वरादीनि षट्'—'इदमादीनि, च उपमाभेदात् भेदनामानि द्वादश'—'प्रपित्वे अभीके इत्यादीनि च षड्विंशतिश्च' भाष्यकारेण बहुवक्तव्यत्वात्* प्रकरणश एव निरुक्तानि,† स्कन्दस्वामिना च व्याख्यातानि‡। अतोऽन्येषां§ यथाक्रमेणानिरुक्तैर्निगमाप्रदर्शनाच्च स्वरूपमात्रमध्ययनादेवावगन्तव्यम्||। तच्चाध्ययनं कलियुगे प्रायेण विच्छिन्नसम्प्रदायमासीत्। ततश्च कोशएव¶ शरणमासीत्। तेषु च केषुचिद्-ग्रन्थेषु लेखकप्रमादादिभिः कानिचित्पदान्यधिकान्यासन्, अन्येषु च कानिचिन्न्यूनानि, अपरेषु च कानिचिदपहाय कानिचित् विश्रस्तानि अन्तराणि च विपर्यस्तानि। एवं व्याकीर्णेषु कोशेषु नियमैकभूतस्य प्रतिपदनिर्वचन-निगमप्रदर्शनपरस्य कस्यचिद् व्याख्यानस्याभावात् नैघण्टुकं काण्डमुत्सन्नप्रायमासीत्।

ततश्च पाठसंशोधनार्थं बालानां सुगमत्वाय च तद्गतानां पदानां क्रमेण प्रतिपदनिर्वचननिगमौ प्रदर्शयितुं**,—स्वरादीनीति पूर्वमुक्तस्य

* अन्यच्च बहूनि वक्तव्यानीति धियेति यावत्।

† प्रकरणानुगतं यथाक्रमं प्रतिपदमुच्चार्यैव। अत्र च भाष्यकारेणेत्यस्य निघण्टु-भाष्यकारेण यास्केनेत्यर्थो बोध्यः।

‡ अतस्तेषां स्वरूपादिनिर्णयाय न मे श्रमः कश्चनेत्याशयः।

§ 'अतः' एभ्यः उक्तिखितनिरुक्तादिव्याख्यातपदेभ्यः, 'अन्येषां' सर्वेषामेव पदानाम्।

|| अध्ययनञ्चात्र पुस्तकाचरज्ञानविहीनवैदिकानां सम्प्रदायसिद्धं गुरुपरम्परागतं बोध्यम्।

¶ कोशपुस्तकमेवेत्यर्थः।

** प्रदर्शयितुम्—इत्यस्य अस्मत्परिश्रमः—इत्यनेन सम्बन्धः। एतेनैव नैघण्टुक-काण्डीय-स्वकर्त्तव्यतोक्ता। एतावानेव ग्रन्थः कथं न समापितः? प्रत्युत चर्वितचर्वणे नैगमादिव्याख्याने कथं प्रयासः स्वीकृत इत्याह—स्वरादीनीत्यादि तदुक्तौ—लयितु मित्यन्तम्।

प्रकरणत्रयस्य, नैगम-दैवताकाण्डगतानाञ्च पदानां भाष्यकारेण निरुक्तानां स्कन्दस्वामिना च तद्व्याख्यातानां, प्रक्रिययोन्मीलयितव्यम्*; बहुशस्तु नैघण्टुककाण्डनिर्वचनानन्तरं तदुन्मीलयितुञ्चायमस्मत्परिश्रमः।

इदञ्च स्वमनीषिकया न क्रियते किन्तु नैघण्टुकागतेष्वेव पदेष्वर्द्धशतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि, स्कन्दस्वामिना च निगमव्याख्यानेषु अन्यानि च पदानि शतद्वयमात्राण्युपात्तानि। तेन च समाम्नायपठितानां पदानामन्येभ्यो व्यावृत्त्यर्थं किञ्चिच्चिह्नं कृतम्, अतस्तेषां पाठशुद्धिस्तत्रैव गृह्या। अन्येषाञ्च पदानामस्मत्कुले समाम्नायाध्ययनस्याविच्छेदात्,—श्रीवेङ्कटाचार्यतनयस्य माधवस्य भाष्यकृतो नामानुक्रमण्याः आख्यातानुक्रमण्याः-स्वरानुक्रमण्याः-निपातानुक्रमण्याः-निर्बन्धनानुक्रमण्याः-तदीयस्य भाष्यस्य च बहुशः पर्यालोचनात्,—बहुदेशसमानीतान् बहुकोशनिरीक्षणाच्च पाठः संशोधितः। निर्वचनञ्च— निरुक्तं,(१) स्कन्दस्वामिकृतां निरुक्तटीकां,(२) स्कन्दस्वामि(क)-भवस्वामि(ख)-राहदेव(ग)-श्रीनिवास(घ)-माधवदेव(ङ)†-उवटभट्ट-(च)-भास्करमिश्र(छ)-भरतस्वाम्यादि(ज)-विरचितानि वेदभाष्याणि,(३) पाणिनीयं व्याकरणं,(४) विशेषत उणादि(क) तद्वृत्तिं,(ख) क्षीरस्वाम्यनन्ताचार्यादिकृतां निघण्टुव्याख्यां,(५) भोजराजीयं व्याकरणं,(६)

* अत्र पदं,—इयं प्रकृतिः, अयं प्रत्ययः, इमानि च सूत्रादीनि साधनानि—इत्येवं स्पष्टीकर्त्तव्यमित्यर्थः।

† सायणमाधवात् प्राचीनोऽयं माधवः, 'रजोभूयं जननि मत्तवेभसं'—इत्यादिमङ्गलाचरणपूर्वविवरणग्रन्थकार।

कमलनयनीय-निखिलपदसंस्कारांश्च[*] निरीक्ष्य क्रियते। तत्र च अस्मद्व्याख्येयानां तत्र दृष्टानां पदानां तत्तत्कृतञ्च निर्वचनमुपादाय तदेवास्मत्प्रकरणानुरूपञ्चेदुल्लिख्यते, अननुरूपन्तु किञ्चिद् विपरिणमय्य, अन्येषाञ्च कतिपयानां निरुक्तकारोक्तनिर्वचनसामान्यलक्षणमनुसृत्य, निरुक्तिः क्रियते।

निगमस्य[*] दक्षिणापथनिवासिभिरधीतेषु वेदेषु परिदृश्यमानस्तत्तद्भाष्याणि निरीक्ष्य तत्र तत्र प्रदर्श्यते, अदृष्टनिगमानाञ्च पदानां निगमा अन्वेष्याः[†]।

अतोऽस्माभिर्यथामति प्रदर्शितौ प्रतिपदनिर्वचननिगमौ विद्वांसो बुद्ध्या निरूप्य शुकभाषितवन्मनसि कुर्वन्तु[‡]॥

* निगमः—उदाहरणरूपो वैदिकमन्त्रादिः।

† एतेन तेषामपि स्थितिसम्भावना लक्षिता।

‡ यथा, शुकाः कीराः यानि कान्यपि वचनानि भाषयन्ति, तानि सर्वाण्येव यथाश्रुतानि, न तु स्वबुद्ध्यादिप्रयुक्तानि, तथैवास्मदुक्तयः सर्वा एव ग्रन्थान्तरादिलब्धाः, न स्वकपोलकल्पिता—इतीह विश्वासं स्थापयन्तु विचक्षणाः इति भावः।

# अथ प्रथमाध्यायः।



'अथातोऽनुक्रमिष्यामः'—इत्यादि (२.५) निरुक्ते तस्य टीकायाञ्च यन्नैघण्टुककाण्डविषयमुक्तं तत् सर्वं तत्रैव द्रष्टव्यम्॥

आदित एकविंशतिः पृथिवीनामधेयानि—

ॐ गौः[१]। ग्मा[२]। ज्मा[३]। क्ष्मा[४]। क्षा[५]। क्षमा[६]। क्षोणिः[७]। क्षितिः[८]। अवनिः[९]। उर्वी[१०]। पृथ्वी[११]। मही[१२]। रिपः[१३]। अदितिः[१४]। इळा[१५]। निर्ऋतिः[१६]। भूः[१७]। भूमिः[१८]। पूषा[१९]। गातुः[२०] गोत्रे[२१]त्येकविंशतिः पृथिवीनामधेयानि* ॥ १ ॥

(१) गौः।† 'गम्लृ गतौ (भ्व० प०)' अस्माद् 'गमेर्डोस् (उ० २, ६३)' —इति कर्त्तरि कारके अधिकरणे वा डोः प्रत्ययः। गातेर्वा स्तुत्य-

(६) "क्षमः" ख। "क्षामा"—इति C. D. E ग; अस्य च निगमाः—ऋ० मं० ६, १५, ५. ९, ८५, ११. १०, १२. १। "क्षामः"—इत्यपि पाठो भवितुमर्हति, तथापि निगमदर्शनात ऋ० मं० २ ३९, ७. ८, ५, ३. ८. १०, ४. १०, १०६, १०। "क्षाम"—इत्यपि ऋक्संहितायां दृश्यते (५, ९, १६;—१९, ४. ९, ५१, ११. १०, ५५. ४; ९०, ७।

(७) "क्षाणी"—इति कालिनिरुक्तेषु मवेच, तत्प्राधान्यतया टीकाकृतम्मतम्।

(१३) "रिपः"—इति च दृश्यते ऋक्संहितायाम्—१, ७९, १. ७, ११, १२;—९०, ९;—१०५, १८।

(१८) "भुमिः" ख; अशुद्धश्चैतदिति बुध्यते।

(२१) "गात्रा" क; मुद्राकरप्रमादजञ्चेदमिति गम्यते।

* "इति पृथिव्याः" ग।

† प०—४. ५. ११. ९, १६. ४, १ ४, ४। निरु०१, ५. १४ ४, ९९. ६, ९. ११, ७।

र्थात् (अष्टा० प०) बाहुलकोक्तेः (३,३,११३) कर्मण्यधिकरणे वा। 'गोतोणित् (७,१,९०)'—इति च णिद्वद्भावात् वृद्धिः। अत्र भाष्यम्— 'गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति गातेर्वौकारो नामकरणः (निरु० २,५)'—इति। अस्य स्कन्दस्वामी—'दूरं गता भवति नैरन्तर्येणात्माकाशादिवत् दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहारः'। अन्यत्रान्यत्र चोपलब्धेर्दूरोपदेशः। प्रत्ययोपात्तकर्त्रर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिदूरविशिष्टं गमनमुपादत्ते, 'तन्वा' 'परिव्राजकः' इति यथा*। यच्चास्यां भूतानि प्राणिनो गच्छन्ति। चो वार्थे। गातेर्वा स्तुत्यर्थस्य। (अष्टा० प०) गीयते स्तूयतेऽसाविति, गायन्ति वास्यां स्थिता इति गौः। उदाहरणम्—'गोषदसि ( ? )'—इति। गार्हपत्योपस्थाने विनियोगात्, गार्हपत्यस्य च गवि पृथिव्यां सदनात् गो-शब्दस्य पृथिव्यभिधानत्वन्निश्चितमिति। एवमन्येष्वप्युदाहरणेषु तत्र तत्र मन्त्रवाक्यार्थसमवायेन अभिधेयं प्रदर्शनीयं निश्चित्य तत्तदर्थाभिधायित्वम्। "व्रजं गच्छ गोष्ठानम् (य० वा० सं० १,२५-२६)"—"गोर्जगार यद्ध पृच्छान् (ऋ० सं० १०,३१,१०)"†—"अभवत् पूर्व्या भूमना गौः (ऋ० सं० १०,३१,६)"‡—इति निगमाः॥

(२) ग्मा। गमेः पूर्वस्मिन्नेव कारकद्वये 'कनिन्युवृषितक्षि (उ०

* अयमभिप्रायः—यथा तक्षणं कुर्वन्नप्यनेकएव परं तन्वेत्युक्ते योगरूढ्या वर्द्धकिजात्युपन्नः कश्चिदित्येव प्रतीयते, एवं परिव्रजन्ति बहवएव परं परिव्राजक इत्युक्ते योगरूढ्या भिक्षुरेव बुध्यते, एवमत्रापि।

† 'गौः पृथिवी * * तां प्रभी * * जगार उद्गिरति'—इति सा० भा०।

‡ 'गौः देवान् प्रति गन्त्री'—इत्यादि सा० भा०।

१,१५४)'—इत्यादिना विहितः कनिन् प्रत्ययो बाहुलकात् भवति। 'गम-हन-जन-खन-घसां लोपः क्ङित्यनङि (६,४,९८)'—इत्युपधालोपः, औणादिकेन 'मनिन् (उ० ४,१४०)'—इति सूत्रेण वा मनिनि बाहुलकात् (३,३,१) टिलोपः, 'डाबुभाभ्यामन्यतरस्याम् (४,१,१३)। अर्थः पूर्ववदेव। 'ग्मा गच्छतेः, गच्छन्तीहीयम्'—इति माधवः। "दिवस्य ग्मसापाश्च जन्मवः (ऋ०मं०१०,४९,२)"* —"दिवस्य ग्मस्य मर्त्यम् (ऋ०मं०१०,१२,६)"†—इति च निगमौ‡। ग्म इत्यत्र छान्दसत्वाद्रूपसिद्धिः॥

(३) ज्मा§। जमतिर्गतिकर्मा (निघ०२,१०) 'जमु अदने (भू० प०)'-जनी प्रादुर्भावे '(दि० आ०)'-'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु (रु०प०)', म्रक्षणं सेचनमिति तद्वृत्तिः। एतेभ्यः 'श्वन्नुक्षन् पूषन् प्लीहन् (उ० १,१५५)'-इत्यादिना परिज्मन्निति कनिन्नन्तं सोपसर्गं निपातितम्, बाहुलकात (३,३,१) निरुपसर्गमपि भवति। निपातनादेव कारकविशेषसिद्धिः। 'डाबुभाभ्यामन्यतरस्याम् (४,१,१३)'। गतौ पूर्ववदर्थः। अदन्ति वास्यां भूतानि, जातानि वा स्वकारणात्, जायन्ते वास्या ओषधयः। तथाचोपनिषत्—'अद्भ्यः पृथिवी, पृथिव्या ओषधयः (तै०उ०२,१)'—इति। अथवा व्यक्ता सर्वेषां प्रत्यक्षा न ह्याकाशादिवदव्यक्ता पृथिवी; 'तिस्रो मह्नीरुपरास्तस्थुरत्या गुहा

* 'दिवो द्युलोकस्य ग्मा पृथिव्यापोऽन्तरिक्षमेतेषु'—इत्यादि मा० भा०।

† 'दिवस्य द्युलोकाच्च, ग्मस्य भूलोकाच्च, मर्त्यं मनुष्यम्'—इति मा० भा०।

‡ मन्त्यन्येऽपि निगमाः; तथाहि—ऋ० मं० १, २५, २०; २७, ६. ५, २८, ३। एवं पूर्वत्र परत्र च सर्वत्र बोध्यम्।

§ निरु० १२, ४३।

इदं निहिते दश्मका (ऋ०मं३,५६,२)'—इति च श्रुतिः। क्ष्मा मिक्ता भवति वृषेण; 'तस्मादमावियां वृष्ट्याभ्युनक्त्यभिजिघ्रति (पै० ब्रा० १,२,१)'—इति ब्राह्मणम्। "ये के च ज्मा महिनो अहिमायाः (ऋ० मं० ६,५२,१५)"*—"अभिक्रत्वेन्द्रभूरधज्मन् (ऋ० मं० ७,२१,६)"†—"ज्मया अत्र वसवो रन्त देवाः (ऋ० मं० ७, ३९,३)"‡—"अधज्मो अधवा दिवः (ऋ० मं० ८,१,१८)"§—इति च निगमाः॥

(४) क्ष्मा॥। 'क्षि क्षये' भ्वादिः (प०), 'क्षि निवासगत्योः' तुदादिः (प०), 'क्षि हिंसायाम्' क्र्यादिः (प०), क्षै, जै, षै, क्षये '(भू० प०)', 'क्षमूष् सहने (दि० प०)', 'क्ष्मायी विधूनने (भू० आ०)';—एतेभ्यः औणादिके मनिनि (उ० ४, १४०) बाहुलकाद्रूपसिद्धिः। डापि गतावर्थउक्तः। क्षियन्ति निवसन्त्यस्यां प्राणिनः, क्षायन्ति अवयवं गच्छन्त्यस्यां पदार्था इति वा, हिंस्यन्तेऽस्यां पापकृतइति वा, क्षमते वा प्राणिजातरूपं, भारं विधूनयति वा प्राणिनः स्वकीयकाले। "पिता यत्स्वां दुहितरमधिष्कन् क्ष्मया रेतः (ऋ० मं० १०,६१,७)"¶

* 'ज्मा पृथिवीनामैतत्, पृथिव्यां जज्ञिरे'—इति सा० भा०।

† 'हे इन्द्र! त्वं क्रत्वा कर्मणा ज्मन् पृथिव्यां वर्त्तमानान् जन्तून् वाभिभूः अभ्यभूः' —इति सा० भा०।

‡ 'वसवो वसुसञ्ज्ञका देवा अत्र अस्मिन् यज्ञे ज्मया पृथिव्या रन्त रमयन्ताम्'—इति सा० भा०।

§ 'जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी, तस्याः सकाशादधः'—इति सा० भा०।

|| निरु० १०, ७।

¶ 'पिता प्रजापतिः यद्यदा स्वां दुहितरं दिवमुषसं वाधिष्कन् अध्यस्कन्दत् तदानीमेव क्ष्मया पृथिव्या सह'—इत्यादि सा० भा०। एतन्मूलकमेव प्रजापतेर्दुहितृगामित्वं पुराणादौ प्रसिद्धम्।

"ऋमया चरति पर्णि मा वृणक् नः (ऋ० सं० ७,४६,७)"*—इति च निगमौ ॥

(५) त्मा†। निरूपितापत्र धातवः‡। 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति सोपपदात् जनेर्विधीयमानो डः प्रत्ययः, 'अपिशब्दः सर्वोपाधि-व्यभिचारार्थः'§—इत्युक्तेर्निरुपपदेभ्योऽपि भवति। त्मायस्तु छान्दसत्वान्मकारलोपः। अर्थः पूर्वोक्तएव। "जातस्य च जायमानस्य च त्माम् (ऋ० सं० १,८६,७)"—इति निगमः||॥

(६) त्मा। निरूपितापत्र धातुभावाः। औणादिके मनिनि (उ० ४,१४०) बाहुलकाद्रूपसिद्धिः। अर्थः पूर्वोक्तएव। 'त्मूष महने (दि० प०)'—इत्यस्माद् वा पूर्ववत् डाप् प्रत्ययः। "यः पार्थिवस्य त्म्यस्य राजा (ऋ० सं० २,१४,११)"—इति निगमः॥

(७) त्तोणिः। 'टु क्षु रु शब्दे' अदादिः (प०) 'वौश्याश्चिभ्यो निः (उ० ४,४८)'—इति विहितो नि-प्रत्ययो बाहुलकाद् भवति, गुणः णत्वम्। त्तूयते शब्दते स्तूयते स्तोतृभिः, त्तुवन्त्यस्यां भूतानीति वा। त्तोणीति ईकारान्तं केचित् पठन्ति। तदा 'कृदिकारादक्तिनो वा ङीष् वक्तव्यः (४,१,४५ वा०)'—इति ङीष्। "नवन्त त्तोणयो यथा¶

* 'ऋमया चित्या चित्तौ वा चरति वर्त्तते मा दिदृक्षत, नोऽस्मान परिदृणक्तु परित्यजतु'—इति सा० भा०। एवं सर्वत्रैव भाष्यं दृष्ट्वा निगमत्वं स्वीकार्य्यम्।

† निघ० २, ६।

‡ इतः पूर्वं त्मेत्यत्रैव।

§ एषोक्तिः पाणिनिमहाभाष्यकारस्य भगवत्पतञ्जलेरिति बोध्यम्।

|| प० २, २०।

¶ 'नवन्त विविधं व्याप्नुवन्ति। त्तोणयः मनुष्यनामैतत्। मनुष्याः स्वकीयं स्वामिनं सेवार्थं यथा व्याप्नुवन्ति तद्वत'—इति सा० भाष्यं चिन्त्यम्।

(ऋ०सं०१०,२२,९)"—"यं क्षोणीरनुचक्रदे (ऋ०सं० ८,३,१०)"—इति निगमौ ॥

(८) क्षितिः* । 'क्षि निवासगत्योः (तु०प०)', 'क्षि क्षये (भ्वा०प०)' 'क्षि हिंसायां (स्वा०क्र्या०प०)'—एतेभ्योऽपि 'वसेस्तिः (उ० ४,१७५)'—इति विहितस्ति-प्रत्ययो बाहुलकात् (३,३,१) भवति, गुणाभावश्च। अथवा 'स्त्रियां क्तिन् (३,३,९४)' कर्मण्यधिकरणे (३,३,९३) वा भवति । अर्थस्तु स्पष्टत्वान्नोक्तः। "क्षेति क्षितीः सुभगो नाम पुष्यन् (ऋ०सं० ५,३७,४)"—"वीहि स्वस्ति सुक्षितिं दिवः (ऋ०सं० ६,२,११)"—इति निगमौ ॥

(९) अवनिः† । 'अव रक्षण-गति-कान्ति-प्रीति-तृप्त्य-ऽवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रिये-च्छा-दीप्त्य-ऽवाप्त्या-ऽऽलिङ्गन-हिंसा-दान-भाग-वृद्धिषु (भ्वा०प०)—अस्मात् 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २,९५)'—इत्यनि-प्रत्ययः। अवति प्रजाः अव्यन्ते वा भूपैः। एतावत्स्वर्थेषु यो योग्यः स बोद्धव्यः। "आ वां रथोऽवनिर्न प्रवत्वान् (ऋ०सं० १,१८१,३)"—"यत्सीं महीमवनिं प्राभि मर्मृशत् (ऋ०सं० १,१४०,५)"—इति च निगमौ ॥

(१०) उर्वी‡ । 'ऊर्णुञ् आच्छादने (अदा०उ०)'—अस्मात् 'महति ह्रस्वश्च (उ० १, ३०)'—इति उ-प्रत्ययो ण-लोपो ह्रस्वश्च, उरुः। 'वोतोगुणवचनात् (४,१,४४)'—इति ङीष्। ऊर्णोति आच्छादयति उर्वी। महत्त्वादाच्छादयित्री भूमिः स्वस्मिन् स्थितानां

* प० २ ३ । निरु० ४, २५ ।

† प० १२. २,५ । निरु० २, ९ ।

‡ प० १२. २, १;—२० । निरु० ७, २६ ।

वा पदार्थान्तरे ... (स्वा० प०) पृषोदरादित्वात् (६.३, १०९) रूपसिद्धिः। 'छादनार्थं त्रिगुणम्'—इति स्कन्दस्वामी। वृणोतेराच्छादनार्थत्वं,गुणादयः। 'मा मामग्ने ऋा भागवीं काष्ठा (ऋ० मं० ८,८०,८)'—इति निगमः।

(१,१) पृथ्वी। 'प्रथ प्रख्याने (भ्वा०)'—'ग्रहि ज्यादि भ्रज्जां सम्प्रसारणं सलोपश्च (उ० १,२९)'—इति कु प्रत्ययः सम्प्रसारणञ्च। प्रथतेऽभारिति पृथु। पूर्ववत् (४.१.४४) ङीष्। पृथ्वी विस्तीर्णेत्यर्थः। पञ्चाशत्कोटियोजनविस्तीर्णेति पृथिवी। यद्वा; अन्तर्भावितण्यर्थात् प्रथतेः 'उणादयो बहुलम् (३.३.१)', 'भूतेऽपि दृश्यन्ते (३.३.२)'—इति वचनात् भूते कु-प्रत्ययः। ब्रह्मणा पूर्वमेव विस्तारितेत्यर्थः। 'तत्पुष्करपर्णं,प्रत्यथत यदप्रथयत पृथिव्यै पृथिवीत्वम् (श० ब्रा० ११.,.,१३,८)'—इति हि ब्राह्मणम्। 'पृथुना राज्ञा अवनारिता पृथ्वी' इति क्षीरस्वामी। 'भोगा न तामर्येति पृथ्वीम् (ऋ० मं० १०.३१,८)'—इति निगमः। 'यत्रैकार्थानां पदानां सन्निपातः, तत्रैकं तस्य वाचकं भवति; अन्येषां निरुक्त्या योजनं कर्त्तव्यम्' इति मर्यादा†; अतोऽत्र नामित्यस्य निरुक्त्या योजनम्॥

(१,२) मही‡। 'मह पूजायाम्' भ्वादिः (प०)। 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन् प्रत्ययः। 'कृदिकारात् (४,१,४५ वा०)'—इति ङीष्। मह्यते प्रजाभिः, महति वा देवताः स्वभाग-

* प० २,३०। निरु० ९,१२,१४।

† व्याख्यातॄणां व्याख्याननियमः।

‡ प० ११,७,११,७,२०। निरु० ४,२१,५,०२।

वतरणाय। अथवा मानेन स्वगुणेन परिमाणेन स्वस्मादूनं परिमाणं पातालं जहाति अतिक्रामति, मानशब्दाज्जहातेश्च मही। पृषोदरादित्वात् (६,३,१०९) निर्वाहः। "आ नो महीमरमतिं सजोषा (ऋ०सं० ५,४३,६)"—इति निगमः॥

(१३) रिपः। 'रेषृ गतौ (भ्वा०आ०)', 'क्विब्वचिप्रच्छ्यायतस्तु-कटप्रुजुश्रीणाम् (३,२,१७८ वा०)'—इत्यत्र 'प्राक्प्रत्ययनिर्द्देशात् दीर्घसिद्धिः'—इति वचनात् ह्रस्वं रिपः। गौरित्यनेन समानार्थः। यद्वा; 'रिफ कत्थन-युद्ध-निन्दा-हिंसा-दानेषु' तुदादिः परस्मैपदी। क्विपि, फकारस्य पकारो व्यत्ययेन (३,१,८५)। कत्थन-युद्धादीनस्यां कुर्वन्ति तत्कारिणः। यदा; 'लिप उपदेहे (तु०उ०)', लिप्। गोमयादिना आलिप्यते इति लिप्। रलयोरभेदः। तथाच माधवीयनिर्वचनानुक्रमण्यां 'लेपनाद्रेपणादपि'—इति। यद्वा; 'रप लप व्यक्तायां वाचि (भ्वा०प०)', 'रपेरिच्चोपधायाः (उ० १,२५)'—इत्युप्रत्यये विधीयमानमित्वं वाहुलकादन्यत्रापि भवति। आलपन्त्यस्यां प्राणिनः इति रिप्, जसि रिपः; एवंरूपस्य वेदे भूयोदर्शनात् यथादृष्टं पाठः। "रिरिक्वांसं रिप उपस्थे अन्तः (ऋ०सं०१०,७९, ३)"—"पाति प्रियं रिपो अग्रं पदं वेः (ऋ०सं० ३,५,५)"—इति च निगमौ॥

(१४) अदितिः[१]। 'दीङ् क्षये (दि०आ०)'। 'क्तिच्क्तौ च संज्ञायाम्' ... 'कृत्यल्युटोबहु-लम् (३,३,११३)'—इति कर्त्तरि क्तिनि छान्दसं ह्रस्वत्वम्, नञ्-समासः। अदितिः सकलप्रपञ्चधारणेऽप्यदीना न खिद्यते इत्यर्थः।

[१] ५० ११. १, ११. २, १०. ४, १. ५; ५। निरु० ४, २२. ११, २२।

'अदितिरदीना (निरु० ४,२२)'—इत्यत्र भाष्ये स्कन्दस्वामी—'यद्यपि नञ्पूर्वात् द्यतेः क्तिनि 'द्यति-स्यति-मा-स्थाम् (७,४,४०)'—इतीत्वे च रूपं सिध्यति, तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च 'दीङ् क्षये (दि० आ०)' इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम् । तथाचोक्तम्—'न संस्कारमाद्रियेत अर्थो नित्यः परीक्षेत (म० भा०)'—इति । "देवेभ्यो अदितये स्योनम् (ऋ० मं० १०,११०,४)"—"तमस्पृक्षन्त वाजिनमुपस्थे अदितेरधि (ऋ० मं० ९,२६,१)"—इति निगमौ ॥

(१५) इडा । 'ईड स्तुतौ (अदा० आ०)', 'ञि इन्धी दीप्तौ (रु० आ०)' । अनयोः, 'अकर्त्तरि च कारके संज्ञायाम् (३,३,१९)'—इति घञ्, पृषोदरादित्वात् (६,३,१०९) ईकारस्य ह्रस्वत्वम्, इन्धेर्नकारलोपो धकारस्य डकारो गुणाभावश्च । ईड्यते स्तूयते वाऽस्यां यजमानो देवान्, इन्धे दीप्यतेऽस्यां अग्निः । यद्वा ; 'इण गतौ (अदा० प०)', 'कादिभ्यः कित (उ० १,११०)' इत्यस्मिन् सूत्रे 'बहुलानुवृत्तेः अन्यस्मादपि भवति'—इति वचनात् ड-प्रत्ययः, कित्त्वाद्गुणाभावः । गत्वा समानार्थः । यद्वा ; 'इल स्वप्न-क्षेपणयोः (तु० प०)'—इत्यस्मात् 'इगुपधा-ज्ञा-प्री-किरः कः (३,१,१३५)' —इति क-प्रत्ययः, 'कृत्यल्युटो बहुलम् (३,३,११३)' इति अधिकरणे भवति । क्षिप्यन्तेऽस्यां भावाः, स्वपन्त्यस्यामिति वा ; ड-लयोरेकत्वस्मरणात् डत्वम् । यद्वा ; 'इला' इत्यन्ननाम गोनाम वा (निघ० २,७,—२,११), इला—अन्नं गौर्वा अस्यामस्तीत्यर्श आदित्वात् (५,२,१२७) अच् ; अन्नवती गोमती वा इडा । बह्वृचानान्तु 'इयो-

* प० ११, २ ७ ; ११,४,५ । निरु० ११, ४८ ।

श्वास्य स्वरयोर्मध्यमेत्य सम्पद्यते स इकारो ऋकारः (प्राति०)'—इति ऋत्वम् इळा, ऋतु उदाहरणबाहुल्याच्च ऋग्वेद-दृष्ट-पाठः इळेति । "इळायास्त्वा पदे वयं (ऋ०सं० ३,२९,४)"—"अधा होता न्यसीदो यजीयानिळस्पद" (ऋ०सं० ६,१,२)"['इळश्छान्दसत्वादाकारलोपः' —इति स्कन्दस्वामी]—"इळस्पदे समिध्यसे (ऋ०सं० १०,१९१,१)" - इति निगमाः ॥

(१६) निर्ऋतिः* । 'निर्ऋतिर्निरमणात्' (२,७)-इति निरुक्तम् । अत्र स्कन्दस्वामी 'निरमणात् निश्चलत्वेनावस्थानात् इत्यर्थः; रमन्ते वास्यां भूतानि'- इति । तत्र निर्-पूर्वाद्रमेः (भू०आ०) 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्त्रर्थेऽधिकरणे च क्तिनि (३,३,९४) अनुनासिकलोपः, 'रमेर्मतौ बहुलम् (६,१,३४वा०)'—इत्यत्र बहुलवचनात् सम्प्रसारणम् । आद्येऽर्थे निर्निश्चलत्वमाह नानवस्थानम् उत्तरत्र धात्वर्थमनुवर्त्तते निः । वैयाकरणपक्षे तु निरुपसृष्टादर्त्तेः क्तिनि निर्ऋतिः निःक्रान्ताकृतेर्गमनात् निश्चलवदवतिष्ठते इत्यर्थः । "बहुप्रजा निर्ऋतिमाविवेश (ऋ०सं०१,१६४,३२)"—"अधा शयीत निर्ऋतेरुपस्थे (ऋ०सं०१०,९५,१४)"-इति च निगमौ ॥

(१७) भूः† । भू सत्तायां (भू०प०) सम्पदादित्वात् भावे क्विप् (३,३,९४ वा०) । भवत्यस्यां सर्वमिति भूः । "मूर्द्धा भुवो भवति नक्तमग्निः (ऋ०सं० १०,८८,६)'—इति निगमः । रेफान्तं व्यत्ययम्, यथा—"भूर्भुवः स्वः (य०वा०स० ३६,३)"—इति ॥

* निरु० १, १७. २, ७. ७. ३ ।

† प. २ । निरु. ७, १७ २८

(१८) भूमिः । 'भुवः कित् (उ० ४,४५)'—इति भवतेः मि-प्रत्ययः । अर्थः पूर्ववत् । अथवा 'भूतेऽपि दृश्यन्ते (३,३,२)'—इति वचनात् भूते मि-प्रत्ययः । 'अभूतभूमिस्तथा अभूद्वा इदमिति तद् भूम्यै भूमित्वम्'—इति श्रुतिः । ''न्यङ्कुमानासन्चेति भूमिम् (ऋ०सं० १०.७१.१३)'' ''भूमिर्भूमिमगात्''—इति च निगमौ ॥

(१९) पूषा* । 'पुष पुष्टौ (भ्वा०दि०क्र्या०प०)' । 'श्वन्नुक्षन्पूषन् (उ० १,१५५)'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते, निपातनादुपधाया दीर्घः । पुष्यन्ति धान्यादिभिः समृद्धा भवन्ति पोषयन्ति वान्नैः प्रजाः । 'सर्वार्थपोषणात् पूषा' इति सद्भास्करमिश्रः । तथा 'पृथिवी व्यवर्त्तयत् ओषधीभिर्वनस्पतिभिरपुष्यत्' इति श्रुतिः । यद्वा : 'पुष धारणे (चु०प०)'—इति धातुः । धारयति सर्वाणि भूतानि पोषयत्याभरणादीनीति वा । ''आ पूषन् चित्रबर्हिषम् (ऋ०सं० १,२३,१३)'' इत्यत्र माधवः—'पूषा पोषयतीति तस्य प्रत्यक्षं रूपम्'। ''पूषा त्वेतो नयतु हस्तगृह्य (ऋ०सं० १०,८५,२६)''—इति, ''सरस्वत्यै पूष्णेऽग्नये स्वाहा (य०वा०सं० ४.७)''—इति निगमः ॥

(२०) गातुः† । 'गाङ् स्तुतौ' छन्दसि जुहोत्यादिः (भ्वा०प०), 'गाङ् गतौ (भ्वा०आ०)', 'कै गै शब्दे' भ्वादिः (प०) । 'कमि-मनि-जनि-गा-भा-या-हिभ्यश्च (उ० १,७०)' इति तु-प्रत्ययः । गीयते स्तूयतेऽसौ, स्तुवन्ति वास्यां स्थिता इन्द्रादीन्, गच्छन्त्यस्यां भूतानीति वा, गायन्ति वास्यां स्थिता गायनादिति । यद्वा; गम्यतेऽनेनेति

* प० ४, ६ । निरु० ६, २१. १२, १६ ।

† प० ४, १ । निरु० ४, २१ ; २५ ।

गातुर्मार्गः, 'लुगकारेकाररेफाश्चेति वक्तव्यम् (४,४,१२८ वा० २)'—इति मत्वर्थीयस्य लुक्। गातुः मार्गवती हि भूमिः। "इन्द्राय गातुरुशतीव येमे (ऋ० मं० ५,३३,१०)"—"अदर्शि गातुरुरवे वरीयसी (ऋ० मं० १,१३६,२)"—इति निगमौ ॥

(२१) गोत्रा। 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'। 'गु-धृ-वी-पचि-वचि-यमि-[मनि-तनि]-सदि-क्षदिभ्यस्त्रः (उ० ४,१६७)'—इति त्र-प्रत्ययः। गुणः। मृगपक्ष्यादयोऽस्यामव्यक्तशब्दं कुर्वन्तीति गोत्रा। यद्वा; गोत्राः शैलाः सन्त्यस्याम् अर्शआदित्वात् (५,२,१२७) अच्। यद्वा; गोशब्दे कर्मण्युपपदे 'त्रैङ् पालने (भ्वा० आ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३,२,३)'। टाप् (४,१,४)। गास्त्रायते रक्षति यवसोदकवत्तया। यद्वा; गोभिरादित्यकिरणैर्वृष्टिप्रदानेन त्रायते रक्ष्यते इति, 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्मणि 'आतोऽनुपसर्गे कः (३,२,३)'। यद्वा; गोशब्दात् 'तस्य समूहः (४,२,३७)'—इत्यस्मिन्नधिकारे 'खल-गो-रथात् (४,२,५०)'—इत्यनुवृत्तौ 'इनि-त्र-कट्यचश्च (४,२,५१)'—इति त्र-प्रत्ययः। गोत्रा, गवां समूहः मत्वर्थीयोऽकारः। गोसमूहोऽस्यामस्तीति गोत्रा। निगमोऽन्वेषणीयः ॥

* सिद्धान्तकौमुद्यां नेमौ धातू इह दृश्येते।

† वेदमन्त्रेषु श्रूयते 'गोत्रा'-पदम्, परं न तत् क्वापि पृथिवीपरमिति भावः। एवञ्च गोत्रेत्यस्य पृथिवीनामसु पाठः किमर्थेन? नोचेद्वश्यं सायणादिव्याख्यातॄणामेव तत्र तत्र मन्त्रेषु व्याख्यागतं दूषणमुररीकार्यम्. तथा च न सर्वत्रैव गोत्रेत्यस्य मेघादिरेव वाच्यः क्वचित् क्वचित् पृथिवीवाचकत्वेनापि तस्य ग्रहः कार्यः तथा तदेवास्य निगमाभिमतत्वादिति ध्येयम्।

इत्येकविंशतिः* पृथिवी-नामधेयानि ॥ "उवाच मे वरुणो मेधिराय (ऋ०सं० ७.८७.४)" इत्यत्र माधवः—'उवाच मह्यं वरुणो मेधाविने'-इति स त्रिंशकविंशतिनामानि कानिचिद्‌ गोर्विभर्तीति पृथिवीमाह तस्मादि यास्कपठितान्येकविंशतिनामानीति ॥ १ ॥

**हेम[1] । चन्द्रम्[2] । रुक्मम्[3] । अयः[4] । हिरण्यम्[5] । पेशः[6] । कृशनम्[7] । लोहम्[8] । कनकम्[9] । काञ्चनम्[10] । भर्म[11] । अमृतम्[12] । मरुत्[13] । दत्रम्[14] । जातरूपम्[15] । इति पञ्चदश हिरण्यनामानि*॥ ॥ २ ॥**

(१) हेम[1] । 'हि गतौ वृद्धौ च (भ्वा० प०)' । अस्माद्धातोः 'नामन्-सामन्-सोमन्-हेमन्-रोमन्-लोमन्-धामन्-विधर्मन्-पाप्मन्† (उ० ४,१४६)'—इति मनिन्नन्तो निपात्यते । हिनोति गच्छति अनेन सुखं पुरुषः, गम्यते वा तदर्थिभिः, गच्छति वा स्वयं कटकादि-रूपां विकृतिम्; हिनोति वाणिज्यादिना प्रतिदिनं वर्द्धते; 'ताम्राद्युपरि लेपनाद् वर्द्धते'—इति सुबोधिनी‡ । अथवा हितमापदि निहितं वा भूम्यादौ दधातेर्हिरादेशो निपातनात् । हेम । "अस्य प्रेषा हेमना पूयमानः (ऋ०सं०९,९७,१"—"अश्वो न स्वे दम आ

(१) "हेमा" ख। * "इति हिरण्यस्य" ग। † प० १२।
‡ सिद्धान्तकौमुदीधृतपाठस्तु 'नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्'—इत्येव। ‡ उणादिवृत्तिः।

हेम्यावान् (ऋ०मं०४,२,८)"—इति च निगमौ*। हेम्यावान्—हिरण्मयकक्ष्यया युक्तः॥

(२) चन्द्रम्†। 'चदि आह्लादने दीप्तौ च (भ्व०प०)' अस्मात् 'स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि-क्षुदि (उ०२,१३)'—इत्यादिना-रक्। चन्दयति, आह्लादयति तद्वत् दीप्यते वा स्वयं तैजसत्वात्। यद्वा; णिजन्ताच्चदेर्बाहुलकात् णिलोपः, दीपयति धारयितॄन्,—दीप्यतेऽनेन धारयितेति वा। कान्त्यर्थो वा चदिः, 'चन्द्रः चन्दतेः कान्तिकर्मणः (निरु११.१.५)'—इत्युक्तेः। काम्यते सर्वैः इति चन्द्रम्। "ये अश्वद्यन्द्रं वहन्तु (ऋ०मं०१०.८५,३१)"—"दक्षिणा चन्द्रमुत यद्धिरण्यम् (ऋ०मं०१०,१०७,७)"—इति च निगमौ॥

(३) रुक्मम्। 'रुच दीप्तौ (भ्वा०आ०)। 'युजि-रुचि-तिजां कुश्च (उ०१,१४३)'—इति मक् प्रत्ययः कुत्वं च। रोचते तदतिशयेन दीप्यते तेन तदिति च रुक्मम्। "आ रुक्मैरायुधा नरः"—(ऋ०मं०५,५२,६)"—"एष रुक्मिभिरीयते (ऋ०मं०८,१५.५)"—इति च निगमौ॥

(४) अयः। 'इण् गतौ (अदा०प०)'। असुन् (उ०४,१८४)। एति गच्छति अङ्गुलीयकादिरूपेण शरीरम्, ऋय-क्रय-संविभागादिना वा, पुरुषात् पुरुषान्तरं गच्छत्यनेन धर्मदानादिनेति वा। "अयः शीर्षा मदेरघुः (ऋ०मं०८,१०१,३)"—इति निगमः॥

(५) हिरण्यम्। 'हृञ् हरणे (भ्व०उ०)। अस्मात् 'हर्यतेः कन्यन्

* ऋक्संहितायां नापरो दृश्यते निगमः।

† निरु० ११.५।

हिर च (उ० ५.४५)'—इति विधीयमानः कन्यन् प्रत्ययो हिरादेशश्च बाहुलकाद् भवतः। तथाच अन्नमित्यधिकृत्य 'कृञ इच'—इति भोजसूत्रम्। ह्रियते [illegible] मा [illegible] अर्थेन, [illegible] [illegible] कन्यावस्थायिवं [illegible]। अथवा '[illegible] [illegible]-सिनोति: [illegible] धातुरूपात् [illegible] [illegible] [illegible] दुर्मिहरिः: '[illegible] [illegible]। [illegible] मन्यन्ति। अथवा [illegible] [illegible] [illegible] ७.१ [illegible]'—इतीतः कन्यन हिरणं ह्रियतेऽर्थ्यते [illegible] [illegible] [illegible]-धाते। 'हर्यति [illegible] [illegible]'—इति [illegible]। "[illegible]-रूपः स हिरण्मयः (ऋ० मं० २.३५.१०)"—इति निगमः।

(६) पेशः। 'पिश गतौ (तु० प०)'। असुन्। अवयुत्वेन समानार्थम्। "चित्ररूपेण [illegible] रूपेण (ऋ० मं० १.४१.२)" इति निगमः। "हिरण्ययेन रथेन (ऋ० मं० ८.५.३५)" हिरण्यया वां रश्मिः (ऋ० मं० ८.५.२८)"—इत्यादौ अश्विनोरथस्य हिरण्मयत्वोक्तेः पेशोऽत्र हिरण्यम्। बृहदारण्यके—'तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यं नवतरं कल्याणतरं रूपं तनुते (४,४,४)' इति। यथा। वाजसनेयके "सरस्वती मनसा पेशलम् (१९,८३)"—इत्यत्र 'पेश इति हिरण्यनाम रूपनाम वा'—इत्युवटेन व्याख्यातम्॥

(७) कृशनम्‡। 'कृश तनूकरणे (दि० प०)'। 'कॄ-पॄ-वृजि-मन्दि-नि-धाञ्भ्यः क्युः (उ० २,७६)'—इति विधीयमानः क्युर्बाहुलकाद्

* निरु० २.१०। † प० ३.७। निरु० ८,११।
‡ प० ३,७।

भवति । कृश्यति तनूकरोति यम् । अत्र माधवस्तु—'कृशिर्दीप्त्यर्थः । कृश्यति स्वप्रभया दीप्यते; अपि वा कर्षयति मंस्पृष्टं, कृशमेव वा भवति मंस्थानतो रजतात्'—इति । "स्रुद्दिश्य: कृशनिनो निरेके (ऋ० मं० ७,१८,२३)"—'अभि श्यावं न कृशनेभिरश्वम् (ऋ० मं० १०,६८,११)"—"अभिवृतं कृशनैर्विश्वरूपम् (ऋ० मं० १,३५,४)"—इति निगमाः ॥

(८) लोहम् । 'लुह कत्थनादौ (भ्र० प०)' । घञ् (३,३,२१) । कत्थते श्लाघतेऽनेनात्मा,—त्रिवर्गसाधनत्वात् पुरुषैः सम्प्रार्थ्यते वा । 'लूञोहः'—इति तु श्रीभोजदेवः । लुनाति छिनत्ति पापसम्बन्धं पात्रे दीयमानम् । निगमोऽन्वेषणीयः* ॥

(९) कनकम् । 'कनी दीप्तिकान्तिगतिषु (भ्र० प०) । 'कृञा-दिभ्यः सञ्ज्ञायाम् (उ० ५,३६)'—इति वुन्-प्रत्ययो धात्वर्थेष्वपि । रुक्मादिवदर्थोऽनुसन्धेयः । निगमोऽन्वेषणीयः ॥

(१०) काञ्चनम् । अत्र सुबोधिनी—'कचि दीप्तिबन्धनयोः (भ्र० आ०) । कञ्चते वर्णेन दीप्यते बध्यते कुण्डलादिरूपेणेति । 'युच् बहुलम् (३,३,१३०)'—इति युच प्रत्ययः । दीर्घोऽत्र बाहुलकात् । निगमोऽन्वेषणीयः ॥

(११) भर्म† । 'डु भृञ् धारणपोषणयोः (जु० उ०) । मनिन् (३,२,७५) । भ्रियते धार्यते, अङ्गुल्यादिभिर्धार्यते आपदर्थमिति वा, पोषयत्यनेन कुटुम्बमिति वा । हरतेर्वा (भ्र० उ०) मनिनि

* अयन्तु लोहं पदं यजुर्वोजसनये—"लोहञ्च मे सीसञ्च मे (१८,१३)"—इति । 'लोहं [illegible] रजतं कनकं वा'—इति च तद्व्याख्याने महीधरः ।

† निरु० ७ २५ ।

'छयद्दोर्भश्छन्दसि (सि० कौ० वै० ३ अ०)'—इति भकारः। हिरण्येन हरति-धातुजेन समानार्थम्। "सुवीराभिस्तिरते वाजभर्मभिः (ऋ० सं० ८,१९,३०)"—"अग्निंरुभर्मन्नागहि (ऋ० सं० ८,१८,४)"—इति च निगमौ। 'वाजभर्मभिः', 'अग्निंरुभर्मन्'—इत्यत्र माधवस्तु—'भर्त्तव्यं भर्म'—इति व्याख्यत्.* तदा निगमोऽन्वेषणीयः॥

(१२) अमृतम्†। नञ्पूर्वान्मियतेः (तु० आ०) 'तनिमृङ्भ्यां किच्च (उ० ३,८५)'—इति तन्-प्रत्यये रूपम्। न म्रियन्तेऽनेन दुर्भिक्षादौ, नास्ति मृतं मरणमस्येति वा;—न हि हिरण्यस्य यस्यां कस्याञ्चिदवस्थायामात्मनाशो विद्यते। 'अग्नेः प्रजातं परि यद्धिरण्यममृतं दध्रे अधि मर्त्येषु (अथ० सं० १९,२६,१)'—इति खैलिकोमन्त्रः‡। न म्रियते पात्रे प्रतिपादितेन ध्रियमाणेन वा आयुष्करत्वात्। 'आयुर्वै हिरण्यम्'—इति श्रुतिः। तथाच खैलिकोमन्त्रः—'यो बिभर्त्ति दाक्षायणᳪ हिरण्यᳪ स देवेषु§ कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः (य० वा० सं० ३४,५१)'—इति। "मत्ता चक्राणो अमृतानि विश्वा (ऋ० सं० १,७२,१)"—"शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन (य० वा० सं० ४,२६)"—इति निगमौ॥

(१३) मरुत्‖। मितममितं वा रोचते, मितममितं वा रोच-

* 'वाजभर्मभिः। वाजानामन्नानां बलानां वा भर्म भरणं यासु तादृशीभिः'—इति, 'हे अग्निरुभर्मन्! अग्निंमितभरण'—इति च सा० भा०।

† प० १२। निघ० २, २०. ३, १२. ८, २०, १०, ३।

‡ किञ्चिदनारभ्याधीत इत्यर्थः। तथाहि महीधरः—'इदानीं खिल्यान्युच्यन्ते क्वचिद्विनियोगामुक्तेः (य०वा०सं०३४, १)'—इति। मनौ च २, १२१।

§ "जीवेषु"—इति अथर्व-पाठः १, ३५, २।

‖ प० २, ७, १८. ५, ५। निघ० ११, १२।

यति; मातेः पूर्वार्द्धं, रौतेर्वोत्तरार्द्धम्; पृषोदरादित्वात् (६,३, १०९) साधुः। हिरण्यं हि अग्न्यादि-तेजस्वि-पदार्थेभ्यो मितं भोगादिभ्योऽमितं रोचते; अर्थिभ्योदीयमानं लोकद्वयेऽपि कीर्त्तिं कारयति। तथाच सुभाषित-श्लोकः—'भद्रण्ु पाणे! त्वयि न्यस्तं कियत्त्राणादि कङ्कणम्। इदमेवार्थिहस्तस्थं रावयति च रोचते'। यद्वा; मृङो रुतिः,—म्रियतेर्धातोः (तु० आ०) रुतिप्रत्यये रूपम्। म्रियन्तेऽनेन पुरुषादति मरुत्,—एतदर्थं हि चौरादिभिः पुरुषाः हन्यन्ते। निगमोऽन्वेषणीयः* ॥

(१४) दत्रम्। 'डु दाञ् दाने (जु० उ०)। 'अमि-चिमि-मिदि-शंसिभ्यः क्त्रः (उ० ४,१५९)'—इति विधीयमानः क्त्रो बाहुलकात् (३,३,१) भवति। 'दो दद् घोः (७,४,४६)'—इति दद्भावः। दीयते पात्रे दत्रम्†। "इन्द्र! यत्ते माहिनं दत्रमस्त्य॑ (ऋ० सं० ३,३६,९)"—इति निगमः ॥

(१५) जातरूपम्। 'जनी प्रादुर्भावे (दि० आ०)। निष्ठा-तकारः। 'जनसनखनाम् (६,४,४२)'—इत्यात्वम्। जातः। 'रुच दीप्तौ (भ्व० आ०)। 'खष्प-शिल्प-शष्प-वाष्प-रूप-पर्प-तल्पाः (उ० ३,२६)'—इति प-प्रत्ययान्तो निपातितः, निपातनादुकारस्य दीर्घ-श्चकारलोपश्च। रोचते रूपम्। अनाहार्यतया जातं रूपमस्य जात-रूपम्। तथाच श्रीरामायणे स्कन्दोत्पत्तौ—'इह हैमवते भागे गर्भोऽयं

* मरुच्छब्दयुक्तास्तु बहवो मन्त्राः श्रूयन्ते, परं तेषु हिरण्यवाचिन एव मरुतोऽन्वेषण-प्रयासः स्वीकर्त्तव्य इति भावः।

† क्त्र-प्रत्यये दद्भावे दत्त्रमिति द्वितकारात्मकरूपं स्यात् परं न तथोपलभ्यते क्वचिदपि।

सन्निवेश्यताम्'—इत्यतः 'परिनिर्व्यिद्यमाने गर्भे तु तेजोभिरभिरञ्जितम्। सर्वं पर्वतसन्नद्धं सौवर्णमभवद्वनम्। जातरूपमिति ख्यातं तदा प्रभृति राघव!। सुवर्णं पुरुषव्याघ्र! हुताशनसमप्रभम्'—इति (उ० का०)। जातं रूपं सौन्दर्यमनेन धारयितृणामिति वा जातरूपम्। "जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चति (ऐ० ब्रा० ८,१८)" —इति निगमः॥

इति पञ्चदश हिरण्यनामानि॥ २॥

अम्बरम्(१)। वियत्(२)। व्योम(३)। बर्हिः(४)। धन्व(५)। अन्तरिक्षम्(६)। आकाशम्(७)। आपः(८)। पृथिवी(९)। भूः(१०)। स्वयम्भूः(११)। अध्वा(१२)। पुष्करम्(१३)। सगरः(१४)। समुद्रः(१५)। अध्वरम्(१६)। इति षोडशान्तरिक्षनामानि*॥ ॥ ३॥

(१) अम्बरम्†। 'अबिङ् शब्दे (भू० आ०)'। 'कृदरादयश्च (उ० ५,४२)'—इति अरच्-प्रत्ययान्तो निपात्यते। अम्बन्ते शब्दायन्तेऽस्मिन् मेघाः, अम्बते शब्दायते वा स्वयं वायुमेघादिसंसर्गात्,—आकाशगुणो हि शब्दः। अथवा अर्त्तेर्धातोः 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च (उ० १,२६)'—इति अमते-

(५) "धन्वा" ख।
(११) "स्वयम्भूः"—इत्यपि दृष्टं देवराजेन कथञ्चित्।
(१४) "सगरम्" ग. C. D. F। ऋ० सं० १०, ८९, ४. सा० भा०
* "इति षोडशाम्बरनामानि" ख। "इत्यन्तरिक्षस्य" ग।
† प० २, ११।

विधीयमान उ-प्रत्ययोबुगागमश्च बाहुलकात् (३,३,१) भवति; तस्मिन्, गुणे, र-परत्वे च रेफस्य मकारश्च; अम्बु । अमतेरेव वा तेनैव सूत्रेण उ-प्रत्ययो बुगागमश्च । उभयत्रापि गच्छति देशाद्देशान्तरं गम्यते वा प्राणिभिरित्यम्बु जलम् । तद्राति ददातीत्यम्बरो मेघः । 'आतोऽनुपसर्गे कः (३.२,३)', पृषोदरादित्वात् (६,३,१०९) उकारस्याकारः । तद्वदाकाशमप्यम्बरम् । 'लुगकारेकाररेफाश्च वक्तव्याः (४,४,१२८ वा० २)'—इति मत्वर्थीयस्य लुक् । तदेव वा वर्षासु प्राणिभ्य उदकं ददातीति अम्बरम् । अथवा अम्बुशब्दे उपपदे राजतेर्धातोः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति दृशिग्रहणात् डः; अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वादर्थसिद्धिः । अथवा अम्बुवद्राजते स्वच्छस्तिमितसागराम्बुवदवभासते । कल्पितोपमानञ्चैतत्, तद्यथा—'पुञ्जीकृतमिव ध्वान्तं मेघोभाति मतङ्गजः । शरः शरत्प्रसन्नाम्भोनभःखण्डमिवोज्झितम् ॥' परमार्थतः स्वरूपमवकाशः । अथवा अम्बुमत् भवति रोमत्वर्थीयः; पूर्ववदुकारस्याकारः; अन्तरिक्षं हि वर्षोदकेन तद्वत् । "यन्नासत्या परावति यद्वास्थो अध्यम्बरे (ऋ० सं० ८,८,१४)"—इति निगमः ॥

(२) वियत् । 'यमु उपरमे (भू० प०)'—इत्यस्मात् औणादिके क्विपि, 'गमः क्वौ (६,४,४०)'—'गमादीनामिति वक्तव्यम् (६,४,४० वा०)'-इत्युक्तेरनुनासिकलोपः । 'ह्रस्वस्य पिति कृति तुक् (६,१,७१)' । विगतं यमनमुपरमणमस्मादिति वियत्;—अन्तरिक्षं हि सर्वत्र व्याप्तत्वात् न कुत्रचित् उपरतम् । 'वियच्छति न विरमति'—इति क्षीरस्वामी । यद्वा; विपूर्वात् 'यती प्रयत्ने (भू० आ०)'—इत्य-

स्मात् क्विप्। विविधं यतन्तेऽस्मिन् प्राणिनः;—आकाशे हि सर्वे व्याप्रियन्ते। निगमोऽन्वेषणीयः* ॥

(३) व्योम†। विपूर्वादवतेर्व्याप्त्यर्थत्वात् (भू०प०) औणादिके 'सर्वधातुभ्यो मनिन् (उ०४,१४०)'—इति सूत्रेण मनिन्-प्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च (६,४,२०)'—इत्यूठि,गुणः। व्यवति व्याप्नोति सर्वं जगत्। यद्वा; अवतिर्गत्यर्थः (भू०प०) भावे मनिन् (उ०१,१३९),—ओम्; अवनं गमनं विविधमस्मिन् विद्यते। यद्वा; रक्षणार्थः (भू०आ०),—विशेषेणावति प्राणिनोऽवकाशप्रदानेन। उणादौ तु 'नामन्-सीमन्-व्योमन् (उ०४,१४६)'—इत्यादिना 'व्येञ् संवरणे (भू०उ०)'—इत्यस्मान्मनिनि उत्वं निपात्यते। व्रीयते तद्वायुना व्योम। तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः परिवीतो वायुना (११,४०)'—इति। इदं निर्वचनमेतत्पदकारयोः शाकल्यात्रेययोरनभिमतं वीत्यस्मिन्नवगृहीतत्वात्। "सहस्राक्षरा परमे व्योमन् (ऋ०सं०१,१६४,४१)"—"मत्यामाशिरं पूर्व्ये व्योमनि (ऋ०सं०९,७०,१)"—इति च निगमौ ॥

(४) बर्हिः‡। बृहि वृद्धौ (भू०प०)। 'बृंहेर्नलोपश्च (उ०२,१०२)'—इति इसि-प्रत्ययः। 'बृंहति वर्द्धतेऽनेन प्राणिजातम्,—सर्वे हि प्राणिन आकाशे वर्द्धन्ते; परिवृद्धं वा स्वयं विभुत्वात्। "यस्य त्रिधात्ववृतं बर्हिः (ऋ०सं०८,१०२,१४)"—इति निगमः ॥

---

* ऋक्संहितायामस्ति 'वियतम्' (५,१९,२) पदं तत्र सायणेन 'शिथिलाङ्गम्' —इत्यर्थः कृतः।

† प० ६, १२। निरु० ११, ४०।

‡ प० १२. ५, १। निरु० ८, ८।

(५) धन्व* । 'इवि रिवि धवि गत्यर्थाः (भू० प०)' । इदित्वा-न्नुम् (७,१,५८) । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः (उ० १, १५४)'—इति कनिन् । धन्वन्ति गच्छन्ति अस्मादापः । यद्वा; 'धन धान्ये (दि० आ०)', अनेकार्थत्वादर्थनार्थः । कनिप् । धन्यते अर्थ्यते ऽवकाशप्रदानाय, देवतात्वात् स्वं स्वमभीष्टं वा । "यः परस्याः परावतस्तिरो धन्वातिरोचते (ऋ० सं० १०, १८७, २)"—इति निगमः ॥

(६) अन्तरिक्षम्† । 'अन्तरिक्षं कस्मात्? (निरु० ७,१०)'—इत्यादि भाष्यस्य स्कन्दस्वामि-ग्रन्थो यथादृष्टं लिख्यते—'अन्तरा-मध्ये सर्वभूतानां क्षान्तं शान्तं निःक्रियं वा शान्तमव्यूहं विष्कम्भ-स्थानात्मकत्वात् । अन्तरा इमे रोदस्यौ क्षियतीति वा । अन्तरेमे क्षोण्याविति वा । एवमनेकविकल्पमुत्तरपरम् । पूर्वशरीरेष्वन्तरक्षय-मिति वा; अन्तः-शब्दात् पूर्वपदमक्षयशब्दादुत्तरपदं विनाशिष्वप्य-विनाशीत्यर्थः'—इति । सर्वत्र, पृषोदरादित्वात् (६,३,१०९) साधु । 'न यस्य द्यावापृथिवी न धन्व नान्तरिक्षम् (ऋ० सं० १०,८९,६)" —इति निगमः ॥

(७) आकाशम् । आङ्-पूर्वात् 'काशृ दीप्तौ (दि० आ०)'—इत्यस्मात् 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'—इति घ-प्रत्ययः । आ समन्तात् काशन्ते दीप्यन्ते सूर्यादयोऽत्र । यद्वा; नञ्-पूर्वात् काशेः पचाद्यच् (३,१,१३४), नञ्स्छान्दसो (६,३,१३६)

* प० ४,२ । निरु० ५, ५. ९, १८ ।
† निरु० २, १० ।

दीर्घः। न काश्यते, पृथिव्यादिवत् अप्रत्यक्षत्वात्। तथाच श्रुतिः—'तिस्रो मह्नीरुपरास्तस्थुरत्या गुहा द्वे निहिते दर्श्येका (ऋ०सं० ३, ५६,२)'—इति। 'तस्मान्नान्तरिक्षं पश्यति'—इति च। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः (तै०उ० २,१)"—इति निगमः॥

(८) आपः*। 'आप्लृ व्याप्तौ (भ्वा०प०)'। 'आप्नोतेर्ह्रस्वश्च (उ० २,५५)'—इति क्विप्-प्रत्ययः उपधाह्रस्वश्च। जसि 'अप्तृन्तृच्स्वसृ (६.४,११)'—इत्यादिना दीर्घः। व्याप्नोति ह्यन्तरिक्षं सर्वं जगत्, आप्यते वा प्राणिभिः। अप-शब्दस्य नित्यं बहुवचनान्तत्वात् बहुवचनान्तस्य पाठः। * * *। "तृतीयमप्सु नृमणा अजस्रम् (ऋ०सं० १०,४५)"—इति निगमः॥

(९) पृथिवी†। प्रथ प्रख्याने (भ्वा०आ०)। 'प्रथेः षिवन् सम्प्रसारणं च (उ० १,पा०)'। 'षिद्गौरादिभ्यश्च (४,१,४१)'—इति ङीप्। प्रथते पृथिवी। "यः पार्थिवस्य क्षम्यस्य राजा (ऋ०सं० २, १४,११)"—"स दाधार पृथिवीं द्यामुतेमाम् (ऋ०सं०१०, १२१,१)"—इति च निगमौ॥

(१०) भूः‡। भवतेः (भ्वा०प०) क्विप्। भवत्यस्माद् वृक्षादिः। निगमोऽन्वेषणीयः॥

(११) स्वयम्भूः। स्वयं भवति न केनचित् सृज्यते, केषाञ्चिद् वादिनां पक्षे नित्यं ह्याकाशम्। स्वयम्भ्वित्युकारान्तं केषुचित्। तदा

* प० ११.५, २। निरु० ९, २६।
† प० ५, ३.५.६। निरु १, १३. ९, ३१. ११, ३६. १२, ३०।
‡ प० १।

'मृगय्वादित्वात् (उ० १,३६)' कुः। निगमस्यादर्शनात्* उभयमपि लिखितम्, निगमदर्शनान्निर्णयः कार्यः ॥

(१२) अध्वा। 'अद भक्षणे (अदा०प०)'। 'अदेर्ध च (उ० ४, ११२)'—इति वनिप् धकारश्चान्तादेशः। अदनं स्वस्तिगच्छतां पथ्यादीनां क्षेमस्थानाभावात्। यद्वा; अधिर्गत्यर्थः कश्चिद्धातुः, बाहुलकात् पूर्वेण वनिप्, गच्छन्त्यस्मिन् देवादय इत्यध्वा। 'अधेर्गतिक्रियात्'-इति माधवः। यद्वा; अध्वा मार्गोऽस्मिन् विद्यते मत्वर्थीयस्य लुक्,—सन्ति ह्याकाशे मेघपथादयः। 'अतेर्धश्च'—इति भोजसूत्रम्। 'अत सातत्यगमने (भू०प०)'। सततं गच्छन्त्यत्र सूर्यादय इत्यध्वा। "भूमा रेजन्ते अध्वनि प्रविक्ते (ऋ०सं० ६,५०,५)"—"असमने अध्वनि वृजिने पथि (ऋ०सं० ६,४७,१३)"—इति निगमौ ॥

(१३) पुष्करम्† । 'पुष पुष्टौ (स्वा०प०)'। 'पुषः कित् (उ० ४,४'—इति करन् प्रत्ययः। पुषिरत्रान्तर्णीतण्यर्थः, पोषयति भूतान्यवकाशप्रदानेन उदकदानाद्युपकारेण च। 'पुष्कं वारि राति पुष्करम्'—इति क्षीरस्वामी। पुषेरन्तर्णीतण्यर्थात् 'इषिभिषिशुषिपुषिधिभ्यः कित् ( ? )'—इति विहितः करन् प्रत्ययो बाहुलकाद् भवति। 'इकृष्कसृपुषीचीपुषिमुषिमूङ्पूभ्यः कित्'—इति करः श्रीभोजदेवः। पोषयति भूतानीति। पुष्कोपपदाद्राते: 'आतोऽनुपसर्गे कः (३,२, ३)'। यद्वा; वपुरित्युदकनाम (निघ० १,१२), तत्कर्तृ मौल-

* अस्मादिवाचकत्वेन स्वयम्भूशब्दस्य सायणादिभिर्व्याख्यातत्वादित्येव भावः, स्वयम्भूपदघटितमन्त्रस्तु दृश्यते एव 'स्वयुम्भूर्भामो अभिमातिषाहः (ऋ०सं०१०,८३,४)' —इति।

† निघ० ५, १४।

मत्येति 'कञ्जो हेतुताच्छील्यानुलोम्येषु (३,२,२०)'—इति टः, वपुष्करं सत् वकारलोपेन पुष्करम्; पृषोदरादिः। "विश्वे देवाः पुष्करे त्वाददन्त (ऋ०सं०७,३३,११)"—इति निगमः॥

(१४) सगरः। सहशब्दपूर्वात् 'गॄ निगरणे (तु०प०)'—इत्यस्मात् 'ऋदोरप् (३,३,५७)', सहस्य सभावः (६,३,७८)। सह गिरन्त्यस्मिन् स्थिता आदित्यरश्मयो भौमरसमिति सगरः। सह उद्गिरन्त्यस्मिन् स्थिता मेघा वर्षोदकमिति वा। यद्वा; गीर्यते अभ्यवह्रियते विद्यते इति गरः उदकम्, तेन सह वर्त्तते इति सगरः। तथाच—'रश्मयश्च देवा गरगिरः'—इत्यत्र गृ(गा)हदेवः 'गरमुदकं गिरन्ति गरगिरः'—इति भाष्यं कृतवान्। यद्वा; 'गॄ शब्दे (क्र्या०प्वा०प०)'—इत्यादि। गीर्यते इति गरः शब्दः पूर्ववत्, गरेण शब्देन सह वर्त्तते इति सगरः;—आकाशोहि स्वगुणेन शब्देन सहैव सर्वदा वर्त्तते। "अपः प्रेरय' सगरस्य बुध्नात् (ऋ०सं०१०,८९, ४)"—इति निगमः॥

(१५) समुद्रः*। समुद्द्रवन्ति सङ्गता ऊर्द्धं द्रवन्ति गच्छन्त्यस्मादापोरश्मिभिराकृष्यमाणा आदित्यमण्डलम्। समुत्-पूर्वात् द्रवतेर्गत्यर्थात् 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति अपादाने ड-प्रत्यये टि-लोपे च रूपम्। यद्वा; संहता अभिद्रवन्त्येनमापो भौमरसलक्षणा वायुना प्रेर्यमाणाः आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः प्रवर्त्तमानाः। अत्र उदित्येष उपसर्गोऽभीत्यर्थे वर्त्तते; कर्मणि ड-प्रत्ययइति विशेषः।

* प० ५, ६। निरु० २, १०. १०, ११. ११, ४१. १९, ३१।

सम्मोदन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा। सम्पूर्वात् 'मुद हर्षे (भू०आ०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ०२,१२)'—इत्यादिना अधिकरणे रक्-प्रत्यये, समो म-लोपे च रूपम्। यद्वा; 'सम्'—इत्येकीभावे, उदकात् उच्छब्दः, रो मत्वर्थीयः। एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति उदकशब्दस्योद्भावश्छान्दसः। यद्वा; सम्पूर्वात् 'उन्दी क्लेदने (रु०प०)'—इत्यस्मात् 'स्फायितञ्चिवञ्चि (उ० २,१२)'—इत्यादिना कर्त्तरि रक्-प्रत्यये कित्त्वान्नलोपे च समुद्रः। समुनत्ति वर्षेण भुवनं समुद्रः। "एकः सुपर्णः स समुद्रमा विवेश (ऋ०सं०८,६,१६,४)"—इति निगमः॥

(१६) अध्वरम्* । अध्वा व्याख्यातः (२८पृ०)। अध्वानं मार्गं राति ददाति (अदा०प०) स्वस्मिन् गच्छतां पक्ष्यादीनां। यद्वा; अध्वा मार्गो विद्यतेऽस्मिन् मेघादीनाम्। रो मत्वर्थीयः। यद्वा; ध्वरतिर्हिंसाकर्मा (निघ० २,१८), तत्प्रतिषेधः। अध्वर्त्तव्यं न हिंस्यमित्यर्थः। नञ्-पूर्वात् ध्वरतेः 'पुंसि सञ्ज्ञायां घः प्रायेण (२,३, ११८)'—इति घः। "शिप्रूत्क्रीळन्तौ परि यातो अध्वरम् (ऋ०सं०८,३,२३,३)"—इति निगमः। 'अध्वरं यज्ञम्'—इति स्कन्दस्वामी व्याख्याति; तदा निगमोऽन्वेषणीयः॥

इति षोड़शान्तरिक्षनामानि ॥ ३ ॥

* प० ३, १७। निरु० १, ८. ९, १२. १०, १९।

स्वः[१]। पृश्निः[२]। नाकः[३]। गौः[४]। विष्टप्[५]। नभः[६]। इति षट् साधारणानि* ॥ ४ ॥

स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना च कृतव्याख्यानानीति नास्माभिरत्रोच्यन्ते ॥ ४ ॥

खेदयः[१]। किरणाः[२]। गावः[३]। रश्मयः[४]। अभीशवः[५]। दीधितयः[६]। गभस्तयः[७]। वनम्[८]। उस्राः[९]। वसवः[१०]। मरीचिपाः[११]। मयूखाः[१२]। सप्तऋषयः[१३]। साध्याः[१४]। सुपर्णाः[१५]। इति पञ्चदश रश्मिनामानि† ॥ ५ ॥

(१) खेदयः। 'तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः (नि २, १ ५)'—इत्युक्तेः पूर्वमादित्यरश्मिनामानन्तरमश्वरश्मीनाञ्च निर्वचनं प्रदर्श्यते'। 'खिद दैन्ये' दिवादिः रुधादिश्च आत्मनेपदी, 'खिद परिघाते तुदादिर्मुचादिः परस्मैपदी। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। खिद्यते खिन्ते वाऽनया, लोको घर्मकाले, अश्वो बन्धनकाले। यद्वा; परिहन्यन्ते सर्वतो हिंस्यन्ते

* (१) प० १२। निरु० २, १४. ५, ४. १९. ११, ७। (२) निरु० २, १४। (३) "नाकाः" ख। निरु० २, १४। (४) पृ० १। (५) निरु० २,१४. ५,२०। (६) प० १, १२. ३, २०। निरु० २, १४।
(४) "रश्मा:" ख। (६) "दिधीतयः" च।
(१२) "मयुखाः" ख। इह खराद्युदिर्मांनाद्युदित्र लक्ष्येते।
(१३) "सप्तर्षयः" च।
† "इति रश्मीनाम्" ग।

अनया लोक आदित्येन, अश्वो बन्धनकाले। यद्वा; अनेकार्थत्वात् धातूनां खिदिः खेदने वर्त्तते। तथाच 'खेदनं छेदनम्'—इति माधवः। अस्मात् पचाद्यचि (३,१,१३४) खेदति छिनत्ति नाशयति तमः। तथाहि 'दोषश्छिन्नः*'—इत्यादौ छिदिर्नाशने दृष्टः; घञि छिद्यतेऽश्वोऽनयेति खेदा अश्वरश्मिः। तृतीयैकवचनान्तस्य पाठो यथादृष्टः। "खेदया त्रिवृता दिवः (ऋ०सं० ६,५,१५,३)"—इत्यश्वरश्मेर्निगमः, आदित्यरश्मेरन्वेषणीयः† ॥

(२) किरणाः। 'कॄ विक्षेपे' तुदादिः (प०), 'कॄञ् हिंसायाम्' क्र्यादिः (प०)। 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः (उ०२,७६)'—इति क्यु-प्रत्ययः। किरन्ति तापम्; एकत्रौष्ण्येन, इतरत्र बन्धनेन। कीर्यन्ते वा; आदित्येन दिङ्मुखेषु, अश्ववालेनाश्वग्रीवादिषु। यद्वा; कृणवन्ति हिंसन्ति तमः, हिंस्यन्त एभिरश्वकिरणाः। "भिया दृळ्हासः‡ किरणा नैजन् (ऋ०सं० १,५,४,१)"—इति निगमः आदित्यरश्मेः। "रेणुं रेरिहत् किरणं दद्श्वान् (ऋ०सं० ३,७,१२,१)"—इत्यश्वरश्मेः ॥

---

* लौकिकव्यवहारएषः।

† चर्चेयमापद्यते—"खेदा"—इत्यस्य रश्मिपर्यायत्वे "खेदयः"—इति कथं पठितम्? निगमस्य यथापाठावलम्बनमेव चेद्दुपगतं चेत् "खेदया"—इति पाठेन भवितव्यम्। अधिकमाश्चर्यमेतत्—यट्टीकाकारेण 'खेदयः'—इति प्रतीकमवलम्ब्यैव 'खेदा'—इति व्याख्याय 'खेदया'—इत्युदाहृत्य च निरस्तमिति। ऋक्संहितायामपरावपि द्वौ निगमौ,—'क्षुराँ इव खेदया (६,५,१९,२)—इति, 'खेदामवग्रुणा इषस्य (८,१,२०,४)'—इति च। १०,१०,४,४ परं 'खेदयः'—इत्येवं पदं न दृश्यते क्वापि।

‡ 'ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तः'—इति प्रातिशाख्यम्।

(३) गावः* । व्याख्यातः पृथिवीनामसु (१,१)। गच्छन्ति सर्वतस्तमो विहन्तुं, भौमं रसं वा हर्तुं, गीयन्ते स्तूयन्ते स्वाभिमत-साधनाद् यजमानैरश्वपालैश्च। "यत्र गावो भूरिशृङ्गा अयासः (ऋ० सं० २,२,२४,६)"—"को अद्य युङ्क्ते धुरि गा ऋतस्य (१,६,८,१)"—इति आदित्यरश्मेर्निगमौ । अश्वरश्मेरन्वेषणीयः ॥

(४) रश्मयः† । 'रश्मिर्यमनार्थो धातुः (सौ०)'।'नियोमिः (उ० ४, ४३)'—इति विधीयमानो मि-प्रत्ययो बाहुलकाद् भवति । रशना रश्मिरिति कतिपयप्रयोगविषयएवायं रश्मिः, भरत्यादिवत्, न सर्वत्र, बन्धनप्रतीतेः। बध्नन्त्युदकमथवा बध्यते तै रुदकमश्वो वा। यद्वा; 'अशू व्याप्तौ (स्वा० आ०)'। 'अशे रश्च (उ० ४,४६‡)'—इति मि-प्रत्ययो रशादेशश्च। अश्नुवते सर्वं जगत् अश्वग्रीवादि वा रश्मयः। "सूर्यस्येव रश्मयो द्रावयित्नवो (ऋ० सं० ७,२,२२,१)"—"विर-श्मयोजनाँ अनु (ऋ० सं० १,४,७,३)"—इति आदित्यरश्मेर्नि-गमौ। "मनः पश्चादनु यच्छन्ति रश्मयः (ऋ० सं० ५,१,२०,१)"—"ते रश्मिभिस्तऋक्वभिः सुखादयः (ऋ० सं० १.६,१२,६)"—इति चाश्वरश्मेः ॥

(५) अभीशवः§। अभिपूर्वात् 'अशू व्याप्तौ (स्वा० आ०)'—इत्यस्मात् 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १,७)'—इति उ-प्रत्ययो बाहुलकाद् भवति धात्ववयवस्याकारस्येकारश्च। जस्। अभि व्याप्नुवन्ति जगदश्वग्रीवां वा । यद्वा; अभिपूर्वात्

* पृ० १। † निरु० २,१५। ‡ 'अश्नोते रश्च'—इति सि० कौ० पाठः
§ प० २, ४. ५. ५, २। निरु० ३, ९. ९, १५।

'ईश ऐश्वर्य्ये (अदा० आ०)'—इत्यस्मात् पूर्ववदुप्रत्ययः। ईष्टे सूर्य्यस्तमोऽपहन्तुमेभिः, अश्वपालोऽश्वं वद्धुम्। "अभीशूनां महिमानं पनायत (ऋ० सं० ५,१,२०,१)"—इत्यश्वरश्मेर्निगमः। आदित्यरश्मेरन्वेषणीयः ॥

(६) दीधितयः *। एतदादीन्यादित्यरश्मिनामान्येव। 'दीधिङ् दीप्तिदेवनयोः (अदा० आ०)'। 'क्तिच्क्तौ च सञ्ज्ञायाम् (३,३, १७४)'—इति क्तिचि पृषोदरादित्वादेव (६,३,१०९) यथाकथञ्चिद्रूपसिद्धिरुन्नेया। धीयन्ते विधीयन्ते प्रेर्यन्ते रसाहरणादिकर्मस्वादित्येन, धार्य्यते वा वर्षार्थमुदकमेभिरादित्येन तथा। 'अथास्य कर्म रसादानं रश्मिभिश्च रसधारणम् (५,१०)'—इति निरुक्तम्। 'न वा स धृतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्)'—इति श्रीरामायणम्। "अुदचीदयन्दीधितिमुक्थशासः (ऋ० सं० ३,४,१८,१)"—इति निगमः। 'दीधितिं रश्मिमित्यर्थः' —इति (१८,६८) वाजसनेयभाष्यकृदुवटोऽभाषयत् ॥

(७) गभस्तयः †। गो-शब्दपूर्वादन्तर्णीतण्यर्थात् 'भस भत्सनदीप्त्योः (जु० प०)'—इत्यस्मात् पूर्ववत् क्तिचीड़भावे च पृषोदरादित्वात् गो-शब्दस्याकारान्तादेशः। गां भूमिञ्च भासयन्ति दीपयन्ति। यद्वा; गवि संसर्गे दीप्यते। यद्वा; बभस्तिरत्तिकर्मा (निघ० २,८०)। गामुदकं भौमरसलक्षणं बभसति अदन्ति। यद्वा; 'भसेर्गट् च'—इति भोज-सूत्रेण ति-प्रत्ययः धातोर्गडागमश्च, बभसति दीप्यन्ते इति गभस्तयः। 'ग्रहेर्गभस्तिः'—इति माधवः, तदा पूर्वसूत्रेण ति-

* प० २, ५ · निरु० ४, १० ।   † प० १, ४. ५ ।

प्रत्यये धातोरसुगागमः, 'वयसोर्भस्मश्छन्दसि (सि०कौ०वै० इ्या०)' —इति निर्वाहः, अश्नन्ति भौमं रसं। "गभस्तिपूतो नृभिरद्रिभिः सुतो (ऋ०सं०७,३,१८,४)"—"सुष्वाणो अंशुभ्यां गभस्तिपूतः (य०वा०सं०७,१)"—इति च निगमौ॥

(८) वनम्*। 'वन षण सम्भक्तौ' भ्वादिः परस्मैपदी। 'पुंसि संज्ञायां घः (३,३,११८)'। वन्यते सेव्यते शीतादिनिवारणाय। अथ वा वनतिर्हिंसार्थः (भ्वा०प०)। वन्यते हिंस्यतेऽनेन तमः। यद्वा; 'वनु याचने' तनादिरात्मनेभाषा। वन्यते याच्यते वृष्टिप्रदानाय। यद्वा; 'वन शब्दे' भ्वादिः परस्मैपदी। वन्यते शब्द्यते स्तूयते स्तोतृभिः। "अबुध्ने राजा वरुणो वनस्य (ऋ०सं०१,२,१४,२)"—इति निगमः। 'वननीयस्य तेजसः'—इति माधवः॥

(९) उस्राः†। 'वस निवासे (भ्वा०प०)'। 'स्फायितञ्चिवञ्चि (उ०२,१२)'—इत्यादिना रक्,अदादित्वात् सम्प्रसारणं बाहुलकात्, 'शासिवसिघसीनाञ्च (८,३,६०)'—इति षत्वाभावः। वसन्त्येषु परतेजः वसन्त्येषु रसाः इति वा। यद्वा; उत्पूर्वात् 'स्रु गतौ (भ्वा०प०)' —इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकाद् भवति, उदोऽन्त्यलोपश्च। उत्स्रवन्ति एभ्योरसाः। "उस्रा इव स्वसराणि(ऋ०सं०१,१,६,२)"—इति निगमः॥

(१०) वसवः‡। 'वस निवासे (भ्वा०प०)','वस आच्छादने (अदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ०१,१०)'

* प० १, १२। निघ० ९, २९.८, १।
† प० २. ११। निघ० ४. १९. ६, १५।
‡ प० १, ७. २, १०. ४, ६ निघ० ५, १९. ९, ४०. १२, ४१।

—इति उ-प्रत्ययः। वसन्ति लोकेषु, वासयन्ति रसाः, वसत्येषु परं तेजः, आच्छादयति वा लोकान् वृष्ट्या, विवासयति वा तमः। 'बहु-लमन्यत्रापि सञ्ज्ञाच्छन्दसोः (६,४,५१वा०)'—इति णि-लुक्। वासयितारो वा लोकानां वृष्ट्यादिप्रदानेन। "अया अत्र वसवो रन्त देवाः (ऋ०सं० ५,४,६,३)"–"सुगावो देवाः सदना अकर्म य आजग्मुः सवनमिदं जुषाणाः। जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि (य०वा०सं० ८,१८*)',–"हिङ्कृण्वती वसुपत्नी वसूनाम् (ऋ०सं० २,३,१८,२)"—इति च निगमाः॥

(११) मरीचिपाः। 'मृङ् प्राणत्यागे (तु०आ०)'। 'मृकणिभ्या-मीचिः (उ० ४,७०)'—इति ईचिः प्रत्ययः। म्रियते तमोऽस्मिन्निति मरीचिः रश्मिः। अत्र मरीचिशब्देन मरीचिमान् सूर्य उच्यते, मत्व-र्थीयस्य लुक् साहचर्याद् भाव्यते, मरीचिमत्सूर्यमण्डलं पान्ति मरी-चिपाः, 'आतोऽनुपसर्गे कः (३,२,३)। "देवेभ्यस्त्वा मरीचिपेभ्यः (य०वा०सं० ७,३)"—इति निगमः॥

(१२) मयूखाः। 'डु मिञ् प्रक्षेपणे (स्वा०उ०)'। अस्मात् 'मुचेः खो डयूट् च (उ० ४,२२†)'-इति विधीयमानः ख-प्रत्ययो बाहु-लकाद् भवति; डयूडागमस्य प्रत्ययस्य बाहुलकादेव। मिन्वन्ति तमः मयूखाः। ख-प्रत्ययाधिकारे 'मयेरूट् च'-इति श्रीभोजदेवः। मयतिर्गत्यर्थः (भू०आ०)। गच्छन्ति सर्वलोकेषु मयूखाः। "दाधर्थ पृथिवीमभितो मयूखैः (ऋ०सं० ५,६,२४,३)"—"इमे मयूखा उप सेदुरु सदः (ऋ०सं० ८,७,१८,२)"—इति च निगमौ॥

---

* शाखान्तरपाठोऽयम्। † 'माङ्जबोमय च। उ० ४, २५'—इत्येतन्न दृष्टं किम्?।

(१३) सप्तऋषयः*। 'सप्त सृप्ता सङ्ख्या (निरु० ४,२६)'— इत्युक्तः सृपेर्गत्यर्थात् 'सप्यशूभ्यां तुट् च (उ० १,१५५)'—इति सपेर्विधीयमानः कनिन् प्रत्ययस्तुडागमश्च बाहुलकाद् भवति ऋकारस्याकारश्च। षड्भ्यः सकाशात् सृप्ता सङ्ख्या सप्त। 'ऋष गतौ (तु० प०)' अनेकार्थत्वाद्धातूनां दर्शनार्थः। 'इगुपधात् (उ० ४,११६)'— इति इन् प्रत्ययः। ऋषयः द्रष्टारः। सप्तसङ्ख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्तऋषयः। 'ऋत्यकः (६,१,१२८)'—इति प्रकृतिभावः। "सप्त युञ्जन्ति रथमेकचक्रम् (ऋ० सं० २,३,१४,२)" —इत्यत्र 'सप्त आदित्यरश्मयः (४,२६)'—इति वदन्ति नैरुक्ताः। यद्वा; 'षप समवाये (भू० प०)', 'सप्यशूभ्यां तुट् च (उ० १, १५५)'—इति कनिन् प्रत्ययस्तुडागमश्च। समवेताः सप्त; ऋषिरपिगत्यर्थएव प्रत्ययः। समवेता गच्छन्ति दिङ्मुखानि सप्तर्षयः। "यत्रा सप्त ऋषीन् पर एकमाहुः (ऋ० सं० ८,३,१७,२)"—"सप्त ऋषयः प्रतिहिताः शरीरे (य० वा० सं० ३४,५५)"—"अत्रासत ऋषयः सप्त साकम् (अथ० सं० १०,२६,६)"—इति निगमाः॥

(१४) साध्याः†। 'राध साध संसिद्धौ (स्वा० दि० प०)। 'ऋहलोर्ण्यत् (३,१,१२४)'—इति ण्यत् प्रत्ययः, 'कृत्यल्युटो बहुलम् (३,४, ११३)'—इति कर्त्तरि भवति। 'रसाहरणादिकं स्वव्यापारं साध्नुवन्ति संसिद्धं कुर्वन्ति'—इति स्कन्दस्वामी। 'साध्यन्ते आराध्यन्ते साध्याः'—इति क्षीरस्वामी; अत्र यथाप्राप्तोण्यत्। "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ० सं० २,३,२३,४)"—इति निगमः॥

---

* प० ५,६। निरु० ५,२३. १०,२३. १२,२३; ३८। † प० ५,६। निरु १२,४०।

(१५)सुपर्णाः*। सुपस्ष्टात् 'पॄ पालनपूरणयोः (जु०क्या०प्वा०प०)'—इत्यस्मात् 'धापॄवस्यज्यतिभ्यो नः(उ० ३,६)'—इति न-प्रत्ययः। 'पर्णं पततेः पृणातेः प्रीणातेः वा'—इत्यष्टादशाध्यायदृष्टत्वात् पत्-धातोः बाहुलकात् न-प्रत्ययः तकारस्य रेफादेशश्च। प्रीणातेरीकारस्य अकारादेशः स च पकारात् परः। शोभनं पृणन्ति पालयन्ति जगत् शीतादिनिवारणात्; अथवा पूरयन्ति वा वृष्ट्या; शोभनं पतनं गमन मेषामिति वा; सुष्ठु प्रीणन्ति तर्पयन्ति जगत् वर्षप्रदानेनेति वा सुपर्णः। यद्वा; सुर्मत्वर्थः, भावे च न प्रत्ययः। पतनादिमन्तः सुपर्णाः। तथाच—'बृहद्वदेम विदथे सुवीराः(ऋ०सं०२,६,६,६)'—इत्यत्र 'वीरवन्तः कल्याणवीरा वा (निरु०१,७)'। अष्टादशाध्याये च 'सुपर्णं विप्राः(ऋ०सं०८,६,१६,५)—इत्यत्र 'पर्णवन्तं कल्याणपर्णं वा'—इति चेति सुर्मत्वर्थे बहुशोदृष्टः। "यत्रा सुपर्णा अमृतस्य भागम् (ऋ०सं०२,३,१८,१)"-"वयः सुपर्णा उप सेदुरिन्द्रम् (ऋ०सं०८,३,४,६)"—इति च निगमौ॥ रश्मिनां प्रायो बहुवचनान्तत्वेन दृष्टत्वात् रश्मिनामाभिप्रायेण बहुवचनान्तानि पठितानि। एवं दिङ्नामस्वपि(६) द्रष्टव्यम्॥

इति पञ्चदश रश्मिनामानि॥ ५॥

**आताः(१)। आशाः(२)। उपराः(३)। आष्ठाः(४)। काष्ठाः(५)। व्योम(६)। ककुभः(७)। हरितः(८)। इत्यष्टौ दिङ्नामानि† ॥ ६ ॥**

---

* प० ११.१४. ५,४। निरु० ३,१२. ४,२. ७,२४. ७,३१. ९,१९. १०,४५।

† "इति दिशाम्" ग।

(१) आताः। आङ्पूर्वादततेर्गतिकर्मणो (भ्वा०प०) 'अकर्त्तरि च कारके (३,३,१९)'—इति घञ्। आभिमुख्येन गम्यन्ते प्राणिभिस्तं तं कार्यं प्रति। यद्वा; आङ्पूर्वात् तनोतेः 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)'—इति जनेर्विधीयमानो ड-प्रत्ययो बहुलवचनाद् भवति। आतनाः आताः। "स्रुग्भन्त्याताः समसृष्टासो (ऋ०सं० ३, ३,७,६)"—"उदातैर्जिहते बृहद्द्वारो (ऋ०सं० ६,७,२४,५)"—इति निगमौ॥

(२) आशाः*। आङ्पूर्वात् 'अशू व्याप्तौ (भ्वा०प०)'—इत्ययमत्र गत्यर्थः, अनेकार्थत्वाद्धातूनाम्। पूर्ववड्डः। तं तमर्थं प्रत्यागमनात्। यद्वा; आ इत्येषोऽभीत्यस्यार्थे वर्त्तते। 'अशू व्याप्तौ (स्वा०आ०)'—इत्यस्मात् घञि रूपम्। आशा उपदिशा भवन्त्यभ्यशनात् परस्परादिभिः संव्याप्तेः। 'आ अश्नुवते आशाः'—इति क्षीरस्वामी। अत्र पचाद्यच् (३,१,१३४)। "इन्द्र आशाभ्यस्परि (ऋ०सं० २,८,९, २)"—इति निगमः॥

(३) उपराः†। उपरमन्ते आस्वभ्राणि प्राणिनो वा स्व-स्व-व्यापारेभ्यः। पूर्ववत् डः। "उपह्वरे यदुपरा अपिन्वन् (ऋ०सं० १,५, २,१)"—इति निगमः। "तमस्य पृक्षमुपरासु धीमहि (ऋ०सं० २, १,१२,५)"—इत्यत्र दिग्वाची न वेति चिन्त्यम्॥

(४) आष्ठाः। आङ्पूर्वात् तिष्ठते (भ्वा०प०) धातोर्घञर्थे कविधानम्। 'स्थास्नापाव्यधिहनियुध्यर्थम् (३,३,१९म०भा०)'—

---

* प० ४,१। निरु० ६,१। † प० १०। निरु० २,२१।

इति क-प्रत्ययः। सुषामादित्वात् (८,३,९८) षत्वम्। आ समन्तात् स्थीयते आभिः। निगमोऽन्वेषणीयः॥

(५) काष्ठाः*। 'काष्ठा दिशो भवन्ति (निरु० २,१५)'—इत्यत्र स्कन्दस्वामी—'क्रान्त्वा सर्वमतीत्य स्थिताः आकाशवद् व्यतिरेकपक्षे। अव्यतिरेकेऽपि तएव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति। उपदिशोऽप्येवमेव। व्यतिरेकेऽपि इतरेतरापेक्षया परत्वापरत्ववत् सर्वत्र व्यवहारोऽस्तित्वमिति'। क्रान्त्वा-शब्दात् पूर्वार्द्धं स्थिता-शब्दादुत्तरार्द्धमित्यर्थः। पृषोदरादिः। वैयाकरणपक्षे तु 'काशृ दीप्तौ (भू०आ०)'। 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ०२,२)'—इति क्थन् प्रत्ययः। 'तितुत्रतथसिसुसरकसेषु च (७,२,९)'—इति इड्भावः। काशन्ते दीप्यन्ते काष्ठाः। "नरस्त्वां काष्ठास्ववतः (ऋ०सं०४,७,२७,१)" —इति निगमः॥

(६) व्योम†। व्याख्यातमन्तरिक्षनामसु(३)। स एवार्थोऽत्रापि। परिवीता वायुना। 'पवमानो हरित आ विवेश (ऋ०सं०६,७,८,४)'—इति श्रुतिः। यद्वा; विविधमोममन्नमस्मिन् विद्यतइति व्योम। 'ओमानमापो मानुषीरमृक्तम् (ऋ०सं०४,८,९,२)'—इत्यत्र 'अन्नंवा ओमन्'—इति माधवः। निगमोऽन्वेषणीयः॥

(७) ककुभः‡। 'ककुभाति विस्तारयतीति ककुप्'—इति क्षीरस्वामी। 'ककुप् कुभेरुच्छ्रयार्थात् उच्छ्रिता इव हि दिशो वृक्षाग्रेषूपलभ्यमानाः'—इति माधवः। केन प्रजापतिना विस्तारिता इति वा। सर्वत्र 'क्विब्वचिप्रच्छ्यायतस्तु (३,२,१७८वा०)'—इत्यत्र 'प्राक्

* निघ० १,९. २,१५. ९,२४।       † पु० १,३।       ‡ निघ० ७,१२।

प्रत्ययनिर्द्देशादिष्टसिद्धिः (म० भा०)'-इत्युक्तेः क्विपि पृषोदरादित्वाच्च रूपसिद्धिः। "यः ककुभो निधारयः (ऋ० मं० ६,२,२६,४)"—इति निगमः॥

(८) हरितः*। 'हृञ्-हरणे' भूवादिः (उ०), 'हृ प्रसह्यकरणे' जुहोत्यादिः (प०)। 'हृसृरुहियुषिभ्यः (कृग्भ्याभ्यामितन्। उ० ३, ९०)'—इति इतिः। हरन्ति जहृति वा आसु स्थिताश्चौरादयो धनादिकम्। 'हरन्त्याभिः'—इति क्षीरस्वामी। "पवमानो हरित आ विवेश (ऋ० मं० ६,७,८,४)"—इति निगमः॥ 'वायुरेव पवमानो दिशो हरित आविष्टे'—इत्युपनिषत् (ऐ० आ० २,१)॥

इत्यष्टौ दिङ्नामानि॥ ६॥

श्यावी[१]। क्षपा[२]। शर्वरी[३]। अक्तुः[४]। ऊर्म्या[५]। राम्या[६]। यम्या[७]। नम्या[८]। दोषा[९]। नक्ता[१०]। तमः[११]। रजः[१२]। असिक्नी[१३]। पयस्वती[१४]। तमस्वती[१५]। घृताची[१६]। शिरिणा[१७]। मोकी[१८]। शोकी[१९]। ऊधः[२०]। पयः[२१]। हिमा[२२]। वस्वी[२३]। इति त्रयोविंशती रात्रिनामानि† ॥ ७ ॥

---

* प० १२. १५. २,५। निरु० ४, ११।

(६) "रम्या" C. D. F. ग। घ-पुस्तके नष्टः।

(१३) "असिक्ति"
(१४) "पयस्वति"
(१५) "तमस्वति" } ख।

(१६) "घृताची" ख।

(१७) "श्रोणा" C. D. F. ग।

(१८) "मोकि"
(१९) "शोकि"
(२०) "उधा"
(२२) "हिम" } ख।

(२३) "वस्विति" ख. पु० ५। "वस्वेति" ग. C. D. F.। "वमी"—इति रोथ्-ह्ह्टास्मद्द्वयोः देवराजधृतपुस्तकयोः पाठः।

† "इति रात्रेः" ग।

(१) श्यावी*। श्यैङ् गतौ (भ्वा०आ०)'। 'द्रण्शीभ्यां वन् (उ० १,१५०)'—इति विधीयमानो वनप्रत्ययो बाहुलकात् भवति। श्यायते गच्छति स्वाश्रयमिति। श्यावो धूम्रारुणो वर्णः; तमः सम्ब्यादिबन्धात् श्याववर्णा रात्रिः श्यावी, 'अन्यतोङीष् (४,१,४०)। "श्यावीं च यदरुषी च स्वसारौ (ऋ०सं० ३,३,२०,१)"—इति निगमः॥

(२) चपा। 'चप्यते सूर्यचारेण चपा'—इति चीरस्वामी। 'चप् प्रेरणे', 'चपि चान्त्याम्'-इति कथादिषु पठितोऽपि बहुलमेतन्निदर्शनमित्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते। 'चपेः चपयन्ति चान्त्यां प्रेरणे चपयेत्'-इति दैवम्। 'चपः चपयतेर्निशा'—इति च माधवः। चपा-शब्दोऽन्तोदात्तो रात्रिनाम, आद्युदात्तस्तु चपणवचनः। "नृणां नर्यो नृतमः चपावान् (ऋ०सं० ७,७,२२,१)"—इति निगमः। "त्वमिदमि चपावान् (ऋ०सं० ६,५,११,२)"—इति चपणवचनः॥

(३) शर्वरी। 'शृ हिंसायाम् (क्र्या०प०)'। 'कृगृशृवृञ्चतिभ्यः ष्वरच् (उ० २,१२४)'। टित्वात् (४,१,१५) ङीप्। शृणाति चेष्टाम्, रात्रौ हि स्व-स्व-व्यापारेभ्यः उपरमन्ते प्राणिनः; शीर्यन्ते वास्यां प्राणिनो नक्तञ्चरैः। "अति ष्कन्दन्ति शर्वरीः (ऋ०सं० ४, ३,८,३)"—इति निगमः॥

(४) (अक्तुः†। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु (रु०प०)'। 'पः किच्च (उ० १,६८)'—इति विधीयमानः तु-प्रत्ययः किच्चश्च बाहुलकाद् भवति। 'पाञ्जनूभ्यः क्तुः'—इति क्तुरिति श्रीभोजदेवः।

* प० १५। † निघ० १, १८. १२, ११।

'अनिदिताम् (६,४,२४)'—इति न-लोपः। अज्यते विज्यतेऽस्या-मवश्यायेन जगत्, गच्छति वा प्रतिदिनम् अक्तुः। "विश्वामक्तोरुषसः पूर्वहूतौ (ऋ० सं० ५,४,६,२)"—इति निगमः॥

(५) ऊर्म्या। 'ऊर्णुञ् आच्छादने (अदा० उ०)'। 'ऊर्णोतेर्ण-लोपश्च (उ० १,२८ ?)'—इति मि-प्रत्ययः'—इति इति केचित्। 'अर्त्तेरूच्च (उ० ४,४४)'—इति मि-प्रत्ययः'—इति कमलनयनः। ऊर्मिः तमः-सङ्घातः, आच्छादकत्वात् लोकस्य। तमर्हति (५,१,६३)', 'छन्दसि च (५,१,६७)'—इति यत् प्रत्ययः। "इन्द्राय नक्तमूर्म्याः सुवाचः (ऋ० सं० ६,६,३२,१)"—इति निगमः॥

(६) राम्या। 'रमु क्रीड़ायाम् (भू० आ०)'। अन्तर्णीतण्यर्थात् प्रोपार्थविशिष्टादस्मात् 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति बहुलवचनात् 'पोरदुपधात् (३,१,९८)'—इति यतं बाधित्वा 'ऋहलोर्ण्यत् (३,१,१२४)' भवति, 'अचोञ्णिति (७,२,११५)'—इति वृद्धिः। प्ररमयति भूतानि नक्तञ्चराणि, उपरमयति दिवाचराणि स्व-व्यापारेभ्यः। माधवस्तु सर्वभूतानि रमयति। तथाच कौषीतकिः—'ये वै के चानन्दा अन्ने पाने मिथुने रात्र्या एव ते सन्तता अव-च्छिन्नाः क्रियन्ते, तेषां रात्रिः कारोतरः'—इति। 'अधोरामः सावित्रः (य० वा० सं० २९,५८)'—इत्यत्र 'श्वेतः कृष्णोदरः'—इति भाष्यम्। 'रामश्चारौ सिते,सिते'—इति वैजयन्ती। तस्माद्रामशब्दः कृष्णपर्यायः*। स्वाश्रये रमते रामः 'ज्वलिति कसन्तेभ्यो णः (३,१,१४०)'।

* अतएव "रामसंस्थात् (ऋ० सं० ७,४,२१,१)'—इति व्याख्यावसरे उक्तं सायणेन—'रामं कृष्णं शावरं तमोऽव्यस्थात्'—इति।

'तदर्हति (५,१,६३)', 'छन्दसि च (५,१,६७)'—इति यत्। 'अहश्च कृष्णमहरर्जुनं च (ऋ० सं० ४,५,११,१)'—इति श्रुतिः * * * । यद्वा; रमणं रामः। भावे घञ् (३,३,१८)। स्त्रीभिः सह क्रीड़ा रामः। 'तत्र साधुः (४,४,९८)'—इति यत्। "मदेधान उनसो राम्या अनु (ऋ० सं० २,५,२१,३)"—इति, "आविर्धेना अकृणोद्राम्याणाम् (ऋ० सं० ३,२,१५,३)"—इति च निगमौ ॥

(७) यम्या। 'यम उपरमे (भू० प०)। 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते। उपरमयति प्राणिनां चेष्टाः। अथवा 'गदमदचरयमश्चानुपसर्गे (३,१,१००)'—इति यत् कर्त्तरि बाहुलकेन। यद्वा; यमनीया उपरमयितव्या आदित्यचारेणेति यथाप्राप्तो यत् निगमोऽन्वेषणीयः* ॥

(८) नम्या। (९) दोषा। (१०) नक्ता। (११) तमः। (१२) रजः। (१३) असिक्नी† ॥

(१४) पयस्वती‡। पयोऽस्या अस्तीति। 'अस्मायामेधास्रजोविनिः

* ऋक्संहितायान्तु मन्त्रत्रये दृश्यते 'यम्या'—इति। तत्रैकत्र (१,२,१०,११) 'यम्या यमरूपे मिथुनभूते अहश्च रात्रिश्चेत्येते'—इति, अपरत्र (४,२,१,५) 'यम्या यम्ये नियमनीये युग्मभूते वा'—इति, अन्यत्र 'यम्या युगलभूते'—इति व्याख्यातवान् सायणः।

(९) निघ० १, १५।

(१०) निघ० ८, १०।

(११) निघ० १, १६।

(१२) प० १, १०. ४, १। निघ० २, २१. ४, १९. १०, ४४. ११, ७;—११।

(१३) निघ० ९, २१।

† कथमेतानि पदानि व्याख्यातानि ज्ञायते पञ्चकर्णे।

‡ प० ११। निघ० ५, २।

(५,२,१२१)'। 'बहुलं छन्दसि (५,२,१२२)'—इत्युक्तेर्मतुपि वत्त्वे च 'उगितश्च (४,१,६)'—इति ङीप्। 'तसौ मत्वर्थे (१,४,१९)'—इति भ-सञ्ज्ञाविधानात् रुत्वं न भवति। निगमोऽन्वेषणीयः॥

(१५) तमस्वती। ताम्यन्त्यनेनेति (दि०प०)। तमोऽन्धकारं तेन तद्वती। पूर्ववत् प्रक्रिया। निगमोऽन्वेषणीयः॥

(१६) घृताची। 'घृ क्षरणदीप्त्योः (जु०प०)', 'घट घृ सेचने (भ्वा०प०)'। 'अग्निमृघृषिभ्यः क्तः (उ०३,८६)'। सेचयत्यनेन भूमिं पर्जन्यः, क्षरति मेघात् दीप्तं वा स्वेन तेजसा देवतात्वादिति घृतमत्रान्तरिक्षस्थायमानं जलम्, तदञ्चति। 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (३,२,५९)'—इति अञ्चतेर्गत्यर्थात् (भ्वा०प०) क्विनि 'अनिदिताम् (६,४,२४)'—इति न-लोपे, 'अचः (६,४,१३८)'—इत्यकारलोपे, 'चौ (६,३,१३८)'—इति दीर्घे, 'अञ्चतेश्चोपसङ्ख्यानम् (४,१,६वा०)'—इति ङीप्, घृताचीति। निगमोऽन्वेषणीयः॥

(१७) भ्रिरिणा। भ्रीङः (अदा०आ०) अन्तर्णीतण्यर्थात् 'बहुलमन्यत्रापि (उ०२,४६)'—इति इनच्-प्रत्यये रुडागमो धातोर्ह्रस्वश्च। भ्राययति प्राणिनः भ्रिरिणा। भ्रायये न्निति माधवः। "भ्रिरिणायां चिद्क्तुनामहोभिः (ऋ०मं०२,६,२,३)"—इति निगमः॥

(१८) मोक्ती। 'मुच्लृ मोचणे (तु०उ०)'। 'इन् सर्वधातुभ्यः (उ०४,११४)'—इति इनि बाहुलकात् कुत्वम्। 'हृदिकारादक्तिनः (४,१,४५वा०)'—इति ङीष्। मुञ्चत्यस्यामवश्यायं मध्यमः,

मुञ्चन्ति प्राणिनः स्वस्वव्यापारात् मोक् । तदस्यामस्तीति 'छन्दसी-वनिपौ च (५,२,१२२वा०)'—इति मत्वर्थीय ईकार-प्रत्ययः, व्यत्ययेन (३,१,८५) हल्ङ्यादिलोपः (६,१,६८)। "अनुव्रतं सवितुर्मोक्यागात् (ऋ० सं० २,८,२,३)"—इति निगमः ॥

(१९) शोकी । 'शुच् शोके (भ्वा० प०)', ज्वलति-कर्मा (निघ० १,१७) वा। पूर्ववत् प्रक्रिया । शोचन्त्यस्यां विरहिणः, शोकस्तेजो-ऽस्या अस्तीति वा, 'अग्निना वै तेजसा रात्रिस्तेजस्वती'—इति ब्राह्मणम्। निगमोऽन्वेषणीयः ॥

(२०) ऊधः* । रात्रिनाम-निर्वचनार्थप्रसिद्धं तावदुच्यते । गो-रूध उद्धृततरं भवति प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति । यद्वा; उपोन्नद्धमुपरि स्पृष्टमूर्द्धमिव केनचित् । तत् स्नेहं रसानुप्रदा-नसामान्याद् रात्रिरप्यूध उच्यते । यद्वा; 'उन्दी क्लेदने (रु० प०)'। असुनि (उ० ४,१८४), बाहुलकान्नलोपे दकारस्य धत्वे दीर्घे च रूपम्। उनत्त्यवश्यायेन भूतानि। 'उनत्त्यूधः'—इति चीरस्वामी। "यो अस्मै घ्रंस उत वा य ऊधनि (ऋ० सं० ४,२,३,३)"—"ऊधर्न नग्ना जरन्ते (ऋ० सं० ५,७,१९,१२)"—इति च नि-गमौ । ऊधनीत्यत्र छान्दसत्वादनङ् (५,४,१३१;—१४२) ॥

(२१) पयः† । व्याख्यातं पयस्वतीत्यत्र, मत्वर्थीयस्य लुक् । निगमोऽन्वेषणीयः ॥

(२२) हिमा । 'हन्तेर्हि च (उ० १,१४४)'—इति मक्-प्रत्ययो

* निघ० १, १९ । † प० १२. २, ० । निघ० २, ५ ।

हिरादेशश्च। हन्ति (अदा० प०) पद्मानीति हिमम्, अर्शआदित्वादच् (५,२,१२७)। "सं भानुना सं हिमा सं घृणेन (ऋ० सं० ७,८, १३,४)"—इति निगमः ॥

(२३) वस्वी। 'वस आच्छादने (अदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसि (उ० १,१०)'—इति उ-प्रत्ययः। वस्ते आच्छादयते लोकमिति अवश्यायस्तमो वा, तद्वती वस्वी। 'छन्दसीवनिपौ च (५,२,१२२ वा०)'—इति ईकारः, 'वृषादीनाञ्च (६,१,२०३)'—इत्याद्युदात्तत्वम्। यद्वा; प्रशस्य-वचनाद् वसुशब्दात् 'वोतोगुणवचनात् (४,१,४४)'—इति ङीष्, सर्वभूतरमणत्वाद्रात्र्याः प्राशस्त्यम्। निगमोऽन्वेषणीयः* ॥

इति त्रयोविंशतीरात्रिनामानि ॥ ७ ॥

विभावरी[१]। सूनरी[२]। भास्वती[३]। ओदती[४]। चित्रामघा[५]। अर्जुनी[६]। वाजिनी[७]। वाजिनीवती[८]। सुम्नावरी[९]। अहना[१०]। द्योतना[११]। श्वेत्या[१२]। अरुषी[१३]। सूनृता[१४]। सूनृतावती[१५]। सूनृतावरी[१६]। इति षोडशोषोनामानि† ॥ ८ ॥

* एषएव निगमोऽस्य भवितुमर्हति—'वस्वी षु ते जरित्रे'—इति (ऋ० मं० ५,२,२,५)। तत्र 'वस्वीषु अत्यन्तप्रशस्तासु स्तुतिषु'—इति सायणीय-व्याख्या, परं 'वस्वी। सु'—इति पदग्रन्थविरोधादुपेक्ष्यैव सा। एवमुपेक्षिते एवमादिके सर्वत्रैव निगमः सुलभः इत्यपि बोध्यम्।

(८) "वाजिनिवती" ख। (१३) "अरुषी" ख। (१५) "सूनृतावति" ख।

† "इत्युषसः" ग।

(१) विभावरी । 'भा दीप्तौ (अदा०प०)' विपूर्वः । 'आतो-मनिन्क्वनिब्वनिपश्च (३,२,७४)'—इति वनिप् । 'वनो र च (४,१,७)'—इति ङीब्रेफौ । विशेषेण भाति दीप्यते आदित्य-किरणसम्बन्धात् । "आपप्रुषी विभावरि (ऋ०सं० ३,८,२,६)" —इति निगमः ॥

(२) सूनरी । शोभना नरा अस्यां सन्ति, मत्वर्थीय ईकारः, व्यत्ययेन हल्ङ्यादिलोपः । अथवा बहुव्रीहिः, पिप्पल्यादेराकृतिग-णत्वादीकारः । नराणां प्रसन्नचित्तत्वेन धर्मादिविशिष्टतया तदानीं शोभनत्वम् । तथाच महाकविः—'पश्चिमाद् यामिनीयामात् प्रसा-दमिव चेतना'—इति । यद्वा; सूनरी शोभनं नयति कालम् । 'णीञ् नये (भ्वा०प०), सुपूर्वात् 'अच इः (उ०४,१२४)', 'कृदि-कारादक्तिनः (४,१,४५वा०)'—इति ङीष् । सूनरी सुधना । यद्वा; 'नृभिर्देवैः समन्विता'—इति माधवः । 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । व्यत्ययेनावधारणाभावश्चाश्रूयते । "ज्योतिष्कृणोति सूनरी (ऋ०सं० ५,६,१,१)"—इति निगमः ॥

(३) भास्वती* । 'भासृ दीप्तौ (भ्वा०आ०)', क्विप् । भासतइति भासः प्रकाशः । भासा, तद्वती भास्वती 'तसौ मत्वर्थे (१,४,१९)' —इति भ-सञ्ज्ञया पदकार्यं रुत्वं न भवति भास्वती । "भास्वती नेत्री सूनृतानाम् (ऋ०सं० १,८,१,४)"—इति निगमः ॥

(४) ओदती । 'उन्दी क्लेदने (रु०प०)' । उन्देर्लटः शतरि 'छन्दस्युभयथा (३,४,११७)'—इति शतुरार्द्धधातुकत्वेन विकरणा-

---

* प० १२ ।

भावः, सार्वधातुकत्वात् 'सार्वधातुकमपित् (१,२,४)'—इति ङिद्वद्-भावात् 'अनिदिताम् (६,४,२४)'—इति न-लोपः, व्यत्ययेन गुणः, 'उगितश्च (४,१,६)'—इति ङीप्। उनन्त्यवाद्यायेन श्वोदती। * * *। "पदं न वेत्योदती (१,४,४,१)"—इति निगमः॥

(५) चित्रामघा। 'चित्र् चयने (स्वा० उ०)'। 'अमिचिमिमिदिशंसिभ्यः क्तः (उ० ४,१५८)'—इति क्त-प्रत्ययः, चित्रम्। मंहतिर्दानकर्मा (निघ० ३,२०), घञर्थे क-विधानमित्यत्र परिगणनस्योपलक्षणार्थत्वात् क-प्रत्यये 'अनिदिताम् (६,४,२४)'—इति न-लोपः, पृषोदरादित्वात् (६,३,१०९) घत्वम्। मह्यते दीयतेऽर्थिभ्यः इति मघं धनम् चित्रमाश्चर्यभूतं धनं यस्या इति चित्रामघा, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः। "वाजिनीवती सूर्यस्य योषा चित्रामघा (ऋ० सं० ५,५,२२,५)"—इति निगमः॥

(६) अर्जुनी*। 'अर्ज सर्ज अर्जने (चु० प०)'। अर्जेर्णिलुकि उनन्-प्रत्ययः (उ० ३,५५), अर्जयति। यद्वा; 'अर्ज गतिस्थानार्जनेषु (भ्वा० प०)'। बाहुलकादुनन्। गम्यते तदर्थिभिः तिष्ठति स्वाश्रये। अर्जुनमिति रूपनाम (निघ० ३,७), तच्चात्रादित्यरश्मिसम्बन्धात् श्वेतम्, अर्जुनी श्वेता, 'अन्यतो ङीष् (४,१,४०)'। यद्वा; अर्जुन्यो गावः ता अस्याः सन्ति वाहनत्वेन मत्वर्थीय ईकारः, व्यत्ययेन हलङ्यादिलोपः; "या गोमतीरुषसः सर्ववीरा (ऋ० सं० १,८,४,३)"—इति श्रुतिः। "द्विपच्चतुष्पदर्जुनि (ऋ० सं० १,४,६,२)" -इति निगमः॥

---

* निघ० १,११। प० ९,७।

(७) वाजिनी* । वाजइत्यन्ननाम (निघ० २,७), वाजोहविर्लक्षणमन्नमस्या अस्ति, 'अत इनिठनौ (५,२,११५)'—'ऋन्नेभ्योङीप् (४,१,५)'। यजमानेभ्यो 'यानि देयान्यन्नानि तैस्तद्वती वा। "वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू (ऋ०सं० १,१,३,५)" —इति निगमः ॥

(८) वाजिनीवती† । वाजो बलं वेगो वा तेन तद्वती वाजिनी, कासौ उषसः स्वभूता तेन तद्वती वाजिनीवती। यद्वा; वाजो हविर्लक्षणम् अन्नाद्यस्या अस्तीति वाजिनी यागसन्ततिः; तद्वती वाजिनीवती। यद्वा; वाजमन्नं तद्वती वा वाजिनी, कासौ अवयवभूतेनान्नेन तद्वती अत्र संहतिः, तया अन्नसंहत्या तद्वती वाजिनीवती। यद्वा; द्वावेतौ मत्वर्थीयौ तयोरेकार्थेणातितरोमत्वर्थीयः अतिशयेनान्नवतीत्यर्थः 'वाजिनीवतीत्विषा हि सर्वेऽन्नं लभन्ते'—इति माधवः। 'सञ्ज्ञायाम् (८,२,११)'—इति वा 'छन्दसीरः (८,२,१५)'—इति वा मतुपोवत्वम्। "व्यश्वेभ्यः सुभगे वाजिनीवति (ऋ०सं० ६,२,२२,३)"—"अस्मभ्यं वाजिनीवति (ऋ०सं० ३,८,७,४)"—इति निगमौ ॥

(९) सुम्नावरी। सुपूर्वात् 'म्ना माने (अदा०प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकाद् भवति। सुष्ठु आम्नायते अभ्यस्यते इति सुम्नं सुखं, तद्धि सर्वैः सर्वदा ममेदं भूयादित्यभ्यासेन प्रार्थ्यते। तथाच—

* प० १, १४. ५, ६। निरु० २, १८. ३, ३. ७, २०. १०, २८;—३१. १२. ४२।
† निरु० १, ८. ११, २६. १२, ६।

'सुखं सुम्नातेः, प्रजा वै पशवः सुम्नम्'—इति माधवः। तदस्या अस्ति। 'छन्दसीवनिपौ च (५,२,१२२वा०)'—'वनो र च (४,१,७)'—इति ङीब्रौ, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः। सुम्नावतीत्यर्थः। "सुम्नावरी सूनृता ईरयन्ती (ऋ०सं०१,८,३,२)"—इति निगमः॥

(१०) अहना। 'अहि गतौ', भुवादिरात्मनेपदी; 'अह व्याप्तौ', स्वादिः परस्मैपदी। 'युच् बहुलम् (उ०२,७४)'—इति युच्-प्रत्ययः, बहुलवचनात् पूर्वत्र नकारलोपः। अहन्ते गच्छत्याकाशे प्रतिदिनं चयं गच्छतीति वा। व्याप्नोति स्वभासा लोकं व्याप्यते वादित्यरश्मिभिः। "गृहंगृहमहना यात्यच्छा (ऋ०सं०२,१,४,४)"—इति निगमः॥

(११) द्योतना। ण्यन्तात् 'द्युत दीप्तौ (भू०आ०)'—इत्यस्मात् 'ण्यासश्रन्थो युच् (३,३,१०७)'—इति बाहुलकात् कर्त्तरि युच्, 'णेरनिटि (६,४,५१)'—इति णि-लोपः। द्योतयति सर्वान् पदार्थान् प्रकाशकत्वात्। यद्वा; केवलाद् 'अनुदात्तेतश्च हलादेः (३,२,१४८)'—इति युच्। द्योतते स्वयं द्योतना। "सिषासन्ती द्योतना शश्वदागात् (ऋ०सं०२,१,४,४)"—इति निगमः॥

(१२) श्वेत्या*। 'श्विता वर्णे (भू०आ०)'। अघ्न्यादित्वात् (उ०४,१०८) यक् द्रष्टव्यः। श्वेतते श्वेत्या। 'श्विता वर्णे' इति वर्णसामान्यं सामर्थ्यात् शुक्लवर्णेऽपि शेषे पर्यवसितं द्रष्टव्यम् उषसि तथा दर्शनात्। "रुशद्वत्सा रुशती श्वेत्यागात् (ऋ०सं०१,८,१,२)"—इति निगमः॥

---

* निघ० १,१०।

(१३) अरुषी* । 'ऋ सृ गतौ' जुहोत्यादिः (प०), 'ऋ गति-प्रापणयोः' भ्वादिः (प०) । 'ऋहनिभ्यामुषन् (उ० ४,७४)†', पिप्पल्यादेराकृतिगणत्वादीकारः‡ । इयर्त्ति गच्छति वादित्योदयेनार्त्तं प्रतिदिनम् प्रापयति वा स्तोतॄन् ऐश्वर्यादि । यद्वा ; आङ्पूर्वात् 'रुच दीप्तौ (भ्वा० आ०)'—इत्यस्मात् बाहुलकात् डुषच्, टिलोपः, आङोह्रस्वश्च ; आरोचते अरुषी । यद्वा ; अरुषमिति रूपनाम (निघ० ३,७), सामर्थ्यादत्र शुक्लविषयम्, शुक्लवर्णा अरुषी । 'अन्यतो ङीष् (४,१,४०)' । "अश्वे॑व चि॒त्रारु॑षी (ऋ० सं० ३,८,३,१)" —इति च निगमः ॥

(१४), सूनृता§ । (१५) सूनृतावती । (१६) सूनृतावरी । सुष्ठु ऊन्यते अप्रियैरिति सून् । सुपूर्वात् 'ऊन परिहाने (दि० आ०)' —इत्यस्मात् क्विप् । ऋतमिति सत्यनाम (निरु० ४,१९) । सूनञ्च तदृतञ्च सूनृतम्, पृषोदरादित्वात् (६,३,१०९) न-लोपाभावः । प्रियञ्च सत्यञ्च । पूर्वं मत्वर्थीयोऽकारः, उत्तरत्र मतुप्, अन्यत्र 'छन्दसीवनिपौ च (५,२,१२२ वा०)'—इति वनिप्, मतौ वलरत्वौ, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । यद्वा ; प्रियसत्यरूपा वाचः सूनृता उच्यन्ते । "सु॒म्नाव॑री सू॒नृता॑ ई॒रय॑न्ती (ऋ० सं० १,८,३,२)"—"उदी॑रय प्रति॑ मा सू॒नृता॑ उषः (ऋ० सं० १,४,

---

* प० २, ७ । निरु० १२, ७ ।

† 'ऋहनिभ्यामूषन्'—इति मूलपाठः । रुषत्यावषीत्यस्य साधनाय सूत्रान्तरं मृग्यम् । 'चर्षिशुषपि (उ०२,११०)'—इत्यादिना 'ऋषस्'—इति निष्पन्ने पिप्पल्यादित्वादेव ङीषि भवेन्नामावषीति ।

‡ पिप्पल्यादिस्तु गौरादेरन्तर्गतः ( ४, १, ४१), ईकारः ङीषइत्यर्थः ।

§ प० २, ७ ।

३,२)"—इत्यादि दर्शनात् तद्वत्यः सूनृतादयः । दीर्घा अपेक्षणीयः । यद्वा; सूनृतेत्यन्ननामसु (निघ० २,७) पाठादन्नम् । सूनृता धन-नाम (   ?   ) माधवपक्षेण अन्नवत्यो धनवत्यो वा सूनृतादयः । "रेवत्स्तोचे सूनृते जारयन्ती (ऋ०सं० २,१,८,५)"—"रेवदस्मे व्युच्छ सूनृतावति (ऋ०सं० १,६,२६,४)"—"चिकित्वित् सूनृतावरि (ऋ०सं० ३,८,३,४)"—इति च निगमाः क्रमेण ॥

इति षोडशोषोनामानि ॥ ८ ॥

**वस्तोः**[1] । **द्युः**[2] । **भानुः**[3] । **वासरम्**[4] । **स्वसराणि**[5] । **घ्रंसः**[6] । **घर्मः**[7] । **घृणः**[8] । **दिनम्**[9] । **दिवा**[10] । **दिवेदिवे**[11] । **द्यविद्यवि**[12] । **इति द्वादशाहर्नामानि*** ॥

॥ ९ ॥

(१) वस्तोः† । अत्र स्कन्दस्वामी—'वस्तोरितीदृशमेवेदं नाम, न विभक्त्यन्तरम्, "दोषावस्तोर्हविष्मती घृताची (ऋ०सं० ५,१,२४,१)"—"दोषावस्तोर्वदीयसः प्रपित्वे (ऋ०सं० १,७,१८,१)"—इति समस्तस्यापि दर्शनात् । वस्ते ज्योतिरिति वस्तोः, द्योतत इति द्यौः । एवं सर्वत्र'—इति । वस्ते (अदा० आ०) आच्छादयतीति ज्योतिः । व्यत्ययेन कर्त्तरि तोसुन् (३,४,१३) । "कुह स्विद्दोषा कुह वस्तोरश्विना (ऋ०सं० ७,८,१८,२)"—इति निगमः । कुह केति सप्तमी-

(२) "द्युः"—कातिरिक्तेषु सर्वेष्वेवमेव, टीकाकृता अपि तथैव स्वीकृतम् ।
(८) "घृणि." C. D. F. ग । प १७. १, ८१ ।
* "इत्यहः ग ।
† निघ० २, १०. ८, ९ ।

सामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययत्वमध्यवसितः ॥

(२) द्यौः*। 'द्युत दीप्तौ (भ्वा० आ०)', बाहुलकात् डो-प्रत्ययः (उ० २,६४)। द्योतते किरणसम्बन्धात्। यद्वा; 'द्यु अभिगमने (अदा० प०)'; 'द्युगमिभ्यां डोः'—इति श्रीभोजदेवः। अभिगच्छन्त्यस्मिन् स्वं स्वमभिमतप्रदेशं प्राणिनः। 'गोतोणित् (७,१,९०)'—इति वृद्धिः। "मध्यं आरोधने दिवः (१,७,२२,१)"—इति निगमः॥ केचित् द्युरिति पठन्ति। तदा 'डित्'—इत्यधिकारे 'द्युद्रुभ्यां च'—इति भोजसूत्रेण उ-प्रत्ययः। 'द्यु अभिगमने (अदा० प०)' द्युतेरेव वा 'अग्न्यादयश्च (उ० ५,३०)'—इति उन्-प्रत्ययान्तो निपातितो द्रष्टव्यः। उभयत्र पूर्वोक्तएवार्थः। "द्युभिरक्तुभिः परिपातमस्मान् (ऋ० सं० १,७,३७,५)"—"त्वमग्ने द्युभिः त्वमाशुशुक्षणिः (ऋ० सं० २,५,१७,१)"—इति निगमौ ॥

(३) भानुः। 'भा दीप्तौ (अदा० प०)'; 'भादाभ्यां नुः (उ० ३,३१)। भात्यादित्याधिकरणसम्बन्धादेव। "उद्व्या उषसो भानुर्र्त्त (ऋ० सं० ३,४,१५,२)"—इति निगमः। रश्मिर्भानुरिति माधवोक्तमसद्भवितुमर्हति ॥

(४) वासरम्†। 'वस निवासे (भ्वा० प०)'; णिजन्तः सन्सोऽपि वि-पूर्वस्यार्थे वर्त्तते। 'अर्त्तिकमिभ्रमिदिविचमिवासिभ्यस्चित् (उ० ३,१२८)'—इत्यरच् प्रत्ययः। विवासयति अपनयति शीतादिकम्। यद्वा; वसेः स्वार्थे णिचि अधिकरणेऽरच्। वसत्यस्मिन् सुखेनेति

* निघ० १, ५. २, १०. ४, १. ९, ११. १०. २२;—२७।

† निघ० ४, ७

वासरम्। यद्वा; 'वासृ दीप्तौ (दि० आ०)'; पूर्वभागे गत्यादिना दीप्यते वासरम्। यद्वा; विपूर्वात् सर्त्तेर्गत्यर्थात् पचाद्यचि वीत्यस्य-कारस्याकारः पृषोदरादित्वात्; विविधं सराणि सृतानि उत्सीर्णा-नीत्यर्थः। 'वासराणि वेसराणि (निरु० ४,७)'-इति भाष्यं स्कन्द-स्वामी—'वेसरशब्दस्यायमेकारस्याकारः। सादृश्येन चात्र वर्त्तते। यथा वेसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वजात्या गर्द्दभत्वजात्या सम्पन्नः। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद् वेसरसदृशत्वाद् वासरम्'—इति। "अहानीव सूर्यो वासराणि (ऋ० सं० ६,४,१०,२)"। अहानीत्यनेन पौनरुक्त्या-दन्योऽपि निगमोऽन्वेषणीयः॥

(५) स्वसराणि*। स्वशब्दे उपपदे सर्त्तेर्गत्यर्थात् (भ्वा०प०) पचाद्यच् (३,१,१३४)। स्वेन आत्मनैव गच्छन्ति। अपि च, स्वरित्यादित्यनाम (निरु० २,१४)। सर्त्तेः 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'। अन्तर्णीतण्यर्थश्चात्र सर्त्तिः। स्वरित्यनस्य रेफलोपः पृषोदरादित्वात् (६,३,१०९)। आदित्येन सार्यते। स हि स्वोदयास्तमयाभ्यां तानि गमयति। यद्वा; सुपूर्वात् 'असु क्षेपणे (दि० प०)'—इत्यस्मात् ऋदरादित्वादरन् (उ० ५,४२) द्रष्टव्यः। सुष्ठु अस्यन्ते क्षिप्यन्ते सूर्येण स्वोदयास्तमयाभ्याम्, तथाच 'स्वसरशब्दस्त्युप-सृष्टात्'—इति माधवः। "उस्रा इव स्वसराणि (ऋ० सं० १,१,६, २)"—इति निगमः॥

* प० १, ५, ४, ७। निरु० ५, ४।

(६) घ्रंसः* । 'ग्रस उपादाने (भ्वा० उ०)' अस्मात् घञि पृषोदरादित्वात् (६,३,१०९) गकारस्य घकारो नुगागमः इकारस्य मकारः । ग्रसन्तेऽस्मिन् रसा अवश्याया आदित्येन । "यो अस्मै घ्रंस उत वा य ऊधनि (ऋ० मं० ४,२,३,७)"—इति निगमः ॥

(७) घर्मः† । 'घृ क्षरणदीप्त्योः (जु० प० ?)'; 'घर्मः (उ० १, १४६)'—इति म-प्रत्ययान्तो निपातः । जिघर्त्ति दीप्यते रश्मि-सम्बन्धात् । निगमोऽन्वेषणीयः ॥

(८) घृणः । जिघर्त्तेः (जु० प० ?) 'इण्भिकाजिदीङुष्यविभ्यो नक् (उ० ३,२)'—इतीणादिभ्यो विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति । पूर्ववदर्थः । "घृणा वयोऽकृषामः परि ग्मन् (ऋ० मं० ३,७,१८,६)"—इति निगमः‡ । * * * ॥

(९) दिनम् । 'दो अवखण्डने (दि० प०)'; पूर्ववदौणादिके नक्-प्रत्यये बाहुलकात् (उ० २,४६); 'द्यतिस्यतिमास्थाम् (७,४,४०)'—इतीत्वम् । द्यतितमः दिनम् । "अधा सूरिभ्यः सुदिना व्युच्छान् (ऋ० मं० ५,२,२८,१)"—इति निगमः ॥

(१०) दिवा§ । द्योतनात् । अव्ययमिदम् । "दिवा भिपित्वेऽवसा गमिष्ठा (ऋ० मं० ४,४,१७,२)"—"दिवा नक्त मवसा शन्तमेन (ऋ० मं० ४,४.१७,३)"—इति निगमौ ॥

* निघ० १, ४ ;—१९ ;—२१ ।

† प० ३, १० । निघ० १. ११. ११. ४२ ;—५२ ।

‡ घृणिरिति पाठान्तरपक्षे,व्यक्ति निगमः—'घृणीवच्छायाम्'—इति 'घृणीव छायां अरपा अशीय'—इति मन्त्रोक्तं सायणेन २, ७, १०, १ ।

§ द्युः इत्यन्यः ।

(११) दिवेदिवे*। 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (दि०प०)। 'दिवेर्डिविः ( ? )'—इत्यधिकरणे डिविप्रत्ययः। दिव्यन्तेऽस्मिन्निति द्यौः। दिवशब्दात् परस्य सप्तम्या एकवचनस्य 'सुपांसुलुक् (७,१,३९)'—इत्यादिना शे आदेशः, प्रगृह्यत्वं (१,१,१३) तु व्यत्ययेनात्र न भवति। चतुर्थी वा व्यत्ययेन। ततो वीप्सादिः (८,१,४), दिवसेदिवसे इत्यर्थः। यथादृष्टं पठितमिदं नाम। "उप॑त्वाग्ने दि॒वेदि॑वे (१,१,२,२)"—"दि॒वेदि॑वे वा॒मम॒स्मभ्यं॑ सावीः (ऋ०सं० ५,२,१५,६)"—इति च निगमौ॥

(१२) द्यविद्यवि। द्योशब्दो व्याख्यातः(२)। सप्तम्येकवचनं, वीप्सादि पूर्ववत्, "मि॒नीमसि॒ द्यवि॑द्यवि (ऋ०सं०१,२,१६,१)"—इति निगमः॥

इति द्वादशाहर्नामानि॥ ९॥

अद्रि॑ः(१)। ग्रावा॑(२)। गो॒त्रः(३)। व॒लः(४)। अश्नः॑(५)। पु॒रु॒भोजाः॑(६)। व॒लि॒शा॒नः(७)। अश्मा॑(८)। पर्व॑तः(९)। गिरिः॑(१०)। व्र॒जः(११)। च॒रुः(१२)। व॒रा॒हः(१३)। शम्ब॑रः(१४)। रौ॒हि॒णः(१५)। रैव॑तः(१६)। फलि॑गः(१७)। उप॑रः(१८)। उप॑लः(१९)। च॒म॒सः(२०)। अहि॑ः(२१)। अ॒भ्रम्(२२)।

---

* नि०० ४, १९।

(७) "वलिशानः" क. "पर्शानः" C. D. ग अयमेव पाठो युक्ततर इति गम्यते तस्यैव निगम-दर्शनात्। ऋक् मं० ५, ७, ५, ४. ५, ८, २४, ४. ६, २, ४९, ६। "पशान." F। स पलाके तु क्वापि पदं सूर्णम।

(८) "अनमा" च। वङ्गाक्षरेण लिखितत्वादादर्शपाठे भ्रममूलिकैषा लिपिरित्यनुमेये मागराक्षर-लिखित 'श्मा'—इत्यस्य 'नमा' पाठभ्रमसम्भवात्।

(२२) "अभ्रम्" ग. C. D. F। प० ११. ७, २।

वलाहकः(२३)। मेघः(२४)। दृतिः(२५)। ओदनः(२६)। वृषन्धिः(२७)। वृत्रः(२८)। असुरः(२९)। कोशः(३०)। इति त्रिंशन्मेघनामानि*॥ १० ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः (निरु० २,२१)'—इत्युक्तेर्मेघनामत्वं पर्वतनामत्वं क्रमेण निरुच्य प्रदर्श्यते ।

(१) अद्रिः†। 'अद भक्षणे (अदा०प०)'। 'अदिशदिभूशुभिभ्यः क्रिन् (उ०४पा०)'—इति क्रिन्-प्रत्ययः। अत्ति हि मेघो वर्षार्थमादित्यरश्मिभिराहृतान् भौमरसान्, अत्ति मेघैरभिवृष्टं जलम्, अद्यते वा प्राणिभिस्तत्प्रभवपदार्थभक्षणं तत्रोपचर्यते, अदन्त्यस्मिन् पदार्थान् मनुष्या इति वा। यद्वा; नञ्पूर्वात् 'दॄ विदारणे (क्र्या०प०)'—इत्यस्मात् बाहुलकात् रिन्-प्रत्ययः टि-लोपश्च। अदरणीय इत्यद्रिः पर्वतः। "वि जयुषा ययथुः सान्वद्रेः (१,८,१६,१)"—इति मेघस्य निगमः। "मान्तरिक्षं नाद्रयः सोमो अक्षाः (ऋ०सं०८,४,१५,१)"—इति पर्वतस्य ॥

(२) ग्रावा‡। हन्तेः (अदा०प०) 'अन्येभ्योऽपि दृश्यन्ते (३,२,

---

(२३) "बलाहकः" इत्येव कानिचित्-४र्थपुस्तकेषु, परं टीकाविरोधादुपेक्ष्यः ।

(२५) "दाशः" च ।

(२६) "ओदनम्" ग. C. D.F ।

(२७) "विषन्धिः"—इत्यपि टीकासम्मतम् ।

* "इति मेघानाम्" च ।

† निरु० ४, ४.९,९ ।

‡ प०५, २। निरु० ९, ८—९ ।

७५)'—इति क्वनिप्। पृषोदरादित्वात् (६,३,१०९) धातोर्ग्रादेशः। हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १,२,३६,१)'—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा; 'गॄ निगरणे (तु०प०)', 'गॄ शब्दे (क्र्या०प०)', गृणातिस्तुतिकर्मा (निरु० ३,५); एभ्यः पूर्ववत् क्वनिपि अड़ागमः। दृशिग्रहणात् (३,२,७५) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरतिरुत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टि-समये, समुद्गीर्णं इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेदसमये, गिरति मेघैरभिवृष्टं जलमुद्गिरति निर्झरजलम्, समुद्गीर्ण इव वा गुहादिगतसिंहादिशब्देन, शब्दकारी, स्तूयते च पदार्थबाहुल्यात् प्राणिभिस्तदाश्रयिभिरिति ग्रावा। "इन्द्र ग्रावाणो अदितिः सजोषाः (ऋ० सं० ४,१,२८,५)"—इति मेघस्य निगमः। "ग्रावाणो अप दुच्छुनामप सेधत (ऋ० सं० ८,८,३३,२)"—"ग्रावाण उपरेष्वा महीयन्ते (ऋ० सं० ८,८,३३,३)"—इति पर्वतस्य निगमौ॥

(३) गोत्रः। 'गुङ् अव्यक्ते शब्दे (भ्वा०आ०)'। 'गुधृवीपचिवचि यमि[मनितनि*]सदिक्षदिभ्यस्त्रः (उ० ४,१६२)'—इति त्र-प्रत्ययः। मेघोगर्जितलक्षणमव्यक्ताक्षरं शब्दं करोति, गूयते शब्द्यते वा,—'अहो! अयमतीवघर्मकाले वर्षार्थमागतः'—इति। यद्वा; गामु-दकं रश्मिभिराहृतं वर्षाव्यतिरिक्तेषु त्रायते पालयति। 'आतोऽनुप-सर्गे कः (३,२,३)'। शरदादिषु हि मेघेषु घनीभूतास्तिष्ठन्त्यापः।

* नागयोः पाठो इदमत्र मूले।

गां पशुजीविनं त्रायते वा तृष्णा पानीयप्रदानात्। पर्वतोऽपि निर्झरादिपतनजन्यमव्यक्तं शब्दं करोति, अभिवृष्टमुदकमुदकाधारेषु धारणाद् रक्षति च. गोत्र सुयवमवत्तया गोत्राः। "गोत्रा भिवन् दधीचे मातरिश्वने (ऋ०सं० ८,१,५,२)"—"त्वं गोत्रमङ्गिरोभ्योऽवृ-णोरप (ऋ०सं० १,४,९,३)"—"उद्गोत्राणि ससृजे दंसनावान् (ऋ०सं० ३,२,२५,४)"—इति च मेघनिगमाः। "गोत्रभिदं गोविदं वज्रबाहुम् (ऋ०सं० ८,५,२२,६)"—इति पर्वतस्य ॥

(४) वलः*। 'वृ आवरणे (स्वा०उ०)'। 'ग्रहवृदृनिश्चिगमश्च ३,३,५८)'—इत्यप्। अपि लकादित्वात् लत्वम्। यद्वा; 'वल संवरणे (भू०आ०), अस्मात् 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३, ११८)'—इति घः। व्रियतेऽनेन दिश आकाशश्च मेघः पर्वतेनापि स्वशरीरेण भूमिराकाशश्च संव्रियते। "अलातृणो वल इन्द्र व्रजो गोः (ऋ०सं० ३,२,२,५)"—इति निगमो मेघस्य। "इन्द्रो वलं रक्षितारं दुघानाम् (ऋ०सं० ८,२,१५,६)"—इति पर्वतस्य ॥

(५) अश्नः†। 'अशू व्याप्तौ (स्वा०आ०)', 'अश भोजने (क्र्या० प०)'; आभ्याम् 'इणषिञ्जिदीङुष्यविभ्यो नक् (उ० ३,२)'—इति विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति, णत्वं च न भवति 'शात् (८,४,४४)'—इति प्रतिषेधात्। उभावपि व्याप्नुत आकाश-मश्नीतश्चोदकम्, एको वर्षितव्यमपरोऽवष्टम्। अशनेन चाच ततृत्वं लक्ष्यते। "अश्नापिनद्धं मधुपर्यपश्यन् (ऋ०सं० ८,२,१८,२)"—इति मेघस्य। निगमोऽन्वेषणीयो वा ॥

---

* निघ० १, १०। † निघ० ४, १९. १०, १२।

(६) पुरुभोजाः। 'भुज पालनाभ्यवहारयोः (रु०प०)'—इत्यस्मात् 'विदिभुजिभ्यां विश्वे (उ० ४,२३१)'—इति विश्वशब्दे उपपदे विहितोऽसु-प्रत्ययः पुरुशब्देऽप्युपपदे बाहुलकाद् (३,३,१) भवति। पुरु बहु प्राणिजातं भुनक्ति पालयति वृष्टिप्रदानेन मेघः, पर्वतो हि दुर्भिक्षादेरक्षति। 'समुद्रः पर्वतो राजा इव दुर्भिक्षनाशकः'—इत्युक्तेः। पुरु अभ्यवहरति, सामर्थ्याज्जलमत्र विशेष्यम्; एको वर्षितव्यमपरो हि दृष्टमिति विशेषः। बहुभिर्भुज्यते पाल्यते अभ्यवह्रियते वा। मेघस्य त्विन्द्र आदित्यरश्मयश्च रक्षितारः, पर्वतस्य तत्तद्देशाधिपतयः। मेघः खल्वप्युदकद्वारेण अभ्यवह्रियते। द्वयोरपि निगमावन्वेषणीयौ*॥

(७) वलिशानः। 'वल संवरणे (भू० आ०)', औणादिकः क्विप्। 'ईश ऐश्वर्ये' अदादिकः (आ०)। लट् शानच्। संवृण्वन्नाकाशमीष्टे वर्षितुम्, पर्वतोऽपि स्वभोगेन भूमिमाकाशं संवृण्वन्नीष्टे दुर्भिक्षादेर्मनुष्यादीन्रक्षितुम् वलीशान इति; लोकवेदनिघण्टौ दृष्टान्तात् पृषोदरादित्वात् ह्रस्वः। निगमावन्वेषणीयौ†॥

(८) अश्मा‡। 'अशूङ् व्याप्तौ (स्वा० आ०)', 'अश भोजने (क्र्या०

---

* ऋक्संहितायामेव दृश्येते उभयोरपि निगमौ, परं तत्र तत्र तत्तद्व्याख्यातृभिर्मेघ-योर्धूलिमुष्टिप्रक्षिप्तेति नोपलब्धा देवराजेन। 'पुरुभोजा असि (५,५,२२,८)'—इति मेघस्य, 'गिरिं न पुरुभोजसम् (६,९,११,२)'—इति पर्वतस्य।

† "पर्शानः"—इति (ग. C. D.) पाठेऽपि सायणादिभाष्येऽस्मिन्नामे तु नान्वेषण-प्रयासः। तथाहि—'यत्पर्शाने पराभृतम् (ऋ०सं०३,२,४९,१)'—इति मेघस्य निगमं प्रदाय, 'गिरयश्चिन्निजिहते पर्शानासो मन्यमानाः (ऋ०सं०५,८,२४,४)'—इति तु पर्वतस्य।

‡ निघ० ६, १. ८, २।

प०)'। 'अविशकिभ्यां छन्दसि (उ० ४,१४४)'—इति मनिन्। अश्म इत्यनेन समानार्थः। "अपावृणोदुरो अश्मव्रजानाम् (ऋ० सं० ८,७, २७,६)"—इति मेघस्य निगमः। "यो अश्मनोरन्तरग्निं जजान (ऋ० सं० २,६,७,३)"—इति पर्वतस्य। अत्र स्कन्दस्वामिना मेघत्वेन व्याख्यातम्॥

(६) पर्वतः*। 'पॄ पालनपूरणयोः (क्र्या० प०)'। 'स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप् (उ० ४,१०९)'। पृणन्ति पालयन्ति अवयविनं पूर्यन्ते वा तेन इति पर्वाणि। यद्वा; प्रीणातेर्बाहुलकात् (३,३, १) वनिपि ईकारस्याकारः स च पकारात् परः प्रीणयन्ति स्वाश्रयमिति। पर्वाण्यवयवाः सन्त्यस्य 'पर्वमरुद्भ्यां तप् वक्तव्यः (५,२, १२२वा)'—इति मत्वर्थीयस्तप्-प्रत्ययः। मेघस्य पर्वतस्य च देवतात्मकत्वस्य च विद्यमानत्वात् अवयविनि वक्तुं शक्यम्। यद्वा; परिदृश्यमानाकारेणापि मेघस्य धूमादिसङ्घातत्वात्, पर्वतस्य च शिलादिमत्त्वादवयवित्वम्। यद्वा; 'पर्व पूरणे (भ्वा० प०)', अस्मात् 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३,१०७)'—इत्यतच्-प्रत्ययः। पर्वति पूरयति वर्षेण भूमिं स्वशरीरेणाकाशं वा पर्वतोऽपि निर्झरनदीप्रवाहादिना भूमिस्त्वोन्नत्याकाशञ्च पूरयति। "नि पर्वता अद्मसदो न सेदुः (ऋ० सं० ४,७,२,३)"—"बळित्था पर्वतानाम् (ऋ० सं० ४,४,२९,१)"—इति मेघस्य निगमौ। "यदद्रयः पर्वताः साकमाशवः (ऋ० सं० ८,४,२९,१)"—"प्र पर्वतानामुशती उपस्थात् (ऋ० सं० ३,२,१२,१)"—इति च पर्वतस्य॥

---

* निघ० १, २०. १०, ९. ११, १० ।

(१०) गिरिः* । 'गॄ निगरणे (तु०प०)', अथवा 'गॄ शब्दे (क्र्या०प०)', गृणातिः स्तुतिकर्मा (निघ० ३.५) । किरिरिति वर्णमाने (उ० ४,१२७), 'कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च इः (उ० ४, १३८)'—इति इ-प्रत्ययः, 'ऋत इद्धातोः (७.१.१००)'—इतीत्वम् : गिरिः । यास्केनानेन समानार्थः । "निराविध्यद् गिरेरधि हिर्मं भ्राजते तुजा शवः (ऋ०वे० १,४,९१,३)"—इति पर्वतस्य । "मृगो न भीमः कुचरो गिरिष्ठाः (ऋ०मं० २,१,२४,२)"—इत्युभयस्य ॥

(११) व्रजः† । 'व्रज गतौ (भ्वा०प०)' । 'गोचरसञ्चरवहव्रजव्यजापण निगमाश्च (३,३,११९)'—इति निपातनात् घः, करणाधिकरणयोस्तद्वृत्तिनिर्दिष्टे कालेऽपि घो भवति। व्रजत्यन्तरिक्षे व्रजत्यनेनेन्द्र इति वा व्रजो मेघः, मेघवाहनो हीन्द्रः पर्वतोऽपि पर्वणां दान पूर्वमन्तरिक्षे व्रजति। अथवा स्वशरीरेण भूमिमन्तरिक्षञ्च व्रजति । व्रजन्ति तत्र प्राणिन इति वा। "अप व्रजमूर्ण्वथः सप्तास्यम (ऋ०मं० ७,८,१८,३)"—इति मेघस्य निगमः। "व्रजं गोमन्तमुशिजो वि वव्रुः (ऋ०मं० ३,४,१४,५)"—इति पर्वतस्य ॥

(१२) चरुः‡ । 'चर गति-भक्षणयोः (भ्वा०प०)' । 'भृमृशीङ्तॄचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १.७)'—इति उ-प्रत्ययः । चरन्ति गच्छन्त्यस्मादापो मेघाद्वर्षाकाले, पर्वतानां निर्झररूपाः चारयन्ति जलं वर्षितव्यमिति चरुर्मेघः; चरन्ति तत्र प्राणिनः, चर्यते भक्ष्यते तत्रभवपदार्थरूपेणेति चरुः पर्वतः । "स नो वृषन्नमुं चरुम्

* निघ० १, १० ।
† निघ० १, १० ।
‡ निघ० १, ११ ।

(ऋ० वे० १,१,१४,१)"—इति मेघस्य निगमः । पर्वतस्याप्येष-णीयः* ॥

(१७) वराहः† । वृणोतेः (स्वा० प०) । 'ग्रहवृदृनिश्चिगमश्च (३,३,५८)'—इत्यकारः (अप्); वरशब्दे कर्मण्युपपदे आङ्पूर्वाद्धरते 'कर्मण्यण् (३,२,१)'। वरमुदकमाहरतीति वराहः । वर उदक-लक्षणः आहारोऽस्येति वा वराहः (निरु० ५,४) आङ्पूर्वाद्धरतेर्घञ्। 'वरमाहारमाहार्षीः'—इति च ब्राह्मणम्। पृषोदरादित्वात् आहार-शब्दस्याकाररेफयोर्लोपः । यद्वा ; वरशब्दे उपपदे हरते राङ्पूर्वात् 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति बाहुलकात् ड-प्रत्ययः । वराहाकारो वा कृष्णो मेघो वराहमाकृत्येन वर्त्तते । वरमुत्कृष्टमुदकं वृहति उद्यच्छति वर्षितुम् 'वृह उद्यमने (तु० प०)' • • • । वृहतेः पूर्ववत् डः । यद्वा ; वरशब्द उपपदे जुहोतेर्दानार्थाद् डः । वरमुदकं ददाति आदत्ते वा वर्षितुमिति वराहो मेघः, पर्वतोऽपि वरमुत्कृष्टं पदार्थमाहारयति प्राणिभिः, पदार्थानां सर्वेष सौलभ्यादाहरतीत्युच्यते । वर आहारोऽस्येति वा । वराहवत् कृष्णवर्ण इति वा । वरं मूलं वृहत्युद्यच्छत्यस्मादिति वा (निरु० ५,४)। वरं वरमित्येकस्य वरशब्दस्य निरुक्तिः । वरशब्दाद् हरतेश्च वराह इत्यर्थः । वरमुदकमाददाति आदीयते च तस्मात् पुरुषैर्वरः पदार्थं उदकमेव वा । "विध्यद्वराहं तिरो अद्रिमस्ता (ऋ० सं० १,४,२८,२)"—

---

* साधर्म्यविरोधात्सष्टा मघवंस्त्व एव निगमः—'यं कुत्सो भुवमकरं वराहवित् (८,८,१५, ४ ऋ०सं०)' तेन सह व्याख्याने इष्टैव कष्टकल्पना कृता ।

† प० ४, १ । निरु० ५, ४ ।

"वंराहमिन्द्र एमुषम् (ऋ० सं० ६,५,१०,५)"—इति च मेघस्य निगमौ। पर्वतस्यान्वेषणीयः॥

(१४) शम्बरः। 'शमु उपशमे (दि० प०)'। अन्तर्भावितण्यर्थः। 'शमेर्बन् (उ० ४,८१)'—इति बन्-प्रत्ययः। शमयति नाशयति असुरानिति शम्बो वज्रः। यद्वा; शातयतेर्वा औणादिकात् बन्-प्रत्यये पृषोदरादित्वात् शमादेशः। शम्बोऽस्य प्रहर्तृत्वेनास्ति। रो मत्वर्थीयः। प्रहरति हि वज्रः इन्द्रप्रेरितो मेघान् पर्वतानाञ्च पक्षच्छेदसमर्थं। यद्वा; सम्पूर्वाद् वृणोतेः (स्वा० प०) 'ग्रहवृदृनिश्चिगमश्च (३,३,५८)' इत्यपि सम्बरः सन् वर्णव्यत्ययेन शम्बरः। सं व्रियते मेघेनाकाशं, भूमिः पर्वतेन। यद्वा; शम्बरमित्युदकनाम (निघ० १,१०), मत्वर्थीयस्य लुक्, उदकमस्यास्तीति वा, उभयत्रापि तुल्यम्। "उतादर्दर्मन्युना शम्बराणि वि (ऋ० सं० ७,७,१,७)"—"अधूनोत् काष्ठा अव शम्बरं भेत् (ऋ० सं० १,४,२५,६)"—इति मेघस्य निगमौ। पर्वतस्यान्वेषणीयः॥

(१५) रौहिणम्। 'रुह बीजजन्मनि (भ्वा० प०)', भावे घञ् (३,३,१८) रोहः आरोहणम् आदित्यपथ्यादीनामस्मिन्नस्तीति। 'अत इनिठनौ (५,२,११५)', रोहि अन्तरिक्षम्। 'तत्र भवः (४,३,५३)'—इत्यण्, 'इनण्यनपत्ये (६,४,१६४)'—इति प्रकृतिभावः रौहिणः। अन्तरिक्षेण हि गच्छति मेघः, पक्षच्छेदात् पूर्वं पर्वतश्चेति तत्र भव इति वक्तुं शक्यते। यद्वा; 'बहुलमन्यत्रापि (उ० २,४६)'—इति इनच्-प्रत्यये रोहिण इन्द्रः। 'तस्येदम् (४,३,१२०)'—इत्यण् रौहिणः। आरोहति मेघमिन्द्रः स्ववाहनत्वात्, 'तुराषाण्मेघवाहनः (अम० को०-

१,४७)'—इति तत्पर्यायेषु पद्यते। मरुद्भिः सह विरच्छा पर्वतेभिन्दन् गमनात् नदीयता। यद्वा; उभयत्रापि छेद्य-छेदक-भावेन सम्बन्धः। तथाच चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन्, ते यत्र यत्र कामयन्ते तत्परा समासत, इयं हि शिथिलासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमां दृंहदिति'। "अद्रुहमिमभिनद्रौहिणम् (ऋ० सं० १,७,१६,०)"—"यो रौहिणमस्फुरद्वज्रबाहुः (ऋ० सं० २,६,८,०)"—इति निगमौ क्रमेण॥

(१६) रैवतः। रेवत्यो गावः 'पशवो वै रेवतीः'—इति श्रुतेः। 'तस्येदम् (४,३,१२०)'—इत्यण्। मेघो हि सर्वत्र वर्षति यवसं पानीयं च जनयित्वा नदीयो भवति, पर्वतस्तदन्तया। यद्वा; रयिरस्यास्तीति मतुपि 'रयेर्मतौ बहुलम् (६,१,३४वा०)'—इति सम्प्रसारणम्, 'सञ्ज्ञायाम् (८,२,११)'—इति वत्वम्, सर्वस्य धन-स्येशितृत्वात् रेवान् इन्द्रः, मघवेति हि तस्य नाम, नदीयो रैवतः। पूर्ववत् नदीयत्वं द्रष्टव्यम्। निगमावन्वेषणीयौ॥

(१७) फलिगः। प्रतिफलति सत् फलम्। तदस्मिन्नस्तीति फलि स्वच्छमुदकं तद्गच्छत्याधारत्वेन मेघो वर्षिष्यमाणं पर्वतो हि दृष्टमिति विशेषः। ड-प्रकरणे 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति गमेर्ड-प्रत्ययः, स्वच्छोदकपूर्ण इत्यर्थः। यद्वा; फलवत्स्नानपा-नादि-प्रयोजनवत् उदकं फलि, तद्गच्छतीति पूर्ववत्। माधवस्तु—'फलिर्भेदनकर्मापि भिन्दन् गच्छति फलसंयुक्तो गच्छतीति वा'—इति निरबोचत्। तस्यायमभिप्रायः प्रायेण मेघो हि वर्षासु बीजजन्यं

तापं भिन्दन् गच्छति, पर्वतोऽपि स्वभारेण भूमिं भिन्दन्नधोगच्छति, भग्नकाले वा शतधा स्वयमेव भिद्यमानो गच्छति नाशम्। कृषिफलस्य मेघायत्तत्वात् फलसंयुक्तो गच्छति इत्युच्यते। तथाच कालिदासः—'त्वदायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः' इति मेघकाव्यम्। पर्वतोऽपि व्रीह्यादिकन्दवृक्षादि-फलसंयुक्तो गच्छति च। फलवत्त्वदशायां। फलेर्गमि गम्यादित्वादिन् ( ? ), गमेः पूर्वस्य डः (३,२,१०१) इति च। "वर्म दृंहेत फलिगं खर्वेण (ऋ० मं० ३,७,२६,५)"—इति निगमः॥

(१८),(१९) उपरः*, उपलः†। 'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः(निरु० २,२१)'—इत्यादिभाष्यस्य स्कन्दस्वामि-कृतः—'आ उपर उपल इति; आङ् अभिविधौ मर्यादायामित्यन्ये, विना उपरउपल इत्येताभ्यां साधारणानीत्यर्थः। आ उपरादिति वक्तव्ये उभयोरुपादानं एतयोरविशेषत्वप्रदर्शनार्थम्। तथाह्येकनिर्वचनत्वप्रदर्शनार्थमेकयोगपठनं चाङ्क्षीत्याह—'उपर उपलो मेघो भवति (निरु०२,२१)'—इति। वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पाषाणे प्रसिद्धत्वात् 'तेषामुपरः स्थविष्ठो मध्यमः'—इति तत् सङ्घातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघपक्षं कृतम्। मर्यादापक्षस्य च मेघपक्षमेव लिङ्गमिति उक्तगणि मेघ-स्यैवेति। यदा पर्वतस्तदा उपेत्य रमन्ते तस्मिन् अभ्राणीति, मेघपक्षे आप इति। अभिविधिपक्षे नेदं निर्वचनम्'—इति। अनेविधौ-

* पृ० ६।
† [illegible]

यमानो उ-प्रत्ययो (३,२,८०) बाहुलकाद्गर्मेभवति (३,३,१); कृदुत्तरपदप्रकृतिस्वरं (६,२,१३९) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (६,२,२)। 'उपरोऽभ्रवापनात्'—इति माधवः। वपेः कृदादित्वात् (उ० ५,४२) अरन् द्रष्टव्यः, सम्प्रसारणं च बाहुलकात्। उपरमिव हि० नभस्यभ्रं भूमौ पर्वतस्य'—इति माधवः। अत्र भोजः—'पृषिपटिदेविकेविवपिवचिभ्यश्चित्'—इत्यलच्-प्रत्ययः। व्युत्पत्त्यनवधारणान्नावग्रहस्यते। मेघनामत्वे तत्र—"एषामुपरा उदायन् (ऋ० सं० ७,७,१८,३)"—इति निगमः। पर्वतानां चान्वेषणीयः। "हिरण्यनिर्णिगुपरा न ऋष्टिः (ऋ० सं० २,४,४,७)"—इति। अत्र 'उपरा अस्माच्छिन्ना दीर्घाः'—इति माधवः॥

(२०) चमसः*। 'चमु अदने (भ्वा० प०)'; 'अत्यविचमि (उ० ३, ११७)'—इत्यादिना असच्॥

(२१) अहिः†। 'इण् गतौ (अदा० प०)'; 'इन् सार्वधातुभ्यः (उ० ४,११४)'-इतीन् प्रत्ययः, गुणावादेशौ, यकारस्य हकारो व्यत्ययेन। एत्यन्तरिक्षे। अयतेरेव गत्यर्थादिन्-प्रत्यये पूर्ववद् व्यत्ययः। यद्वा; 'अहि गतौ' भौवादिकः (आ०), इन् प्रत्ययः, बाहुलकान्नलोपः, आगमानित्यत्वाद्वा नुम् न क्रियते। इ-प्रत्ययाधिकारे भोजदेवः—'अहिकुण्डलिकं पाचलोपश्च'—इति। यद्वा; 'अह व्याप्तौ' स्वादिः (प०), इन्, अह्नोति व्याप्नोति आकाशं दिगन्तराणि वा। यद्वा; आङ्पूर्वाद्धन्तेः हिंसार्थाद् गत्यर्थाद्वा 'आङि

* निघ० १०, ११ १२, १८।
† प० ११. ४, ५। नि० १०, ४४।

श्रिणिभ्यां कृत्स्न (उ० ४,१३३)'—इति इण्-प्रत्यये। छिद्य, आ समन्तात् हन्ति भिनत्ति उष्णमाभिमुख्येन, हन्ति गच्छत्यन्तरिक्षम्। यद्वा; केवलादेव हन्तेर्बाहुलकादिण्-प्रत्ययो छिद्य. हिः हन्ता, न हन्ता अ-हन्ता. अहिः अ-हिंसक इत्यर्थः; सर्वदा लोकस्य वर्षप्रदत्वात्। माधवेन तु—'त्वमपामपिधाना वृणोरप (ऋ० सं० १,४, ८,४)'—इत्यत्र, वाजसनेये तु 'सोऽग्नीषोमावभिसम्बभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत् समभवत् तस्मादहिः' —इति प्रदर्शितम्। तेन चैतद् युक्तम्। अहिशब्दोऽसुरवाचक आद्युदात्तः। "यदिन्द्राहन् प्रथमजामहीनाम् (ऋ० सं० १,२,३६,४)" —इति। नदीवचनोऽन्तोदात्तः। 'इन्द्रोदधं परि जानादहीनाम् (ऋ० सं० ८,१,२१,६)"—इति। अत्राहि-शब्दमेघनामत्वेनाभाषयत् स्कन्दस्वामी। "दासपत्नीरहिगोपा अतिष्ठन् (ऋ० सं० १,२,३८, १)"—इति निगमः॥

(२२) अभ्रम्[*]। 'अभ्र गतौ (भ्वा० प०)'; पचाद्यच् (३,१,१३४), अभ्रत्यन्तरिक्षे। आपो गतानि वा अपशब्दे कर्मण्युपपदे गतेर्दानार्थात् 'आतोऽनुपसर्गे कः (३,२,३)', पकारस्य भकारो व्यत्ययेन (३,४, ९८)। न भ्रंशत्यस्मादापो वर्षासमयादन्यत्रेति वा। यदुक्तं—'न भ्रंश्यति यतस्तेभ्यो जलान्यभ्राणि नान्यतः'—इति। नञ्-पूर्वात् 'भ्रम-भ्रंश अधःपतने (भ्वा० आ०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३,२, १०१)'—इति ड-प्रत्ययः। न भ्राजते वा वर्षासु मलिनवर्णत्वात् भ्राजतेः पूर्ववत् डः (३,२,१०१)। "प्र णः पिन्व विद्युदभ्रेव रोदसी

(ऋ० मं० ७,३,१,३)"—"उदभ्राणीव स्तनयन्नियर्मि (ऋ० मं० ४, ७,१८,२)"—इति च निगमौ ॥

(२३) बलाहकः । बलाकाभिर्हीयते गम्यते इति बलाहकः, वारिवाहको वा ; पृषोदरादित्वात् (६,३,१०८) वर्णागमादिना साधुः । वराह-शब्दाद्वा 'सञ्ज्ञायां कन् (५,३,७५)'; रेफस्य लकारः । उकार्थो वराह-शब्दः (१,३), विकृतस्यासाधारण्यार्थत्वप्रदर्शनाय पुनः पाठः । निगमोऽन्वेषणायः ॥

(२४) मेघः* । 'मिह सेचने (भ्वा०प०)'; पचाद्यच् (३,१, १३४), न्यङ्क्वादित्वात् कुत्वम् । मेहति सिञ्चति वर्षणभूमिं मेघः । "वृषा वा मेघो वृषणा पापाय (ऋ०मं०२,४,२६,३)"— "अस्मिन् मेघे विद्युत् ( ? )"—इति च निगमौ ॥

(२५) दृतिः । 'दृ विदारणे (क्र्या०प०)' । 'दृणातेर्ह्रस्वश्च (उ० ४,१७८)'—इति ति-प्रत्ययः, ह्रस्वविधानसामर्थ्याद् गुणो न भवति । दीर्यते इन्द्रेण, दृतिवत् स्यन्दमानाधारत्वाद्वा । "दृतिं सु कर्ष विषितं न्यञ्चम् (ऋ० मं० ४,४,२८,२)"—"ईशानो विसृजद् दृतिम् ( ? )'—इति च निगमौ ॥

(२६) ओदनः† । उदकशब्दे उपपदे ददातेः 'कृत्यल्युटो बहुलम् (३,४,११३)'—इति कर्त्तरि ल्युट् । ओदनः उदकदातेत्यर्थः । * * * । यद्वा ; 'उन्दी क्लेदने (रु०प०)'; 'उन्देर्नलोपश्च (उ० २, ७२)'-इति युच्प्रत्ययः, गुणः; उनत्ति वनभूमिम् ओदनः ।

---

* निरु० २, २;—२१ ।

† निरु० ६ ३० ।

"धारयन् पक्तमोदनम् (ऋ० सं० ६,५,३०,१)" इति निगमः ॥

(२७) वृषन्धिः। 'वृष सेचने (भ्वा० प०)'; 'कनिन्युवृषित्याक्षि-' (उ० १,१५४) कनिन्, वृषा। मनुजयादिसाधनत्वात् कामानां वर्षिता यज्ञः, सन्निधीयतेऽस्मिन्निन्द्रेण प्रहारकाले 'कर्मण्यधिकरणे च (३,३,९३)' —इति कि-प्रत्ययः न-लोपाभावश्छान्दसः। "विषन्धिः"—इति केषुचित् कोशेषु दृष्टम्। तदा विषं अन्नं धीयतेऽस्मिन्निति निर्वाहः, सुगागमश्छान्दसः। निगमदर्शनान्निर्णयः। "वृषा वृषन्धिश्चतुरश्रिरस्यन् (ऋ० सं० ३,६,७,२)"—इति मेघनाम न वेति सन्दिग्धम्* ॥

(२८) वृत्रः। वृणोतेराच्छादनार्थात् (स्वा० प०) 'स्फायितञ्चि- मिदिशंसिभ्यः क्रन् (उ० ४,४,१५८)'—इति क्रन्-प्रत्ययो बाहुलकाद् भवति; आच्छादयति ह्यसौ कृत्स्नं नभः। वर्ततेर्वा गतिकर्मणः (निघ० २,१४) 'स्फायितञ्चिवञ्चि (उ० २,१७)'—इत्यादिना रक्-प्रत्ययः; गच्छत्यसौ कृत्स्नं नभः। वर्द्धतेर्वा वृद्ध्यर्थात् (भ्वा० आ०) बाहुलकात् त्रन्, धकारस्य तकारो व्यत्ययेन; वर्द्धते हि वर्षासु मेघः। ब्राह्मणोक्ता एवासौ त्रयोऽप्यर्थाः—'यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्, स इषुमात्रमिषुमात्रं विष्वङ् अवर्द्धत'—इति। "वृत्राय वज्रं मीशानः क्रियेधाः (ऋ० सं० १,४,२९,२)"—"अहन्यद् वृत्रमर्यं विवेरपः (ऋ० सं० ८,८,५,१)"—इति च निगमौ ॥

* 'इदमिमं मेघ-भेदमङ्गारेण वर्षं कुर्वन्नसि'—इति तत्सायणीयभाष्यम्।

(७८) असुरः* । 'असु क्षेपणे (दि०प०)'; 'असिसमोदरन् (उ०१,४०.-४३)'—इति उरन्-प्रत्ययः; अस्यति क्षिपति भूमौ जलम्। यद्वा; अस्यते क्षिप्यते स्थाने इन्द्रेण वर्षार्थम्। यद्वा; असिति (भू०प०) तिष्ठति 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः (उ०१,१०)'—इत्यादिना उ-प्रत्ययः असुः। शरीरे रमतीत्यसुः प्राणः। 'प्राणा वा आपः'—'पानीयं प्राणिनां प्राणाः'—इत्यादिदर्शनात् असु-शब्देनाच अन्नमुच्यते। तद्राति, 'आतोऽनुपसर्गे कः (३,२,३)। यद्वा; असवान् प्राणवान् वा। रो मत्वर्थीयः। यद्वा; 'अस गतिदीप्त्यादानेषु' भौवादिकः स्वरितेत्; पूर्वस्मादेव सूत्रादुरन्। असति गच्छत्यन्तरिक्षे, दीप्यते स्वयम्, आदत्ते वा अन्नं वर्षितुम्। यद्वा; 'सुर ऐश्वर्ये (तुदा०प०)', इगुपधलक्षणः कः (३,१,१३५), सुरतीति सुरः ईश्वरः स्वतन्त्र इत्यर्थः, असुरः अनीश्वरः, इन्द्रादिपरतन्त्र इत्यर्थः। "दिवः क्षेनामो असुरस्य नीळ्यः (ऋ०सं०८,४,२४,१)"—"दीधा धियोरक्षमाणा असुर्यम् (ऋ०सं०२,७,६,४)"—इति च निगमौ॥

(३०) कोशः†। क्रोशतेः शब्दकर्मणः (भू०प०) पचाद्यचि (३,१,१३४) पृषोदरादित्वा (६,३,१०९) द्रेफलोपः कोशः। मेघो हि गर्जितलक्षणं शब्दं करोति। कुष्यतेर्वा स्तुत्यर्थात् (दि०प०), अस्मिन्नेवार्थे पकारस्य शकारः, इयुमाचमवर्द्धतेत्युक्तम् (२८)। कोशति-र्व्याह्लादनार्थ इति माधवः, पूर्ववदवच्छादयत्यसौ कृत्स्नं नभः। जलस्य कोशस्थानीयत्वात् कोश इत्यन्ये। यद्वा; 'कु शब्दे (तु०आ०)', 'कुदाप्भ्यः शः'—इति श्रीभोजदेवः; कौति (अदा०प०) गर्जितशब्दं

कशा[43] । धिषणा[44] । नौः[45] । अक्षरम्[46] । मही[47] । अदितिः[48] । शची[49] । वाक्[50] । अनुष्टुप्[51] । धेनुः[52] । वल्गुः[53] । गल्दा[54] । सरः[55] । सुपर्णी[56] । बेकुरा[57] । इति सप्तपञ्चाशद् वाङ्नामानि* ॥ ११ ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः । * * * । वाङ्नामान्युत्तराणि (निरु० २,२१—२३)'—इति भाष्ये स्कन्दस्वामी—'उत्तराणि सप्तपञ्चाशत् श्लोकइत्यादीनि वाङ्नामानि। उच्यते इति वाक् इन्द्रियम्, तत्कार्यः शब्दोऽप्युच्यते इति वाक्, उच्यतेऽनया अर्थः इति वाक्, स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक्, तदधिष्ठात्र्यपि देवता वागित्युच्यते। पर्वतस्थास्य मेघहेतुत्वात् मेघनामभ्य उत्तराणीति । स च वाक्-शब्दो 'वचि-परिभाषणे (अदा० प०)'—इत्यस्मात् धातोः 'क्विप् वचि (उ० २,५४। ३,२,१७८वा०)'—इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः ॥

(१) श्लोकः† । 'श्रु श्रवणे (भ्र० प०)'; 'इणभीकापाशल्यतिमर्चिभ्यः कन् (उ० ३,४३)'—इति कन्-प्रत्ययो बाहुलकाद्भवति, गुणः,

(५३) "वग्नुः" ग. C. D. F ।
(५४) "गल्द।" ख. E । "गल्द." ग. C. F । "गल्दः" D ।
(५५) "रभः" ग. C. F. प० ११. १, ७ । "रास:" D ।
(५७) "बेकुः" च ।
* "इति वाचः" ग ।
† निरु० ९, ९ ।

पिलकारित्वात् लम्नम्; श्रूयते इति श्लोकः। यद्वा; 'श्लोकृ सङ्घाते (भ्वा०आ०)'; 'पुंसि सञ्ज्ञायां घः (३,३,११८)'; श्लोक्यते ग्रथ्यते छन्दोरूपेण संग्रथ्यते कविभिः श्लोकः 'पद्ये यशसि च श्लोकः (३,३,२)' —इत्यमरसिंहः। "ऋतस्य श्लोको बधिरा ततर्द (ऋ०मं० ३,६,१०,३)"—"श्लोको न यातामपि वाजो अस्ति (ऋ०मं० ७,६,१२,५)"—इति निगमौ॥

(२) धारा*। 'धृञ् धारणे (भ्वा०उ०)'; 'हेतुमति च (३,१,२६)'—इति णिचि 'एरजण्यन्तानाम् (३,३,५६ भा०)'—इत्यस्या-ज्ञापकत्वादेव 'कृत्यल्युटो बहुलम् (३,३,११३)' इति कर्मणि भवति। यद्वा; धारेः पचाद्यच् (३,१,१३४); लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "ततसेह सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते (ऋ०मं० ७,५,२४,१)"—"यः ससाद धारां सुतस्य (ऋ०मं० ७,५,११,४)"—इति च निगमौ॥

(३) इळा†। 'इल स्वप्ने क्षेपणे (तु०प०)'; इगुपधेभ्यः (३,१,१३५) कर्मणि विधीयमानः कः प्रत्ययो बाहुलकाद् (३,३,१) भवति। क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेन; इला। लळयोरेकत्वमुक्तं पूर्वमेव(१)। यद्वा; 'ईड स्तुतौ (अदा०आ०)'—'ञि इन्धी दीप्तौ (रु०आ०)'; आभ्यां पूर्ववत् कः (३,३,१), पृषोदरादिः (६,३,१०९); ईड्यते स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति प्रयोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा; इलेत्यन्ननाम (निघ० २,७), अकारो मत्वर्थीयः; यजमानानां देयेनान्नेन हविर्ल-

* निघ० १९, ६। † पृ० १।

वर्णेन वा महती रस्ता । "अभि न इळा यूथस्य माता (ऋ० सं० ४,२,१६,४)"—इति निगमः ॥

(४) गौः*। व्याख्याता पृथिवीनामसु(१)। गच्छति यज्ञोऽस्यां गच्छता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभीवृता (ऋ० सं० २,३,१८,४)"—इति निगमः ॥

(५) गौरी†। रोचतेर्ज्वलतिकर्मणः (निघ० १,१६)। 'ऋज्रेन्द्राग्रवज्रविप्रकुप्र (उ० २,२७)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौर-शब्दो निपातितः, तस्मात्तु स्वधातोर्गौरादेशः, 'षिद्गौरादिभ्यश्च (४,१,४१)'—इति ङीष्। स्वया दीप्त्या ज्वलति वाग्देवतात्वात्। यद्वा; 'गुरी उद्यमने (तु० आ०)', अस्मात् इति पूर्ववन्निपातनादुकारस्यौ-कारः, 'रोरि (८,३,१४)'—इति रेफलोपः, ङीष्; गुरते उद्यच्छति स्वमभिधेयम्; उद्यमनं चात्र प्रकाशनम्। यद्वा; 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'—इत्यस्मान्निपातनादिति वृद्धिः ; गवते गर्जितलक्षणम-व्यक्तशब्दं करोतीति गौरी। यद्वा; शुक्लवर्णत्वात् गौरी, 'भास्वत्-कपर्दी शशिकलामिन्दुकुन्दावदाताम्'—इत्याचार्याः, 'सर्वशुक्ला सर-स्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २,३,२२,१)"—"सोमो गौरी अधिश्रितः (ऋ० सं० ६,७,३८,३)"—इति च निगमौ ॥

(६) गान्धर्वी। गविगम्ध्यर्थभ्यो वः ( ? )। 'धृञ् धारणे (भ्वा० उ०)'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवा-देशः, गन्धर्वः ; गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरक् च'—इति

* पृ० १। † प० ४, ५। निघ० ११, १९।

च-प्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः। 'गन्ध अर्दने'—इति धातुश्चुरादिरात्मने-पदी। 'तस्येदम् (४.३.१२०)'—इत्यण्, ङीप् (४.१.१५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वागैन्द्री (ऐ० ब्रा० २,४,८)'—इति। यद्वा; गन्धर्वा देवानां गायकाः, तेषामियम्। तथा-चैतरेयब्राह्मणे—'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १,५,१)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्। 'तां गन्धर्वीऽवदीत् गर्भे अन्तः'—इति श्रुतिः। "अग्निर्गान्धर्वी पथ्या ऋतस्य (ऋ० सं० ८,३,१५,६)" इति निगमः॥

(७) गभीरा*, (८) गम्भीरा†। भायन्ति (दि० प०) गतीति (अदा० प०) भीरा। 'आतोऽनुपसर्गे कः (३.२,३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६,३,१०९) गो-शब्दस्य ग-भावो गम्भावश्च। स्तनयित्नु-लक्षणा हि माध्यमिका वाक् श्रूयमाणैव सर्वप्राणिनां भियमादधाति। यद्वा; उणादौ गभीरादि-सूत्रेण गमेर्धातोरीरन्-प्रत्यये नुमागमो मकारस्य विकल्पेन लोपो निपात्यते (उ० ४,३४)। गच्छति यत्र, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा; 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ०), अन्त्य हृस्वत्वं, भस्याम्लादेशः, वा च नुम् निपात्यते। प्रतिष्ठिता यस्मिन् स्थाने, लिप्स्यन्ते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

* ५० ११, १, १,—१०। † ५० १, १०।

(९) मन्द्राः*। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भू० आ०)'। मन्दति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः। "स मन्द्रया च जिह्वया (ऋ० सं० ५,०,२२,३)"—इति निगमः॥

(१०) मन्द्राजनी। मन्द्रशब्दो व्याख्यातः। 'अज गतिक्षेपणयोः (भू० प०)', ल्युट्। मन्द्र मजनं गमनं क्षेपणं प्रेरण मुच्चारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम्। (४,१,४१ग०) "मन्द्राजनी चोदते अन्तरामनि (ऋ० सं० ७,२,२१,२)"—इति निगमः॥

(११) वाशी†। 'वाशृ शब्दे' दैवादिकः (आ०)। 'वसिवपियजिराजिव्रजिध्वजिसदिहनिकमिवाशिवादिवाशिभ्य इञ् (उ० ४,१२१)' कर्मणि कारके वा दृश्यते, वाशिः। 'कृदिकारादक्तिनः (४,१,४५ वा०)'—इति ङीष्, वाशी। "ते वाशीमन्त इष्मिणो अभीरवो (१,६,१३,६)"—"वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८,५, १८,४)"—इति च निगमौ॥

(१२) वाणी‡। 'वणि शब्दे (भू० प०)'। बाहुलकादिञ् (उ० ४, १२१।३,३,१), ङीष् (४,१,४५ वा०)। "वाणीः पुरुहूतं धर्मन्तीः (ऋ० सं० ३,२,२,१०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७,५,६,३)"—इति निगमौ॥

(१३) वाणीची। वाणीं स्तुतिरूपां वाच मञ्चति गच्छतीति विग्रह्य 'ऋत्विगित्यादिना (३,२,५९) क्विनि, न-लोपे, 'अचः

* निघ० ११, १८;—१९।
† प० ४, १। निघ० ५, ११;—१९।
‡ निघ० ६, १।

(१,४,१३८)'—इत्यकारलोपे 'वाणतेश्चोपसंख्यानम् (४,१,६वा०)'—इति ङीप्। "रथे वाणीश्चाहिता (ऋ० सं० ४,४,१५,७)"—इति निगमः ॥

(१४) वाणः। वण्यते शब्द्यते वाणः। 'अकर्तरि च कारके संज्ञायाम् (३,३,१९)'—इति घञ्। यद्वा; वणनं शब्दनं वाणः, भावे घञ् (३,३,१८), अर्शआदित्वादच् (५,२,१२७)। स्तुतिमती हि वाक्। "होता वाणा वि दधाति प्र वाणम् (ऋ० सं० ३, ६,१२,४)" इति निगमः ॥

(१५) पविः*। 'पूञ् पवने (क्र्या० उ०)'; 'अच इः (उ० ४, १३४)'—इति इ-प्रत्ययः। पुनाति हि वाक्। 'पावका नः सरस्वती (ऋ० सं० १,१,६,३)'—इति मन्त्रः। पूयते वा सङ्कीर्तनादिना, 'वाचं लौकिकीमालापप्रसक्तां पुनीमहे' इत्युक्तेः। पूयतेऽनयेति वा शुद्धिकरणं हि वाक्। 'पवित्रं हि वाग् विदुषाम्'—इति माधवः। "वाणस्य चोदया पविम् (ऋ० सं० ७,१,७,१)"—इति निगमः ॥

(१६) भारती*। 'डु भृञ् धारणपोषणयोः (जु० उ०)'; 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३,१०७)'। भरतशब्दात् 'प्रज्ञादिभ्यश्च (५,४,३८)'—इति स्वार्थिकोऽण्, ङीप् (४,१,१५)। बिभर्त्ति जगदर्थप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन। अथवा 'अग्निर्भरतः, प्राणो भूत्वा सर्वाणि बिभर्त्ति'—इति वाजसनेयकम्; तदीया भारती। तथा च 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ० उ० १,८)।

अथवा 'भरत, (निघ० ३,१८)'—इति ऋत्विङ्नाम ; तदीया, स्तुति-साधनत्वात् भारती । "आ भारती भारतीभिः सजोषा (ऋ० सं० २,८,१३,३)"—इति निगमः ॥

(१७) धमनिः* । धमतिर्गतिकर्म्मा (निघ० २,१४), 'अर्त्तिसृधृ-धम्यश्यवितृभ्योऽनिः (उ० २,८५)'—इत्यनि-प्रत्ययः । गत्यर्था बुद्ध्यर्थाः । गम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्व-साधुविभागेन । यद्वा ; 'धमति'—इति वधकर्मस्वपि पठ्यते (निघ० २,१९) । हन्त्यनया पापादिकमिति । तथाच 'वज्रो वै वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २,३,३) । 'वाक्सायका वदनान्निः-सरन्ति पौराहन्ताः'—इति च महाभारतम् । "इन्द्रेषितां धमनिं पप्रथन्नि (ऋ० सं० २,६,४,३)"—इति निगमः ॥

(१८) नाळीः । 'नल गन्धे (भ्व० प०)' ; 'वसिवपियजिराजिव्रजि (उ० ४,१२१)'—इत्यादिना विहितः इञ्-प्रत्ययो बाहुलकात् भवति, 'कृदिकारात् (४,१,४५ वा०)'—इति ङीष्, व्यत्ययेन सोर्वि-सर्जनीयः । 'गन्ध अर्दने (चु० आ०)', 'अर्द हिंसायाम् (भ्व० प०)' —इति पठ्यते । गन्धनं हिंसात्मकं सूचनम्, सूचयति परम-र्माणि । "अयमस्य धम्यते नाळीः (ऋ० सं० ८,७,२३,७)"—इति निगमः ॥

(१९) मेना† । 'मान पूजायाम् (चु० आ०)'—इत्यस्मात् 'बहु-लमन्यत्रापि इनण् भवति (उ० २,४६)'—इति वचनादिनण्, बहुल-

* निघ० १, २४ ।
† प० ३, २९ । निघ० १, ११ ।

यवयवान-लोपः। पूज्यतेऽनया गर्वादिरूपस्यावर्जनेन, पृच्छ्या वा देव-तात्वात्। "याभ्येनां कृष्णवन्त्यूना भुवङ्गोः (ऋ० सं० ८,६,१०३)"—इति निगमः। 'मेनां गर्जितमध्यम' इति माधवः॥

(२०) मेऽिः*। सम्पर्कार्थो धातुः (चु० प्रा०)। पूर्ववत् वाक्-त्वकारिकन्। सम्पृक्ता स्वर्येन वाक्। तथाच—'वागर्थाविव सम्पृक्तौ'—इति (रघौ १,१) कालिदासः। 'मेऽिं मदन्तं पितोरुपस्थे (ऋ० सं० ३,१,२७,४)"—इति निगमः। मत्वर्थीयस्य लुकि वाग्मिन मि-त्यर्थः। "मेलिः स्यात् वाक्यार्थजननात्" इति माधवः† ॥

(२१) सूर्या‡। सर्तेर्गत्यर्थात् (भु० प०), सुवतेर्वा प्रेरणार्थात् (तु० प०) 'राजसूयसूर्य (३,१,११४)'—इत्यादिना निपातनात् क्यपि सर्तेरुत्वं सुवतेर्वा रुडागमः। सरति गच्छति श्रोतृन् प्रति, कर्णशष्कुलिं वा सुवति प्रेरयति चोदनारूपा पुरुषादीनिदं कुर्वि-ति। यद्वा; सुपूर्वादीरतेः 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्मणि क्यपि निपातनाद्रूपसिद्धिः। सुष्ठु ईर्यते उच्चार्यते इति सूर्या। यद्वा; 'षु प्रेरणे (भ्वा० उ०)', 'सुसूधागृधिभ्यः क्रन् (उ० २,२३)'—इति क्रन्-प्रत्ययः। प्रेर्यते उच्चारणकाले प्राणेन सूरा 'छन्दसि स्वार्थे ( ? )'—इति यत् प्रत्ययः, सूर्या। यद्वा; सूरयो मेधाविनः, तानर्हति 'छन्दसि च (५,१,६७)'—इति यत्

* प० ५,७।

† 'मेलि मेलनं नामानामानतानां वाक्यानाम वागिन्द्रियं सङ्गम(न्य)स्य वक्तारम्' —इति माधवः।

‡ [illegible]

प्रत्ययः । यद्वा; स्वरिषु साधुः 'तत्र साधुः (४,४,९८)'—इति यत् । निगमोऽन्वेषणीयः ॥

(२२) सरस्वती*। सर्त्तेरसुन् (उ० ४,१८४) सरः। नद्यपत्यादि-रूपेण प्रसरणमस्यास्तीति 'अस्मायामेधास्रजो विनिः (५,२,१२१), 'तसौ मत्वर्थे (१,४,१९)' —इत्युक्ते मतुपि ङीप्। यद्वा; सर इत्युदकनाम (निघ० १,१२)। सर्त्तेस्तद्वती ह्यधिदेवतात्वादुदक-वती हि माध्यमिका वाक्। सैव वागीश्वरी सरस्वती। तदुक्तं भाष्यकारेण—'तत्र सरस्वतीत्येतस्य नदीवत् देवतावच्च निगमा भवन्ति (निरु० २,२३)'—इत्यादिना। "पावका नः सरस्वती (ऋ० सं० १, १,६,३)"—इति निगमः देवतायाः। "इयं शुष्मेभिः (ऋ० सं० ४,८,३०,२)"—इत्येषा नद्याः ॥

(२३) निवित्। 'विद ज्ञाने (अदा० प०)', नि-पूर्वः। 'सत्सू-द्विषद्रुहदुह (३,२,६१)'—इत्यादिना क्विपि [अन्तर्णीतणिजर्थत्वाच्च विविः] नितरां वेदयति ज्ञापयति स्वमभिधेयम्। "तान् पूर्वया निविदा हूमहे वयम् (ऋ० सं० १,६,१५,३)"—इति निगमः ॥

(२४) स्वाहा†। यस्य नाम्नो यादृङ्निर्वचनं दृष्टं तत्सर्वं तद्रूपे-णैव लिख्यते। अत्र निरुक्तम्—'स्वाहेत्येतत् सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वा (निरु० ८, २०)'—इति। अस्य स्कन्दस्वामी—स्वाहेत्येतत् स्वाहाकृति-शब्दस्य पूर्वपदं स्वाहाकारान्तो होममन्त्राणां कर्त्तव्यः, 'न ह वै आहुतयो

* प० १, १२. ५. ५ । निघ० २, १२. ८, २९. २१, २५ ।
† प० ८, २० । नि० द० ८, २० ।

देवान् गच्छन्ति य श्रवषट्कृता वा अस्वाहाकृता वा भवन्ति (शत० ब्रा० ९,३,२,६-१४)'—इतिश्रुतिः। स्वाहाकारस्य सम्प्रदानत्वेन सम्बन्धेऽवश्यम्भावित्वात्। अयमर्थः यस्मिन् श्रूयते स होममन्त्रः शोभनमर्थमाह। अथवा प्रजापतेः स्वा आत्मीया वागाहेति स्वाहा-कारक्रपा वाक् प्रजापतिसृष्टेत्यर्थः। अथवा स्वं प्राहेति यजमानस्य, स्वं हविः देवतार्थं दत्तं तदुद्देशेन त्यागात्, तच्च यजमानो स्वं प्राहेति स्वाहा; सम्प्रदानत्वं स्वाहाकारस्य व्युत्पन्नेन प्रकारेण दर्शितं स्वाहुतमित्यादिना। अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठुमर्यादया जुहोतीति; एवञ्च सति पूर्वकाणि निर्वचनानि भ्रमः। इदन्तु जुहोतेरिति। अत्र भास्करमिश्रः 'स्वयं मरुत्वता आह श्रुते'। 'स्वैव ते वागित्यब्रवीत्'—इति ब्राह्मणम्। स्वयमेवाहेत्यस्यार्थस्य द्योतकोऽयं निपातः पदसमान्तरेऽपि विभक्त्यन्तसमुदायात्मनिपातः स्वाहेति। संस्कारविशेषादनवधारणाच्चावगम्यते। अत्र सायणाचार्य— 'सुष्ठु आह्वयति स्वाहा'। अत्र स्वाहा-शब्दो नाव्ययम् अग्निजाया-वाचित्वमित्यर्थः। भाष्ये तु स्वाहा-शब्दस्य वाङ्नामत्वमभिप्रेत्यैतानि निर्वचनानि लिखितानि; तेषु यथोक्तिमुक्तं तद् दृष्टव्यम् विरोधः। तस्याः वाचः स्रष्टौ पृथिवी चाग्निरिति वाचोऽग्नेश्च कारणकार्यभावः श्रूयते। 'अग्निर्वाक् भूत्वा मुखं प्राविशत् (ऐ०उ०१,८)'—इति। तस्मादग्नेर्वाचश्च सम्बन्धात् अग्नायी स्वाहा वागित्युच्यते। वाति वातात्मत्वेन वागुच्यते इति सन्देहः। निगमः सुलभः स्वाहाकारपक्षे, अन्यथान्वेषणीयः॥

(२५) वग्नुः। 'वच भाषणे (अदा०प०)'; 'वचेर्गश्च (उ०३,२२)'

इति नु-प्रत्ययः, पकारस्य गकारश्च। वग्नुः वाचा समानोऽर्थः। "वग्नुं मियन्ति यं विदे (ऋ०सं०६,८,४,१)"—"इन्द्रस्येव वग्नुरा शृण्व आजौ (ऋ०सं०७,४,१२,२)"—इति च निगमौ॥

(२६) उपब्दिः। उप-पूर्वात् पदेर्गत्यर्थात् (दि०आ०) 'इन सर्वधातुभ्यः (उ०४,११४)'—इतीन्-प्रत्ययो बाहुलकादुपधालोपः, 'न पदान्तद्विर्वचन (१,१,५८)'—इत्यनेन जश्त्वविधिं प्रति स्थानिवद्भावनिषेधात् 'झलां जश् झशि (८,४,५३)'—इति पकारस्य बकारः। उप समीपे भक्तानां गच्छति, उप आचार्यसमीपे गम्यते इति वा। यद्वा; उ-पूर्वात् ददातेः (जु०उ०), द्यतेः (दि०प०), दयतेः (भ्वा०आ०) वा 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति बहुलवचनात् 'उपसर्गे घोः किः (३,३,९२)'—इति कि-प्रत्ययः कर्त्तरि भवति बकारश्चोपजनः। उपेत्य ददातीत्यभिलषितम्, प्रयोक्तॄणां, खण्डयत्यज्ञानं तर्कादिसमये प्रतिवादिनां वा, रक्षति भक्तानिति वा उपब्दिः। "आघोषयन्तः पृथिवीमुपब्दिभिः (ऋ०सं०८,४,२९,४)"—"उपब्दिरियर्त्ति सोमः (ऋ०सं०७,३,२४,५)"—"प्रस्य वायता मुपब्दिः (ऋ०सं०२,४,९,२)"—इति निगमाः॥

(२७) मायुः*। 'डु मिञ् प्रक्षेपणे (क्र्या०उ०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ०१,१)', 'मीनातिमिनोतिदीङां ल्यपि च (६,१,५०)'—इत्यात्वम्, 'आतो युक् चिण्कृतोः (७,३,३३)'—इति युक्। क्षिप्यते प्रेर्यते उच्चार्यते इति मायुः, प्रक्षिपति इष्टुदकं

* निघ० १,९. ११, ४२।

भूमाविति वा। "मिमाति मायुं ध्वसनावधिश्रिता (ऋ॰मं॰ १,३, १८,४)"—इति निगमः॥

(२८) काकुत्*। 'कैगैरै शब्दे (भू॰प॰)'। सम्पदादित्वात् (३, ३,९४वा॰) क्विप्। कानं शब्दनं करोतीति का, मृगय्वादित्वात् कुः, (उ॰१,३६) बाहुलकात् तकार उपजनः। यद्वा; 'कक वक लौल्ये (भू॰आ॰)', 'मृग्रोरुतिन् (उ॰१,९१)' इत्येव बाहुलकाद् (३,३,१) अस्माद् भवति णिच्च काकुत्। ककते यस्मात् भवति एकस्मिन्नर्थे न प्रतितिष्ठतीत्यर्थः; तथाहि शब्दा अनेकार्था बहवः, एकार्थाश्च काकादिनाभिधीयमाना अनेकार्था भवन्ति। ककुदस्थान सन्त्यस्मिन्निति काकुत्। मत्वर्थीयस्य लुक्, छान्दसो दीर्घः, सर्वथा पृषोदरादिरयं शब्दः। "या ते काकुत् सुकृता या वरिष्ठा (ऋ॰मं॰ ४,७,१३,२)"—इति निगमः॥

(२९) जिह्वा†। 'शेवयह्वजिह्वाग्रीवाप्वामीवा' इति निपातनात्। 'लिह आस्वादने (अदा॰उ॰)', व-प्रत्यये, अस्यादेर्जकारो निपात्यते। लेढ्यास्वादयत्यनया वन्यविषयान्नमात्रान्। यद्वा; आह्वयते (भू॰उ॰) जुहोति (जु॰प॰) वायं यङन्तस्य कः, सम्प्रसारणम् 'अभ्यस्तस्य च (६,१,३३)'—इति, सम्प्रसारणं च 'न धातुलोप आर्द्धधातुके (१,१,४)'—इति गुणनिषेधाद्वकारादेश रूपम्। जोहूवाति पुनःपुनराह्वयति शब्दं करोति तस्मात् वादकं जुहोत्यस्यात्मनि, जोहूवा सति ओकारस्येकारादेश उकारलोपे च जिह्वा। "पुरो

* प॰ ४,७। निरु॰ ५,२६।
† निरु॰ ५,२६।

विप्रा दधिरे मन्द्रजिह्वम् (ऋ० सं० ३,७,२६,१)"—"अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २,५,१२,१)"—इति च निगमौ ॥

(३०) घोषः*। 'घुष शब्दार्थः (भ्व० प०)'; 'हलश्च (३,३,१२१)'—इति घञ्। घुष्यते शब्द्यते घोषः। "उतो पितृभ्यां प्रविदान् घोषम् (ऋ० सं० ३,१,२,१)"—"इन्द्रे घोषा असृक्षत (ऋ० सं० ६,४,४७,१)"—इति च निगमौ ॥

(३१) स्वरः। 'स्वृ शब्दोपतपयोः (भ्व० प०)'; पुंसि संज्ञायां घः (३,३,११८)। स्वर्यते शब्द्यतेऽनेन देवता, उपतप्यतेऽनया मर्मस्पृक्प्रयुक्तयेति वा। स्वरतिरर्चतिकर्मा वा (निघ० ३,१)। स्वर्यते स्तूयते देवतात्वात्। 'गोचरसञ्चर (३,३,११९)'—इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् घः। यद्वा; स्वरति देवतामिन्द्रादिम्; पचाद्यच् (३,१,१३४)। "स्वरश्च मे श्लोकश्च मे (य० वा० सं० १८,१)"—इति निगमः ॥

(३२) शब्दः। शपत्याक्रोशे शात्रपित्यां दानौ। अत्र वृत्तिग्रन्थः—'शपते अनेनेति शब्दः संस्कृता वाक्। शन्नौ तृतीये इति योगविभागात् अचतुर्थेऽपि तृतीयं भवति'—इति। 'शब्दनं शब्दः'—इति क्षीरस्वामी। खेऽन्तरिक्षे शब्दं करोतीति वा। "शब्दो रोगिणो मीमांसा च ( ? )"—इति निगमः ॥

(३३) स्वनः। 'स्वन शब्दे (भ्व० प०)'; 'स्वनहसोर्वा (३,३,६२)'—इत्यप्। स्वन्यत इति स्वनः। "सिन्धोरूर्मेरिव स्वनः (ऋ० सं० ७,१,७,२)"—इति निगमः ॥

* निघ० १,११।

(३४) स्तुक्* । स्तूयते (तु०प०) स्तूयतेऽनया । यद्वा ; स्तूयते स्वयं देवतात्वात् । 'ष्टुञ् स्तुतौ (तु०प०)'—इत्यस्मात् सम्पदादित्वात् (३,३,९४वा०) क्विप् । "स्तुचा वने मानुषः (ऋ०सं० ८,५, २७,३)"—इति निगमः ॥

(३५) होत्रा† । 'हु दानादानयोः (जु०प०)' 'हुयामाश्रुभसिभ्यस्त्रन्(उ०४,१६८)। हूयतेऽनया मन्त्ररूपया हविः, हूयतेऽस्यां प्राणः, हूयते वा प्राणः । तथाच—'वाचि हि प्राणं जुहुमः प्राणे वा वाचम्'—इत्युपनिषत् (ऐ०) । यद्वा; होत्रेति यज्ञनाम (निघ० ३,१७), हूयतेऽस्मिन् हविरिति यज्ञस्य वागित्युच्यते तत्साध्यत्वात् । वाचं यच्छति वाग्वै यज्ञः'—इति ब्राह्मणम् (ऐ०ब्रा०५,४,५)। ऋतुयाजप्रैषेषु दशमे प्रैषे—"वनेम तद्धोत्रया चितन्त्या (ऋ०सं० २,१,१७,२)"—इति निगमः, "वीतिहोत्रं त्वा कवे (ऋ०सं०४, १,१९,३)"—इति च निगमः ॥

(३६) गीः‡ । गृणातिरर्चतिकर्मा (निघ० ३,१४), औणादिकः क्विप्, 'ऋत इद्धातोः (७,१,१००)', 'र्वोरुपधाया दीर्घ इकः (८,२,७६)'—इति दीर्घः, हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (६,१,६८), रेफस्य विसर्जनीयः । गृणात्यनया गीः । "तमिद्वर्धन्तु नो गिरः (ऋ०सं० ६,१,१०,३)"—इति निगमः ॥

(३७) गाथा । 'गै शब्दे (भू०प०)', अर्चतिकर्मा च (निघ० ३,१४); 'उषिकुषिगार्तिभ्यस्थन्(उ०२,३)। गायतीत्यसौ देवताः, गायन्ति तामिति वा गाथा । "तं गाथया पुराण्या (ऋ०सं०७,४,

* निघ० १,८। † ५० ३,१७। ‡ निघ० १,१०, ६, २४. १०, ५।

२५,४)"—"युञ्जन्ति हरी इषिरस्य गाथया (ऋ०सं०६,७,१, ३)"—इति निगमौ॥

(३८) गणः*। 'गण गणने' चुरादिरदन्तः (प०)। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। 'अतोलोपः (६,४,४८)। गण्यते या गणः, अतोलोपस्य स्थानिवद्भावात् वृद्धिर्न भवति। गणेति केचित् पठन्ति। निगमोऽन्वेषणीयः॥

(३९) धेना†। दधातेर्लटः शानचि व्यत्ययेन एत्वाभ्यासलोपौ दधाना स्वमभिधेयं वर्षप्रदानेन लौकिकाय वा। यद्वा; 'धेट् पाने (भू०प०)'; 'धेटश्च (उ० ३,१०)'—इति न-प्रत्ययः इकारस्यान्त्यादेशः, गुणः, धयन्ति तामिति धेना। पानमत्र स्वीकारः। यद्वा; आस्वादः। धीयते पीयते आस्वाद्यते वानेन, धयन्ति प्राणमिति वा धेना। तथाच—'तं माता रेळ्हि स उ रेळ्हि मातरम्'—इति श्रुतिः (ऋ०सं०८,६,१६,४)। यद्वा; 'धिवि: प्रीणनार्थः (भू० प०)' बाहुलकात् न-प्रत्ययो नकार-वकारयोर्लोपश्च, गुणः, धेना। प्रीणयति हि वाक् सुष्ठु प्रयुक्ता। 'धेना वाक् प्रीणनाद्धि वा'—इति माधवः। "धेना जिगाति दाशुषे (ऋ०सं०१,१,३,३)"—"जनानां धेना अवचाकशद्वृषा (ऋ०सं०७,८,२५,१)"—इति च निगमौ॥

(४०) ग्नाः‡। गमेर्धातोः (भू०प०) 'धापृवस्यज्यतिभ्यो नः (उ० ३,६)'—इति बाहुलकात् न-प्रत्ययो भवति टि-लोपश्च।

* निघ० १, ११। † निघ० १, १०।
‡ निघ० १, ११. १०, ४०. ११, ६६।

टाप् (४,१,४)। गत्यर्था बुध्यर्थाः। जानन्ति काममिति ग्नाः। यद्वा; गच्छति यज्ञेष्वभूत्। 'अभि यज्ञं गृणीहि नो ग्नावः (१,१,२८,३)' इत्यत्र 'छन्दांसि वै ग्नाः'—इति ब्राह्मणम्'—इति माधवः। * * *। तस्मात् छन्दसां गायत्र्यादीनां वाग्रूपत्वात् ग्ना-व्यपदेशः। निगमोऽन्वेषणीयः* ॥

(४१) विपा। 'विप् प्रेरणे (चु० प०)'। सम्पदादित्वात् (३.३,९४वा०) क्विप्। तृतीयैकवचनम्। प्रेर्यते मनसा विपा। 'मनसा वा इषिता वाग्वदति (ऐ० ब्रा० २,१५)'—इति ब्राह्मणम्। "वरुणाय विपा गिरा (ऋ० मं० ४,४,६,१)"—इति निगमः। गिरेति पदं निरुक्त्या योजनीयम्॥

(४२) नग्ना। न गच्छति पितृकुलात् बाल्यात्, अनावरणापि न गच्छति लज्जामिति वा। 'नग्निकाऽनागतार्त्तवा'—इत्यमरः (२,६,८)। नग्ना कन्या। ग्ना-शब्दः पूर्वमेव निरुक्तः, इह न-पूर्वः। नायं नञ्, किन्तु प्रतिषेधार्थोऽयं निपातः, अतो 'न लोपो नञः (६,३,७३)'-इति न भवति। * * *। "नना"—इति केचित्। नमते न-प्रत्ययो बाहुलकान्मकारलोपश्च। नमयत्यनर्थेति नना। निगमोऽन्वेषणीयः॥

(४३) कशा†। 'काशृ दीप्तौ (भ्वा० आ०)'। अन्तर्णीतण्यर्थः। पचाद्यच् (३,१,१३४)। आकारस्य ह्रस्वत्वं छान्दसम्। प्रकाशयत्यर्थान्। यद्वा; खेशया मतो वर्णव्यत्ययादिना कशा; वागेव मुखात्

* एष एव निगमः—'ऊधर्मे नग्ना आरभे (ऋ० मं० ५,७,१८,९)'—इति। 'अपि च नग्नाः, ग्नाः छन्दांसि'—इति तत्र भाष्यव्याख्या।

† निघ० ९,१९।

काशते तत उपलब्धेः । यद्वा; 'कश शब्दे (भू० प)'। अत्र शब्दायते कशा। यद्वा; 'कश गतौ (भू० प०)'; अच् (३,१, ११४)। गच्छति गन्तव्यम्। "या वां कशा मधुमती (१,२,४,३)"—इति निगमः॥

(४४) धिषणा* । धार्य्यत्यर्थमिति· धीः बुद्धिः। धारयति कर्त्तारं फलप्रदानेनेति धीः कर्म्मबुद्धिः कर्म वा । मनोति सम्भजते इति मनोतेः (षणु त० उ०) पचाद्यचि (३,१,१३४), पृषोदरादित्वात् (६,३,१०९) पूर्वपदह्रस्वत्वे च धिषणा। यद्वा; 'ञि धृषा प्रागल्भ्ये (स्वा० प०)' । 'धृषधिष् च सञ्ज्ञायाम् (उ० २,८०)'—इति क्यु-प्रत्ययो धिषादेशश्च धिषणा। प्रगल्भसमर्था रचितुं जगद् वर्ष-प्रदानेनेत्यर्थः । यद्वा; 'दिधिषामि दिव्यैः (ऋ० मं० २,७,१३,१२)' —इत्यत्र स्कन्दस्वामिना पठितात् 'धिषि धारणे'—इत्यस्मात् 'धिष शब्दे† (जु० प०)'—इति धातुपाठपठिताद्वा बाहुलकात् क्युप्रत्ययो धिषणा वाचि स्वाभिधेयं धारयति सम्बन्धस्य नित्यत्वात् । शब्दायते वा मेघे अधिश्रिता 'मिमाति मायुं धिषणावधि श्रिता (ऋ० मं० २,६,१८,३)'—इति श्रुतिः। "आपश्च मित्रं धिषणा च साधन् (ऋ० मं० १,७,२,१)"—इति निगमः।

(४५) नौः‡ । 'नुद प्रेरणे (तु० उ०)'; 'ग्लानुदिभ्यां डौ (उ० २,६०)'—इति डौ-प्रत्ययः। नुद्यते प्रेर्यते मूलाधारादिस्थानेभ्यः प्राणेन। नमतेर्वा (भू० प०) बाहुलकात् (३,३,१) डौ, नम्यते वा देवतात्वात्। "सुतर्माणमधिनावं रुहेमेति यज्ञो वै सुतर्मा नौः

* निघ० ८, १ । प० १, १० ।
† 'अयं धारणार्थोऽपि'—इति सायणः (ऋ० मं० २,७,१५,२.) ।
‡ निघ० ५, २१ ।

कृष्णाजिनं वै सुतर्मा नौ वाग्वै सुतर्मा नौः (ऐ० ब्रा० १,३,२)"—इति ब्राह्मणम्, "समितो नाव्यातम् (ऋ० सं० ८,७,२२,४)"—इति च निगमौ॥

(४६) अक्षरम्*। 'अशूङ् व्याप्तौ (स्वा० आ०)'; 'अश भोजने (क्र्या०प०)'। 'अशेः सरन्†,(उ० ३,६७)'—इति सरन् प्रत्ययः, व्रश्चादिना (८,२,३६) षत्वम्, 'षढोः कः सि (८,२,४१)'। अश्नुते श्रोतृं स्वाभिधेयम्, व्याप्नोति वा अश्नाति वा हविः। अक्षेर्वा (कृ०प०) बाहुलकात् सरन् नकार-लोपश्च। 'खरि च (८,४,५५)'—इति चर्त्वम्। अनक्ति सञ्चयति सेचयति वर्षेण भूमिम्। यद्वा; नञ्-पूर्वात् क्षरतेः (भ्व०प०) पचाद्यच् (३,१,१३४)। न क्षरति, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। 'वाग्वै समुद्रो न वै वाक् क्षीयते'—इति (ऐ०ब्रा०५,३,१) ब्राह्मणम्। "अक्षरेण प्रति मिम एताम् (ऋ० सं० ७,६,१३,३)"—इति निगमः। 'वाचा विरूपनित्यया'—इत्यर्थं माधवोऽवादीत्। "उपाक्षरा सहस्रिणी (ऋ० सं० ५,२,१८,४)"—इति च निगमः॥

(४७) मही‡। व्युत्पादिता पृथिवीनामसु (१,१२)। मह्यते पूज्यतेऽनया देवता इति वा। "अमात्रं त्वा धिषणा तित्विषे मही (ऋ० सं० १,७,१५,२)"—इत्यत्र वाङ्नामत्वमपि युज्यते॥

(४८) अदितिः§। व्युत्पादिता पृथिवीनामसु (१,१४)। अदीना, सर्वदा सर्वैः प्रयुज्यमानापि न क्षीयतइत्यर्थः। "अनागसो अदितये स्याम (ऋ० सं० १,२,१५,५)"—इति निगमः॥

---

* प०१२। निव०११,४१। † 'सरः'—इति मूलपाठः। ‡ निव०११,९।
§ प० १,११. ३, ३०. ४, १. ५, ५। निव० ७, २१. ११, २२।

(४९) शची* । अत्र चीरस्वामी—'शच श्वच गतौ' । शचतीति तु धातुपाठे गत्यर्थो न दृष्टः । 'शच व्यक्तायां वाचि (भू० आ०)'; 'इन् सर्वधातुभ्यः (उ० ४ पा० ११४)। 'कृदिकारात् (४,१,४५ वा०)' —इति ङीष्। शचते गच्छति यज्ञम्, शच्यते गम्यते ज्ञायतेऽनयाऽर्थः, शचते व्यक्तां वाचं करोतीति वा। "शचीभिर्दन्त उत दक्षिणाभिर्निर्जिह्मायन्त्यो नरकं पताम (निरु० १,११)"—इति निगमः ॥

(५०) वाक्† । निरुक्ता पूर्वमेव (पृ० ७५) । "यद्वाग् वदन्त्यविचेतनानि (ऋ० सं० ६,७,५,४)"—इति निगमः ॥

(५१) अनुष्टुप्‡ । स्तोभतिर्वृद्ध्यर्थः (भू० आ०)। क्विप्। अनुपूर्वेण क्रमेण, पूर्वमकारात्मना ततः स्पर्शादिभिर्व्यज्यमाना वर्द्धते। तथाचोपनिषत्—'अकारो वै सर्वा वाक् सैव स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा 'परा' 'पश्यन्ती' 'मध्यमा' 'वैखरी' इति। तथाच 'विश्वरूपं वक्ति वाक् तावकं वपुः'—इति संवित्प्रकाशे वामनदत्तः। 'ध्वनिः वर्णः पदं वाक्यमित्यास्पदचतुष्टयम्। यस्याः सूक्ष्मादिरूपेण वाग्देवीं ता मुपास्महे'—इति श्रीभोजदेवः§। "अतिस्तुतिषु चत्वारि वाक्-परिमितानि पदानि (निरु० १३,९)'—इत्यत्र निरुक्त्या एव वा वृद्धिः प्रतिपादिता। यद्वा; पूर्वं पश्चाक्षरात्मना ततो गद्यपद्यादिरूपेण वर्द्धते। तथाहि—'परिमिता वर्णा अपरिमिता वाचो-गति माप्नुवन्ति'—इति भगवानाश्वलायनः। यद्वा; स्तोभति स्तौति-

* प० १, १. ३, ९। निघ० १, ११. १२, २०।
† प० ५, ५। निघ० २, ११. ८, २१ ११, ५०।
‡ निघ० ७, १२।
§ भोजराजीय-व्याकरणस्य मङ्गलाचरणमिदम्।

कर्मा (निघ० ३,१४)। आनुपूर्व्येण स्तौति देवता:। "अनुष्टुभ मनु च चर्य्यमाणमिन्द्रम् (ऋ० सं० ८,७,१०,४)"—इति निगमः॥

(५२) धेनुः*। 'धेट् पाने (भू० पं०)'। 'धेट इच (उ० ३,३३)'—इति नु-प्रत्ययः, इकारोऽन्तादेशः। धयति ता मिति धेनुः, पीयते हि वा तत्प्रवृत्तवृष्टिद्वारेण, धेनुवद्दोग्ध्री सर्वकामान् इति वा। 'अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् (ऋ० सं० ८,२,२३,५)'—इति श्रुतिः। "गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः'—इति दण्डी। तथाचागमः—'एक शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति (शि० भा०)'—इति। "अभि सप्त धेनवः (ऋ० सं० ७.३,१६.५)"—"नेगुः सचन्त धेनवः (ऋ० सं० २,५,०६,५)"—इति च निगमौ॥

(५३) वल्गुः। 'वल संवरणे (भू० आ०)'। 'वल्गुक् च (उ० १,१८)'—इत्यु-प्रत्ययः। संवृणात्याच्छादयति जगत् व्याप्नोतीति यावत्। यद्वा; वल्गतिः शब्दार्थः (भू० प०), बाहुलकादु-प्रत्ययः। गर्जितादिलक्षणं शब्दं करोति वल्गुः। "अयं नाभा वदति वल्गु वो गृहे (ऋ० सं० ८,२,१,४)"—इति निगमः॥

(५४) गल्दा†। 'गल अदने' भौवादिः (प०)। गलनं पूरणं कामानां, गलः पूरणार्थः स्कन्दस्वामिनोक्तः, तद्ददाति। 'आतोऽनुपसर्गे कः (३,२,३), गल्दा। निगमोऽन्वेषणीयः॥

(५५) सरः‡। 'सृ गतौ (भू० प०)'; असुन् प्रत्ययः (उ० ४,

* प० ४,५। निरु० ११,४२।
† प० ४,२। निरु० ६,२४।
‡ प० १०। निरु० ४, ११. ९, २६।

१, ८४)। गत्यर्थाः बुद्ध्यर्थाः। मगति जानाति सर्वं देवतात्वात्, ज्ञायते वा विद्वद्भिः, मगति गच्छत्येव वाह्नता। "मगो न पर्णम् भितो वदन्तः (ऋ० सं० ५, ७, ४, २)"—इति निगमाः। अत्र प्रकरणात् स्तोत्रशस्त्रात्मिका वागुच्यते एवं माधव ऐच्छत्॥

(५६) सुपर्णी*। सुपर्णशब्दो रश्मिनामसु व्याख्यातः (१, ५)। 'पाककर्णपर्णपुष्पफलमूल (४, १, ६४)'—इत्यादिना ङीप्। निगमोऽन्वेषणीयः॥

(५७) बेकुरा†। 'भा दीप्तौ (अदा० प०)'; कान्तिं करोतीति किञ्चित् विगृह्य करोते रौणादिके क-प्रत्यये कृते 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'-'बहुलं छन्दसि (७, १, १०३)'—इति ऋकारस्यानोष्ठ्य-पूर्वस्यापि उकारो भकारस्य बकारेण आकारस्य एकारेण च व्युत्पत्तिश्छान्दसत्वात् बेकुरा दीप्तिकारिणी प्रयोक्तुः। "बेकुरानामासि जुष्टा (ता० म० ब्रा० १, १, ३)"—इति निगमः। छन्दोगानां सामकल्पे‡ पठितोऽयं मन्त्रः। 'व्यचे व्याप्तिकर्मणः बेकुरा'—इति भरतस्वामि-भाष्यम्॥

इति सप्तपञ्चाशत् वाङ्नामानि॥ ११॥

* पृ० ५। निघ० ७, ११।
† निघ० ६, २१।
‡ ताण्ड्यमहाब्राह्मणस्यापाध्यायचतुष्कं सामकल्प उच्यते।

अर्णः[१]। क्षोदः[२]। क्षद्म[३]। नभः[४]। अम्भः[५]। कबन्धम्[६]। सलिलम्[७]। वाः[८]। वनम्[९]। घृतम्[१०]। मधु[११]। पुरीषम्[१२]। पिप्पलम्[१३]। क्षीरम्[१४]। विषम्[१५]। रेतः[१६]। कशः[१७]। जन्म[१८]। बृबूकम्[१९]। बुसम्[२०]। तुग्र्या[२१]। बर्बुरम्[२२]। सुक्षेम[२३]। धरुणम्[२४]। सिरा[२५]। अररिन्दानि[२६]। ध्वस्मन्वत्[२७]। जामि[२८]। आयुधानि[२९]। क्षपः[३०]। अहिः[३१]। अक्षरम्[३२]। स्रोतः[३३]। तृप्तिः[३४]। रसः[३५]। उदकम्[३६]। प्रयः[३७]। सरः[३८]। भेषजम्[३९]। सहः[४०]। शवः[४१]। यहः[४२]। ओजः[४३]। सुखम्[४४]। क्षत्रम्[४५]। आवयाः[४६]। शुभम्[४७]। यादुः[४८]। भूतम्[४९]। भुवनम्[५०]। भविष्यत्[५१]। महत्[५२]। आपः[५३]। व्योम[५४]। यशः[५५]।

(३) "क्षद्मा" ख। "क्षद्मः" ग। "क्षद्म" च।

(६) "कवन्धम्" क-ङ-भिन्नेषु सर्वत्रैव, मुद्रिते ऋग्वेदसंहितापुस्तके चैकत्र (४, ९, १४, ७) दृश्यते ; परं टीकाकृत्सम्मतो विपर्ययः।

(१०) "घृतकम्" C. D. F।

(१८) "जन्म" C.। "जन्मा" ग. D. F।

(२२) "बर्बुरम्"—इतिपाठः टीकाकृत्सम्मतः। "बुबुरः"—इति ग. C. D. F पुस्तकेषु; एभ्योऽन्यत्र सर्वत्रैव "बर्बुरम्"—इति।

(२३) "सुक्षमा" ख। "सुक्षाम"—इत्यपि टीकाकृत्सम्मतः।

(२५) "सुरा" घ. ङ. टीकाकृत्सम्मतत्वात्प्राधान्येन। "सुरा" ख. F। "स्रुरा. ग।

(२६) "अररिदानि" ख. ग।

(२८) "जामिः ख. ग. D F। "जामिवत्"—इत्यपि टीकाकृत्सम्मतः।

(३०) "क्षपराः" ग। "क्षपरः" C. D. F।

(३७) "पयः"—इत्येव क.भिन्नेषु सर्वत्र, परं टीकाविपर्ययः। पृ० ७।

(४८) "यादः" ग. C. D. F।

(५१), (५२) एवमेवायमपूर्वो पाठः, टीकाकृतः सम्मतः, ग-पुस्तके च।

महः(५६)। सर्णीकम्(५७)। स्वृतीकम्(५८)। सतीनम्(५९)। गहनम्(६०)। गभीरम्(६१)। गम्भरम्(६२)। ईम्(६३)। अन्नम्(६४)। हविः(६५)। सद्म(६६)। सदनम्(६७)। ऋतम्(६८)। योनिः(६९)। ऋतस्य योनिः(७०)। सत्यम्(७१)। नीरम्(७२)। रयिः(७३)। सत्(७४)। पूर्णम्(७५)। सर्वम्(७६)। अक्षितम्(७७)। बर्हिः(७८)। नाम(७९)। सर्पिः(८०)। अपः(८१)। पवित्रम्(८२)। अमृतम्(८३)। इन्दुः(८४)। हेम(८५)। स्वः(८६)। सर्गाः(८७)। शम्बरम्(८८)। अभ्वम्(८९)। वपुः(९०)। अम्बु(९१)। तोयम्(९२)। तूयम्(९३)। कृपीटम्(९४)। शुक्रम्(९५)। तेजः(९६)। स्वधा(९७)। वारि(९८)। जलम्(९९)। जलाषम्(१००)। इदम्(१०१)। इत्येकशतमुदकनामानि* ॥ १२ ॥

---

(५७) "स्वर्णीकम्" क·ख·C·D·F पुस्तकेष्वप्येवमेव पाठः, परं टीकाविरोधादुपेक्ष्यः।

(५८) "सतीकम्"—इत्यपि टीकाकृत्सम्मतः। ग. C. D. F पुस्तकेषु तु "स्वृतीकम्"—इत्यस्य पुरस्तात् "सृतीकम्"—इति, परस्ताच्च "सतीकम्"—इति द्वे पदेऽधिके दृश्यते।

(५९) "सतिनम्" ख।

(६२) "गह्वरम्" ग. C. D. F। निघ० १५, ११।

(६३) इतोऽनन्तरं "कम्"—इत्यधिकम् ग. C. D. F। प० ९, ९। निघ० १, ९; १४. ४, १८. ६, ९५।

(७५) "पूर्णम्"—इति ख।

(८५) "हेमा" ख।

(९०) "अम्बु" C. D।

(९३) इदं न दृश्यते ग. C. D. F पुस्तकेषु।

(९४) "हपीटम्" ग. F। "क्षपीटम्" C. D।

(९५) "शुक्रम्" ख (भ्रमात्)।

(९७) इतोऽनन्तरम् "अम्बरम्"—इत्येतदधिकं ग. C. D. F पुस्तकेषु।

* "इत्युदकस्य" ग०।

'उदकनामान्युत्तराण्येकशतम् (निरु० २,२४)'—.

(१) अर्णः*। 'ऋ गतौ (भ्वा० प०)'। 'उदके नुट् च (उ० ४,१९२)'—इति अर्त्तेरसुन् प्रत्ययः। अर्यते तत् प्राणिभिरित्यर्थः। ऋच्छति निम्नं प्रदेशमिति वा अकारान्तोऽप्यर्णम्†। 'ऋ गतौ (क्र्या० प०)', पचाद्यच् (३,१,१३४)। ऋणाति गच्छति दिवो भूमिं वृषमाणम्। "सृजदर्णांस्यव यद्युधा (ऋ० मं० २,४,१६,४)"—"अग्ने दिवो अर्ण मच्छा जिगासि (ऋ० मं० ३,१,२२,३)"—इति निगमौ॥

(२) क्षोदः। 'क्षुदिर् सम्प्रेषणे' भौवादिः स्वरितेत्। असुन् (उ० ४,१८४)। क्षुद्यते क्षोदः। क्षुण्णं हि जलं पर्वतादिभ्यः शिला-दिष्वधःपतनात्। "नाना न क्षोदः प्रदिशः पृथिव्याः (ऋ० मं० ८,१,१८,१)"—"याभीरसाङ्क्षोदसोद्नः पिपिन्वथुः (ऋ० मं० १,७,३५,२)"—इति च निगमौ॥

(३) क्षद्म। 'क्षद स्थैर्ये (सौ०)'—इति स्कन्दस्वामी। 'क्षद गति-हिंसनयोः (सौ०)'—इति सुबोधिनीकारः। 'अन्येभ्योऽपि दृश्यते (३,२,७५)'—इति मनिन्। क्षदीति पिपासामदनिवर्त्तने। स्वकार्ये स्थिरं भवति जलाशयं व्याप्य स्थिरं भवतीति वा। तथाच 'स्थात्र-राद् गच्छामि'—इति श्रुतिः, गतावर्णमोरसमित्यर्थः। हिनस्ति पिपासा मुष्णं वा अतीप्सितं वा पुरुषम्। "क्षद्मेवाथेषु तर्त्तरीथ उग्रा (ऋ० मं० ८,६,२,२)"—इति निगमः॥

* प० १७. २,१४। † निघ० ११,२०। ‡ प० १,७।

(४) नभः* । 'णह बन्धने (दि० उ०)'; 'नहेर्दिवि भश्च (उ० ४,२०५)'—इति विधीयमानोऽसुन् भकारादेशश्च बाहुलकादुदकेऽपि भवतः । नह्यते हि तन्मेघैर्दिवि भूमौ सेचादिभिः, नह्यति प्राणिनां मनांसीति वा । प्राणिनो हि यत्रोदकं विद्यते तत्रैव स्थातुं मनः कुर्वते ।° तथा—'स-मनसः खलु वै पशवोऽनावृतास्ते पशवो हि स-मनसः'—इति श्रुतिः । न न भातीति वा; एकस्य नञो लोपः इतरस्य न-लोपाभावः । भातेरसुनि टिलोपश्च बाहुलकात् । भात्येव स्वया दीप्त्या देवतात्वात् । यद्वा; नभ इव नभः । तथाम्बरनिर्वचने 'अम्बुवद्राजते'-इत्यादिना ग्रन्थेन (२५पृ०) आकाशस्य जलसाम्य मुक्तम्, साम्यस्योभयनिष्ठत्वात् अत्र जलमप्याकाशसदृशमित्युच्यते । "मदच्युतमौशानं नभोजाम् (ऋ०सं० ७,७,२५,४)" —"नभोवसानः परियास्यध्वरम् (ऋ०सं० ७,३,८,५)"—इति च निगमौ ॥

(५) अम्भः† । 'आप्लृ व्याप्तौ (स्वा०प०)' । उदके नुम्भौच (उ० ४,२०४), अत्रापो ह्रस्वोऽसुन्निति (उ० ४,२०२) च वर्त्तते । व्याप्नोति सर्वमम्भः । तथाचाथर्वणी श्रुतिः—'सर्वमिदमम्भः (अथ० ब्रा० ? )'—इति, 'आपो वा इदं सर्वम् (अथ०सं० ? )'—इत्यादिरनुवाकश्च । "अम्भः किमासीद् गहनं गभीरम् (ऋ०सं० ८,७,१७,१)"——इति निगमः ॥

(६) कवन्धम्‡ । बन्धिरनिभृतत्वे (निरु० १०,४), निभृतं चञ्चल

---

* पु० ४ । प० १, १० । निरु० २, १४ । † प० १, १० ।
‡ निरु० १०, ४ ।

मतोऽन्यदनिभृत मथस्थलम् तदनिभृतं, कवन्धः कमनीयश्च तद्बन्धं चेत्यर्थः। कमेर्डप्रत्यये कः, बन्धेः पचाद्यचि बन्धः इति निर्वाहः। यद्वा; कं सुखं बध्नाति स्नानपानादिना। कर्मण्यण्। बवयोरविशेषात् वकारः; कवन्धम्। "नीचीनबारं वरुणः कवन्धम् (ऋ० मं० ५,४, ३०,३)"—"अर्यमणो न मरुतः कवन्धिनः* (ऋ० मं० ५,३,१५, ३)"—इति च निगमौ ॥

(७) सलिलम्† । 'सल गतौ (भू० प०)'। 'सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् (उ० १,५४)। सलति गच्छति निम्नं देशं, गम्यते प्राणिभिरिति वा। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० मं० २,३,२२,१)"—इति निगमः ॥

(८) वाः‡। 'वृञ् वरणे (स्वा० उ०)'। स्वार्थिकोऽण् छान्दसः, तदन्तात् क्विप्, अणि लोपः, हल्ङ्यादिलोपः, रेफस्य विसर्जनीयः। वृतं हि तदिन्द्रेण। तथाच श्रुतिः—'अपकामं स्यन्दमाना अवीवरत वाह्निकम्'—इति। इन्द्रो दिवः शक्तिभिर्देवः तस्मादर्णमवो हितमिति। "वार्ण पथा रथ्येव स्वानीत् (ऋ० मं० २,५,२५,१)"—इति निगमः॥

(९) वनम्§। 'वन षण सम्भक्तौ (त० आ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'। वन्यते सेव्यते वनम्। "यथा वातो यथा वनम् (ऋ० मं० ४,४,२०,४)"—"सोमो विश्वान्यतसा वनानि (ऋ० मं० ८,४,१४,५)"—इति च निगमौ ॥

---

* कूलर-प्रकाशिते सभाष्यवेदसंहितापुस्तके तु 'कवन्धिनः'—इति पदमेव पाठः स्थितः; परमनुपदोक्त-'बवयोरविशेषाद् वकारः'—इत्युक्त्या देवराजमतमिदम्।

† प० २,१।

‡ प० ५,११.९,१।

§ पृ० ५।

(१०) घृतम्* । 'ग्ट घृ सेचने (भू०प०) । 'अञ्जिघृसिभ्यः क्तः (उ० ३,८९)'—इति क्त-प्रत्ययः । सेचयत्यनेन भूमिं वरुणः, सिञ्चत्यनेनेति वा । 'कृष्णं नियानं हरयः सुपर्णाः (ऋ०सं० १,२२,८,४७)'—इत्यत्र 'घृतमित्युदक नाम ·(निघ० १,१२) जिघर्त्तेः सिञ्चति-कर्मणः (निरु० ७,२४)'—इति भाष्यम् । यद्वा; 'घृ क्षरण-दीप्त्योः (जु०प०)' । गत्यर्थाकर्मकेत्यादिनाऽकर्मकत्वात् कर्त्तरि क्तः (३,४,७२) । जिघर्त्ति क्षरति मेघात् पर्वतादिभ्यो वा, दीप्यते वा स्वया दीप्त्या । "आदिद्घृतेन पृथिवी व्युद्यते (ऋ०मं० १,३,२३,१)"—इति निगमः ॥

(११) मधु† । मेघोदरवर्त्ति सलिलं मध्वित्युच्यते । तच्च पुनर्वैद्युतात्मना दह्यमानं मरः स्वर्णेन तद्गतेनैव वायुना ध्मायमानं धमति (भू०प०) । धमतिर्गतिकर्मा (निघ० २,१४) वा अन्तर्णीत-ण्यर्थो निःकासने द्रष्टव्यः निर्धाम्यते निःकास्यते हि तन्मेघात् । यद्वा; 'मद तृप्तौ (दि०प०)' । अस्माद्वाऽऽकुलकादु-प्रत्ययो धान्तादेशश्च । माद्यन्ति हि तेन पीतेन प्राणिनः । यद्वा ; मधुवत्स्वादुत्वात् मध्वित्युच्यते । इमानि स्कन्दस्वामि-निर्वचनानि । वैयाकरणपक्षे तु 'मन-ज्ञाने (दि०आ०)'—इति, अस्मात् निदिति (उ० १,९) वर्त्तमाने 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च (उ० १,१८)'—इत्यु-प्रत्ययो धोऽन्तादेशश्च । मन्यते अतिशयेन जनैः इति मधु । 'मननीयं मधु'—इति भट्टभास्करमिश्रः । "विद्वान् मध्व उज्जभारा दृशे कम् (ऋ०सं० ७,५,२३,५)"—इति निगमः ॥

---

* निघ० १, १. ७, १४. १०, १६ । † निघ० १, १. ४, ८. ८, ९. १०, ११ ।

(१२) पुरीषम्*। 'पॄ पालनपूरणयोः (जु०प०)'। 'पॄनृभ्यां किच्च (उ०४,२७)'—इति ईषन्-प्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७,१, १०२)'—इति उदूपरत्वम्। पूरयति जगत् प्रलयकाले, पूर्यतेऽनेन तड़ागादि, पालकं वा जगतः शस्योत्पत्ति-हेतुत्वात्। प्रीणातेर्वा (क्र्या०उ०) बाहुलकात् कीषन्-प्रत्ययः, ईकारस्योकारादेशः स च पकारात् परो द्रष्टव्यः। प्रीणाति जगत् पुरीषम्। "उद्यन्तमुद्रादुत वा पुरीषात् (ऋ०सं०२,३,११,१)"—इति निगमः॥

(१३) पिप्पलम्। 'पॄ पालनपूरणयोः (जु०प०)'। 'कल पृष्पादिभ्यः (? †)'—इति कल-प्रत्यये 'उदोष्ठ्य पूर्वस्य (७,१,१०२)' —इति 'बहुलञ्छन्दसि (७,१,१०३)'—इति बहुलवचनात् उत्वाभावे, बाहुलकत्वात् द्वित्वे, अभ्यासस्य उत्त्वे, 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)' 'बहुलञ्छन्दसि (३,४,७८)'—इतीत्वे, उत्तरस्य पकारस्य द्वित्वमृकारस्लोपश्चापि। पिपर्त्ति पिप्पलम्। पुरीषेण समानार्थम्। 'अपि स्रवते'—इति नैरुक्ताः'—इति क्षीरस्वामी। स्रवतेऽपि। 'प्रुङ् गतौ (भ्वा०आ०)'। गच्छत्यपि। अपिशब्दात् तिष्ठतीति च गम्यते। तथाहि—जलं नदीषु प्रवाहवत्वात् गच्छति निम्नं प्रदेशं वा। 'जलाशयादिषु तीरादिनिरुद्धत्वान्न क्वचिद् गच्छति'—इति माधवः। अपिवा स्रवतेर्गत्यर्थाद् ऊर्णातेर्ड-प्रत्ययो बाहुलकाद् भवति, टिलोपाभावो बाहुलकादेव। पकारस्य द्वित्वमकारोपजनश्च। 'वष्टि भागुरिरल्लोप मवाप्योरुपसर्गयोः (२,४,८२भा०)'—इत्यपि-शब्द-

---

* निघ० १, १२।

† कौमुद्याम् 'कलस्तृपश्च (उ०१,१०१)'—इति पाठः। तदानु 'वृषादिभ्यश्चित् (उ०१,१०२)'—इति कल-प्रत्ययेन भाव्यम्।

ख्याकारलोपः,. पिप्पलम्; पृषोदरादिः। "तयोरन्यः पिप्पलं स्वाद्वत्ति (ऋ० सं० २,३,१८,२)"—इति निगमः ॥

(१४) चीरम्*। 'घस्लृ अदने (भू० आ०)'। 'घसेश्चिच्च (उ० ४,३३)'—इति ईरन् प्रत्ययः, चकारात् किदिति अनुवर्त्तते,† कित्वात् 'गमहनजन (६,४,९८)'—इत्युपधालोपः, 'खरि च (८,४,५५)'—इति चर्त्वं घकारस्य ककारः, 'शासिवसिघसीनाञ्च (८,३,६०)'—इति षत्वम्। अदन्ति तदिति चीरम्। 'चर गत्यभक्षणयोः' 'चर गत्यभक्षणयोः (भू० प०)'—इत्यस्माद् बाहुलकात् डीरन्-प्रत्ययः टि-लोपश्च। चरति हि तत् मेघात्। "चीरेण स्नातः कुयवस्य योषे (ऋ० सं० १,७,१८,३)"—इति निगमः ॥

(१५) विषम्‡। 'विष्लृ व्याप्तौ (जु० उ०)'। 'विषेर्व्याप्तिकर्मणि (?)'—इति क-प्रत्ययः। वेवेष्टि व्याप्नोति सर्वं विषम्। यद्वा; विपूर्वात् 'ष्णा शौचे (अदा० प०)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३,२,१०,१)'—इति जनेर्विधीयमानो ड-प्रत्ययो बाहुलकात् भवति, णकारलोपोऽपि बाहुलकादेव। विशेषेण स्नात्यनेनेति विषम्, तद्धि प्रथमं शौचसाधनम्। विपूर्वात् सचतेर्वा पूर्ववत् ड-प्रत्ययः। तद्धि स्नानपानावगाहनार्थिभिः सेव्यते। "जातं विश्वाचो अहतं विषेण (ऋ० सं० १,८,१६,१)"—"केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह" "कुश्य १ स्मिं केशी विषम् (ऋ० सं० ८,७,२४,१)"—इति च निगमौ ॥

* निघ० १,५।

† 'घसेः किच्च'—इत्येव पाठो दृश्यते कौमुद्याम्।

‡ निघ० ११, ४२. १२, २१।

(१६) रेतः। 'रि रीङ् स्रवणे' दैवादिकः (आ०)। 'स्रुरीभ्यां तुट् च (उ० ४,१९७)'—इत्यसुन्-प्रत्ययो तुडागमश्च गुणः। रीयते स्रवति रेतः। यद्वा; वृष्टिलक्षणानामपां देवानां रेतस्त्वादूत उच्यते तथाचोपनिषत्—'देवानां रेतो वर्षम्'—इति। "अस्मे रेतः सिञ्चत' यन्मनु र्हितम् (ऋ० सं० ५,१,१४,२)"—"सप्तार्द्धगर्भा भुवनस्य रेतः (ऋ० सं० २,३,२१,१)"—इति निगमौ॥

(१७) कशः। 'कश गतौ (भ्वा० प०)', 'कश शब्दे (भ्वा० प०)'। उभयोरसुन् (उ० ४,१८४)। कशति गच्छति निम्नं प्रदेशम्, मेघेभ्यः पतत् शब्दं करोतीति वा कशः। "याभिर्महामतिथिग्वं कशो जुवम् (ऋ० सं० १,७,३५,४)"—इति निगमः॥

(१८) जन्म*। 'जनी प्रादुर्भावे (दि० आ०)'। 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति मनिन्, औणादिको वा (उ० ४, १४०)। जायते सृष्टिकाले स्वकारणात्। 'अग्नेरापः (तै० उ०)'—इत्युपनिषत्। जायन्ते वास्मिन् जलचारिणो मत्स्यादयः। निगमोऽन्वेषणीयः॥

(१९) वृबूकम्†। ब्रवीतेः शब्दार्थात् (अदा० उ०), भ्रंशतेर्वाधः-पतनार्थात् (भ्वा० आ०); उभाभ्यां समुदिताभ्यां वा 'उलूकादयश्च (उ० ४,४०)'—इति ऊक-प्रत्ययं निपातनाद्रूपसिद्धिः। 'ऊक-प्रत्यये धातुद्वयस्य वृबूभावः'—इति श्रीनिवासः। क्रमेणार्थः—तद्धि विपतत् साध्याकारं शब्दं करोति, भ्रश्यति दिवोऽनावरणत्वात्; मेघेभ्यो

* निरु० ११, १९. १९, १९।  † निरु० २, २१।

भ्रश्यति ग्रन्त्रश्चेति "द्दा इर्ब्रूकं वहतः पुरीषम् (ऋ०मं० ७,७, १९,३)"—इति निगमः ॥

(२०) बुसम्* । विपूर्वात् स्यातेः (अदा०प०) 'आतश्चोपसर्गे (३,३,१०६)'—इति क-प्रत्यये उपसर्गैकारस्योकारो बाहुलकाद् भवति, धातोर्णकारलोपोऽपि बाहुलकादेव । विशेषेण ख्यात्यनेनेति बुसम्† । तद्धि प्रथमं शोषसाधनम् । भ्रंशतेर्वा पचाद्यचि (३,१, १३४), पृषोदरादित्वादूहनीयं रूपम् । पूर्ववदर्थः । यद्वा; 'बुस उत्सर्गे (दि०प०)' । 'गेहे कः (३,१,१४४)'—इति बाहुलकाद-स्मादपि भवति । बुस्यते उत्सृज्यते मेघैरिति बुसम् । "आविः स्वः कृणुते गूहते बुसम् (ऋ०मं० ७,७,१९,४)"—इति निगमः ॥

(२१) तुग्र्या । तुजतिर्हिंसायाम् (भ्वा०प०) । 'क्विप् च (३, २,७६)'—इति क्विप् । तुजन्ति हिंसन्ति तम औष्ण्येन जनानिति वा तुजो रश्मयः । तद्वान् तुग्र्यः । रोमत्वर्थीयोऽतिशायने । तुग्र आदित्यः, तत्र भवा तुग्र्या । 'भवे छन्दसि (४,४,११०)'—इति यत् । 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'—इति मनुः (३अ०७६श्लो०) । यद्वा; तुग्रशब्देन ग्रीष्म उच्यते, अतिशयेना-दित्यकिरणवान् हि ग्रीष्मकालः । 'तत्र साधुः (४,४,९८)'—इति यत् । तुग्र्या । 'अन्याकाशयज्ञवरिष्ठेषु तुग्रशब्दः'—इति वृत्तिकारः । तत्र भवे इत्यर्थे 'तुग्राद् घन् (४,४,११५)'—इति घन्-प्रत्यये प्राप्ते व्यत्ययेन 'भवे छन्दसि (४,४,११०)'—इति यत् । 'तुग्र्या आपः'—'तुग्र्यमुदकम्' उभयमपि दृश्यते । 'अग्नेरापः (तै०उ०)'—इत्यपां

* नि०ब० ५, १९ । † वयमेतद्विशेषसूत्रमेव पुरस्तात् (१०० पृ०) ।

कारणत्वेन अग्नेः श्रुतत्वात्, अग्ने र्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः (मु० उ० २,५)—इति क्रमेण वा आकाशे वृष्टि-लक्षणेनापां विद्यमानत्वात्, यज्ञस्यापि 'अग्नौ प्रास्ताहुतिः सम्यगा-दित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः'—इति (मनुः ३ अ० ७६ श्लो०) पारम्पर्येण वृष्टिहेतुत्वात्। सर्वैश्वर्यवत्तया वसिष्ठ इन्द्रो विवक्षितः, वृष्टिप्रदानाच्च; तस्मात् तत्र भव इत्येषोऽर्थः सर्वत्र यथाकथञ्चित् वक्तुं शक्यते। "आत्रः शमं वृषभं तुग्र्यासु (ऋ० सं० १,३,३,५)"—"उत यस्तुग्र्ये सचा (ऋ० सं० ६,२,४,५)"—इति च निगमौ॥

(२२) बुर्बुरम्। 'पॄ पालनपूरणयोः (जु० प०)'। 'गेहे कः (३,१,१४४)'—इति बाहुलकात् कः। 'उदोष्ठ्यपूर्वस्य (७,१,१०२)'। पुरम्। वपुषः शरीरस्य पूरकं पालकं वा वपुः पुरं सत्। पृषोदरादित्वात् (६,३,१०९) वकाराकारलोपेन पकारद्वयस्य बकारादेशो विसर्जनीयस्य रेफादेशेन बुर्बुरम्। बुर्बुरमस्मिन्नस्तीति वा मत्वर्थीयोऽकारः (५,२,१२७), बुर्बुरवत्। * * *। निगमोऽन्वेषणीयः॥

(२३) सुक्षेम। 'क्षि निवासगत्योः (तु० प०)', 'क्षि क्षये (भू० प०)'—इत्यस्माद्वा 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १,१३७) बाहुलकादभिधानलक्षणाद्वा। 'क्षिपिनकारस्येत्-सञ्ज्ञा न भवति'—इति उणादिवृत्तिः। क्षियन्ति निवसन्त्यनेन प्राणि-नः, गच्छन्त्यनेन पन्थानमिति वा, उपरिभागेन क्षीयते वा। यद्वा; पूर्वस्माद् धातुद्वयान्मनिनि रूपसिद्धिः। 'सुक्षोम'—इति माधवः

पठति, निगमस्तदर्शनान्निर्णेयः । 'वृष्टी त्वा क्षेमाय त्वा (य० ? )'—इत्यत्र क्षेमशब्द उदकनामापि भवितुमर्हति ॥

(२४) धरुणम्*। 'धृञ् धारणे (भ्वा० उ०)'। 'हेतुमति च (३,१,२६)'-इति णिच्। धारेर्णिलुक् क्युन् प्रत्ययः। धारयति जगत् धरुणम् । "पृथ्वी विमर्गे धरुणेषु तस्थौ (ऋ० सं० ७,५,३३,६)"—"धीरा इच्छेकुर्धरुणेष्वारभम् (ऋ० सं० ७,१,१९,३)"—इति निगमौ ॥

(२५) सिरा†। 'सृ गतौ (भ्वा० प०)' पचाद्यचि (३,१,१३४) टाप् (४,१,४), सरा; अकारस्येकारो व्यत्ययेन (३,१,८५)। "वृत्र माशयानं सिरासु (ऋ० सं० १,८,२६,१)"-इति निगमः। 'सरणशीलास्वप्सु'—इति माधवभाष्यम् । 'सुरा'—इति केचित् पठन्ति। 'षुञ् अभिषवे (स्वा० उ०)'; 'अभिषवः क्लेदनम्'—इति तद्वृत्तिः। 'षु प्रसवे' भ्वादिरदादिश्च (प०)। 'सुसूधाञ्गृधिभ्यः क्रन् (उ० २,२३)'—इति क्रन्-प्रत्ययः । सुनोति क्लेदयति भूमिमिति। प्रसौति अनुजानाति सस्याद्युत्पत्तिं स्वसत्तया, सूयते वा परेषां स्वामिनां विनियोगाय। यद्वा ; 'सुर ऐश्वर्ये' तुदादिः (प०)। सुरति ईश्वरं भवति जगत् कर्त्तुं समर्थो भवतीत्यर्थः । निगमोऽन्वेषणीयः ॥

(२६) अररिन्दानि। 'रा दाने (अदा० प०)'। 'आदृगमहनजनः कि-किनौ लिट् च (३,२,१७१)'—इति कि-प्रत्ययः । लिड्वद्भावात् द्विर्वचनादिः । ररिर्दाता। ररिर्यस्य न विद्यते तदररि,

* निघ० १२, १० ।　　† 'सुरा' निघ० १, ४; ११

अन्यैरदत्तमित्यर्थः। तद्ददाति 'आतोऽनुपसर्गे कः (३,२,३)' अर-रिदम्। नकार उपजनः अरविन्दम्। अथवा 'कृत्यल्युटो बहुलम् (३,४,११३)'—इति कर्मणि किर्भवति। ररि = दत्तम्, न ररि अररि = अदत्तम् पृथिव्यादिभिः; किन्तत्? सुखम्। अररि ददातीति पूर्ववत्। उदकेन यद्दीयते सुखादिकं तद्धान्यैः पृथिव्या-दिभिः दातुमशक्यत्वाददत्तमित्युच्यते। "अधारयदररिन्दानि सुक्रतुः (ऋ० मं० २,२,४,५)"—इति निगमः। अत्र 'अदत्तदानमुदकैः'—इति माधवनिर्वचनानुक्रमणी॥

(२७) ध्वस्मन्वत्। 'ध्वंस् गतौ च (भू० आ०)'। चकारादधः-पतनेऽपि। औणादिको मनिन् भावे (उ० ४,१४०)। बाहुल-काद्-लोपः (१,३,१)। ध्वस्म ध्वंसनं मेघेभ्यः पर्वतादिभ्यो वा अधः-पतनं निम्नप्रदेशगमनम्। जलार्थिकर्तृकं वा गमन मस्यास्तीति मतुप्; 'अनो नुट् च (८,२,१६)'—इति मतुपो नुडागमः, नुटो ऽसिद्धत्वात् (८,२,१) तस्य च वत्वं भवति (८,२,९)। 'ध्वस्मन्वत् स्यात् ध्वंसनवत्'—इति माधवनिर्वचनानुक्रमणी। "सं त्वा ध्वस्म-न्वदभ्येतु पाथः (ऋ० सं० ४,५,१९,२)"—इति निगमः। माधवस्तु 'समभ्येतु त्वां मदीये वर्धमानं ध्वंसनक्रियायुक्तमन्नं वचनं स्पृहणीयं सहस्रसङ्ख्याकम्'—इत्यभाषयत्*॥

(२८) जामि†। जामेर्गतिकर्मणो (निघ० २,१४) 'वमिवपिय-जि (उ० ४,१२१)'—इत्यादिना विहित इञ् बाहुलकाद् भवति।

* नैष पाठो यथाश्रुतः साधवीयः।
† ५० १, ५. ४, १। निरु० १, ४; ६. ४, १०. १०, ११।

जर्मति गच्छति निम्नं प्रदेशं, गम्यते वा जलार्थिभिः । यद्वा ; 'जनी प्रादुर्भावे (दि० आ०)' । अस्मात् 'जनिघसिभ्यामिण् (उ० १, २ ६)' —इति इण् प्रत्ययो बाहुलकान्नकारादेशश्च दीर्घः (३, ३, १) । जायतेऽस्मात् पृथिव्यादि, जायते वा स्वकारणात् 'अग्नेरापः अद्भ्यः पृथिवीति (तै० उ०)' श्रुतेः । "जामिवत्"—इत्यन्ये पठन्ति । निगमदर्शनान्निर्णयः ॥

(२८) आयुधानि* । 'युध सम्प्रहारे (दि० आ०)' । 'घञर्थे क-विधानम् (३, ३, ५८वा०)'—इति कः । आयुध्यत्यनेनेत्यायुधम् । यद्वा ; 'इगुपधज्ञाप्रीकिरः कः (३, १, १ ३ ५)'—इति कर्त्तरि कः । आयुध्यते सम्प्रहरति रक्षांसि । जमि आयुधानि । "इन्द्रे सन्तिष्ठ जनयायुधानि (ऋ० सं० ७, ४, ८, २)"—"जामि ब्रुवाण आयुधानि वेति (ऋ० सं० ७, ६, ४, २)"—इति च निगमौ ॥

(३०) चपः । 'चप प्रेरणे (चु० प०)' । कथादिष्वपठितोऽपि 'बहुलमेतन्निदर्शनम् (चु० ग० सू०)'—इत्यस्योदाहरणत्वेन† धातु-वृत्तौ पठ्यते । असुनि णिलोपः । चिपयति प्रेरयति नाशयति पिपासाम् । "चपो जिन्वन्तः पृषतीभि र्ऋष्टिभिः (ऋ० सं० १, ५, ७, ३)"—इति निगमः ॥

(३१) अहिः‡ । मेघनामसु निरुक्तम् (१, १०) । गच्छन्ति निम्नं प्रदेशम्, आभिमुख्येन हन्ति तापम्, अहिंसकं वा प्राणिनाम् । "पृथिव्या

* मिव० १०, ६ ।
† कथादिचुरादेराकृतिगणः, अत सर्वे एवादन्ता धातवः पठिताः
‡ पु० १० ।

निरयोणा अद्रिम् (ऋ० सं० १,५,२८,१)"—इत्यत्र 'अय मृतगतौ (भू० प०), अन्तर्णीतण्यर्थः, निर्गमभूमौ पातनमुच्यते, अद्रिम् मेघं वृत्रमित्यर्थः'—इति स्कन्दस्वामिभाष्यम् । उदकं भवितुमर्हति । अन्वेषणीयो निगमः ॥

(३२) अक्षरम्* । निरुक्तं वाङ्नामसु (१,११)। व्याप्नोति जगत्, अश्यते भुज्यते वा प्राणिभिः, अनक्ति सेचयति भूमिं वा, न क्षरति क्षीयते कदाचिदपीति वा । "ततः क्षरत्यक्षरम् (ऋ० सं० २, ३,२२,२)"—इति निगमः ॥

(३३) स्रोतः । 'स्रु गतौ (भ्वा० प०)'। 'स्रुरीभ्यां तुट् च (उ० ४,१९७)'—इत्यसुन् । स्रवति निम्नं देशम् । "धन्वन् स्रोतः कृणुते गातु भूमिम् (ऋ० सं० १,७,२,५)"—इति निगमः ॥

(३४) तृप्तिः । 'तृप् प्रीणने (दि० प०)' । क्तिन् । यद्वा ; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३,३,१७४)'—इति क्तिच् । तृप्यन्ति हि देवतास्तेन तर्पिताः, तृप्यन्ति तेन पीतेन प्राणिन इति वा । तथाच श्रुतिः—'मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः' (अथ० सं० ३,१३,६) । निगमोऽन्वेषणीयः ॥

(३५) रसः† । रसतिः शब्दार्थः (भू० प०) । पचाद्यच् (३,१, १३४) । रसति हि तन्मेघपर्वतादिभ्यः पतत् । यद्वा ; 'रस आस्वादने (चु० प० अ०)' । 'पुंसि सञ्ज्ञायां घः (३,३,११८)' । रस्यते आस्वाद्यते जिह्वया लिह्यते इति रसः । यद्वा; रसोऽपां गुणः‡,

* पृ० ११ । † पृ० ११ ।
‡ 'आपश्चतुर्गुणा रसेन'—इति निरु० प० २, ४ ।

गुणगुणिनोरभेदोपचारेणाख्यायते; मत्वर्थीयस्य लुग् वा रसवान् रसः। यद्वा; रसतिरर्चतिकर्मा (३,१४), पचाद्यच् (३,१,१३४); अर्च्यते देवतात्वात्, अर्च्यतेऽनेन देवता इति वा। "आ त्वा विशन्त्विन्दवः (ऋ० सं० ६,६,१८,२)"—इति निगमः॥

(३६) उदकम्*। 'उदकञ्च (उ० २,३६)'—इत्युणादि-सूत्रेण उदकशब्दो निपात्यते। क्वुन्-प्रत्यये खनतेरुत्पूर्वस्य धातुलोपः। उत्खायते तद् वायुना विभज्यमानं कर्म, उत्खनति वा भूमिं स्वेन वेगेन कर्त्ता। उत्पूर्वस्य वाञ्चतेर्लोपः उदकमिति; उदञ्चतीत्युदकम्। "उदानिषुर्महीरिति तस्मादुदकमुच्यते (अथ० सं० ३,१३,४)"—इति, "समानमेतदुदकम् (ऋ० सं० २,३,२३,५)"—इति, "मण्डूका इवोदकान् (ऋ० सं० ८,८,२४,५)"—इति, "मण्डूका उदकादिव (ऋ० सं० ८,८,२४.५)"—इति च निगमाः।

(३७) प्रयः†। 'प्रीञ् तर्पणे (क्र्या० प०)'। असुन् (उ० ४,१८४)। तृप्यन्तेऽनेन देवताः। यद्वा; प्रपूर्वात् यमते (भ्वा० प०) रमुनि टिलोपो बाहुलकात्। प्रकर्षेण गच्छन्ति प्रयः। "आपो न द्वीपं दधति प्रयांसि (ऋ० सं० २,४,८,२)"—इति निगमः॥

(३८) सरः‡। 'सृ गतौ (भ्वा० प०)'। असुन् (उ० ४,१८४)। सरति स्रियते वा सरः। "साकं सरांसि त्रिंशतम् (ऋ० सं० ६,५,२८,४)"—इति निगमः॥

(३९) भेषजम्§। 'भिषज् चिकित्सायाम्' कण्ड्वादिः (प०)।

* निरु० १,२४। † प० ५,७। ‡ पु० ११।
§ प० ३,६। निरु० १०,७; २५।

पुंसि सञ्ज्ञायां घः (३,३,११८)। भिषज्यन्त्यनेन भेषजम्, 'अन्नात्मयेतिह भेषजात्'—इति निर्देशात् साधु। "आप इद्वा उ भेषजीरापो (ऋ० सं० ८,७,२५,६)";—इति श्रुतिः। 'भेषं रोगं जयति'—इति दुर्गः। यद्वा; भेषजमस्मिन्नस्तीति भेषजम्। अर्श आदित्वादच् (५,२,१२७)। तथा "अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा (ऋ० सं० १,२,११,५)" इति श्रुतिः। निगमोऽन्वेषणीयः॥

(४०) सहः*। सहिरभिभवार्थः (दि० प०), अभिभवते उष्णमग्निं वा। यद्वा; सहो बलं (निघ० २,९), तदस्यास्तीति मत्वर्थीयस्य लुक् (१,४,१९वा०)। बलवत् हि बलम्। "सहदानुं पुरुहूत क्षियन्तं (ऋ० सं० ३,२,३,३)"—इति निगमः। मकारलोपश्छान्दसः॥

(४१) श्वः†। 'टु ओ श्वि गतिवृद्ध्योः (भू० प०)'। 'श्वः सम्प्रसारणञ्च (उ० ४,१८८)'—इत्यसुन्। श्वयति गच्छति वर्द्धते वा वर्षाकाले। श्वतेर्वा गतिकर्मणः (निघ० २,१४) असुन्। श्वति गच्छति श्वः। निगमोऽन्वेषणीयः। माधवेन स्वीये नामनिघण्टौ 'श्वः'—इत्येतन्नापाठि, 'शिवम्'-'शापम्' इत्येते पठिते। द्वितीयमाश्रमाश्रिताम् मातृषु प्रतीपं शपन्त्यो वदन्ति। शिवमिति सनिगमं दृष्टमपि भाषायामपि जलपर्यायत्वात् अत्र तत्पर्यायेन तस्य पाठे प्रयोजनं मन्दम्, शापमित्येतत्त्वत्यन्ताप्रसिद्धम् प्रायः पूर्वाचार्यैः समाम्नाये अपठितम्। अस्य च उदकनामत्वेनाप्रसिद्धत्वात्, श्वस्य

* प० १,९। निरु० ५,२५. ११,९।
† प० १,९। निरु० १०,२९; ११. ११, २१; १४. ११, २१।

ओजः सहः इत्याभ्यां सह प्रसिद्धपाठेऽस्य दृष्टत्वात्, प्रायोऽत्यसाम्याच्च लेखकैः प्रायेण अव इति लिखितमिति। अपन्त्यनेनेति आपम्। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। हस्ते ह्युदकमादाय अपन्ति मुनय इति श्रूयते॥

(४२) यहः*। यातं प्राप्तं पिपासितैः, हृतं च यज्ञे देवताभ्यः। अमुनि यातेर्ह्रयतेश्च द्विधातुजं रूपम्; पृषोदरादिः। (६,३,१०९) निगमोऽन्वेषणीयः॥

(४३) ओजः†। 'उब्ज आर्जवे (तु॰प॰)'। 'उब्जेर्बलोपश्च (उ॰४,१८१)'—इत्यसुन्, बाहुलकादुदकेऽपि भवति। उब्जते ऋजूपचे न्यग्भावार्थश्च। उब्जतेर्वा नैरुक्तधातोर्वृद्धिकर्मणोऽसुन् प्रत्ययः। उब्जत्यनेनेत्युक्तं। न्यग्भावयति वा स्ववेगेनानतप्रदेशं, वर्द्धते वा वर्षासु बलवद्वा। निगमोऽन्वेषणीयः॥

(४४) सुखम्‡। सुखावहत्वात् सुखम्। 'सुखं कस्मात्? सुहितं खेभ्यः निरु॰ ३,१३)'—इति भाष्ये स्कन्दस्वामी। सुष्ठु हितं खेभ्यः। नेयं हितयोगलक्षणा चतुर्थी (१,४,४४वा॰), इन्द्रियाणामचैतन्यात् सुखादिभिरसम्बन्धात्; अत इयं हेतौ पञ्चमी (२,३,२५), इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वात् उपपद्यते इन्द्रियाणां हेत्वर्थकयथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोगपदार्थान्तराध्याहारः। अतिशयेन हितं पुरुषस्य, खेभ्यः ख-हेतुकमित्यर्थः। हितं वा पुरुषे आत्मधर्मत्वात् सुखादीनां धर्माधिकरणत्वाच्च धर्मिणाम्। अथवा

* प॰ २,९।
† प॰ २,९। निरु॰ ६,८
‡ निरु॰ ९,१९।

खेभ्य इति चतुर्थ्येव; ख-शब्देन च आत्मा मनसा संयुज्यते मन इन्द्रियेणेति सम्बन्धिसम्बन्धात् पुरुष एवोच्यते इति यथाश्रुतसम्बन्धः। तथाचोपनिषत्—'वर्षः स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः'। क्षुराधाने अव्यवहितं स्यादित्युपलक्ष्य प्राणान्ते च प्राणानां भवतीति प्राणादिशब्दैस्तस्योह्यमिदं दर्शयति—'खं पुनः खनतेः (निरु॰ ३,३१)', उत्पुंवस्य उत्खनति विनाशयति, किम्? परत्र प्राप्तिमुखम्, कथम्? कायमुखवक्त्रसंधागमनात् इति मुखम्। निगमोऽन्वेषणीयः॥

(४५) क्षत्रम्*। 'क्षदिः सौत्रः'। 'क्षद् स्थैर्ये' इति स्कन्दस्वामी। माधवस्तु क्षदिः शक्लीकरणार्थो हिंसार्थश्च। 'क्षद् गतिहिंसनयोः'—इति सुबोधिनीकारः†। 'गुधृवीपचिवचियमि [मनि] सदिक्षदिभ्य त्रः (उ॰ ४,१६२)'। वर्षाव्यतिरिक्तेषु ऋतुषु सूर्यरश्मिभिराहृता आपो मेघेषु घनीभूताः पाषाणवत् स्थिरा भवन्ति; जलाशयं प्राप्य वा; अश्यते भुज्यते वा; अतिपातं श्लेष्मादि जनयित्वा प्राणिनो हिनस्ति वा; गच्छति निम्नं गम्यते वा तदर्थिभिः। यद्वा; क्षत्रशब्दो बलनाम। अर्श आद्यच् (५,२,१२७)। बलवद्धि जलम्। धननाम वा (निघ॰ २,१०), तद्धेतुत्वात्ताच्छब्द्यम्। क्षतादन्नवृष्टिकृतक्लेशात् त्रायन्ते इति वा क्षत-शब्दात् त्रायतेश्च क्षत्रम्, पृषोदरादिः (६,३,१०९)। "युवं नो येषु वरुण क्षत्रम् (ऋ॰सं॰ ४,४,२,६)"। दृढ़ बल मन्नं वेति माधवभाष्यम्। "उत द्यावापृथिवी क्षत्रमुरु

* प॰ २,१०।

† क्षद् संवरणेऽपि इति बोपदेवीयकविकल्पद्रुमे, यतो भवति क्षत्रेति

(ऋ० सं० ४,६,८,२)"—इत्यत्र च चत्रं धनमिति इष्टम्। उभयमप्युदकं भवितुमर्हति ॥

(४६) आवयाः। आङ् पूर्वात् 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु (अदा० प०)'—इत्यस्मात् 'इणस्वामिः (उ० ४,२१६)'—इति बाहुलकादामि-प्रत्ययः। उपसर्गस्य धात्वर्थानुवर्त्तकः आभिमुख्यार्थो वा; अस्यते वीयते आभिमुख्येन गम्यते इति वा आवयाः निगमोऽन्वेषणीयः ॥

(४७) शुभम्। 'शुभ दीप्तौ (भू० आ०)'। क्विप् प्रत्ययः। शोभते दीप्यते स्वेन तेजसा देवतात्वात्। द्वितीयैकवचनस्य प्रयोगो यथादृष्टम्। "शुभं पृत्तमिषमूर्जं वहन्त (५,१,१,४)"—"इषं जनाय वहथः शुभस्पती: (७,८,१८,४)"—"द्रवत्पाणी शुभस्पती (२,१,५,१)"—इति च निगमाः ॥

(४८) यादुः। 'या प्रापणे (अदा० प०)'। 'भृ-मृशीङ्तृचरित्सरितनिधनिमस्जिभ्य उः (उ० १,७)'—इति बाहुलकादुप्रत्ययो दुड़ागमश्च। याति निम्नं प्रदेशं यादुः। 'यादुः स्याद् गमनक्रियम्'—इति माधवः। तदानीमु-प्रत्ययो बाहुलकात्। "ददाति मह्यं यादुरी'—(ऋ० सं० २,१,११,६) इत्यत्र स्कन्दस्वामी—'यादुरित्युदकनाम, रोमलवर्थीयः'—इति ॥

(४९) भूतम्। 'भू सत्तायाम् (भू० प०)', निष्ठातकारः कर्त्तरि। पूर्वमेव सत् भूतम् प्रथमदृष्टत्वात्। 'अपएव ससर्जादौ तासु वीजमवासृजत् (१ अ० ८ श्लो०)'—इति मनुः। अथवा 'भू प्राप्तौ (वा आ०)'—इति धातुः। प्राप्यं पिपासितैः। यद्वा; पञ्चसु पृथिव्या-

दिषु महाभूतेष्वन्तर्भावात् भूतमित्युच्यते। 'मातान्तरिचं निर्भीयन्ते अस्मिन् भूतानि (२,८)'—इति निरुक्त एवोदाहरणम्। निगमोऽन्वेषणीयः॥

(५०) भुवनम्*। 'भू सत्तायाम् (भू० प०)'। 'भूसूधूभ्रस्जिभ्यश्छन्दसि (उ० २,७५)'—इति क्युन्-प्रत्ययः, उवङादेशः। भवन्त्यनेन सर्वे पदार्था इति भुवनम्। "य इमा विश्वा भुवनानि जुह्वत् (ऋ० सं० ८,३,१६.१)"—"इमा च विश्वा भुवनान्यस्य (ऋ० सं० २,३,२१,४)"—इति च निगमौ॥

(५१) भविष्यत्। भवतेरेव। 'लृट् शेषे च (३,३,१३)'—इति लृट्, 'लृटः सद्वा (३,३,१४)', 'स्यतासी लृलुटोः (३,१,३३)', इडागमः (७,२,३५)। जलं हि आगामिन्यपि काले विद्यते, प्रलयेऽपि जलत्वस्य नाशाभावात्। निगमोऽन्वेषणीयः॥

(५२) महत्†। 'मह पूजायाम्' भ्वादिः (प०), कथादिश्च (चु० अ०)। अस्मात् 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च (उ० २,७८)'—इति निपातनम्। महति महयति वा देवता मनेन पुरुषस्येति महत्, मह्यते वा देवतात्वात्। यद्वा; मानेन स्वगतेन परिमाणेन अन्यान् स्वस्मादूनप्रमाणान् पदार्थान् जहाति अतिक्रामति 'दशोत्तराण्यावरणानि सप्त'—इत्यत्र विष्णुपुराणे सर्वमहत्त्वं जलतत्त्वस्योक्तम्। मानशब्दाज्जहातेश्च पृषोदरादित्वाद्रूपसिद्धिः। "महत्त उल्बं स्थविरं तदासीत् (ऋ० सं० ८,१,१०,१)"—इति निगमः॥

* निघ० ३,११. ७,२४. ८,१४. १०,११; १४; ४६. १२,११।
† प० ३,३। निघ० ३,१३।

(५३) अपः*। एतदुक्तसमानार्थम्। * * *। तत्तैर्ताभिर्हि व्याप्तम्, आप्नोतेः सकर्मककर्मकत्वात्। तथाचाथर्वणिका श्रुतिः—आपो अग्रे विश्वमावन् (अथ० सं० ४,२,६)'—इति। यद्वा; कर्मणि क्विप्, इन्द्रेण आप्ता आपः, तदाप्नोतीन्द्रो वा। 'तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु ष्ठन (अथ० सं० ३,१३,२)'—इति श्रुतिः। "आपो हि ष्ठा मयोभुवः (७,४,५,१)"—इति निगमः॥

(५४) व्योम†। निरुक्तमन्तरिक्षनामसु (३)। व्यवति प्राणिनः संवृणोति भूमिमिति वा। निगमोऽन्वेषणीयः॥

(५५) यशः‡। 'अशू व्याप्तौ (स्वा० आ०)'—'अश भोजने (क्र्या० प०)'। 'अशेर्देवने युट् च (उ० ४,१८६)'—इत्येतस्माद् बाहुलकाद्दकेऽपि भवति। 'अशेर्युट् च'—इत्येव श्रीभोजदेवः। अश्नुते व्याप्नोति जगत्, अश्यते वा प्राणिभिः। "तिर्यग् बिलश्चमस ऊर्द्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम्। अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथ० सं० १०,२६,८)" —इति निगमः॥

(५६) महः। महदित्यनेन समानम्। असुन् प्रत्ययः (उ० ४,१८४)। "मह्ना जिनोषि महिनि (ऋ० सं० ४,४,२८,१)"—इति निगमः। 'महो अर्णः (ऋ० सं० १,१,६,३. निरु० ११,२७)' —इत्यत्र 'मह उदकनाम'—इति स्कन्दस्वामी। "महोभ्यः स्वाहा ( ? )"—इति च॥

(५७) सर्णीकम्। 'सृ गतौ (भ्व० प०)'। 'सर्त्तेर्नुम् च (उ० ४,

* पु० १। † पु० १। ‡ प० १.०.१०।

२३)'—इतीकन् प्रत्ययः। अधिकृतं कित्त्वम्, बाहुलकाच्च भवति, गुणः, धावति सर्त्तीकम्। "सलिलाय त्वा सर्त्तीकाय त्वा सतीकाय त्वा ( ? )"—इति निगमः॥

(५८) स्वृतीकम्। 'स्वृ शब्दोपतापयो (भ्वा०प०)', स्वरतिर्गत्यर्थः (निघ० २,१४), अर्चतिकर्मा च (निघ० ३,१५)। 'अलीकादयश्च (उ० ४,२५)'—इतीकन्-प्रत्ययान्तेषु द्रष्टव्यः, निपातनात्तुगागमः। शब्दं करोति, गच्छति, पूज्यन्तेऽनेन देवताः, पूज्यते वा स्वयं देवतात्वात् इति स्वृतीकम्। निगमोऽन्वेषणीयः॥ "सतीकम्" —इति केचित् पठन्ति। 'षद्लृ विशरणगत्यवसादनेषु (भ्वा०तु० प०)'—पूर्ववदीकन् (उ० ४,२५); दकारस्य तकारः। गच्छति अवसीदति कुल्यानि, अनेनेति वा। "सतीकाय त्वा ( ? )"—इति पूर्वमुक्तो निगमः। अत्र स-शब्देऽवग्रहकरणं पदकाराणामभिप्रायस्य वैचित्र्यात्* ॥

(५९) सतीनम्। पूर्ववत् सर्वम्; दकारस्य तकारोऽपि निपातनात्। यद्वा; सती शोभना असौ; सामर्थ्यान्माध्यमिका वाक्, सा ईना ईश्वरा अस्य तत् सतीनम्; 'सञ्ज्ञापूरण्योश्च (६,३,३८)' —इति पुम्वद्भावनिषेधः। "अयो सतीन कङ्कतः (ऋ०सं० २,५, १४,१)"—इति निगमः। "सतीन सत्वाहव्यो भरेषु (ऋ०सं० १,७,८,१)"—इति च॥

(६०) गहनम्†। 'गाहू विलोडने (भ्वा०आ०)'। 'युच् बहुलम् (उ० २,७४)'—इति युच् प्रत्ययः, बहुलवचनाद्ध्रस्वत्वम्। अवगा-

---

* पदकारैस्तु हि 'स। तीकाय' इत्येवमवगृह्यते इतीदम्। † प० १९. ६, १।

ह्यते प्राणिभिः गहनम् । "अम्भः किमासीद् गहनं गभीरम् (ऋ० सं० ८,७,१७,१)"—इति निगमः । अत्राम्भः गभीरमित्येते नि-रुक्तया योजनीये ॥

(६१) गभीरम्* । गमेर्धातोः 'गभीरगम्भीरौ (उ० ४,२४)'—इति नुगागम ईरन्-प्रत्ययो मकारलोपश्च निपात्यते । गच्छति यत्रेष्वाहतं वसतीवर्यादिरूपेण । "पथि दीने गभीर आँ (ऋ० सं० ६,४,५२,१)"—"न तं हन्ति स्रवतो गभीराः (ऋ० सं० ८, ६,५,४)"—इति च निगमौ ॥

(६२) गम्भरम् । 'कृदरादयश्च (उ० ५.४२)'—इत्यर-प्रत्ययान्तेषु द्रष्टव्यः । निपातनाद् गमेरन् भडागमश्च । पूर्ववदर्थः । यद्वा; 'ग्रह उपादाने (क्र्या० उ०)', पूर्ववदरन्, 'हृग्रहोर्भश्छन्दसि' (सि० कौ० वै० ३ अ०) । रेफस्य मकारो बाहुलकात् स चाकारात् परः । गृह्यते वसतीवर्यादित्वेन । "गम्भरेषु प्रतिष्ठाम् (ऋ० सं० ८,६,२, ४)"—इति निगमः ॥

(६३) ईम्† । अव्ययमिदम् । "त्रि यदस्मा अजंघनावेदं यथा (ऋ० सं० ४,३,१४,४)"—इति निगमः । बहुषु पाठेषु "कम्‡"—इति दृश्यते, तल्लिपिभ्रमतः । * * * अत ईमित्येव पठितव्यम् ॥

(६४) अन्नम्§ । 'अन प्राणने (अदा० प०)' । 'कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् (उ० ३,९)'—इति न-प्रत्ययः । अन्यते प्राप्यते प्रजाभिः; न हि कदाचिदपि जलेन विना जीवन्ति प्राणिनः 'अस्य

* पृ० ११ । † प० ४, २ । निघ० १, ९. ४, १९. ५, २८ ।
‡ प० ९. ६ । निघ० १, ९ ; १४. ४, १८. ६, २५ ।
§ निघ० १, ९ ।

शोषादयो रोगा भवन्ति यदभावतः। न हि तोयाद् विना वृत्तिः स्वस्थस्याप्यातुरस्य च"—इति वाग्भटः। अन्नेवां निम्नातकारः; अन्नाम्म इति निर्देशान् जम्भादेशाभावः, अद्यते स्म। अन्नहेतुत्वाद्वा अन्न मित्युच्यते। "हिरण्यदा . ददात्यन्नमस्मै (ऋ०सं२,७,१३,५)"—इति निगमः॥

(६५) हविः। 'हु दानादानयोः (जु०प०)'। 'अर्चिशुचि-हुसृपिछादिछर्दिभ्य इसिः (उ०२,१०१)'—इति इसि-प्रत्ययः। दीयते पिपासितेभ्यः, आदीयते वा जनैरुपभोगाय। अथवा हूयते देवतोद्देशेन, प्रक्षिप्यते वैश्वानरे हविरिदं जुहोमीत्यादि मन्त्रैः। "हुविर्षा जारो अपां पिपर्ति (ऋ०सं०१,३,३३,४)"—"विश्वक-र्मन् हविषा वावृधानः (ऋ०सं०८,३,१६,६)"—इति च निगमः॥

(६६) सद्म*। (६७) सदनम्†। 'षद्लृ विशरणगत्यवसादनेषु (भ्वा०तु०प०)'। पूर्वत्र, 'मनिन् (उ०४,१४०)'—इति मनिन् प्रत्ययः। उत्तरत्र, 'युच् बहुलम् (उ०२,७४)'—इति युच्। विशी-र्यते शिलादिषु पातात्, विशीर्यन्तेऽनेन क्षुधादय इति वा; गच्छति वागच्छति निम्नं, गम्यते वा प्राणिभिः; अवसादयति पिपासायुक्तं वा। 'हविर्हविष्मो महि सद्म दैव्यम् (ऋ०सं०७,३,८,५)" —इति निगमः॥

(६८) ऋतम्‡॥

* प० १, १० ७, ५; २०।
† निघ० ४, १० ७, २४. १२, ४१।
‡ प० १, १०; २५ १, ४. ४, १९. ४, ४. १, ११. ८, १; १९। निघ० १०, ५०।

(६८) योनिः*। 'यु मिश्रणे (अदा०प०)'। 'वह्निश्रियुद्रु-ग्लाहात्वरिभ्यो निः (उ०४,५१)'—इति नि-प्रत्ययः। युतं मितं सम्पृक्तं सर्वपदार्थैः। यद्वा; वेतेर्वकारस्य उकारः, स च ईकारात्परः यणादेशः, स एव प्रत्ययः। परिवीतं हि जलं वायुना सौरेण वा। यद्वा; योनिः कारणमन्नस्य। 'वृष्टेरन्नं ततः प्रजाः (मनुः ३,७६)'—इति हि स्मृतिः। "चरत् प्रियस्य योनिषु प्रियः सन् (ऋ०सं०८,७,७,५)"—"त्वचं पृश्नुन्त्युपरस्य योनौ (ऋ०सं० १,५,२७,३)"—इति च निगमौ ॥

(७०) ऋतस्य योनिः। यज्ञस्य योनिः; नह्युदकेन विना कश्चिदपि यज्ञः कर्त्तुं शक्यते, ऋतस्य आगामिनो वर्षजलस्य योनिर्वा,—आदित्यो भौमं रसं रश्मिनादत्ते पुनर्वर्षाकाले वर्षति; तथा—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः'—इत्युक्तम्। 'अस्य योनिर्भवति'—इति माधवः। "ऋतस्य योनि मा सदः (ऋ०सं०४,१,१३,४)"—"ऋतस्य योनागर्भे सुजातम् (ऋ०सं०१,५,८,२)"—इति निगमौ ॥

(७१) सत्यम्†। सत्सु भवम् 'भवेच्छन्दसि (४,४,११०)'—इति यत्। यद्वा; सत्सु साधुः 'तत्र साधुः (४,४,९८)'—इति यत्। सतोऽर्हमिति वा 'छन्दसि च (५,१,६७)'—इति यः। "विद्युदसिविद्यामयाज्ञानभृतात्सत्यमुपैति ( ? )"—"ऋतात् सत्यमुपागात् ( ? )"—इति च निगमौ ॥

* प० १, ४। निघ० १,८; १९।
† प० १, १०। निघ० १, १२. १, १२

(७२) नीरम्* । 'णीञ् प्रापणे (भ्वा० उ०)'। 'स्फायितञ्चिवञ्चि-शकि (उ० २,१३)'—इत्यादिना रक्-प्रत्ययः। नयति प्रापयति शुद्धिं नीयते वा पुरुषेण स्वाभिमतकार्यसम्पादनाय। निगमोऽन्वेषणीयः ॥

(७३) रयिः† । 'रीङ् गतौ (‡)'। 'अच इः (उ० ४,१३४)' —इति इ-प्रत्ययः, गुणः। रीयते गच्छति रयिः। यद्वा; रातेः (अदा० प०) इ-प्रत्यये बाहुलकात् युगागमो धातोर्ह्रस्वश्च। दीयते पिपासितेभ्यः। निगमोऽन्वेषणीयः ॥

(७४) सत्§ । 'अस भुवि (अदा० प०)'। लटः शतरि 'श्नसोरल्लोप. (६,४,१११)', सत्। सर्वदा विद्यमानं प्रलयेऽपि नाशा-भावात् 'सदसि भूयाः ( )'—इति निगमः॥

(७५) पूर्णम्। 'पॄ पालनपूरणयोः (जु० क्र्या० प०)'। निष्ठा-तकारः। 'उदोष्ठ्यपूर्वस्य (७,१,१०२)', 'हलि च (८,२,७७),' 'रदाभ्याम् (८,२,४२)'—इति निष्ठानत्वम्, 'रषाभ्यां नो णः (८,४,१)'—इति णत्वम्; पूर्णम्। रक्षितं सेत्वादिना, तदर्थिभिः पूरितं वा कटाहादिषु। यद्वा; 'पूरी आप्यायने' दिवादिचुरादिश्च। 'वा दान्तशान्तपूर्णदस्त (७,२,२७)'—इत्यादिना निपातितम् उपभोग-क्षीणं आप्यायितम्। "पूर्णं पूर्णेन सिच्यते (अथ० सं० १०,८,२९)" —इति निगमः॥

(७६) सर्वम्|| । 'सृ गतौ (भ्वा० प०)'। 'सर्वनिघृष्वरिष्वलष्वशिव-

* प० ३, ४। † प० १, १०। निघ० ४, १७।

‡ 'रीङ् स्रवणे' दिवादिः, 'री गतिरेषणयोः' क्र्यादिश्च दृश्यते; न तु 'रीङ् गतौ' क्वापि।

§ प० १, २९। निघ० ६, १०। || निघ० २, १४।

पट्वस्केभ्यो ऽतन्त्रे (उ० १,१५१)'—इति निपातितम् । अतन्त्रे अकर्त्तरीत्यर्थः । सृतमनेन । यद्वा ; बाहुलकात् कर्त्तरि भवति ; सर्वम् । उभयत्रापि पचाद्यच् (३,१,१३४) । हिनस्ति पिपासामुष्णं वा । 'सर्वमसि सर्वं मे भूयाः ( ? )'—इति निगमः ॥

(७७) अचितम्* । 'चि क्षये (भू० प०)' । भावे निष्ठातकारः । चितं क्षयः, स यस्य न विद्यते, तदचितम् । सर्वदा सर्वै रुपभुज्यमानमपि स्वमहत्तया उपर्य्युपरि वर्षणाद्वा क्षयरहितमित्यर्थः । चियः 'निष्ठायामण्यदर्थे । वाक्रोशदैन्ययोः (६.४,६०-६१)'—इति विहितो दीर्घः, अत्र च भावो ण्यदर्थः, तस्मात् स न भवति ; दीर्घाभावात् 'क्षियोदीर्घात् (८,२,४६)'—इति निष्ठानत्वमपि न भवति । "उत्समक्षितं व्यचन्ति (अथ० सं० ४,२७,२)"—"समानमर्थमक्षितम् (ऋ० सं० २,१,१८,५)"—"अक्षितमत्यै जुहोमि स्वाहा ( ? )"—इति च निगमाः ॥

(७८) बर्हिः† । निगमोऽन्वेष्यः । वृंहेर्नलोपश्च (उ० २,१०२)' —इत्यादिना पूर्ववत् साध्यम् ॥

(७९) नाम‡ । नमतेः (भू० प०), 'मनिम् (उ० ४,१४०)'—इति मनिन्-प्रत्यये धातोर्मलोपो दीर्घश्च निपात्यते§ । नम्यते पुरुषैर्देवतात्वात् । णिजन्ते वा निपातनम् । नमयति नदीतीरनिकट-

* निघ० ४, ११. ११. ११ ।
† पु० १. प० ४, २ । निघ० ८, ८ ।
‡ निघ० १, १२. ४, २५ ।
§ 'नामन्-सीमन् (उ०४,१४६)'—इत्यादिनेति साधनम् ।

वर्त्तिनो वेतसादीन्। अथवा 'अम गत्यादिषु' भ्वादिः 'अम रोगे' चुरादिः, नञ्-पूर्वः; अस्मान्निपातनं पूर्ववत्। न अमन्ति गच्छन्त्यनेन। न हि स्नानपानोपयोगिजले विद्यमाने प्राणिनोऽन्यत्र गच्छन्ति। तथाहि—ओत्रियसजलनदीप्रस्रवणेषु विद्यमानेष्वेव वासो विधन्ते स्मृतिः। न आमयत्यनेन रोगी न भवत्यनेनेत्यर्थः। 'आपो अमी-वचातनीः (ऋ० मं० ८,७,२५,६)'—इति श्रुतिः। "नामानि यह्वो अधि येषु वर्द्धते (ऋ० मं० ७,२,३३,१)"—"दधाना नाम यज्ञियम् (ऋ० मं० १,१,११,४)"—इति च निगमौ॥

(८०) सर्पिः। 'सृप्लृ गतौ (भ्वा० प०)'। 'अर्चिरुचिहुसृपिछ-दिच्छर्दिभ्य इसिः (उ० २,१०१)'—इति इसि-प्रत्ययः। सर्पति द्रवद्रव्यत्वात्। * *। निगमोऽन्वेषणीयः॥

(८१) अपः*। 'आप्लृ व्याप्तौ (स्वा० उ०)'। आपः कर्माख्यायां ह्रस्वो नुट् च वा (उ० ४,२००)'—इत्यसुन् प्रत्ययो बाहुलकात् जलेऽपि भवति; अपः। आप इत्यनेन समानार्थम्। "बह्वीनां गर्भो अपसामुपस्थात् (ऋ० मं० १,७,१,४)"—"जामीनामग्निर-पसि स्वसृणाम् (ऋ० मं० ३,८,१४,१)"—इति च निगमौ॥

(८२) पवित्रम्†। 'पूञ् पवने (क्र्या० उ०)'। 'पुवः सञ्ज्ञायाम् (३,२,१८५)'—इति करणे इत्र-प्रत्ययः। पुनात्यनेनात्मानं स्नातः। अथवा 'कर्त्तरि चर्षिदेवतयोः (३,२,१८६)'—इत्यपां देवतात्वात् कर्त्तरि इत्र-प्रत्ययः। पुनाति पापहतः। तथाच मनुः—'स्नानं

* प० १,१। निघ० १,१२।
† प० ४,१। निघ० ५,६।

तपोऽग्निराहारोऽम्भस्मनोवायुंपाञ्चनम् । वायुः कर्मार्ककालौ च प्रुहेः कर्मणि देहिनाम् (५अ० १० ५श्लो०)'—इति । "ऋतपविचाः स्वधया मदन्तीः (ऋ० सं० ५,४,१४,३)"—इति निगमः ॥

(८३) अमृतम्* । नञ्-पूर्वात् म्रियतेर्धातोः 'तनिमृङ्भ्यां किच (उ० ३,८५)'—इति तन् प्रत्ययः। न म्रियन्ते हि प्राणिनोऽनेन पीतेन । अथवाऽत्यन्तस्वादुरसत्वादमृतमित्युच्यते ; तथा 'अमृतोऽस्यापः'—इति श्रुतिः । "यत्रा सुपर्णा अमृतस्य भागम् (ऋ० सं० २,३,१८,१)"—इति निगमः ॥

(८४) इन्दुः† । 'ञि इन्धी दीप्तौ (रु० आ०)' । अस्मात् 'उन्देरिच्चादेः (उ० १,१२)'—इति विधीयमान उ-प्रत्ययो बाहुलकाद् भवति, धकारस्य दकारस्य । इन्धे दीप्यते स्वेन तेजसा देवतात्वात् । यद्वा ; 'उन्दी क्लेदने (रु० प०)' । 'उन्देरिच्चादेः (उ० १,१२)'—इत्यु-प्रत्यय आदेरिदादेशश्च उनत्ति भूमिमिन्दुः । यद्वा ; 'इदि परमैश्वर्ये (भ्व० प०)' । अस्मादु-प्रत्ययः । परमेश्वरं हि जलं देवतात्वात्, प्राणिनां प्राणनस्य जीवनस्य च तदायत्तत्वाच । निगमोऽन्वेषणीयः ॥

(८५) हेम‡ । हिरण्यनामसु व्याख्यातम् (२) । हिनोति गच्छति निम्नं प्रदेशं, गम्यते वा तदर्थिभिः, वर्द्धते वा वर्षासु । निगमोऽन्वेषणीयः§ ॥

(८६) स्वः‖ । सुपूर्वादर्त्तेरन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि दृश्यन्त

* पु० २ । † प० ३, १०. ४, ४ । निरु० १०, ४१ । ‡ पु० १ ।
§ छा० ब्र० चा० ६, १, ४, ४ द्रष्टव्यः । ‖ पु० ४ ।

(३,२,७५)'—इति विच्, गुणः, 'स्वरादिनिपातमव्ययम् (१,१,३७), सुपो लुक्, रेफस्य विसर्जनीयः। अनादृष्ट्यादिजनितं क्लेशं सुष्ठु शोभनं गमयति नाशयति; स्वः। यदा; केवलादेव स्वार्थे णिच्, 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः'—इत्युक्तेरिष्टार्थसिद्धिः। अरणं गमनं दोषरहितत्वेन शोभनं यस्य, सुष्ठु गच्छति निम्नं प्रदेशमिति वा, सुष्ठु प्राणिभिर्गम्यते इति वा; स्वः। अकारान्तमप्यस्ति। सुपूर्वादृमतेश्च बाहुलकाद् भवति। * * *। "आविः स्वः कृणुते गूहते बुसं (ऋ० सं० ७,७,१९,४)"—"स्वः: मिथोमन्त्रयिरो गविष्टिषु (ऋ० सं० ७,३,१,२)"—इति च रेफान्तस्य निगमौ। "आसु स्वासु वंसगः (ऋ० सं० ८,८,२,३)"- इत्यकारान्तस्य। समाम्नायपाठः उभयत्र समानः॥

(८७) सर्गाः। 'सृज विसर्गे (तु० प०)'। कर्मणि घञ्। सृज्यते मेघैर्विसृज्यत इति सर्गः; जसि सर्गाः। यदा; सर्गो वेगः; 'अर्श-आदित्वादच् (५,२,१२७)'। वेगवन्ति हि जलानि। "सर्गासो वर्तादिव (ऋ० सं० ७,७,११,४)"—इति निगमः॥

(८८) शम्बरम्*। सम्पूर्वाद् वृणोतेः 'ग्रहवृदृनिश्चिगमश्च (३,३,५८)'—इत्यप्। संव्रियते मेघैः। यदा; पचाद्यच् (२,१,१३४), वृणोति हि भूमिं संवरम्। पृषोदरादित्वात् (६,३,१०९) शम्बरम् यदा; शम्बो वज्रः निरुक्तो मेघनामसु(१०)। तद्वानपीन्द्रः शम्बः, मत्वर्थीयस्य लुक्। 'रा दाने (अदा० प०)'; शम्बेनेन्द्रेण दीयते शम्बरः। 'घञर्थे क-विधानम् (३,३,५८वा०)'—इत्यस्योपलक्षणार्थ-

* पृ० १०।

त्वात् कः। यद्वा; शम्ब तद्वरम्ब शम्बरः। शमनं च रोगाणामुत्कृष्टच सर्वपदार्थेषु इत्यर्थः। 'शम्बरं मम्बरं जलम्'—इति माधवः। "अतिथिग्वाय शम्बरं गिरेरुग्रो अवाभरत् (ऋ० सं० २,१,१९,२)"—इति निगमः॥

(८९) अभ्वम्*। आङ्-पूर्वात् भवतेः क इत्येष बाहुलकाद् भवति, उपसर्गह्रस्वत्वञ्च। 'छन्दस्युभयथा (६,४,८६)'—इति सुपि भूसुधियो र्विधीयमानो यणादेशो व्यत्ययेन क-प्रत्ययेऽपि भवति। आ समन्ताद् भवति विद्यते अभ्वम्। 'अभ्वमा भवति'—इति माधवः। "मनेभ्यमभ्वं मरुतो जुनन्ति (ऋ० सं० २,४,८,२)"—इति निगमः॥

(९०) वपुः†। 'टु वप बीजतन्तुमन्ताने (भ्वा० उ०)'। 'अर्त्तिपृवपियजितनिधनितपिभ्यो नित् (उ० २,११०)'—इत्युसि-प्रत्ययः। उप्तेऽनेन बीजम्; बीजवपने हि जलं साधकतमं भवति।"चरिष्णु१र्चिर्वपुषामिदेकम् (ऋ० सं० ३,५,७,४)"—इति निगमः॥

(९१) अम्बु‡। अन्तरिक्षनाम्नोऽम्बरशब्दस्य निर्वचने विस्तरेणोक्तम् (३)। निगमोऽन्वेषणीयः॥

(९२) तोयम्§। तवतेर्वृद्धिकर्मणः (निरु० ९,२५) 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययो निपातितो द्रष्टव्यः। वर्द्धते वर्षासु। 'तुदति तोयम्'—इति क्षीरस्वामी। तुदतेः पूर्ववत् यत्-प्रत्यये निपातनाद् दकारलोपो गुणः। यद्वा; तुदिः

* पृ० १०।    † पृ० २, ७।
‡ निघ० १, १०।    § पृ० २, १५।

शौच आवरणार्थः। "तोयेन जीवान् व्यससर्ज भूम्याम् ( ? )"—इति निगमः॥

(८३) तूयम्*। पूर्ववन्निपातनाद्रूपसिद्धिः। उकारस्य दीर्घः (६,३,१२३)। निगमोऽन्वेषणीयः† ॥

(८४) क्षपीटम्। 'क्षपू सामर्थ्ये (भू० आ०)'। 'कृदृकृपिभ्यः कीटन् (उ० ४,१८०)'—इति कीटन् प्रत्ययः। 'कृपो रो लः (८,२,१८)'—इत्यत्र, काशिकावृत्तिः —'कृपण-कृपीट-कर्पूरादयोऽपि कृपेरेव द्रष्टव्यः'। 'उणादयो बहुलम् (३,३,१)'—इति च कृपेरेव बाहुलकात्लत्वाभावः। भाष्ये तु—'कृपणादीनां प्रतिषेधो वक्तव्यः (८,२,१८भा०)'—इति लत्वाभावः। कल्पते तापनिवारणाय। "यत्रा कृपीटमनु तद्दहन्ति (ऋ० सं० ७,७,२१,२)"—इति निगमः॥

(८५) शुक्रम्‡। 'शुच दीप्तौ (निघ० १,१७)'। अस्मात् 'स्फायितञ्चिवञ्चि (उ० २,२७)'—इत्यादिना ककारान्तादेशो र-प्रत्ययो गुणाभावश्च निपात्यते। शोचते शुक्रः। यद्वा; शोचते ज्वलतिकर्मणः (निघ० १,१७) सम्पदादित्वात् (३,३,९४वा०) क्विप्। शुचि, तद्वस्य; रो मत्वर्थीयः। दीप्तमित्यर्थः। शुक्रं तेजः शब्दो वा, रेतः-पर्यायत्वात् 'देवानां वै रेतो वर्षम्'-इति श्रुतेः उदकनामत्वमपि बोद्धव्यम्। "शुक्रासु ते शुक्रमायुनाम् ( ? )"—इति निगमः॥

* प० २, १४। निरु० ८, १२।
† ऋ० सं० ७, १, २०, २ द्रष्टव्यः।
‡ निरु० ८, ११. १२, १७।

(९६) तेजः*। 'तेज् पालने' भ्वादिः परस्मैपदी। असुन् (उ० ४,१८४)। तेजयति पालयति प्राणिनः पिपासादिनिवारणात्। यद्वा; 'तिज निशाने (भ्वा०आ०)' असुन्। अग्निजलादपां कार्य-कारणयोरभेदोपचारात् तेज इत्युक्तिः। निगमोऽन्वेषणीयः॥

(९७) स्वधा†। स्व-शब्द उपपदे 'डु धाञ् दानधारणयोः (जु० उ०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३,२,३)'। स्वमात्मानं सर्वान्तर्यामिणं भगवन्तं नारायणं धारयति 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं‡ तेन नारायणः स्मृतः (मनुः १अ०१०श्लो०)'—इति। स्वं धनं ददातीति वा; धनोत्पत्तिहेतुत्वात्। निगमोऽन्वेषणीयः॥

(९८) वारि। ऊर्णोतेः इण् प्रत्ययः। वार्यते तत् सेत्वादिभिः पुरुषैः। वाजसनेये सौत्रामणी-प्रैषे—"देवं बर्हिर्वारितीनाम् (य०वा० सं० २१,५७)"—इति निगमः। अस्य भाष्यकृदुवटः—'वारितीनामुदकवतीनां वारिप्रभवानां वा ओषधीनां सम्बन्धिनि अध्वरे स्तीर्णम्'—इत्यादि॥

(९९) जलम्। 'जल घातने (भ्वा०प०)', 'घातनं तैक्ष्ण्यम्'—इति वृत्तिः। जलति शीतं भवति। यद्वा; जायत इति जः। 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डो निरुपपदादपि जनेर्भवति। जैः जातैः प्राणिभिः लायते आदीयते इति जलम्। 'ला आदाने (अदा०प०)'। निगमोऽन्वेषणीयः॥

---

* प० १७।

† प० १,७.१,१०। निघ० ७,२५।

‡ 'तायदस्यायनं पूर्वम्'—इति मनुपुस्तक-पाठः।

(१००) जलाषम्*। जैः जातैः लष्यते वाञ्छ्यते (भू॰उ॰) इति जलाषम्। ज-शब्द उपपदे लषेः कर्मणि घञ्। 'जलाषं ज-लषितं जातैः'—इति माधवः। यद्वा; जलाषमिति सुखनाम, सुखहेतु-त्वादपां तद्धेतौ ताच्छब्द्यम्। "रुद्रं जलाषभेषजम् (ऋ॰मं॰१,३, २६,४)"—इति निगमः। 'जलाषमुदकनाम वा'—इति माधवो ऽभाषयत्॥

(१०१) इदम्। 'इदि परमैश्वर्ये (भू॰प॰)', इतित्वान्नुम्। 'इन्देः कमिर्नलोपश्च (उ॰४,१५२)'—इति कमि-प्रत्ययः। देवत्वा-दपां परमैश्वर्यं विद्यते। 'इणो दमुग्'—इति श्रीभोजदेवः; ईयते निम्नं प्रदेशं गम्यते वा। यद्वा; इन्धेः कमिन् बाहुलकान्नलोपो धकारस्य दकारश्च। इन्धे दीप्यते इदम्। "स्वर्मागो या इदं ययुः (ऋ॰मं॰ २,५,२६.५)"—"ता जिह्वया सदमेदं सुमेधाः (ऋ॰मं॰५,१, १०,३)"—"कूपामिमानो अर्णोदिदन्तः (ऋ॰मं॰४,२,१८, ३)"—इति च निगमाः॥

॥ इत्येकशतमुदकनामानि (१०१)॥ १२॥

**अवनयः**[१]। **यव्यः**[२]। **खाः**[३]। **सीराः**[४]। **स्रोत्याः**[५]। **एन्यः**[६]। **धुनयः**[७]। **रुजानाः**[८]। **वक्षणाः**[९]। **खादो-अर्णाः**[१०]। **रोधचक्राः**[११]। **हरितः**[१२]। **सरितः**[१३]। **अग्रुवः**[१४]। **नभन्वः**[१५]। **वध्वः**[१६]। **हिरण्यवर्णाः**[१७]।

* प॰ ३, ६।

(२) कातिचिन्मात्रयोः व पुस्तकेषु "यव्याः"—इति, टीकाकृतश्चानय।

(१५) "नभन्वः" ख।। "नभन्वाः" C. D. F।

रोहितः[१८]। सस्रुतः[१९] । अर्णाः[२०] । सिन्धवः[२१] । कुल्याः[२२] । वर्यः[२३] । उर्व्यः[२४] । इरावत्यः[२५] । पार्वत्यः[२६] । स्रवन्त्यः[२७] । ऊर्जस्वत्यः[२८] । पयस्वत्यः[२९] । सरस्वत्यः[३०] । तरस्वत्यः[३१] । हरस्वत्यः[३२] । रोधस्वत्यः[३३] । भास्वत्यः[३४] । अजिराः[३५] । मातरः[३६] । नद्यः[३७] । इति सप्तत्रिंशन्नदीनामानि* ॥ १३ ॥

(१) अवनयः† । पृथ्वीनामसु व्याख्यातः (१) । अवन्ति जगत् स्वोदकेन, अव्यन्ते प्राणिभिस्तोयादिनिर्माणेन । "आमिस्रुन्तीरवनयः समुद्रम् (ऋ० सं० ४,४,३१,१)"—"गा न व्राणा अवनीरमुञ्चत् (ऋ० सं० १,४,२८,५)"—इति च निगमौ । निगमेषु बहुवचनान्तत्वेन प्रायशः श्रवणात् सर्वत्र बहुवचनान्तत्वम्‡ ॥

(२) यह्वः§। 'या प्रापणे (अदा० प०)'। 'ग्रेवयह्वजिह्वाग्रीवाप्वामीवा (उ० १,१५२)'—इति निपातनात् व-प्रत्ययो धातोर्ह्रस्वत्वं हुगागमश्च। बाहुलकादापः स्थाने ङीप् पौष्यत्वादित्वाद् द्रष्टव्यम् । याति तांस्तान् प्रदेशान् प्राप्यन्ते वा प्राणिभिः । यद्वा; 'यह्वः'—इति महन्नाम (निघ० ३,३), पूर्ववत् ङीप्। यह्वः महत्यो नद्यः।

(२३) "ऋतावर्यः"—इति माधवः । (२४) "ऊर्व्यः" C, ग ।
(२६) "पार्वत्यः" ग. C. D. E । (२७) "रेवत्यः"—इति च टीकासम्मतः ।
* "इति नदीनाम" ग । † पृ० १ ।

‡ एकवचनान्तपाठा अपि दृश्यन्ते परं ते पृथिवीवाचकाः प्रायः। तथाहि ऋक्संहितायाम् –२, २, ५, ५ अवनिं=भूमिम्, ततः २, ४, २५. २ अवनिः=भूमिः, ततः २, ६, २, १ अवनिं=भूमिम् इति; एकत्र तु अवनिः=रक्षकः इति व्याख्यातवांश्च सायणः १, १, ८, ५ ।

§ पृ० २, २ । निरु० ८, ८ ।

द्विधातुजं वा इदं नाम,—यातेर्कीन्नः, पृषोदरादिः (६,३,१०९)। यातास्त्र प्राणिभिः ह्वतास्त्र यज्ञेष्वित्यर्थः। "स्वयमन्कैः परिदीयन्ति यह्वीः (ऋ० सं० २,७,२४,४)"—"अवर्द्धयन्त्सुभगं सप्त यह्वीः (ऋ० सं० २,८,१३,४)"—इति च निगमौ॥

केषु चित् कोशेषु "यव्याः"—इतीदं नाम दृष्टम्। 'यु मिश्रणे (अदा० प०)' पृथग्भावोऽप्यस्यार्थः—इति नैगमकाण्डे 'वियुते (निरु० ४.२५)' इत्यस्य निर्वचने स्कन्दस्वामिना प्रतिपादितः। 'यु मिश्रणे'—इति अयं पठ्यते, प्रयुज्यते च—'जनयत्यै त्वा संयौमि'—इति, तथापि पृथग्भावेऽपि वर्त्तते। न चायं वेरुपसर्गस्यार्थः, केवलस्यापि दर्शनात्—'युतं धनमस्य', 'युतं भोजनमस्य', 'युतोऽयम्'—इति पृथग्भूत इति गम्यते'—इति। अस्मात् 'आसुयुवपिरपिलपित्रपिचमश्च (३,१,१२६)'—इति ण्यति प्राप्ते 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति 'अचो यत् (३,१,९७)', गुण, 'वान्तो यि प्रत्यये (६,१,७९)' वर्षासु मेघैरुदकेन मिश्रणीयाः, अन्येषु सूर्यरश्मिभिराकृष्टेन पृथग्भवन्तीति वा। अथवा 'युञ् बन्धने (क्रया० उ०)' अस्मात् अघ्न्यादित्वात् (उ० ४,१०८) यक् द्रष्टव्यः। बध्यते आसु सेतुरिति, यव्याः। यद्वा; यवेभ्यो धान्यविशेषेभ्यो हिताः 'खलयवमाषतिलवृषब्रह्मणश्च (५,१,७)'—इति यत्। नदीजवेनापि वर्द्धन्ते यव्याः। "वार्ण त्वा यव्याभिः (ऋ० सं० ६.७,२,२)"—इति निगमः। 'ह्रदमिव कुल्याभिः'—इति माधवभाष्यम्। अनयोर्युक्तं गृह्णन्तु सूरयः॥

(३) खाः*। 'खन अवदारणे (भ्वा० उ०)', 'अन्येष्वपि दृश्यते

* निघ० १, १३. १०, ९।

(३,२,१०१)'—इत्यत्र 'अपिशब्दः सर्वोपाधिव्यभिचारार्थः (३,२,१०१भा०)'—इत्युक्ते निरुपपदादपि जनिव्यतिरिक्तादपि खने र्डः प्रत्ययः, टाप् । वृत्रहननादिन्द्रेण खाताः । तथा च श्रुतिः—'अपां बिल मपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार (ऋ० सं० १,२,३८,१)'—इति, 'इन्द्रो अस्माँ अरदद् वज्रबाहुः (ऋ० सं० ३,२,१३,१)'—इति च नदीवाक्यम्* । यद्वा; खनन्ति भूमिं वेगेन वहन्त्यः । अथ वा । 'खै दाने ( ? )' । 'घञर्थे क-विधानम् ३,३,५८)'—इत्यस्योपलक्षणार्थत्वात् कः, टाप् । 'खै स्थैर्ये हिंसायाञ्च (भू० प०)'—इति वा । खायन्ति स्थिरा भवन्ति वृत्रेण रुद्धाः, हिंस्यन्ते वा तेन, खाः । "सरायस्खासुप सृजा गृणानः (ऋ० सं० ४,७,८,४)"—"सृध्याम ते वरुण खामृतस्य (ऋ० सं० ९,७,९,५)"—इति च निगमौ ॥

(४) सीराः† । 'षिञ् बन्धने' सौवादिकः क्रैयादिकश्च । 'शुसिचिमीनां दीर्घश्च (उ० २,२४)'—इति र-प्रत्ययः । सीयन्ते बध्यन्ते आसु सेत्वादितः शिलादिभिरवतारा वा । 'सरणात् सीरः'—इति सर्त्तेर्धातोः 'कृपृवृकटिपटिशौटिभ्य ईरन् (उ० ४,२९)'—इति बाहुलकाद् भवति टि-लोपश्च । 'सीरा शब्दो नदी-वचनान्तोदात्तः, हल-वचन आद्युदात्तः'—इति माधवः । "द्रवित्न्वः पृथिव्यां सीरा अधि (ऋ० सं० ८,१,८,४)"—"सीरा इन्द्रः स्रवितवे पृथिव्या

* तथाचेय मनुक्रमणिका—'तत्र नदीवाक्यं चतुर्थीमद्यान्सीदृशस्तः'—इति तत्र चेयं नदी ।

† निघ० १, ४० ।

(ऋ० सं० ३,६,२,३)"—इति च निगमः ॥ "धीरा युञ्जन्ति कवयः (ऋ० सं० ८,५,१८,४)"—इति हल-वचनः ॥

(५) स्रोत्याः। स्रोतसि भवाः। 'स्रोतसो विभाषाड्ड्यौ (४,४,११३)'—इति ड्य-प्रत्ययः। स्रोतोऽनुसरणाद्धि नद्यो भवन्ति। "नवति स्रोत्या नव स्रवन्ती (ऋ० सं० ८,५,२५,३)"—इति निगमः ॥

(६) एन्यः। 'इण गतौ (अदा० प०)'। 'वीज्याज्वरिभ्यो निः (उ० ४,४८)'—इति बाहुलकान्नि-प्रत्ययः। 'कृदिकारात् (४,१,४५ वा०)'—इति ङीप्। यन्ति एन्यः गमन-स्वभावा हि नद्यः गम्यन्ते वा प्राणिभिः। "वि यद् वर्त्तन्त एन्यः (ऋ० सं० ४,३,१२,२)"—इति निगमः। एनी-शब्दो नदी-वचनो ऽन्तोदात्तः अन्यत्राद्यु-दात्तः इति माधवः। "एनी त एते बृहती अभिश्रिया (ऋ० सं० २,२,१३,६)"—इति अस्योदाहरणम् ॥

(७) धुनयः*। 'धूञ् कम्पने' भौवादिः। बहुलानुवृत्तेः 'घृणिपृश्नि-पार्ष्णिचूर्णिभूर्णि (उ० ४,५२)'—इत्युक्ते नि-प्रत्ययः किच्च। धुन्वन्ति कम्पयन्ति तीरवृक्षादीनि, कम्पन्ते वा स्वयं गमनशीलत्वात्। "दिवे-दिवे धुनयो यन्त्यर्थम् (ऋ० सं० २,७,१२,२)"—इति निगमः ॥

(८) रुजानाः†। 'रुजो भङ्गे' तुदादिः परस्मैपदी। व्यत्ययेन शानच्, अत्र च प्रथमा-समानाधिकरणे शानच् भवति, मुगागमस्तु न क्रियते आगमानित्यत्वेन व्यत्ययेन वा। रुजन्ति कूलानि। "सं रुजानाः पिपिष इन्द्रशत्रुः (ऋ० सं० १,२,३७,१)"—इति निगमः ॥

---

* निघ० ५,२। † प० ४,२। निघ० ६,४।

(९)। वक्षणाः*। 'वक्ष रोषे (भ्रू०प०)'। 'क्रुधमण्डार्थेभ्यश्च (?)'—इति युच्। वक्षन्ति क्रुध्यन्तीव हि ताः वर्षासमये वेगेन गच्छन्त्यः। चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः। यद्वा; 'वह प्रापणे (भ्रू०उ०)'। अस्माद् 'युच् बहुलम् (उ०२,७४)'—इति युचि षुगागमो बाहुलकाद् भवति। स्वयं प्रवहन्ति हि ताः। 'वक्षतिः प्राप्तिकर्मणः स्यात्'—इति माधवः। युच्। प्राप्यन्ते हि ताः प्राणिभिः प्राप्नुवन्ति वा समुद्रं निम्नं वा। "प्र वक्षणा अभिनत् पर्वतानाम् (ऋ०सं०१,२,३६,१)"—"महि ज्योतिर्नि हितं वक्षणासु (ऋ० सं० ३,२,२,४)"—इति निगमौ॥

(१०) खादोअर्णाः। 'खाद भक्षणे (भ्रू०आ०)'। कर्त्तर्य्य-सुन् (उ०४,१८४) अर्णशब्दोऽकारान्तोऽपि निरुक्त उदकनामसु (१२)। खादः, भक्ष्यमाणः। भक्षणेन चात्र बाधनं लक्ष्यते, तेन कूलं बाधमानोऽर्णो जलं यासामिति खादोअर्णः, वेगवज्जला इत्यर्थः। 'प्रकृत्यान्तः पादमव्यपरे (६,१,११५)'। तथा च माधवः—"धन्व-र्णसो नद्यः खादोअर्णाः (ऋ०सं०४,२,२६,२)"—इत्यत्र 'धन्वर्णसस्तद्वज्जलाः। खादोअर्णा जलान्विताः। खादो वेगवज्जलं यासां तास्तथोक्ताः भक्षितकूलोदकाः'—इति। "धन्वर्णसः (ऋ०सं० ४,२,२६,२)"—इत्ययं निगमः। अत्रार्णस्-शब्दो विशेषणम्, अन्यो वा निगमोऽन्वेषणीयः॥

(११) रोधचक्राः। 'रुधिर् आवरणे (रु०प०)', 'भावे (३३ १८)' घञ्। 'डु कृञ् करणे (तना०उ०)', 'घञर्थे क-विधानम्

* निघ० १,१२।

(३.३,५८वा०)–इति कः। 'हृञादीनां के कं भवतः'–इति हित्वम्। चक्रम् करणम्, रोधः, रोधस्य निरोधस्य चक्रं करणं अतिरायां विद्यते इति रोधचक्राः। नद्यो ह्येता प्राणिनां सैर-सञ्चरणनिरोधकारिण्यः। यद्वा; रोधः तीरं, तस्य करणं निर्माण-मासां विद्यते तीरवत्यो हि नद्यः। सकारलोपश्छान्दसः। यद्वा; रुधेः करणे घञि (३,३,१९) रुध्यतेऽनेन जलप्रवाह इति रोधः शब्दः करणं निर्माणमासां विद्यते। "समुद्रं न स्रवतो रोधचक्राः (ऋ० सं० २,५,१३,२)"—इति निगमः॥

(१२) हरितः* । 'हृञ् हरणे' भ्वादिः (उ०), 'हृ प्रसह्यकरणे' जुहोत्यादिः ( ? )। 'हृसृरुहियुषिभ्य इतिः (उ० १,९४)'। हरन्ति वृक्षगुल्मादीनि वेगेन, प्रसह्य हरन्ति वा। निगमोऽन्वेषणीयः॥

(१३) सरितः। 'सृ गतौ (भ्वा० प०)'। पूर्वेण सूत्रेण (उ० १, ९४) इति-प्रत्ययः। एन्य इत्यनेन समानार्थः। "सम्यक् स्रवन्ति सरितो न धेनाः (ऋ० सं० ३,८,११,१)"—"यो वां समुद्रान्त्-सरितः पिपर्त्ति (ऋ० सं० ५,५,१७,२)"—इति च निगमौ॥

(१४) अग्रुवः† । 'अगि गतौ (भ्वा० आ०)'। 'जत्र्वादयश्च (उ० ४,१००)'—इति रु-प्रत्ययान्तेषु निपातितेषु द्रष्टव्योऽयं शब्दः, निपातनान्न-लोपः, 'तन्वादीनां छन्दसि बहुलम् (६,४,७७वा०)'—इत्युवङ्। गच्छन्ति तांस्तान् प्रदेशान्। 'अग्रुवो गमनात् नद्यः'—इति माधवः। "समग्रुवो न समनेष्वञ्जन् (ऋ० सं० ५,२,१,५)"—इति निगमः॥

* प० ९। † प० २,५

(१५) नभन्वः । 'णभ तुभ हिंसायाम्' भ्वादिरात्मनेपदी, दिवादिः क्र्यादिश्च परस्मैपदी । 'दाभाभ्यां नुः (उ० ३,३१)'—इति बाहुलकात् नु-प्रत्यये नकार उपजनः । नभन्ते, नभ्यन्ति, नभ्नन्ति इति नभन्वः । 'अभ्रादिषु छन्दसि वा वचनं प्राङ् णौचङ्युपधायाः'—इति विकल्पितत्वात् 'जसि च (७,३,१०९)'—इति गुणाभावः । नद्यो हि बाधिकाः कूलादीनाम् । "प्रागुवो नभन्वो३ न वक्वाः (ऋ० सं० ३,६,२,२)"—इति स्त्रीलिङ्गो निगमः । "प्र पर्वतस्य नभनूँरचुच्यवुः (ऋ० सं० ४,३,२४,७)"—इति पुंलिङ्गे । अथ 'सिन्धवः स्युर्नभन्वः'—इति माधवनिर्वचनानुक्रमणी* ॥

(१६) वध्वः† । 'वह प्रापणे (भ्वा० उ०)। 'वहो धश्च (उ० १, ८०)'—इति ऊ-प्रत्ययः । वहन्ति उह्यन्ते वा भूम्याम् । यद्वा ; समुद्रस्य भार्यात्वात् वध्व इत्युच्यते । सरित्पतिर्हि समुद्रः । निगमोऽन्वेषणीयः‡ ॥

(१७) हिरण्यवर्णाः । हिरण्यशब्दो निरुक्तः (१।२।१) 'हर्यतेः कन्यन् हिरश्च'-इत्यादिना । 'वृञ् वरणे (स्वा० उ०)' । 'कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित् (उ० २,२७)'—इत्यादिना रन्-प्रत्ययान्तो निपातितः । वृणोति व्रियते वाऽसाविति वर्णः श्वेतादिः । हिरण्यः कान्तः इष्टो वर्णो यासां ताः । यद्वा ; हिता घर्मादौ रमणीया मनः-प्रह्लादजनयित्र्यः, वारिकाश्च तापादेर्भूम्या वा इति । "हिरण्यवर्णाः परियन्ति यह्वीः (ऋ० सं० २,७,२३,४)"—इति निगमः ॥

---

* 'भनतेः शब्दकर्मणो नभाङ्गितिवत् नभनवः उदकानि'—इति च तत्रैव सायणीयव्याख्यानम् ।

† निघ० १,१ । ‡ ऋ० सं० ४, ३, १, ६ द्रष्टव्यः ।

(१८) रोहितः* । 'रुह बीजजन्मनि (भ्वा० प०)'। 'रुहेरश्च लो वा' इतीतन् (उ० ३,९४)'। रोहन्त्याभिर्बीजानि, तज्जलेन हि बीजानि प्ररोहन्ति। निगमोऽन्वेषणीयः ॥

(१९) सस्रुतः। सम्पूर्वात् 'स्रु गतौ (भ्वा० प०)'—इत्यस्मात् 'क्विप् च (३,२,७६)'—इति क्विप् प्रत्ययः। सङ्गताः संस्रुतः। समोऽन्त-लोपश्छान्दसः। क्षुद्रनद्यो महानद्यश्च परस्परं सङ्गता भवन्ति ततः सस्रुत इत्युच्यन्ते। सस्रुत सङ्गता इति माधवः। यद्वा; स्रवतेः सम्प-दादित्वात् (३,३,९४वा०) क्विप्। स्रवणं स्रुतजलप्रवाहः स्रोत इत्यर्थः, तया सह वर्त्तन्ते इति सस्रुतः। 'सहस्य सः सञ्ज्ञायाम् (६, ३,७८)'—इति सः, सस्रुतः। 'सस्रुतः स्रोतसा युक्ताः'—इति च माधवः। "ऋतस्य धेना अयनन्त सस्रुतः (ऋ० सं० २,२,८,१)"—इति निगमः ॥

(२०) अर्णाः†। 'ऋण गतौ' तनादिः (प०)। 'पचाद्यच् (३, १,१३४)'। अर्णन्ति गच्छन्त्यर्णाः। यद्वा; अर्ण इत्यकारान्तमप्युदक-नामेत्युक्तम् (१३५पृ०)। अर्श आदित्वादच् (५,२,१२७)। जल-वत्यो हि नद्यः। 'अर्णैरर्णांस्युपगाः'—इति माधवः। तत्र पक्षे 'धापृवस्यज्यतिभ्यो नः (उ० ३,६)'—इति न-प्रत्ययः। यद्वा; पचाद्यचि (३,१,१३४), अर्णाः 'उदके नुट् च (उ० ४,१९२)' —इत्यत्र विहितो नुडागमो बाहुलकाद् भवति। "क्षोणोरपो अनवद्यार्णाः (ऋ० सं० २,४, १६,२)"—इति निगमः॥

---

* प० १५. २, ५।

† निरु० ११, २७।

(२१) सिन्धवः* । 'स्यन्दू प्रस्रवणे (भू० आ०)'। 'स्यन्देः सम्प्रसारणं धश्च (उ० १,११)'—इत्यु-प्रत्ययः । स्यन्दन्ते इत्यर्थः। "अधा अश्वाः सिन्धवः स्रोत्याभिः (ऋ० सं० ३,२,१३,४)"—"यस्य ते सप्त सिन्धवः (ऋ० सं० ६,५,७,०)"—इति च निगमौ॥

(२२) कुल्याः। 'कुल संस्त्याने (भू० प०)'। कोलन्ति संस्त्यायन्त्यस्मिन् शिलादय इति कुलं पर्वतः। कुले प्रधान भूते पर्वते भवाः कुल्याः। 'भवे छन्दसि (४,४,११०)'—इति यत्। कुलिशनिर्वचने 'कुलशातनः (निरु० ६,१७)'। मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः, कुलाः, तेषां च शातनः इत्युक्तेः। मेघस्य पर्वतस्य वा समुच्छ्रिते प्रदेशे कुले भवन्तीति कुल्याः। चीरस्वामी तु 'कुलानि पर्वतानि श्यति पक्षच्छेदनेन तनूकरोति, कुलिशः'—इत्युक्तवान्। यद्वा; 'कुल्याऽल्पा कृत्रिमा सरित् (अम० १,१०,३४)'—इत्यत्र चीरस्वामिनो व्याख्या—'कृत्रिमा अल्पा च चेत्रसेकार्था कुल्या'। कुले साधुः 'तत्र साधुः (४,४,९८)'—इति यत्। यदाहुः—'कुल्यादानं जलं विद्यात् कुल्यो मान्ये व्यवस्थितः। दाम्पत्यं कुलमित्यन्ये हलं† वा कुलमुच्यते'—इति। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४,४,२८,३)"—"ह्रदं कुल्या इवाऽऽशत (ऋ० सं० ३,३,९,३)"—इति च निगमौ॥

* निघ० ५, २७. ९, २९. १०, ५।

† "षड्गवं धर्मचलं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥"—इति हारीतः। 'षड्गवं मध्यमं हलमिति तथाविध हलद्वयेन यावती भूमिर्वाह्यते तत्कुलमिति वदन्ति'—इति कुल्लूकः (मनुः ७, ११९)।

(२३) वर्यः। 'वृञ् वरणे (स्वा॰ उ॰)', 'वृङ् सम्भक्तौ (क्र्या॰ आ॰)'। 'अच इः (उ॰ ४,१३४)'—इति इ-प्रत्ययः, "कृदिकारात् (४,१,४५वा॰)'—इति ङीष्। वरणीयाः सम्भजनीया वा वर्यः। निगमोऽन्वेषणीयः॥

इदं नाम माधवः "ऋतावर्यः"—इत्यपठत्। 'ऋतमित्युदकनाम (निरु॰ २,५२),'छन्दसी वनिपौ च (५,२,१२२वा॰)' इति मत्वर्थीयो वनिप्, 'वनो र च (४,१,७)'-इति ङीब्रेफौ, 'अन्येषामपि दृश्यते (६,३,१३७)'-इति दीर्घः; ऋतावर्यः। "ऋतावरीरुप मुहूर्त्तमेवैः (ऋ॰ सं॰ ३,२,१२,५)"—इति निगमः॥ अत्र स्कन्दस्वामिना 'नदीनाम'—इति नोक्तम्, युक्तं त्वत्रत्यु स्वरयः॥

(२४) उर्व्यः*। 'ऊर्णुञ् आच्छादने (अदा॰ उ॰)'—इत्यस्माद् वृणोतेश्च। उर्वी इति पृथिवीनामसु व्याख्यातम् (१,१,१०)। महत्यो नद्यः, छादयित्र्यो वा भूमेः स्वेनोदकेन॥

एतदादीनामुत्तरेषां नाम्नां निगमा अन्वेषणीयाः प्रायेण॥

(२५) इरावत्यः†। 'इण गतौ (अदा॰ प॰)'। 'ऋज्रेन्द्राग्रवज्रविप्र (उ॰ २,२७)'—इत्यादिना र-प्रत्ययो गुणाभावो निपात्यते। इरा बलं, तदासामस्ति मतुप्, वत्वं, ङीप्॥

(२६) पार्वत्यः। पर्वतशब्दो निरुक्तो मेघपर्वतानां नामत्वेन (१,१०,९)। 'तस्यापत्यम् (४,१,९२)'—इत्यण्, ङीप् (४,१,१५)॥

(२७) स्रवन्त्यः। 'स्रु गतौ (भू॰ प॰)',। लट्, शतरि ङीप्।

---

* प॰ १। † ऋ॰ सं॰ ४, ४, ७, २ निगमोऽस्य द्रष्टव्यः।

सर्वदा गमनस्वभावः । "नद्गतिं स्रोत्या नवं च स्रवन्तीः (ऋ० सं० ७,५,२५,३)"—इति निगमः । अत्र स्रोत्या इति विशेषणम् ॥

अस्य स्थाने "रेवत्यः"—इति केषुचित् कोशेषु दृश्यते । तदा ; 'रयिः'—इत्युदकनाम (१२,७३)। रयिरासामस्तीति मतुप्, 'रयेर्मतौ बहुलम् (६,१,३४वा०)'—इति सम्प्रसारणम्। "पतिः सिन्धूनामसि रेवतीनाम् (ऋ० सं० ८,८,३८,१)"—इति निगमः। सिन्धुशब्दो विशेषणम्॥

(२८) ऊर्जस्वत्यः* । 'ऊर्ज बलप्राणनयोः' चुरादिः (प०)। असुन् (उ० ४,१८४)। ऊर्जयतीत्यूर्जो बलं तेन तद्वत्यः । 'अस्मायामेधास्रजो विनिः (५,२,१२१)'—'बहुलञ्छन्दसि (५,२,१२२)'-इत्युक्ते मतुप्,'तसौ मत्वर्थे (१,४,१९)'—इति भ-सञ्ज्ञा। बलवत्यो हि नद्यः यतः स्ववेगेन स्थिरानपि वृक्षादीन् हरन्ति । 'ओजसा वा एता वहन्ती रिवोद्धती रिव आकूलन्ती रिव धावन्ती रिव ( ? )'—इति श्रुतिः ॥

(२९) पयस्वत्यः† । 'पा पाने (भ्वा० प०)' । पिबतेरी चासुन् (६,४,६६ । उ० ४,१८४)। पीयत इति पयः । प्यायतेर्वा (भ्वा० आ०) असुनि बाहुलकात्; 'प्यायः पी (६,१,२८)'—इति निष्ठायां विहितः पी-भावो भवति । वर्द्धतेऽनेन पीतेन प्राणिन इति पयः । उदकं तद्वत्यः‡ ॥

* निघ० ८, ११ । † पु० ७ ।
‡ निगमस्त्वस्य ऋ० सं० ५, १, १४, ९ द्रष्टव्यः ।

(३०) सरस्वत्यः*। सर इत्युदकनामि निरुक्तम् (१२,३८) ; तद्वत्यः सरस्वत्यः† ॥

(३१) तरस्वत्यः। 'तॄ प्लवनतरणयोः (भ्वा०प०)'। असुन् (उ० ४,१८४)। तरन्त्यनेनापदमिति तरो बलं, तद्वत्यः ॥

(३२) हरस्वत्यः। 'हृञ् हरणे (भ्वा०उ०)'। असुन् (उ० ४, १८४)। 'उदकं हर उच्यते'—इति निरुक्तम् (४,१९); तद्धि बहवो हरन्ति, सर्वं ह्रियते वा प्राणिभिरुपभोगाय, तद्वत्यः‡ ॥

(३३) रोधस्वत्यः। रोधसा तीरेण, तद्वत्यः। "चित्रा रोधस्वती रनु (ऋ०सं०१,३,१७,२)"—इति निगमः ॥

(३४) भास्वत्यः§। 'भा दीप्तौ (अदा०प०)'। असुन् (उ० ४, १८४। भा दीप्तिः, तद्वत्यः ; दीप्तिमत्यो हि नद्यः ॥

(३५) अजिराः‖। 'अज गतिक्षेपणयोः (भ्वा०प०)'। 'अजिर-शिशिर-शिथिल-स्थिर-स्फिर-स्थविर-खदिराः (उ० १,५३)'—इति किरच्-प्रत्ययो वी-भावाभावश्च निपात्यते। अजन्ति गच्छन्ति क्षिप्यन्ते प्रेर्यन्ते आसु नाव इति। यद्वा ; 'अजिरम्'—इति क्षिप्रनाम (निघ० २,१५), अजिराः शीघ्रगाः ॥

(३६) मातरः¶। 'माङ् माने (अदा०आ०)'। तृन्-तृचौ, 'नप्तृनेष्टृ... संज्ञायां तृन्-तृचौ** (उ० २,८७)'—इति वच-

---

* पु० ११। † निगमस्त्वस्य ऋ०सं०४, ८, २०, २ द्रष्टव्यः।

‡ निगमस्त्वस्य ऋ० सं० २, ६, २०, १ द्रष्टव्यः।

§ पु० ८।

‖ प० २, १५।

¶ निरु० २, ८. ४, १५. ८, १८. १२, ७।

** 'तृनतृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ'—इति कौ० पाठः।

नात्। 'न षट्स्वस्रादिभ्यः (४.१,१०)'—इति ङीप्-प्रतिषेधः। निर्मीयते प्रजापतिना, मान्ति आसु आप इति वा, मातृवल्लोकस्य रचिका इति वा; नदीमातृक-इति हि देशस्य व्यपदेशः*। "अम्बानं सप्तमातरः (ऋ०सं०७,५,४,४)"–"द्वितीयमा सप्तशिवासु मातृषु (ऋ०सं०२,२,८,२)"—इति च निगमौ॥

(३७) नद्यः†। 'णद अव्यक्ते शब्दे (भू०प०)'। पचाद्यच् (३,१,१३४)। तत्र च 'नदट्'—इति टिदयं पठ्यते (४,१,१५भा०), ततो ङीप्। नदन्ति नद्यः। * * *। "सो अर्णवो न नद्यः समुद्रियः (ऋ०सं०१,४,१९,२)"—"प्रतीपं शापं नद्यो वहन्ति (ऋ०सं०७,१,२०,४)"—इति च निगमौ॥

॥ इति सप्तत्रिंशन्नदीनामानि ॥ १३ ॥

अत्यः(१)। हयः(२)। अर्वा(३)। वाजी(४)। सप्तिः(५)। वह्निः(६)। दधिक्राः(७)। दधिक्रावा(८)। एतग्वा(९)। एतशः(१०)। पैद्वः(११)। दौर्गहः(१२)। औच्चैःश्रवसः(१३)। तार्क्ष्यः(१४)। आशुः(१५)। ब्रध्नः(१६)। अरुषः(१७)। मांश्चत्वः(१८)। अव्ययः(१९)। श्येनासः(२०)। सुपर्णाः(२१)।

---

* "देशो नद्यम्बु-वृष्ट्यम्बु-सम्पन्नव्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्"—इति अम० को० २, १, १२।

† प० ५, ३। निघ० २, २४. ९, २५. ११, ४९।

(९) "एतग्वः" क-ग-व्यतिरिक्तेषु। ऋ० सं० १, ८, ७, ३—इति च तस्य निगमः

(१३) क-तिरिक्तेषु सर्वत्र "औच्चैश्रवसः" इति।

(१८) "माःश्चत्वः" ग। "मांश्चत्वः" ङ, अस्त्येवमपि निगमः ऋ० सं० ७, ४, २१, ३। ऋ० सं० ५, ४, ११, ३ इत्यस्य व्याख्याने—"मां श्चते।"—इति पदकारसम्मतः, "मश्चतुः"—इति माधवस्य च।

(१९) "अव्ययः" C. D. F।　　(२०) "श्येनासः" ख।

**पतङ्गाः(२२)। नरः(२३)। ह्वार्याणाम्(२४)। हंसासः(२५)। अश्वाः(२६)। इति षड्विंशतिरश्वनामानि* ॥ १४ ॥**

(१) अत्यः† । 'अत सातत्यगमने (भू० प०)'। 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्त्तरि यत्। अथ वा 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत् प्रत्ययो द्रष्टव्यः। अतति सततं गच्छति, गच्छत्यनेनाश्वारोह इति वा। "वामत्या अपि क्रतु वहन्तु (ऋ० सं० ४,१,३०,४)"—इति निगमः ॥

(२) हयः। 'हय गतिविक्रान्ते (भू० प०)'। पचाद्यच् (३,१,१३४)। हयति गच्छत्यध्वानं, विक्रमते वा। 'अश्वादीनां गतिविशेषो विक्रमणम्'—इति वृत्तिः। "हयो न विद्वाँ अयुजि स्वयं, धुरि (ऋ० सं० ४,२,२८,१)"—"हयोसि (ता० ब्रा० १,१,७)"—इति च निगमौ ॥

(३) अर्वा‡। 'ऋ गतिप्रापणयोः (भू० प०)'। 'स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् (उ० ४,१०९)'—इति वनिप् प्रत्ययः। गच्छत्यध्वानं प्रापयत्यध्वनः पारमिति वा। 'अर्वैरणवान् (निरु० १०,३१)'—इति भाष्ये स्कन्दस्वामी। भाष्ये तु अर्वैरणवान् इत्यर्थप्राप्तवचनं द्रष्टव्यम्। अर्त्तेरन्तर्णीतण्यर्थाद्वा 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिनि रूपम्। प्रेर्यते कशादिना प्रतिवचणं पार्ष्ण्यादिनेति वा। यद्वा; * * * अन्यमाश्रितः अस्वतन्त्र इत्यर्थः अश्वो ह्यारोहि-

(२४) "वार्याणाम्" म. iid।
* "इत्यश्वनामानि" म।
† निरु० ४,१३।
‡ निरु० १०,३१।

परतन्त्रः । "ब्रु॒न्नो व॒न्वन् क्रत्वा॒ नार्वा॑ (ऋ०सं४,५,१४,४)"—इति निगमः॥

(४) वाजी* । 'वज गतौ (भू०प०)'। घञ्। वाजो वेगः । 'रंहस्तरणिः प्रसभो वेगो रयो जवो वाजः'—इति निघण्टुः(?)। 'अजिव्रज्योश्च (७,३,६०)'—इत्यत्र न्यासः—'चकारस्यानुक्तसमुच्चयार्थत्वाद् वजेरपि कुत्वप्रतिषेधसिद्धे भवति वाजः वाज्यम्'—इति । वाजोऽस्यास्ति 'अत इनिठनौ (५,२,११५)' वाजी । वेगवान् ह्यश्वः । यद्वा; वाजोऽन्नं, देवतात्वे हविर्लक्षणेन, अश्वजातीयत्वे तज्जात्युचितमुद्गाद्यन्नेन तद्वान्। 'वाजाः पक्षाः अभूवन्नस्येति वाजी'—इति क्षीरस्वामी । वेजनवान् वा । वेजनं कम्पनं कम्पितः स्वयं, कम्पयिता वा परेषा मित्यर्थः । अत्र 'ओ विजी भयचलनयोः (रु०प०)'—इत्यस्माद् वाजशब्दः पृषोदरादित्वात् सिद्धः। "वि॒मोच॑नं वा॒जिनो॒ रास॑भस्य (ऋ०मं० ३,३,१८,५)"—इति निगमः ॥

(५) सप्तिः†। 'षप समवाये (भू०प०)। 'षपिनसिवसिपदिभ्यस्तिप्' —इति श्रीभोजदेवः। सपन्ति सङ्ग्रामेषु सहसामेवेति । गतिकर्मणो वा सप्तिः। 'सपतेः स्पर्शार्थात्'—इति माधवः। 'सृप्ट गतौ (भू०प०)' —अस्माद्वा ति-प्रत्यये गुणे च रेफलोपो बाहुलकात्, सर्पति सप्तिः । "जु॒षा॒ण इ॑न्द्र॒ सप्ति॑भि॒र्न॒ आ ग॑हि (ऋ०सं० ६,१,८,२)"—इति निगमः

(६) वह्निः‡ । 'वह प्रापणे (भू०उ०)' । 'वहिश्रिश्रुयुद्रुग्लाहा-

† निघ० ९, २।
‡ निघ० १, ४; ९. ८, १।

त्वरिभ्यो नित् (उ० ४,५१)'—इति नि-प्रत्ययः। "मे त्वा वहन्ति वह्नयः (ऋ० मं० १,१,२६,६)"—इति निगमः॥

(७) दधिक्राः*। 'तत्र दधिक्रा इत्येतद् दधत् क्रामतीतिवा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा (निरु० २,२७)'—इत्यत्र स्कन्दस्वामी—'दधिक्राः; दधत् धारयत् स्वारोहिणं क्रामति; दधत् क्रन्दति हर्षार्थं ह्रेषारवं करोति; दधदित्याकारो भवति अधिष्ठितम्; ईषदवनत-मध्यभागः, उद्धूत-कन्धरः, कुञ्चितघोणः, स्तिमित-चक्षुः, कर्णशुक्तिकाकारो भवति'—इति। सर्वत्र दधच्छब्दः पूर्वपदं तस्य पृषोदरादित्वात् (६,३,१०९) तकारलोप इकारान्तादेशश्च। क्रामतेः क्रन्दते राङ्पूर्वात् करोतेर्वोत्तरपदं, तत्र, क्रामतेः 'जनसन-खनक्रमगमो विट् (३,२,६७)'—इति विट्, 'विड्वनोरनुनासिकस्यात् (६,४,४१)'—इत्यात्वम्। क्रन्देः 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति विच्, व्यत्ययेनानुनासिकस्यात्वं, दकारलोपश्च पृषोदरादित्वेन करोतेः क्विप् युक् चानुवर्त्तते। आङ् च धातोः परो यणादेशः; दधिक्राः। "क्रतुं दधिक्रा अनु सन्तवीत्वत् (ऋ० मं० ३,७,१४,४)"—इति निगमः॥

(८) दधिक्रावा। अत्र 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिप्। अन्यत्सर्वं पूर्वेण समानम् अर्थश्च। "दधिक्रावेषमूर्जं स्वर्जनत् (ऋ० मं० ३,७,१४,२)"—इति निगमः॥

(९) एतग्वा। 'इण् गतौ (अदा० प०)'। 'हसिमृग्रिण्वामिद-मिलूपूधूर्विभ्यस्तन् (उ० ३,८३)'—इति तन् प्रत्ययः कर्मणि।

* प० ५, ४। निघ० १, १०; १८. १०, १०।

'भूतेऽपि दृश्यन्ते (३,३,२)'—इत्युक्तेः भूतेऽपि भवन्ति। एतं प्राप्तम्। 'गम्लृ गतौ (भू०प०)', 'इण्शीभ्यां वन् (उ० १,१५०)'—इति बाहुलकाद् वन् प्रत्ययः टि-लोपश्च। गम्यत इति ग्वः गन्तव्यो देशः। एतः प्राप्तो गन्तव्यो येन स एतग्वः। अश्वस्तु शैघ्रातिशयेन गमनारम्भ एवाविलम्बितं गन्तव्यदेशं प्राप्नोतीति एत उच्यते। 'एतग्वाः प्राप्तगन्तव्याः'—इति माधवः। यद्वा; एतशब्दः शुक्लपर्यायः, गमेः क्विप्, 'गमः क्वौ (६,४,४०)'—इत्यनुनासिकलोपः, 'ऊङ् च गमादीनाम् (६,४,४०वा०)'—इत्युकारोऽन्तादेशः। आगमनमागूः। धातूपसर्गयोः स्थानविपर्ययः प्राप्तः। एतस्य शुक्लवर्णस्यागमनमस्यास्ति मत्वर्थीयस्य लुक्। एतग्वाः शुक्लवर्णा अश्वाः। यद्वा; एतः शुक्लवर्णोऽस्यास्तीति 'केशाद्वोऽन्यतरस्याम् (५,२,१०९)'—'अन्येभ्योऽपि दृश्यते (५,२,१०९वा०)'—इति व-प्रत्ययः, गकारउपजनः। 'एतस्य श्वेतवर्णस्य ग्वो मत्वर्थीयो भवति'—इति माधवः। सर्वेषामश्वानां यत्र क्वापि शौक्लमस्ति रूपेण वा। एतग्वा-शब्दोऽश्वे वर्त्तते। तथाच 'विशाखाषाढौ मन्थदण्डयोः ( ? )'—इत्यत्र पदमञ्जरी—'विशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्त्तेते, तेन यथाकथञ्चिच्छाधुत्वानुशासनार्थं व्युत्पत्तिः क्रियते'—इति। तेनामत्वर्थेऽपि न दोषः। 'एतग्वा'—इत्याकारान्तपाठो यथादृष्टम्। "एतग्वा चिन्न सुयुजा युजानः (ऋ०सं० ५,५,१७,२)"—"एतग्वा चिद्य एतशा युयोजते (ऋ०सं० ६,५,९,२)"—इति च निगमादौ 'सुपां सुलुग् (७,१,३९)'—इति विभक्तेराकारः॥

(१०) एतशः। 'इण् गतौ (अदा०प०)'। 'इणस्तशन्तशसुनौ

(उ० ३,१४५)'—इति तशन्-प्रत्ययः। एतशः गमनकुशलः। यद्वा; एत-शब्दात् लोमादित्वात् (५,२,१०) शम्*। एतद्। एतच्छरीर एतशः; पृषोदरादित्वात् (६,३,१०९) सर्वसिद्धिः। "एतशो वहति धूर्षु युक्तः (ऋ० सं० ५,९,५,२)":—"यदेतशेभिः पतरै रथर्यसि (ऋ० सं० ७,८,१२,३)"—इति च निगमौ ॥

(११) पैद्वः। 'पद गतौ (दि० आ०)'। 'कृग्रृशृदृभ्यो वः (उ० १,१५३)' इति व-प्रत्ययो बाहुलकात्, अकारस्यैकार. पृषोदरादित्वात् (६,३,१०९)। पद्यते गच्छति पद्यतेऽनेनेति वा। 'पदेः पैद्वो गतिक्रियायाम्'—इति माधवः। "पैद्वो न हि त्व महि नाम्नां हन्ता (ऋ० सं० ७,३,२४,४)"—इति निगमः ॥

(१२) दौर्गहः। दुर्-शब्दे उपपदे ग्लहतेः (क्र्या० उ०) गाहेर्वा (भ्वा० आ०) 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् (३,३,१२६), पृषोदरादित्वात् (६,३,१०९) ग्लहतेः रेफलोपः, गाहेर्ह्रस्वत्वम्। अश्व हृदयान्मिश्रैर्ग्रहीतु मशक्यत्वात् दुर्गह इत्युच्यते। दुर्गह एव दौर्गहः, प्रज्ञादित्वादण् (५,४,३८)*। यद्वा; 'दुःखेन गहितव्यत्वात् दुर्गाहं जलमुच्यते'—इति माधवः, तत्र भवो दौर्गहः, 'तत्र भवः (४,३,५३)'—इत्यण्; 'अप्सु योनिर्वा अश्वः(शत० ब्रा० ५,४,४,४)'—इति श्रुतिः। "सप्तऋषयो दौर्गहे बध्यमाने(ऋ० सं० ३,७,१८,३)"—इति निगमः॥

(१३) औच्चैःश्रवसः। अमृतमन्थने जातोऽश्व उच्चैःश्रवाः। उच्चैर्महच्छ्रवः कीर्त्तिरस्येति, 'तस्यापत्यम् (४,१,९२)'—इत्यण्। तत्कुलीना ह्यश्वाः सर्वे। निगमोऽन्वेषणीयः† ॥

* गणपाठे तु नवात्मके लोमादिगणे न दृश्यते एतशब्दः।

† "प्रेद्धिं धावन्तं हर्यो रौच्चैःश्रवसमब्रुवन्"—इति अथ० सं० २०,१२८,१५ द्रष्टव्यः।

(१४) तार्क्ष्यः* । तूर्णमश्नुते गन्तव्यं, तीर्णे अन्तरिक्षे क्षियतीति तार्क्ष्यः । तूर्ण-शब्दात् तीर्ण-शब्दाद्वा पूर्वपदम्, अश्नोतेः क्षीयते र्वोत्तरपदम्; पृषोदरादिः (६,३,१०९)। अश्वो हि वेगवशादाकाशे गच्छन्निव हि दृश्यते प्रेक्षकैः । यद्वा; वेगेन तार्क्ष्यमादृश्यात् तार्क्ष्य इत्युच्यते। 'तुरङ्गगरुड़ौ तार्क्ष्यौ (अम०को०३,३,१४५)'—इत्यत्र तृक्षस्यापत्यं तार्क्ष्यः, गर्गादित्वात्'—इति क्षीरस्वामी । निगमोऽन्वेषणीयः‡ ॥

(१५) आशुः§ । 'अशूङ् व्याप्तौ (स्वा० आ०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १,१)' । अश्नुतेऽध्वानम् । अश्नातेर्वा बाहुलकादुण् (३,३,१) । अश्नाति महाशनो भवति । आशुरिति क्षिप्रनाम (निघ० २,१५), शीघ्रो वा । "द्रवद्भिरश्वैराशुभिः (ऋ० मं० ६,३,१३,८)"—इति निगमः ॥

(१६) ब्रध्नः‖ । अत्र भास्करमिश्रेण—'ब्रध्नम् परिवृढम्, अरुषमारोचनम्'—इति व्याख्यातम्। वाजसनेये तु,—"युञ्जन्ति ब्रध्नमरुषञ्चरन्तम् (ऋ० मं० १,१,११,१)"—इत्यत्र, उवटः—'अश्वं युञ्जन्ति ब्रध्नमिति, अश्वोऽत्रादित्वत् स्तूयत इति वा' ॥

(१७) अरुषः¶ । 'ऋ गतिप्रापणयोः (क्र्या० प०)'। ऋणाति अभ्यामुखं गच्छति, अर्यते वा तदर्थिभिः । यद्वा; अरुषमिति रूपनाम (निघ० ३,७), मत्वर्थीयोऽकारः, प्रशस्तरूप इत्यर्थः । "हरिं मृजन्त्यरुषो न युज्यते (ऋ० मं० ७,२,२७,१)"—इति निगमः ॥

---

* प० ५, ४ । निरु० १०, २७ । † तार्क्ष्यो वायुः (निरु० १०, २८ ) ।
‡ 'त्यमू षु ८, ८, २६, १)'—इत्येष ऋचस्यापि निगमो भवितुमर्हति ।
§ प० २, १५ । निरु० ६, १. ९, ९ ।
‖ प० २, २ । ¶ पु० ८ ।

(१८) मांश्चत्वः। 'मन ज्ञाने (दि॰ श्रा॰)'। पदस्य न-लोपाभावः पृषोदरादित्वात् (६,३,१०९)। "महीमे अस्य वृषनाम शूषे मांश्चत्वे वा पृशने वा वधत्रे (ऋ॰ सं॰ ७.४,२१,४)"—इत्यत्र, माधवस्य प्रथमभाष्यम्—'मही महती, इमे, अस्य सोमस्य, शूषे सुखकरे भवतः। ये च कर्मणी मांश्चत्वे। अश्वनामैतत्। मन्तु चरतीति। अश्वैः क्रियमाणे युद्धे बाहुयुद्धे, वधत्रे शत्रूणां हिंसनशीले भवतः। सोऽयं अश्वापयच्छत्रूनच्छेदयच्च। छेदनं प्रद्रावणम्। अथ प्रत्यक्षकृतः'—इत्यादि। अत्र मांश्चत्वस्य * * *। समाम्नायपाठेषु* मंश्चत्व इति दृश्यते। 'बभ्रुं मांश्चतोर्वरुणस्य बभ्रुम् (ऋ॰ सं॰ ५,४,११,३)'—इत्यत्र माधवः—'मंश्चतु रित्यश्वनाम * * *। इह तु वरुणविशेषणम्' मंश्चतोर्वरुणस्य महान्तं बभ्रुम्'—इत्यभाषयत्†; निरूपणीयम्॥

(१९) अव्यथयः‡। एषामष्टावुत्तराणि बहुवदित्युक्तम् (निरु॰ २,२४७)', असन्देहार्थमेतदादीनि बहुवचनान्तानि नामानि। 'व्यथ भयचलनयोः (भ्वा॰ श्रा॰)'। 'इन् सर्वधातुभ्यः (उ॰ ४,११४)'—इतीन् प्रत्ययः, नञ्-समासः। न व्यथन्त्यभि सङ्ग्रामेषु अव्यथयः दृष्टे भयेऽप्यव्यथः स्यादिति भावः। यद्वा; व्यथिरिति क्रोधनाम (निघ॰ २,१३), आरोहण-ताडन-बन्धनादिभिर्न क्रुध्यन्तीत्यर्थः। "पतत्रिभिरश्रमैरव्यथिभिः (ऋ॰ सं॰ ५,५,१६,७)"—इति निगमः॥

* निघण्टुसमाम्नायपाठेषु अत्याद्यश्वनामसु इत्यर्थः।

† संहितापाठे 'मांश्चतोः'—इत्येव, पदपाठे तु 'मंश्चतोः'—इति, व्याख्याकालेऽपीह 'मंश्चतोः'—इत्येव प्रतीकमवलम्बितमिति ध्येयम्।

‡ न एवमेव पङ्क्तिर्योजनस्य।

(२०) श्येनासः*। 'श्येनः शंसनीयं गच्छति (निरु० ४,२४)'—इति भाष्यं। अपि 'आज्जसेरसुक् (७,१,५०)'। "श्येनासो न दुवसनासो अर्थम् (ऋ० सं० ३,५,५,५)"—इति निगमः॥

(२१) सुपर्णाः†। 'पॄ पालनपूरणयोः (जु० प०)'। 'धापॄवस्यज्यतिभ्यो नः (उ० ३,६)'—इति न-प्रत्ययः। सुपाल्यन्ते यवसादिप्रदानेन, पूरयन्ति वा नभः हेषारवादिना सङ्ग्रामसाधनत्वात्। पतते र्वा बाहुलकात् न-प्रत्ययस्तकारस्य रेफः, शोभनगमना इत्यर्थः। निगमोऽन्वेषणीयः॥

(२२) पतङ्गाः। 'पत्लृ गतौ (भ्वा० प०)'। 'पतेरङ्गच् (उ० १, ११७)'। यद्वा; * * * खच्-प्रकरणे 'गमेस्तु खच्युपसङ्ख्यानम्‡ (३,२,६८वा०)'—इति खच्, खच्च डिद्वा वक्तव्यः (३,२,६८वा०), 'खित्यनव्ययस्य (६,३,६६)'—इति मुम् पतङ्गा इति। 'अश्वाः पूर्वं पक्षिणो भूवन्'—इति श्रूयते। "रथे युक्तास आशवः पतङ्गाः (ऋ० सं० १,८,१८,४)"—इति निगमः। आशुशब्दो विशेषणम्॥

(२३) नरः§। 'णीञ् प्रापणे (भ्वा० उ०)'। 'नयते र्डिच्च (उ० २,९३)'—इति ऋन् प्रत्ययः। अपि नरः। नयन्ति आरोहिणम्, कर्मणां नेतारो वा नरः। "त्वं सूरो हरितो रामयो नॄन् (ऋ० सं० १,८,२६,३)"—इति निगमः। 'नॄन् अश्वान्'—इति माधवः॥

(२४) ह्वार्याणाम्। 'ह्वृ कौटिल्ये (भ्वा० प०)'। 'ऋहलोर्ण्यत् (३, १,१२४)'। खलीनाद्याकर्षणे मुखादिष्वङ्गेषु कुटिलीक्रियन्ते ह्यश्वाः।

---

* प० ५, ५। निघ० ४, २४. ११, १। † पु० ५।
‡ वार्त्तिकस्वरूपन्तु 'गमेः सुपि वाच्यः'—इति।
§ प० १, १। निघ० ५, १।

यद्वा; क्ररतिरत्तिकर्मा (निघ० २,८), 'कृत्यल्युटो बहुलम् (३,३, ११३)'—इति ण्यत्। क्रत्यर्थम् अश्वाः क्रार्याः। 'क्रार गतौ'—इति माधवः। "क्रार्याणाम्"—इति यथादृष्टपाठः। "पुत्रो न क्रार्याणाम् (ऋ० सं० ४,१,१,४)"—इति निगमः॥

(२५) हंसासः*। 'हन हिंसागत्योः (अदा० प०)'। 'हृतृवदिहनिकमिकषि-(युध्यवि)-भ्यः सः (उ० ३,५८)'—इति स-प्रत्ययः। घ्नन्ति गच्छन्त्यध्वानं, गच्छन्तः पद्भिरध्वानं हिंसन्ति वा (ऐ० ब्रा० ५, १,१)। "हंसासो ये वां मधुमन्तो अस्निधः (ऋ० सं० ३,७,२१,४)"—इति निगमः॥

(२६) अश्वाः†। 'अशू व्याप्तौ (स्वा० आ०)'। 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् (उ० १,१४८)'—इति क्वन् प्रत्ययः। अश्नातेर्वा बाहुलकात्। अश्नुवतेऽध्वानं महाशना भवन्तीति च। * * *। "यदाविपुर्दिव्यमज्ममश्वाः (ऋ० सं० २,३,१२,५)"—इति निगमः॥

॥ इति षड्विंशतिरश्वनामानि ॥ १४ ॥

'दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय (निरु० २,२८)'—इतिहासपक्षेऽपि पूर्वपक्षापरपक्षावहोरात्रे वा ॥

**हरी इन्द्रस्य**(१)। **रोहितोऽग्नेः**(२)। **हरित आदित्यस्य**(३)। **रासभावश्विनोः**(४)। **अजाः पूष्णः**(५)। **पृषत्यो मरुताम्**(६)। **अरुण्यो गाव उषसः**(७)। **श्यावाः सवितुः**(८)।

* निरु० ४,१७। † प० ५,१। निरु०१,१२. २,२७. ९,१।

(७) "अरुण्यो गाव उषसाम्"—इति कतिपयेषु मयेक्षितेषु, परं स्कन्दस्वामिकृतव्याख्याविरुद्धः।

विश्वरूपा बृहस्पतेः(९)। नियुतो वायोः(१०)। इति दशाऽऽदिष्टोपयोजनानि* ॥ १५ ॥

"(१) हरी इन्द्रस्य। सोमपानादिक्रियायाः साधनत्वात् ॥

(२) रोहितोऽग्नेः। नित्यपक्षे ज्वाला-अश्वा व्याप्तिमत्यः ॥

(३) हरित आदित्यस्य । हरितवर्णा रश्मयः प्रातरादित्यस्य ॥

(४) रासभावश्विनोः । अश्विभोगकाले रासभवर्णौ, तत्कालोचितेन श्यामलेन वर्णेनायं व्यपदेशः ॥

(५) अजाः पूष्णः। अजा अजनात्। पूष्णः काले रश्मयो गच्छन्ति ॥

(६) पृषत्यो मरुताम्। प्रावृषि सर्वतः पृषत्यो विचित्रा मेघमाला मरुताम् ॥

(७) अरुण्यो गाव उषसः। उषसः काले तमोऽभिभवे अरुणिमाया सागन्तवः ॥

(८) श्यावाः सवितुः । सवितुः काले श्यामवर्णा भवन्ति ॥

(९) विश्वरूपा बृहस्पतेः। 'छन्दांसि वै विश्वरूपाणि (शत० ब्रा० ८,४)'—इति श्रुतेः ॥

(१०) नियुतो वायोः। अप्-प्रवृत्तौ तृणपर्णानामवादेः सञ्चरणान्मिश्रणान्नियुतः ॥"—इति स्कन्दस्वामिग्रन्थाः ॥

शब्दव्युत्पत्तिस्तावत् प्रदर्श्यते—

(१) हरी†। 'हृञ् हरणे (भू० उ०)'। 'हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्च (उ० ४,११५)'—इतीन्-प्रत्ययः। हरतो रथम्।

* "इत्यादिष्टोपयोजनानि" ग ।

† प० १, १। निघ० ४, १९. ०, १४ ।

अत्र ताण्ड्यकम्*—'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां हीदं सर्वं हरति (६,१,९)'—इति; अस्मिन् पक्षे करणे इन्। 'ऋक्सामे वा इन्द्रस्य हरी'—इत्यैतरेयब्राह्मणम् (२,३,६)। 'ऋक्सामे वै हरी' —इति यजुर्ब्राह्मणम्† (४,४,३६)। "इन्द्रो हरी युयुजे अश्विना रथम् (ऋ० सं० २,३,५,१)"—इति निगमः॥

(२) रोहितः‡। 'रुहरुहियुषिभ्य इतिः (उ० १,९४)'—इति इति-प्रत्ययः। रोहन्ति आरोहन्ति रथं वहन्त्यादित्यमिति रोहितः। "रोहिदश्व शुचिव्रत (ऋ० सं० ६,३,३२,१)"—इति निगमः॥

(३) हरितः§। पूर्ववत् इतिः (उ० १,९४)। हरन्ति रथं तमो वा स्वभासा। यद्वा; हरिच्छब्दः पीतवर्णवचनो हरिद्वर्णा वा। "यदेतदयुक्त हरितः सधस्थात् (ऋ० सं० १,८,७,४)"—इति निगमः॥

(४) रासभौ। 'रासृ शब्दे (भू० आ०)'। 'रासिवल्लिभ्याञ्च (उ० ३,१२१)'—इत्यभच्-प्रत्ययः। रासते शब्दं करोतीति रासभः, तौ रासभौ। 'गर्दभरथेनाश्विना उदजयताम्'—इति ब्राह्मणम् (ऐ० ब्रा० ४,२,३)। "युञ्जाथां रासभं रथे (ऋ० सं० ६,६,८,२)"—"तद्रासभो नासत्या सहस्रमाजा (ऋ० सं० १,८,८,२)"—इति च निगमौ॥

(५) अजाः‖। 'अज गतिक्षेपणयोः (भ्वा० प०)'। पचाद्यच् (३,१,१३४)। वीभावाभावो व्यत्ययेन। अजन्ति गच्छन्ति सर्वतः क्षिपन्ति वा तमः। "अहेळमानो ररिवाँ अजाश्व अवस्यतामजाश्व (ऋ० सं० २,२,२,४)"—इति निगमः॥

* सामवेदाद्यब्राह्मणानामादिमम्। † शतपथाभिधानमिति यावत्।
‡ पृ० १२। § पृ० ९। ‖ निघ० ४, २४. ६, ४।

(६) पृषत्यः । 'पृषु वृषु सेचने (भू०प०)' । 'वर्त्तमाने पृषन्महत् (६,४,३०वा०)'—इत्यादिना सिद्धम् । 'पृषत्यः मरु मक्तताः'—इति माधवः। तदा 'पुंयोगादाख्यायाम् (४,१,४८)'—इति ङीष् । "उपो रथेषु पृषतीरयुग्ध्वम् (ऋ०सं०१,३,१९,१)"—इति निगमः ॥

(७) गावः* । व्याख्याता रश्मिनामसु (१,५,२) । गन्तारः । "युङ्क्ते गवा मरुणानामनीकम्(ऋ०सं०२,१,८,१)"—इति निगमः॥

(८) श्यावाः† । 'श्यैङ् गतौ (भू०आ०)' । 'कृगशृदृभ्यो वः (उ०१,१५३)'—इति बाहुलकाद् व-प्रत्ययः । श्यावो धूसरारुणो वर्णः, तद्वन्तोऽपि श्यावाः; 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः (१,४,१९वा०)'। "वि जनाञ्छ्यावाः शितिपादो अख्यन् (ऋ० सं०१,३,६,५)"—इति निगमः ॥

(९) विश्वरूपाः‡ । नानावर्णाश्वाः । "बृहस्पतिश्च सविता च विश्वरूपैरिहागतम् ( ? )"—"बृहस्पतिर्विश्वरूपा मुपाजत (ऋ० सं०२,३,५,१)"—इति च निगमौ ॥

(१०) नियुतः§। नि-पूर्वात् 'यु मिश्रणे (अदा०प०)'—इत्यस्मात् क्विप् । नि युवन्ति मिश्रयन्ति तृणपर्णादीनि, आत्मानं रथेन वा । यद्वा; नि-पूर्वात् 'यमु उपरमे (भू०प०)'—इत्यस्मात् 'मृग्रो रुतिः (उ०१,९१)'—इति बाहुलकात् उति-प्रत्ययष्टिलोपश्च । नियम्यन्ते सारथिना नियुतः । "नियुद्भिर्वा यविष्ठये दुरोणे (ऋ०सं०५,६, १४,३)"—इति निगमः ॥

इति दशादिष्टोपयोजनानि ॥ १५ ॥

* निघ० १२, ७ । † पृ० ७ ।
‡ निघ० १०, २४. ११, २९. १२, ८; २८ । § निघ० ५, २५ ।

भ्राजते[1]। भ्राशते[2]। भ्राश्यति[3]। दीदयति[4]। शोचति[5]। मन्दते[6]। भन्दते[7]। रोचते[8]। द्योतते[9]। ज्योतते[10]। द्युमत्[11]। इत्येकादश ज्वलतिकर्माणः* ॥ १६ ॥

(१) भ्राजते। 'टु भ्राजृ दीप्तौ' भ्वादिरात्मनेपदी। "भ्राजन्ते श्रेणिदन् (ऋ० सं० ७,७,२,३)" इति निगमः ॥

(२),(३) भ्राशते। भ्राश्यति। 'टु भ्राशृ भ्लाशृ दीप्तौ' भ्वादी आत्मनेपदिनौ। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः (३,१,७०)'—इति पक्षे श्यन्, परस्मैपदित्वं छान्दसम्। "नि तिग्मानि भ्राशयन् भ्राश्यानि (ऋ० सं० ८,६,२०,५)" इति निगमः। 'भ्राश्यति शिलाजितादीनि'—इति माधवः। भ्लाश्यतीति पाठान्तरम्। भ्राश्यतीतिवत् प्रक्रिया ॥

(४) दीदयति†। नैरुक्तो धातुः (निरु० १०,१८)। यद्वा; 'दीधीङ् दीप्तिदेवनयोः (अदा० आ०)'—इत्यस्य धकारस्य दकारो व्यत्ययेन, 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः; परस्मैपदित्वं छान्दसम्। "यो अनिध्मो दीदयदप्स्वन्तः‡ (ऋ० सं० ७,७,२४,४)"—इति निगमः ॥

(५) शोचति‡। 'शुच शोके' भ्वादिः परस्मैपदी, दीप्त्यर्थत्वं

---

(३) "भ्राश्यति"—इत्यपि टीकासम्मतं परं न क्वापि दृश्यते। "भ्राशते" ग।
"भ्लाश्यते" C. D। "भ्लाश्यते" F नूनमयं लिपिप्रमादः।

(९), (१०) "ज्योतते। द्योतते"—इति व्यत्ययपाठः क।

* "इति ज्वलतिकर्माणः" ग। "इत्येकादश ज्वलतिकर्माणो धातवः" क।

† निरु० १०,१८। ‡ निरु० १,१. १०,४१।

त्वनेकार्थत्वाद्धातूनाम्। "अर्जस्रेण शोचिषा शोशुचानः (ऋ० सं० ५, २, ७, ४)"—इति निगमः॥

(६) मन्दते*। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' अत्र दीप्त्यर्थः। भ्वादिरात्मनेपदी। निगमोऽन्वेषणीयः॥

(७) भन्दते†। 'भदि कल्याणे सुखे च' भ्वादिरात्मनेपदी, दीप्त्यर्थत्वं पूर्ववत्। निगमोऽन्वेषणीयः॥

(८) रोचते‡। 'रुच दीप्तौ' चुरादिरात्मनेपदी कथादिश्च "वि यत् सूर्यो न रोचते बृहद्भाः (ऋ० सं० ५, २, ११, ४)"—इति निगमः॥

(९) द्योतते§। 'द्युत दीप्तौ' भ्वादिरात्मनेपदी। "अदिद्युतत् (ऋ० सं० ४, ५, १७, ४)"—इति निगमः॥

(१०) ज्योतते‖। 'ज्युतजुत दीप्तौ' भ्वादिरात्मनेपदी। यकारश्छान्दसः। यद्वा; द्युतेर्निरुक्तोऽतः। 'द्युतेरिसिन्नादेश्च जः (उ० २, १०७)'—इति इसिन्-प्रत्यये विहितो जो बाहुलकादत्रापि भवति। निगमोऽन्वेषणीयः॥

केचिदस्य स्थाने "छन्दते"—इति पठन्ति¶। 'छदि संवरणे'—इति चुरादिः परस्मैपदी, व्यत्ययेनात्मनेपदं णिलोपः; 'छन्दस्युभयथा (३,

* पा० ३, १४। निघ० ३, ४. ५, २५. ६. ४. २१, ६
† पा० ३, १४। निघ० ४. २।
‡ निघ० २, २०. ३. ११. १२, ७९।
§ निघ० ११, १६।
‖ निघ० २, १।
¶ पा० २, ६. ३, १४। निघ० ६, ८।

४,११७)'—इत्यार्द्धधातुकत्वाद्वा टिलोपः। निगमदर्शनाभिप्रायः॥

(११) द्युमत्*। द्योतते द्युत्, सम्पदादित्वात् (३,३,९४ वा०) क्विप्। द्युरस्तीति मतुप्, पृषोदरादित्वात् (६,३,१०९) तकार-लोपः। यद्वा; 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिग-तिषु (दि०प०)'—इत्यस्मात् दीप्त्यर्थात् दिवेर्दीव्यतीति क्विप् प्रत्यये द्योतनं दिव्, ततो मतुपि 'दिव उत् (६,१,१३१)'—इत्युत्वं दीप्तिमदित्यर्थः। समाम्नाये यस्य पदार्थस्य यद्वाचक माख्यातं नाम च तत्सहैवान्यत्रापि पठ्यते। तथाहि—कान्तिकर्मसु (निघ० २,६) उश्मगादि, व्याप्तिकर्मसु (निघ० २,१८) आप्नुवान इत्यादि, महन्नामसु (निघ० ३,३) ववक्षिथ विवक्षसे, पश्यतिकर्मसु निघ० ३,११) विचर्षणिरित्यादि; एवं मिहापि द्युमदिति नाम-पदस्य धातुमध्ये पाठः किञ्चित् द्योततेर्विलक्षणत्वाद्दिवेश्चानेकार्थत्वात् ज्वलनार्थत्वख्यापनार्थम्। "द्युमदमीवचातनं रक्षोहा (ऋ०सं०५, २,११,६)"—इति निगमः॥

इत्येकादश ज्वलतिकर्माणो धातवः॥ १६॥

जमत्[१]। कल्मलीकिनम्[२]। जञ्जणाभवन्[३]। मल्मलाभवन्[४]। अर्चिः[५]। शोचिः[६]। तपः[७]। तेजः[८]। हरः[९]। हृणिः[१०]। शृङ्गाणि[११]। शृङ्गाणि[१२]।

* निघ० ६, १९
(८) "पयः" च।
(१०) "घृणिः" क-ग-व्यतिरिक्तेषु "घृणिः" ग।
(११) "भ्रङ्गाः" च

**इत्येकादश ज्वलतो नामधेयानि नामधेयानि* ॥ १७ ॥**

**गौ र्हेमा ऽम्बरं स्वा१ः खेदय आना अयावी विभावरी वस्तो रद्रिः श्लोको ऽर्णो ऽवनयो ऽप्यो हरीन्द्रस्य भ्राजते जमदिति सप्तदश† ॥**

**इति निघण्टौ प्रथमाध्यायः समाप्तः‡ ॥ १ ॥**

(१) जमत्§ । अत्र स्कन्दस्वामी—'तावन्त्येवोत्तराणि जमदित्यादीनि ज्वलतो दीप्तिमतः मलस्य नामधेयानि * * *'—इति । 'जमु अदने (भू०प०)'। "गृणाना जमदग्निना (३,४,११,१८)" —इत्यादिषु जमच्छब्द उदाहरणम् ॥

(२) कल्मलीकिनम् । '* * * कल्मलीकं भवेत्'—इति माधवः। पृषोदरादिः, उत्तरे च। "नमस्या कल्मलीकिनं|| नमोभिः (ऋ०सं० २,७,१७,३)"—इति निगमः॥

(३) जञ्जणाभवन् । "अर्चिषा जञ्जणाभवन् (ऋ०सं० ६,३,३०,४)"—इति निगमः ॥

(४) मल्मलाभवन् । "मल्मलाभवन्तीत्यासादयामि ( ? ¶ )" —इति निगमः ॥

---

* "एकादश एकादशेति ज्वलनः" म । "इत्येकादश ज्वलतो नामानि" च ।

† ख-ग-पुस्तकातिरिक्तेष्विदं खण्डप्रतीकमनुवाक्यं न दृश्यते, परमस्त्येषा शैली सर्वेष्वेव वैदिकग्रन्थेषु ।

‡ "इति नैघण्टुके प्रथमोऽध्यायः" क । "इति चतुर्थोऽध्यायः" म; अस्य मते शिक्षायाः प्रथमाध्यायत्वम्, छन्दसो द्वितीयत्वम्, तथा ज्योतिष तृतीयाध्यायत्वम्, ततोऽसौ निघण्टोः प्रथमाध्यायः सुतरां चतुर्थः ।

§ प० २, १४ । निरु० २, ६. ७, २४ ।

|| 'कल्पयत्युपशमयति मलमिति कल्मलीकं तेजः, तद्वन्तम्'—इति माधवः ।

¶ आपस्तम्बयाजमानमन्त्रेषु ।

(५) अर्चिः* । 'अर्च पूजायाम् (भू० प०)' । 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः (उ० २,१०१)'—इतीसि-प्रत्ययः । अर्च्यन्ते देवताद्यर्चनसाधनत्वाद्वा अर्चिरग्न्यादिज्वालादिः । "अयोदंष्ट्रो अर्चिषा यातुधानान् (ऋ० सं० ८;४,५,२)" इति निगमः ॥

(६) शोचिः । शोचतेर्ज्वलतिकर्मणः (निघ० २,१६) । पूर्वसूत्रेण इसिः (उ० २,१०१) । शोचति शोचिः । "यदस्य वातो अनुवाति शोचिः (ऋ० सं० ३.५,७.५)"—इति निगमः ॥

(७) तपः । 'तप सन्तापे (भू० प०)' । 'तप दाहे (भू० प०)' वा । असुन् (उ० ४,१८४) । तपतीति शरीरादि । "परा शृणीहि तपसा यातुधानान् (ऋ० सं० ८,४,७.४)"—"अग्ने यत्ते तपस्तेन तं प्रति तप (अथ० सं० २,१९,१)" इति च निगमौ ॥

(८) तेजः† । 'तिज निशाने (भू० आ०)' । असुन् (उ० ४, १८४) । निश्यति तनूकरोति तमः पापं वा । यद्वा ; 'तेज पालने (भू० प०)' । असुन् । तेजति पालयति प्राणिनां प्रकाशदानेन । "अग्ने यत्ते तेजस्तेन (अथ० सं० २,१९,५)"—इति निगमः ॥

(९) हरः‡ । 'हृञ् हरणे (भू० उ०)' । असुन् । हरति तमः । "अग्ने यत्ते हरस्तेन (अथ० सं० २,१९,२)"—"रक्षो हरसा शृणीहि (ऋ० सं० ८,४,७,४)"—इति च निगमौ ॥

---

* इकारान्तोऽर्चिःशब्दोऽपि दृश्यते प्रकाशवचनः । यथाऽऽह—ऋ० सं० १, ४, ५, ९. 'अर्चयः प्रकाशाः'—इति माधवः ।

† पृ० ११ ।

‡ प० १, १७, ४, १ निघ० ४, १९ ।

(१०) घृणिः* । 'घृणिपृश्निपार्ष्णिचूर्णिभूर्णि'—इति । 'घृ क्षरण-दीप्त्योः (भू०प०)'—इत्यस्मान्नि-प्रत्यये गुणाभावो निपात्यते । जिघर्त्ति दीप्यते । यद्वा; 'घृणु दीप्तौ (तना०उ०)' । 'इगुपधात् कित् (उ०४,११६)'—इति इ-प्रत्ययः । दीप्यते घृणिः । "उप छायामिव घृणेः (ऋ०मं०४,५,२८,३)"—इति निगमः । "आ घृणे सं सचावहै (ऋ०मं०४,८,२१,१)"—इति च ॥

"हृणिः"—इति केषुचित् कोशेषु दृश्यते, तदयुक्तम् ; नैगमकाण्डे "आ घृणिः (निरु०५,८)"—इत्यत्र, 'ज्वलन्नामसु क्रोधनामसु (निघ०२,१३) च पाठादनेकार्थत्वम्'—इति स्कन्दस्वामिवचनात् ॥

(११) शृङ्गाणि† 'शृगि शब्दे (? )', अत्र शृङ्गस्थानीयत्वाद् दीप्तय उच्यन्ते । 'श्रिञ् सेवायां (भू०उ०)'—'शॄ हिंसायाम् (क्र्या०प०)' । 'शृणातेर्ह्रस्वश्च (उ०१,१२५)' गन् (१२१), कित् (१२२), नुट् (१२४) च इति अधिक्रियते, श्रियतेर्बाहुलकात् सम्प्रसारणादि च भवति । श्रितं हि तदाश्रितं मण्डले हिनस्ति तत् ग्रीष्मेण प्राणिनः । 'शृङ्गं श्रयतेः (निरु०२,७)'—इत्यत्र 'शातेर्वा'—इति निर्वचनस्य पाठः औनिवासीये व्याख्याने दृष्टः । 'शमु हिंसायाम्' क्र्यादिः (?) । अस्मात् गः, अकारस्य ऋकारः । पूर्ववदर्थः । यद्वा; द्विधातुजं, शरणाय हिंसायै गतं मस्तकादेरुद्गतम् ऊर्द्धगत मित्यर्थः । 'शृणातेर्ह्रस्वश्च (उ०१,१२५)'—इति गन्-

* पृ० ८। प० ९.१९.४,२। निघ० ४,८।
† निघ० १,७।

प्रत्यये शुमि च रूपम्। अथ वा शरणं रक्षणं तदर्थं शुङ्गं रक्षति तत्, प्राणिनस्तस्य निष्पत्त्यादिना शिरसो निर्गतमिति वा शिरःशब्दान्निर्गमेस्तु शृङ्गं, शिरस आदित्यान्निर्गतमित्यर्थः; 'असा-वादित्यः शिरः प्रजानाम्'—इति श्रवणात् (शत० ब्रा० ७,४,१,२०) शिर उपपदे गमेर्डे शिरमः शृ-भावे मकारे चोपजने रूपम्। पृषोदरादित्वात् (६,३,१०९) सर्वत्र रूपसिद्धिः; शृङ्गम्। तेजांसि शृङ्गाणि। "यत्र गावो भूरिशृङ्गा अयासः (ऋ० सं० २,२,२४,६)"—"त्रि शृङ्गिणा मभिनच्छुष्णमिन्द्रः (ऋ० सं० १,३,३,२)"—इति च निगमौ ॥

'अध्यायपरिसमाप्तिद्योतनं द्विर्वचनं, श्रुतौ तथा दर्शनात्'—इति अत्र स्कन्दस्वामी। अन्यत्रापि स एव सर्वत्र। यद्वा; द्विरुक्त-पदस्य शब्दशास्त्रे 'तस्य परमाम्रेडितम् (८,१,२)'—इति महा-सञ्ज्ञाकरणस्य प्रयोजनं वर्णितम् 'अन्वर्थसञ्ज्ञानम्, आम्रेड्यते अधिक मुच्यते (८,१,२भा०)'-इति; तेनैवस्मातोयकद्विर्वचना जायन्ते इति शब्दविदो विदाङ्कुः। यथा—'आहोदर्शनीयाहोदर्शनीय' (महा०भा०)'—इति ॥

इति अत्रिगोत्रस्य देवराजयज्वनः कृते नैघण्टुककाण्डनिर्वचने प्रथमोऽध्यायः ॥ १ ॥

# अथ द्वितीयाध्यायः ॥

"कर्मनामान्युत्तराणि (निरु० ३,१)"—इति भाष्ये स्कन्दस्वामी 'व्यसनकर्मसम्बन्धात् आह कर्मनामान्युत्तराण्येव षड्विंशतिः अपः अप्नः' इत्यादीनि। क्रियते इति कर्म। अनाश्रितविशेषाणां कर्मणां नामधेयानि, सति साधारण्येऽसाधारणानि च निर्णेतव्यानि, वाक्यार्थवशात्"—इति ॥

अपः(१)। अप्नः(२)। दंसः(३)। वेषः(४)। वेपः(५)। विष्टी(६)। व्रतम्(७)। कर्वरम्(८)। शक्म(९)। क्रतुः(१०)। करणम्(११)। करणानि(१२)। करांसि(१३)। करन्ती(१४)। करिक्रत्(१५)। चक्रत्(१६)। कर्त्वम्(१७)। कर्तोः(१८)। कर्त्तवै(१९)। कृत्वी(२०)। धीः(२१)। शची(२२)। शमी(२३)। शिमी(२४)। शक्तिः(२५)। शिल्पम्(२६)। इति षड्विंशतिः कर्मनामानि* ॥ १ ॥

(१) अपः†। (२) अप्नः‡। 'आप्लृ व्याप्तौ (स्वा०प०)'। 'आपः

---

(४) "वेशः" ग. घ. C. D. F।

(६) "विष्टी" घ। (९) "शक्म" ग. C. D F। "शक्म" क "शक्मं" घ।

(१४) "करन्ति" ग. iid।

(१६) "चक्रतुः"—इत्यपि टीकाधृतम्।

(१७) "कर्त्तुं" ग. C D. F। (२५) "शक्तिः" F।

* "इति कर्माणि" ग।

† निरु० ७, २७। ‡ ऋ० १. ९. ७। निरु० १. ११।

कर्मास्याख्यायां ह्रस्वो नुट् च वा (उ० ४,२०२)'—इत्यसुन् विकल्पेन नुडागमश्च। आप्नुवन्ति हि तत्कर्तारम् आप्नोति वा तान् फलरूपेण. "इन्द्र' सोमेभिस्तदपो वो अस्तु (ऋ०मं० २.६.१४.५)"—"ते सौभगं वीरवद्गोमदप्नः (ऋ०मं० ७,८,११,३)" इति च निगमौ॥

(३) दंसः। 'दसि दंसनदर्शनयोः' चुरादिरात्मनेपदी; असुन् (उ० ४,१८४)। दर्शयन्ति हि तत्तत्कारणेन, दृश्यते दृष्टिभिरिति वा। अथ वा; 'दसि मोक्षणे' चुरादिः परस्मैपदी; असुन् (उ० ४, १८४)। दंसयति मोक्षयति पाप्मनः पुरुषं संसारादापदो वा। यद्वा; 'तसु उपक्षये दसु च (दि०प०)'। अत्रान्तर्णीतण्यर्थः। कर्मण्यसुनि बाहुलकान्नुम्। उपक्षपयितव्यं हि तदन्तर्नेतव्यमित्यर्थः। "दस्मस्य चारुतममस्ति दंसः (ऋ०मं० १,५,७,७)" इति निगमः॥

(४) वेषः। 'विष्लृ व्याप्तौ (जु०उ०)'। पचाद्यच् (३,१,१३४)। वेवेष्टि व्याप्नोति कर्तॄन्, व्याप्तं विस्तृतं वा। यद्वा; 'वेवेष्टि'—इत्यत्तिकर्मसु (निघ० २,८) पठ्यते। परिवेवेष्टि भोजयति स्वफलं कर्तॄन्। "कर्मणे वां वेषाय (य०वा०सं० १,६)"—इति निगमः॥

(५) वेपः। 'विपिः प्रेरणार्थः'—इति माधवः। असुन् (उ० ४, १८४)। प्रेर्यन्तेऽस्मिन् कर्मकराः। यद्वा; 'वेपृ कम्पने (भ्वा०आ०)'; असुन् (उ० ४,१८४); वेपः। "स्वं वेपमा तुविजात स्तवानः (ऋ० मं० ३,५,११,२)"—इति निगमः॥

(६) विष्टी*। 'विष्लृ व्याप्तौ (जु०उ०)'। 'जुगस्तजागृभ्यः क्तिन्

* निरु० ११, १६।

(उ० ४,५४)'—इति बाहुलकात् किम् तुडागमश्च । वेदसमानार्थम् । यथादृष्टं पाठः । "विष्ट्वी शमीभिः सुकृतः सुकृत्यया (ऋ० मं० ३,४,७,३)"—"विष्ट्वी शमी तरणित्वेन वाघतः (ऋ० मं० १,७,२०,४)"—इति च निगमौ । उभयत्रापि शमीति विशेषणम् । * * * ॥

(७) व्रतम्* । अत्र भाष्यम् (निरु० २,१३)—'व्रतमिति कर्मनाम—वृणोतीति सतः'—इत्यादि । अत्र स्कन्दस्वामी—'व्रतमिति कर्मनामेति । कर्त्तरि सतइति कृतव्याख्यानम् । तद् द्विविधम् । शुभमशुभं वा वृणोति निबध्नाति कर्त्तारम् तथा च श्रुतिः—'ते विद्याकर्मणी सम त्वारभते पूर्वप्रज्ञा च'—इति । 'इदमपीतरद् व्रतम्' गुड़-लवण-स्त्र्यादिविषयनिवृत्तरूपं कर्म । 'एतस्मादेव' रूपसामान्यात् प्रसक्तं व्रतं निरुच्यते 'वारयतीति सतः' । निवृत्तिरूपो हि सङ्कल्पः, तदतिक्रम्य प्रमादात् प्रवर्त्तमानं पुरुषं वारयति'—इति । पाठोऽर्थश्च—'व्रतमिति कर्मनाम निवृत्तिकर्म वारयतीति सतः (निरु० २,१३)'—इति । व्रतं कर्मोच्यते । कस्मात्? वारयते तद्धि सङ्कल्पपूर्वकं प्रवृत्तिरूपमग्निहोत्रादिकर्मप्रत्यवायं वारयतीति पुरुषः प्रवर्त्तमानो निवर्त्तमानस्य व्रतेनाभिसम्बन्धस्तेनाव्रतेन निवार्यत इति व्रतस्यैव प्राधान्याद् हेतुकर्तृत्वेन विवक्ष्यते । भोजनमपि व्रतं क्षुधादिनिवारणात् । वृणोतेर्धातोः (स्वा० उ०) 'पृषिरञ्जिभ्यां कित् (उ० ३,१०८)'—इति विधीयमानोऽतच्-प्रत्ययो बाहुलकाद् भवति

---

* निघ० २, १२. १६, ११. १९, २१; ४५

कित्त्वाद् गुणाभावः, यणादेशः। 'वारयतेर्वा तत्'—इत्यत्र लुगिति लुगपि बाहुलकात्। 'व्रतेः'—इति श्रीभोजदेवः'—इति क्षीरस्वामी। व्रत्यते वर्ज्यते सर्वभोगोऽत्रेति सुबोधिनीकारः। व्रतेर्धातोः 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'—इति घ-प्रत्ययः। व्रतिश्च वर्जनार्थः। "अथा वयमादित्यव्रते तव (ऋ०सं० १,२,१५,५)"—"ब्राह्मणा व्रतचारिणः (ऋ०सं० ५,७,३,१)"—इति च निगमौ। "अग्ने व्रतपते व्रतं चरिष्यामि (य०वा०सं० १,५)"—इत्यादौ व्रतशब्दे निवृत्तिकर्मता॥

(८) कर्वरम्। कर्वतेर्धातोः (भ्वा०प०) 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'—इति घ-प्रत्ययः; कर्वरम्। 'कॄ विक्षेपे (तुदा०प०)', 'कृञ् हिंसायाम् (स्वा०उ०)'। 'कॄगॄशॄवृञ्चतिभ्यः ष्वरच् (उ० २,११४)'। किरति फलं, कीर्यतेऽस्मिन् पापादीति वा; छिनत्ति तत् शुभं पुरुषभावमशुभं पुण्यम्। "अतदनोपि कर्वरा पुरूणि (ऋ०सं० ८,७,२,२)"—इति निगमः॥

(९) शक्म। 'शक्लृ शक्तौ (दि०उ०)'। 'अशिशकिभ्यां छन्दसि (उ० ४,१४२)'—इति मनिन्-प्रत्ययः। शक्यते अनेनाभिमतं प्राप्तुं, शक्नोतीष्टं साधयितुं वा, शक्यते कर्तुमिति वा। "मध्याकर्त्तोर्व्य-धाच्छक्म धीरः (ऋ०सं० २,८,२,४)"—इति निगमः॥

(१०) क्रतुः*। करोतेः (भ्वा०उ०) 'कृञः कतुः (उ० १,७४)—इति कतु-प्रत्ययः। क्रियते द्विजातिभिः। "क्रतुं दधिक्रा अनु

* निरुक्त २ अ० १२.१० ।

मन्तवीत्वत् (ऋ० सं० ३,७,१४,४)"—"शतक्रतो मादयस्वा सुतेषु (ऋ० सं० ४,७,१२,५)"—इति च निगमौ ॥

(११) करूणम् । 'कृ विक्षेपे (तुदा० प०)', 'कृञ् हिंसायाम् (स्वा० उ०)' । 'कृवृदारिभ्य उनन् (उ० ३,५०)' । कर्व्वरेण समानार्थम् । "स विश्वस्य करूणस्येश एकः (ऋ० सं० १,७,८,२)"—इति निगमः ॥

(१२) करणानि । करोतेः 'युच् बहुलम् (उ० २,७४)'—इति युच् क्रियते ल्युट् वा । करणं साधनमिति प्राप्ते जसि पाठो यथादृष्टम् । 'कर्मवाचि करण माद्युदात्तम्'—इति माधवः । "प्र ते पूर्वाणि करणानि वोचम् (ऋ० सं० ४,१,३०,१)"—"प्र ते पूर्वाणि करणानि विप्र (ऋ० सं० ३,६,२,५)"—इति च निगमौ ॥

(१३) करांसि । करोतेरसुन् (उ० ४,१८४) । 'भूतेऽपि दृश्यन्ते (३,३,२)'—इति भूते वा भविष्यति वा । अर्थः पूर्ववत् । 'करांसीति कृतानि स्युः क्रियमाणानि केचन'—इति माधवः । "आविद्वाँ आह विदुषे करांसि (ऋ० सं० ३,६,२,५)"—इति निगमः ॥

(१४) करन्ती* । 'कृञ् करणे' भ्वादिः (उ०) । शतरि ङीप् । करणमभिमतं कर्त्तुः । यथादृष्टं पाठः । निगमोऽन्वेषणीयः† ॥

(१५) करिक्रत् । 'दाधर्त्ति दर्धर्त्ति दर्द्धर्षि (७,४,६५)'—

* "करन्ति" निरु० ७, १० ।
† ऋ०सं०८, १, ४, १० द्रष्टव्यः "करन्ति" ।

इत्यादि सूत्रेण छन्दोविषयेण करोतेर्यङ्लुगन्तस्य शतरि नुमत्वाभावो ऽभ्यासस्य रिगागमोऽपि निपात्यते। अत्र न्यासः—'यणादेशे कृते अनृकारान्तत्वादङ्गस्याभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यत इति। पुनः पुनः करोतीष्टप्राप्तिमनिष्टारम्भं। निगमोऽन्वेषणीयः* ॥

(१६) चक्रत्। 'डुकृञ् करणे' भूवादिः (उ०)। शतृ। 'जुहोत्यादिभ्यः श्लुः (२,४,७५)'–'बहुलञ्छन्दसि (२,४,७६)'—इति शपः श्लुर्द्विर्वचनादिः यणादेशः। करोत्यभीष्टम्। निगमोऽन्वेषणीयः॥ केषुचित् कोशेषु चक्रतुरिति दृष्टम्, निगमदर्शनान्निर्णयः। अस्य स्थाने चर्कृत्यमिति माधवीये दृष्टम्। "चर्कृत्यानि कृण्वतः (ऋ० सं० ६,७,१३)"—इत्यत्र 'कर्माणि चर्कृत्यानि'—इति भाष्यम्† ॥

(१७) कर्त्वम्। करोतेः 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वन्-प्रत्ययः क्रियते। यद्वा; 'कृत्यार्थे तवैकेकेन्यत्वनः (३,४,१४)'—इति त्वन् प्रत्ययः, कृत्यार्थत्वं भावकर्म। "तद्देवानां देवतमाय कर्त्वम् (ऋ०सं० २,७,१,३)"—इति निगमः। अत्र स्कन्दस्वामि-भाष्यम्–'कर्त्वमिति कर्मनाम'—इति॥

(१८) कर्त्ताः। करोतेः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ० १,६७)'—इति बाहुलकात् तुन्-प्रत्ययः। अर्थः पूर्ववत्। षष्ठेरकवचनस्य पाठो यथादृष्टम्। "मध्याकर्त्तोर्विततं सञ्जभार (ऋ०सं० १,८,७,४)"—"मध्याकर्त्तोर्न्यधाच्चक्रमाधारः (ऋ०सं० २,८,२,४)"—इति च निगमौ॥

*ऋ०सं० २, १, १०। ५. द्रष्टव्यः।

[illegible]

(१९) कर्त्त्वे। करोतेः 'कृत्यार्थे तवैकेकेन्यत्वनः (३,४,१४)'—इति तवै-प्रत्ययः। 'कृन्मेजन्तः (१,१,३९)'—इत्यव्यय-त्वम्। निगमोऽन्वेषणीयः* ॥

(२०) कृत्वी†। करोतेः 'पः किच (उ० १,६८)'—इति विधी-यमानस्तु-प्रत्ययो बाहुलकाद् भवति। क्रियते कृतु। 'शिल्पावन्ये कृतुर्थकम् ( ? )'—इत्यत्र माधवेनापि कर्मनामसु पठितः। 'सुपां सुलुक् (७,१,३९)'—इत्यत्र 'इयाडियाजीकाराणामुपस-ङ्ख्यानम् (७,१,३९वा०)'—इति विभक्तेरीकारादेशः। "त्वं रथ-मेतश कृत्व्ये धने (ऋ०सं०१,४,१८,२)"—इति निगमः। अत्र स्कन्दस्वामि-भाष्यम्—'कृत्वीति कर्मनाम, कर्मणि धने निमित्ते धनार्थं यत् कर्मेत्यर्थः। कर्मात्र संग्रामः सङ्ग्रामार्थमाजिः स्यात्'—इति। 'कृत्वी सर्वनामदर्दविंवस्वते (ऋ०सं०७,६,२३,२)'—इत्यत्र तु त्वान्तं तथा स्कन्दस्वामिना व्याख्यातत्वात्॥

(२१) धीः‡। 'धृञ् आधारे' दिवादिः (उ०)। धारयति कर्त्तारं फलप्रदानेन। यद्वा; दधातेः क्विपि 'घुमास्थागापाजहातिसां हलि (६,४,६६)'—इतीत्वे रूपम्। ईत्वस्य क्विब्लोपेऽपि * * *। धारयति कर्त्तारमिति पूर्ववद् ददाति वा फलं धीः कर्म। 'दधाते-र्निहितं द्रव्येषु तत्'—इति माधवः। यद्वा; ध्यायतेः सम्प्रसारणत्वे क्विपि रूपम्। ध्यायते चिन्त्यते कर्तृभिरेवं कर्त्तव्यमिति। "धियं धियं सीषधाति प्र पूषा (ऋ०सं०४,८,६,३)"—इति निगमः॥

---

* "कर्त्तवे" ऋ० सं० १, ६, १०, ३. इत्यादिः।

† निघ० ११, १०।

‡ प० ३, ९। निघ० ११, २०. ११, १८; ३०। ‡ पु० ११।

(२२) शची‡। 'शच व्यक्तायां वाचि' भ्वादिरात्मनेपदी। 'इन् सर्वधातुभ्यः (उ० ४,११४)'। 'कृदिकारात् (४,१,४५ वा०)'—इति ङीष्। शचन्ते व्यक्ता वाचः कुर्वन्त्यस्यामिति शची। क्षीरस्वामी तु—'शचति शची ; शच श्वच गतौ'—इति व्याख्यत्। गत्यर्थः शचिर्धातुपाठे न दृष्टः। "यद् देवयन्त मवथ शचीभिः (ऋ० सं० ५,५,१६,४)"—इति निगमः॥

(२३) शमी*। 'शम उपशमे (दि० प०)'; अस्मात् इन्, ङीष् च पूर्ववत्। शम्यत्यनयाऽनिष्टानि। णिजन्ताद्वा पूर्ववत् इन्-ङीषौ। शमयत्यनिष्टव्याध्यादीनि। "शमीमर्दुर्मखस्य वा (ऋ० सं० ६,५,२६,४)"—इति निगमः॥

(२४) शिमी†। शमतेः पूर्ववन्निर्वाहोऽर्थश्च। बाहुलकादकारस्येकारः। शक्नोतेर्वा ककारस्य मकारः, अकारस्येकारश्च। शक्नोत्यनेन समानार्थः। "धुनिः शिमीवाञ्छरुमाँ ऋजीषी (ऋ० सं० ८,४,१४,५)"—इति निगमः॥

(२५) शक्तिः‡। शक्नोतेः 'स्त्रियां क्तिन् (३,३,९४)'। शक्यते कर्तुं शक्यते वानया परलोकं नेतुम्। "अर्वाजनश्शक्तिभीरेद-सिप्राम् (ऋ० सं० ८,४,११,५)"—इति निगमः॥

(२६) शिल्पम्§। 'शील उपधारणे¶' चुरादिः (प०), 'शील

* निघ० ११, ११।
† निघ० ५, १२।
‡ निघ० ७, १८।
§ प० १, ७।
¶ 'उपधारणमभ्यासः'—इति क्षी०।

समाधौ' भ्वादिः (प॰)। अनयोः 'खष्पशिल्पशष्पवाष्परूपपर्पतल्पाः (उ॰ ३,२६)'—इति प-प्रत्यये णि-लोपे (६,४,५१) च उपधाया ह्रस्वत्वं निपात्यते। शीलयति शीलतीति वा शिल्पम्। 'यत् कुम्भकारादि कर्म'—इत्युणादिवृत्तिः। शीलयन्ति पुनः पुनरभ्यस्यन्ति तदिति शिल्पम्। यद्वा; शिनोति कर्त्तारं तनूकरोति दुष्करत्वेनातिक्लेशकरत्वादिति निपातनाद्रूपसिद्धिः। 'शिञ् निशाने (स्वा॰ उ॰)' 'निशानं तनूकरणम्'—इति सुबोधिनीकारः। "यन्नो शिल्पं* कश्यप रोचनावत् (अथ॰ मं॰ १३,३,१०.)"—"दिवः शिल्पमवन्तम् ( ? )"—इति च निगमौ॥

इति षड्विंशतिः कर्मनामानि॥ १॥

**तुक्**(१)। **तोकम्**(२)। **तनयः**(३)। **तोक्म**(४)। **तक्म**(५)। **शेषः**(६)। **अप्नः**(७)। **गयः**(८)। **जाः**(९)। **अपत्यम्**(१०)। **यहुः**(११)। **सूनुः**(१२)। **नपात्**(१३)। **प्रजा**(१४)। **वीजम्**(१५)। **इति पञ्चदशापत्यनामानि**† **॥ २॥**

(१) तुक्। 'तुज हिंसायाम् (भ्वा॰ प॰)', क्विप्। तोजति हिनस्ति मातापितरौ गर्भवासादिना। तथा च मन्त्रः—'यदा पिपेष मातरं पितरं पुत्रः ( ? )'—इत्यादिः। 'तुजिर्गत्यर्थः प्रेरणार्थश्च'—इति माधवः। क्विप्। गच्छत्यनेन पितृलोकं पिता,

* "चुम्नं"—इति रोथमुद्रितशाखापाठः।
(३) "तनयम्" ग. C. D F।
(१५) "बीजम्" ख. iid।
† इत्यपत्यस्य ग।

गच्छत्यनेनानृण्यं पितृभ्य इति वा, प्रेर्य्यते प्रसवकाले वायुनापि वा। यद्वा; 'षुच प्रसादे (भू० आ०)'; क्विप्, पृषोदरादित्वात् सकार-लोपः। प्रसाद्यन्तेऽनेन पिता वा। "तुचे तु नो भवन्तु वरिवो-विदः (ऋ० सं० ६,२,३२,४)"—"तुचे तनाय तत्सु नो (ऋ० सं० ६,१,२८,३)"—इति च निगमौ। उभयत्र चतुर्थी॥

(२) तोकम्*। 'तुद व्यथने (तुदा० प०)'; 'पुंसि सञ्ज्ञायां घः (३,३,११८)', 'पृषोदरादित्वात् दकारस्य ककारः। तुदते ऽनेन माता गर्भवासकाले, तुद्यते व्याध्यादिभिरिति वा। यद्वा; 'ष्टुच स्तुतौ (भू० आ०)'; 'कृदाधारार्चिकलिभ्यः कः (उ० ३,३८)' —इति बाहुलकात् क-प्रत्ययः, स-लोपश्च स्तूयते तोकम्। तथाच हरिश्चन्द्रोपाख्याने "ऋणमस्मिन्त्संनयत्यमृतत्वं च गच्छति (ऐ० ब्रा० ७,३,१)"—इत्यादिभिर्गाथाभिः प्रशस्यते पुत्रः। यद्वा; 'तु'-इति सौत्रो धातु र्वृद्ध्यर्थः; क-प्रत्ययः पूर्ववत्। वर्द्धते हि तत्, वर्द्ध्यते वा मातापितृभ्याम्। यद्वा; सर्वेभ्य एव धातुभ्यो घञि रूपम्; अर्थश्च स एव। तुदेस्तु ककारो बाहुलकात् ष्टुचः सकारलोपश्च। "मा नस्तो-केषु तनयेषु रीरिषः (ऋ० सं० १,८,१३,३)"—इति निगमः॥

(३) तनयः†। 'तनु विस्तारे (तना० प०)'; 'बलिमलितनिभ्यः कयन् (उ० ४,९७)'—इति कयन्-प्रत्ययः। कुलं तनोति विस्तार-यति। "मा नस्तोके तनये मा न आयौ (ऋ० सं० १,८,६,२)" —इति निगमः॥

---

* निरु० १०. ७. १९, ६।

† निरु० १०. ७. १९, ६।

(४) तोक्म । तुजेः, स्तुचेः, तनतेः, तुद्यते वा मनिनि (उ० ४, १४०) ककारोऽन्त्यादेशः, तवतेः कुगागमः पृषोदरादित्वात् । निगमोऽन्वेषणीयः* ॥

(५) तक्म । तकतेर्गतिकर्मणो (निघ० २,१४) मनिन् (उ० ४,१४०), तुचेर्गत्यर्थाद्वा मनिन् (उ० ४,१४०), अन्त्यमुकारस्य (६,३,१०८) । पूर्वेण तुचा समानार्थः । निगमोऽन्वेषणीयः† ॥

(६) शेषः‡ । 'शिष सर्वोपभोगे' चुरादिर्भ्वादिश्च (प०); असुन् (उ० ४,१८४) । म्रियमाणे पितरि कुलसन्तानार्थं परिशेषयति, परिशिष्यते वा पित्रादिभिः सह न म्रियते स्वयमवतिष्ठते इत्यर्थः । यद्वा; 'शिष्लृ विशेषणे' रुधादिः परस्मैपदी; असुन् (उ० ४,१८४)। विशिष्यते पित्राद्यात्मनोऽतिशयितं करोति हि विद्यादिभिः । 'पुनातु पिता प्रजा मे परश्रेयसी मात्मनः कुरुते'—इति ब्राह्मणम् । तथा 'पुत्रमेवैकमिच्छन्त्यात्मनोगुणवत्तरम्'—इति महाभारतम् । यद्वा; 'शिष हिंसार्थः' भ्वादिः परस्मैपदी, शेषति हिनस्ति मातापितरौ । 'यद्वा पिपेष'—इति मन्त्रः पूर्वमेव दर्शितः (१७१ पृ०) । "न शेषो अग्ने अन्यजातमस्ति (ऋ० सं० ५,२,६,२)"—"मा शेषसा मा तनसा (ऋ० सं० ४,४,८,४)"—इति च निगमौ ॥

(७) अप्नः¶ । कर्मनामसु व्याख्यातम् (२.१) बाहुलकादपत्येऽपि भवति । 'आप्नोते र्ह्रस्वश्च नुट् वा'—इति भोजराजेन कर्माख्यापदयं

* अयमेवास्य निगमो भवितुमर्हति—ऋ० सं० ८, १, १, १ ।
† निरु० ११, २५ ।
‡ अथ० सं० ५, ४, १, ६, निगमो द्रष्टव्यो ।
§ निरु० ३, २ ¶ पु० १, १।

न हतम्*। आप्नोत्यनेन सर्वान्, कामान् पिता, आपाते वा महता पुण्येन। "यच्चिद्धि मघ्नं उषसो वहन्ति (ऋ० मं० १,८,४,५)"। 'आप्यम् धनम्'—इति माधवः, अपत्यं भवितुमर्हति॥

(८) गयः†। गमेः 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यक्-प्रत्ययान्तो निपात्यते, निपातनान्मकारलोपः। 'गाङ् गतौ (भ्व० आ०)'; अस्माद्वा यक्-प्रत्यये ह्रस्वत्वम्। गतावर्थः पूर्वमुक्तः। गीयते स्तूयते देव-भट्टारकेत्येवमादिभिः। "इन्द्रो वसुभिः परि पातु नो गयम् (ऋ० मं० ८,२,१२,३)"—इति निगमः॥ "गयस्फानः प्रतरणाम् वीरः (ऋ० मं० १,६,२२,४)"—इति च। 'गृहापत्ययोर्नाम'—इति स्कन्दः, 'गृहम्'—इति तु माधवः॥

(९) जाः‡। 'जनी प्रादुर्भावे (दि० आ०)': 'अन्येष्वपि दृश्यते (३,२,१०१)'—इत्यत्र अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलाज्जने डः, टाप्, जस्। जायते मातापितृभ्यां सकाशात्। "सोमः परि क्रतुना पश्यते जाः (ऋ० मं० ७,२,२६,४)"—"अनमीवो रुद्र जासु नो भव (ऋ० मं० ५,४,१३,२)"—इति च निगमौ॥

(१०) अपत्यम्§। अपपूर्वात् तनोतेः नञ्पूर्वात् पतेर्वा 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यक्-प्रत्ययान्तो निपात्यते, तनोतेष्टिलोपः। * * *। "कवेरपत्यमा दुहे (ऋ० मं० ६,७,२५,३)"—इति निगमः॥

* कौमृद्याम् कर्मण्यग्रख्याभ्यामस्ति (उ० ४,१०१)।
† प० १०. ३,४।

(११) यक्षः। यातेर्ऋयतेश्चौणादिके मृगय्वादित्वात् (उ० १, ३६) कु-प्रत्यये निपातनाद्रूपसिद्धिः। यातः प्राप्तः पुण्यवशेन स्वनाम्ना ह्रयते च। 'यक्षर्यातस्याह्रतस्य'—इति माधवः। "ईशानः सहसो यहो (ऋ० सं० १,५,२७,४)"—इति निगमः।

(१२) सूनुः*। 'षूञ् प्राणिप्रसवे (अदा० आ०)'-'सुवः कित् (उ० ३,३४)'—इति नु-प्रत्ययः। सूयते मात्रा। "अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् (ऋ० सं० ३,१,८,४)"—इति निगमः॥

(१३) नपात्†। नञ्-पूर्वात् पतेर्ण्यन्तात् 'बहुलमन्यत्रापि सञ्ज्ञा-छन्दसोः (६,४,५१ वा०)'—इति णि-लोपः। 'न भ्रान्नपात् (६, ३,७५)'—इत्यादि सूत्रेण नञः प्रकृतिभावः। न पातयति न तेन पततीत्युक्तम्। "एह्रि वां विमुचो नपात् (ऋ० सं० ४,८,२१,१)" —इति निगमः॥

(१४) प्रजा। प्रपूर्वाज्जनेः 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)' —इति डः, टाप्। "प्रजां देवि दिदिड्ढि नः (ऋ० सं० २,७,१५, ६; ८,१०,२)"—इति निगमः॥

(१५) वीजम्। 'वीज प्रजननकान्त्यसनखादनेषु (?)'; इत्य-स्मादच्-प्रत्ययः (३,१,१३४)। तथाच भोजराजीये 'वियो जक्'— इति व्युत्पादितम्। बवयोरभेदः। वेति प्रजायते गच्छत्यनेनानृण्यं पितेति वा। अत्र चीरस्वामी—'वीज्यते वेति वा वीजं वाजिलौकिकः' —इति। 'वीजिः स्यात् प्रेरणक्रिया'—इति माधवः। * * * प्रेर्यते

* निघ० २, २५. ५, २५. ११, १७।

† निघ० ८, ५।

हि कार्यकारणाय वा बीजम् । यथा धान्यादिबीजमङ्कुरोत्तरं स्वाभिवृद्धये भवति एवमपत्यमपि पितृणामभिवृद्धिहेतुरिति बीजमित्युच्यते । "यस्यां बीजं मनुष्या३ वपन्ति (ऋ० सं० ८, ३, २१, २)"—इति । बीजमपत्यार्थमिति दृष्टम् ॥

इति पञ्चदशापत्यनामानि ॥ २ ॥

मनुष्याः[1] । नरः[2] । धवाः[3] । जन्तवः[4] । विशः[5] । क्षितयः[6] । कृष्टयः[7] । चर्षणयः[8] । नहुषः[9] । हरयः[10] । मर्याः[11] । मर्त्याः[12] । मर्ताः[13] । व्राताः[14] । तुर्वशाः[15] । द्रुह्यवः[16] । आयवः[17] । यदवः[18] । अनवः[19] । पूरवः[20] । जगतः[21] । तस्थुषः[22] । पञ्चजनाः[23] । विवस्वन्तः[24] । पृतनाः[25] । इति पञ्चविंशतिर्मनुष्यनामानि* ॥ ३ ॥

(१) मनुष्याः† । 'मत्वा कर्माणि सीव्यन्ति (निरु० ३.७)'—इति भाष्यस्य स्कन्दस्वामी—'मत्वेत्यादिना मनेः सीवेश्च द्विधातुजत्वं प्रदर्शयति—ज्ञात्वाऽनेनेदमिति साध्यसाधनभावं कर्माणि सीव्यन्ति सन्तन्वन्ति, यथा यज्ञादयः मनस्यमानेन प्रजापतिना सृष्टाः । मनस्यतिः कस्मिन्नर्थे ? इत्याह—प्रशस्तीभावे, प्रशंसायां मत्वर्थीयः,

(१), (२) "नराः । धवाः । नरः" B. "नराः । नरः" C. D. E.
(९) "नहुषः" B. iid ।
(१०) "॰यवः" B ।
* "इति मनुष्याणाम्" B ।
† निरु० ३. ७ ।

प्रशस्तं मनः प्रसन्नं सत्वप्राधान्यात् अतः प्रसन्नमनस्केन सृष्टा इत्यर्थः । तथा च श्रुतिः—'स पितॄन् सृष्ट्वा मनस्यदनु मनुष्यानसृजत'—इति । नित्यपक्षेऽप्यसति स्रष्टरि कार्ये सौमनस्यं दृष्ट्वा सृष्टिकारणानुविधायित्वात् कार्यस्य वा । 'मनोर्जातावञ्यतौ षुक् च (४,१.१६१)'—इति वैयाकरणाः । जातिश्च प्रत्ययान्तोपाधिः । मनोरपत्यं जातिश्चेत्येतौ । अपत्यमात्रविवक्षायामन्तरेण च जातिं भवति मानव इति । मनुषो वा अकारान्तमेकं प्रातिपदिकमस्ति, अनस्तदन्तात् व्युत्पादयति ; ञ्यत्-प्रत्ययसन्नियोगेन षुगिति स्मरणान्तरं विनापि प्रत्ययेन षकारान्तप्रयोगदर्शनात्—'समिद्धो अद्य मनुषो दुरोणे (ऋ०सं० ८,६,८,१)'-इति पृषोदरादित्वात् सर्वं सिद्धम् । अत्र औपमन्यवः—'मनोर्मनुः * * * मनोरूमि मनुषीति । यत् । सा चास्या मनुष्यगौः' इति । "स्पार्हा वसु मनुष्या ददीमहि (ऋ० सं० २,६,३०.४)"—"दैव्याः शमितार आरभध्व मुत मनुष्याः (ऐ०ब्रा० २,१,६)"—इति च निगमौ ॥

(२) नरः* । 'णीञ् प्रापणे (भू० उ०)'; 'नयतेर्डिच्च (उ० २.९३)'—इति ऋन्-प्रत्ययः ; जस् । नयन्ति संसारचक्रम्, पदार्थस्वात् देशान्तरं नीयन्ते वा स्थानोत्तरकालेन । यद्वा 'नृती गात्रविक्षेपे (दि०प०)' ; बाहुलकादृन् डिच्च । नृत्यन्ति गात्रविक्षेपं कुर्वते हि नियमेन गात्राणि विक्षिपन्ति कर्मसु तानि कुर्वन्तः । "तं त्वा नरः प्रथमं देवयन्तः (ऋ०सं० ४,४,२५,२)"—"त्वां सुते चेन्द्र सत्पतिं नरः (ऋ०सं० ४,७,२७,१)"—इति च निगमौ ॥

* निघ० ४, १ ।

(३) धवाः* । 'धूञ् कम्पने (स्वा० उ०)', 'धुञ्' वा (क्र्या० उ०)। पचाद्यच्। धूनयति * * * । धुनोति स्वावयवान् धवः; जम् धवाः। यद्वा ; मनुष्या मृत्युतो वेपन्ते। यद्वा ; 'धावु गतिशुद्ध्योः (भ्वा० उ०)'; अस्मात् पचाद्यचि (३,१,१३४) पृषोदरादित्वात् (६,३,१०९) ह्रस्वः। इतश्चेतः शरणार्थिनो धवन्ति धवाः। "को वां शयुत्रा विधवेव देवरम् (ऋ० सं० १,८,१८,२)"—इति निगमः॥

(४) जन्तवः† । 'जनी प्रादुर्भावे (दि० आ०)'; 'कमिमनिजनिगाभायाहिभ्यश्च (उ० १,७०)'—इति तु-प्रत्ययः। जायन्ते जन्तवः। "इरज्यन्नग्ने प्रथयस्व जन्तुभिः (ऋ० सं० ८,१,२८,४)"—इति निगमः॥

(५) विशः‡ । 'विश प्रवेशने (तु० प०)'; क्विप्। विशन्ति अनुप्रविशन्ति सर्वकर्मस्वधिकारित्वेन। यद्वा ; अनुप्रविष्टाः आत्मीयभर्तृराजादेः श्रिता इत्यर्थः। "विशो राजानमुप तस्थुर्ऋग्मियम् (ऋ० सं० ४,५,१०,४)"—इति निगमः॥

(६) क्षितयः§ । 'क्षि निवासगत्योः (तु० प०)'; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३,३,१७४)'—इति क्तिच्। क्षियन्ति निवसन्ति भूमौ गच्छन्ति वा तस्याम्। "अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३,७,११,५)"—इति निगमः॥

---

* निघ० ७,१५।
† निघ० ४,१९।
‡ प० ९। निघ० १०,८।
§ पृ० १,१।

(७) कृष्टयः* । 'कृष विलेखने (भू०प०)'; भावे क्तः । कर्षणं कृष्टम् । कर्षण कर्मविशेषेण चात्र सामान्यतः कर्ममात्रं लक्ष्यते; कृष्टं कर्म, तदस्यास्तीति 'लुगकारेकाररेफाश्च वक्तव्याः (४,४,१२८वा०)' —इति इकार-प्रत्ययः । तथाच भाष्यकारः-'कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति (ऋ०सं०मा०भा० ३,४,५,१)'—इति । तथाच श्रीभगवद्गीतायाम्—'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् (म०भा०भी०प०२६अ०५श्लो०)'—इति। यद्वा; गुड्क्षोऽपि कृषि विपूर्वस्यार्थे वर्त्तते । कर्मणि क्तः । विविधं कृष्टो विक्षिप्तपरिकण्डूयना-द्यभिलषितक्रियानुष्ठानसमर्थः कः? इत्यपेक्षायां विकृष्टदेहत्वं कृष्ट-सामर्थ्याद्देहम्, स एषामस्तीति पूर्ववन्मत्वर्थीयः । तथाच भाष्यम्— 'विकृष्टदेहा वा (ऋ०सं०मा०भा० ३,४,५,१)'—इति । 'कृषन्ति प्रान्तं पदाभ्याम्' इति माधवः । 'कर्षन्ति वशीकुर्वन्ति'—इति भट्ट-भास्करमिश्रः । "मित्रः कृष्टीरनिमिषाभि चष्टे (ऋ०सं० ३,४,५, १)"—मध्यश्चिद्यः शवसा पञ्च कृष्टीः (ऋ०सं० ८,८,२६,२)"—इति च निगमौ ॥

(८) चर्षणयः† । चरतेर्धातोः (भू०प०) 'अर्त्तिसृधृधम्यश्व-वितृभ्योऽनिः (उ०२,९५)'—इति बहुलवचनादनि-प्रत्यये पुगाग-मश्च चरणवन्तः चरणशीलाः । यद्वा; 'कृषेरादेश्च चः (उ०२,९७)' —इति अनि-प्रत्यये कृषेरेतद्रूपम्। 'आकर्षन्ति वशीकुर्वन्ति इत्यर्थः' —इति भट्टभास्करमिश्रः । यद्वा; चर्षणयः चायितारो द्रष्टारः

* निघ० १०, १९; ११ ।
† नि०

सर्वेषां पदार्थानाम्। यद्यपि पश्यतिकर्मसु (निघ० ३,११) विचर्षणिरिति पठितम्, तथापि 'पिता कुटस्य चर्षणिः (ऋ०मं०१,३,३३,४)'—इत्यत्र 'चाययिता द्रष्टा'—इति स्कन्दस्वामिना व्याख्यातम्। "प्र चर्षणिभ्यः पृतनाहवेषु (ऋ०मं०१,७,२८,१)"—"महाँ इन्द्रो नृवदा चर्षणिप्राः (ऋ०मं०४,६,१,१)"—इति च निगमौ ॥

(८) नहुषः। 'णह बन्धने (दि०उ०)'। 'जनेरुसिः (उ० २,१०८)'—इति बाहुलकात् उस्-प्रत्ययः, जस्. नहुषः। नह्यन्ते कर्मभिः पूर्वकृतैः संसारे नह्यन्ति वा नहनीयम्। "मर्ता सनेम नहुषः सुवीराः (ऋ०मं०२,१,२,३)"—"आ यातं नहुषस्परि (ऋ०मं०५,८,२५,३)"—इत्यादयो निगमाः ॥

अकारान्तमिदं नाम केषुचित् कोशेषु दृश्यते। तदा 'ऋन-हिभ्यामुषन् ( ? * )'—इति उषन्-प्रत्ययः। पूर्ववदर्थः। "असमृष्टाणस्य नहुषस्य शोषः (ऋ०मं०४,१,४,६)"—इति निगमः ॥

(१०) हरयः†। 'हृञ् हरणे' भ्वादिः, 'हृ प्रसह्यकरणे' जुहोत्यादिः। 'इन् सर्वधातुभ्यः (उ०४,११४)'—इतीन्-प्रत्ययः। हरन्ति पदार्थान्, प्रसह्यीक्रियन्ते वा मृत्युनेति वा। तथाच मृत्युवाक्यम्—'अहं प्रजास्त्वाकृत्यनार्हरामि'—इति निगमोऽन्वेषणीयः ॥

(११) मर्याः‡, (१२) मर्त्याः। 'मृङ् प्राणत्यागे (तु०आ०);

* कौमुद्याम् 'ऋहनिभ्यः सूषन् (उ०४,७२)', 'परः कुषन् (७३)', 'पमश्चिकनिभ्यउषच् (७४)' एवं दृश्यन्ते।

† पृ० १.१५।

‡ निघ० २, १५. ४, २।

अग्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययान्तं निपात्यते, तुड़ागमस्तु विकल्पेन। गुणः। म्रियन्ते मर्याः। 'छन्दसि निष्टर्क्य-देवहूयप्रणीयोन्नीयोच्छिष्यमर्य (३,१,१२३)'—इत्यादिना यत्प्रत्ययान्तं निपातितम्। "को नु मर्या अमिमितः (ऋ० मं० ६,३, ४८,३७)"—"मर्यायेव कन्या शश्वचै तं (ऋ० मं० ३,२,१३, ५)"—"मर्यन्न योषा कृणुते मधस्थ आ (ऋ० मं० ७,८,१८, २)"—इति निगमाः। यद्वा; 'मृङ् प्राणत्यागे (तु० आ०)'; 'हसि मृग्रिण्वाचामिदमिन्पूधूर्विभ्यस्तन् (उ० ३,८३)'—इति तन्-प्रत्ययः। अर्थः पूर्ववत्। मर्त्तशब्दात् 'वस्मर्त्त * * * यविष्टेभ्यश्छन्दसि'—इति स्वार्थिकस्तद्धितो यत्। "यो मर्त्येष्वमृतो ऋतावा (ऋ० मं० ३, ४,१६,१)"—इति निगमः॥

(१३) मर्ताः। व्याख्याताः। "मा नो मर्त्ता अभिद्रुहन् (ऋ० मं० १,१,१०,५)"—"तं मर्त्ता अमर्त्यम् (ऋ० मं० ८,६, २५,१)"—इति च निगमौ॥

(१४) व्राताः। 'वृञ् वरणे (स्वा० उ०)'; 'तातव्रातलात-सुपित्त'—इत्यादि सूत्रेण भोजराजेन क्तप्रत्यये आड़ागमो निपात्यते। वृण्वन्ति स्वमभिमतं देवताभ्यः तपसाराधितेभ्यः प्रव्रियन्ते वा यज्ञादौ। यद्वा; व्रातो धान्यादिसञ्चयः। तद्वन्तो व्राताः। मत्वर्थीयोऽकार.। यद्वा; व्रतमिति कर्मनाम (निघ० २,१) अन्नं वा। अन्नमपि व्रतायैतस्मादेवेत्युक्तः तदीयाः 'तस्येदम् (४,३, १२०)'—इत्यण्। 'कर्मणा जायते जन्तुः कर्मणैव प्रमुच्यते'—इत्युक्तः कर्मणामधिकारित्वाच्च मनुष्याणां कर्मसम्बन्धित्वम्। 'अथो

अस्माद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते (तै० उ० ३,२)'—इति, 'अन्नात् रेतो रेतसः पुरुषः (तै० उ० २,१)'—इति च श्रुतेः मनुष्याणामन्नमन्वश्विलम्। "पञ्च जाता अपश्यर्वः (ऋ० सं० ६,८, ३,२)"—इति निगमः॥

(१५) तुर्वशाः* । 'तुर्वी हिंसायाम् (भ्वा० प०)' । 'कलेरशच्'—इति बाहुलकात् अशच्-प्रत्ययः । भोजगाजीयमिदं सूत्रम्। हिंसन्ति प्राणिनः, हिंस्यन्ते व्याघ्रादिभिर्वा। यद्वा : 'तूर त्वरण-हिंसनयोः (दि० आ०)', अस्मात् क्विपि तूर् : अश्नोतेः पचाद्यच् : तूर्णमश्नुवते पृषोदरादित्वात् (६,३,१०९) पूर्वपदस्य ह्रस्वत्वं वकारस्यापजनः । तूर्णमश्नुते। 'प्राप्यम्' इति माधवः । यद्वा : तूर्वशः काम एषामिति तुर्वशाः, पूर्ववत्पूर्वपदस्य ह्रस्वत्वम । 'वश कान्तौ (अदा० प०)'—इत्यस्मात् 'वशिरण्योरुपसङ्ख्यानम् (३,३,५८वा०)'—इत्यप्। यद्वा ; चतुर्षु धर्मार्थकाममोक्षेषु वश एषामिति चतुर्वशाः सन्तः चकारलोपेन तुर्वशाः । "तुर्वशेऽमन्महि (ऋ० सं० ५,१,३३, ४)"—इति निगमः ॥

(१६) द्रुह्यवः। 'द्रुह जिघांसायाम् (दि० प०)'; औणादिकः क्विप् ; द्रोहः । द्रोहं परेषामिच्छन्ति 'छन्दसि परेच्छायामपि (३,१,८वा०)'—इति क्यच्, 'क्याच्छन्दसि (३,२,१७०)'—इत्युप्रत्ययः । परहिंसाहचयो हि प्रायेण मनुष्याः। "अग्निं चक्रुर्भृगवो द्रुह्यवश्च (ऋ० सं० ५,२,२५,१)"—इति निगमः ॥

(१७) आयवः† । 'इण् गतौ (अदा० प०)'; 'छन्दसीणः (उ०

* ५० ११ । † निघ० ८, ३, २०, ४२, ११, ४९ ।

१,२)'—इत्युण्-प्रत्ययः । गच्छन्ति ग्रामात् ग्रामम्, गमनशीलाः । "बाहुभ्यामग्निमायवोऽजनन्त (ऋ०सं० ७,६,२,५)"—"आयोर्हैस्कम्भ उपमस्य नीळे (ऋ०सं० ७,५,२३,६)"—इति च निगमौ । 'अन्तोदात्त आयुशब्दो मनुष्यवचनः'—इति माधवः ॥

(१८) यदवः । 'यमु उपरमे (भ्वा०प०)'; 'यमेर्दुक्'—इति श्रीभोजदेवः । 'अनुदात्तोपदेशवनतितनोत्यादीनाम् (६,४,३७)'—इत्यादिना अनुनासिकलोपः । यम्यते नियम्यते आचार्येण अपथ-प्रवृत्ताः, राज्ञा वा । "या अग्नि यादवः पशुः (ऋ०सं० ५,७, १६,१)"—इति निगमः । अत्र माधवः—'यदुषु भवो यादो यदुरिति मनुष्यनाम'—इति ॥

(१९) अनवः । 'अन प्राणने (अदा०प०)'; 'अणश्च (उ० १,८)'—इति विधीयमान उ-प्रत्ययो बाहुलकात् भवति । अन-न्त्यनवः । ज्ञानवत्त्वादेतेषां धर्माद्यनुष्ठानात् प्राणनस्य फलवत्त्वात् अनन्तीत्युच्यन्ते । इतरे पश्वादयो ज्ञानहीनत्वात् निष्फलप्राणनाः । तथाचोपनिषदि—'तस्य य आत्मानं त्रिस्तरं वेद'—इत्यत्र प्रकरणे ज्ञानवत्त्वात् पुरुषस्य वैशिष्ट्यं प्रतिपादितम् । "गोधाय विद्वदनवाय ( ? )"—इति निगमः । अत्र माधवः—'अनुरिति मनुष्यनाम'—इति । "अनवस्ते रथमश्वाय तक्षन् (ऋ०सं० ४,१,२९,४)"—इति च । अत्र 'अनवः ऋभवः ते च मनुष्याः' । 'मर्त्तासः सन्तो अमृतत्वमानशुः (ऋ०सं० १,७,३०,४)'—इति श्रुतिः । तथा ब्राह्मणमपि—'आर्भवं शंसत्यृभवो वै देवेषु तपसा सोम-पीथमभ्यजयन् (ऐ०ब्रा० ३,३,५.)'—इत्यादि, 'तेभ्यो वै देवा

अपैवाबीभत्सन्त मनुष्यगन्धात् (ऐ॰ब्रा॰ ३,३,५)"—इति च ॥

(२०) पूरवः*। 'पूरी आप्यायने (दि॰आ॰)'। 'भृमृशीङ्-चरित्सरि (उ॰ १,७)'—इत्यादिना बाहुलकात् उ-प्रत्ययः। पूरयितव्याः कामानां 'कृपूभ्यां कुः'—इति श्रीभोजदेवः। पूताः शुद्धाः स्नानार्थिभिरित्यर्थः। "यं पूरवो वृत्रहणं सचन्ते (ऋ॰सं॰ १,४,२५,६)"—इति निगमः॥

(२१) जगतः†। 'गम्लृ गतौ (भ्वा॰प॰)'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ॰ २,७८.)'—इति क्विप्-प्रत्ययान्तो निपात्यते। प्रत्ययस्यादादेशः, द्विर्वचनं, नञ्‌ञि लोपश्च निपात्यते। गच्छति ग्रामात् ग्रामान्तरम्। "यदेषामग्र' जगता मिरज्यसि (ऋ॰सं॰ ८,३,६,२)"—इति निगमः॥

(२२) तस्थुषः‡। 'ष्ठा गतिनिवृत्तौ (भ्वा॰प॰)'। 'छन्दसि लुङ्-लङ्लिटः (३,४,६)'। 'क्वसुः (३.२,१०७)'। 'वस्वेकाजाद्घसाम् (७,२,६७)'—इति इडागमः। 'आतो लोपः (६,४,६४)'। 'लिटि धातोः (६,१,८)'—इति द्वित्वम्। 'शर्पूर्वाः खयः (७,४,६१)'—इति थकारस्य शेषः। 'अभ्यासे चर्च (८,४,५४)'—इति तकारः। तस्थिवस् इति स्थिते जसः स्थाने व्यत्ययेन शस् (३,१,८५)। 'वसोः सम्प्रसारणम् (६,४,१३१)'। 'शासिवसिघसीनाञ्च (८,३,६०)'—इति षत्वम्। तिष्ठन्ति स्वस्मिन् धर्मे। "चरन्तं परि

* निघ॰ ७, १३।

† प॰ ११; १४। निघ॰ ५, ३. ७, १३. ९, १३. १२, १६

‡ निघ॰ १२, १६।

तस्थुषः (ऋ० सं० १,१,११,१)"—इति निगमः। अत्र वाजसनेय-भाष्यकृदुवटः 'तस्थुषो मनुष्याः ऋत्विग्यजमाना इत्यर्थः'—इति॥

(२३) पञ्चजनाः*। अत्र भाष्यम्—'तत्र पञ्चजना इत्येतस्य निगमा भवन्ति। "तदद्य वाचः प्रथमं मसीय०—०जुषध्वम् (ऋ० सं० ८,१,१३,४)"। तदद्यवाचः परमं मंसीय 'येनासुरानभिभवेम देवाः'। असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः। सोर्देवानसृजत तत्सुराणां सुरत्वमसोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते। 'ऊर्जाद उत यज्ञियासः'। अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः पक्वं सु प्रवृक्णमिति वा॥ 'पञ्चजना मम होत्रं जुषध्वम्'। गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णाः निषादः पञ्चमः इत्यौपमन्यवः। निषादः कस्मात्? निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः। "यत्पाञ्चजन्यया विशा (ऋ० सं० ६,४,४३,१)"। पञ्चजनीनया विशा, पञ्च पृक्ता सङ्ख्या लिङ्गत्रययोगेष्वविशिष्टा† (निरु० ३,७-८)'—इति। अस्य स्कन्दस्वामी—'पञ्चजना इत्येतस्य सन्दिग्धस्य विवेकार्थं निगमा भवन्ति सन्देहश्च मनुष्यनामसु पाठात् पञ्चशब्देन समानाधिकरणः। तत्र यदि देवदत्तादि पञ्चक-विषयः स्यात् गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्रनामविषयताच स्यात्, मनुष्यमात्रनामैतदित्याचार्यमतान्तरप्रदर्शनाय पदद्वयमिदमनुष्यपदार्थे वर्त्तते इति वैचित्र्यप्रदर्शनार्थं

* निरु० ३, ७; ८. ४. ११।

† 'पञ्च पृक्ता सङ्ख्या स्त्रीपुंनपुंसकेष्वविशिष्टा'—इति निरुक्तपुस्तक-पाठः।

उपन्यासः । न मनुष्यनामत्वेन च द्रष्टव्यः । एकीयमतेन चाष्टौ देवतायाः उच्यन्ते । तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचानां रक्षस्वन्तर्भावदृष्ट्याविरोधात् । तदस्य वाचः । सौचीकस्याग्नेर्विश्वेषां देवानां संवादो होतृजपस्थायम् । तत् अद्य अस्मिन् कर्मणि वाचो माध्यमिकायाः प्रथममुत्कृष्टं स्वर्मोक्षार्थमदनत्वदेवताविशिष्टं मंसीय जानीय । येन अज्ञानेन असुरा यज्ञविघ्नं कुर्वन्तः, हे देवाः ! अद्य तानभिभवेम । हे ऊर्जादः ! उत अपि यज्ञियासः यज्ञस्य सम्पादयितारः पञ्चजनाः आचार्यमतेन ऋत्विङ्मनुष्याः । यमव्यवस्थपतीष्टौ निषादानां यज्ञसम्पादित्वमस्ति, शूद्रस्याप्योदनसवे; 'आयुरसीति शूद्राय प्रयच्छति, तत्त प्रयच्छामीति शूद्रः प्रतिगृह्णाति'—इत्येवमादिना । तथा 'दासो पिनष्टि पत्नी वेत्यत्र दास्यादेर्व्यापारादप्येवं यज्ञसम्पादित्वमेकीयमतेन । पञ्च यज्ञाङ्गभूता देवगन्धर्वादयः साधनभावेन यज्ञसम्पादिनः । अत उच्यते—'मम होत्रं जुषध्वम्' । होतृ-कर्म जुषध्वम् सम्पादयतेत्यर्थः । अन्ये मन्यन्ते—यदेकीयमतं यच्चौपमन्यवस्य तदुभयमप्याचार्यस्येति । तथा च मन्त्रव्याख्यानम्—पञ्चजातयो ब्राह्मणादयो यज्ञियाः गन्धर्वादयः सर्वेऽपि होतुः सङ्गेन व्यापारेण सेवध्वमिति सम्प्रत्ययासाधारणं मनुष्यमात्रनामत्वेनैव निगमं दर्शयति 'यत्पाञ्चजन्यया विशा' । प्रगाथस्यार्धम् । यत् यदा पाञ्चजन्यया पञ्चजनेषु मनुष्येषु भवया विशेषति पञ्चभिरपि मनुष्यजातेरित्यर्थः'—इत्यादि । पश्येति निर्वाच्यम् पृक्तेति निर्वचनम् । सङ्गेति विषयकथनं सम्बन्धवत् सर्वलिङ्गैरित्याह—'लिङ्गत्रययोगेष्ववशिष्टा'—इति । ननु षड़ादीन्यप्यवशिष्टानि ?

उच्यते—प्रत्ययोपात्तरूपसम्बन्धस्यार्थाभिधानात् अदोष इत्युक्तम्। अपिच या सृक्ता सा पक्वेति किन्तु या पक्व सा सृक्तेति तदन्यत्र एकपदनिरुक्तव्याख्यानम्, यत्पक्वअन्ययेत्यस्य द्वितीयपादादिव्याख्यानं चास्माकमत्रानुपयुक्तत्वान्न लिखितम्। 'पृची सम्पर्के (रु०प०)'। 'कनिन् युवृषि (उ०१,१५४)'—इत्यत्र प्राक्-प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कनिनि बाहुलकात् ऋकारस्याकारो नकार उपजनश्च। भोजराजस्तु—'वृपितक्षिराजिधमिपचिप्रतिहिंविभ्यः कन्'—इत्याह, तदा 'पचि विस्तारे (चु०प०)'—इति धातुः। एकादिभ्यो विस्तीर्णा पञ्चसङ्ख्या। जायन्ते जनाः। पचाद्यच् (३,१,१३४)। 'पञ्चभिर्भूतैर्जाताः पञ्चजनाः'—इति क्षीरस्वामी॥

(२४) विवस्वन्तः*। 'वस निवासे (भ्वा०प०)' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति विच्, दृशिग्रहणात् भावे भवति। विविधं वसनं विवः, तद्वन्तो विवस्वन्तः। सर्वस्यापि मनुष्यस्य यत् किञ्चित् विवसनमस्ति। 'विवस्वच्छब्द आदित्यवाच्याद्युदात्तः, अन्यत्र मनुष्यविशेषे यजमाने द्वितीयाचरमुदात्तम्'—इति माधवः। "आविर्भव सुक्रतूपा विवस्वते (ऋ०सं०१,२,२२,२)"—"शिवो दूतो विवस्वतः (ऋ०सं०६,३,२२,३)"—इति च निगमौ। अत्र विवस्वान् यजमानः'—इति माधवभाष्यम्। 'महो जाया विवस्वतोव नाश (ऋ०सं०७,६,२३,१)'—इत्यादित्यवचनस्योदाहरणम्॥

(२५) पृतनाः†। 'पृङ् व्यायामे (तु०आ०)'। "त्वयाध्यक्षेण पृतना जयेयम् (ऋ०सं०८,७,१५,१)"—इति निगमः॥

* निघ० ७, २१। † निघ० ८, २४।

मनुष्याणां बहुत्वं, ततो बहुवचनान्तत्वम्, तथा निघण्टुष्वपि। 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नृभिः (अम० को० २,६,१)'—इत्यादिषु च बहुवचनान्तता दृश्यते ॥

इति पञ्चविंशतिर्मनुष्यनामानि ॥ २५ ॥

**आयती[1]। च्यवाना[2]। अभीशु[3]। अप्नवाना[4]। विनङ्गृसौ[5]। गभस्ती[6]। कवस्नौ[7]। बाहू[8]। भुरिजौ[9]। क्षिपस्ती[10]। शक्वरी[11]। भरित्रे[12]। इति द्वादश बाहुनामानि* ॥ ४ ॥**

(१) आयती। 'यती प्रयत्ने (भ्वा० आ०)', गतिकर्मा वा (निघ० २,१४)—'इन् सर्वधातुभ्यः (४,११४ उ०)'—इतीन्-प्रत्ययः। आभिमुख्येन यतते कार्येषु, गच्छतो वा साधनत्वम्। बाह्वोर्द्वित्वात् सर्वत्र द्विवचनान्तता। निगमोऽन्वेषणीयः† ॥

(२) च्यवाना। 'च्युङ् गतौ (भ्वा० आ०)'। 'मन्यानच् सुवः (उ० २,८३)'—इत्यत्र प्राक्-प्रत्ययनिर्देशोऽधिकविध्यर्थं इत्युक्तेरानच् प्रत्ययः। 'सुपां सुलुक् (७,१,३९)'—इत्यादिना द्विवचनस्याकारः। गच्छतः कर्मणामन्तः। निगमोऽन्वेषणीयः ॥

(१०) "क्षिपन्ती"—इत्यपि टीकासम्मतम्।

* "इति बाहोः" ग।

† बहुचैवास्यायतीपदं परं सर्वत्रैवागच्छन्तीत्येवार्थमकार सायणः।

(३) अभीशू*। व्याख्यातो रश्मिनामसु (३४ पृ०)। अश्नुवाते कर्माणि अभिनयन्तो वा कर्माण्यतः अभीशाते कर्माणि कर्त्तुमिति वा। निगमोऽन्वेषणीयः॥

(४) अप्नवाना। 'आप्लृ व्याप्तौ (स्वा०प०)'; 'ताच्छील्यवयोवचनशक्तिषु चानश् (३,२,१२९)', अस्य सार्वधातुकत्वात् श्नुः, 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वात् गुणः, धातोर्ह्रस्वत्वं पृषोदरादित्वात् (६,३,१०९)। आप्नुतः कर्माणि। यद्वा; अप्न इति कर्मनामसु व्याख्यातम् (१६३पृ०); तदस्यास्ति 'छन्दसीवनिपौ (५,२,१२२वा०)'—इति वनिपि विभक्ते राकारः पूर्ववत्, सकारलोपश्छान्दसः। कर्मवन्तौ हि बाहू। नकारान्तो वेति सन्देहः। निगमदर्शनान्निर्णयः॥

(५) विनङ्गृसौ। बाहुनाम। विनम्य ग्रसतोऽन्नादिकमिति माधवः। पृषोदरादित्वात् (६,३,१०९) पूर्वपदे म्य-लोपो नुक्; 'ग्रस अदने (भ्वा०आ०)'—इत्यस्मात् पचाद्यच् (३,१,१३४), सम्प्रसारणञ्च। "अन्वेस्मै जोषमभरद्विनङ्गृसः (ऋ०सं०७,२,२७३)"—इति निगमः॥

(६) गभस्ती†। व्याख्यातो रश्मिनामसु (३४पृ०)। पुरुषाः अदन्त्याभ्याम् मन्नादीन्। 'ग्रहेर्गभस्ती बाहू, गृह्णाति पदार्थानाभ्यां पुरुषः'—इति माधवः। "ग्र॒र्याभि॒र्न भर॑माणो॒ गभ॑स्त्योः (ऋ० सं०७,१,२२,५)"—इति निगमः॥

---

* पु० १,५।

† पु० १,५, प०५।

(७) करस्नौ*। करोतीति कर्मनामसु करशब्दो व्याख्यातः (१६७पृ०)। तस्मिन् कर्मण्युपपदे 'ष्णा वेष्टने (भू० प०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३,२,३)', 'आतो लोप इटि च (६,४,६४)'। 'कर्मणां प्रस्नातारौ (निरु० ६,१७)' वेष्टयितारौ कर्मकरावित्यर्थः। "सुप्रकरस्नमूतये (ऋ० सं० ६,३,२,५)"—इति निगमः॥

(८) बाहू†। 'बाधृ लोडने (भू० आ०)'। 'अर्जिदृशिकम्यमिपसिबाधामृजिपशितुकधुक्दीर्घहकाराश्च (उ० १,२६)'—इत्यु-प्रत्ययो हो ऽन्तादेशश्च। गमयत्याभ्यां कर्माणि, बाधते परानाभ्यामिति वा। "ऋष्वा त इन्द्र स्थविरस्य बाहू (ऋ० सं० ४,७,३१,३)"—इति निगमः॥

(९) भुरिजौ। 'हृञ् हरणे (भू० उ०)', 'डु भृञ् धारण-पोषणयोः (जु० उ०)'; 'भृञ ऊच्च (उ० २,७१)'—इति इजि-प्रत्ययः। हरतो बिभृतो वा पदार्थान् कर्मकरणसामर्थ्यं वा। "तमंह्यन् भुरिजो धिया (ऋ० सं० ६,८,१६,४)"—इति निगमः॥

(१०) क्षिपस्ती। 'क्षिप प्रेरणे' तुदादिः (प०); 'वसन्तितक्षेस्तिः ( ? ‡ )'—इति बाहुलकात् ति-प्रत्ययः धातोरसुगागमो गुणाभावश्च। प्रेर्यन्ते कर्मसु पुरुषैः॥ 'क्षिपती'—इति पाठान्तरम्। तदा शतरि ङीपि 'आच्छीनद्योर्नुम् (७,१,८०)', 'वा छन्दसि (६,१,१०६)'—इति द्विवचनस्य पूर्वसवर्णः। क्षिपतः पदार्थान्

---

* निघ० ४, १७।

† निघ० ४, ८।

‡ कौमुद्यां तु 'वसेस्तिः (उ०४,१७९)'—इत्येकं सूत्रम् 'नौ तसेः (उ०४,१८०)'—इति चापरम्।

इतय्येतश्च कर्मम्। यद्वा; त्विपेः 'इहिनन्दिजीविप्राणिभ्यः ष्विदाशिषि (उ० ३,१२ ३)'—इति बाहुलकात् ष्वच्-प्रत्ययः श्रोऽस्तादेशः। त्विपतः पदार्थात्। निगमदर्शनान्निर्णयः॥

(११) शक्वरी* । 'शक्लृ शक्तौ (स्वा०प्र०)'; 'स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् (उ० ४,१०९)'-इति वनिप्-प्रत्ययः, 'वनो र च (४,१,७)'—इति ङीप्रौ च पूर्ववत् पूर्वसवर्णादेशः। शक्नुतः कर्माणि कर्त्तुम्। "अङ्गुल्यः शक्वर्यो दिशश्च मे यज्ञेन कल्पन्ताम् (य० वा० सं० १८,२२)"-इति निगमः॥

(१२) भरित्रे। विभर्त्ति रश्मीनादित्य इव। 'अर्त्तिलू-दिभ्य इत्रोत्रौ (उ० ४,१६८)'—इति इत्र-प्रत्ययः। भृत्विदर्थः। "अंशुं दुहन्ति हस्तिनो भरित्रैः (ऋ०सं० ३,२,२०,२)"—इति निगमः॥

इति द्वादश बाहुनामानि ॥ ४ ॥

अग्रुवः(१)। अण्वः(२)। व्रिशः(३)। क्षिपः(४)। शर्याः(५)। रशनाः(६)। धीतयः(७)। अथर्यः(८)। विपः(९)। कक्ष्याः(१०)। अवनयः(११)। हरितः(१२)। स्वसारः(१३)। जामयः(१४)। सनाभयः(१५)। योक्त्राणि(१६)। योजनानि(१७)। धुरः(१८)।

* प० ११। नि०१,८।

(२) इतोऽनन्तरं "विशाः"—इत्यधिकं ग पुस्तके।

(३) "हशः" ख।

(८) "अथर्यवः"—इत्यपि टीका-सम्मतम्। "अथर्याः" म. C. D. F.।

(१२) इतोऽनन्तरं "रोहितः"—इति ग iid।

**शाखाः[१९]। अभीशवः[२०]। दीधितयः[२१]। गभस्तयः[२२]।**
**इति द्वाविंशतिरङ्गुलिनामानि* ॥ ५ ॥**

(१) अग्रुवः†। 'अच्वादयश्च (उ० ४,१००)'—इति रु-प्रत्ययान्तेषु निपातेषु द्रष्टव्यः। 'अगि गतौ (भ्वा०प०)'—इति धातुः; निपातनान्न-लोपः, तन्वादित्वादुवङ्। गच्छति कर्माणि प्रति। यद्वा; अग्र-शब्दे उपपदे गमेः पूर्ववन्निपातनात् रु-प्रत्यये पूर्वपद-य-लोपः गमेष्टिलोपश्च। अग्रे गच्छन्ति ताः। "तमीं हिन्वन्त्यग्रुवः (ऋ० मं० ६,७,१७,३)"—इति निगमः। अङ्गुलीनां बहुत्वात् सर्वत्र बहुवचनान्तता ॥

(२) अण्व:‡। अणतिः शब्दार्थः (भ्वा०प०); 'अणश्च (उ० १,८)'—इति उ-प्रत्ययः। 'वोतो गुणवचनात् (४,१,४४)'—इति ङीप्। अणन्ति स्फोटनादि शब्दं कुर्वन्ति, तालादि शब्दं कुर्वन्त्याभिरिति वा। यद्वा; अण्वः हस्तपरिमाणापेक्षयाल्पपरिमाणाः। "तमीमण्वीः समर्य आ (ऋ०मं० ५,७,१७,२)"—इति निगमः॥

(३) विशः। 'विश प्रवेशने (तु०प०)'। 'क्विप् वचि (३,२,१७८वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः'—इत्युक्तेः क्विपि रेफ उपजनः विशन्ति साधनभावं कार्येषु। "तमीं हिन्वन्ति धीतयो दश विशः (ऋ०मं० २,२,१३,५)"—इति निगमः। 'कर्मसु धीयमाना दशाङ्गुलयः'—इति माधवभाष्यम् ॥

---

(२२) नास्त्येतत् पदम् ग. C. D. F पुस्तकेषु। टीकाकृता तु एतस्यैव स्थाने केषुचित् "भुजन्यवः"—इति, केषुचित् "सगुनः"—इति च दृष्टम्।

* "इत्यङ्गुलीनाम" ग।

† प० ६, ११। ‡ निघ० ६, ११।

(४) क्षिपः। 'क्षिप प्रेरणे (दि० प०)'; औणादिकः क्विप्। क्षिपन्ते प्रेर्यन्ते पुरुषेण कर्मसु निक्षिपन्त्यास्वपुत्रीयकादीन् इति वा। "मृजन्ति त्वा दश क्षिपः (ऋ०सं० ९,८,२०,४)"—इति निगमः॥

(५) अर्यः*। 'शृ हिंसायाम् (क्र्या० प्वा० प०)'। 'अघ्न्यादेराकृतिगणत्वात् यत् (उ० ४,१०८)' शृणाति पापान्। "आ यः शर्याभिस्तुविनृम्णो अस्य (ऋ० सं० ८,१,२६,२)"—इति निगमः॥

(६) रशनाः†। रश्मिबन्धनार्थो धातुरित्युक्तं रश्मिनिर्वचने (२४ पृ०)। 'युच् बहुलम् (उ० २,७४)'—इति युच्। बध्नन्ति बन्धनीयं, बध्यते आभिरिति वा। युच्-प्रकरणे 'अशेरश च'—इति श्रीभोजदेवः। अश्नुवते कर्माणि। "रशनाभिर्दशभिरभ्यधीताम् (ऋ० सं० ७,५, २२,६)"–"अच्छा बर्हीरशनाभिर्नयन्ति (ऋ० सं० ७,२,२२,१)" —इति च निगमौ॥

(७) धीतयः‡। 'धी (दि० आ०)'-धातोः 'क्तिच्क्तौ च संज्ञायाम् (३,३,१७४)'—इति क्तिच् व्यत्ययेन दधातेरपि भवति, 'घुमास्थागापाजहाति (६,४,६६)'—इतीत्वम्। धीयन्ते विधीयन्ते पुरुषैः कर्मसु, धारयन्ति कर्मसाधनानि वा। अन्तर्णीतण्यर्थो दधातिः। "ध सप्तधीतिभिर्हितः (ऋ० सं० ६,७,२२,४)"—इति निगमः॥

(८) अथर्यः। 'अत सातत्यगमने (भ्वा० प०)'; 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन्-प्रत्ययो बाहुलकात्, धातोरथरादेशः;

* प० ४, २। निघ०५, ४. १०, २९।
† निघ०१, १४।
‡ निघ०१,१४. १०, ४९. ११, ११।

'कृदिकारादक्तिनः (४,१,४५ वा०)'—इति ङीप्; अप्। 'घृतवृधे-मथर्यो३ न दस्मम् (ऋ० सं० २,५,५,२)'-इत्यत्र 'अथर्यो न स्त्रियः इव'—इति माधवः। अथर्यइति तेनाप्यपाठि अङ्गुलिनामसु॥

"अथर्यवः"—इति पाठो बहुषु दृष्टः। तद्वाङ्गनामकरणं स्पष्टम्। निगमदर्शनान्निर्णयः॥

(८) त्रिपः*। 'त्रिप प्रेरणे (चु०प०)'. क्विपि, प्रेर्यन्ते पुरुषैः कार्येषु। "त्रिपो न शुभ्रा नियुते जनानाम् (ऋ०सं० ६,१,३५, ३)"—इति निगमः॥

(१०) कक्ष्याः†। "दशावनिभ्यः (ऋ०सं० ८,४,२०,२)"—इत्यत्र 'कक्ष्याः प्रकाशयन्ति कर्माणि (निरु० ३,९)'—इति भाष्यम्। कक्ष्याः प्रकाशयन्त्यनुष्ठानफलेन फलेन वा कर्माणि। 'ख्यातेः कक्ष्य-शब्दनिर्वचनम्'—इति स्कन्दस्वामी। 'गाहते कक्षः इति नामकरणः ख्यातेर्वा (निरु० २,२)'—कक्षशब्दनिर्वचनपरे भाष्ये स्कन्दस्वामि-ग्रन्थः—'ख्या प्रकथने (अदा०प०)'—इत्यस्मात् स-प्रत्यये निरर्थको निर्निमित्तकोऽसौ सः यकाराकारयोर्लोपोऽभ्यासविकारस्य द्रष्टव्यः'—इति। अयमभिप्रायः—प्रायेण 'वृतुवदिहनिकमिकषिभ्यः सः (उ० ३,५९)'—इति ख्यातेर्बाहुलकात् स-प्रत्यये बाहुलकादेव द्विर्वचने हलादिशेषे ह्रस्वत्वे 'कुहोश्चुः (७,४,६२)' न भवति बाहुलकादेव, 'अभ्यासे चर्च (८,४,५४)'—इति चर्त्वम्, उत्तरस्य ख्या-इत्यस्य यकाराकारयोर्लोपः,'खरि च (८,४,५५)'—इति चर्त्वम्, 'आदेशप्रत्यययोः

* पु० १, ११. प०२, १५।
† निघ०२, २. ९, ९. ६, १८।

(८,३,५९)'—इति षत्वम् । प्रकथनेन प्रकाशनं लक्ष्यते । अंशेन नित्यं प्रच्छादकत्वात् प्रकाश्यते पुरुषेण । कक्षो बाहुतलम् । 'तत्र भवः (४,३,५३)'—इत्यर्थे 'शरीरावयवाच्च (४,३,५५)'—इति यत्-प्रत्ययः । अङ्गुलयोऽपि परम्परया कक्षे भवा इति वक्तुं शक्यते, अंशेन नित्यं प्रच्छादितत्वात्, प्रकाश्यो हि सर्वदा कक्ष्यः, तत्र भवा अङ्गुलयस्तद्वन्तः प्रकाश्याः किन्तु प्रकाशयन्ति कर्माणि अनुष्ठानेन फलेन वा, यथाचाधारस्थिते अरणौ अग्निना प्रकाश्ये तत्र भवोऽग्निः प्रकाशको भवति तद्वत् । यद्वा ; कक्ष्या रज्जुः तद्बन्धनसाधनत्वात् कक्ष्या-शब्देनोच्यन्ते । "परि ष्वजन्ते दश कक्ष्याभिः (ऋ० सं० ८,५, १९,४)"—"दशावनिभ्यो दशकक्ष्येभ्यः (ऋ० सं० ८,४,३०,२)" —इति च निगमौ ॥

(११) अवनयः*। व्याख्यातं पृथिवीनामसु (११पृ०)। अवन्ति कर्माणि, अव्यन्ते वा । "सनात् सनीळा अवनीरवाताः (ऋ० सं० १,५,२,५)"—"दशावनिभ्यः (ऋ० सं० ८,४,३०,२)"—इति च निगमौ ॥

(१२) हरितः†। व्याख्यातं नदीनामसु (१३६पृ०)। हरन्त्याभिः पदार्थान् "एतं त्यं हरितो दश (ऋ० सं० ६,८,२८,३)"—इति निगमः ॥

(१३) स्वसारः‡। सु-शब्दे उपपदे 'असु क्षेपणे (दि० प०)'—इत्यस्मात् 'सावसे ऋन् (उ० २,८९)'—इति ऋन्-प्रत्ययः सुष्ठु अस्यते

---

* प० १,३। † पु० १,१। ‡ निघ०११, १२।

क्षिप्यते पदार्थं आभिः, कार्येषु क्षेप्तव्या वा। यद्वा ; स्व-शब्दे उपपदे 'षद्लृ विशरणे (भू० प०)'—इत्यस्माद् बाहुलकादर् बाहुलकात् टि-लोपश्च। स्वं स्वं व्यापारं गच्छन्ति प्राप्नुवन्ति, स्वस्मिन् स्वस्मिन् स्थले सीदन्तीति वा। यद्वा; परस्परं भगिनीव दृश्यन्ते, एकहस्त-प्रभवत्वात् स्वसार उच्यन्ते 'न षट्स्वस्रादिभ्यः (४,१,१०)'—इति स्त्रीप्रत्ययनिषेधः। "दुवस्यन्ति स्वसारो अह्रयाणम् (ऋ० सं० १,५, २,५)"—इति निगमः॥

(१४) जामयः*, सनाभयः। अनयो— — —मर्थोऽनुसन्धेयः। जमतेर्गतिकर्मणः (निघ० २,१४) 'जनिघसिभ्यामिण् (उ० ४, १२६)'—इति बाहुलकादिण्-प्रत्ययः। 'अलिमलिपलिघसिजम्यणि-पणिभ्य इण्'—इति श्रीभोजदेवः। जमन्ति गच्छन्ति कर्माणि प्रति अदन्त्याभिरन्नादीनि वा। जनेरेव वा बाहुलकान्नकारस्य मकारः, जाताः स्व-कारणात्। "त्वं सानावधि जामयः (ऋ० सं० ६,८, १६,५)"—इति निगमः॥

(१५) सनाभयः†। 'णह बन्धने (दि० उ०)'; 'नहो भश्च (उ० ४,१२२)'—इति इञ्-प्रत्ययः भोऽन्तादेशः। नह्यतेऽनया गर्भ इति नाभिः, समाना नाभिरासामिति सनाभयः। ज्योतिर्जनपदेत्यस्मात् सहशब्दस्य स-भावः। समाना हि मातुर्नाभिस्तासां, समा नाभिः मूलमासामिति वा। "सनाभयो वाजिनं मूर्जयन्ति (ऋ० सं० ७, ३,२५,४)"—इति निगमः॥

* पृ० १, १२।
† नि० ४, २१।

(१६) योक्त्राणि* । (१७) योजनानि† । 'युजिर् योगे (रु० उ०)' । 'दाम्नीशसयुयुजस्तुतुदसि (३,२,१८२)'—इति ष्ट्रन्-प्रत्ययः पूर्वेच । 'युच् बहुलम् (उ० २,७४)'—इति युच् । युञ्जन्ति पदार्थानाभिरिति, युक्ता वा हस्तेन, संयम्यते आभिः क्रोधादय इति वा । शब्दस्वाभाव्यात् नपुंसकलिङ्गता । "दश योक्त्रेभ्यो दश योजनेभ्यः (ऋ० सं० ८,४,३०,२)"—इति निगमः ॥

(१८) धुरः‡ । धूर्वतेर्बधकर्मणः (निघ० २,१९) कर्त्तरि क्विपि (३,२,१७७), 'राल्लोपः (६,४,२१)' इति व-लोपे रेफस्य विसर्जनीयः, जसि धुरः । धूर्वन्ति घ्नन्त्युपचयन्ति कर्माणीत्यर्थः । हिंसन्ति परानाभिरिति वा । धारयतेर्वा औणादिके क्विपि बाहुलकात् आकारस्य उकारः । अङ्गुल्या हि धार्यं सुवर्णादि धारयति । "दश धुरो दश युक्ता वहद्भ्यः (ऋ० सं० ८,४,३०,२)"—इति निगमः॥

(१९) शाखाः§ । 'अशूङ् व्याप्तौ (स्वा० आ०)'; अस्मात् ख-प्रत्यये विकृते 'अश्नोतेर्डित्'—इति श्रीभोजदेवेन ख-प्रत्यये शाख-शब्दो व्युत्पादितः । व्याप्तं हि सर्वम् । ख-शब्दाधिकरणे उपपदे शेतेः 'अधिकरणे शेतेः (३,२,१५)'—इति अच-प्रत्ययः । अङ्गुल्यो हि हस्ताग्रभागत्वात् खे आकाशे शेरते व्यवतिष्ठन्ते, आकाशस्थानकाशरूपत्वात् उपपन्नं हि तत्र शयनम् । खशयाः सत्याः पृषोदरादित्वात् (६,३,१०९) यकारलोपेन शकाराकारयोः सवर्णदीर्घत्वे खशा इति भवति, ततोऽक्षरद्वयस्य स्थानविनिमयः, टाप्; शाखा । शक्नोतेर्वा पचाद्यचि (३,१,१३४) उपधादीर्घः, ककारस्य खकारश्च ।

* निघ०२,५ । † निघ०२,५ । ‡ निघ०२,५ । § निघ०२,४,६,२२ ।

कुर्वन्ति हि ता अङ्गुलयः पुस्तकादि धारयितुं कार्याणि कर्त्तुं वा। यद्वा; 'शाखृ व्याप्तौ (भ्वा॰प॰)', पचाद्यच् (३,१,१३४)। शाखन्ति व्याप्नुवन्ति कर्माणि। यद्वा; 'शीङ् स्वप्ने (अदा॰आ॰); अस्मात् 'वृत्ताक्षयवात्'—इति ख-प्रत्ययो बाहुलकात् हस्तावयवेऽपि भवति। शेरतेऽवतिष्ठन्ते आसु नखादयः इति शाखाः। 'श्यते रिच वा'—इति श्रीभोजदेवः; ख-प्रत्ययोऽधिकृतः, इकारादेशस्य विकल्पितत्वात् पक्षे शाखानिष्पत्त्या— — —शाखास्थानीयत्वाद्वा शाखा इष्यन्ते तथाचामरसिंहः—'अङ्गुल्यः करशाखाः स्युः (२,६,८२)'—इति। 'हस्ताभ्यां दशशाखाभ्याम् (ऋ॰सं॰८,७,२५,७)''—इति निगमः॥

(२०) अभीशवः*। व्याख्याता रश्मिनामसु (३४पृ॰)। अभ्यश्नुवते कर्माणि, अभीशते वा कर्माणि कर्त्तुम्। "दशाभीशुभ्यो अर्चता जरेभ्यः (ऋ॰सं॰८.४,३०,२)''—इति निगमः॥

(२१) दीधितयः†। व्याख्याता रश्मिनामसु (३५पृ॰)। अङ्गुलीयकादिधारणाद् दीप्यन्ते। दीव्यन्ति क्रीड़न्त्याभिरिति वा दधातेर्व्युत्पन्नो दीधिति शब्दः। "अग्निं नरो दीधितिभिररण्योः (ऋ॰सं॰५,१,२३,१)''—इति निगमः॥

(२२) गभस्तयः‡। व्याख्याता रश्मिनामसु (३५पृ॰)। गृह्णन्ति पदार्थानाभिः पुरुषाः इति गभस्तयः। "दीप्यते मधो रंशुषु गभस्तिभिः ( ? )"—इति निगमः॥

"सुहस्त्याः"—इति केचित्।

---

* पृ॰ १,५। † पृ॰ १,५। ‡ पृ॰ १,५।

एतस्य स्थाने "प्रसुतः"—इति च केचित् पठन्ति। नास्य व्याख्याता नदीनामसु (१ ३८पृ०)। संसरन्ति सह गच्छन्ति कर्माणि प्रति सङ्गता वा। स्पष्ट-निगमदर्शनान्निर्णयः॥

इति द्वाविंशतिरङ्गुलिनामानि॥ ५॥

वश्मि(१)। उश्मसि(२)। वेति(३)। वेनति(४)। वेंसति(५)। वाञ्छति(६)। वष्टि(७)। वनोति(८)। जुषते(९)। हर्यति(१०)। आचके(११)। उशिक्(१२)। मन्यते(१३)। छन्त्सत्(१४)। चाकनत्(१५)। चकमानः(१६)। कनति(१७)। कानिषद्(१८)। इत्यष्टादश कान्तिकर्माणः*॥ ६॥

'कान्तिकर्माणः (निरु० २,९)'=इच्छार्था धातवः—

(१) वश्मि†। 'वश कान्तौ' अदादिः परस्मैपदी। लडुत्तमैकवचनम्। "तदहं वश्मि पवमान सोम (ऋ० सं० ७,४,६,४)"—इति निगमः॥

(२) इतोऽनन्तरम् "चचवेति"—इत्यधिकं ग. C. D. F पुस्तकेषु।
(५) "विसति" ख। "वेशति" च। टीकाकृतापि पाठान्तरतया स्वीकृतम्।
(७) "वेष्टि" ख।
(१०) इतोऽनन्तरम् "ईर्यति"—इत्यधिकम् ख पुस्तके।
(११) "चचके" ख। ग. C. D. F पुस्तकेषु नास्त्येवेदम् पदम्।
(१४) "छंसनत्" C. D. F।
* "इति कान्तिकर्माणः" ग।
† निरु० ११, ५।

(१३) मन्यते* । 'मन ज्ञाने' दिवादिरात्मनेपदी । "आप्रश्चिद्य मन्यमानस्तुरश्चित् (ऋ० सं० ५,४,८,२)"—"यदि मन्येतोपमुख्यमित्योदनैः ( ? )"—इति च निगमौ ॥

(१४) छन्त्सत्† । 'छदि संवरणे' चुरादिः । पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३,४,९४), 'सिब्बहुलं लेटि (३,१,३४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)' । 'वृषा छन्दुर्भवति हर्यतः (ऋ० सं० १,४,१९,४)'—इत्यत्र 'मन्यते छन्त्सत् चाकनत् इति कान्तिकर्मसु पाठात्, 'तदिन्मे छन्त्सद् वपुष: (ऋ० सं० ७,७,२९,३)'—इति प्रयोगदर्शनाच्च छदिः कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम् । 'दूरेचुताय छन्त्सत् (ऋ० सं० २,१,२१,६)"—इति, "अच्छान्तुः पञ्चकृष्टयः (ऋ० सं० ८,६,२६,६)"—इति च निगमौ ॥

(१५) चाकनत्‡ । 'कनी दीप्तिकान्तिगतिषु (भ्वा० प०); यङ्लुगन्तः । 'नुगतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)' । "अह्मेदिन्द्रस्य चाकनत् (ऋ० सं० ६,२,३८,१)"—"ये निः प्रचिष्ठ चाकनत् ( ? )"—इति च निगमौ ॥

(१६) चकमानः । 'चक तृप्तौ' भ्वादिरात्मनेपदी । 'ताच्छील्यवयोवचनशक्तिषु चानश् (३,२,१२८)' । "चकमानः पिबतु दुग्धमंशुम् (ऋ० सं० ४,२,७,१)"—इति निगमः ।

* प० २, १४ ;—१९ । निरु० २, १. २, ८. ४, २४. ९, २५. ९, १२. ९, २५. ११, २०. ११, ४१ ।

† प० २, १४ । निरु० ९, ८ ।

‡ प० २, ११. ४, २ ;—२ । निरु० ४, १४ ;—१५. ४, १७ ।

(१७) कनति*। 'कनी दीप्तिकान्तिगतिषु (भू०प०)' भ्वादिः परस्मैपदी । "भानत् कनति नुदतम् ( ? )"—"इन्द्रः सोमस्य काणुका (ऋ०सं० ६,४,२८,४)"—इति च निगमौ ।

(१८) कानिषत्† । कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधावृद्धिर्वाऽऽलकात् इकारलोपः पूर्ववत् । "अग्ने तृतीये सवने हि कानिषः (ऋ०सं० ३,१,२१,५)"—इति निगमः ॥

इत्यष्टादश कान्तिकर्माणो धातवः ॥ ६ ॥

अन्धः(१) । वाजः(२) । पयः(३) । प्रयः(४) । पृक्षः(५) । पितुः(६) । वयः(७) । सिनम्(८) । अवः(९) । क्षु(१०) । धासिः(११) । इरा(१२) । इळा(१३) । इषम्(१४) । ऊर्क्(१५) । रसः(१६) । स्वधा(१७) । अर्कः(१८) । क्षद्म(१९) । नेमः(२०) । ससम्(२१) । नमः(२२) । आयुः(२३) । सूनृता(२४) । ब्रह्म(२५) । वर्चः(२६) । कीलालम्(२७) । यशः(२८) । इत्यष्टाविंशतिरन्ननामानि‡ ॥७॥

* पृ० अत्रैव १५ । † पृ० अत्रैव १५ ।

(२) इतोऽनन्तरं "पाजः"—इत्यधिकम् ग. C. D. F पुस्तकेषु ।

(४) "प्रयः"—इत्येतन्नास्ति क-पुस्तकातिरिक्तेषु, देवराजेन तु "अवः"—इत्यनेनास्य विकल्पः स्वीकृतः ।

(७) "वयः" नास्त्येतत् ख. ङ. च पुस्तकेषु । तेषु पुनरस्यैव स्थाने "सुतः"—इति दृश्यते, टीकाकृतापि केचिदित्याद्युक्त्याऽयमेतत्पाठोऽभ्युपगतो ज्ञाप्यते । ग. C. D. F पुस्तकेषु तु "सुतम्" इति ।

(९) "सीनम्" ग ।

(११) "क्षुमत्" ग. "क्षुत्" C. D. F ।

(१८) नैतद् दृश्यते क-पुस्तके ।

(१९) "छद्मः" ख ।

(२८) नास्त्येतत् पदं ग. C. D. F पुस्तकेषु । ‡ 'इत्यन्नस्य' ग ।

(१) अन्धः*। 'अन्धइत्यन्ननाम। आध्यानीयं भवति (निरु० ५,१)' —इति भाष्यम्। 'आभिमुख्येन हि ध्यातव्यं सर्वेणान्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी। आङ्-पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोपः, उपसर्गस्य ह्रस्वत्वं नुडागमश्च धातोः। यद्वा; 'अद भक्षणे (अदा० प०)'—इत्यस्मात् 'अदेर्नुम् धश्च (उ० ४, २००)'—इति कर्मणि कर्त्तरि वा कारके असुनि नुमागमो धकारश्चान्त्यादेशः। अद्यते प्राणिभिः, तान् वा स्वयमत्ति। तथाच श्रुतिः —'अद्यतेऽत्ति च भूतानि (तै० उ० २,२)'—इति। 'अनित्यनेनान्धः' —इति क्षीरस्वामी। अनितेरसुनि बाहुलकात् धुगागमः। अनित्यन्नं हि प्राणनम्। "आमत्रेभिः सिञ्चता मद्य मन्धः (ऋ० सं० २,६,१३,१)"—"इन्द्रेहि मत्स्यन्धसः (ऋ० सं० १,१,१७,१)"— इति च निगमौ॥

(२) वाजः†। 'व्रज गतौ (भ्वा० प०)'। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। 'अजिव्रज्योश्च (७,३,६०)' —इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः। तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः सिद्धो भवति वाजः'—इति। निगम्यते अभिगम्यते हि तत्सर्वैः। गच्छत्यनेनादत्तेन सुखानि, भुक्तेन तृप्तिं वा गच्छत्यनेन शुद्धेन सत्वशुद्धिं भोक्ता। यदाहुः—'आहारशुद्धौ सत्वशुद्धिरिति। यद्वा; गत्यर्था बुद्ध्यर्थाः; जानात्यनेन भुक्तेन धर्मम्। 'दश धर्मान् विजानन्ति

* प० ४, २। निरु० ५, १.९, २६. ११, ९।
† प० १०। निरु० १०, २२. १२, १६;—१९।

धृतराष्ट्रनिबोधनात् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः'
—इति श्रीमहाभारतम् । सर्वत्रान्ननामसु गत्यर्थाद् व्युत्पादितेष्वेव
मर्थो बोद्धव्यः । "सुतानां वाजिनीवसु (ऋ० सं० १,१,२,५)"—
अन्यत्र "वाजं हृत्नस्यद् रथम् (ऋ० सं० १,४,१२,१)"—इति
च निगमौ ॥

(३) पयः* । व्याख्यातं रात्रिनामसु पयइत्यत्र (निरु० २,५) ।
यद्वा ; 'अय पय गतौ (भू० आ०)'—इत्यस्मादसुन् । पीयते अन्नं ।
तद्धि चतुर्विधम् पेय-चोष्य-लेह्य-चर्व्यभेदेन । वर्द्धन्ते हि तेन भुक्तेन ।
'जातान्यन्नेन वर्द्धन्ते (तै० उ० २,२)'—इति श्रुतिः । "पयस्वानग्न
आगहि (ऋ० सं० १,२,१२,३)"—"यदीं मृतस्य पयसा पियानः
(ऋ० सं० १,५,२७,३)"—इति च निगमः ॥

(४) प्रयः† । व्याख्यातमुदकनामसु (१११पृ०) । "उपप्रयो-
भिरागतम् (ऋ० सं० १,१,३,४)"—"तुराय प्रयोन हंमि स्तोमं
माहिनाय (ऋ० सं० १,४,१७,१)"—"प्रयस्वन्तः प्रति हर्यामसि
त्वा (ऋ० सं० ८,६,२१,३)"—इति च निगमाः ॥

(५) श्रवः । 'श्रु श्रवणे (भू० प०)' । कर्मण्यसुन् । श्रूयते अन्नं
वर्ण्यमानं श्रवो यशः । तद्धर्मात्ताच्छब्द्यं वा । "सत्यश्चित्र श्रवस्तमाः
( ? )"—"मर्त्तं दधामि श्रवसे दिवे दिवे (ऋ० सं० १,२,
३३,२)"—"अभिश्रव ऋज्यन्तः (ऋ० सं० ४,७,९,३)"—इति च
निगमाः । "उप प्रयोभिरागतम् (ऋ० सं० १,१,३,४)"—इत्यादिषु

* प० १२. १, ७ । निघ० २, ५ ।
† प० १० । निघ० ४, २४. ९, १०. १०, ३. ११, ९ ।

निरुक्त-टीकायां स्कन्दस्वामिना प्रयइत्यन्ननामेत्युच्यते । तथाच 'अर्चन्ति अर्वः (ऋ० सं० १,३,२०,४)'—इत्यादि-निगमेषु वेदभाष्ये, 'अव इत्यन्ननाम'—इति स्पष्ट मुच्यते । निरुक्त-टीकायामुभयथा (निरु० १०,३) । अतः 'प्रयः'-'अवः'-शब्दयोः उभयोरप्यन्ननामत्वं स्पष्टम् । तयोरेकतमस्य पाठो विद्वद्भिर्निर्णीयताम् ॥

(५) पृक्षः* । 'पृची सम्पर्के (रु० प०)' । औणादिके क्विपि धातोः कुगागमः । सम्पृक्तं हि तज्जाठराग्निभिः । पृक्षनिदानार्थं इति वा (अदा० आ०) । "वायो तत्र प्र पृक्षती (ऋ० सं० १,१,२,३)"—इत्यादौ माधवेनोक्तम् । तच क्विपि बाहुलकान्न-लोपः । दीयते ह्यन्नमर्थिभ्यः । "त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् (ऋ० सं० १,३, ४,४)"—इत्यत्र स्कन्दस्वामिभाष्यम् 'पृक्षा अन्ननामैतत् पठन्ति । "पृक्षो भरन्त वाम् (ऋ० सं० ४,४,१२,३)"—इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'—इति । "अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १,५,१६,२)"—"पृक्षो वहतमग्निना (ऋ० सं० १,४,२,६)"—इति च निगमौ । "त्वं शर्द्धो मारुतं पृक्ष ईशिषे (ऋ० सं० २,५,१८,१)"—इत्यादौ तु षष्ठ्येकवचनान्तमपि दृश्यते ॥

(६) पितुः† । 'पा रक्षणे (अदा० प०)' । 'कमिमनिजनिभाया-मापाहिभ्यश्च (उ० १,७०)'—इति तु-प्रत्ययो बाहुलकादिकारः । रक्षितव्यं ह्यन्नम् । प्यायतेर्बाहुलकात् तु-प्रत्ययो धातोः पि-भावश्च ।

---

* प० १७ ।

† निघ० ५, २ । निघ० ८, २४ ।

"पितुं नु स्तोषम् (ऋ॰ सं॰ २,५,६,१)"—"प्रमन्दिने पितुमदर्चता वचः (ऋ॰ सं॰ १,७,१२,१)"—इति निगमौ ॥

(७) वयः* । 'वी गतिप्रजनकान्त्यशनखादनेषु (अदा॰ प॰)' । असुन् । गत्यादिः सर्वोऽप्यर्थोऽत्रानुगुणः कारकभेदेन । 'वय गतौ (भ्वा॰ आ॰)'-इत्यस्मादसुन् वा । "ऊर्ध्वं दर्से वयु इन्द्रो दधाति (ऋ॰ सं॰ २,१,१०,२)"—"परि द्युसमोमनं वां वयो गातव (ऋ॰ सं॰ ५,५,१६,४)"—इति च निगमौ ॥

केचिदस्य स्थाने "सुतः"†-इति पठन्ति । तत्र 'षूङ् प्राणिप्रसवे (अदा॰ आ॰)' । 'तातप्रातलातसुत'-इत्यादिना क्त-प्रत्ययः, षूङो ह्रस्वत्वञ्च निपात्यते । सूयते वृष्ट्या । "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३,७६) । यद्वा; 'षु षु गतौ (भ्वा॰ प॰)'-इत्येतद्-विषयं निपातनम् । निगमोऽन्वेषणीयः ॥

(८) सिनम्‡ । 'षिञ् बन्धने (स्वा॰ क्र्या॰ उ॰)' । 'इण्सिञ्-दीङुष्यविभ्यो नक् (उ॰ ३,२)' । 'सिनाति भूतानि'-इति भाष्यम् । 'सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति'-इति, स्कन्दस्वामी । सीयते अनेनेति वा । अन्नेन हि भृत्यादयो बध्यन्ते । "येन स्मासिनं भरथः सखिभ्यः (ऋ॰ सं॰ ३,४,८,१)"—इति निगमः ॥

(९) अवः§ । 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाच-

* निघ॰ ६, ७ ।
† निघ॰ ४, १८;—२१ ।
‡ प॰ ४, २ । निघ॰ ५, ५ ।
§ निघ॰ १०, ११ ।

।।गत्याक्षेपणहिंसादानभागदहनेषु (भ्वा० प०)'।
असुन्। धात्वर्थैषु योगः सर्वाङ्गीकर्त्तव्यः। "भवत् ब्रह्मण्यवागमत् ( ? )"—"युयुत्सिर्गिरोऽवसा येतु धीतिम् (ऋ० सं० १,५,२५,४)"—इति निगमौ ॥

(१०) द्युम्नु। 'दु द्यु शब्दे (अदा० प०)'—'दि निवासगत्योः (तु० प०)'। 'खनिकष्यज्यसि...म्नि (उ० १,३२)'—इति विधीयमानो क्तिन्-कु-प्रत्ययो बाहुलकादाभ्यामपि भवति। द्यूयते शब्द्यते लोकभिः सूयते देवतात्वादन्नम् स्तम्भादिभिः गुणवत्तया वा लोकैः, निवसत्यनेन वा। "त्वं वाजस्य द्युमतो रायईशिषे (ऋ० सं० २,५,१८,५)"—"आ तू न इन्द्र द्युमन्तम् (ऋ० सं० १,५,२७,१)"—इति च निगमौ ॥

(११) धासि। 'शुषिकुषिभ्यः क्सिः (उ० ३,१५१)'—इतिर्बाहुलकात् धाञोऽपि भवति, बाहुलकादेव ईत्वं न भवति। दीयते ऽर्थिभ्यो धारयति प्राणान् वा। "विदत्स्वर् मा तनयाय धासिम् (ऋ० सं० १,५,१,३)"—अत्र 'धासिरन्ननाम, इह तु पयस आसवकारणत्वात् गोषु प्रयुक्तः'—इति स्कन्दस्वामी ॥

(१२) इरा। व्याख्यातं नदीनामसु (१४० पृ०) ॥

(१३) इळा*। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, लिप्यते उदरे, स्वपत्यनेन भुक्तेन न हि बुभुक्षितस्य निद्रास्ति। "तस्मा इळां सुवीरा आ यजामहे (ऋ० सं० १,३,२०,४)"—इति निगमः ॥

(१४) इषम्†। 'इषु इच्छायाम् (तु० प०)'। औणादिकः क्विप्।

* पु० १, १।
† निरु० ६, २१. १०, २१. ११, १४; –१९।

इष्यत इति। यद्वा; 'इषु गतौ (दि०प०)' क्विप्। वेदे प्रायुर्येण दर्शनाद् द्वितीयैकवचनान्तम्। "इषँ स्तोतृभ्य आभर (ऋ०सं० ३, ८,२२,१)"—"अश्विना यज्वरीरिषः (ऋ०सं० १,१,५,१,)"—इति च निगमौ ॥

(१५) ऊर्क्*। 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः, पक्वं सुप्रवृक्णमिति वा (निरु० ३,८)'—इति भाष्यम्। 'ऊर्जयति' प्रबलति प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। 'पक्वमिति वा' पक्वशब्दस्य पकारलोपं कृत्वा क-शब्दं व्यत्यस्य वकारस्योरि कृते इगागमे चोर्गिति भवति। 'सुप्रवृक्णमिति वा' पक्षे र-शब्दलोपे कृते, संयोगादिलोपे कृते, अकारस्योपरि इकि ऊत्वे च कृते ऊर्गिति भवति। सुच्छिन्नं हि तद्भवति मृदुत्वात्'—इति स्कन्दस्वामिग्रन्थः। * * *। 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया'—इति भट्टभास्करमिश्रः। अथ 'ऊर्ज बलप्राणनयोः (चु०प०)' इत्यस्मादेव करणे क्विप्। "यंसि त्वमनमूर्जं न विश्वध चरध्यै (ऋ०सं० १,५,५,३)"—इति निगमः ॥

(१६) रसः†। व्याख्यातमुदकनामसु। "मन्ने यत् पिच इँ रसः दिवे कः (ऋ०सं० १,५,१५,५)"—इति निगमः ॥

(१७) स्वधा‡। स्व-शब्दे उपपदे दधातेः (जु०उ०) 'गेहे कः (३,१,१४४)'—इति क-प्रत्ययो बाहुलकाद् भवति। स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा। "विश्वा हि माया

* निरु० ३, ८. २०; –४१. ११, २९
† पु० १, ११। निरु० ११, २५।
‡ पु० १, ११।

अर्वसि स्वधा वः (ऋ०सं०४,८,२४,१)"—"आदह स्वधामनु (ऋ०सं०१,१,११,४)"—इति च निगमौ ॥

(१८) अर्कः* ।

(१९) चम्मा । व्याख्यातमुदकनामसु (८९पृ०)। क्षुन्निवर्त्तनादिके स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन भुक्तेन भोक्तेति वा,
२ १२उ ३ १ २ ३१ २
हिंस्यतेऽनेनातिभुक्तेनेति वा "अहमन्नमन्नमदन्तमद्मि (सा०सं० आ०१,९)"—इति श्रुतिः। माधवपक्षे चदिरग्रनार्थः (सौ०), अद्यते बुभुक्षितैः। "स्वादु चम्मापो वषतो स्योनकृत् (?)"—इति निगमः ॥

(२०) नेमः† । 'णीञ् प्रापणे (भू०उ०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ०१,१३७)'। नमयति सुगतिं दातारं, नीयते देहयात्रा अनेनेति वा ॥

"नेमा"—इति नकारान्तं केचित् पठन्ति। तदा बाहुलका-दभिधानलक्षणाद्वा नकारस्येत्सञ्ज्ञाया अभावः। एवमेवास्मिन् सूत्रे वृत्तिकारेणोक्तम्। यद्वा; मनिनि रूपसिद्धिः। निगमदर्शनान्निर्णयः॥

(२१) ससम्§ ।'षस स्वप्ने (अदा०प०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (उ०४,११८)। स्वपन्त्यनेन भुक्तेन, न हि क्षुधितस्यातिनि-

* प० २०. ४, २ । निरु० ५, ४. ६, २२ । यद्यपीदं पदं टीकापुस्तके व्याख्यातं न दृश्यते, परमष्टाविंशतिसङ्ख्यापूरणायानन्यमत्या सर्वपुस्तकैकमत्याच्चाऽत्रैतद्‌ग्रहणं कर्त्तव्यमेवेति ।

† पु० १, १५ ।

‡ प० ३, २९ । निरु० ३, २० ।

§ प० ४, २ । निरु० ५, ३ ।

द्रास्ति । "मुषेणं चिद्धिमुद्रायावसो वसु (ऋ० सं० १,४,९,३)"—इति निगमः॥

(२२) नमः । 'णमु प्रह्वत्वे (भू० प०)' । असुन् । उपनतं जातमात्रेभ्यो भूतेभ्यः पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात्, नमन्त्यनेन हेतुना तदन्न प्रयोजनस्य च हेतुत्वेन विवक्षा । "प्र वो मुहे महि नमो भरध्वम (ऋ० सं० १,५,१,२)"—"एना वो अग्निं नमसा (ऋ० सं० ५,२,२१,१)"—इति च निगमौ॥

(२३) आयुः* । अननं प्राणनमस्ति । "पाहि सदमिद् विश्वायुः (ऋ० सं० १,२,२२,३)"—इति निगमः ॥

(२४) सूनृता† । व्याख्यातमुदकनामसु (५३पृ०) । सुष्ठु नयन्ति सुत्प्रयुक्तान् अर्थ्यते वा तदर्थिभिः । यद्वा; शोभना नरः सुनरः 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । वा टाप् । "पुरुणीथे जरते सूनृतावान् (ऋ० सं० १,४,२५,७)"—"अग्निना सूनृतावती (ऋ० सं० १,२,४,३)"—इति च निगमौ॥

(२५) ब्रह्म‡ । 'वृहि वृहि वृद्धौ (भू० प०)' । 'वृंहेर्नलोपश्च (उ० ४,१४१)'—इति मनिन् । परिवृढं भवति सर्वप्राणिभिः । सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात्, स्वभावतो वा परिवृढं सर्वस्य जगतो भरणात्, वर्द्धन्तेऽनेन भूतानीति वा 'जातान्यन्नेन वर्द्धन्ते (तै० उ०

* पु० २, २ ।
† पु० १, ८ ।
‡ प० १० । निरु० १, ८, ११, १५ ।

२,२)'—इति श्रुतिः। "उप मक्षाणि वाघतः (ऋ० सं० १,१,५, ५)"—इति च निगमः॥

(२६) वर्चः। 'वर्च दीप्तौ (भ्वा० आ०)'। असुन्। दीप्तिकरं ह्यन्नं शरीरादेः। "तमा' संसृज वर्चसा (ऋ० सं० १,२,१२,३)" —"सं माग्ने वर्चसा सृज (ऋ० सं० १,२,१२,४)"—"आयुषा सह वर्चसा (ऋ० सं० ८,३,२७,४)"—इति निगमाः॥

(२७) कीलालम्। 'कल गतौ (प०)' चौरादिकः, 'कील बन्धने (भ्वा० प०)', 'कील खण्डने ( ? )'। कील बन्धने इति व्युत्पत्तौ चिनवदर्थः। कील खंडने इति तु शुच्छेदमित्यर्थः। अपिवा कीला जाठराग्नेर्ज्वाला, तां लाति 'कर्मण्यण् (३,२,१)'। "कीलालपे सोमपृष्ठाय वेधसे (ऋ० सं० ८,४,२२,४)"—इति निगमः॥

(२८) यशः*। व्याख्यातमुदकनामसु(११७१०)। यशो यशो-दीप्त्यर्थात्। कीर्तिकरं वेति माधवः। तदा वर्धस्वदर्थः। "यशो न पक्वं मधुगोष्वन्तरा (ऋ० सं० ८,६,२,५)"—"तुविद्युम्न यशस्वता (ऋ० सं० ३,१,२६,६)"—इति निगमौ॥

इत्यष्टाविंशतिरन्ननामानि॥ ७॥

आर्चयति(१)। भर्वति(२)। बभस्ति(३)। वेति(४)। वेवेष्टि(५)। अविष्यन्(६)। वप्सति(७)। भसथः(८)। बब्धाम्(९)। ह्वरति(१०) इति दशात्तिकर्माणः†॥ ८॥

* पृ० १, १२।

(१०) "[illegible]" B. C. D. F।

† "इत्यत्तिकर्माणः" B।

(१) आवयति* । आङ्पूर्वात् वेतेः (अदा० प०) 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः । यद्वा; 'वेङ् तन्तुसन्ताने (भ्वा०)' भ्वादिः; अनेकार्थत्वात् धातूनामत्राभिकर्मत्वम् ।' एवमन्येष्वपि द्रष्टव्यम् । "आ तु नः स वयति गव्यमाव्यम् (ऋ० सं० ६,२,२,१०)"—इति निगमः ॥

(२) भर्वति† । 'भर्व हिंसायाम्' भ्वादिः परस्मैपदी । "पृथून्यभि रंसु याति भर्वन् (ऋ० सं० ४,५,८,२)"—"तेन सुभर्वं शतवत् सहस्रम् (ऋ० सं० ८,५,२०,५)"—इति निगमौ ॥

(३) बभस्ति‡ । 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी । "हरी इवान्धांसि बप्सता (ऋ० सं० १,२,२६,२)"—इति निगमः ॥

(४) वेवेष्टि§ । 'विष्लृ व्याप्तौ (जु० उ०)' । 'जुहोत्यादिभ्यः श्लुः (२,४,७५)' । "स्तनैद्‌योयथातिथि ज्योतिष्कृत्या परिवेवेष्टि- (   ?   )"—"यदा त्वा अतिथयः परिवेष्टि (    ?    )"—"मरुतः परिवेष्टारः (   ?   )"—इति च निगमाः । प्रयोजकव्यापारे प्रयुक्तत्वात् निरूपणीयम् ॥

(५) वेति‖ । वी गत्यादौ अदादिः परस्मैपदी । "वीतं पातं पयस उस्रियायाः (ऋ० सं० २,२,२३,४)"—इति निगमः ॥

(६) अविष्यन्¶ । अवतेर्वर्त्तमाने व्यत्ययेन लट्; लटः शता ।

* प० १४ । निघ० १, १३. १०, २०. ११, १८ ।
† निघ० ८, २२ ।
‡ निघ० ४, १.२; २२. ८, २१ ।
§ पु० २, ६ ।
‖ पु० २, ६ ।          ¶ पु० चपैव १ ।

"सूर्यविश्यसंतवेषु तिष्ठति (ऋ० सं० १,४,२२,२)"—इति निगमः । अत्र च 'अविश्यअग्निकर्मा भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी । तस्मादविष्ठादिति पाठो न युक्तः ॥

(७) बप्सति*। भसेः प्रथमपुरुषे बहुवचने 'घसिभसोर्हलि च (६,४,१००)'—इत्युपधालोपे रूपम् । "दद्भिर्वनानि बप्सति (ऋ० सं० ६,३,२८,३)"—इति निगमः ॥

(८) भसथः†। भसेर्लटि थसि 'बहुलं छन्दसि (२,४,७६)'—इति श्रपः श्लुर्न भवति । "न देवा भसथश्चन (ऋ० सं० ४,८,२५,४)"—इति निगमः ॥

(९) बब्धाम्‡। भसेर्लेटि तमस्तामि श्लौ द्विर्वचनम्, द्विर्वचनात्परत्वानित्यत्वात् उपधालोपः प्राप्नोति छान्दसत्वान्न, 'घसिभसोर्हलि च (६,४,१००)'—इत्युपधालोपः । 'धि च (८,२,२५)'—इत्यादिसूत्रेषु सिचो लोप इति पक्षे सकारलोपश्छान्दसः सकारमात्रलोप इति पक्षे 'झलो झलि (८,२,२६)'—इति सलोपः, भस्य जश्त्वे । बब्धामिति पृथक्पाठे प्रयोजनं मृग्यम् । * * * । "बब्धां ते हरीधाना (   ?   )"—इति निगमः ॥

(१०) ह्वरति । 'ह्वृ कौटिल्ये' भ्वादिः परस्मैपदी । "अपामतिष्ठद्धरुणह्वरन्तमः (ऋ० सं० १,४,१८,५)"—"उपह्वरे यदुपरा अपिन्वत् (ऋ० सं० १,५,२,१)"—इति निगमौ ॥

इति द्व्यग्निकर्माणः ॥ ८ ॥

---

* पु० नास्ति २ ।
† पु० नास्ति २ ।
‡ पु० नास्ति २ ।

ओजः(१)। वाजः(१क) पाजः(२)। शवः(३)। तरः(४)। तवः(५)। त्वक्षः(६)। शर्धः(७)। बाधः(८)। नृम्णम्(९)। तविषी(१०)। शुष्मम्(११)। शुष्णम्(१२)। शूषम्(१३)। दक्षः(१४)। वीळु(१५)। च्यौत्नम्(१६)। सहः(१७)। यहः(१८)। वधः(१९)। वर्गः(२०)। वृजनम्(२१)। वृक्(२२)। मज्मना(२३)। पौंस्यानि(२४)। धर्णसिः(२५)। द्रविणम्(२६)। स्यन्द्रासः(२७)। शम्बरम्(२८)। इत्यष्टाविंशतिर्बलनामानि* ॥ ९ ॥

(१) ओजः†। व्याख्यातमुदकनामसु (१, १२ पृ०)। उब्जन्त्यनेन, बलवत्सन्निधौ हि ऋजवो भवन्ति भीत्या, न्यग्भावयत्यनेन वा शत्रून्। वर्द्धतेऽनेन ऐश्वर्यादि, वर्द्धते व्यायामादिना। इमावर्थान्तरावपि दृश्यार्थेषु बोद्धव्यौ। 'सर्वधिकम्'—इति माधवः। हिंसन्तोऽनेन शत्रवो वा। 'उपेर्जुट् च'—इति श्रीभोजदेवः। वसूनि गुणः। ओषति दहति शत्रून्। "ओजस्तो जातमुत मन्य एनम् (ऋ० सं० ८, २,४,२)"—"वसूनि जाते जनमान ओजसा (ऋ० सं० ६,७,२, २)"—इति निगमौ॥

(२) वाजः‡। व्याख्यातमन्ननामसु (२० ४पृ०)। गच्छन्त्यनेन

(५) "तवः" ख।
(६) "त्वक्षः" ग. C. D. F।
(१५) "वीळु" C. D. E।
(२२) "विट्" ग।
(२५) "धर्णसि" ख.-घ-पुस्तकयोरप्येवम्।
* "इति बलस्य" ग।
† पृ० १, १२।
‡ पृ० ७।

शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुक्तरयापि गत्यर्थेषु बोद्धव्यौ। 'वाजोबलं, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। "परिवाजेषु भूषथः (ऋ॰सं॰ ३,१,१२,४)"—इति निगमः॥

पाजः*। 'पा रक्षणे (अदा॰प॰)'। 'पातेर्जुट् च'—इत्यसुन्। बलेन हिंस्यते सर्वम्। "कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ॰सं॰ ३,४,२३,१)"—इति निगमः। 'समिद्धस्य रुशदर्शि पाजः (ऋ॰सं॰ ३,८,१२,२)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ॰सं॰ ३,१,१२,३)'—इत्यत्र बलनामैतदित्युक्तं, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ॰सं॰ १,५,७,१)'—इत्यत्र,'अत्युं न वाजं हवनस्यदं रथम् (ऋ॰सं॰ १,४,११,१)'—इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो वाजपाजशब्दयोरुभयोरपि बलनामत्वं स्पष्टम्; तत्रैकतमस्य पाठो विद्वद्भिरधीयताम्॥

(३) शवः†। व्याख्यानमुदकनामसु (११२पृ॰)। "मा भेम शवसस्पते (ऋ॰सं॰१,१,२१,२)"—इति निगमः॥

(४) तरः। 'तॄ प्लवनतरणयोः (भू॰प॰)'; असुन्। तरत्यनेन आपदम्। "यावत्तरो मघवन् यावदोजः (ऋ॰सं॰१,३,३,२)"—इति निगमः॥

(५) तवः। तवतिर्बधार्थः; असुन्। "अपादमिन्द्र तवसा जघन्थ

* पृ॰७। † पृ॰१,१२।

(ऋ० सं० ३,२,२,३)"—"योगेयोगे तवस्तरम् (ऋ० सं० १,२,२८,१)"—इति च निगमौ ॥

(६) त्वक्षः । 'तक्षू तनूकरणे (भ्वा० प०)'; असुन् । तनूक्रियन्ते तेन शत्रवः । "स प्र विक्रो त्वक्षसा क्ष्मो दिवश्च (ऋ० सं० १,७,१०,५)"—इति निगमः ॥

(७) अर्हः । 'अर्हतिरुत्साहार्थः'—इति स्कन्दस्वामी; असुन् । अनुजयादावनेन उत्साहितत्वात् । "अभ्राजिशर्द्धो मरुतोयदर्णसम् (ऋ० सं० ४,३,१५,६)"—इति निगमः ॥

(८) बाधः* । 'बाह विलोडने (भ्वा० आ०); 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। बाध्यतेऽनेन शत्रवः । निगमोऽन्वेषणीयः ॥

(९) नृम्णम्† । 'नृम्णं * * * नृन् नतम् (निरु० ११,९)'—इति भाष्यम्। 'नृन् मनुष्यान् प्रति नमति; ण्यर्थो वा नमिः, नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी। 'इन्द्र नृम्णं हि ते शवः (ऋ० सं० १,५,२९,३)'—इत्यत्र ऋक्भाष्यम्—'यस्मान्मनुष्याणामपि नमनकरणं तव बलम्'—इति । स एव तत्र पृषोदरादित्वेन नृ-नमन-शब्दस्य वर्णलोपादौ नृम्णमिति द्रष्टव्यम्। "अवो नृम्णं च रोदसी सपर्यतः (ऋ० सं० ८,१,९,१)"—"मह्निमवत्तु-विनृम्णम् (ऋ० सं० १,३,२७,१)"—इति च निगमौ ॥

(१०) तविषी‡ । तविः सौत्रो धातुर्बलार्थः । तवेष्टिषन् प्रत्ययः ।

* निघ० ६, २३. १०, ९ ।
† प० १० । निघ० १०, १०. ११, ९ ।
‡ निघ० ९, २१ ।

टित्वात् ङीप्। "इन्द्रा रजांसि तविषी दधानः (ऋ० सं० १,३, ६,४)"—"युष्माकमस्तु तविषी पनीयसी (ऋ० सं० १,३,१८, २)"—इति निगमौ॥

(११) शुष्मम्*। 'शुष शोषणे (दि० प०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' 'शुषिभ्यः किन् (उ० १,१४१)'—इति मन्-प्रत्ययः। शुष्यत्यनेनारिः। 'शुषिः प्रीणनार्थः'—इति माधवः। प्रियं हि बलम्। 'शुष्ममिति बलनाम, शोषयतीति सतः (निरु० २,२४)'—इति भाष्यम्। 'परस्परसांयोगिकमपि बलं विशेषयति उपमेयतीत्यर्थः'—इति स्कन्दस्वामी। तत्र शोधयतेर्मनिन् 'बहुलमन्यत्रापि सञ्ज्ञाछन्दसोः'—इति लुक्। "शुष्मा इन्द्रमवाता अहुतप्सवः (ऋ० सं० १,४, १२,४)"—"यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ० सं० २,६,७, १)"—इति निगमौ॥

(१२) शुष्णम्†।

(१३) शूषम्‡। 'शुष शोषणे (दि० प०)'। पूषमुषकलुषकावषशैलूषादयः'—इत्यादिग्रहणात् 'उषः प्रत्ययादयोऽपि भवन्ति'—इति दशपाद-वृत्तिः। ऊषप्रत्ययष्टिलोपश्च निपात्यते शुष्मवदर्थः। "इन्द्राय शूषं मर्चति (ऋ० सं० १,१,१८,५)"—"इनतमः सत्वभिर्योह शूषैः (ऋ० सं० ३,३,१३,२)"—इति निगमौ॥

(१४) दक्षः§। 'दक्ष वृद्धौ च (भ्वा० आ०)' चकाराद् दक्षौ।

* निघ० २, २४. ३, २२. १०, १०।
† निघ० ३, ११. ४, ११. ९, १९।
‡ प० २, ९।
§ निघ० ११२, ३. ११, २९।

'इष गतिहिंसनयोः (चु० च० प०)' । 'इषतिहत्यार्थः'—इति स्कन्दस्वामी । असुन् । शत्रुविजये क्षिप्रो भवत्यनेन, हिंस्यन्ते वा ऽनेन शत्रवः, प्रोत्साहितो वा भवति शत्रुविजये । "क्षिप्रं चुर्वे पूनर्दक्षम् (ऋ० मं० १,१,४,२)'—इति भाष्ये स्कन्दस्वामी—'इष इति सकारान्तं बलनाम' । अकारान्तमपि तथैवमर्थान्तरे द्रष्टव्यम् । "जुह्वाना पूनर्दक्षसा (ऋ० मं० १,२,८,४)"—इति निगमः ।

(१५) वीळु । वीळयति संस्तम्भकर्मा । 'भृमृशीङ्चरित्सरितनि-निधनिमिमस्जिभ्य उः (उ० १,७)'—इति उ-प्रत्ययो बाहुलका-दस्मादपि भवति । संस्तब्धो दृढो भवति अनेन, संस्तभ्यन्ते ऽनेन शत्रव इति वा । निगमोऽन्वेषणीयः ॥

(१६) च्यौत्नम् । 'च्युङ् गतौ (भ्वा० आ०) । * * * । अन्तर्णीतण्यर्थो वा । च्यवन्ति च्यावयन्ति शत्रूननेन राज्यात् । "प्र च्यौत्नेन मघवा सत्यराधाः (ऋ० मं० ८,१,८,६)"—इति निगमः ॥

(१७) सहः* । 'षह मर्षणे (भ्वा० आ०), छन्दस्यभिभवार्थः । असुन् । सहत्यनेन शत्रून् । "ये सहांसि सहसा सहन्ते (ऋ० मं० ५,१,८,४)"—इति निगमः ॥

(१८) यहः† । व्याख्यातमुदकनामसु (११ पृ०) । प्राप्यते आक्रमयते वानेन शत्रुः । निगमोऽन्वेषणीयः ॥

(१९) वधः‡ । 'हन हिंसागत्योः (भ्वा० प०) । 'हनश्च वधः (३,३,७६)'—इत्यप् । हन्यतेऽनेन शत्रुः । निगमोऽन्वेषणीयः ॥

---

* पृ० १, १२ ।
† पृ० १, १२ ।
‡ प० २० ।

(२०) वर्गः। (२१) वृजनं*। (२२) वृक्। 'वृजी वर्जने (रु०प०)'। घञ्। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः (उ० २,७६), 'क्विप् च (३,२,७६)'। वर्ज्यन्तेऽनेन प्राणिः। "जरयन्ती वृजनं पद्वदीयते (ऋ० सं० १,४,३,५)"—प्रतीचीनं वृजनं दोहसे गिरा (ऋ० सं० ४,२,२३,१)"—इति च निगमौ॥ माधवस्तु—'मध्योदात्तन्तु वृजनं वर्त्तते बलयुद्धयोः। "वृजनेन वृजिनान्त्सम्पिपेष (ऋ० सं० ३,२,१६,१)"—"त्वं भुष्या वृजने पृक्ष आणौ (ऋ० सं० १,५,४,३)"—"जरयन्ती वृजनं (ऋ० सं० १,४,३,५)" तु वर्त्तते उपद्रवे'—इति। तदान्वयणीयौ निगमौ॥

(२३) मज्मना। 'टु मस्जो शुद्धौ (तु०प०)। औणादिको मनिन् (उ० ४,१४०)। 'झलां जश् झशि (८,४,५३)', कुत्वम्, तृतीयैकवचनम्। मज्जयति शत्रून्। "नाभा पृथिव्या भुवनस्य मज्मना (ऋ० सं० २,२,१२,४)"—"स इन्महानि समिथानि मज्मना (ऋ० सं० १,४,१८,५)"—"वि रोदसी कृज्मना बाधते शवः (ऋ० सं० १,४,१०,५)"—इति निगमाः। निगमेषु तृतीयैकवचनान्तस्य प्रायशोदर्शनात् तदन्तः पाठितः॥

(२४) पौंस्यानि। 'पुंस अभिवर्द्धने (प०) चुरादिः। 'अघ्न्यादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः। "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ० सं० ४,७,८,३)"—"यस्मिन् विश्वानि पौंस्या (ऋ० सं० १,१,१०,४)"—"महत्तदस्य पौंस्यम् (ऋ० सं० १,५,२०,५)"—इति निगमः॥

---

* [illegible]

(२५) धर्णसि । 'धृञ् धारणे (भ्वा० उ०)' । "सानसिवर्णसि-पर्णसि (उ० ४,१०४)"—इत्यसि-प्रत्ययोनुमागमोऽपि निपात्यते गुणः । ध्रियतेऽनेन राज्यादि । निगमोऽन्वेषणीयः ॥

(२६) द्रविणम्* । 'द्रु गतौ (भ्वा० प०)' । 'द्रुदक्षिभ्यामिनन् (उ० २,५२)' । "सनो ददातु द्रविणम् ( ? )"—इति निगमः ॥

(२७) स्यन्द्रासः । 'स्यदि किञ्चिच्चलने (भ्वा० आ०)' । 'ऋज्रेन्द्राग्र-वज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः' ... 'रन्-प्रत्ययान्तो निपात्यते । तस्मात् असेरसुक् (७,१,५०) । स्यन्दतेऽनेन शत्रून् ।' निगमोऽन्वेषणीयः ॥

(२८) शम्बरम्† । व्याख्यातमुदकनामसु (१२६पृ०) । संभ्रियते ऽनेन शत्रुः, संवृणोति वा तस्मात् आपदम् । शमनमुपद्रवाणामुत्कृष्टं च युद्धादौ, शम्बेनेन्द्रेणादीयते वा । बलाधिदेवताहीन्द्रः । 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु० ७,१०)'—इति भाष्यम् निगमोऽन्वेषणीयः ॥

इत्यष्टाविंशतिर्बलनामानि ॥ ८ ॥

मघम्(१) । रेक्णः(२) । रिक्थम्(३) । वेदः(४) । वरिवः(५) । श्वात्रम्(६) । रत्नम्(७) । रयिः(८) । क्षत्रम्(९) । भगः(१०) । मीळ्हुम्(११) । गयः(१२) । द्युम्नम्(१३) । इन्द्रियम्(१४) ।

---

* ऋ० १० । निरु० ८, १ ।

† ऋ० १, १० ।

(११) "मीळ्हम्" क ।

(१२) "गयः । मघवम् । द्युम्नम्"—इति, "गया । वसु" —इति च ग C. D. F ।

वसु(१५)। रायः(१६)। राधः(१७)। भोजनम्(१८)। तना(१९)। नृम्णम्(२०)। बन्धुः(२१)। मेधा(२२)। यशः(२३)। ब्रह्म(२४)। द्रविणम्(२५)। श्रवः(२६)। वृत्रम्(२७)। ऋतम्(२८)। इत्यष्टाविंशतिरेव धननामानि* ॥ १० ॥

(१) मघम्†। मंहतिर्दानकर्मा (प० ३,२०,१०)। 'घञर्थे क-विधानम् (३,३,५८वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् क-प्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च। दीयतेऽर्थिभ्यः। "तेभिरिन्द्र चोदय दातवे मघम् (ऋ० मं० ७,२,२३,५)"—"यदिन्द्र दक्षिणा मघोनी (ऋ० मं० २,६,६,६)"—इति निगमौ॥

(२) रेक्णः‡। 'रिचिर् विरेचने (रु० उ०)'। 'रिचेर्धने घिच्च (उ० ४,१९४)'—इत्यसुन्, नुडागमो गुणश्च, घित्वात् 'चजोः कुघिण्यतोः (७,३,५२)'—इति कुत्वम्। 'रेक्ण इति धननाम, रिच्यते प्रयतः (निरु० ३,२)'—इति भाष्यम्। रिच्यते अवतिष्ठते प्रयतः म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थः। 'रेक्णोऽधनं रिचेः प्रेरणार्थात्'—इति माधवः। प्रेर्यतेऽनेन द्रव्येण भृत्यादिः कर्मसु। "स्याहं यद्रेक्णः परमं वनोति तत् (ऋ० मं० १,२,२४,४)"—"पुरुविचं [illegible] रेक्णः (ऋ० मं० ५,२,६,२)"—इति च निगमौ॥

(३) रिक्थम्§। रिचेः (रु० उ०) 'पातृतुदिवचिरिचिसिचिभ्य-

(२६) इतोऽनन्तरं "श्रवः"—इत्यधिकं अ।
(२८) "ऋतम्"—इति अ. iii. "[illegible]"—इति च टीकाकारा [illegible], परं न [illegible]।
* "[illegible]" च०। "इति [illegible]" अ०।
† निघ० १, ७. ३, १०. ३, १९।
‡ [illegible] § [illegible]

यक् (उ० २,६)'—इति यक्। पूर्ववदर्थः। "न ग्रामवे तान्वीरि-
वयमारेक् (ऋ० सं० ३,२,५,२)"—इति निगमः॥

(४) वेदः। 'विदॢ लाभे (म्वा० प०)'। असुन्। विदन्त्येतत्,
लभ्यते वाऽनेन धर्मादिः। "होतारं त्रिश्ववेदसम् (ऋ० सं० १,१,
२२,१)"—इति निगमः॥

(५) वरिवः। 'वृञ् वरणे (स्वा० उ०),' अस्माद् यङ्लुगन्तात्
असुनि बाहुलकादिलोपः। अर्थं व्रियते, वरिवसो हेतुत्वाद्वा वरिवः
'वित्तं बन्धु र्वयः कर्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि
गरीयोयद्यदुत्तरम् (२,१३६)'—इति मनुः। "युधा देवेभ्यो वरि-
वश्चकर्थ (ऋ० सं० १,४,२५,५)"—"अंहोराजन् वरिवः पूरवे कः
(ऋ० सं० १,५,५,२)"—इति निगमौ॥

(६) स्वात्रम्*। स्वाशुशब्द उपपदे 'अत सातत्यगमने (भ्व० प०)'
—इत्यस्मात् 'चादित्यखिदसि'—इति त्रप्रत्ययः; पृषोदरादित्वेन
स्वाशुशब्दस्य व्युत्पद्यते; यणादेश-सवर्णदीर्घौ। स्वाशु अतति स्वाशु
गच्छति; चञ्चलं हि धनम्। निगमोऽन्वेषणीयः॥

(७) रत्नम्†। 'रमु क्रीडायाम् (भ्व० आ०)', 'रमेस्त च (उ० ३,
१२)'—इति न-प्रत्ययस्तकारश्चान्तादेशः। रमणीयं हि तत्।
'रमतेऽस्मिन्'—इति क्षीरस्वामी। 'वित्ते रमस्व बहु मन्यमानः'
—इति श्रुतिः। "आ रत्नं मघि स्थूरं बृहन्तम् (ऋ० सं० ४,६,
८,५)"—"होतारं रत्नधातमम् (ऋ० सं० १,१,१,१)"—इति
निगमौ॥

* प० १, १०. ४, १। निरु० ५, १।     † निरु० ७, १६।

(८) रयिः* । व्याख्यातमुदकनामसु (१२२पृ०) । गम्यते प्राप्यते पुण्येन गच्छत्यनेन वृत्तिं भोगसाधनत्वात्, यद्वा वाऽऽदन्ते, दीयते ऽर्थिभ्य इति वा। "अग्निना रयिमश्नवत् (ऋ० सं० १,१,१, ३)"—इति निगमः ॥

(९) क्षत्रम्† । व्याख्यातमुदकनामसु (१२४पृ०)। पूर्वजन्मसुकृतवशेन तदति स्थिरं भवति, रक्ष्यते उपभोगसाधनत्वात्, हिनस्ति दारिद्र्यम् । गतावपि शब्दवदर्थः। क्षतात् पापात् त्रायते। क्षतशब्दात् त्रायतेश्च पृषोदरादित्वात् क्षत्रम्। धनैरेव पापं तरा निस्तरतीत्युच्यते। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २,१,१)"—"सुक्षत्रासो रिशादसः (ऋ० सं० १,१,२६,५)"—इति च निगमौ ॥

(१०) भगः‡ । 'भज सेवायाम् (भ्वा० उ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)', 'चजोः कुघिण्ण्यतोः (७,३,५२)'। भज्यते सेव्यते भोगार्थिभिः। यद्वा सेव्यतेऽनेन हेतुना तद्दाम्। भगशब्दः पुंलिङ्गोधनवचनः। "भिक्षाप्तोपस्थो मासि धन्भगो नः (ऋ० सं० २, ६,६,६)"—"यत्तुल—व्योभगः ( ? )"—इति निगमौ ॥

(११) मीळ्हुम्§ । 'मिह सेचने (भ्वा०प०)' । • • • । हल-धर्व-ष्टुत्व-ढलोप-दीर्घाः, ळ्कार-भावश्च । सिच्यतेऽर्थिभ्योदातृभिः । 'सहस्रमीळ्हुष्टमांश्रामनमा ? इत्यत्र भट्टभास्करमिश्रभाष्येऽपि

* पृ० १, ११।
† पृ० १, ११।
‡ पृ० ३, ८। निरु० १, ०. ३, १०. ६, ११. ८, ११. १२. १२।
§ पृ० १०।

'मीळ्हु इति धननाम'—इति दृश्यते। ततो निष्कृत्य उकारान्त-निगमदर्शनाभावात् अकारान्तनिगमदर्शनात् उकारान्ताकारान्तद्वयोरपि औकारोऽस्माकम्। "रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः (ऋ॰ सं॰ ५,१,७,३)"—"तां आ रुद्रस्य मीळ्हुषः (ऋ॰ सं॰ ५,४,२८,५)"—इत्यादौ निर्वाहकत्वात् "मीळ्हुम्"—इति पठितव्यमिति केचिदाहुः। अन्ये तु "मीळ्हः" इति सकारान्तमपि * * *। तेषां मीळ्हांसमिति निर्वाहः। उभयेषामपि "मृळत मीळ्हे (ऋ॰ सं॰ १,७,२४,५)"—इत्यकारान्तस्य पाठोऽपेक्षणीयः। सङ्गत्यर्थन्तु निर्बन्धः॥

(१२) गयः*। व्याख्यातमपत्यनामसु (१७४पृ॰)। इहापि तदर्थः। गीयते स्तूयते शेषभिः। "अपं नद्दादुप्णे गयम् (ऋ॰ सं॰ १,५,११,२)"—इति निगमः॥

(१३) द्युम्नम्†। 'द्युम्नस्तुमनिव'—इत्यादिना 'द्युत दीप्तौ (भ्वा॰)'—इत्यस्मात् न-प्रत्ययो मकारश्चान्तादेशो निपात्यते। तेन तद्वान्। दीप्यते द्युम्नम्। 'द्यु अभिगमने (अदा॰प॰)'—इति क्षीरस्वामी। अत्र धातोर्मकागमो निपात्यते। "द्युम्नं बृहदूपातमम् (ऋ॰ सं॰ १,१,१८,३)"—"द्युम्ना वाजेभिरागतम् ( ? )" —इति च निगमौ॥

(१४) इन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा (५,२,९३)'—इति घ-प्रत्ययान्तस्योदात्तं

* पु॰ १।
† प॰ ७, १। निघ॰ ६, ४।

निपात्यते। इन्द्रः—'इदि परमैश्वर्ये (भ्वा॰प॰)', परमैश्वर्ययुक्त उच्यते। इन्द्रस्य लिङ्गम्। धनेन हि ऐश्वर्ययुक्त इति कथ्यते। अत्र षष्ठी, समर्थात्; लिङ्गार्थे घञ्। यद्वा; इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा; इन्द्र आत्मा, तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्र-जुष्टं वा; आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्तेः। इन्द्रदत्तं वा; इन्द्रेण पूर्वकर्मणा वा अस्तुपदत्तम्। सृष्ट-जुष्ट-दत्तार्थेषु तृतीया समर्थात्। "दक्षिणं पादमवनेनिजेऽस्मिन्नाष्ट्र इन्द्रियं दधामि (ऐ॰ ब्रा॰ ८,५,४)"—इति निगमः॥

(१५) वसुः*। रश्मिनामसु "वस्वो"—इत्यत्र व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। * * *। "अर्वा॒ङ्भुव॒ वसु॑नः पू॒र्व्यस्पति॑ः (ऋ॰सं॰८,१,५,१)"—इति निगमः॥

(१६) रायः†। 'रा दाने (अदा॰प॰)'। 'रातेर्डैः (उ॰२,६२)'। अस्। दीयतेऽर्थिभ्यः, तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। "ऋ॒णा॒मृ॒णः कुविदादस्य रा॒यः (ऋ॰सं॰१,३,१,१)"—इति निगमः॥

(१७) राधः‡। 'राध साध संसिद्धौ (स्वा॰प॰)'। असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। राधिर्हिंसार्थोऽपि। हिनस्ति दारिद्र्यम्। "राधो इन्द्र वरेण्यम् (ऋ॰सं॰१,१,१७,५)"—"राधस्को त्रिदद्रसो (ऋ॰सं॰४,२,१०,१)"—इति निगमौ॥

* पृ॰ १,७।
† निरु॰ १, २. ४, ७।
‡ निरु॰ ४, ४. ११, २४।

(१८) भोजनम्* । 'भुज पालनाभ्यवहारयोः (रु०प०)' । ल्युट् 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति । यद्वा; अभिमतार्थं भवति भुज्यते तद्धविः, भुज्यन्तेऽनेन विषया इति वा, पाल्यतेऽनेन वा । "अभूयुतामा भरा भोजनानि (ऋ० सं० ३,८,१८,५)"— "मा नः प्रिया भोजनानि प्र मोषीः (ऋ० सं० १,७,१९,३)"— इति निगमौ ॥

(१९) तना । 'तनु विस्तारे (त०प०)'। पचाद्यच् (३,१,१३४)। तनोति विस्तारयति त्रिवर्गसाधनं हि धनम्। तृतीयैक-वचनस्य 'सुपां सुलुक् (७,१,३९)'—इत्याकारः। "विक्षयन्ते तना गिरा (ऋ० सं० ६,३,२५,१)"—"आ वो मक्षू तनाय कम् (ऋ० सं० १,३,१९,२)"—इति निगमौ ॥

(२०) नृम्णम्† । व्याख्यातं बलनामसु (२१७पृ०)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वस्तु। "हस्ते दधानो नृम्णा विश्वानि (ऋ० सं० १,५,११,२)"—इति निगमः ॥

(२१) बन्धुः‡ । 'बन्ध बन्धने (क्र्या०प०)'। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'—इति उ-प्रत्ययः । बध्नात्यनेन भ्रात्रादीन् । यद्वा; बन्धुरिव बन्धुः। "अबन्धुना सुश्रवसोपजग्मुषः (ऋ० सं० १,४,१६,४)"—इति निगमः ॥

(२२) मेधा§ । 'मिधृ मेधृ सङ्गमे च (भ्वा०उ०)' चकारात्

---

* निरु० ३, ५ ।
† पृ० ९ ।
‡ निरु० ३, १ ।
§ निरु० ९, १९ ।

हिंसामेधयोश्च। 'मिधिः वञ्चनार्थः'—इति माधवः। मृध्रम्। वञ्चन्ते ऽनेन सर्वं तद्धना, हिंस्यते वा तद्धाम् चौरादिभिः 'घ्नन्ति वैरार्थकारणात्';—इति महाभारतम्। यद्वा; मतौ धीयते कर्त्तव्यतया रक्षितव्यं दातव्यमिति भगवता बुद्ध्या धनं धार्यते। तत्र मति-शब्द उपपदे धातोः 'घञर्थे क-विधानम् (३,३,५८वा०)—इति कः, पृषोदरादित्वात् (६,३,१०९) मतिशब्दस्य मे-भावः। मेधाकारं विदथस्य प्रसाधनम् (ऋ०सं० ८,४,२१,३)"—इति निगमः॥

(२३) यशः*। व्याख्यातमन्ननामसु (२१२पृ०)। "उत त्या मे यशसा श्वेतनायै (ऋ०सं० २,१,१,४)"—इति निगमः॥

(२४) ब्रह्म†। व्याख्यातमन्ननामसु (२१२पृ०)। बर्हन्ते ऽनेन धर्मादयः, बृंहकं वा भोगानाम्। "अस्माकं ब्रह्म पृतनासु सह्याः (ऋ०सं० २,२,२२,३)"—इति निगमः॥

(२५) द्रविणम्‡। व्याख्यातं बलनामसु (२२१पृ०)। रयिवदर्थः। "त आ यजन्त द्रविणं समस्मै ( ? )"—इति निगमः॥

(२६) श्रवः§। व्याख्यातमन्ननामसु (२०५पृ०)। "अग्ने पृथुश्रवो बृहत् (ऋ०सं० १,१,१८,२)"—"बृहच्छ्रवा असुरो बर्हणाकृतः (ऋ०सं० १,४,१७,५)"—इति निगमौ॥

(२७) वृत्रम्¶। व्याख्यातं मेघनामसु (७२पृ०)। आच्छादयति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थे

* पु० १, ११।
† पु० ०।
‡ पु० ९।
§ पु ०।
¶ पु० १, १०।

रयिवदर्थः। छन्दसि प्रशस्तवदर्थः। "वृषं पुरुक्षुभाय रन्धीः (ऋ० सं० २,४,१६,२)"—इति निगमः। अत्र स्कन्दस्वामिना 'वृषं धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु दृश्यमानमपि "वित्तम्"—इति न पठनीयम् ॥

(२८) वृतम्। 'वृङ् सम्भक्तौ (क्या०प०)'। 'दृतनिभ्यां दीर्घश्च वा (उ० ३,८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्त-प्रत्ययः। सम्भज्यते सर्वैः। "वृतञ्चयः सहुरिर्विक्ष्वारितः (ऋ० सं० २,६,२७,३)"—इति निगमः ॥

इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

**अघ्न्या[1]। उस्रा[2]। उस्रिया[3]। अही[4]। मही[5]। अदितिः[6]। इळा[7]। जगती[8]। शक्करी[9]। इति नव गोनामानि* ॥ ११ ॥**

(१) अघ्न्या†। 'अहन्तव्या भवतीत्यघघ्नीति वा (निरु० ११, ४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अहन्तव्या। अघ शब्दे नञि वा उपपदे हन्तेः 'अघ्न्यादयश्च (उ० ४.१०८)'—इति यत्-प्रत्ययान्तं निपात्यते। "नहि मे अस्त्यघ्न्या (ऋ० सं० ६,७,१२,४)"—"अद्धि तृणं मघ्न्ये विश्वदानीं (ऋ० सं० २,३,२१,५)"—इति निगमौ ॥

(६) "अदितिः" क।
* इति अधिकम्।
† प० ५, ५। निरु० ११, ४३।

(२) उस्रा*। व्याख्यातं रश्मिनामसु (३६पृ०)। वसति क्षीरादि हविरस्याम्। 'उस्रियेति गो-नामोस्राविणोऽस्यां भोगा उस्रेति च'—इति (निरु० ४.१९) भाष्यम्। 'उत्स्राविणोऽस्यां भोगास्ते ऊर्द्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण'—इति स्कन्दस्वामी। "मयोभू वातो अभिवातूस्राः (ऋ०मं० ८,८,२०, १)"—"उस्रः पितेव जारयायि यज्ञैः (ऋ०मं० ४,५,१४,४)"—इति च निगमौ॥

(३) उस्रिया†। उस्र-शब्दात् पृषोदरादित्वेन स्वार्थे घः। अर्थः पूर्ववत्। "अविन्द उस्रिया अनु (ऋ०मं० १,१,११,५)"—"समुस्रियाभि र्वावशन्त नरः (ऋ०मं० १,५,१,३)"—इति च निगमौ॥

(४) अही‡। अहिशब्दो व्याख्यातो मेघनामसु (६८पृ०)। 'कृदिकारात् (४,१,४५वा०)'—इति ङीप। गम्यतेऽनया क्षीरादि-हविः, गम्यते दत्तया पुण्यम्; अंहति शृङ्गादिना मनुष्यान्, न हन्तव्या वा। निगमो ऽन्वेषणीयः। "ईळेन्यो नमस्य अहिश्चनावः (ऋ०मं० १,३,२,३)"—इति भाष्यं द्रष्टव्यम्॥

(५) मही§, (६) अदितिः||, (७) इळा¶। व्याख्यातानि पृथिवी-नामसु (१२-१३-१४पृ०)। तत्र हन्तेः क्तिन्, 'हन्तिस्यति (४,७,

* पृ० १;४।
† निरु० ४, १९।
‡ पृ० ७, २०।
§ पृ० २, १।
|| पृ० १, १।
¶ पृ० १, १।

४०)'—इतीके दितिः ; नञ्-समासः । इत्यदिति-शब्दस्य व्युत्पत्तिः । मह्यते पूज्यते सर्वदेवतात्मकत्वात् उपभोगसाधनत्वाद्वा । मह्यन्तेऽनया देवाः पय आदीनां हविषां तदायत्तत्वात् । "देवाश्च याभिर्यजते ददाति च ( ? )"—इति श्रुतिः । पुनः पुनः दुह्यमानापि न चीयते । न द्युति, अखण्डनीयत्व वा । ईड्यते स्तूयते देवतात्वात् दीप्यते वा चारुतया । गम्यते तदर्थिभिरिति वा । "महीनां पयोसि (य०वा०सं० ४, ३)"—इति, "अदितएहि सरस्वत्येहि (य०वा०सं० ३८,२)"—इति, "सिमिच्वा समिळाभिरा (ऋ० सं० १,४,५,६)"—"इडे रन्ते हव्ये काम्ये (य०वा०सं० ८,४३)" —इति च निगमाः ॥

(८) जगती* । मनुष्यनामसु "जगतः"—इत्यत्र व्याख्यानम् (१८४पृ०) । शतृ । 'उगितश्च (४,१,६)'—इति ङीप् । गम्यते तदर्थिभिः । जगत्या छन्दसा आहार्यत्वाद् अत्राहार्याहरणयोरभेदेन वा जगती । "जागता हि पशवो जगती हि तामनाहरत् ( ? )"—इति हि ब्राह्मणम् । "जागताः पशवः (ऐ०ब्रा० ४.१.३)"—इति च । "समोषधयोरसेन स रेवतीर्जगतीभिः ( ? )"—इति निगमः† ॥

(८) शक्करी‡ । व्याख्यानं बाहुनामसु (१८१पृ०) । शक्नोति क्षीरादिप्रदानेन तदन्तं प्रीणयितुं स्पर्शनेन वा पापमपनेतुम् । शक्करी-

* पृ० ३ ।
† ऋ० सं० ७, ९, १०, ५. शक्वरी,पदनिगमः
‡ पृ० ५ ।

त्र्यक्षरन्यासभेदेन वा शक्करी। "पशवो वै शक्वर्यः पशूनेवाव-रुन्धते ( ? )"—इति श्रुतिः। निगमोऽन्वेषणीयः॥

इति नव गोनामानि॥ ११॥

रेळते[१]। हेळते[२]। भामते[३]। हृणीयते[४]। भ्री-णाति[५]। भ्रेषति[६]। दोधति[७]। वनुष्यति[८]। कम्प-ते[९]। भोजतः[१०]। इति दश क्रुध्यतिकर्माणः* ॥१२॥

(१) रेळते। अयं नैरुक्तो धातुः। "अरेळता मनसा देवानां पतेत् ( ? )"—इति निगमः॥

(२) हेळते। 'हेडृ अनादरे क्रोधे च' भ्वादिरात्मनेपदी। "अहेळमानोऽरिवां अजाश्व (ऋ०मं० २,२,२,४)"—"अहेळमानो वरुणेह बोधि (ऋ०मं० १,२,१५,१)"—इति निगमौ॥

(३) भामते। 'भाम क्रोधे' भ्वादिरात्मनेपदी। "देव जुष्टो-च्यते भामिने गीः (ऋ०मं० ७,५,२५,१)"—"स्वयम्भूर्भामो अभि-मातिषाहः (ऋ०मं० ८,३,१८,४)"—इति निगमौ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादिः। "पुनः प्रायच्छदहृणीयमानः (ऋ०मं० ८,६,७,२)"—"हृणीयमानो अप हि मदैयेः (ऋ०मं० ३,८,१५,२)"—इति निगमौ॥

(५) भ्रीणाति। 'भ्री भये' क्र्यादिः परस्मैपदी। अनेकार्थ-

(४) "हृणीयते" कातिपयेषु ग्रन्थेषु।
* "इति क्रोधस्य" क।

स्मात् क्रुध्यतिकर्मा । एवमुत्तरत्रापि । "एनः कृण्वन्तमसुर भ्रीणाति (ऋ० सं० २,७,१०,२)"—इति निगमः ॥

(६) भ्रेषति । 'भ्रेषृ चलने' भ्वादिः स्वरितेत् । निगमोऽन्वेषणीयः ॥

(७) दोधति । सौत्रोधातुः । "इन्द्रो वृत्रस्य दोधतः (ऋ० सं० १,५,२९,५)"—इति निगमः ॥

(८) वनुष्यति* । 'वनुष्यतिर्हन्तिकर्मा (निरु० ५,२)'—इत्यत्र स्कन्दस्वामी 'वनोतेः कण्ड्वादिप्रक्षेपात् यक्-प्रत्ययः, तत्सन्नियोगेन च वनुभावो द्रष्टव्यः'—इति । निगमोऽन्वेषणीयः† ॥

(९) कम्पते । 'कपि चलने' भ्वादिरात्मनेपदी । निगमोऽन्वेषणीयः ॥

(१०) भोजते । 'भुज कौटिल्ये' तुदादिः परस्मैपदी । 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वात् गुणः । व्यत्ययेनात्मनेपदम् । निगमोऽन्वेषणीयः‡ ॥

इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः(१) । हरः(२) । हृणिः(३) । त्यजः(४) । भामः(५) । राहः(६) । ह्वरः(७) । तपुषी(८) । जूर्णिः(९) । मन्युः(१०) । व्यथिः(११) । इत्येकादश क्रोधनामानि§ ॥ १३ ॥

* प० ४, २ । निरु० ५, २ ।

† "हविंषि यज्ञुमति यो वनुष्यति (ऋ० सं० ४,६,२,१)"—इति निगमं द्रष्टव्य

‡ ऋ० सं० १,४,१८,७. द्रष्टव्यः ।

(३) "हृणि." सर्वेषु कोशेषु ।

(७) "ह्वरः" C. D F ।

§ "इति क्रोधस्य" म ।

(१) हेळः। हेळतेः भावे असुन्। "देवस्य हेळोऽव यासि सीष्ठाः (ऋ० सं० ३,४,१२,४)"—इति निगमः॥

(२) हरः*। 'हृञ् हरणे (भू० उ०)' असुन्। हरति कृत्याकृत्यविवेकं, ह्रियते वाऽनेन पुरुषः स्ववशम्; दुर्जयोऽन्तरः शत्रुः क्रोधः। निगमोऽन्वेषणीयः† ॥

(३) घृणिः‡। ज्वलन्नामसु व्याख्यातम् (१६० पृ०)। जरत्यनेन स्वेदादिः, दीप्यतेऽनेन वा; क्रुद्धोऽग्निरिव ज्वलति हि प्रसिद्धः। "आघृणि संसचावहै (ऋ० सं० ४,८,२१,१)"—इति निगमः। 'मा हृणानस्य (ऋ० सं० १,२,१६,२)" इत्यत्र भाष्ये 'घृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते' इति स्कन्दस्वामी, तत् कथमिति विचिन्त्यम्॥

(४) त्यजः। 'त्यज हानौ (भू० प०)'। असुन्। त्यज्यते सत्पुरुषैः, त्यज्यन्तेऽनेन प्राणाः इति वा, त्यज्यते वा स्वधर्मः। "क्रुद्धः पापं किन्न कुर्यात् क्रुद्धो हन्यात् गुरूनपि। क्रुद्धः परुषया वाचा नरः साधूनपि क्षिपेत्"—इति हि महाभारतम्। "मह्यमिदमि त्यजसो वरूता (ऋ० सं० २,५,८,१)"—"किं देवेषु त्यज एनश्च कर्थ (ऋ० सं० ८,३,१४,६)"- इति निगमौ॥

(५) भामः। भामतेर्भावे घञ्। यद्वा 'भा दीप्तौ (अदा० प०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ०

* पृ० १, १३।
† ऋ० सं० ८, ५, ९, ५.—ऋ० सं० ८, ८, २१, १.—इमे अन्वेषो विचार्य।
‡ पृ० १, ९।

१,१२७)'—इति मन् । दीप्यते तेन तद्भाम् । "दुर्वर्त्तु'र्भीमो दीप्यते भामिने गौः (ऋ० सं० १,५,२५,१)"—"स्वयम्भूर्भामो अभिमातिषाहः (ऋ० सं० ८,३,१८,४)"—इति निगमौ ॥ ०

(६) एहः । 'हन हिंसागत्योः (अदा० प०)' असुन् । 'नञि हन एह च (उ० ४,२१८)'—इति नञ्युपपदे विधीयमान एहादेशो बाहुलकात् नञ्-विनापि भवति । "अनेहसमंस्त्वे हरिवो अभिष्टौ (ऋ० सं० ८,१,३०,२)"—इति निगमः ॥

(७) ह्वरः । 'ह्वृ कौटिल्ये (भ्वा० प०)' अस्तिकर्मा च । असुन् । ह्वरति कुटिलो भवत्यनेन अस्ति वा । * * * ॥

(८) तपुषी* । * * * ॥

(९) जूर्णिः† । 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा‡'—इति भाष्यम् (निरु० ६,४) । * * * । गच्छत्यनेन दुःखं, लोकगर्त्तं वा, हिनस्ति परान् वा । निगमोऽन्वेषणीयः§ ॥

(१०) मन्युः|| । 'मन ज्ञाने (तना० आ०)' । 'यजिमनिशुन्धिदसिजनिभ्यो युच् (उ० ३,१८)'—इति युच् । बाहुलकादनादेशाभावः । ज्ञायते त्याज्यत्वेन । यद्वा : मन्यतेर्दीप्तिकर्मणो युच् । दीप्यतेऽनेन तद्भाम् । "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं०

* निघ० ४, ३ "तपुषि" ।

† प० १४; ४, ३ । निरु० ६, ४ ।

‡ अधिकपुस्तके तु 'जीर्यतेर्वा' -इत्येतस्य स्थाने 'ज्वलतेर्वा' -इति दृश्यते ।

§ "चित्रा जूर्णिर्न चरति (ऋ० सं० ३, १, १०, ३)"—इत्यसौ निगम इति कौत्सेन एव धार्येण ।

|| प० ५, ४ निघ० १०, २९ ।

१,९,१४,१)"—"आ वृणानस्य मन्यवे (ऋ० मं० १,२,११,२)" —इति निगमौ ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्व० आ०)'। 'इन् सर्वधातुभ्यः (उ० ४,११४)' इति इन्। बिभेत्यस्मात् सज्जनः, चलति वानेन स्वधर्मात्। "पतत्रिभिरश्रमैरव्यथिभिः (ऋ० मं० ५,५,१९, ७)"—"अग्ने माकिष्टे व्यथिरा दधर्षीत् (ऋ० मं० ३,४,२३, ३)"—इति च निगमौ ॥

इत्येकादश क्रोधनामानि ॥ १३ ॥

वर्त्तते[1]। अयते[2]। लोटते[3]। लोठते[4]। स्यन्दते[5]। कसति[6]। सर्पति[7]। स्यमति[8]। स्रवति[9]। स्रंसति[10]। अवति[11]। श्वानति[12]। ध्वंसति[13]। वेनति[14]। मार्ष्टि[15]। भुरण्यति[16]। शवति[17]। काल्यति[18]। पल्ययति[19]। कण्टति[20]। पिस्यति[21]। विस्यति[22]। मिस्यति[23]। प्रवते[24]। प्लवते[25]। च्यवते[26]। कवते[27]। गवते[28]। नवते[29]। श्चोतति[30]। नक्षति[31]। सक्षति[32]। म्यक्षति[33]। सचति[34]।

(१) "स्यन्दति" म. C. D. F।

(११) "अवति" इत्यारभ्य पर्यन्तात् (२९) पाठभेदेन दृश्यते म. C. D. F

(२९) "नवते" म. C. D. F।

(३२) इतोऽनन्तरमेव "इयक्षति (४०)" म. C. D. F।

(३३) "मियक्षति" म. C. D. F।

(३४) इतोऽनन्तरम् "चवति"—इत्यधिकम् म. C. D F।

धन्वति(६४) । अरुषति(६५) । आर्यति(६६) । सीयते(६७) । तक्वति(६८) । दीयति(६९) । ईषति(७०) । फणति(७१) । हन-
ति(७२) । अर्दति(७३) । मर्दति(७४) । सस्रते(७५) । नसते(७६) । हर्यति(७७) । इयर्ति(७८) । ईर्ते(७९) । ईङ्खते(८०) । ज्रयति(८१) ।
श्वाचति(८२) । गन्ति(८३) । आगनीगन्ति(८४) । जङ्गन्ति(८५) । जिन्वति(८६) । जसति(८७) । गमति(८८) । ध्रति(८९) । ध्राति(९०) ।
अयति(९१) । वहते(९२) । रथर्यति(९३) । मेहते(९४) । घः-

(६५) "अवध्यति" क. घ. टीकादिष्वपि । "अरुषति" ग. C. D. F ।
(६६) "अलर्षति" ग. D. F । "अलर्षत" C. ।
(६७) "शीयते" कालिदित्यसर्वपुस्तकेषु ।
(६८) "दीयते" ग. C. D. F ।
(७१) "फणति" C. D. F ।
(७२) "खबति" ग. C. D. F ।
(७३) "मिथति" ग. C. D. F ।
(७४) "मथति" ग. C. D. F ।
(७५) "भाजति" ग. C. D. F ।
(७६) "हम्यति" ग. C. D. F ।
(७७) "हर्यति" ग. C. D. F ।
(७८) एतमिदं पुरस्तात् (५८) ग. C. D. F ।
(८०) एतदपि नास्त्येव ग. C. D. F ।
(८४) "गनीगन्ति" ग. C. D. F । "आगनीगन्ति"—इत्यपि परस्तादस्ति (११,२)
ग. C. D. F ।
(८५) "जमाति" ग. C. D. F ।
(८७) "जसति" ग. C. D. E ।
(८८) इतोऽनन्तरम् "मिमति (५६)" ग. C. D. F ।
(९१) "भूषति" ग. C. D. F । इतोऽनन्तरं "चञ्चूयति" ग. C. D. F ।
(९३) "आयर्यति" ग. C. D. F । इतोऽनन्तरम् "ईयते" ग. C. D. F ।
(९४) "भेषति" ग. C. । इतोऽनन्तरम्—"अदति" । "वति (१२०)" ।
"तूर्यति" । "एजति (१०२)" । "वपति (१०४)" ।

कांति(९५)। क्षुम्पति(९६)। स्राति(९७)। वाति(९८)। याति(९९)। इषति(१००)। द्राति(१०१)। द्रूळति(१०२)। एजति(१०३)। जमति(१०४)। जवति(१०५)। वञ्चति(१०६)। अनिति(१०७)। पवते(१०८)। हन्ति(१०९)। सेधति(११०)। अगन्(१११)। अजगन्(११२)। जिगाति(११३)। पतति(११४)। इन्वति(११५)। द्रमति(११६)। द्रवति(११७)। वेति(११८)। हन्तात्(११९)। एति(१२०)। जगायात्(१२१)। अययुः(१२२)। इति द्वाविंशशतं गतिकर्माणः* ॥ १४ ॥

अत्र वर्त्तते इत्यादीनां गत्यर्थानां गतिकर्मकत्वं स्कन्दस्वामिना प्रतिपादितम्। अनेकार्थत्वाद्वा गतिकर्मत्वम्। एवन्दर्शितनिगमानां

(९५) "थःकति" ग. D F। "ध्वक्कति" C.।
(९६) "क्षिम्पति" ख. घ।
(१००) "आर्यति" ग. C. D. F।
(१०१) "पतयति" ग. C. D F।
(१०२), (१०३), (१०४), (१०५), (१०६), (१०७).—इमानीह न सन्ति ग.C.D.F।
(१०८) "प्रवति" D।
(११२) इतोऽनन्तरम्—"आगनीगन्ति (८४)"। "गाति (९९)" ग. C. D. F।
(११४) गतमिदं पुरस्तात् पाठभेदेन (९९) ग. C. D. F।
(११५) "मजति" ग. C. D. F।
(११७) "कुवति" C. D. F। इतोऽनन्तरम्—"कुष्यति (१०२)" ग. C D. F।
(११९) "दधन्तात्"—इति सर्वत्रैव, परं टीकायामप्राधान्येन स्वीकृतम्।
(१२०) गतमिदं पुरस्तात् (९४) ग. C. D. F।
(१२२) "अयुयुः" ख. ङ. घ। "अयुयुः" ग. C. D. F।
* "इति गतिकर्माणः" ग।

निगमा अन्वेषणीयाः। अनुक्तविकरणानां भ्वादित्वं ज्ञेयम्, अनुक्तौ परस्मैपदित्वञ्च ॥

(१) वर्त्तते*। 'वृतु वर्त्तने (भ्वा०)' आत्मनेपदी ॥

(२) अयते†। (३) लोटते। (४) लोठते ॥

(५) स्यन्दते। 'स्यन्दू प्रस्रवणे (भ्वा०)'। आत्मनेपदी। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (अ० सं० ४,४,२८,१)"—इति निगमः ॥

(६) कसति। 'कस गतौ (अदा० प०)'।

(७) सर्पति‡। 'सृप्लृ गतौ (भ्वा० प०)'। "नमो अस्तु सर्पेभ्यः ( ? )"—"अद्भिर्न ऊर्णामति सर्पति त्वचम् (ऋ० सं० ७,३,२०,४)"—इति निगमौ ॥

(८) स्यमति।

(९) स्रवति। 'स्रु गतौ (भ्वा० प०)'। "अवं स्रवेदघशंसो वतरम् (ऋ० सं० २,१,१७,१)"—इति निगमः ॥

(१०) स्रंसते। 'स्रंसु अवस्रंसने (भ्वा०)' आत्मनेपदी। "जातेन जातमति स प्र सर्स्रते (ऋ० सं० ७,७,४,१)"—इति निगमः। 'स्रंसतिरन्तर्णीतण्यर्थः'—इति स्कन्दः ॥

(११) अवति§। 'अव रक्षणगत्यादौ (भ्वा० प०)' "प्रावन् वाणीः

* निघ० ९, ८; १०, २२।
† निघ० ४, २१; ७, ११; ८, ३; ९, १४; ९, ३१; ११, १८; १२, ११; १२, २०।
‡ निघ० ६, १७।
§ १० ८।

पुरुक्षतं धर्मन्तौः (ऋ० सं० ३,२,२,५)"—"तं घेदग्निर्वृधावति (ऋ० सं० ६,५,२६,४)"—इति निगमौ ॥

(१२) श्चोततिः* । 'श्चुतिर् क्षरणे (भु० प०)' । "श्चोतन्ति ते वसो स्तोकाः (ऋ० सं० ३,१,२१,५)"—इति निगमः ॥

(१३) ध्वंसतिः† ।

(१४) वेनतिः‡ । नैरुक्तधातुः । "मा प्र द्रव हरिवो मा वि वेनः (ऋ० सं० ४,१,२८,२)"—"मामत्या मा वि वेनतम् (ऋ० सं० ४,४,१६,२)"—इति निगमौ ॥

(१५) मार्ष्टि§ । 'मृज शुद्धौ' अदादिः । "मृगो न भीमः (ऋ० सं० २,२,२४,२)"—"भुरावन्नारिचे मर्जयन्त (ऋ० सं० ५,४,६,३)"—इति निगमौ ॥

(१६) भुरण्यति‖ । 'भुरण धारणपोषणयोः' कण्ड्वादिः । "भुरण्यन्तं जना अनु (ऋ० सं० १,४,८,१)"—"भुर्चिर्वा सोमा भुरण्यावजीगः (ऋ० सं० ७,७,२२,१)"—इति च निगमौ ॥

(१७) ध्रवति¶ । 'ध्रव गतौ' । 'ध्रु गतौ'—इति स्कन्दस्वामी । "मा भेम ध्रवसस्पते (ऋ० सं० १,१,२१,२)"—इति निगमः ॥

(१८) कालयति** । 'काल क्षेपे' चुरादिरदन्तः । व्यत्ययेन

---

* निघ० ५, ११ ।
† निघ० ४, ३ ।
‡ पृ० ६ ।
§ निघ० २, १०; ११, ४२ ।
‖ निघ० १२, २२ ।
¶ पृ० ३, ५ । निघ० २, २; ३, ८; ४, १२ ।
** निघ० २, १५ ।

स्यानिवद्भावाद्वृद्धिः। "तं काले कालमागते यते ( * )"—इति निगमः। 'कालः कालयतेर्गतिकर्मणः (निरु० २,२५)'—इति यास्कः॥

(१९) पेलयति†। 'पेलृ फेलृ शेलृ गतौ (भ्वा० प०)'। "वयांसि पक्षा गन्धेन पिपीलिकाः प्रयाद ( ‡ )"—इति निगमः। 'पिपीलिका पेलतेर्गतिकर्मणः (निरु० ७,१३)'—इति यास्कः॥

(२०) कण्टति§। 'कटि गतौ (भ्वा० प०)'। "यातुधानेभ्यः कण्टकीकारिणम् (य० वा० सं० ३०,८)"—इति निगमः। 'कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद् गतिकर्मणः इति निरुक्तम् (९,३२)। 'कण्टति पश्यति पश्यन्'—इति स्कन्दस्वामी॥

(२१) पिस्यति। 'पिसृ पेसृ गतौ (भ्वा० प०)'। व्यत्ययेन श्यन्॥

(२२) विस्यति‖। (२३) मिस्यति। 'विस प्रेरणे', 'मसी परिमाणे' दिवादिः। मिस्यतीत्यौकारश्छान्दसः। "इयं शुष्मेभिर्बिसखा इवारुजत् (ऋ० सं० ४,८,३०,२)"—इति निगमः। अत्र 'बिसतिर्गतिकर्मसु पठ्यते'—इति स्कन्दस्वामी। ऋग्भाष्ये—विस्यति मिस्यति इमौ नैरुक्तधातू॥

* अथर्व० सं० १९, ५३–५४. सूक्तद्वयं द्रष्टव्यम्। ऋ० सं० ७, ९, ४. अपि च।
† निरु० ७ १३।
‡ ऋ० सं० ७, ६, ११, १. निपाद्योः। अथर्व० सं० ७, ५६, ७. द्रष्टव्य।
§ निरु० ९, ३२।
‖ निरु० २, २४।

(२४) प्रवते*। (२५) प्लवते। (२६) च्यवते। 'च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ (भू० आ०)'। "अभि प्रवन्त समनेव योषाः (ऋ० सं० ३,८,११,३)"—"तिस्रः पृथिवीरुपरि प्रवा दिवः (ऋ० सं० १,२,५,२)"—इति निगमौ ॥

(२७) कवते†। 'कुङ् गतिरेषणयोः (भू० आ०)'। "नीचीनबारं वरुणः कबन्धम् (ऋ० सं० ४,४,३०,३)"—इति निगमः। 'कवतेर्गतिकर्मणः कबन्धमुदकम्'—इति स्कन्दस्वामी ॥

(२८) गवते।

(२९) नवते। 'णु स्तुतौ' अदादिः (प०)। 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः, आत्मनेपदन्तु व्यत्ययेन। "प्र धेनव उदप्रुतो नवन्त (ऋ० सं० ५,४,९,१)"—इति निगमः ॥

(३०) क्षोदति। 'क्षुदिर् सम्प्रेषणे' रुधादिः, स्वरितेत्। व्यत्ययेन शप्। "क्षोदन्त आपो रिणते वनानि (ऋ० सं० ४,३,१३,६)"—इति निगमः ॥

(३१) नक्षति‡। 'णक्ष गतौ (भू० प०)'। "अफच्युतो रेणुर्नक्षत द्याम् (ऋ० सं० १,३,२,४)"—इति निगमः ॥

(३२) सश्चति§। 'षच समवाये' स्वरितेत् (भू०)। 'सिप् बहुलं लेटि (३,१,३४)', 'लेटोऽडाटौ (३,४,९४)'। नैरुक्तधातुर्वा।

* निघ० ७, २०।
† निघ० ५, २९।
‡ प० १८। निघ० २, १०; १०, ११।
§ प० चतैव १५; ३, २९। निघ० २, ११; ५, ९; ७, ११; ९, २९; ९, ११; ११, ४९।

"सद्यादेव प्र णंस्तुर: (ऋ० सं० १,२,२४,१)"—इति निगमः। 'सश्चतेः सचते वा गतिकर्मणो रूपम्'—इति स्कन्दस्वामी ॥

(३३) स्यचति*। 'स्यचेर्गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३४) सचति। 'सच समवाये (भ्वा० उ०)'। "अश्विनापचाः सचन्ताम् (ऋ० सं० १,२,६,१)"—"अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १,५,१६.२)"—इति निगमौ। 'सचत्यृच्छतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(३५) ऋच्छति। 'ऋ गतिप्रापणयोः (भ्वा० प०)'। 'पाघ्राध्मा (७,३,७८)'—इत्यादिसूत्रेण ऋच्छादेशः। "वाचा स्तेनं शरव ऋच्छन्तु (ऋ० सं० ८,४,७,५)"—इति निगमः ॥

(३६) तुरीयति। नैरुक्तधातुः ॥

(३७) यतति†। 'यते यातने' स्वरितेत्। "दूरादुरमयोयतम् ( ? )"—इति निगमः। 'यततिर्गत्यर्थे च'—इति भट्टभास्करमिश्रः ॥

(३८) अतति। 'अत सातत्यगमने'। "अयमु ते समतसि (ऋ० सं० १,२,२८,४)"—इति निगमः ॥

(३९) गाति‡। 'गाङ् गतौ (अदा० आ०)'। व्यत्ययेन परस्मैपदी। "निर्यत्—पूतेव स्वधितिः शुचिर्गात् (ऋ० सं० ५,२,४,४)"—इति निगमः ॥

* प० ४, २। निरु० ६, १२।
† निरु० ६, २०।
‡ निरु० २, १८; ४, २१; १०, २४; २७; ११, १६

(४०) इयक्षति* । 'यज पूजायाम्' तुदादिरात्मनेपदी । व्यत्ययेन परस्मैपदम् । 'छन्दस्युभयथा (३,४,११७)'—इति हि आर्द्धधातुकत्वात् णि-लोपः । यजेः सनि 'वा रूपम्, अभ्यासस्य सम्प्रसारणं व्यत्ययेन । "कुविमियक्षसि प्रयज्यो (ऋ०सं०४,८,५,४)"—इति निगमः । 'गतिकर्मा'—इति इयक्षतः ॥

(४१) मक्षति† । सचतेरेव छान्दसः मकारउपजनः । "असश्चन्ती भूरिधारे पयस्वती (ऋ०सं० ५,१,१४,२)"—"यज्जौषिण वृषणं मश्चत: श्रिये (ऋ०सं० १,५,८,२)"—इति निगमौ ॥

(४२) त्सरति‡ । 'त्सर छद्मगतौ (भ्व०प०)' । "अभि त्सरन्ति धेनुभिः (ऋ०सं० ५,७,१८,१)"——"अवत्सरत्स्पृधत्यंश्चिकित्वान् (ऋ०सं० १,५,१५,५)"—इति निगमौ ॥

(४३) रंहति§ । 'रहि गतौ (भ्व०प०)' । "मङ्हसमाः क्रतमा अस्य रंहिः (ऋ०सं० ८,८,३६,३)"—"पुरोहरिभ्यां वृषभोरथो हिषः (ऋ०सं०१,४,१७,३)"—इति निगमौ । 'रथो रंहतेर्गतिकर्मणः (निरु०९,११)'—इति भाष्यम् ॥

(४४) यतते‖ । 'यती प्रयत्ने' आत्मनेपदम् (भ्व०) । "हंसा इव श्रेणिशो यतन्ते (ऋ०सं० २,३,१२,५)"—"मित्रं न यातुद्धजनम् (ऋ०सं० ६,७,११,२)"—इति निगमौ ॥

* निरु० २, १४ ।

† प० ३, २ । निरु० ५, १ ।

‡ निरु० ५, २ ।

§ निरु९ ९, ११ ।

‖ प० १९ । निरु० १०, ११ ।

(४५) भ्रमति। 'भ्रमु चलने (भ्वा॰प॰)'। "भ्रमिरस्य भ्रमत्रस्थोनाम् ( ? )"—इति निगमः॥

(४६) ध्रजति*। 'ध्रज ध्रजि गतौ (भ्वा॰प॰)'। "ध्राजिरेकस्य ददृशे न रूपम् (ऋ॰सं॰२,३,२२,४)"—"ऋष्टिर्दुनिर्मान्त इव ध्रजीमाम् (ऋ॰सं॰१,५,२७,१)"—इति निगमौ॥

(४७) रजति†। (४८) ध्वजति‡। (४९) क्षियति§॥

(५०) धमति‖। 'धमि गतौ' इति स्कन्दस्वामी। यद्वा: 'ध्मा शब्दाग्निसंयोगयोः (भ्वा॰प॰)'। 'पाघ्राध्मा (७,३ ७८)'—इत्यादिना धमादेशः। "ग्रावाणः पुरुशत्रुं धमन्तः (ऋ॰सं॰३,२,२,५)"—"निःषम्ना धमथो निःषधस्थात् (ऋ॰सं॰४,१,३०,४)"—इति निगमौ॥

(५१) मिनाति¶। 'मीञ् हिंसायाम्'। 'मीनातेर्निगमे (७,३,८१)'—इति ह्रस्वः। "मिनोति"—इति पाठान्तरम्। तच 'डु मिञ् प्रक्षेपणे' स्वादिः। "मप्रचक्रे रथ मर्तिमस्मिन्नम् (ऋ॰सं॰२,८,६,३)"—इति निगमः। 'मीनातेरेतद्रूपम्, मन्त्रेणापि लोके नावगन्तुमशक्यम्'-इति स्कन्दः॥

(५२) ऋण्वति। 'ऋवि रवि गतौ (भ्वा॰प॰)'। 'इदितो

* निघ॰ १९, २७।
† प॰ ३, १४।
‡ निघ॰ ४, ९।
§ निघ॰ ७, ६; ३, २; ९. १०; १०, १२; १०, १४।
‖ प॰ १९; ७, १५। निघ॰ ६, २।
¶ प॰ १९। निघ॰ ७, २९।

गम धातोः (७,१,५८)', 'रयेर्मतौ बहुलम् (६,१,३४वा०)'—इति बहुलवचनात् सम्प्रसारणम् । "धानुषग् वाणी इव धन्वसि (ऋ० सं० १,४,२३,३)"—इति निगमः । 'धन्वतिर्गतिकर्मा, गत्यर्थोऽत्रार्थः । विविधं गमयति'—इति स्कन्दस्वामि-भाष्यम् ॥

(५३) ऋणोति । 'ऋण गतौ' तनादिः स्वरितेत् । "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)'—इति लघूपधगुणाभावः "अभि कृष्णेन रजसा द्यामृणोति (ऋ० सं० १,३,७,४)"—"ऋणो रूपो मर्त्यस्यार्णाः (ऋ० सं० २,४,१६,२)"—इति निगमौ । उभयोरपि 'ऋणोतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम् ॥

(५४) स्वरति* । 'स्वृ शब्दोपतापयोः' । "दर्शो इन्द्र प्रतरस्व अभिस्वर (ऋ० सं० ६,२,२२,२)"—इति निगमः ॥ अत्र 'गतिकर्मा'—इत्युक्तं स्कन्दस्वामी । "अनिमेषं विदथाभि स्वरन्ति (ऋ० सं० २,३,१८,१)"—इत्यादौ 'गतिकर्मस्वपठितोऽपि गत्यर्थः'—इत्युक्तम् ॥

(५५) सिसर्त्ति† । 'ऋ सृ गतौ' जुहोत्यादिः । 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)', 'बहुलं छन्दसि (७,४,७८)'—इति अभ्यासस्येत्वम् । "प्र बाहवा सिसृतं जीवसे नः (ऋ० सं० ५,५,४,५)"—इति निगमः ॥

(५६) विविष्टि‡ । 'विष्लृ व्याप्तौ' जुहोत्यादिः (उ०) । लेटि 'सिब्बहुलं लेटि (३,१,३४)' । "अग्ने सं वेविषो रयिम् (ऋ० सं०

* प० २, १४ । निघ० २, १२ ।
† निघ० १, १९ ; १०, २ ।
‡ निघ० १०, ४९ ।

१,५,२६,१)"—इति निगमः। 'समन्तात् प्रापय'—इति भट्ट-भास्करमिश्रः॥

(५७) योषिष्टि। 'युष हिंसायाम् (भू०प०)'। लेटि सिपि व्यत्ययेन गुणः॥

(५८) रिणाति*। 'री गतिरेषणयोः' क्र्यादिः स्वादिश्च। "स्व-धायमाणो निरिणाति शत्रून् (ऋ०सं०१,४,२८,३)"—"लोपा-मुद्रा वृषणं नीरिणाति (ऋ०सं०२,४,२२,४)"—इति निगमौ॥

(५९) रीयते। 'रीङ् श्रवणे' दिवादिः। "एदं निम्नं न रीयते (ऋ०सं०१,२,२८,२)"—इति निगमः। 'रीयते रेजतीति गतिकर्मसु पाठात् गत्यर्थः'—इति स्कन्दस्वामि-भाष्यम्॥

(६०) रेजति†। नैरुक्तधातुः। "इव्यो नय दपवान् मन्म रेजति (ऋ०सं०२,१,१७,१)"—'चलति गच्छतीत्यर्थः'—इति स्कन्द-स्वामी॥

(६१) दघ्नोति‡। 'दघ पालने' स्वादिः। व्यत्ययेन श्नम्। "पश्चादघा यो अघम्य धाता (ऋ०सं०२,८,४,५)"—इति च निगमः॥

(६२) दभ्नोति§। 'दम्भु दम्भे' स्वादिः॥

(६३) युध्यति। 'युध सम्प्रहारे' दिवादिरात्मनेपदी, व्यत्ययेन परस्मैपदी॥

* निघ० ३, ५।
† निघ० १०, ४२।
‡ निघ० १, ०; ८।
§ प० १८। निघ० ४, १२।

(६४) धन्वति। 'रिवि रवि धवि गत्यर्थाः (भ्वा०प०)'। "परि सोम प्र धन्वा स्वस्तये (ऋ०सं० ७,२,३३,५)"—"न यस्य द्यावापृथिवी न धन्व (ऋ०सं० ८,४,१५,१)"—इति च निगमौ॥

(६५) अरुषति*। सैद्धान्तधातुः। "वि धूममग्ने अरुषं मियेध्य (ऋ०सं० १,३,९,४)"—"स्वर्माणः श्यावो मरुषीमजुषन् (ऋ०सं० १,५,१५,१)"—"प्रतीची रग्नेररुषीरजानन् (ऋ०सं० १,५,१८,१०)"—इत्यादिषु स्कन्दस्वामिभाष्यम्—'अरुषतिर्गतिकर्मा'—इति दृष्टम्। "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ०सं० १,१,११,१)"—इत्यादौ द्वितयोः प्रदेशयोः 'अरुष्यतिर्गतिकर्मा'—इत्यपि। उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् अरुषतीति पाठोयुक्तः॥

(६६) आर्यति। "मामार्यन्ति कृतेन कर्त्वेन च (ऋ०सं० ८,१,५,३)"—"तमिच्छ्रीणैरार्यन्ति (ऋ०सं० ६,१,२१,६)"—इति च निगमौ॥

(६७) सीयते। 'षिञ् बन्धने' स्वादिः क्र्यादिश्च। व्यत्ययेन श्यन्। "डीयते"—इति पाठान्तरम्। तदा 'डीङ् विहायसा गतौ' दिवादिः। निगमदर्शनान्निर्णयः॥

(६८) तकति। 'तक हसने (भ्वा०प०)'। "यः पूर्व्याता परितक्म्येव धने (ऋ०सं० १,०,३३,१)"—"अन्योन्यासर्गप्रतक्म्ये ( ? )"—इति निगमौ॥

(६९) दीयति ('दीङ् क्षये' दिवादिः। व्यत्ययेन परस्मैपदम्।

---

* प० १, ७। पु० १, ८. निरु० ११, ७।

"श्येनो न दीयन्नन्वेति पाथः (ऋ॰ सं॰ ५,५,५,५)" इति निगमः॥

(७०) ईषति*। "ईष गतिहिंसादानेषु" आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "तुनानोगा ईषन्ते वृष्णयावतः (ऋ॰ सं॰ ४,४,२७, २)"—इति निगमः। बहुषु 'ईषतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(७१) फणति†। 'फण गतौ'। "यथामङ्गास्य ध्वापनीफणत् (ऋ॰ सं॰ ३,७,१४,४)"—इति निगमः॥

(७२) हन्ति‡। 'हन हिंसागत्योः' अदादिः। 'बहुलं छन्दसि (२,४,७३)'—इति शपोऽलुग् न भवति। "सं यद्धनन्त मन्युभिर्जनासः (ऋ॰ सं॰ ५,४,२६,२)"—इति निगमः॥

(७३) अर्दति§। 'अर्द गतौ याचने च'॥

(७४) मर्दति‖। 'मृद मर्दने'। व्यत्ययेन परस्मैपदम्॥

(७५) सर्स्रते¶। 'सृ गतौ' जुहोत्यादिः परस्मैपदी। व्यत्ययेनात्मनेपदम्। पृषोदरादित्वात् (६,३,१०९) अभ्यासस्य रुगागमः। "प्र सर्स्राते दीर्घमायुः प्रयक्ष (ऋ॰ सं॰ ३,१,१,१)"—"आतेन यात मनसे प्र सर्स्रते (ऋ॰ सं॰ २,७,४,१)"—इति निगमौ॥

* "ईषते" निघ॰ ४, २; ९, ८; १०, ११।
† निघ॰ २, १८।
‡ निघ॰ २, २०; ४, २; ७, १९; ९, २०।
§ "अर्दयति" प॰ १९।
‖ प॰ १९। "मृदुः" निघ॰ २, २।
¶ अत्रैव १० ५५।

(७६) नक्षते* । 'णक्ष कौटिल्ये' आत्मनेपदी । "पृथ्वीभ्यां ते मार्विकाभ्याम् (ऋ० मं० ८,८,२१,१)" –इति निगमः ॥

(७७) हर्यति† । 'हर्य गतिकान्त्योः' ॥

(७८) इयर्ति‡ । 'ऋ सृ गतौ' जुहोत्यादिः । 'अर्त्तिपिपर्त्त्योश्च (७,४,७७)' । "कृष्णोरियर्त्यर्जमा (ऋ० मं० १,१,१४,२)"– इति निगमः ॥

(७९) ईर्त्ते । 'ईर गतौ कम्पने च' अदादिरात्मनेपदी । "मत्स्यासः प्रमुपः साकमीरते (ऋ० मं० ७,२,२२,१)"—इति निगमः ॥

(८०) ईङ्खते । 'ईखि गतौ' (भ्वा०) आत्मनेपदी । "य ईङ्खयन्ति पर्वतान् (ऋ० मं० १,१,३७,२)"–इति निगमः । अत्र 'ईङ्खतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम् ॥

(८१) अयति । (८२) आचति । एतौ नैरुक्तधातू ॥

(८३) गन्ति§ । 'गमॢ गतौ (भ्वा० प०)' । व्यत्ययेन शपो लुक् । "अङ्गिरोभिरागहि यज्ञियेभिः (ऋ० मं० ७,६,१४,५)"–इति निगमः ॥

(८४) आगनीगन्ति‖ । 'गमॢ गतौ (भ्वा० प०)' । दाधर्त्ति-

* "नक्षतः" प० ४,१ । "नक्षन्तः" ७,१७ निघ० ।

† निघ० ७,२० ; ७,१७ ; ११,१४ ।

‡ निघ० ९,४ ।

§ "गमध्यै" निघ० २,७ । "जग्मुषः" निघ० ११,४१ ।
"आगच्छात्" निघ० ४,५० । "आगमत्" निघ० ५,२ ।
"आगत" निघ० ११,४० । "आ गमत्" निघ० ११,१५ ।
"आजग्मुः" निघ० ११,४१ । "आगनीगन्ति" निघ० ९,१८ ।
"जग्मत" निघ० ११,१४ । "सङ्ग्मानः" निघ० ४,११ ।

‖ द्रष्टव्यम् पुरस्तादिदेव (८१) ।

दृधर्ति (७,४,६५) इत्यादिना आङ्पूर्वस्य गमेर्लुङि यङ्लुगन्तस्य लुत्वाभावो नीगागमश्च निपात्यते। यङ्लुगन्तात् लटि निपातनाद्रूपसिद्धिः। "वरुणस्य वेदा' गनीगन्ति कर्णम् (ऋ० सं० ५,१,१९,३)"—इति निगमः॥

(८५) जङ्गन्ति*। गमेर्यङ्लुकि 'गुणतोऽनुनासिकान्तस्य (७,४,८५)' इति नुकि च रूपम्। "प्रातर्मखू धियावसुर्जगम्यात् (ऋ० सं० १,४,७४,४)" इत्यत्र 'जङ्गन्तेर्गतिकर्मणएतद्रूपम्'—इति स्कन्दस्वामि-भाष्यम्।

(८६) जिन्वति†। 'इवि जिवि धिवि प्रीणनार्थाः (भू० प०)'॥

(८७) जमति। 'जमु भोजने' दिवादिः (प०)। व्यत्ययेन शप्॥

(८८) गमति‡। 'गम्लृ गतौ (भू० प०)'। लेट्। 'लेटोऽडाटौ (३,४,९४)'। बाहुलकात 'मिब्बहुलं लेटि (३,१,३४)' —इति सिप् न भवति। यद्वा; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति शब्भावः। "न स्वा गमन् नरद श्रुतन् (ऋ० सं० ४,८,५,१)"—इति निगमः॥

(८९) भ्रति। (९०) भ्राति। (९१) भ्रयति। चयोऽपि नैरुक्ताः॥

(९२) वहते§। 'वह प्रापणे' (भू० उ०) स्वरितेत्। "वैश्वानरं"

* पु० इहधनिरैव (८१)।
† प० ४,२। निघ० ४.११। "प्रजिन्वीथि" निघ० ११,१०।
‡ पु० इहर्यामिरैव (८१)।
§ "वहि" निघ० ८,१९। "आ वहत्" निघ० ९,४२; ४२। "वहतु" निघ० १२,८; ११। "वहि" निघ० १,४; ६; ८,१।

मातरिश्वा परावतः (ऋ० सं० ४,५,१०,४)"—इत्यत्र 'परापूर्वस्य वहतेर्गतिकर्मणः परावच्छब्दः'—इति स्कन्दस्वामी ॥

(८३) रंधर्यति* । नैरुक्तधातुः । 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफव्यञ्जन ईत्वाभावश्च पृषोदरादित्वात् (६,३,१०९)'—इति स्कन्दस्वामी । "एष द्युम्नो रंधर्यति (ऋ० सं० ६,७,२०,५)"—इति निगमः । माधवभाष्यं द्रष्टव्यम् ॥

(८४) ओहते । 'वेह जेह वाह प्रयत्ने' आत्मनेपदी । "ये तांश्चपुर्देवत्रा जेहमाना (ऋ० सं० ७,६,१८,४)"—इति निगमः । 'ओ हाङ् गतावित्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(८५) स्वःकति । (८६) भुन्यति† । (८७) ध्याति । (८८) वाति‡ । (८९) याति§ ॥

(१००) इषति॥ । 'इष गतौ' दिवादिः(प०) । व्यत्ययेन शः । "तथास्मभ्यमिषव: शर्म यंसन् (ऋ० सं० ५,१,२१,१)"—इति निगमः ॥ 'इषुरिषतेर्गतिकर्मणः (८,१८)'—इति निरुक्तम् ॥

(१०१) द्राति¶ । 'द्रा कुत्सितायां गतौ' अदादिः(प०) । वंसु यवामतयो दस्म दद्रुः (ऋ० सं० १,५,३,१)"—इति निगमः ॥

---

* प० ४, ३ । निघ० ६, १८ ।
† प० ४, ३ । निघ० ४, १९ ।
‡ निघ० २, १४; ३, ५; ११, १३ ।
§ प० ३, १९ । निघ० २, १; ३, १९ ।
|| निरु० ९, १८; "इषितः" ८, ८ ।
¶ निघ० ९, ३ ।

(१०२) द्रूणाति। नैरुक्तधातुः॥

(१०३) एजति*। 'एजृ कम्पने (भ्वा०प०)'। "सूर्येण सूर्यारं जति (ऋ०सं०१,१,१८;२)"—"यथा समुद्र एजति (ऋ० सं०४,४,२०,३)"—इति निगमौ॥

(१०४) जमति†। 'जमु अदने (भ्वा०प०)'। "न जामयं तान्वोरिक्थ मारैक् (ऋ०सं०३,२,५,२)"—इति निगमः। 'जामिर्जमतेर्गतिकर्म्मणः'—इति स्कन्दस्वामी॥

(१०५) जवति‡। 'जु गतौ'—इति क्षीरस्वामी। "न पातव इन्द्र जुजूर्नु नः ( ? )"—"विपाट् छुतुद्री पयसा जवेते (ऋ० सं० ३,२,१२,१)"—इति निगमौ॥

(१०६) वञ्चति। 'वञ्चु गतौ (भ्वा०प०)'। "नमो वञ्चते परिवञ्चते (य०वा०सं०१६,२१)"—इति निगमः॥

(१०७) अनिति§। 'श्वस प्राणने, अन च (अदा०प०)'। "अन मातर्यात्वनिति ( ? )"—इति निगमः। 'अनितिर्गतिकर्मा'—इति माधवः॥

(१०८) पवते‖। 'पूङ् पवने'। "नेन्द्रादृते पवते धाम किञ्चन (ऋ०सं०७,२,२२,१)"—"स्तक्नं मंशाप पविमिन्द्र तिग्मम् ( ? )"—इति निगमौ॥

* निघ० ३, १९।
† निघ २, ६। "जमत्" पु० ६, १०।
‡ "जवेते" निघ० ८, ३९।
§ निघ० ११, ४७।
‖ "पवस" २, १०।

(१०९) हन्ति* । 'हन हिंसागत्योः' अदादिः (प०) । "नि येन मुष्टिहत्यया० (ऋ० सं० १,१,१५,२)"—"आह्न वज्र मधिसानौ जघान (ऋ० सं० १,२,३७,२)"—इति निगमौ ॥

(११०) सेधति । 'षिधु गत्याम् (भू० प०)' । "सेधन्तु देवो भर्त्तं सधा भुवा (ऋ० सं० १,२,५,५)"—इति निगमः ॥

(१११) अगन्† । 'गमॢ गतौ (भू० प०)' । लुङि तिपि च्लेः 'मन्त्रे घस (२,४,८०)'—इति लुकि, 'इतश्च (३,४,९७)'—'संयोगान्तलोपः (८,२,२३)', 'मोनोधातोः (८,२,६४)'—इति मकारस्य नकारः । "यदामागन् प्रथमजा ऋतस्य (ऋ० सं० २,३,२१,२)"—इति निगमः ॥

(११२) अजगन्‡ । गमेर्लुङि 'बहुलं छन्दसि (२,४,७३)'—इति शपः श्लुः । पूर्ववन्नत्वम् (८,२,६४) । "यस्मात्हरजगन्नपः (ऋ० सं० ३,१,५,२)"—इति निगमः ॥

(११३) जिगाति§ । 'गा स्तुतौ (अदा० प०)' । छन्दसि जुहोत्यादिः । 'अर्त्तिपिपर्त्त्योश्च (७,४,७७) 'बहुलं छन्दसि (७,४,७८)'—इति अभ्यासस्येत्वम् । "धेना जिगाति दाशुषे (ऋ० सं० १,१,३,३)"—इति निगमः । 'जगातीति पाठान्तरम्'—इति स्कन्दस्वामिभाष्यम् ॥

* "अवन्वन्" निघ० २, १० ; ०, ११ ; "हन्मोः" ६, ९ ; "वाजहन्नि", "उपजिघ्नते" ९, १० ।

†, ‡ इत्येव पुरस्तात् (७८) ।

§ इत्येव पुरस्तात् (१९) ।

(११४) पतति*। 'पत्लृ गतौ (भ्वा०प०)'। "गोभिः सन्नद्धो पतति प्रसूता (ऋ०सं० ५,१,२१,१)"—इति निगमः॥

(११५) इन्वति†। 'इवि गतौ (भ्वा०प०)'। "देवौ द्वारौ बृहतीर्विश्वमिन्वा (य०वा०सं०२८,३०)"—इति निगमः॥

(११६) द्रमति। 'द्रम हम्म-मीमृ गतौ (भ्वा०प०)'। "प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ०सं० ८,३.२३,४)"—इति निगमः। 'चन्द्रमाश्चायं द्रमति'—इति भाष्यम् (निरु०११.५)। 'द्रमति-र्गतिकर्मा'—इति स्कन्दस्वामी॥

(११७) द्रवति‡। 'द्रु द्रु गतौ (भ्वा०प०)'। "यत्रा नरः सं च वि च द्रवन्ति (ऋ०सं० ५,१.२१,१)"—इति निगमः॥

(११८) वेति§। 'वी गतिप्रजनकान्त्यशनखादनेषु' अदादिः। "अपामीवां बाधते वेति सूर्यम्"—"पदं न वेत्योदतो (ऋ०सं० १,४,४,१)"—इति निगमौ॥

(११९) इन्वात्। इन्वतेर्लोटि नानङि रूपम्। "इयन्तात्"—इति केचित् पठन्ति। तत्र 'इय गतौ (भ्वा०प०)'—इत्यस्य नातङि तकार उपजनः॥

(१२०) एति‖। 'इ गतौ' अदादिः (प०)। "विपाकच्छन्द्रमा नक्षेति (ऋ०सं० १,२.१४,५)"—इति निगमः।

* "चापयन्त" निरु० ११, १४
† प० १८।
‡ निरु० ४, १५, १९।
§ पु० २, ६।
‖ पु० १५।

(१२१) अगाथात्* । 'गा स्तुतौ' जुहोत्यादिः (प०)। लिङि 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वेन 'ई हल्यघोः (६,४,११३)'—इतीत्वं न भवति। "स्वाग्निः पुनरस्तं अगाथात् (ऋ० सं० ७,७,२०,१)"—इति निगमः ॥

(१२२) अयथुः । 'द्वितोऽथुच् (३,३,८९)'—इति बाहुलकादयतेरथुच् भवति ॥

इति द्वात्रिंशच्छतं गतिकर्माणः ॥ १४ ॥

नु(१) । मक्षु(२) । द्रवत्(३) । ओपम्(४) । जीराः(५) । जूर्णिः(६) । शूर्ताः(७) । शूघनासः(८) । शीभम्(९) । तृषु(१०) । तूयम्(११) । तूर्णिः(१२) । अजिरम्(१३) । भुरण्युः(१४) । शु(१५) । आशु(१६) । प्राशुः(१७) । तूतुजिः(१८) । तूतुजानः(१९) । तुज्यमानासः(२०) । अज्राः(२१) । साचिवित्(२२) । युगत्(२३) ।

* इत्येव पुस्तकात् (२९)।

(५) "जिराः" ख।

(८) "शूघनासः" ख। "शूघनाः" ग. C. D F। "शूघनासः" घ।

(१०) "त्रिषु" C। (११) "तोयम्" ग. C. D. F।

(१२) "तूर्णि" ख. ग।

(१३) "अजिरम्" ख।

(१५) "शूः" ग। (१६) "आशुः" ख. ग. घ. C. D. F।

(१७) "प्राशुषित्" ग. C. F। "प्राशुषित्" D।

(१८) "तूतुजित्" ग. C. D. F।

(१९) "तूतुजानासः" ग. C. D. F।

(२१) "अजराः" ख।

(२२) "साचीवित्" क. घ। "साचीवत्" ग।

(२३) "युगत्" ग. iid।

**ताजत्[२४] । तरणिः[२५] । वातरंहाः[२६] । इति षड्विंश-तिः क्षिप्रनामानि* ॥ १५ ॥**

'क्षिप्रनामान्युत्तराणि षड्विंशतिः (निरु० ३.८)'—इत्यत्र भाष्ये 'गुणस्य चैतानीति क्षिप्रस्य गच्छतो वा नामधेयानि। तथाच वक्ष्यति 'भुरण्युः' 'शकुनिः'—इति स्कन्दस्वामी। गुणश्च चिरकालविशिष्टा स्वल्पकालविशिष्टा वा क्रिया। तत्कर्त्तरि कर्त्तुरल्पकालविशिष्टत्वस्य तथाविधक्रियाकर्तृत्वान्यक्रियाद्वारकम्। तत्र 'मक्षु' 'तूर्णिः' इत्यादिषु क्रियाविशेषेण वा क्रियारूपमतद्दान्। निकृष्टगुणनामधेयोदाहरणानि पुनरन्वेषणीयानि। केचित्तु यद्यपि गुणशब्दो व्यवच्छेदकमात्रवचनतया अत्र कर्तृविशेषणभूतक्रियालक्षणा व्यवच्छेदकविशेषे वर्त्तते निकृष्टा गुणमात्रवाचिनि गम्यादौ लभ्या; तथापि सत्त्वशब्दस्य द्रव्यवचनत्वे स्वारस्यात् क्रियायाश्चाद्रव्यत्वात् क्रियाया इव द्रव्यस्यापि नामधेयानि'—इत्याहुः। इदानीं क्रियाविशेषणानि गुणनामधेयोदाहरणानि 'जीराः' 'अजिरम्' इत्यादीनि ॥

(१) नु† । निपातोऽयम् । "इन्द्रस्य नु वीर्याणि प्र वोचम् (ऋ० सं० १,२,३६,१)"—इति निगमः ॥

(२) मक्षु । 'टु मस्जो शुद्धौ (तु० प०)' । 'मस्जेर्धातोरुक्' इति भोजसूत्रेण उक्-प्रत्ययः । संयोगादिलोपः । अन्तर्णीतण्यर्थश्च मस्जिः ।

---

* "इति क्षिप्राणि" क ।

† प० २, १२ निघ० १, ४ ; ११, ३० । "नु कम्" २, १२ ।
"न च"—"नू चित्" प० ४, १ ; निघ० ४, १० ; १०, ३ ।

क्रियाया; पापतो वा मज्जयति चिरकालमिति। "मधु क्षणु हि गोजितौ नः ( ? * )"—इति निगमः॥

(३) द्रवत्*। 'द्रु गतौ (भ्०प०)'। 'मंहत्-तृम्पद्-वेहत् (उ० २,७९)'—इति बाहुलकात् अति-प्रत्ययान्तो निपात्यते। द्रवत्यनेन। * * *। "द्रवत्पाणी शुभस्पती (ऋ०मं०१,१,५,१)—इति निगमौ॥

(४) ओषम्। निपातोऽयम्। "ओषमित् पृथिवीमहम् (ऋ० सं०८,६,२७,४)"—"ओषः पात्र न शोचिषा (ऋ०सं०२,४,१८,३)"—इति निगमौ। 'अन्तोदात्तो निपातः स्वादाख्याने चाद्युदात्तता'—इति हि माधवः॥

(५) जीराः। जवनिर्गतिकर्मा। 'जोरी च (उ०२,२५)'—इति ईक्-प्रत्यय ईकारस्यान्तादेशः। जस्। "जीरा अजिरशोचिषः (ऋ०सं०७,२,११,५)"—"जीरं दूतममर्त्यम् (ऋ०सं०१,२,२,३०,११)"—इति निगमौ॥

(६) जूर्णिः†। व्याख्यातं क्रोधनामसु (२३५पृ०)। निगमोऽन्वेषणीयः॥

(७) शूर्ताः। 'तातप्रातसुत'—इत्यादि भोजसूचे आदिशब्देन शृणात्यस्मात् क्त-प्रत्ययान्तो निपात्यते। शृणाति फललाभम्। "त्वया शूर्ता वहमाना अपत्यम् (ऋ०सं०२,४,१७,१)"—इति

---

* "आ वो मक्षू तनाय कम् (ऋ० सं० १, १, १९, २)"—इत्यपि निगमो भवितुमर्हति।

† पृ० २४ (११०)।

‡ पृ० ११।

निगमः। 'भूर्णाः क्षिप्रात्मानमानाः'—इति भट्टभास्करमिश्राः॥

(८) भूर्णघनासः। भु शब्दे उपपदे हन्तेः 'भुवि वक्ष्यनम् (उ॰ २,७४)'—इति भुवि बाहुलकात् कुत्वं णिलोपश्च निपात्यते दीर्घश्च। भोग्यमागच्छत्यनेन क्रियाफलम्। तस्मात् असोऽसुक्। "मिम्यक्षित्र प्राध्वनं भूर्णघनासः (ऋ॰ ग्रा॰ मं॰ १ ७.८५)"—इति निगमः। 'भूर्णघनासः क्षिप्रगमनाः'—इत्युवटः॥

(९) शोभम्। 'शोभ कत्थने (भ्वा॰ आ॰)'। घञ्। शोभ्यतेऽनेन तडागः। "प्रयात शोभ्नाऽऽसभिः (ऋ॰ मं॰ १.३,१४,४)"—"आ वहणाः पृणध्वं यात शोभम् (ऋ॰ मं॰ ३,२,१४,२)"—इति निगमौ॥

(१०) तृषु*। 'ञि त्वरा सम्भ्रमे (भ्वा॰ आ॰)'। 'मस्जीषोषुक्'—इति बाहुलकात् षुक्-प्रत्ययो धातोस्तृभावश्च। तरत्यनेन फललाभमथ, त्वरतेऽनेन फलमागन्तुम्। "तृष्वत्रिष्यन्नन्तमेषु तिष्ठति (ऋ॰ मं॰ १,४,२,२)"—"तृष्वामनुप्रमितिं द्रुणानः (ऋ॰ मं॰ ३,४.२३, १)"—इति निगमौ॥

(११) तूयम्†। व्याख्यातमुदकनामसु (१२८पृ॰)। वर्द्धतेऽनेन तद्वन्तः प्राप्याः। "आपित्वं नः प्रपित्वे तूयमा गहि (ऋ॰ मं॰ ५, ७,३०,२)"—इति निगमः॥

(१२) तूर्णिः‡। 'ञि त्वरा सम्भ्रमे'। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो

* निघ॰ ६.१२।
† पृ॰ १,१२।
‡ निघ॰ ७,१७।

नित् (उ० ४,५,१)'—इति नि-प्रत्ययः । स्वरतेऽनेन फलमागन्तुम् । "अपो यन्नूर्णिश्चरति प्रजानन् (ऋ० सं० ८,४,११,१)"—"सुतमा गन्त तूर्णयः (ऋ० सं० १,१,६,२)"—इति निगमौ ॥

(१३) अजिरम्* । 'अज गतिक्षेपणयोः (भू० प०)' । 'अजिर-शिशिरशिथिलस्थिरस्फिरस्थविरखदिराः (उ० १,५३)'—इति कि-रच्-प्रत्ययो जि-भावश्च निपात्यते । क्षिपति फलोत्पत्तिमाशुम् । "त्वा मीळ्हते अजिरं दूत्याय (ऋ० सं० ५,२,१४,२)"—इति निगमः ॥

(१४) भुरण्युः† । भुरण्यतिर्गतिकर्मा । 'मृगय्वादयश्च (उ० १, ३६)'-इति क्यु-प्रत्ययः । "येमा पावक चक्षमा (ऋ० सं० १.४, ८,१)"—इत्यत्र स्कन्दस्वामिना 'भुरण्यति: शीघ्रकरणार्थे'—इति प्रतिपादितम् । तत्र 'भुरण्य-शब्दस्य शीघ्रविशिष्टगमनादिक्रियाकर्त्तरि सत्यन्येत्र वृत्तिः । "शीर्णाम्नुपस्थाहितं भुरण्युः (ऋ० सं० १,५,१२, १)"—इति निगमः । 'भुरण्यतेर्गतिकर्मण इदं, क्षिप्रनाम वा'—इति स्कन्दस्वामिभाष्यम् ॥

(१५) शु:‡ । निपातः । "शाम वस्तो बोधयितारं मब्रवीत् (ऋ० सं० २,३,६,३)"—इति निगमः । 'शु आशुगामी'—इति निरुक्तम् (६,१) ॥

(१६) आशुः§ । 'अशू व्याप्तौ' । 'कृवापाजिमिस्वदिसाध्य-

* पु० १, १२ ।
† निघ० १२, २२ ।
‡ निघ० ६, १ ।
§ पु० १, १४ ।

शूध्य उण् (उ० १,१)। व्याप्नोत्यनेन नरवैलक्षण्येन व्याप्तव्यम्। 'आशु इदं क्षिप्रनाम क्षिप्रगामी'—इति स्कन्दस्वामिभाष्यम्। आशु इति च शब्दस्वरूपापेक्षया नपुंसकनिर्देशः। तेन आशु इति निपातः, आशुरिति सत्ववाची च उभयमपि पठितं भवति। तथा च स्कन्दस्वामी "समाशुमाशवे भर (ऋ० मं० १,१,८,२)"—इत्यत्र ऋग्भाष्ये 'आशुमिति क्षिप्रनामैतत्'—इति। 'आशु इति शु इति च क्षिप्रनामनी भवतः'—इति भाष्ये (निरु० ६,१) निर्विवक्षयोपन्यास इति चेत्? न; निपातत्वादिति चोक्तत्वात्। "त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः (ऋ० मं० २,५,१७,१)"—इति निगमः॥

(१७) प्राशुः*। 'सत्ववाच्याशुशब्दवत्'—इति भाष्ये प्रकर्षार्थोऽतिरिक्तः। 'हस्तो हन्तेः प्राशुर्हनने (निरु० १,७)'—इति भाष्ये 'प्राशुः क्षिप्रः'—इति स्कन्दस्वामी। "सुप्राव्याः प्राशुषाळेष वीरः (ऋ० मं० ३,६,१४,१)"—इति निगमः॥

(१८) तूतुजिः। 'तुज तुजि हिंसायाम् (भू०प०)'। 'किं किनोः प्रकरणे'—इत्यर्थे 'छन्दसि सदादिभ्यो दर्शनात्'—इति किन् प्रत्ययः। लिड्वद्भावात् द्विर्वचनम्। "तुजादीनां दीर्घोऽभ्यासस्य (६, १,७)'—इति दीर्घः। तूर्णवदर्थः। 'आयुक्षाता मश्विना तूतुजिं रथम् (ऋ० मं० ७,८,७, १)"—इति निगमः॥

(१९) तूतुजानः†। तोजतेर्लिटि कानजादेशः। "इन्द्रा याहि तूतुजानः (ऋ० मं० १,१,५,६)"—इति निगमः। 'क्षिप्रार्थे त्वर

---

* निरु० १, ७।
† निरु० ६, २०।

आदित अन्तोदात्तः तुगर्थस्तुतुजानो मन्द्रे मतः'—इति माधवः ॥

(२०) तुञ्ज्यमानासः । तोजतेरेव कर्मणि लटि शानच् । "तुञ्ज्यमानास आविषुः (ऋ० सं० १,१,२१,५)"—इति निगमः ॥

(२१) अज्ञाः । अजतेः 'स्फायितञ्चिवञ्चि (उ० २,१२)'—इत्यादिना रक् । 'बाहुलकादार्द्धधातुके विकल्प इष्यते'—इति वैकल्पिकत्वात् वीभावाभावः । अजिरवदर्थः । "द्यौर्न भूमिं गिरयो नाज्ञान् (ऋ० सं० ८,१,२२,३)"—इति निगमः । 'अज्ञान् सत्वरान् शीघ्रान्'—इति भट्टभास्करमिश्रः ॥

(२२) साचीवित् । (२३) द्युगत् । (२४) ताजत् । त्रयो निपाताः । साचीविदित्यस्य निगमोऽन्वेषणीयः ॥ "अतस्त्वा गीर्भिर्द्युगदिन्द्रकेशिभिः (ऋ० सं० ६,६,३६,४)"—इति निगमः । अत्र माधवस्तु—'द्युगत् दीप्तिं द्युलोकं गच्छ हरिभिः'—इति चैतद्भाष्ये उक्तवान् । 'तूतुजानः तरणिः द्युगत्'—इति चिप्रनामसु द्युगच्छब्द स्तेनाप्यपाठि ॥ "ताजन्——मार्च्छति ( ? )"—"ताजत् प्रमीयते ( ? )"—इति निगमौ ॥

(२५) तरणिः । तरतेः 'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २, ९५)'—इत्यनि-प्रत्ययः । क्षिप्रवदर्थः । "विश्वी शमी तरणित्वेन वाघतः (ऋ० सं० १,७,२०,२)"—"तरणिर्विश्वदर्शतः (ऋ० सं० १,४,७, ४)"—इति निगमौ ॥

(२६) वातरंहा । 'वा गतिगन्धनयोः (अदा० प०)' । 'हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन् (उ० ३,८४)'—इति तन् । 'रमु क्रीड़ायाम् (भू० आ०)' ; 'रमेस्च [वेगे] (उ० ४,२०८)'—इत्यसुन्

रूगागमश्च। वातवत् रंहो यस्य सः। "वातरंहसो दिव्यासो अत्याः (ऋ० सं० २,४,२५,२)"—इति निगमः॥

इति षड्विंशतिः क्षिप्रनामानि॥ १५॥

**तळित्[1]। आसात्[2]। अम्बरम्[3]। तुर्वशे[4]। अस्तमीके[5]। आके[6]। उपाके[7]। अर्वाके[8]। अन्तमानाम्[9]। अवमे[10]। उपमे[11]। इत्येकादशान्तिकनामानि* ॥ १६॥**

(१) तळित्। 'तड आघाते' चुरादिः। 'ताडेर्णिलुक् च (उ० १,९५)'—इतीति-प्रत्ययः। "दूरे चित् सन्तळिदिवाति रोचसे (ऋ० सं० १,६,३१,२)"—"या नो दद्रे तळितो य अरातयः (ऋ० सं० २,६,३०,४)"—इति निगमौ॥

(२) आसात्। 'आस उपवेशने (अदा० आ०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)। अन्तिके आसते। "आ न इन्द्रो दूरादान आसात् (ऋ० सं० ३,६,३,१)"—"स नो दूराच्चासाच्च (ऋ० सं० १,२,२२,३)"—इति निगमौ। 'आसादित्यन्तिकनाम' —इति स्कन्दस्वामिभाष्यम्। 'आसादासेः'—इति माधवः॥

---

(१) "तळित्" ख. ग. घ।

(२) "आसा" ग. C. F।

(४) "तुर्वशः" घ।

(८) "अर्वाकः" घ।

* "इत्यन्तिकस्य" ग।

† निरु० ३, १०. "तळितः" ३, ११।

(३) अम्बरम्* 'ऋदगादयश्च'—इत्यरन्-प्रत्ययो मुगागमश्च निपात्यते । प्राप्यते ह्यासन्नम् । "यन्नासत्या परावति यद्वा स्थो अध्यम्बरे (ऋ० सं० ५,८,२७,४)"—इति निगमः । स्कन्दस्वामि-व्यतिरिक्तभाष्यकारमते । स्कन्दस्वामी तु 'अन्तरिक्षनाम'—इति ॥

(४) तुर्वशे† । व्याख्यातं मनुष्यनामसु (१८२पृ०) ॥ तूर्णं व्याप्यते अन्तिकम् । "यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे (ऋ० सं० १,४,२,२)"—इति निगमः ॥

(५) अस्तमीके । अस्त-शब्दे उपपदे मातेः 'अलीकादयश्च (उ० सं० ४,२५)'—इति वीकन्प्रत्ययो धातोर्लोपश्च निपात्यते । अस्तं प्राप्यते अस्मिन्, अन्तिकस्थं हि नाश्यते । "सचस्व नः पराक आ सचस्वास्तमीक आ (ऋ० सं० २,१,१७,४)"—इति निगमः॥

(६) आके‡ । (७) उपाके§ । (८) अर्वाके । आङुपार्वच्छ-ब्देषूपपदेषु क्रामतेः 'वलाकादयश्च (उ० ४,१४)'—इति आक-प्रत्ययो धातोर्लोपश्च निपात्यते । अर्वाक् गन्ता । आक्रम्यते उपक्र-म्यते गन्तृभिः । क्रम्यते च ह्यासन्नम् । "आके नियामो अहभि र्दविद्युतः (ऋ० सं० ३,७,२१,६)"—"सिन्धोरूर्मा उपाक (ऋ० सं० १,२,२३,१)"—"यन्नासत्या पराके अर्वाके अस्ति भेषजम् (ऋ० सं० ५,८,२२५)"—इति च निगमः ॥

(९) अन्तमानाम् । अन्तिकशब्दात्तमपि 'तमोदश्च'—इति

---

* पु० १, २ ।

† पु० २, २ ।

‡ प० २, २६ ।

§ निघ० ८, ११ ।

तादिलोपः। अन्तिकतमकन्तिमम्। "अर्यातं अन्तमागाम् (ऋ० सं० १,१,७,३)"—"पिता वस्वो अन्तमस्य (ऋ० सं० १,२,२२,५)"—इति निगमौ। आद्युदात्तमन्तिकम्, अन्तोदात्तन्तु तृतीया-बहुवचनम्;"अनो वयमन्तमाभिर्युञ्जानाः (ऋ० सं० २,३,२४,५)"—इति माधवः॥

(१०) अवमे। 'अव रक्षणादिषु (भू० प०)'। 'अवेस्र वा इति म-प्रत्ययः। गम्यते ह्यासन्नम्। "अग्ने बहूनामवमाय सख्यै (ऋ० सं० २,७,२४,२)"—"मध्यमस्यामवमस्यामुत स्थः (ऋ० सं० १,७,२७,५)"—इति निगमौ॥

(११) उपमे। उपपूर्वात् मिनातेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। उपच्छिद्यते ह्यन्तिकम्। "उपमे रोचने दिवः (ऋ० सं० ६,६,२,४)"—"अस्मादहत्यमुपमं स्वर्षाम् (ऋ० सं० १,४,२७,३)"—इति निगमौ॥

इत्येकादशान्तिकनामानि॥ १६॥

रणः(१)। विवाक्(२)। विखादः(३)। नदनुः(४)। भरे(५)। आक्रन्दे(६)। आहवे(७)। आजौ(८)। पृतनाज्यम्(९)। अभीके(१०)। समीके(११)। ममसत्यम्(१२)। नेमधिता(१३)। सङ्काः(१४)। समितिः(१५)। समनम्(१६)। मीळ्हे(१७)। पृतनाः(१८)। स्पृधः(१९)। मृधः(२०)। पृत्सु(२१)। समत्सु(२२)।

(१३) "नेमधितिः" ग. C. D. F।
(२१) "पृत्सुधः" ग. C D. F।
(२२) अस्यनन्तरं 'संयुगे(१९)"—इत्यध्याधिकमपरम् ग. C. D. F

समर्ये[२३] । समरणे[२४] । समोहे[२५] । समिथे[२६] । सङ्ख्ये[२७] । सङ्गे[२८] । संयुगे[२९] । सङ्गथे[३०] । सङ्गमे[३१] । वृत्रतूर्ये[३२] । पृक्षे[३३] । आणौ[३४] । शूरसातौ[३५] । वाजसातौ[३६] । समनीके[३७] । खले[३८] । खजे[३९] । पौंस्ये[४०] । महाधने[४१] । वाजे[४२] । अज्म[४३] । सद्म[४४] । संयत्[४५] । संवतः[४६] । इति षट्चत्वारिंशत् सङ्ग्रामनामानि* ॥ १७ ॥

(१) रणः† । 'अण रण क्वण शब्दार्थाः (भ्वा०प०)' । 'वशिरण्योरुपसङ्ख्यानम् (३,३,५८वा०)'—इत्यप् । 'रणन्ति दुन्दुभयोऽत्र योधा वा परस्परं शब्दायन्ते । यद्वा; रमतेः 'राज्ञामाग्नाम्नूणावीणाः (उ० ३,१३)'—इत्यादिना न-प्रत्ययो मकारलोपश्च निपात्यते । रमणीयो हि सङ्ग्रामो विचित्रकर्माधिष्ठानत्वात् । "मरुत्वाँ

(२५) "सम्मोहे" क-E. अनयोरन्यत्र ।
(२६) अस्त्येतत् "सद्म"—इत्यनन्तरम् ' समीथे"—इति ग. C. D. F ।
(२७) कातिरिक्ता-सर्वत्रैव "सङ्ख्ये" इति ।
(३०) ग. C. D. F. अस्त्येतत् "संयत्"—इत्यस्य पुरस्तात् ।
(३१) नास्त्येतत् ग. C. D. F ।
(३५) इतोऽनन्तरम् "प्रधने"—इत्यधिकम् ग. C. D. F ।
(४२) "अज्मन्" ग. C. F ।
(४४) "सद्मन" ग. C. F । "सद्मन्" D ।
(४५) "संयतः" ग. C. F ।
(४६) ' संवतम्" ग. ।

* "इति सङ्ग्रामस्य" ग ।

† निरु० ४, ८; ९, १७; १०, ४७ ।

इन्द्र वृषभोरणाय (ऋ० सं० ३,३,११,१)"—इति निगमः॥

(२) विवाक्। विविधा विरुद्धा वाचो यत्र योधानाम्। "हवन्त उ त्वा हव्यं विवाचि (ऋ० सं० ५,३,१४,२)"—इति निगमः॥

(३) विखादः। 'खद स्थैर्ये हिंसायाञ्च (भ्वा० प०)'। त्रिविधं स्थैर्यमत्र शूराणां हिंसनं वा। "तं विखादे सस्निमद्य श्रुतं नरम्। (ऋ० सं० ७,८,१४ ४)"—इति निगमः॥

(४) नदनुः। 'णद अव्यक्ते शब्दे (भ्वा० प०)'। 'अनुङ् नदेश्च (उ० ३,४९)'—इति चानुङ्-प्रत्ययः। "यदा कृणोषि नदनुं समूहसि (ऋ० सं० ६,७,३,४)"—इति निगमः॥

(५) भरे*। 'डु भृञ् धारणपोषणयोः (जु० उ०)'। 'नन्दि-ग्रहिपचादिभ्यः (३,१,१३४)' तत्र गणपाठः—'पच-वच-वप-वद-चल-तज-भराः'—इति। बिभर्त्ति पोषयति सुभटानां धैर्यं यशो वा। यद्वा; 'पुंसि सञ्ज्ञायां घः (३,३,११८)'। बिभ्रत्यनेन जय लक्ष्मीं योधाः। उभयत्रापि पृषोदरादेराकृतिगणत्वादाद्युदात्तत्वम् यद्वा; 'भृ भर्त्सने क्र्यादिः स्वादिश्च। भर्त्स्यन्ते हि तत्र शत्रवः। हरते र्वा भः। ह्रियन्ते हि तत्र योधाना मायूंषि धनानि च। 'हृग्रहो र्भश्छन्दसि (३,१,८४वा०)'। "अस्मिन् भरे नृतमं वाजसातौ (ऋ० सं० ३,२,४,७)"—"अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३,७,११,५)"—इति निगमौ॥

(६) आक्रन्दे। 'कदि क्रदि क्लदि आह्वाने रोदने च (भ्वा०

---

* निघ० ४, २४।

आ०)' । क्रन्दन्त्याह्वयन्तेऽन्योन्यमत्र, रुदन्ति वानेन बन्धुविनाशहेतुत्वात् । निगमोऽन्वेषणीयः ॥

(७) आहवे* । 'ह्वेञ् स्पर्द्धायाम् (भ्रू०उ०)' । 'आङि युद्धे (३,३,७३)'—इत्यप् । "बहुलं छन्दसि (६,१,३४)'—इति सम्प्रसारणञ्च । आह्वयन्तेऽत्र परस्परं स्पर्द्धया योधाः । "न कश्चन संहत आहवेषु (ऋ०मं०४,७,३०,१)"—इति निगमः ॥

(८) आजौ† । 'अज गतिक्षेपणयोः (भ्रू०प०)' । 'अज्यतिभ्याञ्च (उ०४,१२७)'—इति इण्-प्रत्ययः । बाहुलकाद् वी-भावाभावः । अजन्ति गच्छन्त्यत्र विजयश्रियं योद्धारः, कातराः पराभवं वा । एव मर्थो गत्यर्थेषु द्रष्टव्यः । क्षिप्यन्ते शस्त्राणि क्षिपन्त्याक्षिपन्ति वान्योन्यं वीर्यतारतम्यात् । * * * । "तेन वाजं सनिषदस्मिन्नाजौ (ऋ० मं०८,३,७,४)"—इति निगमः ॥

(९) पृतनाज्यम्‡ । पृतना-शब्दोपपदादजतेश्च अघ्न्यादित्वात् (उ०४,१०८) यत्-प्रत्ययः । पृतनानां सेनानामजनं यत्र । "गवां मुद्गलः पृतनाज्येषु (ऋ०मं०८,५,२१,३)"—इति निगमः ॥

(१०) अभीके§ । अभिपूर्वादेतेः 'अलीकादयश्च (उ०४,२५)' —इतीक-प्रत्ययो धातोर्लोपश्च निपात्यते । यद्वा; न विद्यते भीर्येषां ते अभीकाः । अभीकैः क्रियमाणत्वात् अभीकमित्युच्यते ।

* निघ० २, १७ । "आह्वावः" ५. २९ ।
† निघ० ९, २२ ।
‡ निघ० ९, २४ ।
§ प० २, २९ । निघ० २, २० ।

"पाहि वज्रिवो दुरितादभीके (ऋ० सं० १,८,२६,४)"—इति निगमः॥

(११) समीके। सं पूर्वोऽत्र 'एतिः। अभीकवत्। निगमोऽन्वेषणीयः॥

(१२) ममसत्यम्। मम सत्यं जयः इति योद्धृणां वाक्यविषयत्वान्ममसत्यमित्याचक्षते। पृषोदरादिः। "त्वां जना ममसत्येष्विन्द्र (ऋ० सं० ७,८,२२,४)"—इति निगमः॥

(१३) नेमधिता*। 'सुधितवसुधितनेमधितधिष्वधिषीय च (७,४,४५)'—इति नेमपूर्वाद्धधातेः त-प्रत्यये इत्वमिड़ागमो वा निपात्यते। नेमशब्दो दानपर्यायः। सप्तम्येकवचनस्याकारादेशः (७,१,३९)। "इन्द्रन्नरो नेमधिता हवन्ते (ऋ० सं० ५,३,११,१)"—"त्रिदन्मर्त्तो नेमधिता चिकित्वान् (ऋ० सं० १,५,१७,४)"—"नेमधिता न पौंस्या (ऋ० सं० ८,४,२८,१३)"—इति निगमाः॥

(१४) सङ्काः†। सचतेर्गतिकर्मणः * * * बाहुलकादङ्कप्रत्ययश्चिलोपश्च। यद्वा; संपूर्वात् किरतेः कृन्ततेर्वा 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। सङ्कीर्य्यन्तेऽत्र योद्धारः, सम्यक् कृत्यन्ते छिद्यन्ते वा आयुधैर्वा। "इषुधिः सङ्काः पृतनाश्च सर्वाः (ऋ० सं० ५,१,१९,५)"—इति निगमः॥

* "नेमः" प० ३, २९। निघ० ३. १०।
† निघ० ९. १४।

(१५) समितिः। सम्पूर्वादेतेः क्तिन्। "राजानः समिताविव (ऋ० सं० ८,.५,९,१)"—इति निगमः॥

(१६) समनम्*। 'सम ष्टम अवैक्लव्ये (भू० प०)'। समन्ति विक्लवा भवन्त्यस्मिन् प्रयोगः। * * *। "ज्या इयं समने पारयन्ती (ऋ० सं० ५,१,१९,३)"—इति, "वि या सृजति समने (ऋ० सं० १,४,४,१)"—इति च निगमौ॥

(१७) मीळ्हे†। "मीळ्हम्"—इति धननामसु व्याख्यातञ्च (२२४पृ०)। मीळ्हार्थत्वात् सङ्ग्रामोऽपि मीळ्हम्। यद्वा; मीळ्हमस्मिन्नस्तीति 'लुगकारेकाररेफाश्च (४,४,१२८वा०२)'—इति मत्वर्थीयस्य लुक्। "प्रधने"—इत्यपठितमपि सङ्ग्रामनाम। प्रकीर्णान्यस्मिन्निति आभरणरूपेण चूडामणिकटकविक्षेपात्। "स्वर्मीळ्हे नर आजा हवन्ते (ऋ० सं० १,५,५,१)"—इति निगमः। 'स्वर्मीळ्हे। स्वरित्युदकनाम। उदकार्थे सङ्ग्रामे आजौ अन्यस्मिन्नपि सङ्ग्रामे'—इति स्कन्दस्वामिभाष्यम्। "स जामिभिर्यत्समजाति मीळ्हे (ऋ० सं० १,७,१०,१)"—इति च॥

(१८) पृतनाः‡। 'पृङ् व्यायामे (तु० आ०)'। 'पृपूसां कित्'—इति तनन् प्रत्ययः। व्याप्रियन्तेऽत्र योद्धारः। "रणाय नियन्त्रम् पृतनासु शत्रून् ( ? )"—इति निगमः॥

(१९) स्पृधः। 'स्पर्द्ध सङ्घर्षे (भू० आ०)'। 'क्विब्वचिप्रच्छि-

* निघ० ९, १४; १८; ५०; ७, १७।

† पृ० २, १०।

‡ निघ० ९, २४।

(३,२,१७८वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः (३,२, १७८भा०)'—इत्युक्तेः क्विप्। पृषोदरादित्वात् रेफस्य ऋकारोऽलोपश्च। शसि स्पृधः। स्पर्द्धन्तेऽत्र परस्परं योद्धारः। "जयेम संयुधि स्पृधः (ऋ०सं० १,१,१५,३)"—इति निगमः। 'स्पृध इति सङ्ग्रामनाम, 'तत्करोति (३,१,२५वा.१२)'—इति णिजन्तात् क्विप्; सङ्ग्रामकारिण इत्यर्थः—इति स्कन्दस्वामिभाष्यम्॥

(२०) मृधः*। 'अमर्द्धन्ता सोमपेयाय देवा (ऋ०सं० ३,१, २५,४)'—'सिंहो न पातमम्रध्रम् (ऋ०सं० ३,१४,१)'—इत्यादौ 'मृधिर्हिंसार्थः'—इति स्कन्दस्वामि-भाष्यम्। तत्र पूर्ववत् क्विप् शस्। "अयं सुतः सुमखमा मृधस्कः (ऋ०सं० २,६,२१,४)"—"विन इन्द्र मृधो जहि (ऋ०सं० ८,८,१०,४)"—इति निगमौ॥

(२१) पृत्सु। पृतनाशब्दस्य सङ्ग्रामनामसु पठितोऽपि 'नासिका-पृतना-सानूनां नस्-पृत्-स्नवो वाच्याः (६,१,६३वा०)'—इति पृदादेशे विकृतत्वात् पुनःपाठः। "यमग्ने पृत्सु मर्त्त्यम् (ऋ०सं० १,२,२३,२)"—इति निगमः॥

(२२) समत्सु†। सम्पूर्वादत्तेः क्विप् सम्भक्षयन्ति योद्धृणामायूंषि। सम्पूर्वान्मदो हर्षे इत्यस्माद्वा क्विपि समो मलोपः। संहृष्यन्ति तत्र सुभटाः। "समत्सु त्वा हवामहे (ऋ०सं० ५,८,३६,३)"—"धन्वना तीव्राः समदो जयेम (ऋ०सं० ५,१,१९,२)"—इति निगमौ॥

* निरु० ७,२।
† निरु० ९,१७; १०।

(२३) समर्ये। मर्यशब्दो मनुष्यनामसु व्याख्यातः (१८०पृ०) मर्यैः मरणधर्मिभिः सह वर्त्तते; सहशब्दस्य स-भावः। "मास्मे तादृगपगूहः समर्ये (ऋ० सं० ७,७,१९,४)"—"तव स्वधाव इय-मासमर्ये (ऋ० सं० १,५,७,१)"—इति निगमौ॥

(२४) समरणे*। सम्पूर्वात् 'ऋ सृ गतौ (भ्वा०प०)' इत्यस्मात् ल्युट्। "मां नरः समरणे ह्वयन्ते (ऋ० सं० ३,७,१७,५)"—इति निगमः॥

(२५) समोहे। 'उहिर् दुहिर् अर्दने (भ्वा०प०)'। नञ्-पूर्वा-दुहे घञ्। सम्यगुह्यन्ते अर्द्यन्तेऽत्र मिथो योद्धारः। 'अभिगव ओहम् (ऋ० सं० १,४,२७,१)'—इत्यादौ वहेरिदं रूपमिति स्कन्दस्वामी। स च सम्पूर्वाद्वहेर्घञि पृषोदरादित्वात् सम्प्रसारणे लघूपधगुणः। समुह्यन्तेऽत्र रथादिना सुभटाः, सुभटैर्वा कवचानि। "समोहे वा य आशत (ऋ० सं० १,१,१६,१)"—इति निगमः। 'अन्तोदात्तं सङ्ग्रामनाम, मध्योदात्तं णमुलन्तम्'—इति माधवः। "इयर्त्ति रेणुं मघवा समोहम् (ऋ० सं० ३,५,२३,३)"—इति णमुलन्तम्॥

(२६) समिथे†। सम्पूर्वादेतेः 'समीणः (उ० २,१०)'—इति थक्। "यदन्यरूपः समिथे बभूथ (ऋ० सं० ५,६,२५,६)"—"स इन्महानि समिथानि मज्मना (ऋ० सं० १,४,१९,५)"—इति निगमौ॥

* निघ० ११, ८।
† निघ० ५, ८; ९, १०।

(२७) मह्ने। सम्पूर्वात् चक्षिङः 'अन्येष्वपि दृश्यते (३,२,१०१)' —इति डः, 'बहुलं सञ्ज्ञाच्छन्दसोः(२,४,५४वा०)'—इति ख्याञा-देशः; पृषोदरादित्वाद्यकारलोपः। सम्पूर्वश्रुतिर्वर्जनार्थः। सङ्ख्यते का-तरैः। यद्वा; सम्पूर्वात् अश्नातेः 'डिच्च'—इति ख-प्रत्ययः, टि-लोपेन धातुलोपः। समश्नुवतेऽस्मिन्नन्योन्यं योद्धारः। निगमोऽन्वेषणीयः॥

(२८) मङ्गे। सम्पूर्वाद् गमेर्डः 'अन्येष्वपि दृश्यते (३,२,१०१)" —इति डः, पूर्ववद् वा। "मङ्गे समत्सु वृत्रहा (ऋ०सं०८,७, २१,१)"—इति निगमः॥

(२९) संयुगे। 'युजिर् योगे (रु०उ०)', घञ्। उञ्छादिषु युगशब्दस्य पाठात् निपातनादगुणत्वम्; 'विशेषेऽसौ निपातनमि-ष्यते, कालविशेषे रथाद्युपकरणे च'—इति वृत्तिः। सङ्गता रथयुगा यस्मिन्। निगमोऽन्वेषणीयः॥

(३०) सङ्गथे। सम्पूर्वात् 'गूथ यूथ प्रोथ पृष्ठादयः'*—इति थ-प्रत्ययान्तो निपात्यते। "आ ये वामस्य सङ्गथे (ऋ०सं०२, ८,६,५)"—इति निगमः॥

(३१) सङ्गमे†। सम्पूर्वाद् गमेः 'ग्रहवृदृनिश्चिगमश्च(३,३,५८)' —इत्यप्। "जैत्रं यन्तो अनुमदाम सङ्गमे (ऋ०सं०१,७,१४,३)" —इति निगमः॥

(३२) वृत्रतूर्ये‡। वृत्रशब्दो मेघनाम, अत्रासुरः शत्रुवचनः। मेघनामसु व्याख्यातः (७२पृ०)। 'तुरि गतित्वरहिंसयोः (दि०

---

* कौमुदीपाठस्त्वेवम्— 'तिथपृष्ठगूथयूथप्रोथाः (उ० २, १२)" इति।
† निरु० १०, ३९।   ‡ पृ० १, १०।

आ०)', अन्नादित्वाद् (उ० ४,१०८)। वृत्रस्तूर्यतेऽनेनास्मिन् वा। "इन्द्रोऽवृणीत वृत्रतूर्ये ( ? )"—यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये ( ? )"—इति निगमौ* ॥

(३३) पृक्षे। 'पृची सम्पर्के (रु०प०)'। 'सुसूधागृधिभ्यः क्रन् (उ० २,२४)'—इति बाहुलकात् स-प्रत्ययो भवति। संपृच्यतेऽस्मिन् परस्परं योद्धारः। निगमोऽन्वेषणीयः† ॥

(३४) आणौ‡। 'अण रण क्वण शब्दार्थाः (भू०प०)'। 'अविशिविपलिघसिजम्यणिपनिभ्य इञ्'। रणवदर्थः। "त्वं सुष्णं वृजने पृक्ष आणौ (ऋ०सं०१,५,४,३)"—इति निगमः। 'आणौ इति सङ्ग्रामनाम'—इति स्कन्दस्वामि-भाष्यम् ॥

(३५) शूरसातौ§। 'शुः गतौ (सौत्रः)'—इत्यस्मात् 'शुसिचिमीनां दीर्घश्च (उ०२,२४)' इति रन्-प्रत्ययः। 'षणु दाने (त०उ०)'। 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च (३,३,९७)'—इति सनोतेः 'जनसनखनाम् (६.४,४२)'—इत्यात्वे कृते स्वरो निपात्यते। स्यते वा 'द्यतिस्यति (७,४,४०)' इतीत्वाभावश्च। शूराणां सातिः वेतनादानं मरणं वा येन। "यः शूरसाता परितक्म्ये (ऋ०सं०१,२,३३,१)"—इति निगमः ॥

* इमौ तु यत्नानुसन्धानेनाप्यस्माभिर्न लभ्येते, परं सन्त्येवास्य बहवो निगमा ऋग्वेदसंहितायाम्। तथाहि—"वृत्रतूर्ये" २, २६, २। ६, १६, १; १८, ६; २५, ५; ६१, ५। ८, २४; १९, २०; ७४, ९; १२। १०, ६६, ८; १०४, ९। "वृत्रतूर्येषु" १, १०६, २। ६, २४, ५। ८, ९७, १।

† ऋ० सं० १, ५, ४, ३. द्रष्टव्यः।

‡ निघ० ६, २९।

§ "शूरः" निघ० ४, १२।

(३६) वाजमातौ*। वाजोऽन्नं दीयते येन। "इन्द्र च नो भवत' वाजमातौ (ऋ० मं० १, ३, ५, ६)" इति निगमः॥

(३७) समनीके। 'अन प्राणने (अदा० प०)'। 'अनिहृषिभ्यां किच्च (उ० ४, १७)'—इति ईकन् प्रत्ययः। अनित्यनीकम्। यद्वा; नञ्-पूर्वान्नयतेः 'पिपीलिकादयश्च (उ० ४, २५)'—इति निपात्यते। न नीयते न चाल्यते अनीकम् सेनाविशेषः। सङ्गतान्यनीकानि यस्मिन्। "ओजः शत्रून्त्समनीकेषु जेता (ऋ० मं० ८, ६, ४, ५)"—इति निगमः॥

(३८) खलेौ। 'खज मन्थे (भू० प०)'। 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)'। व्यत्ययेन जकारस्य लकारः। मन्थ्यते हि योद्धारस्तत्र। 'स्खल सञ्चलने (भू० प०)'—इत्यस्माद्वा घः। व्यत्ययेन सकारलोपः। स्खलन्ति तत्र कातराः। "खले न पर्षान् प्रति हन्मि भूरि (ऋ० मं० ८, १, ६, २)"—इति निगमः॥

(३९) खजे। 'खज मन्थे (भू० प०)'। पूर्ववत् साध्योऽर्थश्च। "कर्मन् कर्मञ्छतमूतिः खजङ्करः (ऋ० मं० १, ७, १५, १)"—इति निगमः॥

(४०) पौंस्ये। बलनामसु व्याख्यातम् (२२० पृ०)। अभिवर्द्धते,नेन * * *। निगमोऽन्वेषणीयः॥

(४१) महाधने। 'मह पूजायाम् (भू० प०)'। 'वर्त्तमाने पृषद्वृहन्महज्जगच्छतृवच्च (उ० २, ७८)'—इति निपातनम्। धविः

* निरु० ९, ४४।
† निरु० २, १०।

प्रीणनार्थः (भू०प०)। इदित्वान्नुम्। पचाद्यच्। वकारस्लोपः, इकारस्याकारश्च पृषोदरादित्वात्। "धिनोतीति धनम् प्रीणयतीति सङ्ग्रामो यद्द्वारा। महच्चासौ धनश्च महाधनम्। महद्धनमर्थोऽनेनेति वा। "इन्द्रं वयं महाधने (ऋ०सं०१,१,१३,५)"— "नास्य वर्त्ता न तरुता महाधने (ऋ०सं०१,३,२१,३)"—इति निगमौ॥

(४२) वाजे*। वाज-शब्दो व्याख्यातो बलनामसु (२१५पृ०)। "इन्द्र वाजेषु नो अव (ऋ०सं०१,१,१३,४)"—"तं त्वा वाजेषु वाजिनम् (ऋ०सं०१,१,८,३)"—इति निगमौ॥

(४३) अज्म†। 'अज गतिक्षेपणयोः (भू०प०)'। मनिन्। "अग्निर्नादीदेक्षित इद्धो अज्मन्ना (ऋ०सं०१,७,१६,२)"—इति निगमः। 'यस्मिन्नटन्ते युद्धे वा'—इति माधवः॥

(४४) सद्म‡। सदेर्मनिन्। अत्रसाद्यन्तेऽच प्राणिनः। निगमोऽन्वेषणीयः॥

(४५) संयत्। सम्पूर्वात् यमेर्यतेर्वा औणादिकः क्विप्। यमेरनुनासिकलोपः तुगागमः। संयतन्ते संयच्छन्ति हयादीन्। "इळांश्च संयतं करत् (ऋ०सं०५,७,२,२)"। 'संयत् सङ्ग्रामः'—इति हरदत्तः। "आसुंयतमिन्द्रणः स्वस्तिम् (ऋ०सं०४,६,१४,५)"—इत्यत्र 'संयतं युद्धम्'—इति माधवः॥

* पु० २,७।
† पं० २,४। निघ० ४,११।
‡ पु० १,११।

(४६) संवतः। सम्पूर्वाद् वनेः सम्पदादित्वात् क्विप्, अनुनासिक-लोपे तुगागमः। संवननीयो हि युद्धैः सङ्ग्रामः। "परस्या अधि संवतः (ऋ०सं० ६,५,२६,५)"—"स संवतो नवजातस्तुतुर्यात् (ऋ०सं० ४,१,७,३)"—इति निगमौ॥

इति षट्चत्वारिंशत् सङ्ग्रामनामानि॥ १७॥

इन्वति[1]। नक्षति[2]। आक्षाणः[3]। आनट्[4]। आष्ट[5]। आपानः[6]। अशत्[7]। नशत्[8]। आनशे[9]। अश्नुतः[10]। इति दश व्याप्तिकर्म्माणः* ॥ १८॥

(१) इन्वति†। अत्र वधकर्मसु ऐश्वर्यकर्मसु च अनेकार्थत्वादिगति-कर्मादावुक्तमनुसन्धेयम्। 'इवि व्याप्तौ (भू०प०)'। "मघोनां योग-मिन्वति (ऋ०सं०१,१,३५,२)"—इति निगमः॥

(२) नक्षति‡। 'नक्ष णक्ष गतौ (भू०प०)'। "नक्षद्दाभंततुरिं पर्वतेष्ठाम् (ऋ०सं०४,६,१३,२)"—"वृद्धस्य चिद्वर्द्धतो द्यामि-नक्षतः§ (ऋ०सं०१,४,१०,४)"—इति निगमौ। 'इन्वति नक्षतीति व्याप्तिकर्मसु पठितस्य इकार आगमश्छान्दसः'—इति स्कन्दस्वामि-भाष्यम्॥

(२) "ननक्षे" ग. C. D. F।
(५) "आष्ठ" ग. "आष्टः" C F। "आष्ठः" D।
* "इति व्याप्तिकर्माणः" ग।
† पु० २, १४।
‡ पु० २, १४।
§ अवग्रहकारस्तु 'इमक्षत.'—इत्येकपदमाह।

(३) आघ्राणः* । अश्नोतेर्लेटि आनप्। 'सिब्बहुलं लेटि (३,१,३४)'—इति बाहुलकात् सिप्, उपधादीर्घत्व, व्रश्चादिषत्वे 'षढोः कः सि (८,२,४१)', 'आदेशप्रत्यययोः (८,३,५९)', षत्वम्। "आघ्राणे शूर वज्रिवः (ऋ० सं० ७,७,८,१)"—इति निगमः। भाष्यं द्रष्टव्यम् ॥

(४) आभट्† । 'णश अदर्शने (दि० प०)'। लुङि च्लेः 'मन्त्रे घसह्वरणश (२,४,८०)'—इति लुक्। संयोगान्तलोपे (८,२,२३), व्रश्चादिषत्वे (८,२,३६), जश्त्वम्। 'छन्दस्यपि दृश्यते (६,४,७३)'—इति आडागमः। "किमिच्छन्ती सरमा प्रेदमानट् (ऋ० सं० ८,६,५,१)"—"घर्मस्वेदेभिर्द्रविणं व्यानट् (ऋ० सं० ८,२,१६,१)"—इति निगमौ ॥ यद्वा; अश्नोतेर्लिटि णलि व्यत्ययेन णलोलुक्, व्रश्चादिना षत्वम्, 'झलां जशोऽन्ते (८,२,३९)', 'वावसाने (८,४,५६)'। "उपांशुना सममस्तत्वमानट् (ऋ० सं० ३,८,१०,१)"—इति निगमाः ॥

(५) आष्ट । अश्नोतेर्लुङि आत्मनेपदप्रथमपुरुषैकवचनम्। "आष्ट सविदार्थगाधम् ( ? )"—इति निगमः ॥

(६) आपानः‡ । 'आप्लृ व्याप्तौ (स्वा० प०)'। शानच्। अन्तते र्वधकर्मण 'तद्रूपम्'—इति स्कन्दस्वामी। "आपानासो विवस्वतः (ऋ० सं० ६,७,२४,५)"—इति निगमः। भाष्यं द्रष्टव्यम् (निरु० ३,१०) ॥

---

* निरु० ३, १० ।

† निरु० २, १८; ४, २२; ६, ८; ११, १९; २५; १२, १८।

‡ निरु० ३, १० ।

(७) अशत् । अश्नोते र्व्यत्ययेन लङि श्नः पूर्ववत् लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि (६,४,७५)'—इत्यड़भावः । निगमोऽन्वेषणीयः ॥

(८) नशत् । नशयतेर्लेटि 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)' । "प्र धीतये ते नशत् ( ? )" —"न किः शवांसि ते नशत् (ऋ० सं० ६,५,२,३)"—इति निगमौ ॥

(९) आनशे । अश्नोतेर्लिटि रूपम् । "न कि ष्टस्य आनशे (ऋ० सं० १,६,६,१)"—इति निगमः ॥

(१०) अश्नुते । "अतप्ततनूर्नतदामो अश्नुते (ऋ० सं० ७,३,८,१)"—"व्यश्नुहि तर्पया काममेषाम् (ऋ० सं० १,४,१८,४)" —इति निगमौ ॥

इति दश व्याप्तिकर्माणः ॥ १८ ॥

## दम्नोति[१] । अथति[२] । ध्वरति[३] । धूर्वति[४] । हूणाति[५] । हृश्वति[६] । क्षणवति[७] । कृन्तति[८] । श्वसिति[९] । नभते[१०] । अर्दयति[११] । स्तृणाति[१२] । स्नेहयति[१३] ।

---

(१) इतोनन्तरम् "स्नथति"—इत्यधिकम् ग ।
(२) "श्नथति" C. D. F ।
(७) "क्षणति" ग । "क्षणति" iid ।
(९) "श्वसति" ग. iid ।
(१०) "नभति" ग. iid ।
(११) "अर्दति" ग. iid. इतोऽनन्तरम् "मर्दति" इत्यधिकम् ।
(१२) नास्त्येतत् ग. iid ।
(१३) "स्नेहति" ग. iid ।

यातयति[14]। स्फुरति[15]। स्फुलति[16]। नि वपन्तु[17]।
अव तिरति[18]। वियातः[19]। आ तिरत्[20]। तळित्[21]।
आखण्डल[22]। द्रूणाति[23]। रम्णाति[24]। शृणाति[25]।
श्नाति[26]। तृणेळ्हि[27]। ताळ्हि[28]। नि तोशते[29]।
नि बर्हयति[30]। मिनाति[31]। मिनोति[32]। धमति[33]।
इति त्रयस्त्रिंशत् वधकर्म्माणः* ॥ १९ ॥

व्याप्तिकर्मसु शाकपूणेरतिरिक्ता एव "विव्याक:"-"ववक्षथाः"-"विप्रे"—इति स्कन्दस्वामी ॥

(१) दभ्नोति† । 'दम्भु दम्भे' स्वादिः (प०)। "न त्वा वेता आ दभ्नुवन्ति भूर्णयः (ऋ० सं० १,४,२०,२)"—इति निगमः ॥

(२) श्नथति‡ । श्नथ क्नथ क्रथ हिंसायाम् (भू० प०)'। श्नथद् वृत्र मुत सनोति वाजम् (४,८,२७,१)"—"नव पुरो नवतिं च श्नथिष्टम् (ऋ० सं० ५,६,२३,५)"—इति निगमौ ॥

(३) धूर्वति§ । 'तुर्व धुर्व दुर्व थुर्व हिंसार्थाः (भू० प०)' । 'उप-

(१४) "याचति" ग iid। "यावति" C।
(२४), (२५) इमे न स्त एव ग. C. D. F।
(२६) इतोऽनन्तरमित्थैव "मिमाति (३१)"—इति ग. C. D. F।
(२९) "नितोश्यति" ग. C. D. F। "नितोषते" घ।
(३०) "वर्हयति" F।
(३२) "जूर्वति"—इत्यधिकम् ग. C. D. F।
* "इतिवधकर्माणः" ग.।
† निरु० ५, १२।
‡ निरु० ९, २१; ११, ४०।
§ निरु० ९, ९।

धायाश्च (८,२,७८)'—इति दीर्घः। "धूरसि धूर्व धूर्वन्तं धूर्व (य० वा० सं० १,८)"—इति निगमः॥

(५) वृणक्ति। 'वृजी वर्जने' रुधादिः। "नि चक्रेण रथ्या दुष्पदा वृणक् (ऋ० सं० १,४,१६,४)"—इति निगमः॥

(६) वृश्चति*। 'ओव्रश्चू छेदने' तुदादिः। 'ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम्। 'वृश्चा मध्यं प्रत्यग्रं ग्रणीहि (ऋ० सं० ३,२,४,२)"—"वि वृश्च वज्रेण वृत्रमिन्द्रः (ऋ० सं० १,४,२८,५)"—इति निगमौ॥

(७) कृणति†। 'कृवि हिंसाकरणयोः (भू० प०)'। 'व्यत्ययेन 'धिन्विकृण्व्योरच (३,१,८०)'—इत्येतन्न भवति॥

(८) कृन्तति‡। 'कृती छेदने (प०)' तुदादिः। 'शेमुचादीनाम् (७,१,५९)'। "वि दस्यूँर्योनावकृतो वृथाषाट् (ऋ० सं० १,५,४,४)"—इति निगमः॥

(१०) नभते§। 'णभ तुभ हिंसायाम्' (भू०) आत्मनेपदी। "नभन्ता मन्यके समे (ऋ० सं० ६,७,२२,१)"—इति निगमः॥

(११) अर्दयति। 'अर्द हिंसायाम् (भू० प०)' आधृषीयः। "वृत्रं विपर्वमर्दयत् (ऋ० सं० २,५,६,१)"—इति निगमः॥

(१२) स्तृणाति। 'स्तृञ् आच्छादने' क्र्यादिः रुधादिश्च। "कदु वृत्रघ्नो अस्तृतम् (ऋ० सं० ६,४,४९,५)"—इति निगमः॥

---

* प० २, २०।
† निरु० ९, ११।
‡ निरु० २, ११।
§ निरु० १०, ५।

(१३) ह्लेडयति । 'ण्णिड ह्लेडने' चुरादिः । "यः श्रीर्हितीषु पूर्व्यः (ऋ० सं० १,५,२१,२)"—इति निगमः । 'ह्लेडयतिर्वधकर्मा' —इति स्कन्दस्वामी ॥

(१४) यातयति* । 'यति निकारोपस्कारयोः' चुरादिः । "अर्यातयन्त क्षितयो नवग्वाः (ऋ० सं० १,३,२,१)"—इति निगमः ॥

(१५) स्फुरति† । (१६) स्फुलति । 'स्फुर स्फुरणे', 'स्फुल सञ्चलने' तुदादिः, कुटादिः । "पदा क्षुम्पमिव स्फुरत् (ऋ० सं० १,६, ६,३)"—"आत्नी इमे विस्फुरन्ती अमित्रान् (ऋ० सं० ५,१,१९, ४)"—इति निगमः । 'स्फुरतीति वधकर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(१७) नि वपन्तु । 'डुवप बीजसन्ताने (भू० उ०)'—इत्यस्मात् लोट् । "अन्यन्ते अस्मन्निवपन्तु सेनाः (ऋ० सं० २,७,१८,१)" —इति निगमः ॥

(१८) अव तिरति‡ । तरतेर्लट् 'बहुलं छन्दसि (७,४,७८)' —इतीत्वम् "अवातिरज्ज्योतिषाग्निस्तमांसि (ऋ० सं० ४,५,११, १)"—"यदिन्द्र शारदो रवातिरः (ऋ० सं० २,१,२०,४)"—इति निगमौ ॥

(१९) वियातः§ । 'तच्च वियात इत्येतद् वियातयनइति विया-

---

* निघ० १०, २२ ।

† निघ० ५; १७; ९, ४० ।

‡ निघ० २, २१; ४, ७; १०, २५; ४०; ११, ६; ११, २०; २६; १२, २९ ।

§ निघ० २, १० ।

नयेति वा (निरु० ३,१०)'—इति भाष्ये स्कन्दस्वामी तस्य समाधिमर्थं व्याचष्टे—'वि पूर्वस्य यातयतेर्वा ये प्रत्यये वियातय इति भवति धारयः पारयः इतिवत्। तस्य सम्बोधनम् वियातयेति। त्रियातयितरिति वा पाठान्तरम्'—इति। धारय-पारयेति दृष्टान्त-प्रदर्शनेन 'व्यत्ययोबहुलम् (३,१,८५)'—इति अस्मादपि 'अनुपसर्गा-'ल्लिम्पविन्द (३,१,१३८)'—इति सूत्रेण श-प्रत्यय इति दर्शयति॥

(२०) आ तिरत्*। आङ् पूर्वात्तरते लङ् पूर्ववत् इलम्। "इन्द्रः पूर्भिरातिरत् दासमर्कैः ( ? )"—इति निगमः॥

(२१) तलित्†। अन्तिकनामसु व्याख्यातम् (२६४पृ०)॥

(२२) आखण्डलः‡। 'खड खडि कडि भेदे (प०)' चुरादिः। अस्मादाङ्पूर्वात् 'मङ्गेरलच् (उ० ५,७२)'—इति बाहुलकादलच्। "आखण्डल प्र हूयसे (ऋ० सं० ६,१,२४,२)"—इति निगमः॥

(२३) द्रूणाति। 'द्रू हिंसायाम्' क्र्यादिः। "हृत्वी मनु प्रमितिं द्रूणानः (ऋ० सं० ३,४,२३,१)"—इति निगमः॥

(२४) रम्णाति§। 'रमु क्रियायाम्' भ्वादिरात्मनेपदी ; व्यत्ययेन श्ना, परस्मैपदम्॥

(२५) शृणाति। 'शॄ हिंसायाम्' क्र्यादिः प्वादिश्च। "शृणाति वीळुरुजति स्थिराणि (ऋ० सं० ८,४,१५,१)"—इति निगमः॥

(२६) शम्नाति‖। 'शम उपशमे' दिवादिः। व्यत्ययेन श्ना।

* इहैव पुरस्तात् (१८)।
† पृ० १६।
‡ निरु० ३, १०।
§ निरु० २, १८; २५; १०, ९; ११।
‖ "शशमानः" पृ० २, १४; ४, ३। निरु० ६, ८।

"शिशिरं जीवनाय कम् (निरु० १,१०)"—इति निगमः। 'शिशिरं शृणातेः शम्नातेर्वा'—इति निरुक्तम् (१,१०)। 'शम्नातेः हिंसार्थस्य'—इति स्कन्दस्वामी ॥

(२७) दृणेढि। 'दृहि हिंसायाम्' रुधादिः। लटि तिपि * * * एकारभावः। निगमोऽन्वेषणीयः ॥

(२८) ताढि। 'तड आघाते' चुरादिः। लण्-मध्यमः। पृषोदरादित्वात् रूपसिद्धिः। "वि मन्यून्ताढि वि मृधो नुदस्व (ऋ० सं० ८,८,३८,२)"—इति निगमः ॥

(२९) नितोशते। तोशते नैरुक्तो धातुः। "मन्दी मदाय तोशते (ऋ० सं० ७,५,१२,४)"—"इन्दुरिन्द्राय तोशते नितोशते (ऋ० सं० ७,५,२१,११)"—"सुनासीरा हविषा तोशमाना: (?)"—इति निगमाः ॥

(३०) निबर्हयति। 'बर्हि हिंसायाम्' चुरादिः, निपूर्वः। "बर्हिष्यन्ते नि सहस्राणि बर्हयः (ऋ० सं० १,४,१६,१)"—इति निगमः ॥

(३१) मिनाति, (३२) मिनोति, (३३) धमति*। गतिकर्मसु व्याख्याताः (२४६ पृ०)। "न ता मिनन्ति मायिनो न धीराः (ऋ० सं० ३,४,१,१)"—"न मिनन्ति वेधसः ( ? )"—"उशिग्भ्यो नामिमीत वर्णम् (ऋ० सं० २,५,२४,५)"—इति मिनाते र्निगमाः। अत्र, 'मिनातिर्वधकर्मा'—इति स्कन्दस्वामी। "धात्रा वर्णं

---

* पृ० १४।

चरत आमिनाने (ऋ० सं० १,८,१,२)"—"उत द्विबर्हा अमिनः सहोभिः (ऋ० सं० ४,६,७,१)"—इति मिनोतेर्निगमौ। अमयोः, 'मिनोतिर्वधकर्मा'—इति स एव। "वि सुम्नरंश्मिरधमन्त्समांसि (ऋ० सं० ३,७,२६,४)"—इति निगमः॥

इति त्रयस्त्रिंशत् वधकर्माणः ॥ १९ ॥

दिद्युत्(१)। नेमिः(२)। हेतिः(३)। नमः(४)। पविः(५)। सृकः(६)। वृकः(७)। वधः(८)। वज्रः(९)। अर्कः(१०)। कुत्सः(११)। कुलिशः(१२)। तुञ्जः(१३)। तिग्मम्(१४)। मेनिः(१५)। स्वधितिः(१६)। सायकः(१७)। परशुः(१८)। इत्यष्टादश वज्रनामानि* ॥ २० ॥

(१) दिद्युत्† । 'द्युत दीप्तौ (भ्वा० आ०)' । 'द्युतिगमिजुहोतीनां द्वे च (३,२,१७८ वा० २)'—इति क्विपि द्वित्वे, 'द्युतिस्वाप्योः सम्प्रसारणम् (७,४,६७)'—इत्यभ्यासस्य सम्प्रसारणम् । द्योतते उज्ज्वलत्वात् । द्युतेर्वा क्विपि पृषोदरादित्वात् रूपसिद्धिः । द्यति शत्रून् । "अस्तुर्न दिद्युत्त्वेष प्रतीका (ऋ० सं० १,५,१०,४)"

---

(५) इतोऽनन्तरमित्येव "वज्रः (९)"—इति. ग ।
(७) नास्त्येतत् क पुस्तके ।
(१०) "अर्कः" ग. C. D. F।
(११) इतोऽनन्तरमित्येव "मेनिः (१५)"—इति ग ।
(१३) "तुञ्जः" कातिरिक्तेषु सर्वत्रैव ।
(१४) "तिग्म"—इति क ।
* "इति वज्रस्य" ग ।
† निरु० १०, ७ ।

—"यत्रा वो दि॒द्युद्रदति (ऋ० सं० २,४,२,१)"—"या ते॑ दि॒द्युदव॑सृष्ट (ऋ० सं० ५,४,१३,३)"—इति निगमाः ॥

(२) नेमिः । नयतेः 'नियोमिः (उ० ४,४३)'—इति मि-प्रत्ययः । नयति शत्रून् विनाशं, नीयन्तेऽनेन वा ऐश्वर्यात् । यद्वा; 'णमु प्रह्वत्वे (भ्व० प०)' । उत्सर्गाच्छन्दसि गमादिभ्यो दर्शनात् (३,२,१७१वा०)'—इति कि-प्रत्ययः । लिड्वद्भावाद् द्विर्वचने 'अत एकहल्मध्येऽनादेशादेर्लिटि (६,४,१२०)' अन्तर्णीतण्यर्थो नमिः । नमयति शत्रून् । "अरि॑ष्टनेमिं पृत॒नाज॑मा॒शुम् (ऋ० सं० ८,८,२६,१)"—इति निगमः ॥

(३) हेतिः* । हन्तेर्हिनोतेर्वा 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च (३,३,९७)'—इति क्तिनि हन्तेर्नकारस्यैत्वम्, हिनोतेर्गुणश्च निपात्यते । हन्यन्तेऽनेन शत्रवः, गम्यतेऽनेन जयः, वर्द्धते वैश्वर्यम् । "ब्रह्म॒द्विषे॒ तपु॑षिं हे॒तिं म॑स्य (ऋ० सं० ३,२,४,२)"—इति निगमः ॥

(४) नमः† । नमतेरसुन् । नेमिवदर्थः । निगमोऽन्वेषणीयः ॥

(५) पविः‡ । पवतिर्गतिकर्मा । 'अच इः (उ० ४,१३४)' । गन्ता शत्रून्, गम्यतेऽनेन यश इति च । "सृकं सं॑शाय॑ प॒विमि॑न्द्र ति॒ग्मम् (ऋ० सं० ८,८,२८,२)'—इति निगमः । सृकतिग्मशब्दावत्र क्रियाशब्दौ ॥

* निघ० ६, २; ९, १५ ।
† निघ० ४, १५ ।
‡ पु० १, ११

(६) सृकः। 'सृ गतौ (भ्वा० प०)'। सृवृभूशुषिमुषिभ्यः कक् (उ० ३,३९)—इति क-प्रत्ययः। दर्शितनिगमः (ऋ० सं० ८,८, ३८,२)॥

(७) वृकः*। 'वृक आदाने (भ्वा० आ०)' इगुपधलक्षणः कः (३,१,१२५)। आदत्ते शत्रुप्राणान्। वृणोतेर्वा के पृषोदरादित्वात् (६,३,१०९) रूपसिद्धिः। हेतिवदर्थः। निगमोऽन्वेषणीयः॥

(८) वधः†। 'जनिवध्योश्च (७,३,३५)'—इति वृद्धि-प्रतिषेधः। हेतिवदर्थः। "वृत्रस्य यद् भृष्टिमता वधेन (ऋ० सं० १,४,१४, ५)"—"इन्द्रो अस्या अववधर्जभार (ऋ० सं० १,२,३७,४)"—इति निगमौ॥

(९) वज्रः‡। 'व्रज गतौ (भ्वा० प०)'। 'ऋज्रेन्द्र (उ०,२,२९)'—इत्यादिना रन्-प्रत्ययान्तो निपात्यते। यद्वा: वृणक्तेर्हेतुमण्यन्तात् रक्, गुणे, प्राप्तस्य रेफस्य लोपः। वर्जयति प्राणैः शत्रून्। अन्ये वर्जयतिमेव विनाशार्थमाहुः विनाशयति शत्रून्। "त्वष्टास्मै वज्रं स्वर्यन्ततक्ष (ऋ० सं० १,२,२६,२)"—इति निगमः॥

(१०) अर्कः§। 'अर्च पूजायाम् (भ्वा० प०)'। 'कृदाधारार्चिकलिभ्यः कः (उ० ३,३८)'—इति क-प्रत्ययः। 'चोः कुः (८,२,३०) "इन्द्रः पूर्भिदातिरद्दासमर्कैः (ऋ० सं० ३,२,१५,१)" — इति निगमः॥

* पृ० ३, २४. ४, २। निरु० ५, १०. ६, २६. ११, ४४।
† पृ० ९।
‡ निरु० ३, ११।
§ पृ० ७।

(११) कुत्सः*। कृन्तते:। 'कृतॄस्विदन्त्यृषिभ्यः कित् (उ० ३, ६२)'-इति स-प्रत्ययः। कृन्ततेरकारस्य बाहुलकादुत्वम्। कृन्तति शत्रून्। यद्वा; 'कुत्स अवक्षेपणे' चुरादिरात्मनेपदी। पचाद्यच्। कुत्सयत्यनेन शत्रून्। "महो दस्यून् प्र [illegible] कुत्सेन (ऋ० मं० [illegible] २)"—इति निगमः। [illegible]॥

(१२) कुलिशः†। [illegible]— इति स्कन्दस्वामी। [illegible]— [illegible] पसर्गे कः (३.२,३)', [illegible]। [illegible] शब्दोपपदादन्तर्णीतण्यर्थात् 'शदॢ शातने (भ्वा० तु०)'—[illegible] 'अन्येष्वपि दृश्यते (३.२,१०१)'-इति डः, पूर्ववदिकारः। मेघस्यान्तं पर्वतस्य वा समुच्छिन्ना: प्रदेशाः कुलानीव, तेषां शातनात्। "स्कन्धांसीव कुलिशेना विवृक्णाहिः (ऋ० मं० १,२,३६,५)"—इति निगमः॥

(१३) तुजः। तुजेः पचाद्यच्। हेतिवदर्थः। निगमोऽन्वेषणीयः‡॥

(१४) तिग्मम्§। 'तिज निशाने' चुरादिः। 'युजिरुचितिजां कुश्च (उ० १,१४२)'—इति मक्प्रत्ययः कुत्वञ्च। तिज्यते तीक्ष्णीक्रियते। 'तिग्मं तेजतेरुत्साहकर्मण: तीक्ष्णदृशायुधं योद्धारमुत्साह-

* निघ० २, ११।

† प० ४,२। निघ० ६, १०।

‡ तुजमे ऋ० मं० ४, २, २, ७।

§ निघ० १०, ६।

यति तिग्मयातनः'—इति माधवः। "वि तिग्मेन वृषभेणा पुरोऽभेत् (ऋ० सं० १,३,३,३)"—इति निगमः॥

(१५) मेनिः*। मन्यतेः कान्तिकर्मणः 'उत्सर्गतश्छन्दसि गमादिभ्यो दर्शनात् (३,२,१७१भा०)'—इति कि-प्रत्ययः। नेमिवत् प्रक्रिया। काम्यते हि आयुधम्। यद्वा; 'मिञ् हिंसायाम् (क्या० उ०), 'वीज्याज्वरिभ्यः (उ० ४,४८)'—इति बाहुलकात् नि-प्रत्ययः। हेतिवदर्थः। निगमोऽन्वेषणीयः† ॥

(१६) स्वधितिः‡। स्व-शब्दोपपदात् 'धि धारणे (तु० प०)'—इत्यस्मात् क्तिन्। स्वं धनं धीयतेऽनेन। "न स्वधितिर्वनन्वति (ऋ० सं० ६,७,१२,४)"—इति निगमः॥

(१७) सायकः। 'षोऽन्तकर्मणि (दि० प०)'। ण्वुल् वृद्धौ 'आतो युक् चिण्कृतोः (७,३,३३)'। शत्रूणामन्तकरः। 'षिञ् बन्धने (क्या० उ०)'—इत्यस्माद्वा ण्वुल्। बध्नाति स्थिरीकरोति तद्वत् ऐश्वर्यादि। "पुरीषिणं सायकेना हिरण्ययम् (ऋ० सं० ८,१,५,५)"—"न सायकस्य चिकिते जनासः (ऋ० सं० ३,२,२३,३)"—इति निगमौ॥

(१८) परशुः। 'शॄ हिंसायाम् (क्या० प०)'। 'आङ्परयोः खनिशॄभ्यां डिच्च (उ० १,३२)'—इति कु-प्रत्ययः। डित्त्वाट्टिलोपः। 'परान् शृणातीति परशुः'—इति दण्डनाथवृत्तिः। 'परान् श्यतीति

* पृ० १, ११।

† निघ० १, १५।

‡ ऋ० सं० १०, ७, ११, ११. द्रष्टव्यः।

परशुः'—इति चीरस्वामी। तत्र मृगय्वादित्वात् (उ० १, ३६) कुः। "भिनत्ति मनं परशुरस्वायसम् (ऋ० सं० ८, १, १४, ३)"—"अभीदु वृक्षः परशुर्यथावनम् (ऋ० सं० ५, ७, ९, १, ४)"—इति निगमौ॥

इत्यष्टादश वज्रनामानि॥ २०॥

## इरज्यति[1)]। पत्यते[2)]। क्षयति[3)]। राजतीति चत्वार ऐश्वर्य्यकर्म्माणः* ॥ २१॥

(१) इरज्यति†। कण्ड्वादिः। "यएकश्चर्षणीनां वसूना मिरज्यति (ऋ० सं० १, १, १४, ४)"—"मूहो नृम्णस्य धर्मणामिरज्यसि (ऋ० सं० १, ४, १९, ३)"—इति निगमौ॥

(२) पत्यते। नैरुक्तधातुः। दिवादौ 'तप ऐश्वर्ये वा' इत्यस्य स्थाने 'पत ऐश्वर्ये' इति केचित् पठन्ति। * * *। "उग्रं शवः पत्यते धृष्ण्वोजः (ऋ० सं० ३, २, १९, ४)"—"द्युतद्यामानियुतः पत्यमानः (ऋ० सं० ४, ८, ५, ४)"—इति निगमौ॥

(३) क्षयति‡। "सेदु राजा क्षयति चर्षणीनाम् (ऋ० सं० १, २, ३८, ५)"—इति निगमः॥

(४) राजति§। 'राजृ दीप्तौ (भ्रू० उ०)' स्वरितेत्। "धियोवि-

---

(३) "क्षियति" ग। पु० २, १४।
* 'इत्यैश्वर्यकर्माणः'' ग।
† प० २, ५।
‡ निरु०—"क्षयन्तम्" ४, ९. "क्षयः" ८, १८।
§ निरु० १९, ४६।

श्रा वि राजति (ऋ० मं० १,१,६,२)"—"राजन्तमध्वराणाम् (ऋ० मं० १,१,२,३)"—इति निगमौ॥

इति चत्वार ऐश्वर्यकर्माणः॥ २१॥

## राष्ट्री (१)। अर्य्यः (२)। नियुत्वान् (३)। इनइन (४) इति चत्वारीश्वरनामानि*॥ २२॥

राष्ट्री†। राजतेरैश्वर्यकर्मणः (निघ० २,२१,४)। 'ष्ट्रन्, सर्वधातुभ्यः (उ० ४,१५४)'—इति ष्ट्रन् प्रत्ययः। व्रश्चादिना (८,२,३६) षत्वम्। षित्त्वात् ङीष् (४,१,४१)। "राष्ट्री देवानां निषसाद मन्द्रा (ऋ० मं० ६,७,५,४)"—इति निगमः॥

(२) अर्यः‡। 'ऋ गतौ (भ्वा० प०)'—इत्यस्मात् ण्यति प्राप्ते 'अर्यः स्वामिवैश्ययोः (३,१,१०३)'—इति यन्निपात्यते। गम्यते हि सर्वैरीश्वरः। "समर्यो गा अजति यस्य वष्टि (ऋ० मं० १,३,१,१)"—"मंहिष्ठो अर्यः सत्पतिः (ऋ० मं० ६,१,२५,६)"—इति निगमौ॥

(३) नियुत्वान्§। नियुच्छब्दो व्याख्यातो 'नियुतो वायोः' इत्यत्र (१५५पृ०)। नियुतोऽश्वाः ताभिस्तद्वान्। 'तसौ मत्वर्थे १,४,१९)'—इति भ-संज्ञाया विधानाज्जश्त्वं न भवति। "अतो नो यज्ञमवसे नियुत्वान् (ऋ० मं० ४,७,१२,५)"—इति निगमः॥

---

* "इतीश्वरस्य" ग।

† निघ० ११, २८।

‡ निघ० ५, ९।

§ निघ० ५, २८। 'नियुत्' पृ० १, १५। "नियुतः" प० २, १०. य० वा० सं० १७, २।

अस्य स्थाने "पतिः"—इति* केचित् पठन्ति । तत्र 'पा रक्षणे (अदा० प०)', 'पातेर्डतिः (उ० ४,५७)'। रक्षिता ह्मीश्वरः । 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु० ४,२१) अत्र पातेर्ण्यन्ताद् बाहुलकात् डतिः रूपसिद्धिश्च स्कन्दस्वामिना उक्तः । "अग्निर्न् वाजानां पते (ऋ० सं० १,२,२७,२)"—इति निगमः ॥

(४) इनः† । एतेः सम्भाजनार्थे वर्त्तमानात् समुपसर्गार्थविशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३,२)'—इति नक्प्रत्ययः। अर्थस्तु 'तत्रेन इत्येतत्सनितः (निरु० ३,११)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तः । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० सं० २, ३,१८,१)"—इति निगमः ॥

इति चत्वारीश्वरनामानि ॥ २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने
द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

अपस्तुङ्मनुष्याआयत्यग्रुर्वीवश्रम्यन्ध्आर्वयत्येजोमुधमध्रारेऊतेहेऊैवर्त्ततेनुतछिद्रणाइन्वतिदस्मोतिद्विद्युदिरज्यतिराष्ट्रीतिद्वाविंशतिः‡ ॥

इति निघण्टौ द्वितीयाध्यायः समाप्तः§ ॥ २ ॥

* निरु० १०, २१ ।
† निरु० ३, ११ ; १२ । "इनसमः" निरु० ११, २१ ।
‡. § २५९ पृष्ठस्थाः ' †, ‡ ' -एतच्चिह्नद्वययुता टीकापङ्क्त्योऽद्रष्टव्याः ।

## अथ तृतीयाध्यायः ।



उरु(१)। तुवि(२)। पुरु(३)। भूरि(४)। शश्वत्(५)। विश्वम्(६)। परीणसा(७)। व्यानशिः(८)। शतम्(९)। सहस्रम्(१०)। सलिलम्(११)। कुविदिति(१२) द्वादश बहुनामानि*॥ १ ॥

(१) उरु† । उर्विति पृथिवीनामेति उरुशब्दो व्याख्यातः । आच्छाद्यते ह्यनेनाल्पम् । "उरुं नो लोकमनु नेषि विद्वान् ... " — "उरुं सदद्रुणस्कृधि (ऋ० सं० ६, ५, २६, १)"—इति निगमः ॥

(२) तुवि‡ । तवतिर्वृद्ध्यर्थः । सौत्रो धातुः । 'अच इः (उ० ४, १३४)' । वृद्धिर्हि बहुः । "तुविजाता उरुक्षया (ऋ० सं० १, १, ४, ४)"—इति निगमः ॥

(३) पुरु§ । पृणातेः 'पृभिदिव्यधिगृधिधृषिभ्यः (उ० १, २३)'—इति कु-प्रत्ययः । 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उत्त्वम् । पुरुरेव बहुः । "पुरुभुजा चनस्यतम् (ऋ० सं० १, १, ५, १)"—इति निगमः ॥

(११) 'सरिरम्" ग. C. D. F ।

* "इति बाह्वोः" ग ।

† पु० १, १ ।

‡ निरु० "तुविष्मा" ६, २२; "तुविजाता" १२, २१ ।

§ निरु०—"पुरुधा" ९, १९; "पुरुत्रा" १०, २४; "पुरुरवः" ११, २९; "पुरुवर्पः" ११, २१; "पुरुपः" १, १९; ९, ७; ८, २१; 'पुरुपाद्" ९, ६; "पुरूरवम्" १०, ४६ ।

(४) भूरि*। भवतेः 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४,६५)' —इति क्रिन्-प्रत्ययः। भवति तत् सर्वस्यानुग्रहदा। "यत्र गावो भूरिशृङ्गा अयासः (ऋ० सं० २,२,२४,५)"—इति निगमः॥

(५) शश्वत्†। 'टु ओ श्वि गतिवृद्ध्योः (भ्वा० प०)'। 'संश्चत्तृप-द्वेहत् (उ० २,७९)'—इत्यादिना द्विर्वचनम्, अभ्यासवकारेकारस्याकारो डित्त्व माद्युदात्तत्वञ्च निपात्यते। परिवर्द्धते गम्यते वा। "अहं धनानि सञ्जयामि शश्वतः (ऋ० सं० ८,१,५,१)"—"यच्चिद्धि शश्वता तना (ऋ० सं० १,२,२१,१)"—इति निगमौ॥

(६) विश्वम्‡। (७) परीणसा§।

(८) व्यानशिः। वि-पूर्वादश्नोतेः 'उत्सर्गतस्कन्दषि गमादिभ्यो दर्श-नात् (३,२,१७१ भा०)'—इति किः। द्वित्वम्। अत आदेः अश्नो-तेश्च। विविधं व्याप्नोति। "व्यानशिः पवसे सोमधर्मभिः (ऋ० सं० ७,३,१२,५)"—इति निगमः॥

(९) शतम्¶। 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (५,१,५९)'—इति दशदशांशभावस्त च निपात्यते। "दशदशतः" इति निरुक्तम् (३,१०)। निपातनसामर्थ्यात् बहुमात्रेऽपि वर्त्तते। "वाजयामः शतक्रतो (ऋ० सं० १,१,८,४)"—इति निगमः॥

* निघ० २, ७; ६, २२; ११, २१; "भूरिदावन्" ६, ९; "भूरिधारा" ५, २; "भूरिशृङ्गा" २, ७।

† निघ० १, ५; ४, १६।

‡ निघ० ३, २२; ५, २४; ६, १२; २६; ८, १४; ९, १५; १०, ४; ११; १४; १७; २४; ४२; ४६; ११, २७; २८, ४१; १२, ९; ११; १२; १५; १७; २६; २७; ३०; ३३; ४०; ४२।

§, ऋ० सं० ४, १, २, १ निगमो द्रष्टव्यः। ¶ निघ० ३, १०।

(१०) सहस्रम्* । सहो बलनामसु व्याख्यातम् (११२,२१८ पृ०)। रोमत्वर्थीयः। अस्यापि भाविनी शक्तिरस्मिन्नस्ति। "सहस्राक्षरा परमे व्योमन् (ऋ० सं० २,३,२२,१)"—इति निगमः ॥

(११) सलिलम्। व्याख्यातमुदकनामसु (१००पृ०)। गम्यते हि जलवत्। "अप्रकेतं सलिलं सर्वमा इदम् (ऋ० सं० ८,७,१७,३)"—इति निगमः। 'सलिलमिति बहुनाम। सलिलं कुविदिति पाठात्'—इति स्कन्दः ॥

(१२) कुवित्† । निपातोऽयम्। "कुवित् सोमस्यापामिति (ऋ० सं० ८,६,२६,२)"—इति निगमः ॥

इति द्वादश बहुनामानि ॥ १ ॥

**ऋहन्(१)। ह्रस्वः(२)। निघृष्वः(३)। मायुकः(४)। प्रतिष्ठा(५)। कृधु(६)। वम्रकः(७)। दभ्रम्(८)। अर्भकः(९)। क्षुल्लकः(१०)। अल्प(११) इत्येकादश ह्रस्वनामानि‡ ॥२॥**

(१) ऋहन्। 'रुह बीजजन्मनि (भ्वा० प०)'—'रह त्यागे (भ्वा०

---

* निघ० ७, ०१।

† निघ० ४, १५।

(१) "रिहम्" ग. C. F। "ऋहम" D। "ऋहत्" च।

(२) इतोऽनन्तरम "वृषभः" इत्यधिकम् ग. D। तत्रापि "विषमः" इति पाठः C. F।

(६) "क्षुधुकः" ग. C. F। "ऋधुकः" D।

(८) "दहरकः" ग. C. F। "दंहरकः" D।

(१०) नास्त्येतत् ग. C. D. F।

(११) "अल्पकम्" ग, iid।

‡ "इति ह्रस्वस्य" ग।

प०)' । अनयोः 'संसृजन्मदृहेरदित्यादयः* (उ० २,७८)'—इति रेफस्य सम्प्रसारणम्, इति-प्रत्ययः, अद्दवद्भावश्च निपात्यते । तत्र, दण्डनाथवृत्तिः—'आदिग्रहणाद्दृहदियदित्यादयो भवन्ति'—इति । आ ह्रियते हि ह्रस्वो वृत्तादिः, त्यज्यते वा दीर्घार्थिभिः । "ह॒न्त चिद्र॒हते र॑न्ध्रयानि (ऋ० सं० ७,७,२१,३)"—इति निगमः ॥

(२) ह्रस्वः† । 'सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अतन्त्रे'—इति वन्-प्रत्ययान्तो निपात्यते । ह्रसतिः शब्दार्थे पठितः, तथाप्यत्र न्यूनार्थे वर्त्तते । "नमो॑ ह्र॒स्वाय॑ च वाम॒नाय॑ च (य० वा० सं० १६,३०)"—इति निगमः ॥

(३) निघृष्वः । 'घृषु सङ्घर्षे (भ्रू० प०)' । अत्र न्यूनार्थः । इगुपधलक्षणः कः । ह्रस्ववदर्थः । निगमोऽन्वेषणीयः ॥

(४) मायुकः‡ । 'डु मिञ् प्रक्षेपणे (क्र्या० उ०)' । 'कृवापा (उ० १,१)'—इत्युण् । स्वार्थे कः । प्रक्षिप्यतेऽनायासेन । निगमोऽन्वेषणीयः ॥

(५) प्रतिष्ठा । प्रतिपूर्वात् तिष्ठतेर्न्यूनार्थात् 'घञर्थे कविधानम् (३,३,५८वा०)'—इति बाहुलकात् कर्त्तरि कः । प्रतितिष्ठति । निगमोऽन्वेषणीयः§ ॥

(६) कृधु¶ । 'कृती छेदने (तु० प०)' । 'पृभिदिव्यधिगृधिधृषि-

* कौमुदीपाठस्तु "संश्चत्कृन्महदेवत्"—इत्येव ।
† निघ० ३, १२ ।
‡ "प्रमायुक" निघ० ३, ५ ।
§ ऋ० सं० ४, ३, १, ७ निगमोऽद्रष्टव्यः ।
¶ निघ० ६, २ ।

षिभ्यः (उ० १,२ ३)'—इत्यादिना बाहुलकात् कु-प्रत्ययस्तकारस्य धकारश्च। 'नि हन्तमिव हि तद् भवति ह्रस्वत्वादेव'—इति स्कन्दस्वामी। "यो अस्कृधोयुरजरः स्वर्वान् (ऋ० सं० ४,६,१३,३)"—इति निगमः॥

(७) वम्रकः*। 'टु वम उद्गीरणे (भ्वा० प०)' न्यूनार्थः। 'स्फायितञ्चिवञ्चि (उ० २,१२)'—इत्यादिना बाहुलकाद्रक्। ततः स्वार्थे कः (५,३,८७)। "वम्रकः पड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८,५,१५,६)"—इति निगमः। "स्ववानो वम्रो विजघान सन्दिहः (ऋ० सं० १,४,१०,४)"—इत्यत्र 'वम्रः ह्रस्वनामैतत् द्रष्टव्यम्। स्वार्थिक-क-प्रत्ययान्तो ह्रस्वनामसु पठितम्'—इति स्कन्दस्वामी॥

(८) दभ्रम्†। दभतिर्न्यूनार्थः। 'स्फायितञ्चिवञ्चि (उ० २,१२)—इति रक्। 'नेड् वशि कृति (७,२,८)'—इतीत्व-प्रतिषेधः। "दभ्रं पश्यद्भ्य उर्विया विचक्ष्व (ऋ० सं० १,८,१,५)"—इति निगमः॥

(९) अर्भकः‡।

(१०) क्षुल्लकः। क्षुधं लाति। 'आतोऽनुपसर्गे कः (३,२,३)'। स्वार्थे कः। 'क्षुधं लाति क्षुल्लकः'—इति क्षीरस्वामी। "नमो महद्भ्यः क्षुल्लकेभ्यश्च क्षुल्लका शिपिविष्टका ( ? § )"—इति निगमः॥

(११) अल्पः। 'अलं भूषणपर्याप्तिवारणेषु'। 'अलितलिभ्यो ड्-

* निघ० ५, ३।

† प० २९। निघ० ३, २०।

‡ प० २९। निघ० ३, २०; ४, १५। "मघवद्भ्यार्भकेभ्यश्च युवभ्यो नमः (य० वा० सं० १६,२६)"—इति निगमः॥

§ कथ० सं० २, ५, ११, ५ द्रष्टव्यः।

तृपाभ्य: प:'*—इति प:। "अल्पा एनं पशवो मुञ्चन्त उपतिष्ठेरन् ( ? )"—इति निगमः ॥

इत्येकादश ह्रस्वनामानि ॥ २ ॥

महत्[1] । ब्रध्नः[2] । ऋष्वः[3] । बृहत्[4] । उक्षितः[5] । तवसः[6] । तविषः[7] । महिषः[8] । अभ्वः[9] । ऋभुक्षाः[10] । उक्षाः[11] । विहायाः[12] । यह्वः[13] । ववक्षिथ[14] । विवक्षसे[15] । अम्भृणः[16] । माहिनः[17] । गभीरः[18] । ककुहः[19] । रभसः[20] । व्राधन्[21] । विरप्शी[22] । अद्भुतम्[23] । बंहिष्ठः[24] । बर्हिषदिति[25] पञ्चविंशतिर्महन्नामानि† ॥ ३ ॥

(१) महत्‡ । 'मानेनान्यान् जहातीति शाकपूणि र्मंहनीयो भवतीति वा (निरु० ३,१ ३)'—इति भाष्यम् । 'मानेन स्वगुणेन परिमाणेन अन्यान्, यदपेक्ष्य तस्य महत्त्वं, तान् जहाति अतिक्रामति

* नैतत् कौमुद्यां दृश्यते । तत्र तु 'पानीविषिभ्यः प (उ० ३, २१)'—इति

(१) "महः" ग. C. D. F।

(४) "तुचः" ग. iid ।

(१९) "ककुहस्तिमा" ग. iid ।

(२१) "व्राधम्" ग. "व्राधत्" घ. ।

(२३) "अद्भुतः" ग. iid ।

(२४) "बर्हिष्ठः" ग. iid ।

(२५) "बर्हिषि" ग. iid ।

† "इति महतः" ग।

‡ पृ० ९, १२ ।

मानशब्दात् जहातेश्चेति शाकपूणिः। निर्वचनलाघवात् मंहतेः पूजा-कर्मणो वदत्याचार्यः'—इति स्कन्दस्वामी। उभयत्रापि 'वर्त्तमाने पृषद्बृहन्महत् (उ० २,७८)'—इत्यति-प्रत्यये निपातनाद्रूपसिद्धिः। "म॒हत्तदु॒ल्बं स्थवि॑रं॒ तदा॑सीत् (ऋ० सं० ८,१,१०,१)"–इति निगमः॥

(२) ब्रध्नः। व्याख्यातमश्वनामसु (१४६ पृ०)। बध्नाति स्वगुणैः सर्वान् वेतनदानेन भृत्यादीन्। "यु॒ञ्जन्ति॑ ब्र॒ध्नम॑रु॒षं चर॑न्तम् (ऋ० सं० १,१,११,१)"—इति निगमः॥

(३) ऋष्वः*। 'ऋष गतौ (तु० प०)'। 'सर्वनिघृष्व (उ० १, १५२)'–इति वन्-प्रत्ययो गुणाभावश्च निपात्यते। गम्यते हि महान् सर्वैः गतो वा भूमिम्। इमावर्थौ गत्यर्थेषु बोद्धव्यौ। 'ऋषिर्दर्शनात् (निरु० २,११)'—इति भाष्यादपि दर्शनार्थः। दर्शनीयो हि महान् "ऋ॒ष्वा ते॑ इन्द्र॒ स्थवि॑रस्य बा॒हू (ऋ० सं० ४,७,३१,३)"—इति निगमः॥

(४) बृहन्†। 'बृहि वृद्धौ (भ्वा० प०)'। 'वर्त्तमाने पृषद्बृहन्महत् (उ० २,७८)'—इति निपातनम्। परिवृद्धं भवति हि महत्त्वं, वर्द्धतेऽस्मिन्नैश्वर्यादि, वर्द्धतेऽनेन समाश्रितः। वृद्ध्यर्थश्चैवमर्थो बोद्धव्यः। "बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ (ऋ० सं० २,५,१९,६)"—"उ॒रो ऋ॒ष्वस्य॑ बृ॒हतः (ऋ० सं० १,२,१७,४)"—इति निगमौ। उरोर्ऋष्वस्येत्यत्र 'ऋष्वस्य महन्नाम, बलवतः, बृहतः एतदपि महन्नामैव।

---

* निरु० ७, ६।

† प० ३०। निरु० १, ७; २. २५; ४, १९; ८, ११, ९, ८; २९; "बृहती" ७, १२; "बर्हिषः" ११, ४९।

वेगसम्बन्धेन न च पुनरुक्तिः । महतः वेगेन शीघ्रस्येत्यर्थः'—इति स्कन्दस्वामिभाष्यम् ॥

(५) उक्षितः । 'उक्षतिर्वृद्ध्यर्थः'—इति स्कन्दस्वामी । निष्ठाया मिड़ागमः । निगमोऽन्वेषणीयः ॥

(६) तवसः* । तवतिर्वृद्ध्यर्थः । 'अत्यविचमितमिनमिरभिलभिनभिनपिपतिपनिपणिमहिभ्योऽसच् (उ० ३,११३)' । "रजस्तुरं तवसं मारुतं गणम् (ऋ० सं० १,५,८,२)"—"तन्त्वा गृणामि तवसमतव्यान् (ऋ० सं० ५,६,२५,५)"—इति निगमौ ॥

(७) तविषः† । तवतेरेव । 'तवेर्णिद्वा (उ० १,४८)'—इति टिषच्-प्रत्ययः । "सानु गिरीणां तविषेभिरूर्मिभिः (ऋ० सं० ४, ८,३०,२)"—इति निगमः ॥

(८) महिषः‡ । महतेः 'अविमह्योष्टिषच् (उ० १,४५)' । महदर्थः । यद्वा ; महतेः क्विप्, सप्तम्येकवचनम् ; सदेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति ड-प्रत्ययः ; 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इति अलुक् ; 'सुषामादिषु च (८,३,९८)'—इति षत्वम् । महि महति स्थाने सीदन्नास्ते महिषः । "महिषासो मायिनश्चित्रभानवः (ऋ० सं० १,५,७,२)"—इति निगमः ॥

(९) अभ्वः§ । व्याख्यातमुदकनामसु (८९ पृ०) । आ समन्तात्

* निघ० ५, ९ ।
† निघ० २, २४ ।
‡ निघ० ७, २९ ।
§ पृ० १, १० ।

भवतीति कीर्त्तिमत्त्वात्। यद्वा; भवतेः सत्तार्थात् प्राप्त्यर्थाद्वा नञ्-पूर्वात् 'नञि भुवोऽड्ित्'—इति क्वन्-प्रत्ययः। न भवत्यनेनोपद्रवोऽस्मिन्निति वा न प्राप्यते लेशैः। "न ये वातस्य प्र मिनन्त्यभ्वम् (ऋ०सं०१,२,१४,१)"—"आ यो नो अभ्व ईषते (ऋ०सं१,३,१९.३)"—इति निगमौ॥

(१०) ऋभुवः*। 'ऋ गतौ (भ्व०प०)'। 'ऋत्तेर्भुक्किनक्'—इति भुक्किनक्-प्रत्ययः। 'पथिमथ्यृभुक्षामात् (७.१.८५)', 'इतोऽत् सर्वनामस्थाने (७.१.८६)'। उरु त्रिताणि भाति, ऋतेन सत्येन यज्ञेन वा भाति भवति वा, ऋभुः। मेधावी महत्स्थानं वा। उरुशब्दादुपपदाद् भातेर्भवतेर्वा 'मृगय्वादयश्च (उ०१,३६)'—इति कु-प्रत्ययः। पूर्वपदस्य उवर्णटिलोपः सम्प्रसारणञ्च निपात्यते। क्षयतेरैश्वर्यकर्मणः क्षियतेर्वा 'वृतेश्छन्दसि (उ०४,१३६)'—इति बाहुलकादिनि टिलोपश्च। ऋभूणां क्षयति ईष्टे, ऋभौ महति स्थाने निवसति वा। "त्वमृभुक्षानर्यस्त्वं पाट् (ऋ०सं०१,५,४.३)"—इति निगमः॥

(११) उक्षा†। उक्षतेर्वृद्ध्यर्थात् 'श्वन्नुक्षन्पूषन् (उ०१,१५५)'—इति कन्-प्रत्ययान्तो निपात्यते। निगमोऽन्वेषणीयः॥

(१२) विहायाः‡। 'वहिहाधाञ्भ्यश्छन्दसि (उ०४,२१५)'—इति जहातेर्जिहीते र्वा बाहुलकात् युगभावेऽपि युगागमो निपात्यते।

* निघ० ९, ३।
† निघ० १०, ९।
‡ निघ० ४, २४; १०, २१।

ऋष्वादृष्वादृर्या इविहाया:(ऋ० सं० २,१,४,१)"—इति निगमः॥

(१३) यक्षः*। यजतेः 'ग्रेवयक्षजिह्वाग्रीवाप्वामीवा (उ०१, १५२)'—इति वन्-प्रत्ययो जकारस्य क्षकारश्च निपात्यते। यजते देवपूजादिकं करोति। यद्वा; 'यसु प्रयत्ने (दि०प०)'; 'यसोश्च' —इति क्सन्-प्रत्ययः'—इति भोजदेवः। यस्यति प्रयत्यते ग्रनुलाञ्ज-यादो। 'यक्ष इति महतो नामधेयम्; यातश्च ह्नश्च भवति'—इति (निरु० ८,८) भाष्ये 'यातश्चामावाह्वनश्च वार्थिभिः, ह्नश्चाश्चौ ग्ररणार्थिभिः; द्विधातुजत्वं दर्शितम्'-इति स्कन्दस्वामी। ततोऽत्र यातेर्ह्वयतेश्च 'गेहे कः (३,१,१४४)'—इति बाहुलकात् भूते क-प्रत्ययो ह्वयतेः सम्प्रसारणाभावश्च। "प्रवा यक्षं पुरूणाम् (ऋ० सं० १,३,८,१)—इति निगमः॥

(१४) ववक्षिथ†। (१५) विवक्षसे‡। 'तत्र ववक्षिथ विवक्षस इत्येते (निरु० ३,१३)'—इत्यादिभाष्ये अनयोराख्यातयोर्महन्नामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना। ववक्षिथेत्यत्र 'मन्यनः (८,४,७९)"—इतीत्वाभावः, एकवचनस्य स्थाने बहुवचनम्, चकारात् परस्याकारस्येत्वञ्च व्यत्ययेन। "अतिविश्वं ववक्षिथ (ऋ० सं०१,६,१,५)"—"शीरं पावकशोचिषं विवक्षसे (ऋ० सं० ७,७, ४,१)"—इति निगमौ॥

(१६) अभ्वः। अमतेः क्विप्। बिभर्त्तेः 'इणसिञ्जिदि (उ० ३.२)'—इत्यादिना बाहुलकात् न-प्रत्ययः। "पिशङ्गभृष्टिमम्भृ-

* पृ० १, १२।

†, ‡ निरु० ३, १३।

णम् (ऋ०मं०२,१,२२,५)"—इत्यत्र 'अभ्यूणवा महतः अध्वा हेतुभूतां'—इति स्कन्दस्वामी ॥

(१७) माहिनः। महतेः। 'महेरिनण् च (उ०२,५३)'—इति इनण्-प्रत्ययः। "प्रयो न हर्मि स्तोमं माहिनाय (ऋ०मं०१, ४,२७,१)"—इति निगमः ॥

(१८) गभीरः*। वाङ्नामसु व्याख्यातम् (७८पृ०)। प्रतिष्ठितोमहति स्थाने निपद्यते। "उरुव्यचा वरिमता गभीरम् (ऋ०मं०१,७,२६,२)"—इति निगमः ॥

(१९) ककुहः। 'ककु सहने'। 'ककेरुहः'—इति उह-प्रत्ययः। सहते अभि भवति शत्रून्, सहते क्षमतेऽपराधान् वा। "वृष्यन्ते वां ककुहासः (ऋ०मं०१,३,३३,३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी ॥

(२०) रभसः†। 'रभ राभस्ये (भ्वा०आ०)'। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ०३,११२)'। रभते महान्ति कर्माणि, संरभ्ये वा शत्रुषु। "अर्धं न वृका रभसासो अद्युः (ऋ०मं०८,५,३,४)"—इति निगमः ॥

(२१) ब्राधत्। बन्धातेः 'मह्वद्बृहन्महद्धद्दित्यादयः (उ०२,७९)'—इतीति-प्रत्ययः आ आगमश्च निपात्यते। "स ब्राधतो नहुषो दंसुजूतः (ऋ०मं०२,१,२,४)"—इति निगमः ॥

* पृ०१,११।
† "आरभम्" निघ० १०,२१

रपणं विरपणं तदस्यास्ति वा। मंहि मह: इत्यनुवर्त्तमानत्वात्। विर-
प्शी गोमती मही (ऋ० मं० ८,१,१६,३)"—इत्यादीकारान्तो-
पादानं सन्देहनिवृत्त्यर्थम्। "क्रत्वे अपिबो विरप्शीन् (ऋ० मं० ४,
७,१२,२)"—"विरप्शिन वज्रिणे शन्तमानि (ऋ० मं० ४,७,४,
१)"—इति निगमौ।

(२३) अद्भुतम्†। 'भू सत्तायाम् (भ्वा० प०)'। 'अदि भुवो-
डुतच् (उ० ५,१)'। 'अदित्याश्चर्यार्थोऽव्ययम्'—इति क्षीरस्वामी।
तत्र सम्पूर्वाद् बिभर्त्तेर्वा बाहुलकात् डुतच्-प्रत्यये समोऽभावश्च।
सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्त्याश्रितेनेति वा। "सद-
सस्पतिमद्भुतम् (ऋ० सं० १,१,३५,१)"—"वषट्कृतस्याद्भुतस्य
दस्रा (ऋ० सं० १,२,२२,४)"—इत्यत्र 'महन्नामाद्युदात्तः स्याद-
थाश्चर्यभूतेऽन्तोदात्तः स्वरः'—इति माधवः। "तन्न स्तुरीपमद्भुतम्
(ऋ० सं० २,२,११,४)"—इति निगमः॥

(२४) बंहिष्ठः। 'बहि महि वृद्धौ (भ्वा० आ०)'। 'लंघिबंह्योर्न-
लोपश्च (उ० १,२८)'—इति बहुपदम्; तत इष्ठन्-प्रत्ययः। 'बंहते
बंहुलं मत्वर्थीयः'—इति क्षीरस्वामी। अतिशयेन बहुलो बंहिष्ठः।
'प्रियस्थिरस्फिरोरुबहुल (६,४,१५७)'—इत्यादिना बंहादेशः।

* निघ० ६, २१।
† निघ० १, ६; ६, २१।

णम् (ऋ॰मं॰२,१,२२,५)"—इत्यत्र 'अभ्यूणस्य महतः फलस्य हेतुभूता'—इति स्कन्दस्वामी ॥

(१७) माहिनः। महतेः। 'महेरिनण् च (उ॰२,५३)'—इति इनण्-प्रत्ययः। "प्रयो न हर्मि स्तोमं माहिनाय (ऋ॰मं॰१, ४,२७,१)"—इति निगमः॥

(१८) गभीरः*। वाङ्नामसु व्याख्यातम् (७८पृ॰)। प्रतिष्ठितामइति स्थाने लिप्यन्ते। "उरुव्यचा वरिमता गभीरम् (ऋ॰ मं॰१,७,२६,२)"—इति निगमः॥

(१९) ककुहः। 'ककु महने'। 'ककेरुहः'—इति उह-प्रत्ययः। महते अभि भवति शत्रून्, महते क्षमतेऽपराधान् वा। "वृच्यन्ते वां ककुहासः (ऋ॰मं॰१,३,३४,३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः†। 'रभ राभस्ये (भ्वा॰आ॰)'। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ॰३,११३)'। रभते महान्ति कर्माणि, संरब्धे वा शत्रुषु। "अधेनं वृका रभसासो अद्युः (ऋ॰मं॰८,५,३,४)"—इति निगमः॥

(२१) बाधत्। बन्धातेः 'सश्चत्तृम्पद्वेहदित्यादयः (उ॰२, ७९)'—इतीति-प्रत्ययः आ आगमश्च निपात्यते। "स ब्राधतो नहुषो दंसुजूतः (ऋ॰मं॰२,१,२,४)"—इति निगमः॥

* पु॰१,११।
† "आरभम्" निरु॰१०,२१।

(२२) विरप्शी*। 'रप लप व्यक्तायां वाचि (भू०प०)' वि-पूर्वः। 'रपस्तक्नाम्यभिकुभ्योऽशक्'—इति बाहुलकात् शक्। विविधं रपतीति विरप्शाः स्तोतारः, तेऽस्य सन्ति इति विरप्शी। यद्वा; विविधं रपणं विरपणं तदस्यास्ति वा। महि महः इत्यसुन्नन्तपाठश्च। विरप्शी गोमती मही (ऋ०सं०२,१,१६,३)"—इत्यादीकारान्तोपादानं सन्देहनिवृत्त्यर्थम्। "काले अपिबो विरप्शीन् (ऋ०सं०४, ७,१२,२)"—"विरप्शिने वज्रिणे शन्तमानि (ऋ०सं०४,७,४, १)"—इति निगमौ।

(२३) अद्भुतम्†। 'भू सत्तायाम् (भू०प०)'। 'अदि भुवो-डुतच् (उ०५,१)'। 'अदित्याश्चर्यार्थोऽव्ययम्'—इति चीरस्वामी। तत्र सम्पूर्वाद् बिभर्त्तेर्वा बाहुलकात् डुतन्-प्रत्यये समोऽभावश्च। सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्याश्रितेनेति वा। "सदसस्पतिमद्भुतम् (ऋ०सं०१,१,३५,१)"—"वषट्कृतस्याद्भुतस्य दस्रा (ऋ०सं०१,२,२२,४)"—इत्यत्र 'मद्भुतमाद्युदात्तः स्याद-चाश्चर्यभूतेऽन्तोदात्तः स्वरः'—इति माधवः। "तन्नं स्तरीपमद्भुतम् (ऋ०सं०२,२,११,४)"—इति निगमः॥

(२४) बंहिष्ठः। 'बहि महि वृद्धौ (भू०आ०)'। 'लंघिबंह्योर्नलोपश्च (उ०१,२८)'—इति बहुपदम्; तत इष्ठन्-प्रत्ययः। 'बंहते बहुलं मत्वर्थीयः'—इति चीरस्वामी। अतिशयेन बहुलो बंहिष्ठः। 'प्रियस्थिरस्फिरोरुबहुल (६,४,१५७)'—इत्यादिना बंहादेशः।

* निघ० ६, २१।
† निघ० ३, ६; ६, २१।

यद्वा ; 'निचुलवञ्जुलवकुलकूलपृथुलमूलविमलमूलादयः'—इति बंहेरुलच्प्रत्ययो नलोपश्च निपात्यते। अन्यत् पूर्ववत्। "युद्धेषु बंहिष्ठ' नाति विधेसुदानू (ऋ० सं० ४,४,३१,३)"—इति निगमः॥

(२५) बर्हिषत्*। 'वृह वृहि वृद्धौ (भू०प०)'। 'वृंहेर्नलोपश्च (उ० २,१०२)'—इति इसि-प्रत्ययः। बर्हिः-शब्द उपपदे सतः 'सत्सूद्विष (३,२,६१)'—इत्यादिना क्विप्। पृषोदरादित्वाद्बर्हिषः सकारलोपः। सुषामादित्वात् (८,३,९८) षत्वम्। यद्वा; 'अनिते (८,३,१९)'—इति। 'सर्वधातुभ्यः (उ० ४,११४)'—इति इन्। अन्यत् पूर्ववत्। परिवृद्धे स्थाने स्यादति हि महान्। निगमोऽन्वेषणीयः॥

॥ इति पञ्चविंशतिर्महन्नामानि॥ ३॥

**गयः(१)। कृदरः(२)। गर्तः(३)। हर्म्यम्(४)। अस्तम्(५)। पस्त्यम्(६)। दुरोणे(७)। नीळम्(८)। दुर्याः(९)। स्वसराणि(१०)। अमा(११)। दमे(१२)। कृत्तिः(१३)। योनिः(१४)। सद्म(१५)। शरणम्(१६)। वरूथम्(१७)। छर्दिः(१८)। छदिः(१९)। छाया(२०)। शर्म्म(२१)। अज्मेति(२२) द्वाविंशतिर्गृहनामानि† ॥ ४ ॥**

---

* "बर्हिः" पु० १, ३।

(८) इतोऽनन्तरमिच्छैव "नीरम् (८)"—इति C. D. F।

(६) "पस्त्यम्" iid.

(७) "दुरोणे" A।

(१५) इत्यैव "शर्म"—इति ग. C. D. F।

(२१) "वर्म्म"—इति ग. iid.

† "इति गृहाणाम्" ग।

(१) गयः* । व्याख्यातमपत्यनामसु (१७४पृ०) । गम्यते वासाय, गच्छत्यनेन सुखम् । गत्यर्थेष्वेवमर्थोबोद्धव्यः । गीयते स्तूयते स्वाप्यातिशयेन, अवन्त्यस्मिन् स्थिता देवा इति च । "अरं-चक्राय गय्यम् (ऋ०सं० १,५,२१,२)"—इति निगमः ॥

(२) कृदरः† । 'कृती छेदने (तु०स०प०)' । 'कृदगादयश्च (उ० ५,४४)'—इति अरन्-प्रत्ययोगुणाभावश्च तकारस्य दकारश्च निपात्यते । कृत्यते छिद्यतेऽनेन क्लेशः, परिच्छिन्नं वा सुशास्त्रमर्यादया । यद्वा ; 'दृङ् आदरे (तु०आ०)' । 'ग्रहवृदृनिश्चिगमश्च (३,३,५८)'—इत्यप् । कृतादर आदरोऽत्र कृत-दरः । पृषोदरादित्वात् (६,३,१०९) त-शब्दलोपः । निगमोऽन्वेषणीयः ॥

(३) गर्त्तः‡ । 'गॄ शब्दे (क्र्या०प०)' स्तुतिकर्मा वा । 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् (उ० ३,८३)'—इति तन्-प्रत्ययः । शब्द्यते तस्मिन् स्तूयते वा । निगमोऽन्वेषणीयः ॥

(४) हर्म्यम् । 'हृञ् हरणे (भ्वा०उ०)' । 'मध्यविध्यशिक्य ( ? )'—इति क्यन्-प्रत्ययो मुडागमो गुणश्च निपात्यते । हरति अनुह्रियते आह्रियतेऽत्र धान्यादि । यद्वा ; 'अम द्रम हम्म मीमृ गतौ (भ्वा०प०)' । अघ्न्यादित्वाद् (उ०४,१०८) यक्-प्रत्ययः । "मन्योरियाय हर्म्येषु तस्थौ (ऋ०सं० ८,३,४,४)"—इति निगमः ॥

* पु० ०, २ ।
† प० ०, २९ निरु० २, १० ।
‡ निरु० ३ ५ ।

(५) अस्तम्*। 'अम् भुवि (अदा० प०)', 'अम गतिदीप्त्यादानेषु (भू० उ०)', 'अस क्षेपणे (दि० प०)'। 'हसिमृग्रिण्वामि (उ० ३, ८३)'-इति बाहुलकात् तन्। द्वितीयैकवचनं भवत्यङ्गनमस्तं दीप्यते हि तत्। आदीयते स्वीक्रियते वा तदर्थिभिः, क्षिप्यन्तेऽस्मिन् पदार्था इति वा। "अस्तं न गावो नक्षन्त इद्धम् (ऋ० मं० १ ५, १०,५)"—इति निगमः। "तमग्निमस्ते वसवो न्यृण्वन् (ऋ० मं० ५.१,२ ३,२)"—इति च॥

(६) पस्त्यम्†। 'मध्यविध्य ( ? )'-इत्यादिनौणादिकः क्यप्, नुगागमश्च निपात्यते। पमन्त्यस्मिन्। यद्वा; 'पत्ल्ट गतौ (भू० प०)'। निपातनात् सकार उपजनः। 'पस्त्या पसेः सङ्गत्यर्थे वा'—इति माधवः। "बृहतः पस्त्या अस्वा (ऋ० मं० १,२,१ ७,५)"—"प्रप्र दाश्वान् पस्त्याभिरस्थित (ऋ० मं० १,४,२१,२)"—इति निगमौ। 'पस्त्यमिति गृहनाम। अजादित्वात् (४,१,४) टाप्'—इति स्कन्दस्वामी॥

(७) दुरोणे‡। 'गन्नामास्ना'-इत्यादि-भोजसूत्रे आदिग्रहणात् दुरोणादयः'—इति वृत्तिः। दुःपूर्वात् अवतेर्नकि इटि गुणः। 'दुरोण इति गृहनाम। दुःखाभवन्ति दुस्तर्पाः (निरु० ४,५)'-इति भाष्ये दुःशब्द-पूर्वस्यावते रक्षणार्थस्य तर्पणार्थस्य वा ल्युटि छान्दसत्वात् सम्प्रसारणम्, आद्गुणश्च। गृहादयो दुःखाभवन्ति दुस्तर्पा इति पर्यायेणास्यार्थकथनम्'-इति स्कन्दस्वामी। "जुष्टोदमूना अतिथिर्दुरोणे(ऋ० मं० ३,

* निघ० १२, १८।
† "पस" निघ० ५, ६१।
‡ निघ० ४, ५; ८, ५।

८,१८,५)"—"मध्ये निषत्तोरण्वो दुर्योणे (ऋ०सं० १,५,१३,२)"—इति निगमौ ॥

(८) नौळम्। 'व्याडक्रोडकुहोडादयः'—इति उडच् प्रत्ययः, प्रत्ययादेर्लोपो गुणाभावश्च निपात्यते। नीयन्तेऽत्र पदार्थाः, नयति सुखनिःश्वसनमिति वा। "आ द्यो मरुः पुरः सनादनौळः (ऋ० सं० ८,१,१७,१)"—इति निगमः।

(९) दुर्याः*। 'दुर्वी हिंसार्थौ (भू०प०)'। 'अघ्न्यादित्वाद् यत्प्रत्यये वकार-लोपे दीर्घाभावश्च निपात्यते। हिंसन्ति मीनाति हि तं दुःखम्। यद्वा; दुःशब्दपूर्वात् यातेः 'घञर्थे क-विधानम् (३,३,५८,वा० २)'—इति कः। 'दुःखेन प्राप्यन्ते, दुरः ग्रहद्वाराणि अर्हन्तीति वा दुर्या गृहा उच्यन्ते'—इत्युवटः। "अवीरहा प्र चरा सोम दुर्यान् (ऋ०सं० १,६,२२,४)"—इति निगमः॥

(१०) स्वसराणि†। व्याख्यातमहर्नामसु (५६पृ०)। स्वेन स्वननेन स्त्रियते प्राप्यते रश्मिर्गृहवतोऽज्ञातिभिः स्त्रियते, सुष्ठु अस्यन्ते वास्मिन् पदार्थाः। निगमोऽन्वेषणीयः॥

(११) अमा‡। 'अम गतिभक्षशब्देषु (भू०प०)'। 'पुंसि सञ्ज्ञायां घः प्रायेण (३,३,११८)'। गम्यन्तेऽस्मिन् भक्ष्यन्ते शब्द्यन्ते वा। यद्वा; निपातोऽयम्। "अमात्यम् (ऋ०सं० ५, २,२०,१)"—इत्यत्र, उवटः—'अमा गृहवचनः सहवचनो वा।

* पृ० १ १०।
† पृ० १, ९।
‡ निरु० ५, १; ११, ४९।

अव्ययात् त्यप् तत्र भव इत्यर्थे। गृहे मत्याज्ञा भवति "अमात्याः"—इति। "मा नो अमा सो अरणे नि पातु (ऋ० मं० ८, ७, ५, ०)"—"अमा मते वहसि भूरिनामम् (ऋ० मं० २, १, ८, २)"—"अमाजूरिव पित्रोः सचामती (ऋ० मं० ०, ६, २०, ०)"—इति निगमाः॥

(१२) दमे*। 'दम उपशमने (दि० प०)'। घञ्। 'नोदात्तोपदेशस्य (७, ३, ३४)'—इति वृद्धि-प्रतिषेधः। शाम्यतेऽनेन शीतादि, दान्तः क्लेशः। "वर्द्धमानं स्वे दमे (ऋ० मं० १, १, २, ३)"—"इस्कर्तारं दमेदमे (ऋ० मं० ३, ५, ६, ३)"—इति निगमौ॥

(१३) कृत्तिः†। 'कृती छेदने (तु० रु० प०)'। क्तिन्। छदिर्वदर्थः। निगमोऽन्वेषणीयः॥

(१४) योनिः‡। व्याख्यातमुदकनामसु (१, १२ पृ०)। मिश्र्यतेऽनेन सुखम्, पृथग्भूयन्तेऽनेनानिष्टा इति, परिवीता वा प्राकारादिना जायेव। "जायेव योनावरं विश्वस्मै (ऋ० मं० १, ५, १०, ३)"—इति निगमः॥

(१५) सद्म§। सदेर्मनिन्। सीदत्यस्मिन्। "सद्मेव धीराः सम्माय चक्रुः (ऋ० मं० १, ५, ११, ५)"—इति निगमः। 'सद्म गृहनाम'—इति स्कन्दस्वामी॥

"वर्म" इति केचित् पठन्ति। वृणोतेर्मन्। व्रियते तेन, सम्भज्यते वा गृहिभिः। निगमोऽन्वेषणीयः॥

* निरु० ४, ४।
† प० ४, २। निरु० ५, २२।
‡ पृ० १, १२।
§ पृ० १, १२।

(१६) शरणम्। शृणातेः 'युच् बहुलम् (उ० २,७४)'—इति युच्। शृणाति शीतादि-क्लेशम्, रक्षितवान् वा क्लेशेभ्यः 'शरिः प्राप्त्यर्थः'—इति माधवः। प्राप्यते हि तत्। "तोदस्येव शरण आ महस्य (ऋ० सं० २,२,१८,१)"—इति निगमः॥

(१७) वरूथम्। 'वृञ् वरणे (स्वा० उ०)'। 'जॄवृञ्भ्यामूथन् (उ० २,५)'। वर्मवदर्थः। "भद्रा वरूथं शृणुते विभावो (ऋ० सं० १,४,२४,४)"—इति निगमः॥

(१८) छर्दिः। 'छर्द सन्दीपने (चु० प०)'। 'अर्चिशुचि-हुसृपिछादिछर्दिभ्य इसिः (उ० २,१०१)'। सन्दीप्यते शालया। "प्रणो यच्छतादवृकं पृथु छर्दिः (ऋ० सं० १,४,५,५)"—"वरूथ मस्मियच्छ छर्दिः (ऋ० सं० ६,४,५२,१)"—इति निगमौ॥

(१९) छदिः। 'छद अपवारणे (चु० उ०)'। णिच्। पूर्ववदिस्। 'छादेर्घे द्व्युपसर्गस्य (६,४,९६)'। 'इस्मन्त्रन्क्विषु च (६,४, ९७)'—इति ह्रस्वः। णि-लोपः। छाद्यते हि तत्। निगमोऽन्वेषणीयः* ॥

(२०) छाया। 'छो छेदने (दि० प०)'। माछाससिसूभ्यो यः। वृत्तिवदर्थः। छायाकरत्वाद्वा छाया। "यस्य छायामृतम् (ऋ० सं० ८,७,३,२)"—इति निगमः॥

(२१) शर्म†। शृणातेः शरेः श्रयतेर्वा मन्। श्रयतेर्बाहुलकाद्रूपसिद्धिः। श्रीयते हि तत्। अन्यत्र शरणवदर्थः। "स्यामे-

* य० वा० सं० ५, १८. "इन्द्रस्य छदिरसि"—इति निगमः।
† प० ६। निरु० ६, १९; ९२; ११, ४५।

दिन्द्रस्य शर्मणि (ऋ० सं० १,१,८,१)"—"त्रिधातु शर्म वहतं शुभस्पती (ऋ० सं० १,३,४,६)"—इति निगमौ॥

(२२) अज्म*। अजेः 'अर्त्तिस्तुसुहुसृधृक्षिक्षु (उ० १,१३७)'—इत्यादिना बाहुलकात् मन्। अस्तवदर्थः।"येषामज्मेषु पृथिवी (ऋ० सं० १,३,१३,३)"—इति निगमः॥

॥ इति द्वाविंशतिर्गृहनामानि॥ ४॥

इरज्यति[1]। विधेम[2]। सपर्यति[3]। नमस्यति[4])। दुवस्यति[5]। ऋध्नोति[6]। ऋणद्धि[7]। ऋच्छति[8]। सपति[9]। विवासतीति[10] दश परिचरणकर्म्माणः†॥ ५॥

(१) इरज्यति‡। 'इरज् ईर्ष्यायाम्' कण्ड्वादिः, गतिकर्मसु। अनेकार्थत्वात् इत्यादि यदुक्तं तस्मिन्नध्याये सर्वत्र धातुषु तद्बोद्धव्यम्॥

(२) विधेम§। 'विध विधाने' तुदादिः। लिङुत्तमपुरुषबहुवचनम्। "यज्ञैर्विधेम नमसा हविर्भिः (ऋ० सं० २,७,२४,२)"—"हविष्मन्तो विधेम ते (ऋ० सं० १,३,८,२)"—"होतेव सद्म विधुतो वि तारीत् (ऋ० सं० १,५,१',१)"—इति निगमः॥

* पृ० २, १७।
(१) "इरथ्यति" ग. C. D. F।
(९) "सवति" ग. iid।
† "इति परिचरणकर्म्माणः" ग।

‡ ० २,

§ निरु० १०, २१।

(३) सपर्यति*। 'सपर पूजायाम्' कण्ड्वादिः। "दूतं देव सपर्यत (ऋ० सं० १,१,२२,२)"—इति निगमः॥

(४) नमस्यति। 'नमोवरिवश्चित्रङः क्यच् (३,१,१९)'। नमसः सञ्ज्ञायाम्। नमः करोति। "इन्द्रं नमस्यन्नुपमेभिरर्कैः (ऋ० सं० १,२,१,२)"—"यं नमस्यन्ति कृष्टयः (ऋ० सं० १,३,११,४)"—इति निगमौ॥

(५) दुवस्यति†। 'दुवस् परिचरणे, परितापे च' कण्ड्वादिः। "दुवस्यन्ति स्वमासो अह्रयाणम् (ऋ० सं० १,५,२,२)"—इति निगमः॥

(६) ऋध्नोति‡। "ऋधु वृद्धौ" स्वादिः। अतएव "आ ऋध्नोति हविष्कृतिम् (ऋ० सं० १,१,२५,३)"—इति निगमः॥

(७) ऋणद्धि§। व्यत्ययेन श्नम्॥

(८) ऋच्छति¶। 'ऋछ गतीन्द्रियप्रलयमूर्त्तिभावेषु' (तु० प०)॥

(९) सपति‖। 'षप समवाये (भू० प०)' "अविद्वांसो विदुष्टरं सपेम (ऋ० सं० ४,५,१८,५)"—इति निगमः॥

(१०) विवासति**। नैरुक्तधातुः। 'वि-पूर्वात् वसेर्णिच्। 'छन्दस्युभयथा (३,४,११७)'—इति अपि आर्द्धधातुकत्वात् णि-

* निघ० ११, ९।
† निघ० १०, २०।
‡,§ निघ० २, ९; ८, ९।
¶ निघ० ९, ४।
‖ प० १४। निघ० ५, १९।
** निघ० ९, २४. ११, २१।

लोपः'—भट्टभास्करमिश्रः। "हविर्भाग आविवासति (ऋ० सं० १, १, २३, ३)"—इति निगमः॥

॥ इति दश परिचरणकर्माणः॥ ५॥

शिम्वाता[१]। शतरा[२]। शातपन्ताः[३]। शर्म[४]। स्यूमकम्[५]। शेवृधम्[६]। मयः[७]। सुम्नम्[८]। सुदिनम्[९]। शूषम्[१०]। शुनम्[११]। शग्मम्[१२]। भेषजम्[१३]। जलाषम्[१४]। स्योनम्[१५]। सुम्नम्[१६]। शेवम्[१७]। शिवम्[१८]। शम्[१९]। कमिति[२०] विंशतिः सुखनामानि* ॥ ६॥

(१) शिम्वाता। 'शिङ् निशाने (स्वा० उ०)'। 'निम्बशिम्बबिम्बलिम्बकम्बाम्बमम्बादयः'—इति शिनोतेर्व-प्रत्ययो मुम् निपात्यते। अननेर्घञ्। दुःखानि तनूकुर्वत् प्राप्यते॥

(४) "शिवम्"—इत्येव कातिचित्कपर्येषु, पाठान्तरतया देवराजेनापि स्वीकृतम्। इतोऽनन्तरमेव "शेवृधम्(६)" ग.।
(५) "स्यूम। कम्"—इति द्विपदमिदम् ग.।
(११) "इतोऽनन्तरमेव "शम(१९)"—इति ग. C. D. F।
(१२) इदन्तु पदमुपान्त्यम्(१९) ग। "शग्मम्"—इति iib।
(१९) "नास्त्येवैतत्" ग।
(२०) "कत्" ग. iid।
* "इति सुखस्य" ग।
† "वंसगेव पूषर्या शिम्बाता "(ऋ० सं० ८, १,१, ४)"—इति निगमः।

(२) शतगा*। शतं बहु, अनेकमिन्द्रियप्रमादादि गति ददाति 'आतोऽनुपसर्गे कः (३,२,३)'॥

(३) शातपन्ता। 'शो तनूकरणे (दि०प०)' निष्ठा। पततेः 'हसिमृग्रिण्वामि० (उ० ३,८३)'—इति बाहुलकात् तन्। शातेन दुःखानां तनूकरणेन पत्यते स्तूयते। त्रिष्वपि द्विवचनस्याकारः। मित्रेत्र स्तुता शतगा शातपन्ता (ऋ०सं०८,६,१,५)"—इति निगमः॥

(४) शर्म†। व्याख्यातं गृहनामसु (३११५०) "ता नो देवीः सुहवाः शर्म यच्छत (ऋ०सं० ४,२,२८,७)"—इति निगमः॥ अस्य स्थाने "शिल्गुः"—इति केचित् पठन्ति। 'शल गतौ (भू०प०)'। 'वल्गिफल्योर्गुक् च ( ?‡ )'—इति कु-प्रत्ययो बाहुलकादकारस्येकारः। गम्यते पुण्यवद्भिः, गच्छत्यनेन तृप्तिम्, गच्छति वान्यमनित्यत्वात्। एवमर्था गत्यर्थेषु बोद्धव्याः। निगमोऽन्वेषणीयः॥

(५) स्यूमकम्। 'षिवु तन्तुसन्ताने (दि०प०)'। 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' 'अविसिविसिशुषिभ्यः कित् (उ० १,१४१)'—इति मन् प्रत्ययः। 'च्छ्वोः शूडनुनासिके च (६,४,१९)', यणादेशः, स्वार्थे कः। स्यूतं पुण्यवति। निगमोऽन्वेषणीयः॥

(६) शेवृधम्। शे-शब्दे उपपदे वृधेः इगुपधलक्षणः कः। * * *। शेवस्य वर्द्धयितृ शेवृधम्। पृषोदरादित्वादुभयत्र रूप-

* अनुपदमेवोदाहरिष्यमाणनिगमात्स्यापि भवितुमर्हति।

† पृ० ४।

‡ कौमुदीपाठस्त्वेवम्—"फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्च (उ०१,१८)"—इति।

सिद्धिः। "स शेवृधमधि धा द्युम्नमस्मे (ऋ० सं० १,४,१८,६)"—इति निगमः॥

(७) मयः। 'मिञ् हिंसायाम् (स्वा० उ०)'। असुन्। हिनस्ति दुःखम्। "मयः कृणोषि प्रय आ च सूरये (ऋ० सं० १,२,३२,२)"—इति निगमः॥

(८) सुम्म्यम्। सुपूर्वात् गमेः अघ्न्यादित्वात् यत् प्रत्यय उपधालोपश्च। "उषा ददातु सुम्म्यम् (ऋ० सं० १,४,५,३)"—"आ सुम्म्याय सुम्म्यम् प्राता (ऋ० सं० ६,७,७,५)"—इति निगमौ॥

(९) सुदिनम्। व्याख्यातमहर्नामसु (५७पृ०); अत्र सुपूर्वम्। सुष्ठु द्यति दुःखम्, खण्डयति वा भाग्यविपर्ययेण। निगमोऽन्वेषणीयः॥

(१०) शूषम्*। व्याख्यातं बलनामसु (२१८पृ०)। शुष्यत्यनेन दुःखम्, प्रियात्वहञ्च सुखम्। "मास्माकेभिरेतरी न शूषैः (ऋ० सं० ४,५,१४,४)"—इति निगमः॥

(११) शुनम्†। 'शुन गतौ (तु० प०)'। 'गेहे कः (३,१,१४४)'—इति बाहुलकात् कः। "शुनं नः फाला विकृषन्तु भूमिम् (ऋ० सं० ३,८,९,८)"—"शुनं हुवेम मघवानमिन्द्रम् (ऋ० सं० ३,२,४,७)"—इति निगमौ॥

(१२) शग्मम्‡। शं-शब्दे उपपदे गमेः 'गेहे कः (३,१,१४४)'—इति कः। गमहनेत्युपधालोपः (६,४,९८)। पृषोदरादित्वात्

* पृ० २,९।
† "शुनः" निघ० ९,४।
‡ निघ० २,४।

शमो म-लोपः। सुखं गम्यतेऽनेन दुःखतादिशमनेन वा। यद्वा; शकेः 'युजिरुजितिजां कुश्च* (उ० १,१४३)'—इति बाहुलकात् मक्-प्रत्ययः, ककारस्य गकारश्च। शक्नोति तृप्तिं जनयितुम्। "वास्तोष्पते शग्मया संसदा ते (ऋ० सं० ५,४,२१,२)"—इति निगमः॥

(१३) भेषजम्†। (१४) जलाषम्‡। व्याख्याते उदकनामसु (१११पृ०) भेषज्यतिरत्र सुखनार्थः। "हृद्रं जलाषभेषजम् (ऋ० सं० १,३,२६,४)"—इति निगमः॥ 'जलाषजं सुखादौषधम्'—इति स्कन्दस्वामिभाष्यम्॥

(१५) स्योनम्§। 'षिवु तन्तुसन्ताने (दि० प०)'। 'सिवेष्टेर्यूट् च (उ० ३,८)'—इति न-प्रत्यये गुणः। स्यूमवदर्थः। स्योन मिति सुख-नाम, स्यतेरवस्यन्त्येतत्'—इति (निरु० ८,९) भाष्ये 'स्यतेः सेवतेश्च स्योनम्'—इति व्याख्यातं स्कन्दस्वामिना। तत्र बाहुलकान्न-प्रत्यये टेर्यूट्। "देवेभ्यो अदितये स्योनम् (ऋ० सं० ८,६,८,४)"—"स्योना पृथिवि भव (ऋ० सं० १,२,६,५)"—इति च निगमौ॥

(१६) सुम्नम्॥। 'राम्नासाम्नासुम्नद्युम्ननिम्नेति भोजसूत्रम्। शोभनेन कर्मणा मीयते निमीयते, सुष्ठु मीयते परिच्छिद्यते भागे-नेति वा। "कं वः सुम्ना नव्यांसि (ऋ० सं० १,३,१५,३)"—"सुम्नाय वर्त्तयामसि (ऋ० सं० ६,४,५५,१)"—इति निगमौ॥

* "युजिरुचितिजां कुश्च"—इति कौ० पाठः।

† पु० १, १२।

‡ पु० १, १२।

§ निरु० ८, ९; १२. ९, १२. १२, ८।

॥ "सुम्नावरी" पु० १, ८।

(१७) शेवम्*। (१८) शिवम्†। 'शीङ् स्वप्ने (अदा० आ०)'। 'इण्शीभ्यां वन् (उ० १,१५०)'। 'सर्वनिघृष्व (उ० १,१५१)'—इति शीङो ह्रस्वत्वं वन्-प्रत्ययो गुणाभावश्च निपात्यते। 'शेवमिति सुखना० (निरु० १०,१७)' इत्यादिभाष्ये। शिष्यतेर्व्वेत्यादिना वेति। तदर्थस्तु—शेवति हिनस्ति क्लेशं, शेषयति विशेषयति वा स्वाश्रयम्। "अग्ने न शेवं आकूर्यः सन् (ऋ० सं० १,५,१३,२)"—"शिवाभिर्नं स्मयमानाभि रागात् (ऋ० सं० १,५,२७,२)"—इति निगमौ॥

(१९) शम्‡। निपातोऽयम्। यद्वा; शाम्यतेर्विच्। शामयितृ क्लेशानाम्। "शं तें सन्तु प्रवेतसे (ऋ० सं० १,१,१०,२)"—इति निगमः॥

(२०) कम्§। अयमपि निपातनम्। "श्रियसे कं भानुभिः सम्मिमिक्षिरे (ऋ० सं० १,६,१३,६)"—"आ वां मनुं तनाय कम् (ऋ० सं० १,३,१८,२)"—इति निगमौ। "अह्नं कमिन्द्र चरतो वितन्तसम् (ऋ० सं० १,७,१४,२)"—इत्यत्र 'कमिति सुखनामेदमव्ययम्'—इति हरदत्तः॥

॥ इति विंशतिः सुखनामानि ॥ ६ ॥

निर्णिक्(१)। वव्रिः(२)। वर्पः(३)। वपुः(४)। अमतिः(५)। अप्सः(६)। प्सुः(७)। अप्नः(८)। पिष्टम्(९)। पेशः(१०)। कृशनम्(११)।

* निरु० १०, १७।

† निरु० १०, १७।

‡ निरु० ४, २१. ११, ३०।

§ पु० १, १२।

(४) इतोऽनन्तर "वपुः" इत्यधिकम् C. D. F।

(७) "प्सुः" ग. C. D. F।

**स्मरः(१२) । अर्ज्जुनम्(१३) । ताम्रम्(१४) । अरुषम्(१५) । शिल्पम्(१६) इति षोडश रूपनामानि* ॥ ७ ॥**

(१) निर्णिक्† । 'णिजिर् शौचपोषणयोः (जु० उ०)', निरुपसर्ग-पूर्वः क्विप् । निर्णिक्तं हि तत्, पोषयति वा प्रीतिम् । "वर्णो वत्स निर्णिजम् (ऋ० सं० १, २, १८, ३)"—इति निगमः॥

(२) वव्रिः‡ । 'वृञ् वरणे (स्वा० उ०)' । 'आदृगमहनजनः किकिनौ लिट् च (३, २, १७१)', द्विर्वचनम्, कित्त्वाद् गुणाभावः, यणादेशः । तद्धि स्वाश्रयमावृणोति, व्रियते वा । "विद्युद् भवन्ती प्रति वव्रिमौहत (ऋ० सं० २, ३, १८, ४)"—इति निगमः ॥

(३) वर्पः§ । 'वृङ् सम्भक्तौ (क्र्या० आ०)' । 'वृञ्शीङ्भ्यां रूप-स्वाङ्गयोर्युट् च (उ० ४, १९६)'—इत्यसुन् । भज्यते हि तत् । वृणोते वा बाहुलकादसुन् युट् च । वव्रिवदर्थः । "मा वर्पो अस्मदप गूह एतत् (ऋ० सं० ५, ६, २५, ६)"—इति निगमः ॥

(४) वपुः‖ । व्याख्यातमुदकनामसु (१२७पृ०) । उप्यते स्वाश्रयः "वपुर्भि राचरतो अन्यान्या (ऋ० सं० १, ५, २, ३)"—इति निगमः ॥

(१२) "मदत्" कातिरिक्तेषु सर्वत्र ।
(१६) शष्पम्" ग. C. F । "शिष्पम्" D ।
* "इति रूपस्य" ग ।
† निघ० ५, १९ ।
‡ निघ० २, ९ ।
§ निघ० ५, ८ ।
‖ पु० १, १२ ।

(५) अमतिः* ॥

(६) अप्सः† । 'अप्स इति रूपनामाप्नोतेः (निरु० ५, १३)'— इत्यादि भाष्ये स्कन्दस्वामिना अप्सशब्दो व्युत्पादितः । तत्प्रकारेण निर्वचनं प्रदर्श्यते । नञ्पूर्वात् प्सातेरसुनि बाहुलकादाकारलोपः आप्नोतेर्वा । 'वृतॄवदिहनिकमिकषिभ्यः सः (उ० ३, ५८)'—इति स-प्रत्ययः । * * * । "उपह्वरेषु नि मिणीते अप्सः (ऋ० सं० २, १, ८, २)"—"अप्सरसः परि जज्ञे वसिष्ठः (ऋ० सं० ५, ३, २४, २)"—"अप्सरसां गन्धर्वाणाम् (ऋ० सं० ८, ७, २४, ६)"—इति निगमाः । * * * ॥

(७) प्सुः । 'स्फुर स्फुलने (तु० प०)' । 'मृगय्वादयश्च (उ० १, ३६)'—इति डुन्-प्रत्ययः, सकारपकारयोः फकारस्य च व्यत्ययश्च निपात्यते । स्फुरति हि तत् । "वहन्ते अह्रुत प्सवः (ऋ० सं० ६, १, ३७, २)"—"गुष्मा इन्द्रं मवाता अह्रुतप्सवः (ऋ० सं० १, ४, १२, ४)"—इति निगमौ ॥

(८) अप्नः‡ । अपत्यनामसु व्याख्यातम् (१६३पृ०) । तेन हि कृत्स्नमाश्रयं व्याप्नोति । "अभि सन्ति जम्भया ता अनप्नसः (ऋ० सं० २, ६, ३०, ४)"—इति निगमः ॥

(९) पिष्टम्§ । 'पिश अवयवे (तु० प०)' 'पिस गतौ (भू० प०)"

---

* नैतद् व्याख्यातं देवराजेन, लेखकप्रमादाद्वा नोपलभ्यते ।
 प० ४, २ । निरु० ६, १२ ।

† निरु० २, ५. ५, १२ ।

‡ पु० २, १ ।

§ निरु० ८, १० ।

—इति चीरस्वामी । 'पिशेः किच्च (उ० ३,६२)'—इति क्तः, गुणाभावश्च; 'तितुत्रथ (७,२,९)'—इतीट्प्रतिषेधः । 'पिश्चितम्, अवयवशो विभक्तमित्यर्थः'—इति स्कन्दस्वामी । 'पिश आश्लेषणार्थः'—इति माधवः । आश्लिष्यत्याश्रयम् । "पिष्टं रुक्मैभिरङ्‌ज्ञिभिः (ऋ० सं० ४,३,१९,१)"—इति निगमः ॥

(१०) कृशनम्* । (११) पेशः† । व्याख्याते हिरण्यनामसु (२० पृ०) दीप्यते हि तत्; दीप्यतेऽनेन वा तद्वान् । पेशसः पिष्टवदर्थः । कृशनस्य निगमोऽन्वेषणीयः । "पेशो मर्या अपेशसे (ऋ० सं० १,१,११,३)"—इति निगमः ॥

(१२) प्सरः । 'स्फुर स्फुलने (तु० प०)' । असुन् । पृषोदरादित्वात् (६.३,१०९) सकारपकारयोर्व्यत्ययः । स्फुरति हि तत् । "महि प्सरो वरुणस्य (ऋ० सं० १,३,२३,२)"—"वर्चो देव प्सरस्तमम् (ऋ० सं० १,५,२३,१)"—इति निगमौ ॥

केचिदत्र मरुत्कृद्वं‡ पठन्ति । तद्धिरण्यनामसु व्याख्यातम् (२२पृ०) । निगमोऽन्वेषणीयः ॥

(१३) अर्जुनम्§ । व्याख्यातमुषोनामसु (५० पृ०) अर्जुनीत्यत्र । "अहश्च कृष्णमहरर्जुनञ्च (ऋ० सं० ४,५,११,१)"—इति निगमः॥

(१४) ताम्रम् । 'तमु काङ्क्षायाम् (दि० प०)' । 'अमितम्योर्दीर्घश्च (उ० २,१४)'—इति रक् प्रत्ययः । काङ्क्ष्यं हि तत्, तस्मात्

*, † पृ० १, २ ।
‡ पृ० १, २ ।
§ पृ० १, ८ ।

तासम्। "आपो दिवादा तासः ( ? )"—इति निगमः।
"अमी यशासो अहणे (य०वा०सं० १६,६)"—इति च॥

(१५) अरुषम्*। व्याख्यातमुषोनामसु अरुषीत्यत्र (५३पृ०)। आ रोचते। निगमोऽन्वेषणीयः॥

(१६) शिल्पम्†। 'शिच्छ विशेषणे (तु०प०)'। 'खष्पशिल्पशष्पवाष्परूपतल्पाः (उ० ३,२६)'—इति प-प्रत्ययः। चकारस्य लकारो बाहुलकात् गुणाभावश्च निपात्यते। विशेषयति तद्रूपम्। "ऋक्सामयोः शिल्पे स्थः (य०वा०सं० ४,९)"—इति निगमः॥

॥ इति षोडश रूपनामानि ॥ ७ ॥

**अस्रेमाः[१]। अनेमाः[२]। अनेद्यः[३]। अनवद्यः[४]। अनभिशस्ताः[५]। उक्थ्यः[६]। सुनीथः[७]। पाकः[८]। वामः[९]। वयुन[१०]मिति प्रशस्यस्य‡॥ ८॥**

(१) अस्रेमाः। 'स्रिवु गतिशोषणयोः (प०)'; दिवादिर्नञ्पूर्वः; 'मनिन् सर्वधातुभ्यः (उ० ४,१४०)'—इति मनिनि बाहुलकात् आडभावः, 'लोपो व्योर्वलि (६,१,६६)'—इति वकारलोपः, गुणः। न गच्छत्यकीर्त्तिम्, अगम्यो सत्पुरुषाणाम्, न गच्छन्त्यस्माद् गुणाः।

* पृ० १, ८।

† पृ० २, १।

(२) नास्त्येवैतत् ग. C. D. F।

(३) इतोऽनन्तरम्—"अनिन्द्य."—इत्यधिकम् ग. C. D. F।

(४),(५) 'अनभिशस्तिः (य० वा० सं० ५, ५.)। अनवद्यः" ग. iib।

(९) "वामः" A।

‡ "इति प्रशस्यस्य" ग।

अस्रेमाणं तरणिं वीळुजम्भम् (ऋ० सं० ३,१,२४,३)"—इति निगमः ॥

(२) अनेमाः। नञ्पूर्वान्नयते र्मनिन्। नेतुमशक्योऽर्मार्गम्। निगमोऽन्वेषणीयः ॥

(३) अनेद्यः। 'णिदि कुत्सायाम् (भ्वा० उ०)', नञ्पूर्वः; आगमानित्यत्वान्नुम् न क्रियते; 'ऋहलोर्ण्यत् (३,१,१२४)', "माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य (ऋ० सं० ६,३,१८,१)"—इति निगमः ॥

(४) अनवद्यः* ।

(५) अनभिशस्ताः। 'शस्त हिंसायाम् (अदा० प०)'। * * *। निगमोऽन्वेषणीयः ॥

(६) उक्थ्यः†। 'वच परिभाषणे (अदा० प०)'। 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २,६)' सम्प्रसारणञ्च। उक्थशब्दः स्तुतिपर्यायः। उक्थमर्हति। 'छन्दसि च (५,१,६७)'—इति यः। स्तुत्यर्ह इत्यर्थः। "क्रतुर्भवत्युक्थ्यः (ऋ० सं० १,१,३२,५)"—"गाय गायत्र मुक्थ्यम् (ऋ० सं० १,३,१७,४)"—इति निगमौ ॥

(७) सुनीथः‡। नयतेः 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २,२)'। नीथा स्तुतिः। शोभना नीथा यस्य सः। हिरण्यहस्तो असुरः सुनीथः (ऋ० सं० १,३,७,५)"—"गभीरवेपा असुरः सुनीथः (ऋ० सं० १,२,७,१)"—इति निगमौ ॥

* नैतद् व्याख्यातं देवराजेन, लेखकप्रमादाच्चोपलभ्यते वा।

† निघ० ११, ११।

‡ निघ० ४; १९।

(८) पाकः* । पातेः 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३, ४१)'—इति कन्। रक्ष्यते गजादिना गुणवत्त्वात्। "तं पाकेन मनसा, पश्यमन्तितः (ऋ० सं० ८, ६, १६, ४)"—इति निगमः। "अपाको विष्णुर्यशसे पुरूणि ( )"—इति च ॥

(९) वामः† । 'वनषण सम्भक्तौ (भू० प०)'। 'इषियुधीन्धिदसिश्याधूसूभ्यो मक् (उ० १, १४२)' इति बाहुलकान्मक् प्रत्ययः, नकारस्याकारश्च। सम्भजनीयो हि प्रशस्यः। "न दूळ्हे अनुददामि वामम् (ऋ० सं० २, ५, १२, ५)"—इति निगमः॥

(१०) वयुनम्‡ । अजतेः 'अजियमिशीङ्भ्यश्च (उ० ३, ५८)'—इत्युनन् प्रत्ययः, वी-भावः। अस्त्रमवदर्थः। 'वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा (निरु० ५, १४)'-इति भाष्यम्। तत्र बाहुलकादुनन्, मत्वर्थीयस्य लुक्: कान्तिमान् प्रज्ञावान् वा। "विमानं अग्निर्वयुनश्च वाघताम् (ऋ० सं० २, ८, २०, ४)"- इति निगमः॥

॥ इति दश प्रशस्यनामानि ॥ ८ ॥

**केतः(१) । केतुः(२) । चेतः(३) । चित्तम्(४) । क्रतुः(५) । असुः(६) । धीः(७) । शचीः(८) । माया(९) । वयुनम्(१०) । अभिख्ये(११) त्येकादश प्रज्ञानामानि§ ॥ ९ ॥**

---

* निरु० ३, १२।

(१), (२) "केतः। क्रतुः" ग।

† निरु० ४, २१. ६, २२; ११. ११, ४६।

‡ प० ९. ४, १। निरु० ५, ९; १४. ८, १०. ९, १५।

§ "इति प्रज्ञायाः"।

(१) केतः । 'चायृ पूजानिशामनयोः (भू० उ०)' । 'चायः की (उ० १,७५)'–इति त-प्रत्ययो धातोः कीरादेशो गुणश्च । पूज्यते । "पुन्हॅग्वोऽनुतेकेतमायम् (ऋ० सं० ८,५,१,५)"—इति निगमः ॥

(२) केतुः* ।

(३) चेतः । (४) चित्तम् । 'चिती सञ्ज्ञाने (भू० प०)' । 'अञ्जि-घृसिभ्यः (उ० ३,८६)'–इति बाहुलकात् क्तः । केतवदर्थः । "ऋता-वानं विचेतमम् (ऋ० सं० ३,५,६,३)"–"मन्याचित्तं चित्तेन मन्त-तम् ( ? )" इति निगमौ ॥

(५) क्रतुः† । व्याख्यातं कर्मनामसु (१६६पृ०) क्रियते-ऽनया धर्मादिविचारः । "अग्निर्होता कविक्रतुः (ऋ० सं० १,१,१,५)"–इति निगमः ॥

(६) असुः‡ । अस्यतेः 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १,१०)'—इति उ-प्रत्ययः । 'असुरिति प्राणनाम (निरु० ३,८)'—इति भाष्ये, अस्यति क्षिपत्यनर्थान्, अस्ताः क्षिप्ताः अस्यामर्थाः इत्यर्थप्राप्त्यनर्थ-परिहारात्मकमुभयमपि प्राप्नोति ॥

(७) धीः§ । (८) शची‖ । व्याख्याते कर्मनामसु (१६९, १७०पृ०) । नि धीयते द्रव्येषु, धारयत्यर्थान्, ध्यायन्तेऽनया देवताः, गम्यन्ते अवगम्यन्ते ऽनयार्थाः, गच्छत्यनया इष्टप्राप्तिमनिष्ट-

---

* निरु० ११, ६; १०. ११, ७; १५ ।
† पु० २, १ ।
‡ निरु० ३, ८. ११, १८ ।
§ पु० २, १ ।
‖ पु० १, ११ ।

परिचारक। "चिदसि मनासि धीरसि (य॰ वा॰ सं॰ ४,१९)"—"दोषावस्तर्धियावयम् (ऋ॰ सं॰ १,१,२,१)"—"ऋणोरधं न शचीभिः (ऋ॰ सं॰ १,२,२१,५)"—इति निगमाः॥

(८) माया*। 'माङ् माने (अदा॰ आ॰)'। 'माछाससिभ्योयः (उ॰ ४,१०९)'—इति य-प्रत्ययः। मीयन्ते परिच्छिद्यन्तेऽनया पदार्थाः। "मायाभिरिन्द्र मायिनम् (ऋ॰ सं॰ १,१,२१,७)"—"इमामनु कवितमस्य मायाम् (ऋ॰ सं॰ ४,४,२१,१)"—इति निगमौ॥

(१०) वयुनम्†। व्याख्यातं प्रशस्यनामसु (३२४पृ॰)। गतौ शचीवदर्थः, क्षेपणे ऽसुवत्। "विद्वाँ अग्ने वयुनानि क्षितीनाम् (ऋ॰ सं॰ १,५,१७,२)"—इति निगमः॥

(११) अभिख्या। 'ख्या प्रकथने (अदा॰ प॰)'। 'आतश्चोपसर्गे (३,३,१०६)'—इत्यङ्। प्रकर्षेण कथ्यन्तेऽनयार्थाः। "अभिख्या भासा बृहता शुशुक्वनिः (ऋ॰ सं॰ ६,२,८,५)"—इति निगमः। भाष्यं द्रष्टव्यम्॥

॥ इत्येकादश प्रज्ञानामानि ॥ ९ ॥

**बट्[१]। अत्[२]। सत्रा[३]। अद्धा[४]। इत्था[५]। ऋत[६]मिति षट् सत्यनामानि‡ ॥ १० ॥**

---

* निरु॰ ७, १७. १२, १७।

† पु॰ ८।

(४), (५) 'इत्था। अद्धा।" ग।

‡ '[illegible]" ग।

(१) बट्* । (२) अत् । (३) सत्रा । (४) अद्धा । (५) इत्था† । बडादयो निपाताः । "बण्महाँ असि सूर्य (ऋ० सं० ६,७,८,१)"— "अद्धयाग्निः समिध्यते (ऋ० सं० ८,८,९,१)"— "सत्रादावन्नपा दधि (ऋ० सं० १,१,१४,१)"— "सत्यमद्धा नकिरन्यस्त्वावान् (ऋ० सं० १,४,१४,३)"— "मक्षिप्र् इत्था धिया नरा (ऋ० सं० १,१,४,१)" निगमाः ॥

(६) ऋतम्‡ । व्याख्यातमुदकनामसु (१२१पृ०) । गच्छत्यनेन सुगतिम् । 'ऋतम् अर्णः, प्राप्यते तदिन्द्रियैः'—इति माधवः । "ऋतेन मित्रावरुणौ (ऋ० सं० १,१,४,२)"—इति निगमः ॥

॥ इति षट् सत्यनामानि ॥ १० ॥

**चिक्यत्(१) । चाकनत्(२) । आचक्ष्म(३) । चष्टे(४) । विचष्टे(५) । विचर्षणिः(६) । विश्वचर्षणिः(७) । अवचाकशत्(८) दित्यष्टौ पश्यतिकर्माणः§ ॥ ११ ॥**

(१) चिक्यत् । (२) चाकनत्‖ । (३) आचक्ष्म । (४) चष्टे ।

* निरु० ११, २७ ।
† प० ४, २ । निरु० ३, २५. ४, ५. ६, २. ११, २० ।
‡ पु० १, १२ ।
(१) "चिक्यम्" ग. C. D. F ।
(२) "चना" ग. C. D. F ।
(३) "चाक्ष्म" ग. C. D. F । "चचक्ष" क ।
§ "इति पश्यतिकर्मणः" ग ।
‖ पु० २, ६ ।

(५) विचष्टे*। इति चक्षिङ्ःदर्शनार्थानि व्याख्यातानि। 'विकय दित्यादीनि चायत्यर्थनिगमानि'—इति स्कन्दस्वामिना भाष्यमुक्तम्। 'कित ज्ञाने (भू०प०)' यङ्लुकि शतरि व्यत्ययेन 'नुगतोऽनुनासिकान्तस्य (७,४,८५)'—इति न भवति। निगमोऽन्वेषणीयः॥

(३) आचक्ष्व। आङ्पूर्वस्य चक्षिङो लङि मध्यमैकवचने व्यत्ययेन। "अतस्त्वा त्वे अदितिं दितिञ्च (ऋ०सं० ४;३,११,३)"—इति निगमः॥

(४) चष्टे*। (५) विचष्टे†। केवलाद् विपूर्वाच्च आत्मनेपदप्रथमपुरुषैकवचने संयोगादिलोपे ष्टुत्वे च रूपम्। "तेभिश्चष्टे वरुणो मित्रो अर्यमा (ऋ०सं० ८,४,२४,१)"—"इतो जातो विश्वमिदं वि चष्टे (ऋ०सं० १,७,६,१)"—इति निगमौ॥

(६) विचर्षणिः। (७) विश्वचर्षणिः। विपूर्वाद् विश्वपूर्वाच्च 'कृष विलेखने (भू०प०)'—इत्यस्मात् 'कृषेरादेश्च चः (उ० २.९.७)'—इति अनि-प्रत्ययः, आदेः ककारस्य चकारश्च। यद्वा; चायतेरेव बाहुलकात् अनि-प्रत्ययो धातोर्ह्रस्वः षभावश्च। विविधं द्रष्टा विचर्षणिः। विश्वस्य द्रष्टा विश्वचर्षणिः। "स्वस्मान् पिपर्षि विदथे विचर्षणे (ऋ०सं० १,२,३३,१)"—"स्तोमेभिर्विश्वचर्षणे (ऋ०सं० १,१,१७,३)"—इति निगमौ॥

(८) अवचाकशत्। 'काशृ दीप्तौ (भू०आ०)' अवपूर्वः। यङ्लुकि शतरि व्यत्ययेन ह्रस्वत्वम्। "जनानां धेना अवचाकशद् वृषा

* निघ० १०, २०. ११, २७।
† निघ० ७ ७७. १० ४६।

(ऋ०सं०७,८,२५,१)"—"उभे मीमावपाकंमत (ऋ०सं०६,८,२२,४)"—इति निगमौ ॥

॥ इत्यष्टौ पश्यतिकर्माणः ॥ ११ ॥

**हिकम्(१)। नुकम्(२)। सुकम्(३)। आहिकम्(४)। आकीम्(५)। नकिः(६)। माकिः(७)। नकीम्(८)। आ-कृत(९) मिति नवोत्तराणि पदानि सर्वपदसमाम्नानाय* ॥ १२ ॥**

(१) हिकम्†। (२) नुकम्‡। (३) सुकम्§। (४) आहिकम्‖। (५) आकीम्। (६) नकिः। (७) माकिः। (८) नकीम्। एते निपाताः। "वसुर्वसु पतिर्हिकम् (ऋ०सं०६,३,४०,४¶)"—"इमा नु कम्भुवना (ऋ०सं०८,८,१५,१**)"—"सीषधामातिष्वतेलवता-सुकम् ( ? )"—"इन्द्रं हवीꣳषि मधुना हि कं गतम् (ऋ०सं०

(२), (३) "सुकम्। नुकम्" ग. D. F. घ।
(४) नास्त्येतत् ग. D. F।
(५) "आकिम्" C। इतोऽनन्तरमेव "नकीम् (८)" ग. D. F।
(६) इतोऽनन्तरम् "माकीम्" इत्यधिकम् ग. D. F। "माकिम्" C।
* "इत्यमिनाणि" ग।
† "हि" निघ० १, ६। "कम्" निघ० १, ९; १४. ४, १८. ६, २५।
‡ "नु" निघ० १, ४।
§ "सु" निघ० १, ३. १०, २८।
‖ "आ। हि। कम्"—इति पदग्रन्थः। "आ" निघ० १,२; ४.५,५;७।
¶ पदकारस्तत्र "हि। कम्" —इति विच्छेद।
** पदकारस्तत्र "मधुना। हि। कम्"—इत्येवं विच्छेद; व्याख्यातश्च तथैव सायणेनेति ध्येयम्।

२,८,१५*)"—"आकीं सूर्यस्य रोचनात् (ऋ०सं० १,१,२७,३)"—"न किरिन्द्र त्वदुत्तरो (ऋ०सं० ३,६,१८,१)"—"माकिर्नेशन्माकीं रिषत् (ऋ०सं० ४,८,२०,२)"—"नकीं वृधीक इन्द्र ते (ऋ०सं० ६,५,२१,४)"—इति निगमाः ॥

(८) आहनम् । निष्ठान्तस्य हनशब्दस्यात्र पाठात् सङ्कृतेरयमपि निपातसमाहाररूपो निपातितः । हन-शब्दस्य-विभक्तिप्रतिरूपकत्वात् निपातत्वमित्याहुः । निगमोऽन्वेषणीयः† ॥

॥ इति नव सर्वपदसमाम्नाय ॥ १२ ॥

इदमिव[१] । इदं यथा[२] । अग्निर्न ये[३] । चतुरश्चिद्ददमानात्[४] । ब्राह्मणा व्रतचारिणः[५] । वृक्षस्य नु ते पुरुहूतवयाः[६] । जार आ भगम्[७] । मेषो भूतो३ऽभि यन्नयः[८] । तद्रूपः[९] । तद्वर्णः[१०] । तद्वत्[११] । तथेति[१२]-त्युपमाः ॥ १३ ॥

इदमिवादीनि भाष्यकारेणैव व्याख्यातानि‡ (निरु० ३,१३—१८) ॥ १३ ॥

अर्चति[१] । गायति[२] । रेभति[३] । स्तोभति[४] । गुङ्क्षे-

* पदकारस्तत्र "नु । कम्"—इत्येवावग्रहमाह ।
† "यदा समुद्रे अध्याहते"—इति (ऋ०सं०५, ८, २४, १) निगमो द्रष्टव्यः ।
‡ एतदध्यायस्थान्यांनामर्थं देवराजेनापि निरुक्तावलोकितन्यायेन व्याख्यातानि ।

यति(५)। गृणाति(६)। जरते(७)। ह्वयते(८)। नदति(९)। पृच्छति(१०)। रिहति(११)। धमति(१२)। कृपायति(१३)। कृपण्यति(१४)। पनस्यति(१५)। पनायते(१६)। वल्गूयति(१७)। मन्दते(१८)। भन्दते(१९)। छन्दति(२०)। छदयते(२१)। शश-मानः(२२)। रञ्जयति(२३)। रजयति(२४)। शंसति(२५)। स्तौति(२६)। यौति(२७)। रौति(२८)। नौति(२९)। भनति(३०)। पणायति(३१)। पणते(३२)। सपति(३३)। पपृक्षाः(३४)। महयति(३५)। वाजयति(३६)। पूजयति(३७)। मन्यते(३८)। मदति(३९)। रसति(४०)। स्वरति(४१)। वेनति(४२)। मन्द्र-

(७) "जरति" ग. C. D. F।
(८) "क्षयति" ग. iid।
(९),(१०),(११),(१२) "रिहति। धमति। नदति। पृच्छति" ग।
(१३) "कृपा" ग. C. D F।
(१५) "पणस्यति" ग. iid. घ। इतोऽनन्तरमेवेह "पणते (३२)" ग।
(१६) नास्त्येवैतत् ग। "पणायते" C. D. F।
(१९) "नौति (२९)"—इत्यनन्तरमिदं दृश्यते ग. iid।
(२१) "छदयति" ग. iid।
(२३),(२४) व्यतिक्रमेणेह पाठः ग।
(३०) "भणति" ग।
(३१) "भणायते" ग iid।
(३३) "स्वपिति" ग।
(३४) "पिपृक्षाः" ग. iid।
(३८) "सहति" ग. iid।
(४१) नास्त्येवैतत् ग. iid।

यते[४३]। जल्पतीति[४४] चतुश्चत्वारिंशदर्चतिकर्माणः* ॥ १४ ॥

(१) अर्चति। 'अर्च पूजायाम् (भू० प०)'। "अर्चन्त्यर्कमर्किणः (ऋ० सं० १,१,१९,१)"—इति निगमः॥

(२) गायति†। 'कै गै शब्दे (भू० प०)'। "गायन्ति त्वा गायत्रिणः (ऋ० सं० १,१,१९,१)"—इति निगमः॥

(३) रेभति। (४) स्तोभति। 'रेभृ शब्दे (भू० आ०)', 'ष्टुभ स्तम्भे (भू० आ०)'। आत्मनेपदिनौ व्यत्ययेन परस्मैपदम्। "रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन् (ऐ० ब्रा० ६,५,६)"—"सोमः पवित्रमर्षति रेभन् (ऋ० सं० ७,४,७,१)"—"परिष्टोभत विंशतिः (ऋ० सं० १,५,३०,४)"—इति निगमाः॥

(५) गूर्द्धयति। नैरुक्तधातुः। "तङ्गूर्द्धया स्वर्णरम् (ऋ० सं० ६, १,२८,१)"—इति निगमः॥

(६) गृणाति‡। 'गॄ शब्दे' क्र्यादिः स्वादिश्च। "कण्वतमो नाम गृणाति नृणाम् (ऋ० सं० १,४,२,४)"—इति निगमः॥

(७) जरते§। नैरुक्तधातुः। "पुरुणीथे जरते सूनृतावान् (ऋ० सं० १,४,२५,७)"—इति निगमः॥

(४३) "कल्पते" ग. iid।

(४४) इतोऽनन्तरम्—"मन्त्रयते। वन्दते" इति द्वे पदेऽधिके ग. iid।

* "इत्यर्चतिकर्माणः" ग।

† निरु० १, ८।

‡ निरु० ३, ५।

§ प० ४, १। निरु० ४, १८. १०, ८।

(८) क्रयते* । 'क्रेञ् स्पर्द्धायाम् (भू०उ०)' । "वाश्रिष्ठो वां श्वानाम् (ऋ०मं० ६,२,२८,१)"—इति निगमः । 'श्वाः स्तोमाः क्रयतेरर्चतिकर्मत्वात्'—इति स्कन्दस्वामी ॥

(९) नदति† । 'णद अव्यक्ते शब्दे (भू०प०)' । "नदस्य मा रुधतः काम आगन् (ऋ०मं० १,४,२२,४)"—इति निगमः ॥

(१०) पृच्छति । 'प्रच्छ ज्ञीप्सायाम्' तुदादिः । 'ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम् ॥

(११) रिहति‡ । 'रिह कत्थनादौ'—इति चीरस्वामी । तुदादिः । "शिशुं न विप्रा मतिभी रिहन्ति (ऋ०मं० ८,७,७,१)"—इति निगमः । अत्र भाष्ये तु "समानवृत्तित्वप्रदर्शनपरं लिहन्ति पर्यायवचनम्'—इति । "विप्रा रिहन्ति धीतिभिः (ऋ०मं० १,२,६,४)"—इत्यत्र 'रिहति-धमतीत्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(१२) धमति§ । गतिकर्मसु व्याख्यातः (२४६पृ०)॥

(१३) कृपायति । (१४) कृपण्यति । (१५) पनस्यति । नैरुक्तधातवः । "मर्त्तताता ये कृपणन्त रत्नम् (ऋ०मं० ८,३,५,३)"—इत्यत्र कृपणन्त स्तुवन्ति||'-इति भट्टभास्करमिश्रः । "त्वेषं पनस्युमर्किणम् (ऋ०मं० १,३,१७,५)"—इति निगमः । 'पनस्यतिरर्चतिकर्मा, स्तुत्यमित्यर्थः'—इति स्कन्दस्वामी ॥

* प० १, ८ ।

† निघ० ५, १ ।

‡ प० १९ ।

§ पृ० १, १४ ।

|| भाष्येऽत्र 'कृपणन्त प्रयच्छन्ति याचन्ते वा'—इति व्याख्या कृता ।

(१६) पनायते*। 'पण व्यवहारे स्तुतौ च'—'पन च (भ्वा० आ०)'। 'गुपूधूपविच्छिपणिपनिभ्य आयः (३,१,२८)'। "अभीशूनां महिमानं पनायत (ऋ० सं० ५,१,२०,१)"—इति निगमः॥

(१७) वल्गूयति†। 'वल्गु पूजामाधुर्ययोः' कण्ड्वादिः। "वल्गूयति वन्दते पूर्वभाजम् (ऋ० मं० ३,७,२७,२)"—इति निगमः॥

(१८) मन्दते‡। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भ्वा०)' आत्मनेपदी। "प्र वो महे मन्दमानायान्धसः (ऋ० सं० ८,१,९,१)"—इति निगमः॥

(१९) भन्दते§। 'भदि कल्याणे सुखे च' आत्मनेपदी। "पुरुप्रियो भन्दते धामभिः कविः। (ऋ० मं० २,८,२०,४)"—इति निगमः॥

(२०) छन्दति‖। 'छदि संवरणे' चुरादिः। 'बहुलमन्यत्रापि सञ्ज्ञाच्छन्दसोः (उ० २,२१)'—इति लुक्। "वृषाच्छन्दुर्भवति हर्यतो वृषा (ऋ० मं० १,४,१९,४)"- इति निगमः॥

(२१) छदयते‖। 'छद अपवारणे' चुरादिः। 'सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ९३)'—इति वृद्ध्यभावः। 'अदन्तोद्रष्टव्यः'—इति भट्टभास्करमिश्रः॥

(२२) शशमानः¶। 'शशमानः शंसमानः (निरु० ६,८)'- इति

* नि० १, २०, ९, १६।
† पु० २, १४।
‡ पु० १, १९।
§ पु० १, १६।
‖ "छन्दान्" निरु० ९, ८।
¶ पु० ४, १। नि० ६, ८।

भाष्ये 'शंसु स्तुतावित्यस्य शंसन्नित्यवगम्यते'—इति स्कन्दस्वामी । शंसेर्लटि पृषोदरादित्वाद्रूपसिद्धिः । यद्वा; 'शश प्लुतगतौ (भ्वा० प०)' । 'ताच्छील्यवयोवचनशक्तिषु चानश् (३,२,१२९)' । "यो वां यज्ञैः शशमानोह दाशति (ऋ० सं० १,२,२१,२)"—इति निगमः ॥

(२३) रञ्जयति । (२४) जरयति* । 'रञ्ज रागे (भ्वा० उ०)', 'जॄष् वयोहानौ (दि० प०)' हेतुमतो णिच् ॥

(२५) शंसति । 'शंसु स्तुतौ (भ्वा० प०)' । "मा चिदन्यद्वि शंसत (ऋ० सं० ५,७,१०,१)"—इति निगमः ॥

(२६) स्तौति† । 'ष्टु स्तुतौ' अदादिः । 'उतो वृद्धिर्लुकि हलि (७,३,८९)' । "इदमित् स्तोतारं वृषणं सचासुतः (?)"—इति निगमः ॥

(२७) यौति‡ । (२८) रौति§ । (२९) नौति‖ । 'यु मिश्रणे', 'रु शब्दे', 'णु स्तुतौ' अदादयः । "रुवद्धोक्षापप्रथानेभिरेवैः (ऋ० सं० ३,८,८,१)"—इति निगमः । "द्युम्नैरभि प्र णोनुमः (ऋ० सं० १,५,२६,१)"—इति निगमः ॥

(३०) भनति । नैरुक्तधातुः ।

---

* 'जरति, जरते' प० ४, १. निघ० ४, १८. १०, ८ ।

† नि०—'स्तवे' ६, २२. 'स्तवत्' ५, २१. 'स्तोषम्' ९, २५. 'स्तुषेय्यम्' ११, २१ ।

‡ नि०—'यूयवत्' ९, ४२. 'यूयवम्' १२. ४४ ।

§ नि० 'रोरुवत्' ४, १६ ।

‖ प० २, १२ नि० १, ४. ११, ५० ।

(३१) पणायति। (३२) पणते। 'पण व्यवहारे स्तुतौ च (भ्वा० आ०)'। 'गुपूधूप (३,१,२८)'—इत्यादिना आयः। सत्वात् आय-प्रत्यये विकल्पिते* पणते इति रूपम्। सविता सुपाणिः (ऋ० सं० ३,२,१३,१)"—इति निगमः। पणायतेः पूजाकर्मणः (२,२६)'—इति निरुक्तम् ॥

(३३) सपति†। 'षप समवाये (भ्वा० प०)'। "मधुराचः प्रसुपः साकमीरते (ऋ० सं० ७,१,२२,२)"। 'प्रसुपः सपतेरर्चतिकर्मणः'। "वि ये चृतन्त्यृता सपन्तः (ऋ० सं० १,५,११,४)"—इति निगमौ ॥

(३४) पपृक्षाः। पृच्छतिर्नैरुक्तधातुः। पृचेः सनि 'इको झल् (१,२,१०)'—इत्यत्र झल्ग्रहणस्य जातिवाचकत्वात् 'अनिदिताम् (६,४,२४)'—इति न-लोपः गुणाभावश्च। सनन्ताल्लिटि (३,४,७), सिपि (३,१,३४), आडागमे (३,४,९४), 'इतश्च लोपः (३,४,९७)'। "वायो तव प्रपृञ्चती (ऋ० सं० १,१,३,३)'—इत्यत्र 'पपृक्षाः, महयति,—इत्यर्चतिकर्मसु पाठात् पृञ्चतिः स्तुत्यर्थोऽपि'—इति स्कन्दस्वामी ॥

(३५) महयति। 'मह पूजायाम् चुरादिरदन्तः। "त्वं सु मेषं महया स्वर्विदम् (ऋ० सं० १,४,११,१)"—इति निगमः ॥

(३६) वाजयति। वजेर्णिच्। "वाजयामः शतक्रतो (ऋ० सं० १,१,८,४)"—इति निगमः ॥

* सत्त्वमिदम्—आयन्तत्वात् 'उभयमप्यन्यपि'—इति (१, ४, ९० वा०) आर्धधातुकत्वे 'आयादय आर्धधातुके वा (३, १, ३१)'—इति विकल्पः।

† पृ० ५।

र्चति-कर्मसु पाठात्' इति स्कन्दस्वामि-भाष्यम्॥

(४०) रमति* । 'रम क्रीडायाम् (भ्वा०प०)' ।

(४१) स्वरति† । 'स्वृ शब्दोपतापयोः (भ्वा०प०)' । "स्वरेणाद्रिं स्वर्यो३ नवग्वैः (ऋ०सं० १,५,१,४)"—"ऋषिस्वरं चरति यासु नाम ते (ऋ०सं० ४,२,२४,३)"—इति निगमौ ॥ "स्वरेणाद्रिम्" —इत्यत्र 'स्वरति वेनतीत्यर्चतिकर्मसु पाठात्'—इति, "ऋषिस्वरम्" —इत्यत्र 'स्वरतिरर्चतिकर्मा'—इति च स्कन्दस्वामी॥

(४२) वेनति‡ । (४३) मन्द्रयते । नैरुक्तधातुः । "अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ०सं० २,५,१२,१)"—इति निगमः । 'मन्द्रयतिरर्चतिकर्मा स्तुत्यर्थवाचकम्'—इति स्कन्दस्वामी ॥

(४४) जल्पति§ । 'जल्प व्यक्तायां वाचि (भ्वा०प०)' ॥

॥ इति चतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

* निरु० ६, ५ ।

† निरु० ११, २५. 'स्वरत्' १२, १८ ।

‡ पृ० १, १५ ।

§ पृ० १, ९ ।

विप्रः(१)। विग्रः(२)। गृत्सः(३)। धीरः(४)। वेनः(५)। वेधाः(६)। कण्वः(७)। ऋभुः(८)। नवेदाः(९)। कविः(१०)। मनीषिः(११)। मन्धाता(१२)। विधाता(१३)। विपः(१४)। मनश्चित्(१५)। विपश्चित्(१६)। विपन्यवः(१७)। आकेनिपः(१८)। उशिजः(१९)। कीस्तासः(२०)। अद्धातयः(२१)। मतयः(२२)। मतुथाः(२३)। वाघतः(२४) इति चतुर्विंशतिर्मेधाविनामानि* ॥ १५ ॥

(१) विप्रः†। 'टु वप बीजसन्ताने (भू० उ०)'। 'क्षिप क्षेपे'—इति क्षीरस्वामी। 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २,२७)'—इत्यादिना रन्प्रत्यय इत्वं गुणाभावश्च निपात्यते। उप्यतेऽस्मिन्नतिशयेन मेधा। क्षिपत्यनया पापं वा। यद्वा; 'विप्'—इति मङ्गामनामसु व्याख्यातम् (१८४पृ०), सास्यास्तीति रो मत्वर्थीयः; पृषोदरादित्वात् जश्त्वाभावः। वाङ्मयी हि मेधा। यद्वा; 'प्रा पूरणे (अदा० प०)' वि-पूर्वः। 'आतोऽनुपसर्गे (३,२,३)'—इति कः। 'आतो लोप इटि

(६) "मेधः" ग. C. D. F।
(१४) नास्त्येतत् ग. C. D. F।
(१७) "विपन्युः" iid. ग।
(१८) इतोऽनन्तरम् "केनिपः" इत्यधिकम् ग. iid।
(२३) "मनुष्याः" ग।
(२४) "मेधाविनः" ग. C. D. F।
* "इति मेधाविनाम्" ग।
† नि० १०, १९।

च (६,४,६४)'। विशेषेण पूरयन्ति विद्यार्थिनामपेक्षाः। "पृणन्ति विप्र ते धियः (ऋ० मं० १,१,२६,२)"—इति निगमः॥

(२) विप्रः। विपूर्वात् पृणातेः 'अन्येष्वपि दृश्यते (३,२,१०१)' —इति डः। विविधं पृणात्यर्थान्। "परेहि विग्रमस्तृतम् (ऋ० मं० १,१,७,४ )"—इति निगमः॥

(३) गृत्सः*। 'गृधु अभिकाङ्क्षायाम् (दि० प०)'। 'कृचिकृषि-वृदिवृश्चिगृगद्भ्यः क्सन् ( ? † )'—इति स-प्रत्ययः। अभिकाङ्क्षते सर्वैः। यद्वा, गृणातेः स्तुतिकर्मणो बाहुलकात् सक्-प्रत्ययो ह्रस्वत्वं तुगागमश्च। स्तुत्यो लोकस्य, स्तोता वा देवानाम्। "गृत्सस्य धीरा स्तवसो विवो मदे (ऋ० मं० ७,७,११,५)"—"नमो गृत्सेभ्यो गृत्स-पतिभ्यश्च (य० वा० सं० १६,२५)"—इति निगमौ॥

(४) धीरः‡। दधातेः 'सुसूधीगृधिभ्यः क्रन् (उ० २,२३)'— इति क्रन् प्रत्ययः; 'घुमास्थागापा (६,४,६६)'—इतीत्वम्। धत्ते श्रुतमर्थम्, ददाति वा विद्याः शिष्येभ्यः। यद्वा; धीः प्रज्ञा कर्म वा; रो मत्वर्थीयः। 'धियमीरयति'—इति क्षीरस्वामी। तत्र धीशब्द उपपदे 'कर्मण्यण् (३,२,१)'। "समा धीरः पाकमत्राविवेश (ऋ० मं० २,३,१८,१)"—इति निगमः॥

(५) वेनः§। अजतेः 'धापृवस्यज्यतिभ्यो नः (उ० ३,६)'—इति न-प्रत्ययः; वी-भावः। गच्छति सत्कारं लोके, अवगच्छत्यर्थान्,

* निघ० ३, ५।

† "गृधिपण्योर्दकौ च (उ० ३, ६६)"—इति कौमुदी।

‡ निघ० ३, १२. ४, १०. १२, ३२।

§ प० १७. ५, ४। निघ० १, ७. १०, २८।

अवगच्छत्यस्मादर्थसंशयान्, गच्छन्त्येनं विद्यार्थिनः, छिनत्त्यनर्थान् पापं वा । यद्वा; वेनतेः कान्तिकर्मणो गतिकर्मणो वाक्किर्मणो वा 'पुंसि सञ्ज्ञायां घः (३,३,११८)' । "गिरिं न वेना अधिरोह तेजसा (ऋ० सं० १,४,२१,२)'—इति निगमः ॥

(६) वेधाः* । दधातेर्विपूर्वात् 'विधाञो वेध च (उ० ४,२१९)' —इत्यसुन् वेधादेशश्च । विदधाति काव्यादि ।—"मोषथा वृक्षं कपनेव वेधसः (ऋ० सं० ·३,१५,२)"—"सोमो न वेधा ऋत प्रजातः (ऋ० सं० १,५,८,५)"—"आ पृच्छ्यं विग्रसति वि जुवेधाः (ऋ० सं० १,४,२६,२)"—इति निगमाः ॥

(७) कण्वः । 'कण शब्दे (भ्‍ व० प०)', 'कण निमीलने (चु० प०)' वा । 'अशूपुषिलटिकणिखटिविशिभ्यः क्वन् (उ० १,१४९) । कणति स्तोत्रलक्षणं शब्दं करोति, कण्यते स्तूयते वा, निमीलयति परान् वा स्वतेजसा । "कण्वा अभि प्र गायत (ऋ० सं० १,३,१२,१)" —"कण्वतमो नाम गृणाति नृणाम् (ऋ० सं० १,४,३,४)"—इति निगमौ ॥

(८) ऋभुः† । 'ऋभुक्षा इत्यत्र व्याख्यातम् (३०२पृ०)' । "ऋभुर्ऋभुभिरभि वः स्याम (ऋ० सं० ५,४,१५,२)"—इति निगमः ॥

(९) नवेदाः । "एषां भूत नवेदा म तानाम् (ऋ० सं० २, ३,२६,३)"—इत्यत्र नवेदेति न वेत्तीत्यस्मिन्नर्थे वर्त्तते । कुत

---

* निघ० १०, ६ ।

† प० ४, १५ । निघ० ११, १५ ।

एतत्? निपातनात्; वैयाकरणा 'नभ्राण्नपान्नवेदा (६,३,७५)' —इति निपातयन्ति'—इति स्कन्दस्वामी। तत्र द्विनञ्-पूर्वाद् विदेः कर्त्तर्यसुनि एकस्य नञोलोपोऽन्यस्य प्रकृतिभावश्च निपात्यत इति भावः। "त्रिश्चिन्नो अद्या भवतं नवेदसा (ऋ०सं० १,२, ४,१)"—इति निगमः॥

(१०) कविः*। 'कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२,१३)'—इति भाष्ये 'क्रामतेः कवतेर्वा गतिकर्मण इति रूपम्' —इति स्कन्दस्वामी। क्रामतेः कवतेश्च 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन् प्रत्ययः क्रामतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात्। क्रान्त मस्यास्तीति मत्वर्थीयस्य लुक्। कविः क्रान्तदर्शनः। 'अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः'—इत्युव्वटः। "कवी नो मित्रावरुणा (ऋ०सं० १,१,४,३)"—इति निगमः॥

(११) मनीषिणः†। 'मनु अवबोधने (दि०आ०)'। 'कॄतॄभ्यामीषन् (उ० ४,२६)'—इति बाहुलकादीषन्। मनीषा प्रज्ञाऽस्यास्ति व्रीह्यादित्वात् इनिः। यद्वा; मनस ईषा स्तुतिः प्रज्ञा वा मनीषा। पृषोदरादित्वाद्रूपसिद्धिः। पूर्ववदीषन्। "घृतपृष्ठं मनीषिणः (ऋ० सं० १,१,२४,५)"—इति निगमः॥

(१२) मन्धाता। मन्यतेर्ल्युट्, दधातेस्तृच्। मानस्य ज्ञानस्य विधातयिता, पृषोदरादिः (६,३,१०९)। "मन्धातासि द्रविणोदा ऋता वा (ऋ०सं० ७,५,२०,२)"—इति निगमः॥

* निरु० १२, १३।

† निरु० ३, १५. ९, १०।

(१३) विधाता*। विपूर्वात् दधातेस्तृच्। वेधः-शब्दवदर्थः। निगमोऽन्वेषणीयः॥

(१४) विपः†। 'विप क्षेपे (चु० प०)'। इगुपधलक्षणः कः (३, १, १, ३५)। विप्रवदर्थः। "अस्तृणाद् बर्हणा विपो (ऋ० मं० ६, ४, ४३, १)"—इति निगमः॥

(१५) मनस्वित्। मनः-शब्दोपपदात् 'चिती सञ्ज्ञाने (भ्वा० प०)' इत्यस्मादौणादिकः क्विप्। मनसा चेतयते। निगमोऽन्वेषणीयः॥

(१६) विपश्चित्। विपो वाचश्चेतयते 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इत्यलुक्। 'विपश्यंश्चेतयते'-इति क्षीरस्वामी। पृषोदरादित्वात् पश्यतेरूपम्। "धर्मकृते विपश्चिते पनस्यवे (ऋ० मं० ६,७,१,१),,—"इन्द्रं पृच्छा विपश्चितम् (ऋ० मं० १,१,७,४)"—इति निगमौ॥

(१७) विपन्यवः। विपनेः 'कत्युच् चिपेश्च (उ० ३,४८)'—इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कत्युच् प्रत्ययः। यद्वा; विविधं पननं स्तुतिः 'मृगय्वादयश्च (उ० १,३६)'—इति कु-प्रत्ययः। "विपन्यवो विप्रासो वाजसातये (ऋ० मं० ६,६,१०,६)"—इति निगमः॥

(१८) आकेनिपः। आङ्-शब्दे, के-शब्दे, नि-शब्दे चोपपदे चिपूर्वात् पततेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। 'तत्पुरुषे कृति बहुलम् (६,३,१४)'। के आत्मनि पतन्ति अध्यात्म-

* प० ४,५। निघ० १०, २६, ११, ११।
† पु० १,५।

याने पतन्तं इत्यर्थः। "असौ यथा केनिपानामिनो वृधे (ऋ०सं० ७,८,१६,४)"—इति निगमः॥

(१९) उशिजः*। 'वश कान्तौ (अदा०प०)'। 'वशेः किच्च (उ०२,६८)'–इति इजि-प्रत्ययः। ग्रहिज्या (६,१,१६)'—इत्यादिना सम्प्रसारणम्। कामयते शास्त्राण्यभ्यसितुं व्याख्यातुं वा। "कक्षीवन्तं य औशिजः (ऋ०सं०१,१,३४,१)"—इति निगमः॥

(२०) कीस्तासः। कीर्त्तयतेः पचाद्यचि(३,१,१३४) घञि वा। कीर्त्तयन्ति प्रशस्तानर्थान्। "कीस्तासो अभिद्यवः (ऋ०सं०२,१, १३,२)"–इति निगमः॥

(२१) अद्धातयः। अद्धेति सत्यनाम। अततेरतयः। सत्यं प्राप्नोति; गत्यर्था बुद्ध्यर्थाः, सत्यं जानाति वा। "तदद्धातयदिदुः (ऋ०सं०८,३,२३,१)"—इति निगमः॥

(२२) मतयः†। मन्यतेः क्तिन्। ज्ञायन्तेऽस्मादर्थाः। यद्वा, मतिरस्यास्ति मत्वर्थीयस्य लुक्। "अद्रोघवाचं मतिभिः शविष्ठम् (ऋ०सं०४,६,१३,२)"—"त्वामिन्द्र मतिभिः सुतम् ( ? )"—इति निगमौ॥

(२३) मनुथाः। 'गूथप्रोथपृष्ठादयः ( ? ‡ )'—इति मनेस्थकि नकारस्य तु-भावो निपात्यते। "तुथोऽसि विश्ववेदाः (य०वा०स०५,३१)"। 'विभजत्यो 'ब्रह्म वै तुथः (श०ब्रा०४,३,४,१५)'

* पु० २, ९।
† निघ० ४, २९।
‡ कौमुदीपाठस्तु—'निथपृष्ठगूथयूथप्रोथाः (उ०२,१२)'—इति।

–इति श्रुतिः—इत्युव्वटः। मतं ज्ञानं तुथो मनुष्यैः। तेन मनतुथाः सन्तः पृषोदरादित्वेन मतुथाः। निगमोऽन्वेषणीयः॥

(२४) वाघतः* । वहेः ‘मंश्वन्त्यृम्पदेहन् (उ० २,८९)’–इति प्रत्ययः, उपधावृद्धिः, हकारस्य घकारश्च निपात्यते। निवहति यज्ञार्थान्। “त्रिष्टुौ शर्मा नरणित्वेन वाघत्: (ऋ० सं० १,७,३०,४)”–इति निगमः॥

॥ इति चतुर्विंशतिर्मेधाविनामानि ॥१५॥

रेभः[१]। जरिता[२]। कारुः[३]। नदः[४]। स्तामुः[(५)]। कीरिः[६]। गौः[७]। सूरिः[८]। नादः[९]। छन्दः[१०]। स्तुप्[११]। रुद्रः[१२]। कृपण्युरिति[१३] त्रयोदश स्तोतृनामानि† ॥ १६ ॥

(१) रेभः। रेभतिरर्चतिकर्म्मा (३ ३ २ पृ०)। अर्च्। स्तौति। निगमोऽन्वेषणीयः‡ ॥

(२) जरिता। जरतेरर्चतिकर्मणः (३ ३ २ पृ०)। “त्वामर्क्का जरितारः (ऋ० सं० १,१,३,२)”–इति निगमः॥

(३) कारुः§ । करोतेः ‘कृवापाजि (उ० १,१)’—इत्युण्। कर्त्ता “विदुष्टे तस्य कारवः (ऋ० सं० १,१,२१,६)”–इति निगमः॥

* प० १८। निरु० ११, १६।

(५)-“तामुः” ग. C. D. F।

(११) “स्तुन्” ग. C. D. F

† “इति स्तोतृणाम्” ग। इह च भवन्ति पाठव्यतिक्रमाः।

‡ “नूप्र रेभा ऋुभि सर्व्ववन्तो (ऋ० सं० ८, २, ११, १)”—इति द्रष्टव्यः।

§ निरु० २, १०. ६, ६. ८, ११।

(४) नदः* । नदति स्तुतिकर्मा (३ ३ २ पृ०) । अच् । "नदस्य मा रुधतः काम आगन् (ऋ० सं० २,४,२२,४)"—इति निगमः ॥

(५) स्तामुः । 'षम ष्टम अवैक्लव्ये (भ्‌० प०)' । 'छन्दसीणः (उ० १,२)'—इति बाहुलकादुण् । स्तोत्रकर्मणि "तामु"—इति केचित् पठन्ति । 'तमु काङ्क्षायाम् (दि० प०)' । पूर्ववद् बाहुलकादुण् । काङ्क्षति स्तोतुम् । उभयोरेव निगमोऽन्वेषणीयः ॥

(६) कीरिः । 'कै गै रै शब्दे (भ्‌० प०)' । 'कायः कीः ( ?† )'-इति इ-प्रत्ययः । आकारलोपः । स्तोत्रलक्षणं शब्दमारचयति । 'इन् सर्वधातुभ्यः (उ० ४,११४)' "कीरेश्चिन्मन्त्रं मनसा वनोषि तम् (ऋ० सं० १,२,३४,३)"—इति निगमः ॥

(७) गौः‡ । व्याख्यातं पृथिवीनामसु (६ पृ०) । गीयन्ते स्तूयन्तेऽनेन देवताः । "यो अश्वानां गवां गोपतिर्वशी (ऋ० सं० १,७,१२,४)"—इति निगमः । 'गोपतिः स्तोत्रपतिः'—इति स्कन्दस्वामी ॥

(८) सूरिः§ । 'षू प्रेरणे (तु० प०)' । 'सूङः क्रिः (उ० ४,६४)' —इति सुवतेः क्रिर्भवति । प्रकर्षेण ईरयति स्तोत्रम् । "सदा पश्यन्ति सूरयः (ऋ० सं० १,२,७,५)"—इति निगमः ॥

(९) नादः । नदतेर्घञ् । भवत्यस्मात् स्तुतिः । निगमोऽन्वेषणीयः‖ ॥

* प० ४, २ । नि० ५, २ ।

† 'कीरिः । कृत संशब्दने । अस्माद्धातोः 'अचइः (उ० ४,१२४)'—इति इ-प्रत्यये णिलोपे धातोरन्त्यलोपश्छान्दसः ।'—इति सायणः ॥

‡ प० १, १ ।

§ नि० १२. १ ।

‖ "नादे परि पातु मे मनः (ऋ० सं० ७, ६, ९, २)"—इति द्रष्टव्यः ।

(१०) छन्दः* । छन्दतिरर्चतिकर्मा (३२४पृ०) । असुन् । 'छद आच्छादने (चु०प०)' । 'छदेश्च†'—इत्यसुन् । आच्छादयति स्तोत्रैः । निगमोऽन्वेषणीयः ॥

(११) स्तुप्‡ । स्तोभतिरर्चतिकर्मा (३२२पृ०) । क्विप् । निगमोऽन्वेषणीयः§ ॥

(१२) रुद्रः‖ । रौतेः क्विप्, रुत् शब्दः; मत्वर्थीयो रः । स्तोत्रलक्षणशब्दवानित्यर्थः । "त्मना रुद्रेभिर्वसुभिः पुरोहितः (ऋ०सं० १,४,२३,३)"—इति निगमः ॥

(१३) कृपण्युः ॥

॥ इति त्रयोदश स्तोतृनामानि ॥ १६ ॥

यज्ञः(१) । वेनः(२) । अध्वरः(३) । मेधः(४) । विदथः(५) । नार्यः(६) । सवनं(७) । होत्रा(८) । इष्टिः(९) । देवताता(१०) । मखः(११) । विष्णुः(१२) । इन्दुः(१३) । प्रजापतिः(१४) । घर्म्मः(१५) इति पञ्चदश यज्ञनामानि¶ ॥ १७ ॥

* निरु० ७, १२ ।

† कौमुदीमते तु चन्देश्छन्दो भवति; तथाचोणादिसूत्रम्—'चन्देरादेश्च छः । ४, २१९'—इति ।

‡ "स्तूपः" निरु० १०, ३३ ।

§ "अभ्यनूषत स्तुभः (ऋ० सं० ७, १, २०, २)"—इति द्रष्टव्यः ।

‖ प० ५. ४, निरु० १०, ५. ८. ११, १४ ।

(६) "नारी" ग. C. D F ।

¶ "इति यज्ञस्य" ग । इह च मन्ति पाठव्यतिक्रमाः ।

(१) यज्ञः* । 'प्रख्यातं यजतिकर्मेति नैरुक्ताः (३,१९)'—इत्यादि भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादितः । यजेः 'यजयाचयतविच्छप्रच्छरक्षो नङ् (३,३,९०)' । यजनम् । इज्यन्तेऽत्र देवताः । अन्येषु पृषोदरादित्वेन रूपसिद्धिः । "यज्ञेयज्ञे न उदर्व (ऋ० सं० ३,८,११,४)"—इति निगमः ॥

(२) वेनः† । व्याख्यातं मेधाविनामसु (३४०पृ०) गच्छत्यनेन स्वर्गम्, प्रक्षिप्यते देवतोद्देशेन वास्मिन् हव्यम्, तेनात्र देवताः काम्यन्ते वा । निगमोऽन्वेषणीयः ॥

(३) अध्वरः‡ । ध्वरतेर्बधकर्मणः 'पुंसि सञ्ज्ञायां घः (३,४,११८)' । नञ्-पूर्वः । ध्वरा हिंसा, तदभावो यत्र । अतएव शिष्टाः स्मरन्ति—'ओषध्यः पशवो वृक्षा स्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'—इति । तस्मादुपपन्नं यज्ञे हिंसा स्वर्जित्यामेतद्यज्ञीयवचनादहिंसा प्रतीयते । अन्यत्र विस्तरेणोपपादितः । अथ वा षष्ठ्यर्थे बहुव्रीहिः । अविद्यमानोऽध्वरो यस्य सोऽध्वरः रक्षोभिरहिंसितः । * * * । "राजन्तमध्वराणाम् (ऋ० सं० १,१,२,३)"—इति निगमः ॥

(४) मेधः§ । व्याख्यातं धननामसु (२२७पृ०) । गच्छन्त्यत्र देवता हविर्ग्रहीतुं, दक्षिणार्थं वा सदस्यात्, हिनस्त्यनेन पापं वा । 'कर्त्ता यज्ञो द्रव्याणामन्नसामर्थ्याद्बुविषस्य सारभूतात्'—इति माधवः ।

* "यज्ञनी" निरु० ७, ३० । "ऽक्षिया" निरु० ७, २७. २९. ९, ३७. १०, ८ ।

† पृ० १५ ।

‡ निरु० १, ८. ६, ११. १०, १९ "अध्वर्युः" निरु० १, ८ ।

§ पृ० १५ ।

"मेधं जुषन्त वह्नयः (ऋ० सं० १,१,६,३)"—"तं मेधेषु प्रथमं देवयन्तीः (ऋ० सं० १,५,२५,३)"—इति निगमौ॥

(५) विदथः*। 'विद ज्ञाने (अदा० प०)', 'विद विचारणे (रु० आ०)', 'विदॢ लाभे (तु० उ०)', 'विद सत्तायाम् (दि० आ०)'। 'रुदिविदिभ्यां ङित् (उ० ३,११२)'—इति अथ-प्रत्ययः। ज्ञायते हि यज्ञः, लभते हि दक्षिणादिकञ्च, विचार्यते हि विद्वद्भिः, भावयत्यनेन फलम्। "अधा जिह्वा विदथमावदाथः (ऋ० सं० ८,३,२५,२)"—इति निगमः॥

(६) नार्यः। 'णीञ् नये' क्र्यादिः। 'ऋहलोर्ण्यत् (३,१,१२४)'। नयति स्वर्गं कर्त्तारम्, नीयतेऽन्नमनुष्ठानेन वा। निगमोऽन्वेषणीयः॥

(७) सवनम्†। 'षुञ् अभिषवे (स्वा० उ०)'। 'सुयुरुवृभ्यो युच् (उ० २,७०)'। अभि षूयतेऽस्मिन् सोमः। "उप नः सवना गहि (ऋ० सं० १,१,७,२)"—इति निगमः॥

(८) होत्रा‡। व्याख्यातं वाङ्नामसु (८८पृ०)। हूयतेऽस्मिन् हविः। "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० सं० ७,६,१८,४)"—इति निगमः॥

(९) इष्टिः। यजेरिषेर्वा क्तिन्। यजतेर्यज्ञवदर्थः, इष्यते हि सः। 'इष्टिशब्दो हविर्यज्ञे आद्युदात्तः, यज्ञमात्रे नोदात्तः'—इति माधवः। "यथातनुष्मसीष्टये (ऋ० सं० १,२,३०,२)"—इति निगमः॥

* प० ४,२। निरु० १,७. २, १२. ६, ७. ८, १२. ९, २।
† निरु० ४,२५।
‡ पृ० १,११।

(१०) देवताता*। 'दिवु क्रीड़ादौ (दि०प०)'। दीव्यन्ति स्तुवन्त्यत्र देवताः। देव एव देवता। 'सर्वदेवात्तातिल् (४,४,१४२)' सप्तम्या आकारः (७,१,३९)। "त्रिर्देवताता त्रिरुताहत धियः (ऋ० सं० १,३,४,५)"—"आ देवताता हविषा विवासति (ऋ० मं० १,४,२३,१)"—इति निगमौ॥

(११) मखः†। 'मह पूजायाम् (भू०प०)'। 'महेः ख च' ख-प्रत्ययो ह-लोपश्च। महन्त्यत्र देवताः। यद्वा; 'मख गतौ' घः। वेनत्रदर्यः। "मखः महस्वदर्चति (ऋ० मं० १,१,१२,३)"—"विवक्ति वर्हिः स्वपस्य ते मखः (ऋ० मं० ७,६,१०,१)"—इति निगमौ॥

(१२) विष्णुः‡। 'विष्लृ व्याप्तौ (जु०उ०)'। 'विषेः किच्च (उ० ३,३७)'—इति नु-प्रत्ययः। विशेषेणाप्नोति स्वर्गम्। "जगसि घृतमानसा जुष्टौ विष्णवे तस्यास्ते ( ? )"—इति निगमः॥

(१३) इन्दुः§। 'उन्दी क्लेदने (रु०प०)'। 'उन्देरिच्चादेः (उ० १,१२)'—इत्युप्रत्ययः। क्लिद्यते सूयतेऽस्मिन् सोमः। निगमोऽन्वेषणीयः॥

(१४) प्रजापतिः‖। प्रजाशब्दः पतिशब्दश्च अपत्यनामसु (१७५ पृ०) ईश्वरनामसु (२९१पृ०) च व्याख्यातौ। प्रजापतिर्ब्रह्मादि-हेतुत्वात्। निगमोऽन्वेषणीयः॥

* निरु० ११, ४४।
† निरु० ७ ११।
‡ प० ४, २. ५, ६। निरु० १२. १८
§ पु० १, ११।
‖ प० ५, ४। निरु० १०, ४२।

(१५) घर्मः* । 'घृ क्षरणदीप्त्योः (भ्वा०प०)' । म-प्रत्ययः । क्षरत्यस्मिन् सोमः, दीप्यन्तेऽत्राग्नय इति वा । "धर्मविद्भिर्द्रविणं ... ... व्यानट् (ऋ०सं०८,२,१६,१)"—"मर्त्यैः कव्यैः पितृभिर्धर्मणा (ऋ०सं०७,६,१८,४)" —इति निगमौ ॥

इति पञ्चदश यज्ञनामानि ॥ १७ ॥

**भारताः[१] । कुरवः[२] । वाघतः[३] । वृक्तबर्हिषः[४] । यतस्रुचः[५] । मरुतः[६] । सबाधः[७] । देवयव[८] इत्यष्टा-वृत्विङ्नामानि† ॥ १८ ॥**

(१) भारताः । 'भृञ् भरणे (भ्वा०उ०)' । 'भृमृदृशियजिपर्वि-पच्यमितमिनमिहर्यिभ्योऽतच् (उ०३,१०७)' । 'यज्ञद्वारेण नूनं, सम्भरतीति' स्कन्दस्वामी । बिभर्त्तेर्वातच् । 'पुष्यन्ते' दक्षिणाभिः । "अमन्थिष्टां भारता (ऋ०सं०३,१,२३,२)"—इति निगमः ॥

(२) कुरवः‡ । 'कॄ विक्षेपणे (तु०प०)' । 'कृग्रोरुच्च (उ०१,२४)' —इति कु-प्रत्ययः । विक्षिपत्यहानि कर्माणि । यद्वा; करोतेर्बाहु-लकादुलम् । कुर्वन्ति कर्माणि । निगमोऽन्वेषणीयः ॥

* पृ० १,९ ।
(१) "भरता" काशि स्थितेषु सर्वत्र ।
(७) "सबाधः । मरुतः"—इति ग ।
† "इत्यृत्विजाम्" ग ।
‡ निघ० ६,२२ ।

(३) वाघतः* । व्याख्यातं मेधाविनामसु (२४४ पृ०) । वहन्ति हवींषि । "उप ब्रह्माणि वाघतः (ऋ० सं० १,१,५,२)"—इति निगमः ॥

(४) वृक्तबर्हिषः । 'वृजी वर्जने (रु० प०)' । अत्र छेदनार्थः । निष्ठा; 'श्वीदितो निष्ठायाम् (७,२,१४)'—इतीट्-प्रतिषेधः । बर्हिः-शब्दो व्याख्यातो महन्नामसु (१२३ पृ०) । वृक्तं बर्हिर्यैः । "नासत्या वृक्तबर्हिषः (ऋ० सं० १,१,५,३)"—इति निगमः ॥

(५) यतस्रुचः । 'यमु उपरमे (भू० प०)' निष्ठा; 'स्रु गतौ (भू० प०)' । 'स्रुवः कः-चिक् च (उ० २,५७-५८)'—इति चिक् प्रत्ययः, इकार-ककारावित्सञ्ज्ञकौ । उद्यताः स्रुचो जुह्वाद्या यैः । निगमोऽन्वेषणीयः ॥

(६) मरुतः† । व्याख्यातं हिरण्यनामसु (२२ पृ०) । "बृहदिन्द्राय गायत मरुतः (ऋ० सं० ६,६,१२,१)"—"आर्चन्नत्र मरुतः सस्मिन्नाजौ (ऋ० सं० १,४,१४,५)"—इति निगमौ ॥

(७) सबाधः । 'बाधृ लोडने (भू० आ०)', क्विप् । बाधा सह वर्त्तते इति सबाधः । राक्षोघ्नमन्त्रोच्चारणं रक्षोबाधनात् । "तं सबाधो यतस्रुचः (ऋ० सं० ३,१,२९.१)"—इति निगमः ॥

(८) देवयवः‡ । देव-शब्दोपपदात् यातेः 'मृगय्वादयश्च (उ० १,३६)'—इति कु-प्रत्ययान्तो निपात्यते । देवान् यान्ति मनसा हविःप्रदानसमये । निगमोऽन्वेषणीयः ॥

इत्यष्टावृत्विङ्नामानि ॥ १८ ॥

---

* पु० १५ ।

† पु० १, २ ।

‡ 'देवया' निघ० १२, ५ ।

ईमहे[1]। यामि[2]। मन्महे[3]। दद्धि[4]। शग्धि[5]। पूर्द्धि[6]। मिमिड्ढि[7]। मिमीहि[8]। रिरिड्ढि[9]। रिरीहि[10]। पीपरत[11]। यन्तारः[12]। यन्धि[13]। इषुध्यति[14]। मदेमहि[15]। मनामहे[16]। मायत[17] इति सप्तदश याच्ञाकर्माणः* ॥ १९ ॥

(१) ईमहे। 'ई गतौ' दिवादिः। 'बहुलं छन्दसि (२,४,७३)'—इति श्यनो लुक्। "इतो वा सातिमीमहे (ऋ० सं० १,१२,५)"—इति निगमः ॥

(२) यामि। 'या प्रापणे' अदादिः। "तत्त्वा यामि ब्रह्मणा वन्दमानः (ऋ० सं० १,२,१५,१)"—इति निगमः ॥

(३) मन्महे। 'मनु अवबोधने' तनादिरात्मनेपदी। 'लोपश्चास्यान्यतरस्यां म्वोः (६,४,१०७)'—इति उ-प्रत्ययस्य लोपः। "वयं हि ते अमन्महि (ऋ० सं० १,२,३१,६)"—इति निगमः। 'ईमहे, यामि, मन्महे, इति याच्ञाकर्मसु पाठात्'—इति स्कन्दस्वामी ॥

(४) "दद्धि" ग. C. D. F।

(६) इतोनन्तरमिहैव "रिरीहि (१०)" ग।

(७) दृश्यते चैतत् "रिरिड्ढि" इत्यनन्तरम् ग।

(१३) "यन्धि" ग. C. D. F।

* "इति याञ्चा कर्माणः" ग। "इति पञ्चदश याञ्चाकर्माणः"—इति च। तत्र तत्र च "मिमिड्ढि", "रिरिड्ढि" इति।

† निघ० २, १।

‡ "मन महे" निघ० ६, २५।

(४) दद्धि। 'दद दाने' भ्वादिः। व्यत्ययेन शपः श्लुः। 'हुझल्भ्यो हेर्धिः (६,४,१०१)'। भाष्यं द्रष्टव्यम् ॥

(५) शग्धि*। 'शक्लृ शक्तौ' स्वादिः। पूर्ववत् श्लुः। 'झलाञ्जश् झशि (८,४,५३)' ॥

(६) पूर्द्धि†। 'पॄ पालनपूरणयोः' क्र्यादिः प्वादिश्च। व्यत्ययेन शप्, 'बहुलं छन्दसि (२,४,७३)'-इति लुक्। 'श्रुशृणुपॄकृवृभ्यश्छन्दसि (६,४,१०२)'—इति धि-भावः। "शग्धि पूर्द्धि प्र यंसि च (ऋ०सं०१,३,२५,४)"—"रायस्पूर्द्धि स्वधावोस्ति (ऋ०सं० १,२,१०,२)"—इति निगमौ। "शक्तौ भव यजमानस्य चोदिता (ऋ०सं० १,४,१०,३)"—इत्यत्र, "शग्धि पूर्द्धि (ऋ०सं०१,३, २५.४)"—इत्यत्र च 'शग्धिपूर्द्धीति याच्ञाकर्मसु पाठात् शक्तिपृणाती याच्ञाकर्माणौ'-इति स्कन्दस्वामिभाष्ये उक्तम् ॥

(७) मिमिड्ढि। 'मिह सेचने (भ्वा०प०)'। 'बहुलं छन्दसि (२,४,७६)'—इति शपः श्लुः, छान्दसत्वात् ढलोपाभावश्च ॥

(८) मिमीहि‡। 'माङ् माने' जुहोत्यादिः। व्यत्ययेन हिः। 'भृञामित् (७,४,७५)'। 'ई हल्यघोः (६.४,११३)'। "यत् सीं वरिष्ठे बृहती विमिन्वन् (ऋ०सं० ३,८,८,१)"—इत्यत्र 'मिमीहि इति याच्ञाकर्मसु पठ्यते, तस्येदं रूपम्; विविधं याचन्'—इति हरदत्त-भाष्ये दृष्टम् ॥

* "शेकुः", "आशेकुः" निघ० ५, २५. १२. २२. ७, १० ।

† निघ० ४, २ ।

‡ निघ० "अमिमीत" ९, १९. "मिमाम" ८, १२. "अमिमीत" ८, २१ ।

(९) रिरिड्ढि । 'रिह कत्थने' तौदादिकः* । पूर्ववत् श्लुः, ढलोपाभावश्च ॥

(१०) रिरीहि । 'रीङ् गतौ' । व्यत्ययेन परस्मैपदं, हौ शपः श्लुः । "प्रजावती रिन्द्रा गोष्ठे रिरीहि (ऋ० सं० ८,८,२७,३)"—इति निगमः ॥ 'सङ्गायेत्यर्थमवोचद्' भट्टभास्करमिश्रः ॥

(११) पीपरत्† । पृणातेर्णिचि, लुङि, उपधाह्रस्वत्वे, द्वित्वे, सन्वद्भावादित्वे, 'दीर्घो लघोः (७,४,९४)', "ऋतश्च (७,४,९२)', 'बहुलं छन्दस्यमाङ्योगेऽपि (६,४,७५)'—इत्यड्भावः ॥

(१२) यन्तारः । 'यमु उपरमे (भ्वा० प०)' । तृच् । जस् । "इन्द्र इन्द्रायः चयति अयन्ता (ऋ० सं० १,४,११,४)"—इति निगमः ॥

(१३) यन्धि‡ । 'यमु उपरमे (भ्वा० प०)' । पूर्ववच्छपो लुक्, हेः 'वा छन्दसि (३,४,८८)'—इति हेरपित्त्वे, 'अङितश्च (६,४,१०३)'—इति धीभावो मकारलोपाभावश्च । "उरु णो यन्धि जीवसे (ऋ० सं० ६,५,२,२)"—इति निगमः ॥

(१४) । इषुध्यति । 'इषु चरणे' कण्ड्वादिः । "विश्वौराय इषुध्यति (ऋ० सं० ४,३,४,१)"—इत्यत्र 'इषुध्यतिर्याच्ञाकर्मणः'—इत्युवटः ॥

(१५) मदेमहि§ । 'मदी हर्षग्लपनयोः' स्वरितेत्, लिङ् ॥

(१६) मनामहे‖ । 'म्ना अभ्यासे' व्यत्ययेनात्मनेपदम्, पाघ्रा-

* नाद्यतेऽयं धातुपाठे, तत्र तु 'रिफ' इति पाठः ।

† निघ०—"अप्राथि" ९, २९. 'पारयन्ती' ९, १८. "आप्राः" १२, १६ ।

‡ निघ०—"यच्छत" १२, ४५. "यच्छताम्" ९, २८. "यंसन्" ९, १९ ।

§ पृ० १४ ।

‖ पृ० इहैव (२) ।

भ्याम्यामा (७,३,७८)'—इत्यादिसूत्रेण मनादेशः । "सुम्नयो मना-
महे (ऋ० सं० १,२,२१,३)"—इति निगमः ॥

(१७) मायते । नैरुक्तधातुः ॥

इति सप्तदश याच्ञाकर्माणः ॥ १९ ॥

दाति(१) । दाशति(२) । दासति(३) । राति(४) । रासति(५) ।
पृणक्षि(६) । पृणाति(७) । शिक्षति(८) । तुञ्जति(९) । मंह-
त(१०) इति दश दानकर्माणः* ॥ २० ॥

(१) दाति† । 'दाप् लवने' अदादिः, ददातेर्वा 'बहुलं छन्द-
सि (२,४,७३)'—इति शपोलुक् । "दाति प्रियाणि चिद्वसु (ऋ०
सं० ३,५,८,३)"—इति निगमः ॥

(२) दाशति‡ । 'दाशृ दाने' स्वरितेत् । "धनं यस्तै दुदाश-
मर्त्यः (ऋ० सं० १,३,८,४)"—इति निगमः ॥

(३) दासति§ । 'दासृ दाने' स्वरितेत् ॥

(४) राति‖ । 'रा दाने' अदादिः । "तस्य मे रास्व तस्य ते
भक्षणाय (  ?  )"—इति निगमः ॥

(६) "पृणक्षि" ग. C. D. F ।
(७) इतोऽनन्तरं "इषति"—इत्यधिकम् ग. C. D. F ।
(९) नास्त्येतत् पदम् ग. C. D. F ।
* "इति दानकर्माणः" ग ।
† निरु०—"दाः" १०, १९. "दातवे" ४, १५ ।
‡ निरु०—'दाशति" १, ७. "ददाशः" ११, १४. "दाशुषे", "दाशुषः",
"दाश्वांसः" ११, ११. १२, ४० ।
§ निरु०—"दासः" "दासपत्नी" २, १० ।
‖ पु० १, १४ ।

(५) रासति। 'रासृ शब्दे' व्यत्ययेन परस्मैपदम्। "स नो रास-च्छुरुधश्चन्द्राग्राः (ऋ० मं० ४,८,६,२)"—इति निगमः॥

(६) पृणक्ति। 'पृची सम्पर्के' रुधादिः। "पृणक्षि मामिमं क्रतुम् (ऋ० मं० ८,१,२८,५)"—इति निगमः॥

(७) पृणाति। 'पॄ पालनपूरणयोः' क्र्यादिः स्वादिश्च। "यः पृणाति स ह देवेषु गच्छति (ऋ० मं० १,१,२०,५)"—इति निगमः॥

(८) शिक्षति*। शकेः 'सनि मीमा (७,४,५४)'—इति इस्। 'अत्र लोपोऽभ्यासस्य (७,४,५८)', संयोगादिलोपः (८,२,२९) "यस्तुभ्यं दाशाद् यो वा ते शिक्षात् (ऋ० मं० १,५,१२,३)"—इति निगमः। 'शिक्षतिर्दानकर्मा पठितः'—इति स्कन्दस्वामिभाष्यम्॥

(९) तुञ्जति†। 'तुजि हिंसायाम् पालने च'। "तुञ्जे तुञ्जे य उत्तरे (ऋ० मं० १,१,१४,२)"—इति निगमः॥

(१०) मंहते‡। 'वृहि महि वृद्धौ' आत्मनेपदी। "स्तोतृभ्यो मंहते मघम् (ऋ० मं० १,१,२१,३)"—इति निगमः॥

इति दश दानकर्माणः॥ २०॥

## परिस्रव(१)। पवस्व(२)। अभ्यर्ष(३)। आशिष(४) इति चत्वारोऽध्येषणाकर्माणः§॥ २१॥

---

* निरु० १,७।

† पु० २,१५।

‡ निरु० १,७।

(१) "परिश्रव" ख।

§ "इत्यध्येषणाकर्माणः" ग।

धन्व[27]। सिनम्[28]। इत्था[29]। सचा[30]। चित्[31]। आ[32]। द्युम्नम्[33]। पवित्रम्[34]। तोदः[35]। स्वञ्चाः[36]। शिपिविष्टः[37]। विष्णुः[38]। आघृणिः[39]। पृथुज्रयाः[40]। अथर्युम्[41]। काणुका[42]। अध्रिगुः[43]। आङ्गूषः[44]। आपान्तमन्युः[45]। श्मशा[46]। उर्वशी[47]। वयुनम्[48]। वाजपस्त्यम्[49]। वाजगन्ध्यम्[50]। गध्यम्[51]। गधिता[52]। कौरयाणः[53]। तौरयाणः[54]। अह्रयाणः[55]। हरयाणः[56]। आरितः[57]। व्रन्दी[58]। निष्षपी[59]। तूर्णाशम्[60]। क्षुम्पम्[61]। निचुम्पुणः[62]। पदिम्[63]। पादुः[64]। वृकः[65]। जोषवाकम्[66]। कृत्तिः[67]। श्वघ्नी[68]। समस्य[69]। कुटस्य[70]। चर्षणिः[71]। शम्बः[72]। केपयः[73]। तूतुमाकृषे[74]। अंसत्रम्[75]। काकुदम्[76]। बीरिटे[77]। अच्छ[78]। परि[79]। ईम्[80]। सीम्[81]। एनम्[82]। एनाम्[83]। सृणि[84]रिति चतुरुत्तरमशीतिः पदानि*॥२॥

(१) सस्निम्†। 'ष्णा वेष्टने (अदा० प०)', 'ष्णा शौचे (अदा० प०)'। 'आदृगमहनजनः किकिनौ लिट् च (३,२,१७१)'—इति

(२८) "सितम्" क।
(४६) "श्मशा" च।
(५१) "गन्ध्यम्" ग।
(५६) नास्त्येतत् क-पुस्तके।
(८४) "सृणिः" ग।
* इतीत्यादि न विद्यते ग-पुस्तके।
† निघ० ५, १।

क्विन् प्रत्ययः । लिड्वद्भावाद् द्विर्वचनादिः । 'आतोलोप इटि च (६,४,६४)' । अववेष्टयिताभिरन्तःप्रविष्टाभिः शोषितोवा मेघः वव्रिः । "वव्रिंमविन्दद्वरणे नदीनाम् (ऋ० सं० ८,७,२७,७)" ॥

(२) वाहिष्ठः*। वोढृ-शब्दात् 'तुश्छन्दसि (५,३,५९)'—इतीष्ठनि 'तुरिष्ठेमेयःसु (६,४,१५४)'—इति तृचोलोपः । वाहिष्ठ-इति उपधादीर्घश्छान्दसः । अतिशयेन बोढा वाहिष्ठः । "वाहिष्ठोवां हवानाम् (ऋ० सं० ६,२,२९,१)" ॥

(३) दूतः† ।

(४) वावशानः‡ । 'वश कान्तौ (अदा० प०)', 'वाशृ शब्दे (दि० आ०)' । 'लिटः कानज् वा (३,२,१०६)' । द्विर्वचनादिः । 'तुजादीनां दीर्घोऽभ्यासस्य (६,१,७)' । 'न वशः (६,१,२०)'—इति यङि लिटि सम्प्रसारणनिषेधाद् विन्-प्रत्यये कानज्यपि न भवति, वाश्यतेरुपधाह्रस्वत्वञ्च व्यत्ययेनैव । यङ्लुकि शानचि रूपमिति श्रीनिवासः । "सुप्तस्वसृरहणीर्वावशानः (ऋ० सं० ७,५,३३,५)" ॥

(५) वार्यम्§ । 'वृञ् वरणे (स्वा० उ०)' । 'एतिस्तुशास्वृदृजुषः क्यप् (३,१,१०९)'—इति क्यपि प्राप्ते 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति ण्यत् । 'क्यब्विधौ वृ-ग्रहणे वृञोग्रहणमिष्यते न वृङः'—इति वैयाकरणाः । अथवा ऽऽवश्यकार्थोण्यत्-प्रत्ययोद्रष्टव्यः ।

* निघ० ५, १ ।

† निघ० ५, १. ९, २२ । टीकायां न दृश्यते, तत्र लेखकप्रमाद एव हेतुः सम्भवे ।

‡ निघ० ५, १. "उमवावशीनाम्" ११, २ ।

§ निघ० ५. १ ।

वार्यं वरणीयम्, अतिशयेन वरं श्रेष्ठं वा। "तद् वार्यं वृणीमहे (ऋ० सं० ६,२,२३,३)"॥

(६) अन्धः* । व्याख्यातमन्ननामसु (२०४पृ०)। "आमत्रेभिः सिञ्चता मद्यमन्धः (ऋ० सं० २,६,१३,१)"॥ तमोऽप्यन्धः। अत्र ध्यायतिर्नञ्पूर्वः अविद्यमानं ध्यानं दर्शनमस्मिन् आलोकाभावात्। चक्षुर्हीने अकारान्तमिदम्। "पश्यदक्षण्वान् वि चेतदन्धः (ऋ० सं० २,३,१७,१)"—इति चक्षुर्हीनस्य॥

(७) असश्चन्ती† । सश्चतिर्गतिकर्मा, अत्र सश्चतिरस्यतेर्वार्थे वर्त्तते। शतरि ङीपा नञ्समासः। परस्परेण सम्मिलितभवन्त्यौ। अवक्षिपन्त्या वाश्रिते वा द्यावापृथिव्यावुच्येते। "असश्चन्ती भूरिधारे पयस्वती (ऋ० सं० ५,१,१४,२)"॥

(८) वनुष्यति‡। व्याख्यातं क्रुध्यतिनामसु (२३३पृ०)। अत्र तु हन्त्यर्थः। "वनुयाम वनुष्यतः (ऋ० सं० २,१,२१,१)"॥

(९) तरुष्यति§। नैरुक्तधातुर्गत्यर्थः। 'मृत्युं तरति', 'ब्रह्महत्यामुत्तरन्ति'। विनाशयन्ति-व्यपोहन्तीति हन्त्यर्थे तरतेः प्रयोग-दर्शनात् तरतेरुकारषकारावुपजनावित्याहुः। "इन्द्रेण युजा तरुषेम वृत्रम् (ऋ० सं० ५,४,१५,२)"॥

(१०) भन्दनाः‖। भन्दतेः स्तुतिकर्मणो 'युच् बहुलम् (उ० २,

---

* पु० २, ७।
† पु० २, १४।
‡ पु० २, १९।
§ निरु० ५, २।
‖ निरु० ५, २। "भन्दते" निघ० १, ११।

७४)'—इति युच् टाप् अम् । मन्दना स्तुतिरित्यर्थः । "समन्दना उदियर्त्ति प्रजावतीः (ऋ० सं० ७,२,१०,१)"॥

(११) आहनः*। आहन्तेरसुनि आहन्ति आहनाः सम्बुद्धौ आहनः असह्यवचनाद्वाहन्तुः । "अन्येन मदाहनो याहि तूयम् (ऋ० सं० ७,६,७,२)" ॥

(१२) नदः† । व्याख्या i स्तोतृनामसु (३४५पृ०) । "नदस्य मा रुधतः काम आगन् (ऋ० सं० २,४,२२,४)" ॥

(१३) सोमो अक्षाः‡ । अश्नोतेर्लुङि सिचि 'उदितो वा (७,२,५६)'—इति अनिट् पक्षे आड़ागमे च आष्टेति, इट्पक्षे आशि-ष्टेति प्राप्ते व्यत्ययेन तस्य स्थाने सिपि षस्य कादेशे आकारइतश्चविस-र्जनीयौ। चियतेर्वा अक्षैषमिति प्राप्ते व्यत्ययेन वर्त्तमाने लुट्, तिपः स्थाने सिप्, क्लेरङ्, धातोष्टिलोपः, दीर्घश्च, इतश्चविसर्जनीयौ । चिय-तीत्यर्थः । "अनूपे गोमान् गोभिरक्षाः (ऋ० सं० ७,५,१३,४)" ॥ 'क्षर सञ्चलने (भू० प०)' अक्षारीदिति प्राप्ते तिपि सिचि वृद्धौ बहु-लम्छन्दसीतीडभावे इतस्य लोपे संयोगान्तस्य लोपे रात्सस्येति सलोपे रेफस्य विसर्जनीयः आडागमः क्षरतीत्यर्थः । "सोमो दुग्धा-भिरक्षाः (ऋ० सं० ७,५,१३,४)" । 'सर्वे क्षियति-निगमाः'—इति शाकपूणिर्निवाह उक्तः ॥

(१४) स्वात्रम्§ । व्याख्यातं धन-नामसु (२२३पृ०) । इह

---

* पु० १ । निरु० ४, १५ ।

† पु० ३, १६ ।

‡ निरु० ५, ३. 'विक्षरन्ति' ११, ४१ । 'अक्ष' प० ५, ३. निरु० ९, ७ ।

§ पु० ३, १० । निरु० ५, ३ ।

विप्रनाम। "आग्रमग्निरङ्गिरा जातवेदाः (ऋ० सं० ८,४,१०,४)"॥

(१५) ऊतिः*। अवतेः 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च (३,३,९७)'—क्तिन्नुदात्तो निपात्यते। ज्वरत्वरेत्यूठ्। अवनं रक्षणं तर्पणं वा। "आ त्वा रथं यथोतये (ऋ० सं० ६,५,१,१)"॥

(१६) हासमाने†। हासतिः स्पर्द्धायां हर्षणे वा वर्त्तते। स्पर्द्धमानौ परस्परं हृष्यन्तौ वा। "अश्वे इव विषिते हासमाने (ऋ० सं० ३,२,१२,१)"॥

(१७) पड्भिः‡। पिबतः स्पाशयते वा बन्धनार्थात् स्पृशते वा 'सर्त्तेरटिः (उ० १,१३३)'—इति बाहुलकादटिप्रत्ययो धातूनां पकार-भावश्च। पानैः सोमस्य§। यद्वा; स्पाशनैर्बन्धनैः स्पर्शनैः स्तुति-लक्षणैर्गुणानाम्। "वभ्रुकः पड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८,५,१५,६)"॥

(१८) ससम्‖। 'षस स्वप्ने (अदा० प०)'। पचाद्यच् (३,१,१३४)। स्वपितीति ससम्, माध्यमिकं ज्योतिरुच्यते, वर्षाव्यतिरिक्तकालेऽदर्शनात् स्वापव्यपदेशः। "सुसं न पक्क मविदच्छुचन्तम् (ऋ० सं० ८,३,१४,३)"॥

(१९) द्विता¶। द्विशब्दात् 'सङ्ख्याया विधार्थे धा (५,३,४२)।

* निघ० २, ९. ४, २।
† निरु० ५, २. ९. २९।
‡ निरु० ५, २। वृ० आ० ६, १, ११।
§ सायणभाष्ये तु सर्वत्रैव 'पड्भिः पादैः' इति व्याख्यानम्। महीधरोऽपि तथैव य० वा० सं० २२. ११।
‖ प० २, ७. निघ० ४, २।
¶ निघ० ५, २।

धकारस्य तकारेण व्युत्पत्तिः। द्विधेत्यर्थः। "द्विता च सत्ता स्वधया च शम्भुः (ऋ० सं० २,१,१७,५)"॥

(२०) श्राः*। 'वृञ् वरणे (स्वा० उ०)'। 'गेहे कः (३,१,१४४)'—इति बाहुलकात् कः, यथादेशः, जम्। वरितारोऽन्वेष्टारो मृगादीनाम्। श्वात्यस्थानीयाः लुब्धकादयः। "मृगं न श्रा मृगयन्ते (ऋ० सं० ५,७,१८,१)" ॥

(२१) वराहः†। व्याख्यातो मेघनामसु (६५पृ०)। निगमश्च तत्रैव दर्शितः॥

(२२) स्वसराणि‡। अहर्नामसु व्याख्यातोऽयं शब्दः (५६पृ०) निगमोऽपि तत्रैव दर्शितः॥

(२३) शर्य्याः§। अङ्गुलीनामसु व्याख्यातः (१६३पृ०)। अत्र इषव उच्यन्ते। "शर्य्याभि र्न भरमाणो गभस्त्योः (ऋ० सं० ७,५,२२,५)" ॥

(२४) अर्कः‖। अर्चतेः 'कृदाधारार्चिकलिभ्यः कः (उ० ३,३८)'—इति कः। अर्चति जीवयतीत्यच मन्त्रम्। अन्ये मृग्यमुदाहरणम्। अतएव केचिन्न पठन्त्यत्र अर्कम्। वृक्षोऽप्यर्चति। "अर्कपर्णे जुहोति ( ? ०)" ॥

(२५) पविः¶। व्याख्यातोवाङ्नामसु (८०पृ०)। रथनेमि-

* निघ० ५.२।
† पु० १, १०. ४, १। निघ० ५, ४. "वराहः" ५, ४।
‡ पु० १, ९. २, ४. ४, २। निघ० ५, ४।
§ पु० २, ५. निघ० ५, ४. १०, २९।
‖ पु० २, ७. २७. ४, २। निघ० ५, ४. ६, २२।
¶ पु० १, ११. २, २०। निघ० ५, ५. १२, २०।

यज्ञस्य पविः। "उत पृव्या रथानाम् (ऋ॰ सं॰ ४, ३, ८, ४)"। यज्ञस्य दर्शितः॥

(२६) वक्षः*। वहतेः 'वहः सुट् च'†—इत्यसुन्। मध्यं काय उपरि कायस्य प्राप्तं प्रापितं वेत्यर्थः। उरइत्युच्यते। "उपो अदर्शि शुन्ध्युवो न वक्षः (ऋ॰ सं॰ २, १, ७, ४)"॥

(२७) धन्व‡। व्याख्यातमन्तरिक्षनामसु (२७पृ॰)। सएव निगमः॥

(२८) सिनम्§। व्याख्यातमन्ननामसु (२०७पृ॰)। सएव निगमः॥

(२९) इत्था‖। इदं-शब्दात् 'था हेतौ च छन्दसि (५, ३, २६)'—इति हेतौ प्रकारवचने थाल्-प्रत्ययः। एतेर्वा थाल् 'प्रत्न-पूर्वविश्वेमात्थाल् छन्दसि (५, ३, १११)'—इति इवार्थे थाल् विहितो व्यत्ययेन प्रकृतिभूतादिदं-शब्दादपि भवति। अनेन हेतुना, अनेन प्रकारेण, अयमेवेति वार्थः। "इत्था चन्द्रमसो गृहे (ऋ॰ सं॰ १, ६, ७, ५)"॥ 'अमुथा (निरु॰ ५, ५)'—इत्यर्थकथनं कथमिति निरूपणीयम्, इत्थाविति स्कन्दस्वामिग्रन्थश्च निरूपणीयः॥

(३०) सचा¶। सहार्थोऽयं निपातः। "आदित्यैरुद्रैर्वसुभिः सचा भुवः (ऋ॰ सं॰ ६, ३, १४, १)"॥

* निरु॰ ४, १६. ५, ५।
† 'वहिहाधाञ्भ्यश्छन्दसि'—इति सि॰ कौ॰ उ॰ ४, २, १५।
‡ पृ॰ १, ३. ४, २। निरु॰ ५, ५. ६, १८।
§ पृ॰ २, ७। निरु॰ ५, ५।
‖ पृ॰ ७, १०। निरु॰ ४, २५. ५, ५. ६ ३. ११, २०।
¶ निरु॰ ५, ५. ११, ५०।

(३१) चित्*। निपातोनाम च। निपातोऽनुदात्तः। 'चिदित्येषोऽनेककर्मा'—इत्यादिना व्याख्यातः (निरु० १,४)। "चतुरश्चिद्ददमानात् (ऋ० सं० १,३,२३,४)"—इत्युपमायाम्। अवकुत्सनादिष्वपि निगमा अन्वेष्याः। नाम तु चिनोतेश्चेतयतेर्वा क्विपि चिदिति भवति। चिता भागैः चौरादिभिः चिद्रूपा वा सोमक्रयण्युच्यते†। "चिदसि मनासि धीरसि (य० वा० सं० ४,१९)"॥

(३२) आ‡। 'आ इत्यर्वागर्थे'—इत्युपसर्गो व्याख्यातः (निरु० १,३)। "परा याहि मघवन्ना च याहि (ऋ० सं० ३,३,१९,५)"—इत्युपसर्गस्य। "जार आ भगम् (ऋ० सं० ७,६,१०,१)"—इत्युपमायाः। "आमेन्यस्य रजसो यदभ्र आँ अपः (ऋ० सं० ४,३,२,१)"—इत्यध्यर्थस्य॥

(३३) द्युम्नम्§। व्याख्यातं धननामसु (२२५ पृ०)। अत्र यशोऽन्नं वाभिधीयते। "अस्मे द्युम्नमधि रत्नं च धेहि (ऋ० सं० ५,३,९,३)"॥

(३४) पवित्रम्‖। पुनातेः 'पुवः सञ्ज्ञायाम् (३,२,१८५)'—'कर्त्तरि चर्षिदेवतयोः (३,२,१८६)'—इतीत्र-प्रत्ययः। मन्त्ररश्म्यापोऽग्निवायुसोमसूर्येन्द्राश्चाभिधेयाः। मन्त्रादिषु करणसाधनः
१२ १२ ११२२
अग्न्यादिषु कर्मसाधनः। "येन देवाः पवित्रेण (सा० सं० २,५,२,

* पु० २, १२। निघ० १, ४. ५, ५. १०, २९।
† ऐ० ब्रा० १, ५, १।
‡ पु० २, १२। निघ० १, २. ४. ५, ५. ७।
§ पु० २, १०। निघ० ५, ५।
‖ पु० १, १२। निघ० १, ६. ११, १२।

८,४)"—इति मन्त्रस्य। "गर्भस्त्रिपूतो नृभिरद्रिभिः सुतः (ऋ० सं० ७, ३, १८, ४)"—"पवित्रवन्तः परि वाचमासते (ऋ० सं० ७, २, ९८, ३)" इति च रश्मीनाम्। "शतपवित्राः स्वधया मदन्तीः (ऋ० सं० ५, ४, १४, ३)"—इत्यपाम्। "अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रन्ते मा पुनन्तु (निरु० ५, ६)—इत्यग्न्यादीनाम्॥

(२४) तोदः*। तुद्यते पुत्रपौत्रादिभिः स्वसमीहितसाधनाय। तुदेर्घञ्। यद्वा; 'देवसेवमेवादयः पचादौ द्रष्टव्याः'—इति पचाद्यच्। तुदति प्रेरयति कार्येषु कर्मकारानिति तोदो गृहस्थः। "तोदस्येव शरण आ महस्य (ऋ० सं० २, २, १९, १)"॥

(२६) स्वञ्चाः†। सुपूर्वादञ्चते रसुन्। सुगमन इत्यर्थः। "आ जुह्वानो घृतपृष्ठः स्वञ्चाः (ऋ० सं० ८, २, ८, १)"॥

(२७) शिपिविष्टः‡। (२८) विष्णुः§। एते विष्णोरादित्यस्य नामनी। शिपिविष्ट-शब्दोऽत्र सामर्थ्यादन्तर्णीतोपमानार्थः। 'यादृशः शेपो निर्वेष्टितः तादृश इति, शेपइव वेष्टन-त्वग्-विवर्जितः'—इति श्रीभोजनिवासः। उदितमात्रत्वादप्रतिपन्नरश्मिः। अपिवा; 'उपमानयोगात् कुत्सितार्थीयमिदम्'—इत्यौपमन्यवः। पृषोदरादित्वाद्रूपसिद्धिः अर्थसिद्धिश्च। 'प्रशंसानाम'—इत्याचार्यः। शिपिभीरश्मिभिराविष्टः शिपिविष्टः उपात्तरश्मिः॥ विष्णुशब्दो व्याख्यातो यज्ञ-

---

* निरु० ५, ५।

† निरु० ५, ७।

‡ निरु० ५, ७. 'शिपिः' ५, ८।

§ प० ५, ६। निरु० ५, ७. १२, १८।

नामसु (३४८पृ०), अर्थोऽनुगुणः । "किमित्ते विष्णो परि चक्ष्यं भत् प्रयद् ववक्षे शिपिविष्टो अस्मि (ऋ०सं० ५,६,२५,६)"—इत्युभयोर्निगमः ॥

(३९) आघृणिः*। घृणि-शब्दो ज्वलन्नामसु (१६१पृ०), क्रोधनामसु (२३४पृ०) च व्याख्यातः। आगतदीप्तिरागतक्रोधो वा । "आघृणे सं सचावहै (ऋ०सं० ४,८,२१,१)"—इति दीप्तिनामत्वे निगमः । क्रोधवचने त्वेभ्य उदाहरणं कर्त्तव्यम् ॥

(४०) पृथुज्रयाः†। 'ज्रि अभिभवे (भू०प०)'। असुनि बाहुलकात् ककारस्य रेफः। ज्रयो वेगः। पृथुः ज्रयो यस्य सः। वेगेनान्यानभिभविता महाजव इत्यर्थः। "पृथुज्रया अमिनादायुर्दस्योः (ऋ०सं० ३,३,१३,२ )" ॥

(४१) अथर्युम्‡ । अततेः । 'जनिमनियजिदमिभ्यः'—इति बाहुलकात् युस्-प्रत्ययो धातोरथरादेशश्च सकार इत्सञ्ज्ञकः। अतनं गमनमथर्युशब्देनोच्यते मत्वर्थीयस्य लुक् गमनवन्तमित्यर्थः । "दूरे दृशं गृहपतिमथर्युम्§ (ऋ०सं० ५,१,२३,१ )" ॥

(४२) काणुका‖। कान्त-क्रान्त-हत-शब्दानां काणु-भावः। तत्र स्वार्थे कः। शसि 'शेश्छन्दसि बहुलम् (६,१,७०)'—इति शेर्लुक्। कान्तानि प्रियाणि, क्रान्तानि आहवनीयं प्रति गतानि, ऋत्विक्

*, † निरु० ५, ९।
‡ निरु० ५, १५। "अथर्य" य० वा० सं० २, २०।
§ "अथर्युम्"—इति सामपाठः। छ० १, २, २, १०.—उ० २, १, ९, १
‖ निरु० ५, ११।

53

प्रति हुतानि, ऋत्विग्भिः संस्कृतानि सरांसि विशिष्यन्ते। यद्वा; काणुकेति इन्द्रविशेषणम्*। सोमस्य कान्तः वल्लभः। यद्वा; कणे-शब्दः 'कणेमनसी श्रद्धाप्रतिघाते'-इति, तस्य काणुकेति रूपं क्रिया-विशेषणञ्च। "इन्द्रः सोमस्य काणुका (ऋ० सं० ६,५,२८,४)"॥

(४३) अध्रिगुः†। अधिकृतो गौर्यस्मिन् मन्त्रे सोऽध्रिगुः। अधि-कृतशब्दस्याध्रिभावः, गोशब्दश्चात्र पशुमात्रोपलक्षकः छागादेर्व्वाधि-कृतत्वात्। यद्वा; अधिगवादिशब्दवत्त्वादध्रिगुः। अधिगवप्रभृतीना-मधिगोर्मुख्यत्वादध्रिगुशब्देनाभिधानम्। अग्निरिन्द्रश्चाध्रिगुशब्देनोच्यते। अधृतगमनः सर्वत्राप्रतिहतगतिरित्यर्थः। अत्राधृतशब्दस्याध्रिभावः। गमनं गौः। "अध्रिगोशमीध्वं (ऐ० ब्रा० २,१,७)"—"तुभ्यं श्चोतन्त्यध्रिगो शचीवः (ऋ० सं० ३,१,२१,४)"—"ऋचीषमाया-ध्रिगवओहम् (ऋ० सं० १,४२७,१)"—इति क्रमेण निगमाः॥

(४४) आङ्गूषः‡। आङ्पूर्वात् घुषेर्घञ्। आघुष्यते आघोषः। घो-कारस्य ङ्गूकारभावः§। 'आङोऽनुनासिकश्छन्दसि (६,१,१२६)'—इत्यनुनासिको व्यत्ययेन। स्तोमोऽभिधेयः। "एनाङ्गूषेण वयमिन्द्रवन्तः (ऋ० सं० १,७,९३,४)"॥

(४५) आपान्तमन्युः‖। आपादितमुत्पादितं संस्कारेण मन्यु-

---

* 'सैषक्षप्रसिद्धात्तु कालाभिमानीन्द्रः। त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्य सन्ति। तानेकरूपमनुभवन्तीति। एतत् सर्वमेकेन प्रतिधानेनापिबत्'—इति ऋ० सं० ६, ५, २०, ४र्थ मन्त्रव्याख्याने सायणः।

†, ‡ निघ० ५. ११।

§ 'वर्णात् कारः (३, ३, १०८. वा० २)'—इति 'वर्णस्वरूपे एव कारप्रत्ययो भवति, नात्र वर्णैकस्य स्वरूपभावं बोध्यमस्तीति कथङ्कारः कारप्रत्ययोऽध्येयः

‖ निघ० ५, १२।

दीप्तिर्यस्य । आपादित-शब्दस्याणन्तभावः, मन्युशब्दो व्याख्यातः क्रोधनामसु (१२५पृ०)। सोम उच्यते । इन्द्रस्यापान्तमन्युः । उत्पादितदीप्तिर्यस्य उत्पादितक्रोधो वा । "आपान्तमन्युस्तृपलप्रभर्मा (ऋ०सं०८,४,१४,५)" ॥

(४६) श्मशा* । श्म शरीरमश्नुते व्याप्नोति । श्म-शब्दोपपदात् अश्नोतेः पचाद्यच् । उदकवाहिनी कुल्या नाड़ी वान्नरसवाहिनी वा श्मशोच्यते। श्म अश्नुते इति निर्वचनं स्कन्दस्वामिग्रन्थे नास्ति श्रीनिवासमते तु स्व-शब्दोपपदात् अश्नोतेः पूर्ववदच् । स्वं शासती श्मशा, व-कारस्य मकारः।"आर्व श्मशा रुधः(ऋ०सं०८,५२६,१ )"॥

(४७) उर्वशी† । उरु-शब्दोपपदात् अश्नोतेर्वष्टेर्वा 'इन् सर्वधातुभ्यः (उ०४,११४)'-इतीन्प्रत्यये 'कृदिकारात्(४,१,४५.वा०)' —इति ङीप् वश्युत्तरपदे उरु-शब्दस्य उ-लोपश्च । उरु महत् स्थानं यशो वा व्याप्नोति। उरुभ्यां वा अश्नुते सम्भोगकाले कामिनं वशीकरोति, शिल्पोपचारकुशलेत्यर्थः । उरुर्वा वशः कामो यस्याः महेच्छेत्यर्थः । व्यधिकरणो बहुव्रीहिः । बहुषु कामो यस्याः, बहूनां वा कामो यस्याः । "उर्वश्या ब्रह्मन् मनसोऽधिजातः (ऋ०सं०५,२, २४,१ )" ॥

(४८) वयुनम्‡ । व्याख्यातं प्रज्ञानामसु(२२४पृ०)। कान्तिः प्रज्ञा वाभिधेया । "महत्तमोऽवयुनं ततन्वत् सूर्येण वयुनवच्चकार (ऋ०सं०४,६,११,२ )" ॥

* निघ० ४, १९ । 'श्मशानम' निघ० २, ४. अथ० सं० ५, २१, ८ ।
† प० ५, ५ । निघ० ४, १२. ११, २४; ४९ ।
‡ पु० २, ८ ।

(४९) वाजपस्त्यम्* । वाजशब्दो व्याख्यातोऽन्ननामसु (२०४ पृ०), पस्त्यशब्दो गृहनामसु (३०८पृ०) वाजस्य पस्त्यस्य परमसेतद्वाद्यमस्माजोमिति मन्यमाना यस्मिन् देवाः पतन्ति तम्। सोम उच्यते । "सनेम वाजपस्त्यम् (ऋ० सं० ७,४,२४,६)" ॥

(५०) वाजगन्ध्यम्† । 'गन्ध अर्दने' चुरादिरात्मनेपदी । अत्र मिश्रणार्थः । 'अचो यत् (३,१,९७)' । गृह्णतेर्गन्ध्यादेशो ण्यश्चेति केचित् । गृह्यमाणस्य मिश्रीभावात गन्ध्यं मिश्रयितव्यमित्यर्थः । "अश्याम वाजगन्ध्यम् (ऋ० सं० ७,४,२४,६ )" ॥

(५१) गध्यम्‡ । गृह्णातेः अघ्न्यादित्वाद् (उ० ४,१०८) यत्-प्रत्ययो धातोर्गध्यादेशश्च । ग्राह्यं गृह्यमाणस्य मिश्रीभावात् आत्मना मिश्रयितव्यं भक्षयितव्यमित्यर्थः। सोम उच्यते । "ऋज्रा वाजं न गध्यं युयूषत् (ऋ० सं० ३,५,१९,१ )" ॥

(५२) गधिता§ । ग्रहेः क्ते ग्रहस्य गधादेशः । "आगधिता परिगधिता" (ऋ० सं० २,१,११,६)" । आगृहीता, अवयवैर्गाढं परिष्वक्ता सतीत्यर्थः। परिगधिता, सर्वतोऽन्तर्वहिश्च मिश्रितः आलिङ्गन-चुम्बन-पुरःसरं प्राप्तप्रजनना सती सानुरागं सम्भोगाय परिगृहीता च सतीत्यर्थः॥

(५३) कौरयाणः‖ । कौरशब्दः कृतशब्दपर्यायः। शत्रून् प्रति कृतमेव यानमायानं नित्यं कृतमनः। यद्वा ; दत्त्यश्वो रथ इत्यादि-

* निघ० ४, १५ ।

†, ‡, §, ‖ निघ० ४, २५ ।

सङ्ग्रामं हतं कल्पितं प्रयाणाभिमुखं यानं वाहनं यस्य स कौरयाणः। "पाकं स्थामा कौरयाणः (ऋ० सं० ५,७,२९,१ )" ॥

(५४) तौरयाणः*। तूर्णशब्दस्य तौरभावः। तूर्णयानः॰ चिप्रगमन इत्यर्थः। "स तौरयाण उपयाहि यज्ञम् (ऋ० सं० ३,३,१६. ३वा०)" ॥

(५५) अहयाणः†। ह्रीत-शब्दस्य हभावः। अह्रीयमाणः अलज्जितमानः योह्यर्थिभ्यो दातुं न शक्नोति, स ह्रीतो गच्छति, तदस्य नास्ति, अतः स्नाघ्यगमन इत्यर्थः। "अनुष्टुपा कृणुह्यह्याणः (ऋ० सं० ३,४,२५,४)" ॥

(५६) हरयाणः‡। हरतेः पचाद्यचि हरः। शत्रूणां जीवितैश्वर्यादिहन्तृ यानं यस्य सः। शत्रु-जीवितादीनां हर्त्तेत्यर्थः। "रजतं हरयाणे (ऋ० सं० ६,२,२५,२)" ॥

(५७) आरितः§। 'ऋ गतौ'। 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनाम् (३,१,२२.वा०)'—इति विहितस्य यङः 'यङोऽचि च (२,४,७४)'—इत्यत्र बहुलानुवृत्तेरनैमित्तिके लुकि प्रत्ययलक्षणेऽत्र 'सन्यङोः (६,१,९)'—इति ऋ-इत्यस्य द्विर्वचने उरदत्त्वाभ्यासस्य ऋकारस्यात्वे 'रुग्रिकौ च लुकि (७,४,९१)'—इति लुकि निष्ठायां छान्दसत्वादिट्, ऋकारस्य यणादेशो 'रोरि (८,३,१४)' इत्यभ्यासरेफलोपे ढ्रलोपे पूर्वस्य (६,३,१११) दीर्घत्वे च आरित इति। णन्तस्य लुगभावश्छान्दसत्वात्। स्तोमान् प्रति गतो यज्ञं प्रति गत

---

*, †, ‡. § निरु० ५, १५।

इत्यर्थः। "य आशितः कर्मणि कर्मणि स्थिरः (ऋ॰ सं॰ १,७,१२,४)"॥

(५८) अन्दौ*। अन्दति नैरुक्तधातुः। 'गमेरिनिः (उ॰ ४,६)'—इति बाहुलकादिनिः। "शुष्णस्य चिद् व्रन्दिनो रोरुवद् वना (ऋ॰ सं॰ १,४,१७,५)"॥

(५९) निष्षपी†। 'षप समवाये (भू॰ प॰)'—इत्यस्मात् स्पृशत्यर्थे वर्त्तमानात् असुनि सकार-पकार-विपर्ययः। स्पर्शस्यात्र तद्धारकः सुखातिशयोऽभिप्रेतः। सपति स्पृशति सुखयतीति सपः, निःपूर्वः, निष्षपा इति प्राप्ते निष्षपी। * * *। "मा नो मघेव निष्षपी परा दाः (ऋ॰ सं॰ १,७,१८,५)"। यदा विनिर्गत-पसा इति पठन्ति,‡ तदा सपेरपि विपर्ययस्तादृगत् 'पुंसि सञ्ज्ञायां घः (३,३,११८)'। अर्थः स एव। अन्यत् सर्वं पूर्ववत्। अथापि विनिर्गत-पसा इति पाठस्य प्राचुर्यात् तमाश्रित्य स्कन्दस्वामिना व्याख्यातम्॥

(६०) तूर्णाशम्§। 'तूर्णाशमुदकं भवति। तूर्णमश्नुते (निरु॰ ५,१६)'—इति भाष्यम्। तूर्णाशमित्यनवगतं शब्दतस्वार्थतस्य उदकमभिधेयम्। तूर्णमश्नुते अत्यर्थं व्याप्नोति एवं निर्वचनात् तूर्णशब्दस्य क्रियाविशेषणत्वेनाकर्मत्वात् कर्मोपपदाभावात् को न स्यादिति चेत्,—अश्नुत इत्यशं तूर्णञ्च तदशञ्च तूर्णाशम्। * * *। "तूर्णाशं न गिरेरधि (ऋ॰ सं॰ ६,२,१,४)"॥

* निरु॰ ५, १५।

† निरु॰ ५, १६।

‡ तस्य निगमो ऽयम्—"यद्वा पसं कायादरम्" अथ॰ सं॰ ३,१५,२१,१

§ निरु॰ ५, १६। "तूर्णिः" पृ॰ १, १५. निरु॰ ७, १०।

(६१) चुम्पम्* । 'चुभ सञ्चलने (दि०प०)' । 'शकि लिङ् च (३,३,१७२)'—इति शक्यार्थे कृत् । चौभ्यमिति प्राप्ते औकारस्य ह्रस्वत्वं, भकारस्य पकारो यकारलोपो मकारश्चोपजनः । अयत्नेनैव चोभयितुं शक्यम् । अहिच्छत्रकमुच्यते । "पदा चुम्पमिव स्फुरत् (ऋ०सं० १,६,६,३) ॥

(६२) निचुम्पुणः । 'वीणाम्पुणव्रणभ्रूणचूणवाणतृणघृणादयः ( ?† )'—इति निचान्त-नियम-नीचैः-शब्दोपपदेभ्यः प्रीणाति-पृणाति-पूणातिभ्यो णुक्-प्रत्ययो धातूनां पु-भावः उपपदानां निचु-भावश्च निपात्यते । नीचैरुपपदात् दधातेर्वा पूर्ववन्निपातनम् । 'चमु अदने (दि०आ०)' । निचान्तो भक्षितः प्रीणातीति निचुम्पुणः सोमः । "अपां जामिर्निचुम्पुणः (ऋ०सं० ६,६,२५,२ )" । नियमेन चम्यते इति निचमनमुदकं, तेन पूर्यते इति समुद्रः । निगमः पर्येष्यः । नीचैरस्मिन् क्वणन्ति नीचैः शब्देनाच कर्म कुर्वन्ति इत्यवभृथो निचुम्पुणः । "अवभृथनिचुम्पुणः (य०वा०स० ८,२७)" ॥

(६३) पदिम्‡ । 'पत्लृ गतौ (भ्रू०प०)' । 'इन् सर्वधातुभ्यः (उ० ४,११४)' पदिः पक्षी । आकाशे ह्यसौ नित्यं पत्यते गच्छति । "मुक्षीजयेव पदिमुत्सितानि (ऋ०सं० २,१,१०,२ )" ॥

(६४) पादुः§ । पद्यतेः 'कन्दमीणः (उ० १,२)'—इति बाहु-

* निघ० ४,१६ । "चुम्पति" पु० २, १५ ।

† 'राधासाधास्थूणावीणाः'—इति सि० कौ० उ० ३,१२ ।

‡ निघ० ४,१९ । "पदम्" निघ० २, ०. ४, १० । 'पतति' पु० २. १४ "आपप्तत" निघ० ११, १४ ।

§ निघ० ४, १९ ।

लकाद्गुण वृद्धिः। पदनं पादः। "स पादुरस्य निर्णिजो न मुच्यते (ऋ० सं० ७,७,१८,४)" ॥

(६५) वृकः*। व्युपसर्गार्थविशिष्टाद् वृणोतेः 'सृवृभूशुषिमुषिभ्यः कित् (उ० ३,३८)'—इति क-प्रत्ययः। वृकश्चन्द्रमाः। विवृतं स्पष्टज्योतिष्ट्वात् विवृत इत्युच्यते, न हि नक्षत्राणामिवाव्यक्तमस्य ज्योतिः। विवृतविक्रान्तशब्दयोर्वृकभावः। विवृतत्वं ज्योतिषः शीतत्वात् ह्रासवृद्धिभ्यां वा। विक्रान्तत्वं ज्योतिषो दिगन्तरगमनात्। "अरुणो मा सकृद्वृकः (ऋ० सं० १,७,२३,३)"। यद्वा; 'वृजी वर्जने' अदादिः। अनेकार्थत्वादावृणोत्यर्थः। पूर्वसूत्रेण बाहुलकात् को नकारजकारलोपश्च। आदित्य उच्यते। आवृङ्क्ते आवृणोति जगत् प्रकाशेन, आवृणोति चोदकानि रश्मिभिः सम्भजत इत्यर्थः। यद्वा; वृणक्तेर्बधकर्मणः पूर्ववद्रूपम्। विनाशयति तमांसि। "आस्नो वृकस्य वर्तिकामभीके (ऋ० सं० १,८,१६,१)"। विविधं कृन्तति उरणादीनि विकर्त्ता सन् वृकश्च। विपूर्वात् कृन्ततेः पूर्ववद्रूपसिद्धिरुन्नेया। "वृकश्चिदस्य वारण उरामथिः (ऋ० सं० ६,४,४८,३)"। अपि वा सृगाली शिवेति प्रसिद्धा, सा वृक्युच्यते। "शतं मेषान् वृक्ये चक्षदानम् (ऋ० सं० १,८,११,१)" ॥

(६६) जोषवाकम्†। 'जुषी प्रीतिसेवनयोः (तु० आ०)'। कर्मणि घञ्, वचेर्भावे। जोषयितव्यं वचनं। विस्पष्टार्थे सेवितव्यं वचनं। अविस्पष्टं वचनमित्यर्थः। "जोषवाकं वदतः पज्रहोषिणा (ऋ० सं० ४,८,२५,४ )" ॥

---

* पृ० ३, २० । निघ० ५, २०. ६, २६. १२, ४४। "वृकः" निघ० १, ६. १२, २९।
† निघ० ५, ११।

(६ ७) क्रत्तिः* । कृन्ततेः रूपम् । यशोऽन्नं वा । यशोहि द्विषतः कृन्तति दुर्भक्षं वान्नं माषादि भोक्तारम् । "मही च कृत्तिः शरणा तं इन्द्र (ऋ० सं० ६,६,१२,६ )" । शरीरात् कृन्तति चर्ममयपि कृत्तिः । सूत्रमयपि कृत्तिः चरद्वस्त्रखण्डग्रथितत्वात् कर्त्तनसामान्यात् । कृत्तिरिव कृत्तिः चर्मोच्यते । कृत्तिं वसान आचर (य० वा० सं० १६, ५१)" ॥

(६ ८) श्वघ्नी† । स्वशब्दे कर्मण्युपपदे भूतेऽर्थे 'कर्मणि हनः (३,२,८६)'—इति णिनि-प्रत्ययः । स्वं धनं हतवान् स्वघाती सन् श्वघ्नी कितवः । स्वशब्दः स्वधेत्यत्र (१२८पृ०) व्याख्यातः । "कृतं न श्वघ्नी विचिनोति देवने (ऋ० सं० ७,८,२४,५)" ॥

(६ ९) समस्य‡ । समशब्दः सर्वपर्यायः सर्वनामसु पठ्यते 'त्वत्वसमसिमनेमेत्यनुच्चानि (फि० ४)'-इति सर्वानुदात्तः । "मा नः समस्य दूढ्यः" । (ऋ० सं० ६,५,२५,४)" । "उरुष्याणो अघायतः समस्मात् (य० वा० सं० ३,२६)" । "उतो समस्मिन्नाशिशीहि नो वसो: (ऋ० सं० ६,२,२,३)" । "नभन्तामन्यके समे (ऋ० सं० ६,३, २२,१ )" ॥

(७०) कुटस्य§ (७१) चर्षणिः|| । कृतशब्दस्य कुटभावः । कृञर्थात् कुटेः क-प्रत्ययइत्यन्ये । चर्षणिशब्दो व्याख्यातः पश्यतिकर्मसु

* पु० २, ४ । । निरु० ५, २२ ।
† निरु० ५, २२ ।
‡ निरु० ५, २२. १०, ५ ।
§ निरु० ५, २४. "कुटतेः" ६, ३० ।
|| पु० २, २ । निरु० ५, २४. १२, २१. "चर्षणीधृत्" १२, ४० ।

(२१८पृ०)। "पिता कुटस्य चर्षणिः (ऋ०सं० १,२,२३,४)"॥

(७२) अम्बः*। व्याख्यातं अम्बरइति मेघनामसु (१६पृ०)। "उपो य: अम्बः पुरुहूत तेन (ऋ०सं० ७,८,२३,२)"॥

(७३) केपयः†। कु-शब्देऽपपदात् पुनातेः 'अनिपुणकृतिभ्यः क्यप्'—इति बाहुलकात् क्यप्, कोः कादेशः। कपूयः दुःपूयः दुःशोध्यः दुःकामेत्यर्थः। कपूयेन तदन्तोऽपि कपूयाः; अकारोमत्वर्थीयः। कुत्सितकर्माण उत्थापितपापकर्माणोवेत्युच्यन्ते। कपूया सन्तः केपयः। "इमैव ते न्यविशन्त केपयः (ऋ०सं० ७,८,२७,२)"॥

(७४) ततुमाकृषे‡। 'ततुमेत्यस्य शीघ्रगत्यर्थस्य तूर्णमित्यवगमः' —इति स्कन्दस्वामी। निर्वाहो निरूपणीयः। करोतेर्लटि 'थासः से (३,४,८०)', उ-प्रत्ययस्य 'बहुलं छन्दसि (२,४,७३)'—इति लुक् कुरुषइत्यर्थः। "एता विश्वा सवना तूतुमा कृषे (ऋ०सं० ८, १,८,६)"॥

(७५) अंसत्रम्‡। आङ्पूर्वाद्धन्तेरसुनि टिलोप आकारस्य ह्रस्वत्वं च। आहन्तीत्यंहः पापम्। पापेन वात्र तत्फलभूतप्रहारादिकं लक्ष्यते। अंहसस्त्रायते। 'आतोऽनुपसर्गे कः (३,२,३)'—इत्यंहसस्त्वं सदंसत्रम्। धनुर्वा कवचञ्च। "अंसत्रकोशं सिञ्चता नृपाणम् (ऋ० सं० ८,५,१९,१)"॥

(७६) काकुदम्§। कौतेः शब्दकर्मणो यङि, पचाद्यचि, 'यङो-

*, † निरु० ५, २४।
‡ निरु० ५, २४. "अंसत्रकोशम्" ५, २६।
§ पृ० १, १। निरु० ५, २६।

ऽपि च (२,४,७४)'—इति यङ्लुकि, द्विर्वचनादौ, 'न धातुलोप-आर्द्धधातुके (१,१,४)'—इति गुणनिषेधः। कोकूयते पुनःपुनः शब्दं करोतीति काकुर्जिह्वा। कोकुवाधानं सद् वर्णलुत्यादिना काकुदं तालु। कोकूयमाना नुदतीति वा। कोकूयतेर्नुदेश्च काकुदम्। अनुचरन्ति काकुदम् (ऋ० सं० ६,५,७,२)" ॥

(७७) बीरिटे*। भियो वा नक्षत्रादीनां वाभासस्तितनं यस्मिन्। तत् भीततनं भास्ततनं वा सत् बीरिटमन्तरिक्षम्; मनुष्य-गणो वा अनालम्बेऽन्तरिक्षे हि भीतिः कस्य न जायते; इहन्नरेन्द्रो यतोहि तस्मात्तत्रापि तद् भयं। "आ विश्यतीव बीरिट इयाते (ऋ० सं० ५,४,६,२)" ॥

(७८) अच्छ†। निपातः। अभेरर्थे। आभिमुख्यार्थे वर्त्तते। आप्तुमित्यस्यार्थे इति शाकपूणिः ॥

(७९) परि‡। (८०) ईम्§। (८१) सीम्‖। इति व्याख्यातानि प्राथमिके निपातप्रकरणे (१,३पृ०) अनेकार्थत्वादिहोपन्यासः। एषामुदाहरणानि प्रसिद्धानि ॥

(८२) एनम्¶। (८३) एनाम्**। एतत्पदद्वयमस्या अस्ये-त्यनेन पदद्वयेन 'उदात्तम् प्रथमादेशे, अनुदात्तमन्वादेशे'—इत्येवं

* निघ० ५. २७।

† निघ० २, २५. ४, २४. ४, २८।

‡ निघ० १, २. ५, २८. १०, ७. ११, १७।

§ पु० १, १२। निघ० १, ९. ४, १९. ५, २८।

‖ निघ० १, ७. ५, २१; २८. ११, ४७; ४८. "सीमन्" १, ७. "सीमिका" ३, २०।

¶, ** निघ० ५, २८. "एना । अया" पु० ३, १९. निघ० ३, २१।

व्याख्यातम् (निरु० ४,२५)। अनेकार्थत्वादुपन्यासः। "चितएन-मायुनग् ( ? )"—इत्येवमादीन्युदाहरणानि॥

(८४) सृणिः*। 'सृ गतौ (भ्वा०प०)'। 'पृथुवृचिप्रच्छिज्वरित्व-रिभ्यः कित्'†—इति णि-प्रत्ययः। लवितव्यं प्रति सरणात् सृणि-शब्देनात्र दात्रमभिप्रेतम्। "नेदीय इत्सृण्यः पक्वमेयात् (य०वा०सं० १२,६८)"॥

॥ इति चतुरशीतिः पदानि ॥२॥

आघृणिः(१)। आशाभ्यः(२)। काशिः(३)। कुणारुम्(४)। अलातृणः(५)। सलूलूकम्(६)। कत्पयम्(७)। विस्रुहः(८)। वीरुधः(९)। नक्षद्दाभम्(१०)। अस्कृधोयुः(११)। निशृम्भाः(१२)। बृबदुक्थम्(१३)। ऋदूदरः(१४)। ऋदूपे(१५)। पुलुकामः(१६)। असिन्वती(१७)। कपना(१८)। भाऋजीकः(१९)। रुजानाः(२०)। जूर्णिः(२१)। ओमना(२२)। उपलप्रक्षिणी(२३)। उपसि(२४)। प्रकलवित्(२५)। अभ्यर्धयज्वा(२६)। ईक्षे(२७)। क्षोणस्य(२८)। अस्मे(२९)। पाथः(३०)। सवीमनि(३१)। सप्रथाः(३२)। विदथानि(३३)। आयन्तः(३४)। आशीः(३५)। अजीगः(३६)। अमूरः(३७)। शशमानः(३८)। देवोदेवाच्या कृपा(३९)। विजामातुः(४०)। ओमासः(४१)। सोमानम्(४२)।

---

* निरु० ५, २८।

† 'सृवृषिभ्यां कित्' सि० कौ० उ० ४, ४९।

(३९) "देवोदेवाच्या। कृपा"—इति पदद्वयं ख-ग-घ-पुस्तकेषु। तथा सति सङ्ख्याद्वित्वमपि नाभ्यङ्क्या, तेषु "शिरिम्बिठः (१२०)" पदादर्शनात्।

अनवायम्[४३] । किमीदिने[४४] । अमवान्[४५] । अमीवा[४६] । दुरितम्[४७] । अघे[४८] । अमतिः[४९] । श्रुष्टी[५०] । पुरन्धिः[५१] । रुशत्[५२] । रिशादसः[५३] । सुदत्रः[५४] । सुविदत्रः[५५] । आनुषक्[५६] । तुर्वणिः[५७] । गिर्वणाः[५८] । असूर्त्ते सूर्त्ते[५९] । अम्यक्[६०] । यादृश्मिन्[६१] । जारयायि[६२] । अग्रिया[६३] । चनः[६४] । पचता[६५] । शुरुधः[६६] । अमिनः[६७] । जज्झतीः[६८] । अप्रतिष्कुतः[६९] । शाशदानः[७०] । सृप्रः[७१] । सुशिप्रः[७२] । रंसु[७३] । द्विबर्हाः[७४] । अक्रः[७५] । उराणः[७६] । स्तियानाम्[७७] । स्तिपाः[७८] । जबारु[७९] । जरूथम्[८०] । कुलिशः[८१] । तुञ्जः[८२] । बर्हणा[८३] । ततनुष्टिम्[८४] । इलीबिशः[८५] । कियेधाः[८६] । भृमिः[८७] । विष्पितः[८८] । तुरीपम्[८९] । रास्पिनः[९०] । ऋञ्जतिः[९१] । ऋजुनीती[९२] । प्रतद्वसू[९३] । हिनोत[९४] । चोष्कूयमाणः[९५] । चोष्कूयते[९६] । सुमत्[९७] । दिविष्टिषु[९८] । दूतः[९९] । जिन्वति[१००] । अमत्रः[१०१] । ऋचीषमः[१०२] । अनर्शरातिम्[१०३] । अनर्वा[१०४] । असामि[१०५] । गल्दया[१०६] । जल्हवः[१०७] । बकुरः[१०८] । बेकनाटान्[१०९] । अभिधेतन[११०] । अंहुरः[१११] । बतः[११२] । वाताप्यम्[११३] ।

---

(४८) "अघा" कातिरिक्तेषु सर्वत्र ।

(५८) कातिरिक्तेषु सर्वत्र "गिर्वणसे" इति ।

(८५) "इलीविशः" क ।

चाकन्[११४] । रथर्यति[११५] । असंक्राम्[११६] । आधवः[११७] । अनवब्रवः[११८] । सदान्वे[११९] । शिरिम्बिठः[१२०] । पराशरः[१२१] । क्रिविर्दती[१२२] । करूळती[१२३] । दनः[१२४] । शराहः[१२५] । इदंयुः[१२६] । कीकटेषु[१२७] । बुन्दः[१२८] । वृन्दम्[१२९] । किः[१३०] । उल्बम्[१३१] । ऋबीस[१३२]मृबीसमिति द्वात्रिंशच्छतं पदानि* ॥ ३ ॥

जहासस्तिमाशुशुक्षणिस्त्रीणि† ॥

इति निघण्टौ चतुर्थोऽध्यायः समाप्तः‡ ॥ ४ ॥

(१) आशुशुक्षणिः§ । शुचेर्ज्वलतिकर्मणः क्विपि शुक् दीप्तिः, क्षणिर्हिंसार्थः; 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन्, सनोतेर्वा इन् । आशु शुचा दीप्त्या क्षणिता हिंसिता तमसां सनिता सम्भक्ता वा पाके दाहप्रकाशनादेः स्वव्यापारस्य । अग्निरुच्यते । यद्वा; आङ्पूर्वाच्छुचेरन्तर्णीतण्यर्थात् सनि आशुशुक्ष इति स्थिते 'आङि शुषेः सनः'—इति विहितः अनि-प्रत्ययो बाहुलकाच्छुचेरपि भवति । 'आङि शुचेः'—इत्येव वा तत्र पाठः । आशु शोचयिषा आदीप-

(१२०) "शिरिम्बिठः" नास्तीदम्पदम् ख-घ-च-पुस्तकेषु । क-पुस्तकेऽपि न दृश्यते परं तत्र लेखकप्रमाद एव मूलमन्यथा सङ्ख्या व्याकुप्येत ।

(१३१) "उल्वम्" क ।

* इतीत्यादिर्न दृश्यते ग ।

† "इति सप्तमोऽध्यायः" ग (इदमग्रेपरस्तात्) । "नैघण्टुके" क ।

‡ ख-च-पुस्तकतोऽन्यत्र न विद्यतेऽसौ समाप्तवाक्यम् ।

§ निरु० ६, १ ।

यितुमिच्छा, तस्या कर्त्ता: आशुशुक्षणिः आदीपयिषुरित्यर्थः । "त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः (ऋ० सं० २,५,१७,१) ॥

(२) आशाभ्यः* । व्याख्यातं दिङ्नामसु (४० पृ०) । स एव निगमः (ऋ० सं० २,८,९,२) ॥

(३) काशिः† । काशतेः 'इन् सर्वधातुभ्यः (उ० ४,११४)'— इतीन् प्रत्ययः । प्रकाश्यते इति काशिर्मुष्टिः । "यत्सङ्गृभ्णा मघवन् काशिरित्ते (ऋ० सं० ३,२,१,५ )" ॥

(४) कुणारुम्‡ । क्वणतेः शब्दकर्मणः 'क्वणेरारुः'—इति बाहुल-कात् आरु-प्रत्ययस्ताच्छीलिकः, वकारस्य सम्प्रसारणञ्च । शब्दनशीलः कुणारुः, तन्मेघ उच्यते । "अहस्त मिन्द्र संपिणक् कुणारुम् (य० वा० सं० १८,६९)" ॥

(५) अलातृणः§ । अलं-शब्दोपपदात् तृदेर्हिंसार्थात् 'वीणस्थूण-प्रणभ्रूणचूणतूणतृणघृणादयः (उ० ३,१३?)'—इति ण-प्रत्ययो दकार-लोपोगुणाभावोऽलमोमकारस्याकारश्च निपात्यते । यद्वा; क्विपि दकारस्य लोपो गुणाभावश्च पृषोदरादित्वात् । अलं पर्याप्तमातर्दनं हिंसा यस्य; बहूदकत्वात् मेघो विशिष्यते । अलातृणो बल इन्द्र व्रजो गोः (ऋ० सं० ३,२,२,५)" ॥

(६) सललूकम्‖ । सम्पूर्वाल्लुभेर्निष्ठायां 'लुभो विमोहने (७,२,

* पु० १, ६. निरु० ६, १ ।
† निरु० ६, १ ।
‡ निरु० २, २. ६, १ ।
§ निरु० ६, २, ।
‖ निरु० ६, ३ ।

५४)'–इतीजामः। यद्वा; सर्त्तेः 'मण्डूकोलूकोल्कशूकशम्बूकयूक-वल्कादयः (उ०,४,४०?)'-इत्यूक-प्रत्यये गुणे रपरे कृते ऋरित्यस्य द्विर्वचनरेफयोर्लत्वापत्तिश्च निपात्यते। सरणशीलमत्यन्तदूरं नष्ट-मित्यर्थः। रचा विशिष्यते। "आ कीवतः सललूकं चकर्थ (ऋ० सं० ३,२,४,२)" ॥

(७) कत्पयम्*। कमिति सुखनाम। तस्य मकारस्य नकारः पयसश्च सलोपः। कम्पयमं सुखमयमित्यर्थः। मेघोऽभिधेयः। "त्यच्चिदित्था कत्पयं शयानम् (ऋ०सं०४,१,३२,६)" ॥

(८) विस्रुहः†। विपूर्वात् स्रवतेः क्विपि। विविधं स्रवन्तीति विस्रुहः आपः। "वया इव रुरुहुः सप्त विस्रुहः (ऋ०सं०४,५,८,६)" ॥

(९) वीरुधः‡। विपूर्वात् रुहेः क्विपि वेर्दीर्घो हकारस्य धका-रश्च। मूलविभुजादित्वात् के विरुहाः सत्यः वीरुधः। विविधं रोहन्तीति ओषधय उच्यन्ते। "वीरुधः पारयिष्णवः (ऋ० सं० ८,५,८,३)" ॥

(१०) नचद्दाभम्§। नचतेर्गतिकर्मणो व्याप्तिकर्मणो वा शतरि नचन्; दभ्नोतीति दभ्नोतेर्बधकर्मणः कर्मण्यणि नकारलोपश्छान्दसः, वृद्धिः। युद्धार्थमभिगच्छतां व्याप्नुवतां च शत्रूणां हन्तारमित्यर्थः। "नचद्दाभं ततुरिं पर्वतेष्ठाम् (ऋ०सं०४,६,१३,२)" ॥

(११) अक्षधायु‖ः। दीर्घायुरित्यर्थः; चिरस्थायी पुत्रपौत्रान्वित-

---

* निरु० ६, ३. "कथा" ३, २१. ६, २०।
†. ‡ निरु० ६, ३।
§ निरु० ६, ३. "नचत्त्म्" ३, २०। "नचति', पु० २, २४।
‖ निरु० ६, ३।

इति यावत्। क्षिप्विति क्षिप्रनामसु व्याख्यातम् (२९७पृ०)। नञ्-पूर्वम् धातोः मकार उपजनः, धु-शब्दस्य धोभावः। यद्वा; नञ्पूर्वात् करोतेर्निष्ठायामकृतशब्दस्याक्कभावः; दधातेर्भिवतेर्वा 'दृशेरिण्क्त्* ?'—इति बाहुलकात् उसि-प्रत्ययः, णित्वाद् युगागमः, धकारस्य धोभावः। अकृतदानो यादृशो न कस्मैचित्तया दत्तपूर्व इत्यर्थः। अकृतयानो वा अनुकृपूर्वः केनचिदित्यर्थः। धनविशेष उच्यते। "यो अस्कृधोयुरजरः स्वर्वान् (ऋ०सं० ४,६,१२,३)"॥

(१२) निशृम्भाः†। निपूर्वात् 'श्रथि शैथिल्ये (भू०आ०)'—इत्यस्मात् घञ्। निर्गतः श्रथः शैथिल्यं यस्याः सा निश्रथा गतिः, अशिथिलया गत्या हरन्तीति 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः। श्रथशब्दस्य शृम्भावः। अशिथिलया गत्या हरणशीला अविश्रामहरणा इत्यर्थः। "निशृम्भास्तेजनश्रियम् (ऋ०सं० ४,८,२१,६)"। भाष्ये शृथ्यशब्दः श्रथशब्दपर्यायः (निरु० ६,३)॥

(१३) बृबदुक्थम्‡। बृहच्छब्दो व्याख्यातो महन्नामसु (३००पृ०)। तत्र हकारस्य बः। यद्वा; 'संश्चत्तृपद्वेहन् (उ० २,७९)'—इति बृधातो रति-प्रत्यये बृबच्छब्दो निपात्यते; उक्थ-शब्द उक्थस इत्यत्र व्याख्यातः (३२३पृ०)। बृहद् वक्तव्यं वा उक्थं स्तुतिर्यस्य स बृहदुक्थः, तम्; स्तुत्यर्हमित्यर्थः। "बृबदुक्थं हवामहे (ऋ०सं० ६,३,२,५)"॥

* 'एतेर्णिच्'—इति सि० कौ० उ० ९, १११।
† निरु० ६, ३।
‡ निरु० ६, ४।

(२४) ऋदूदरः*। मृदु उदरमस्य। मृदुर्वा वमनविरेचनयोरकर्त्ता उदरे 'अस्तु इत्येवं य आमास्ते' यजमानैः स मृदूदरः सोमः, आदेर्मकारस्य लोपः। "ऋदूदरेण सख्या सचेय (ऋ० सं० ६,४,१२,५)"। सोमपायिनः प्रायश्चित्तेष्टौ याज्यैषा॥

(२५) ऋदूपे†। 'अर्द अर्दने' हिंसार्थः। 'छन्दसीणः (उ० १,२)' —इति बाहुलकादुण् धातोर्ऋदादेशः; ऋदुशब्दोपपदे पतेरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (२,२,१०१)'—इति डः, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः। बाहुविशेषणमेतत्। शत्रूणामर्द्दनेन पातयितारौ। * * *। "ऋदूपे चिदृदूवृधा (ऋ० सं० ६,५,३०,६)"॥

(२६) पुलुकामः‡। पुरुर्बहुकामो यस्य सः। कपिलकादित्वाल्लत्वम्। "पुलुकामो हि मर्त्यः (ऋ० सं० २,४,२२,५)"॥

(२७) असिन्वती§। 'षिञ् बन्धने (स्वा० उ०)'। अनेकार्थत्वाद्धातूनामत्र सङ्खादनार्थः। लटः शतरि श्नुः। 'उगितश्च (४,१,६)' —इति ङीप्, पूर्वसवर्णदीर्घः। असङ्खादन्त्यावित्यर्थः। हनू विशेष्यते। "असिन्वती बप्सती भूर्यत्तः (ऋ० सं० ८,३,१४,१)"॥

(२८) कपना‖। 'कपि चलने (भू० आ०)'—इत्यस्मात् 'युच् बहुलम् (उ० ४,७४)'—इति युचि बाहुलकादागमानित्यत्वान्नुम् न

* निरु० ६, ४. "ऋदूदर" पृ० २, १९।
† निरु० ६, ४. २१. ऋदूपेषा" ६, २१।
‡, § निरु० ६, ४।
‖ निरु० ६, ४. कपिञ्जलः" २, १८. ९, ४. ५।

क्रियते। घुणाः क्रिमय उच्यन्ते। "मोषथा वृक्षं कपनेव वेधसः (ऋ॰सं॰ ४,३,१५,१)"॥

(१९) भार्जीकः*। ऋजुका अकुटिला अप्रतिहता प्रसिद्धा भा दीप्तिर्यस्य स ऋजुकभाः सन् भार्जीकः।' अग्निरुच्यते। "धूमकेतुः समिधा भार्जीकः (ऋ॰सं॰ ७,६,११,२)"॥

(२०) रुजानाः†। व्याख्यातं नदीनामसु (१२४पृ॰)। स निगमः (ऋ॰सं॰ १,२,३७,१)॥

(२१) जूर्णिः‡। व्याख्यातं क्रोधनामसु (२३५पृ॰)। अत्र सेनाभिधेया। "क्षिप्रा जूर्णिर्न वक्षति (ऋ॰सं॰ २,१,१७,२)"॥

(२२) ओमना§। अवनशब्दस्याकारवकारयोरोकारमकारौ विभक्ते राकारः। अवनाय अवनेन वा। "परिध्वंसमोमना वां वयो गात् (ऋ॰सं॰ ५,५,१६,४)"॥

(२३) उपलप्रक्षिणी॥। उपलशब्दोपपदात् क्षिणोतेः क्षिपतेर्वा 'सुप्यजातौ (३,२,७८)'—इति णिनि-प्रत्यये व्यत्ययेन टि-लोपः। उपलेषु सन्नेषु वालुकासु यवान् क्षिणोति हिनस्ति भनक्तीत्यर्थः, उपलेषु यवान् प्रक्षिपति चूर्णयतीत्यर्थः। सक्तुकारिकाभिधेया। "उपलप्रक्षिणी नना (ऋ॰सं॰ ७,५,२५,३)"॥

* निघ॰ ६ ४. "भागः" ३, १२. ६, ८. १२, १. १७, ३१।
† पु॰ १, १२। निघ॰ ६, ४. "आवजनाः" १८, ३०।
‡ पु॰ २, १२। निघ॰ ६. ४।
§ निघ॰ ६, ४. "ओमः" ६, ९. १२, ४०।
|| निघ॰ ६, ५. "उपलः" पु॰ १, १०. निघ॰ ३, २२।

(२४) उपसि*। उपस्थ-शब्दस्य * * *। "आभोग ऊर्ध्वा मुपसि चिणाति (ऋ० सं० ७,७,१७,३)"॥

(२५) प्रकलवित्†। प्रकर्षेण कला: मानोन्मानप्रतिमानादि-विषयाः प्रकृष्टाश्वगणितरत्नपरीक्षादिका वेद विजानाति। "सत्सूद्विष (३,२,६१)"-इत्यादिना क्विपि 'ङ्यापोः सञ्ज्ञाच्छन्दसोर्बहुलम् (६,३,६३)'—इति ह्रस्वः। प्रकलविद् वणिग् भवति। "दुर्मि-चासः प्रकलविन्मिमानाः (ऋ० सं० ५,२,२६,५)"॥

(२६) अभ्यर्धयज्वा‡। 'ऋधु वृद्धौ (दि० प०)'। णिजन्तात् पचाद्यचि णि-लोपे अभ्यर्ध; यजेर्दानार्थात् 'सुयजोर्ङ्वनिप् (३,२,१०३)' अल्पानपि रसान् अभ्यर्धयन् मरुद्भ्यो ददाति धनं वा स्तोतृभ्यो यो ददाति सः। पूषा विशेष्यते। "सिषक्ति पूषा अभ्यर्धयज्वा (ऋ० सं० ४,८,८,५)"॥

(२७) ईक्षे§। 'ईश ऐश्वर्ये (अदा० आ०)'। 'थासः से (३,४,८०)'। व्यत्ययेन ईशसे न भवति। "ईक्षे हि वस्व उभयस्य राजन् (ऋ० सं० ४,६,८,५)"॥

(२८) क्षोणस्य॥। 'क्षि निवासगत्योः (तु० प०)'। 'कृत्यल्युटो बहुलम् (३,३,११३)'-इति कर्त्तरि ल्युट्। क्षयणस्येत्यत्र यकारस्यो-

* निघ० ६. ६. 'उपस्थः" ७, २६. ८, १५. १८ ९, ३९. ४०।
† निघ० ६, ६. "प्र" १, ३।
‡ निघ० ६, ६. "ऋर्धः" २, १०।
§ निघ० ६, ६।
॥ निघ० ६, ६. "क्षयः" ८, १८।

कारे 'आद्गुणः (६,१,८७)'। निवसितुरित्यर्थः । "मह्मः चोण-स्याश्विना कण्वाय (ऋ० सं० १,८,१४,२)" ॥

(२९) अस्मे*। अस्मदः। जसादीनां मे प्रग्रह्यं, लुग्वेव टेः। जसा-दिषु सुबन्तेषु क्रमेणोदाहरणानि;—"अस्मे ते बन्धुः (य० वा० सं० ४,२२)", "अस्मे यातं नासत्या सजोषाः (ऋ० सं० १,८,१९, ६)", "अस्मे समानेभिं वृषभ पौंस्येभिः (ऋ० सं० २,३,२५,२)", "अस्मे प्र यन्धि मघवन्नृजीषिन् (ऋ० सं० ३,२,२०,५)", "अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु (ऋ० सं० ४,७,२२,३)", "ऊर्वं इव पप्रथे कामो अस्मे (ऋ० सं० ३,२,४,४)", "अस्मे धत्त वसवो वसूनि (य० वा० सं० ८,१८)" ॥

(३०) पाथः†। पथतेः पन्थतेर्वा गत्यर्थादसुनि धातूनां पाथ इत्ययमादेशः। पथ्यते गम्यते पच्यादिभिरन्तरिक्षवासिभिर्वा पाथः। अन्तरिक्षम्। "श्येनो न दीयन्नन्वेति पाथः (ऋ० सं० ५,५,५,५)"। उदकमपि पाथः। 'पिबतेस्थुट् च‡'—इत्युसुन्। पीयते ह्युदकम्। अन्ने पिबतिरभ्यवहारार्थः। "आ चष्ट आसां पाथो नदीनाम् (ऋ० सं० ५,३,२५,५)"—इत्युदकस्य। "देवानां पाथ उप प्र विद्वान् (ऋ० सं० ८,२,२२,४)"—इत्यन्नस्य ॥

(३१) सवीमनि§। 'षु प्रसवैश्वर्ययोः (भू० प०)'। 'हृभृधृ-सृस्तृशुभ्य इमनिच् (उ० ४,१४३)'—इति इमनिच्। प्रसवशब्दस्य

---

* निरु० ६, ७. अस्मे इतिः' ११, २५।

† निरु० ६, ७. ८, १७।

‡ 'उदके थुट् च'—इति सि० कौ० उ० ४, १९९।

§ निरु० ६, ७. १२।

एव वर्णव्यत्ययादिना। प्रसवेऽभ्यनुज्ञाने। "देवस्य व॒यं स॑वि॒तुः स॒वी-मनि॒ (ऋ०सं० ५,१,१५,२)"॥

(२२) सप्रथाः*। प्रथतेरसुन्। सर्वतः-शब्दस्य स-भावः। सर्वतः पृथुः। "त्वम॑ग्ने स॒प्रथा॑ असि॒ (ऋ०सं० ४,१,५,४)"॥

(२३) विदथानि†। विदेरथक् (उ० ३,११९)। वेदनानि विज्ञानानीत्यर्थः। "वि॒दथा॑नि प्र॒चोदय॑न् (ऋ०सं० ३,१,२९,२)"॥

(२४) आयन्तः‡। 'श्रिञ् सेवायाम् (भू०आ०)'। शतरि अपि गुणे प्राप्ते व्यत्ययेन वृद्धिः। समाश्रयन्तः। यद्वा; भूते ल्युट्। समाश्रिताः। "आय॑न्त इ॒व सूर्य॑म् (ऋ०सं० ६,७,३,३)"॥

(२५) आशीः§। आङ्पूर्वात् श्रयतेः शृणोतेर्वा 'क्विब्वचिप्रच्छि (३,२,१७८वा०१)'—इत्यत्र 'प्राक् प्रत्ययनिर्द्देशादिष्टसिद्धिः(भा०)' —इत्युक्ते क्विपि प्रकृतेः शीरादेशः। यद्वा; एतयोरर्थे वर्त्तमानात् शृणातेः क्विपि शीरशब्दे निर्वाहः। आङ् ईषदर्थद्योतकः आश्रयणात् होमार्थस्य सोमस्य श्रपणं दध्युच्यते। "इन्द्रा॑य॒ गाव॑ आ॒शिर॑म् (ऋ०सं० ६,५,६,१)"। 'आङः शासु इच्छायाम्' इत्यस्मात् क्विपि। * * *। "सा मे सत्याशीर्देवान् गम्यात् ( ?|| )"। रेफान्त-सकारान्तयोरुभयोरपि साधारणं पाठः समाम्नाये॥

* निरु० ९, ७. ९, २२।

† पृ० ३, १७. निरु० १, ७. २, १७. ९, ७. ८, १२. ९, ३. "विनद्दसुः" ४, ४. विज्ञानापस्' ११, ७२. "विद्रस्" ८, १०।

‡ निरु० ९, ८. "उदश्रेत्" ११, १०।

§ निरु० ९, ८।

|| ऋ० सं० ८, ७, १५, ४. द्रष्टव्या।

(३६) अजीगः* । जिगर्त्तिर्निगरणार्थो वा शब्दार्थो वा । लङि, सिपि, इतश्च लोपे. 'रात्सस्य (८,२,२४)'-इति स-लोपः, रेफस्य विसर्जनीयः । अवगिरति, शब्दायति वा । अत्ययतीत्यर्थः । "आदिद् घसिष्ठ ओषधीरजीगः (ऋ० सं० २,३,१७,२)" ॥

(३७) अमूरः† । 'मुह वैचित्त्ये (दि० प०)' । निष्ठायां क्तम्, ढत्व-ढलोप-दीर्घाः, ढकारस्य रेफः, नञ्पूर्वः सम्बुद्धौ अमूर । अमूढेत्यर्थः । "मूरा अमूर न वयं चिकित्वः (ऋ० सं० ७,५,२२,४)" ॥

(३८) शशमानः‡ । व्याख्यातोऽर्चतिकर्मसु (२३४पृ०) । स निगमः (ऋ० सं० २,२,२१,२) ॥

(३९) देवोदेवाच्या कृपा§ । देवशब्दोपपदात् अञ्चतेः 'ऋत्विग् (३,२,५९)'—इत्यादिना क्विन्, 'अनिदिताम् (६,४,२४)'—इति न-लोपः, 'अचः (६,४,१३८)'—इत्यकारलोपः, 'चौ (६,३,१३८)'—इति दीर्घे 'अञ्चतेश्चोपसङ्ख्यानम् (४,१,६वा०)'—इति ङीपि 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६,३,९२)' न भवति; 'कृपू सामर्थ्ये (भ्वा० आ०)' क्विपि । देवान् प्रति गतया स्तुत्येत्यर्थः । "देवो देवाच्या कृपा (ऋ० सं० २,१,१२,६)" ॥

(४०) विजामातुः|| । धनादन्ये कुलीनत्वादयो विगता जामातृ-

* "जिगर्त्ति" निघ० ६, ८. "गिरति" ९, ४. "प्रतिजगर" १०, ११. "शब्दायति" पृ० २, १४. निघ० ६, ८ ।

† निघ० ६, ८. ११, २ ।

‡ पृ० २, १४ । निघ० ६, ८ ।

§ निघ० ६, ८ ।

|| निघ० ६, ८. "जामाता" ९ ।

गुणा यस्मात्, सोयममाप्नगुणो विजामाता कन्या-प्रतिग्रहयते। ततः पञ्चमी। * * * । "विजामातुरुत वा घा स्यालात् (ऋ॰सं॰ १, ७,२८,२)" ॥

(४१) ओमासः* । अवतेः पालनार्थस्य तर्पणार्थस्य वा कर्त्तरि कर्मणि वा 'अविसिविसिशुषिभ्यः कित् (उ॰ १,१४१)'—इति मन्-प्रत्यये 'ज्वरत्वर (६,४,२०)'—इत्यादिना ऊठि ऊमास् इति प्राप्ते व्यत्ययेन गुणः। जस्। 'आज्जसेरसुक् (७,१,५०)'। रक्षितारस्तर्पयितारस्तर्पणीयाः। "ओमासश्चर्षणीधृतः (ऋ॰सं॰ १,१,६,१)" ॥

(४२) सोमानम् । सुनोतेर्मनिन्-प्रत्ययः। अभि सोमानम्। सोतारम्। अभिषोतारं सोमानाम्। "सोमानं स्वरणम् (ऋ॰सं॰ १,२,३४,१)" ॥

(४३) अनवायम्† । (४४) किमीदिने‡ । अनवयवशब्दस्यानवायभावः। अनवयवं सकलमित्यर्थः। किमिदानीं कस्य किञ्चिदिति चरति, किमिदं वर्त्तत इति वा चरति। साधुजनवैरी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः। किमिदं-शब्दस्य वाक्यस्य वा किमीदिनभावः। "द्वेषो धत्तमनवायं किमीदिने (ऋ॰सं॰ ५,७,५,२)" ॥

(४५) अमवान्§ । अमा सहार्थाव्ययम्। तस्य मतुपि ह्रस्वः ससहायः। यद्वा; 'अम रोगे (चु॰प॰)'। 'पुंसि सञ्ज्ञायां घः

* निघ॰ ६, ९. १२, ४०।
† निघ॰ ६, १०. "सोमपीतिः" ९, ३०. "सोमी" ९, ९. "सोम्या" २, २५. १०, ३०. ११, १८. १९।
‡ निघ॰ ६, ११।
§ निघ॰ ६, १२. "अमा" पु॰ २, ४।

(२,२,११८)'। अमो रोगः कर्त्तव्यः अमूर्णां, रोगैस्तदाम्, इत्यूनां रोगभूत इत्यर्थः। आत्मशब्दस्य वा अमभावः। यत्नवान् 'आत्मा जीवे यत्ने कलौ मनौ वातपि'—इति निघण्टुः(?)। "याहि. राजे वामेवाँ इर्भेन (ऋ० सं० ३,४,२३;१)"॥

(४६) अमीवा*। 'अम रोगे (चु० प०)'। 'अमेरीवः'-इति ईव-प्रत्ययः। टाप्। अमीवा रोगः हिंसिता वा। यद्वा; 'ग्रेवयक्ष-जिह्वाग्रीवाप्वामीवा (उ० १,१५२)'—इति वन्-प्रत्ययान्तो निपात्यते। "यस्ते गर्भममीवा (ऋ० सं० ८,८,२०,२)"॥

(४७) दुरितम्†। दुर्गतिप्रापकं कारणभूतम्। 'पापकं कर्म दुरितमुच्यते।"अति क्रामन्तो दुरितानि विश्वा (निरु० ६,१२)"। दुःशब्दोऽत्र दुर्गतौ वर्त्तते। 'इणश्विधृषिभ्यः क्तः' ‡ इति बाहुलकात् करणे क्तः। दुर्गतिर्गम्यते येन तद्दुरितम्॥

(४८) अप्वे §। अप-पूर्वात् वेञ्धातोरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति ड-प्रत्यये अपेत्यस्यान्त्यलोपश्छान्दसः। टाप्। अप वयति अपगमयति सुखं प्राणांस्चेत्यर्थः। 'ग्रेवयक्षजिह्वा-ग्रीवाप्वामीवा (उ० १,१५२)'—इति वन्-प्रत्यये वेञोलोपोऽप-शब्दस्यान्तलोपश्च निपात्यते। व्याधिर्वा भयं वा अप्वा। "इहाणा-ह्लानप्वे परे हि (ऋ० सं० ८,५,२३,६)"॥

* निरु० ६, १२. "अमीवा" १२, ४४. "अमीवचन्' १०, १०१.
† निरु० ६, १२।
‡ 'चषिवर्ण्यणामिदसिस्तुपधुर्विभ्यस्तन्'—इति सि० को उ० २, ८२.
§ प० ५, २. निरु० ६, १२. ९, २२।

(४९) अमतिः*। अमाशब्द आत्मवचनः। आत्ममयी नति-र्मतिर्वा अमतिः। तन्यत इति नतिर्दीप्तिः। मतिरपि प्रकाशरूप-त्वाद् दीप्तिः। आत्मप्रकाशमयी नतिर्मतिर्वा अमतिः दीप्तिरभि-धेया। अमानति-शब्दस्य आत्ममति-शब्दस्य वा अमतिभावः। सवितृविशेषणत्वादात्मप्रकाशमयी नतिर्मतिर्वा अमतिरित्युपपद्यते।
२ २उ २ १ २ १ २उ २
'ऊर्द्धा यस्या मतिर्भा अदिद्युतत् (सा० छ० आ० ५,२,३,८)" ॥

(५०) श्रुष्टी†। (५१) पुरन्धिः‡। अश्नोतेः 'हृसृपिकषि-वषिमुषिशासुव्यशिग्लाभ्यः क्तिन्'। 'कृदिकारादक्तिनः (४,१,४५. ग० वा०)'—इत्यत्र स्त्रियां विहितस्य ग्रहणात् विकल्पो ङीष्। श्रु श्रष्टि व्याप्तिरत्र श्रुष्टी। * * *॥ पुरुशब्दो बहुनाम। धीरिति कर्म-नाम, प्रज्ञानाम वा। बहुकर्मा बहुप्रज्ञो वा पुरुधिः सन् पुरन्धिः। पुराणि दारयतीति वा पुरन्धिः। 'वेञो डित् §'—इति बाहुलकात् डिदिन् प्रत्ययः, दकारस्य धकारः, नकार उपजनः। भगो वरुण इन्द्रश्च पुरन्धिः। "श्रुष्टी भग नामत्या पुरन्धिम् (ऋ० सं० ५,४,६,४ )"। श्रुष्टी-शब्दः सुखस्याभिधायको धान्यशलाका-याश्च। "श्रुष्टीवरीर्भूत नास्मभ्यमापः (ऋ० सं० ७,७,२६,१)"—इति सुखस्याभिधायकः। "श्रुष्टी सहरा असद्यः ( ? )"—इति धान्यशलाकायाः ॥

* पृ० ३, ७. निघ० ६, १२।
† निघ० ६, १२।
‡ पृ० ३, १०, निघ० ६, १३. ११, १. १२, १३।
§ 'वातेर्डिच'—इति सि० कौ० उ० ४,११९।

(५२) रुशत्* । 'रुच दीप्तौ (भ्वा०आ०)' । 'संश्चत्तृपद्वेहत् (उ० २,७९)'—इति अति-प्रत्ययो गुणाभावश्च चकारस्य शकारश्च निपात्यते । रोचते रुशत् वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधीयते । यद्वा; रुशेर्हिंसार्थात्तुदादेः रोचत्यर्थे वर्त्तमानाल्लट् शतरि । "समिद्धस्य रुशदर्दर्शि पाजः (ऋ० सं० ३,८,१२,२)" ॥

(५३) रिशादसः† । 'रिश हिंसायाम्' तुदादिः । अन्तर्णीतण्यर्थः । लटः शतरि छान्दसो दीर्घः । अस्यतेर्विच् । रिशतां शत्रूणां वा असितारः क्षेप्तारः नाशयितार इत्यर्थः । "अस्ति हि वः सजात्यं रिशादसः (ऋ० सं० ६,२,३२,५)" ॥

(५४) सुदत्रः‡ । सु-पूर्वात् ददातेः ष्ट्रन्, ष्ट्रनि बाहुलकात् ह्रस्वत्वम् । सुदानः । "त्वष्टा सुदत्रो वि दधातु रायः (ऋ० सं० ५,३,२७,२)" ॥

(५५) सुविदत्रः§ । सु-पूर्वात् 'विद ज्ञाने (अदा० प०)'—इत्यस्मात् 'अमियजिवधिपतिकलिनचिभ्योऽत्रन् ॥'—इति बाहुलकादत्रन्-प्रत्ययो गुणाभावश्च । सुविद्यत इत्यर्थः । "अग्ने याभिः सुविदत्रेभिर्वाङ् (ऋ० सं० ७,६,१८,३)" ॥

(५६) आनुषक्¶ । अनुपूर्वात् 'षञ्ज सङ्गे (भ्वा० प०)'—इत्यस्मात्

* निघ० २, १०. ६, १२ ।

† निघ० ६, १५ ।

‡ निघ० ६, १४. "सुदानुः" ६, २७. "सुदाम" २, १४ ।

§ निघ० ६, १४. ७, ९ ।

|| "अमिनक्षियजिवधिपतिभ्योऽत्रन् । गडेरादेश्च कः । हजश्चित् । सुविदेः कत्रन्"—इति सि० कौ० उ० ३, १०१—१०५ ।

¶ निघ० ६, १४ ।

क्विपि 'अनिदिताम् (६,४,२४)'--इति न-लोपः, अनोरकारस्य दीर्घश्छान्दसः। अनुषक्तमुपर्युपरि लग्नमित्यर्थः। "स्तृणन्ति बर्हिरानुषक् (ऋ०सं०१,२,४२,२)"॥

(५७) तुर्वणिः*। तूर्ण-शब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः (उ०४,११४)'—इतीन्। तूर्णं वनोति सम्भजते। तूर्णवनिः। "स तुर्वणिर्महाँ अरेणु पौंस्ये (ऋ०सं०१,४,२१,३)"॥

(५८) गिर्वणाः†। गीः-शब्दोपपदात् वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्संज्ञकत्वात् ह्रस्वत्वम्। गीर्वण इति प्राप्ते दीर्घाभावश्छान्दसः। निघण्टुकारपठितगीर्वाणशब्देन समानार्थः। अतो देवोऽभिधेयः। स्तोतुरभिमतप्रदानादात्मानं स्तोतृभिः सम्भाजयति। भाष्ये तु (निरु०६,१४) 'गीर्भिरेनं वनयन्ति'—इत्यर्थनिर्वचनमिति स्कन्दस्वामी। श्रीनिवासस्तु स्वार्थे णिच्। गीर्भिरेनं वनयन्ति। "जुष्टं गिर्वणसे बृहत् (ऋ०सं०६,६,१२,७)"॥

(५९) असूर्त्ते सूर्त्ते‡। असुशब्दपूर्वस्य सुशब्दपूर्वस्य च 'ईर गतौ (अदा०आ०)'—इत्यस्य निष्ठायां छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णं पूर्वच दीर्घ श्छान्दसत्वात्। सप्तम्येकवचनम्। असुः प्राणः। प्राणस्य वातः। वातसमीरिता मरुदादयो हि सेव्याः। सूर्त्ते इति रजसीत्यस्य विशेषणम्। सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्यर्थः। "असूर्त्ते सूर्त्ते रजसि निषत्ते (ऋ०सं०,२,१७,४)"॥

* निघ० ६, १४, "तुरः" ११, १४. "तुरण्यति" २, १८।
† निघ० ६, १४।
‡ निघ० ६, १५।

(६०) अम्यक्* । मा-शब्दद्वितीयैकवचन उपपदे अञ्चतेः क्विप् नकारलोपे मा-शब्दस्य इददो द्रष्टव्योऽकारोपजननेन च भाव्यम्। आयुधाख्या शक्तिरभिधेया चिप्ता सती मां प्रति इव गता। यद्वा; अभिपूर्वादञ्चतेः क्विनि अभ्यक् सती भकारस्य मकारापत्त्या अम्यक्। शत्रून् प्रत्यभिगता। यद्वा; अमा-शब्दः सहार्थे निपातः। अमाक् सती अम्यक् सहभूता। "अम्यक् सा त इन्द्र ऋष्टिरस्मे (ऋ॰सं॰ २,४,८,३)" ॥

(६१) यादृश्मिन्† । यादृशे इत्यर्थः। "यादृश्मिन् धायि तमपस्यया विदत् (ऋ॰सं॰ ४,२,२४,३)" ॥

(६२) जारयायि‡ । उखाविशेषणम्। तेन व्यत्ययेन नपुंसकत्वावगमः। ततश्चेदं नाख्यातम्। जार इत्यस्य वा धातोरेवंभूतस्याख्यातस्यासम्भवात्। निघातप्रसङ्गाच्च। अन्ये तु जनेरपत्याभिगतमाख्यातमेतदिति गम्यते। ततश्च जारयायि अजायतेत्यवगमः इत्युक्ता मन्त्रव्याख्याने निघातप्रसङ्गस्य भिन्नवाक्यत्वेन वाक्यादित्वादुदात्तप्रतिपादनेन परिहृतत्वात्। अजायतेत्येव स्कन्दस्वामिनोऽप्यवगमः। उखाविशेषणवादिनां जारस्यासौ यायीति जारयायि। गवां यौवनस्य जरयितृत्वाज्जारत्वम् गवामभिगमनाद् यायित्वम्। "उखः पितेव जारयायि यज्ञैः (ऋ॰सं॰ ४,५,१४,४)" ॥

* निरु॰ ६, १५। "म्यचति" "मियचति" पु॰ २, १४।

† निरु॰ ६, १५।

‡ निरु॰ ६, १५. "जारः" ३, १६. ५, २०. १०, ११. "जारम्" ६, १८. "जारिणी" १२. ७।

(६३) अग्रिया*। अग्रशब्दोपपदात् यातेः 'गेहे: कः (३,१,१४४)'—इति बाहुलकात् कः। आकारस्येकारः। तृतीयैकवचनस्याकारः। यद्वा; अग्रमर्हतीति 'छन्दसि च (५,१,६७)'—इति यप्रत्यये इकार उपजनः। अर्हार्थो वा घनि घस्य इयादेशो विभक्तेराकारः। अग्रार्हा। यद्वा; अग्रा एवाग्रिया। अग्रभूताग्र्या। "विश्वे अग्रियोत वाजाः (ऋ० सं० ३,७,३,३)"॥

(६४) चनः†। (६५) पचता‡। पचतेर्ल्युट् 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्मणि ल्युटि पच्यत इति पचनम्। वचनशब्दस्य वकारलोपेनान्ते सकारोपजनेन चनः। अन्नम्। यद्वा; वचेरसुनि बाहुलकात् नोऽन्तादेशः। पचतेः 'भृदृशियजिपचिवच्यमि(?)' 'भूतेऽपि दृश्यन्ते (३,३,२)'—इति वचनात् भूते द्रष्टव्यः। विभक्तेराकारः। पक्वः पक्वौ पक्वा इति वावगमः। पदान्तस्य बहुलसामर्थ्याद् विशेषनिश्चयः। "चनो दधिष्व पचतोत सोमम् (ऋ० सं० ८,६,२१,३)"—इति बहुवचनस्य। "तस्मेदस्तः प्रति पचताग्रभीष्टाम् (निरु० ६,१६)"—इति द्विवचनस्य। "पुरोळा अग्ने पचतः (ऋ० सं० ३,१,३१,२)"—इत्येकवचनस्य॥

(६६) शुरुधः§। शुचं दीप्तिं तापं वा रुधत्यः। 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति क्विप्। शुग्रुधः शुरुधः। "ऋतस्य हि शुरुधः सन्ति पूर्वीः (ऋ० सं० ३,६,१०,३)"॥

---

* निघ० ६, १६. "अग्रम्" ६, २।

† निघ० ६, १६।

‡ निघ० ६, १६. "पक्तः" ५, २४. ६, २४. "पङ्क्तिः" ७, १२।

§ निघ० ६, १६. १२, १८।

(६७) अमिनः*। 'माङ् माने (अदा० प०)'। निष्ठा क्तः। 'द्यतिस्यतिमास्थाम् (७,४,४०)'—इति इत्वम्। मितः परिच्छिन्नः। न मितः अमितः सन्नमिनः अपरिमाण इत्यर्थः, अपरिगणितकालो वा। यद्वा; मिनोतेर्बधकर्मणः 'इण्षिञ्जिदीङुष्यविभ्यो नक् (उ० ३,२)'—इति बाहुलकान्नक्। नञ्समासः। अमिनः अहिंसितः केनचित्। यद्वा; क्त एव प्रत्ययः। अमितोऽभ्यमितो वा सन् अमिनः। "उत द्विबर्हा अमिनः सहोभिः (ऋ० सं० ४,६,७,१)"॥

(६८) जज्झती†। जज्झतीरापो भवन्ति शब्दकारिण्य इति * * *। जस्। पूर्वसवर्णः। "मरुतो जज्झतीरिव (ऋ० सं० ४,३,८,६)"॥

(६९) अप्रतिष्कुतः‡। 'स्कुञ् आप्रवणे (क्रा० उ०)'। आप्रवण मागमनम्। स्कवतेर्गत्यर्थाद्वा निष्ठा। अघोपदेशत्वाद्व्यत्ययेन षत्वम्। अन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धे अन्येनाप्रतिहतपूर्व इत्यर्थः अप्रतिस्खलितपूर्वो वा। अत्र पक्षे स्खलितशब्दस्य ष्कुतभावः। "अस्मभ्यमप्रतिष्कुतः (ऋ० सं० १,१,१४,१)"॥

(७०) शाशदानः§। 'शद्ल शातने (भ्व० प०)'। अस्माद् यङ्लुगन्ताद् व्यत्ययेन शानच्। पुनः पुनरसुरांस्तत्पुराणि वा शातयन्तः "प्रत्वां मतिर्मतिरच्छा शशदानः (ऋ० सं० १,३,३,३)"॥

---

* निघ० ४, १९. "अमः" १०, २१।

† निघ० ४, १९. अनुकरणशब्दः।

‡ निघ० ४, १९।

§ निघ० ४, १९. "शाशत्" ३, ४।

(७१) सृप्रः*। शिप्रे इत्यत्र (३८२पृ०) सृप्रशब्दो व्याख्यातः। "सृप्रकरस्नमूतये (ऋ०मं०६,२,२,५)"। सृप्रौ करस्नौ बाहू यस्य होमेन तर्पणाय पालनाय वात्मनः सर्पिस्तैलमपि सृप्रम् सर्पणात्। निगमः पर्येष्यः ५

(७२) सुशिप्रः†। शिप्रे व्याख्याते (३८२पृ०)। शोभनत्वविशिष्टत्वमत्र विशेषः। सुहनुः सुनासो वा सुशिप्रः। "वाजे सुशिप्र गोमति (ऋ०मं०६,२,२,३)"। कश्चिच्छिप्रशब्देन शिरस्त्राणमुच्यते। शिप्राः शीर्षसु वितता हिरण्ययीरिति सुशिप्रः सुशिरस्त्राणइत्यर्थः सम्भवति॥

(७३) रंसु‡। रमतेर्विच्। सप्तमीबहुवचनम्। रमणीयेष्वित्यर्थः। रमणीयशब्दस्य रम्भावः। "स चित्रेण चिकिते रंसु भासा (ऋ०मं०२,४,२४,५)"॥

(७४) द्विबर्हाः§। द्विशब्दे सप्तम्यन्ते उपपदे 'बृह वृद्धौ (भ्वा०प०)'—इत्यस्मादसुन्। द्वयोः स्थानयोर्वीर्येण परिवृढः इन्द्रः। न ह्यन्तरिक्षे वीर्येणापरिवृद्धः शक्नोति वर्षितुं नापि दिवि आदित्यात् रश्मीन् परिग्रहीतुं दिवः सर्वदेवतासाधारणत्वात् देवराजत्वेन च प्रसिद्धिरितिहासेषु द्विबर्हा उच्यते। "उत द्विबर्हा अमिनः सहोभिः (ऋ०मं०४,६,७,१)"॥

* निघ० ६, १७
† निघ० ६, १७ "शिप्रे" पृ० ४, १।
‡ निघ० ६, १७।
§ निघ० ६, १७. "द्विः" ९, १०.

(७५) अक्रः* । आङ्पूर्वात् क्रमेः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः, आङोह्रस्वत्वम् । आक्रामति सर्वमित्यक्रमाक्राम्यमाक्रम्यते वा । "अक्रो न बभ्रिः समिथे महीनाम् (ऋ० सं० ३,८,१५,२)" ॥

(७६) उराणः† । उरु कुर्वाण इति प्राप्ते कवर्णादिलोपादिना वाक्यार्थः । उराण इति पदवचनम् । "दूत ईयसे प्रदिव उराणः (ऋ० सं० ३,५,७,३)" । स्वल्पमपि हविः उरु बहु कुर्वाणः । तथाच श्रुतिः । "यद्वै देवा जोषत हविस्तत हिमोतु वर्द्धते अथोऽयमपरिमितः ( ? )"—इति ॥

(७७) स्तियानाम्‡ । स्त्यायतेः सदनार्थात् 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति विच् । दृशिग्रहणस्य प्रयोगानुसरणार्थत्वान्निरुपपदादपि भवति । इकार उपजनः । षष्ठीबहुवचनम् । हिमभावेन संहता आप उच्यन्ते । "वृषा सिन्धूनां वृषभः स्तियानाम् (ऋ० सं० ४,७,२०,१)" ॥

(७८) स्तिपाः§ । स्तियाः पातीति विच् । स्तियापाः सन् स्तिपाः । यद्वा; उपस्थितपाः सन् अनेकवर्णलोपादिना स्तिपाः । अग्निरुच्यते । स ह्याकृतिद्वारेण पालयिता; अङ्गभावोपगमनेन चोपस्थितानां कर्म्मव्यतया ज्योतिष्टोमादीनाम् । "स नः स्तिपा उत भवा तनूपाः (ऋ० सं० ८,२,१९,४)" ॥

* निघ० ६, १७ ।
† निघ० ६, १७. "उरणः", "उरामथिः" ४, २१ ।
‡ निघ० ६, १७. "स्त्यै", "स्त्री" ३, २१ ।
§ निघ० ६, १७ ।

(७९) जबारु*। जवमद्भिर्जरमद्भिर्गरवद्भिर्वा रश्मिभिर्यदारोहति तदादित्यमण्डलमुच्यते। जवमत्-जरमत्-गरमच्छब्दानां जबभावः, आङ्पूर्वाद्रुहेश्च ड्प्रत्ययो निपात्यते। "अग्रे रुप आरुपितं जबारु (ऋ० सं० ३, ५, २, २)"॥

(८०) जरूथम्†। गृणातेः स्तुतिकर्मणो जरतेर्वार्चतिकर्मणो 'जॄवृञ्भ्यामूथन्‡'—इति भावे करणे वा ऊथन्। बाहुलकाद् गकारस्य जकारः। स्तवनं स्तूयतेऽनेनेति वा जरूथं स्तोत्रम्। "ज-रूथं हन्यक्षि राये पुरन्धिम् (ऋ० सं० ५, २, १२, ६)"॥

(८१) कुलिशः§। वज्रनामसु व्याख्यातम् (२८९ पृ०)। स निगमः (ऋ० सं० १, २, ३६, ५)॥

(८२) तुञ्जः||। तुञ्जतेर्दानकर्मणो भावे घञ्। दानमित्यर्थः "तुञ्जे तुञ्जे य उत्तरे (ऋ० सं० १, १, १४, २)"। वज्रोऽपि तुञ्ज स्तत्रैव व्याख्यातः॥

(८३) बर्हणा¶। बृहेर्वृद्ध्यर्थस्य 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति भूते कर्त्तरि ल्युट्। परिवृढः। हिंसाकर्मणो वा भावे। हिंसा बर्हणा। तृतीयैकवचनस्थाने डादेशः। "बृहच्छ्रवा असुरो बर्हणा कृतः (ऋ० सं० १, ४, १७, २)"॥

* निघ० ६, १७।

† 'जॄवृञ्भ्यामूथन्' सि०कौ०उ०२,५।

‡ निघ० ६, १७. "गृणाति" ३, ५. "जरति" ४, २८. १०, ८।

§ पु० २, २०। निघ० ६, १७. "कुलम्" ६, २२. "कुल्माषः" १, ४।

|| पु० २, २०। निघ० ६, १८. "तुजिः" ११, ४५. "तुञ्जति" पु० २, २०।

¶ निघ० ६, १८। "वृह" ६, २।

(८४) ततनुष्टिम्* । 'तनिमृङ्भ्यां किच (उ० ३,८५)'—इति तनोतेः तन्प्रत्ययः, नुदेर्निष्ठायां नुन्नं नुष्टिभावः । यद्वा; तत-शब्दस्य ततन्-भावः, वशेर्वा बाहुलकात् कर्त्तरि क्तिचि सम्प्रसारणे उष्टिः । तङ्कर्मसन्तानादग्निहोत्रादेः कर्मणेऽनुन्नः प्रेरितः ततनं भोगसन्तानं वष्टि ततनुष्टिः, नलोपाभावः । ततनुष्टिम् । "अपाप शक्रस्ततनुष्टि-मूहति (ऋ० सं० ४,९,३,३)" ॥

(८५) इलीविशः† । इलाशब्द उखाशब्द-पर्यायः । इला अन्नम्; अत्रान्नहेतुभूते उदके वर्त्तते । बिले दरे शेते इति 'अधिकरणे शेतेः (३,२,१५)'—इत्यच् । इलाबिले शयोयस्य । निपातश्छान्दसः । मेघउच्यते । इलाबिलशयः सन् इलीविशः । "न्यविध्यदिलीबिशस्य दृळ्हा (ऋ० सं० १,३,३,२)" ॥

(८६) कियेधाः‡ । कियच्छब्दे क्रममाणशब्दे वोपपदे दधाते-र्विच् । कियदर्थं विज्ञायमानपरिमाणं स्वबलं धारयति; क्रममाणं वाभिमुखं परबलं धारयति निहणद्धीति । कियद्वा क्रममाणधा सन् कियेधाः । इन्द्रविशेषः । "वृत्राय वज्रं मीशानः कियेधाः (ऋ० सं० १,४,२८,२)" ॥

(८७) भ्रमिः§ । 'भ्रमेः सम्प्रसारणञ्च (उ० ४,११७)'—इतीन् प्रत्ययः । अग्निरुच्यते । भ्रमिता । स्वयं त्रिष्वपि लोकेष्वप्रतिहत-

---

* निघ० ६, १९. "ततः" ६, ९. तन् २, २८. "आततान" १०, ११. "ततत" ११, २४ ।

† निघ० ६, १९. "इलः" ८, ७ ।

‡ निघ० ६, २० ।

§ निघ० ६, २०. "भ्रमति" पु० २, १४ ।

गतिरित्यर्थः। अन्तर्णीतण्यर्थो वा भ्रमिः। भ्रामयिता। "भ्रमिर्-ऋषिकृन्मर्त्यानाम् (ऋ० सं० १,२,२५,१)"॥

(८८) विष्पितः*। विप्राप्तशब्दस्य विष्पितभावः। यद्वा; विषे-र्व्याप्त्यर्थात् क्तः, इकारपकारावुपजनौ। विस्तीर्ण इत्यर्थः। "पारं नो अस्य विष्पितस्य पर्षन् (ऋ० सं० ५,५,२,१)"॥

(८९) तुरीपम्†। तूर्णं व्याप्तुं शीलमस्य णिनिः। तूर्णापि सत् तुरीपम्। उदकमभिधेयम्। "तन्नस्तुरीपमद्भुतम् (ऋ० सं० २, २,११,४)"॥

(९०) रम्भिनः‡। रपतेर्वा रमतेर्वा कर्मणि भावे वा घञ्। रापो रामो वा शब्दो यस्य तद्रापि रामि वा सत् मकारपकारोप-जनेन रम्भिशब्दो बहूदकं स्तोत्रं वोच्यते। तदस्यास्तीत्यर्थे आदि-त्वादच् प्रकृतिभावश्च द्रष्टव्यः। दण्डिमती शालेति यथा। अतश्च शब्दवदुदकं तद्वान्मेघोऽभिधेयः। उच्चार्यमाणेन स्तोत्रेण स्तोता वा। "प्रमातरा रम्भिनस्यायोः (ऋ० सं० २,१,१,४)"॥

(९१) ऋञ्जतिः§। धातुनिर्देशात् 'ऋजी भर्जने' भ्वादिरत्र प्रसाधनकर्मविषयस्य समीकरणं प्रसाधनमात्मसात् करणं तदस्येत्यर्थः। "यजिष्ठमृञ्जसे गिरा (ऋ० सं० ३,५,८,१)"॥

(९२) ऋतुनीती॥। "ऋजुनीती नो वरुणः (ऋ० सं० १,६, १७,१)"॥

---

* निघ० ६, २०.

† निघ० ६, २१.

‡ निघ० ६, २१. 'रपम्' ४, २१. "रपति" पु० २, १४।

§ निघ० ६, २१।

|| निघ० ६, २१. "ऋजूयता" १२, १९।

(९३) प्रतद्वसू*। प्राप्तवसुनौ। पकारलोप-ह्रस्वत्व-तकारोपजनैः प्रतद्वसू । हरी विशेष्यौ। "हरी इन्द्र प्रतद्वसू अभिस्वर (ऋ० सं० ६, १,१२,२)"॥

(९४) हिनोत†। 'हि गतौ (स्वा० प०)'। लोटि थस्य तः 'छन्दस्युभयथा (३,४,११७)'—इत्यार्द्धधातुकत्वात् ङित्वाभावे गुणः प्रहिणुतेत्यर्थः। "हिनोता नो अध्वरं देवयज्या (ऋ० सं० ७,७,२, ६,१)" ॥

(९५) चोष्कूयमाणः‡। (९६) चोष्कूयते§। 'ष्कुञ् आप्रवणे (स्वा० उ०)' इह दानार्थः, क्वचिद् व्युदसनार्थश्च। यङि पूर्वत्र लट् शानच्, उत्तरत्र व्यत्ययेन षत्वम्। "चोष्कूयमाण इन्द्र भूरि वामम् (ऋ० सं० १,३,१,३)। अत्यर्थं ददित्यर्थः। चोष्कूयते विश इन्द्रो मनुष्यान् (ऋ० सं० ४,७,२३,१)"। अत्यर्थं व्युदस्यति ॥

(९७) सुमत्‖। स्वयमित्यर्थे वर्त्तमानो निपातः। "उपप्रागात् सुमन्मे धायि मन्म (ऋ० सं० २,३,८,२)"॥

(९८) दिविष्टिषु¶। दिविशब्दोपपदात् इषेर्गत्यर्थादिच्छार्थाद्वा करणे क्तिन्। द्यौर्गम्यते प्रार्थ्यते वा याभिस्ताः। "कुत्सस्य दिविष्टिषु (ऋ० सं० ५,७,२२,४)" ॥

(९९) दूतः**। जवतेर्द्रवतेर्वारयतेर्वा 'हृतनिभ्याम् (उ० ३,

* निरु० ६. २१. "वसुः" पृ० २, १०।
†,‡ निरु० ६, २१. १२, ५. "हिनोति" पृ० ४, २. "हिमम्" निरु० ४, ३७. ६, २६।
§ निरु० ६, २२. "अप्रतिष्कुतः" २६।
‖ निरु० ६, २२।
¶ निरु० ६, २२. "दिव्यासः" ४, १९. ७, १८।
** निरु० ५, १. ६, २२।

८३.८५)'—इति बाहुलकात् क्त-प्रत्ययो धातूनां दू-भावश्च। गच्छति हि सः, द्रवते वा शीघ्रात्, वारयति हि स्वसामर्थ्यादभिर-परम्। "स्तोमी दूळभोऽवन्नरा (ऋ० सं० ६,२,२८,१)" ॥

(१००) जिन्वति*। जिवि: प्रीणात्यर्थः भ्वादिः इदित्त्वान्नुम्। "भूमिं पर्जन्या जिन्वन्ति (ऋ० सं० २,३,२३,५)" ॥

(१०१) अमत्र:†। अमात्रशब्दस्य ह्रस्वः। मात्रा परिमाणमपरिमाणोऽभ्यमितो वा अहिंसितः। मितशब्दस्य मत्रभावः। "महाँ अमत्रो वृजने विरप्शी (ऋ० सं० ३,२,१८,४)" ॥

(१०२) ऋचीषमः‡। 'ऋच स्तुतौ (तु० प०)'। इ-प्रत्ययः। 'कृदिकारात् (४,१,४५. ग० रा०)'—इति ङीष्। ऋची स्तुतिः। तया समः। अधिकगुणाध्यारोपेणापि कृता स्तुतिः नातिरिच्यत इत्यर्थः। "स्तवे वज्र्यृचीषमः (ऋ० सं० ७,७,६,२)" ॥

(१०३) अनर्शरातिम्§। अर्शशब्दोऽश्लीलवाची। रातेः क्तिनि रातिर्दानम्। अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः पापकदानस्तद्विपरीतोऽनर्शरातिः। उत्कृष्टस्य दातेत्यर्थः। 'अनर्शरातिं वसुदामुप स्तुहि (ऋ० सं० ६,७,३,४)" ॥

(१०४) अनर्वा‖। अर्तेः 'अन्येभ्योऽपि दृश्यन्ते (३,२,७५)'—इति वनिप्। नञ् समासः। 'अर्वणस्त्रसावनञः (६,४,१२७)'—

* पु० २, १४। निरु० ६, २२. "प्रजिन्वि" ११, २०।
† निरु० ६, २२. ५, १।
‡ निरु० ६, २३. "ऋक्" पु० १, ११. निरु० १, ८।
§ निरु० ६, २३।
‖ निरु० ६, २३. "अनर्वम" ४, २०।

इति प्रकृतिवद्भावाभावः। अप्रत्यृतः अप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः। "अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २,५,१२,१)"। अनर्वाणमप्रतिगतमन्यं प्रत्याश्रितम् तथा अपराश्रितमित्यर्थः॥

(१०५) असामि*। असामीत्यनवगतम्। अग्रे च सामिशब्द एवानवगतः। यतश्चाह—'सामि प्रतिषिद्धम् असामि (निरु० ६, २३)'—इति। सामि कस्मात्। स्यतेः समाप्त्यर्थस्येति केचित्। तेन सामि समाप्तं चोच्यते। तस्य नञ् प्रतिषेधः। ततश्च असामि असमाप्तमित्यर्थः। अथवा न सामीति। किन्तर्हि। अ-सु-समाप्तमिति। पाठान्तरेणार्थमाह उदाहरणम् (निरु० ६,२३)—"असामि ओजो बिभृथा सुदानवः (ऋ० सं० १,३,१८,५)"। असामि असमाप्तमनन्तमित्यर्थः। सुष्ठु वा असमाप्तं पूर्ववदित्यर्थः। 'स्यतेः कित्'—इति बाहुलकात् मिन् प्रत्ययः। साम्यर्थधर्मसामिसमग्रमित्यस्य भाष्ये (निरु० ६,२३) द्रष्टव्यम्॥

(१०६) गल्दया†। गल्दाशब्दो गालनपर्यायः। गल्दया गालनेन चारणेन प्रदानेन पूरणेन तृप्तेनेत्यर्थः। "मा त्वा सोमस्य गल्दया (ऋ० सं० ५,७,१३,५)"॥

(१०७) जल्हवः‡। ज्वलतेः क्विपि ज्वलनं ज्वल्, ज्वलनं जहातीति 'मृगय्वादयश्च (उ० १,३६)'—इति कु-प्रत्ययः पूर्वपदस्य

* निरु० ६, २२।
† पु० १, ११, निरु० ६, २४।
‡ निरु० ६, २५। जलति पु० ६, १०।

जल्भावश्च निपात्यते। ज्वलनेनाग्निना हीना इत्यर्थः। "मा गायामो न जल्हवः (ऋ० सं० ६,४,३७,६)" ॥

(१०८) बकुरः*। भास्करशब्दस्य भासमान-द्रविणशब्दस्य वा बकुरभावः। "अभि दस्युं बकुरेणा धमन्ता (ऋ० सं० १,८,१७,१)"। बकुरेण भास्करेण दीप्तेन भयङ्करेण वा भासमानगमनेन वा सामर्थ्यात् स्वेनायुधेन ज्योतिषा वा ॥

(१०९) बेकनाटान्†। बेक इति द्विशब्दस्यार्थे बहुशो दृष्टः। एकं कार्षापणमापणिकाय प्रयच्छन् द्वौ मह्यं प्रदातव्याविव्येवमभिनायनं दर्शयन्ति। ततो द्विशब्दादेकशब्दाच्चटयतेश्च बेकनाटाः। एतदेतेनाटाः द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वेति। द्व्येकयोर्नाटो नटनं तद्वन्तो बेकनाटाः। मत्वर्थीयस्य लुक्। नटेर्घञि नाटः। द्व्येकशब्दस्य बेकभावः। वार्द्धुषिका अभिधेयाः। "इन्द्रो विश्वान् बेकनाटाँ अहर्दृशः (ऋ० सं० ६,४,४९,५)" ॥

(११०) अभिधेतन‡। धावतेर्लोण्मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च (७,१,४५)'—इति तनबादेशः। धावशब्दस्य धेभावः। अभिधावत। "जीवान्नो अभि धेतन (ऋ० सं० ६,४.५१,५)" ॥

(१११) अंहुरः§। आङ्पूर्वाद्धन्तेः मृगय्वादित्वात् (उ० १,

* निरु० ६, २५।

† निघ० ६, २६। "वेकुरा" पृ० १, ११।

‡ निघ० ६, २७, "अदीधेत्" २, १२. "दीधिम" ६, ८. "आधीतम्" १, ६।

§ निघ० ६, १७. "अंकूरणः" ६, २०. "अंकूः," "अंहः" ४, २५. "अंहतिः" ४, २५. ४, २२।

३६) क्त-प्रत्ययः । श्राङोह्रस्वत्वं हुगागमश्च निपात्यते । श्रा हन्ति श्रयसो विनश्यन्तीति श्रंहः पापम्, रोमत्वर्थीयः श्रंहुरः । श्रंहस्वान् । "तामामेकामिदंभ्यंहुरोगान् (ऋ० सं० ७,५,३.३,६)" ॥

(११२) बतः* । सत्ववाची प्रथमान्तः । बलादतीत इति वाक्यस्यार्थे पदम् । बलशब्दादततेर्निष्ठायां च बलातीतः सन् बतः दुर्बल इत्यर्थः । बत निपातोऽसत्ववचनोऽप्यव्ययम्, खेदो दुःखमानसः, अनुकम्पा दया, तयोर्वर्त्तते । "बतो बतासि यम नैव ते मनः (ऋ० सं० ७,६,८,३)" ॥

(११३) वाताप्यम्† । आङ्-पूर्वादाप्यायतेरन्तर्णीतण्यर्थात् 'अन्येष्वपि दृश्यते (३,२,१०१)'—इत्यपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात् कर्मणि डः । उदकं वृष्टिलक्षणमभिधेयम् । वातः पुरोवात एव । तद्ध्युदकमाप्याययति वातेनाप्याय्यत इत्यर्थः । अथवा वातो यदाप्याययति कर्मोपपदात् कर्त्तरि प्रत्ययः । वातमाप्याययति वाताप्यम् । "पुनानो वाताप्यं विश्वश्चन्द्रम् (ऋ० सं० ७,४,२,५)" ॥

(११४) चाकन्‡ । चायतेः स्वरितेत्त्वाल्लटः शतरि यकारस्य ककारो बाहुलकात् । अनेकार्थत्वादिच्छार्थोऽपि । चायन् कामयमानो वा । "वने न वायो न्यधायि चाकन् (ऋ० सं० ७,७,२२,१)" ॥ शाकल्यपक्षे चाकन्नित्याख्यातम् । तत्र लटि श्लिर्यस्य कत्वं 'बहुलं छन्दस्यमाङ्योगेऽपि (६,४,७५)' । कामयते इत्यर्थः ॥

* निघ० ६, २८. "बत" ६, २७ ।
† निघ० ६, २८ । "वातः" प० ५, ४ ।
‡ निघ० ६, २८ । "कमति", "कामियत्" ४, १५ । "कामयमानः" ४, १४ ।

(११५) रथर्यति* । रथमात्मन इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजनोऽत्वधानादीत्वाभावः । "एष देवो रथर्यति (ऋ० मं० ६,७,२०,५)" ॥

(११६) असश्चाम्† । संश्चतेर्वा मवानपूर्वाद्वा क्रमेः 'जनसन-खनक्रमगमो विट् (३,२,६७)' । छन्दस्युपसर्गेऽपि इति हि तत्रानुवर्त्तते । 'विड्वनोरनुनासिकः स्यात् (६,४,४१)' । आतोलोपश्छान्दसः । 'समानस्य छन्दस्यमूर्द्ध (६,३,८४)'—इति समानशब्दस्य सभावः । न सक्ता असक्ता तां यावज्जीवमनपायिनीं समानजातीयप्राप्तपूर्वामित्यर्थः । "धेनुं न इषं पिन्वत ससंक्राम् (ऋ० मं० ५,१,४,३)" ॥

(११७) आधवः‡ । 'धूञ् कम्पने (स्वा० प०)' । पचाद्यच् । अन्तर्णीतण्यर्थोऽत्र धूञ् । आधावकः । कम्पयतेत्यर्थः । "विप्राणामाधवम् (ऋ० मं० ७,७,१३,४)" ॥

(११८) अनवब्रवः§ । ब्रूञ् । 'ऋदोरप् (३,३,५७)' । 'छन्दस्युभयथा (३,४,११७)'—इत्यपः सार्वधातुकत्वाद् वच्यादेशो न भवति । ब्रवः वचनम् । अनवक्षिप्तवचनः । 'प्रादिभ्यो धातुजस्य (२, ४,७९,वा०)'—इति समासादि । अप्रतिहतशासन इत्यर्थः । "विजेषकृदिन्द्र इवानवब्रवः (ऋ० मं० ८,२,१९,५)" ॥

---

* पु० २, १४. निघ० ६, १८ ।

† निघ० ६, ३९ ।

‡ ११, १२ खव्याख्यामित्यर्थः ।

§ निघ० ६, २९ । "आधीः" ४, ६ । "आधीतम्" १, ६ । "आध्यात्मिकः" ७, १ । "आधः" ११, १४ ।

‖ निघ० ६, २९ ।

(११९) मदाम्बे*। मदानोनुव-शब्दात् मम्बुद्धौ नोनुव-शब्दस्य म्बभावः। दुर्भिक्षाधिदेवता अलक्ष्मी वाभिधेया। मुदाकरणनलक्षण-शब्दकारिणीत्यर्थः। "गिरिद्रुष्क मदाम्बे (ऋ० सं० ८,८,१३,१)"॥

(१२०) शिरिम्बिठः†। "शिरिम्बिठस्य सत्वभिः (ऋ० सं० ८,८,१३,१)"॥

(१२१) पराशरः‡। परापूर्वस्य शृणातेः विशरणार्थस्य हिंसार्थस्य वा 'ऋदोरप् (३,३,५७)'—इति रूपम्। पराशीर्णः पराशरः ऋषिः। पराशीर्णस्य स्थविरस्य लघिष्ठस्य नप्ता चिरमृते शक्तौ जात इत्यर्थः। "पराशरः शतयातुर्वसिष्ठः (ऋ० सं० ५,२,२८,१)"। रक्षसां परा शातयिता पराशर इन्द्रः। "इन्द्रोयातूनामभवत् पराशरः (ऋ० सं० ५,७,९,१ )"॥

(१२२) क्रिविर्दती§। 'कृविघृविच्छविस्थविकिकीदिवि (उ० ४,५६)"—इति विन्-प्रत्ययो रिदादेशस्य निपात्यते। ददातेः शतरि 'बहुलं छन्दसि(२,४,७३)'—इति शपोलुक्। 'उगितश्च (४,१,६)'—इति ङीप्। क्रिवेर्विकर्त्तनस्य दती। रेफउपजनः। शतघ्नामायुधविशेषे वर्त्तते। "यत्रा वो दिद्युद्रदति क्रिविर्दती (ऋ० सं० २,४,२,१)"॥

(१२३) करूळती‖। कृत्तदन्त-शब्दस्य करूळतीभावः। 'सुपां सुलुक् (७,१,३९)'—इति सोर्लुक्। स्त्रीलिङ्गप्रतिरूपकमेतत्।

* निरु० ६,३० ।

† निरु० ६, ३० । "शिरिणा" पृ० १, ७ ।

‡ निरु० ६, ३० । "प०ा" १, ३ ।

§ निरु० ६, ३० । "क्रिविः" पु०१, २१ ।

‖ निरु० ६, ३० ।

'तल्कः (निरु० ६,२१)'—इति पुंलिङ्गनिर्देशात् पुरोडाश इति निश्चयः। भगइति पूर्वः पक्षः। तस्मात् 'अदन्तकः पूषा (शत० ब्रा० ८,७३)'—इति च श्रुतिः। "वामं देवः करूळती (ऋ० सं० ३,६,२३,४)"॥

(१२४) दनः*। दानमानस इत्यस्य दनम् भावः। दानमानस इत्यर्थः। "दनो विश इन्द्र मृध्रवाचः (ऋ० सं० २,४,१६,२)"॥

(१२५) शरारुः†। समुपसर्गार्थविशिष्टात शृणातेः 'शृवन्द्योरारुः (३,२,१७३)'—इति ताच्छील्यादिषु विहित आरुप्रत्ययेन इच्छायां भवति। * * *। "शरारुरभि मन्यते (ऋ० सं० ८,४,२,४)"। संशिशरिषुः संशयिषुर्वा दीर्घनिद्रया हि मन्यते दुष्टेनातिशयेन हि भवति॥

(१२६) इदंयुः‡। इत्यनवगतम्। क्वचि मान्नाय्यप्रतिषेधात्। 'इदं कामयमान उच्यते (निरु० ६,३१)'। कर्म इदं सामान्येन प्रदर्शितम्। तथाहि लक्षितं धनादि तद्य इच्छति स इदंयुः। * * * शंयुः किंयुः विप्रयुः इत्याद्यवगतानवगतक्यजन्तमात्रोपसङ्ग्रहार्थं निगमेषु पठितम्, न विशेषार्थमिति निरुक्तकाराभिप्रायः। अतएव च सामान्यविशेषयोरुदाहरणमिदम्। तेषाञ्च "वसूयवो वसुकामाः"—इत्यादि बहुधागतत्वाद् विशेषेण नेह किञ्चित् भाष्यकारेणोदाजहार। अनेकार्थतां दर्शयन्नाह—'अथापि तद्वदर्थे भाष्यते (निरु० ६,३१)' प्रयुज्यत इत्यर्थः। तद्वदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते। तेन

* निरु० ६, ३१।
† निरु० ६, ३१. "अतीरम्" २, १९. ३, ५. "शरधाम्" ५, १२।
‡ निरु० ६, ३१

तदर्थे मत्वर्थे इत्यर्थः । "अस्य पुत्रं पुरुष्यावृत्तं स्थितम्: (ऋ० मं० १, ४, ११, ४)" ॥

(१२७) कीकटेषु* । मक्षे मन्नम्यन्त इति तत्रैव निगमेषु पठ्यते। किङ्कृताः ।' किं क्रिया वा मन्तः कौकटाः किं कृताः किमर्थमुत्पादिताः अमदाचाराः । अथवा यागदानादिभिः क्रियाभिः कृताभिः पिबत खादतेत्येवमभिप्राया नेह येषां ते किङ्क्रियाः । "किन्ते कृण्वन्ति कीकटेषु गावः (ऋ० मं० ३, ३, २१, ४)" । कौकटनामानार्यनिवासे देशः । कृपणा वा कौकटाः ॥

(१२८) बुन्दः† । (१२९) वृन्दम्‡ । भिन्द इति वा भयद इति वा भासमानो द्रवतीति वाक्यार्थपदवचनं विदारण-भयदान-भासमान-द्रवणलक्षणानामर्थेषु सम्भवात्पदलक्षणवर्णसामान्याच्चेदमुक्तम् । 'वृङ् सम्भक्तौ (भ्वा० आ०)' । 'भृतुमकुभ्यो दनुच्'—इति दनुप्रत्ययः । वबयोरभेदः । बाहुलकात् लुगभावश्च । अनेकार्थत्वात् पूर्वोक्तार्थवृत्तित्वं बोद्धव्यम् । बुन्दो वज्रम् । "माभ्यु बुन्दो हिरण्ययैः (ऋ० मं० ६, ५, २०, ६)" । "इन्द्रो बुन्दं स्वाततम् (ऋ० मं० ६, ५, २०, १)" ॥

॥ वृन्देषु अनुविदारण-भयदारण-भयदान-भासमानद्रवणरूपा अर्थाः सम्भवन्ति । प्रसिद्धत्वान्निगमो न प्रदर्शितः ॥

(१३०) किः§ । करोतेः 'वेञोर्वयिः'—इति बाहुलकात् इन्-

* निघ० ६, २२ "कतवः" ५, २२ ।
† निघ० ६, २२, ३४ ।
‡ निघ० ६, २४, "इन्द्रारकः" ।
§ निघ० ६, २५ ।

प्रत्ययः। कर्त्तेत्यर्थः। "अयं यो होता किरु स यमस्य (ऋ० सं० ८,१,१२,३)"॥

(१३१) उल्बम्*। ऊर्णोतेर्वृणोतेर्वा। ‘अन्यिशूलोणित उश †’— इति विधीयमाने व-प्रत्यये बाहुलकाद् भवति, प्रकृतेरुल्भावश्च। गर्भस्याच्छादनमभिधेयम्। "महत्तदुल्बं स्थविरं तदासीत् (ऋ० सं० ८,१,१०,१)"। जरायोरन्तर्भवेष्टनं श्रुतम्॥

(१३२) ऋबीसम्‡। पृथिव्यभिधेयम्। अपगतभासमित्येवमाद्याः (निरु० ६,३५) शब्दसमाधय उत्पद्यन्ते। धात्वन्यत्वकृतो विशेषः। अपगतापर्चितापहृतान्तर्हित-शब्दानामन्यतमत् पूर्वपदं भासशब्द उत्तरपदम्। पूर्वस्य ऋ-भावः, भकारस्य बकार आकारस्य ईकारश्च॥ "ऋबीसे अत्रिमश्विनावनीतम् (ऋ० सं० १,८,९,३)"॥

अध्यायपरिसमाप्तिकं द्विर्वचनम्॥

इति देवराजयज्वविरचिते नैगमकाण्डनिर्वचनं समाप्तम्॥

## ॥ समाप्तश्च चतुर्थोऽध्यायः॥ ४॥

* निरु० ६, ३५।
† 'उल्बादयश्च' सि० कौ० उ० ४, ६९१।
‡ निरु० ६, ३५

# अथ पञ्चमाध्यायः ॥



अपि दैवताकाण्डनिर्वचनं व्याख्यायते—

**अग्निः(१)। जातवेदाः(२)। वैश्वानरः(३) इति त्रीणि पदानि*॥ १ ॥**

(१) अग्निः†। अग्राद्युपपदात् नयतेः 'सत्सूद्विष (३,२,६१)'—इत्यादिना क्विप्। पृषोदरादित्वात् अग्निः। यद्वा; 'वेञ्ञो ऽयिः'—इति बाहुलकादिनप्रत्ययो ऽग्रशब्दस्य रेफाकारयोर्लोपश्च। अग्रणीः। मुख्यत्वञ्च 'अग्निर्हि देवानां सेनानीः'- इति श्रुतेः। अयं प्रथमं यज्ञेषु कर्त्तव्येषु तादर्थ्येन प्रणीयते। अङ्गोपपदाद्वा समर्थविशिष्टात् नयतेः पूर्ववदिकागाकारलोपश्च। अङ्गं शरीरं यज्ञस्य, ततः सन्नममानः स्वयमेव प्रङ्गीभवन् हविषां पाककरणत्वेन साधनभावं प्रतिपाद्यमानो नयति। नञ्पूर्वात् क्नोपयतेः स्नेहनार्थात् किन्-प्रत्यये ककारनकारव्यतिरिक्तं लुप्यते, ककारस्य गकारापत्तिश्च। नञ्विशिष्टेन स्नेहनेन च तद्विपरीतं विरूक्षणञ्च लक्ष्यते, विरूक्षयतीत्यर्थः,

* इतीत्यादि न दृश्यते ग-पुस्तके, नापि तत्र खण्डाङ्कः।

† प० ४। निरु० ७, १४. १०, २५. ११, २२. "अग्निरूपाः" १०, २०. "अयं" ६, ९. "सेना" २, ११. १०, २१।

दग्धव्यस्य एधादेः शोषणात् विलक्षण इत्यर्थः। यद्वा; एः स्यनमित्यादौ दर्शनादूकारः। अकारेकारस्य दहेर्हकारस्य च निष्ठायां गकारापत्तिर्द्रष्टव्येति। तयोरन्यतरस्माद् गकारः, नयतेः पूर्वनिः। इतश्च अक्रातम्भिन्धकं वन्द्यंकारागन्तात्मकत्वेन वा नयतात्यग्निः। "अग्निमीळे पुरोहितं (ऋ० सं० १,१,१,१)"॥

(२) जातवेदाः*। जातशब्दोपपदात् विदेर्विदेर्विचारार्थाद्वा असुन्; जानाति सर्वाणि भूतानि वेद, लोकपालत्वात्। जाते जाते सर्वस्मिन् भूतजाते विद्यते। जातं वेदाख्यं विलक्षणं धनमैश्वर्यादि इतरद्वा यस्य सः। जातं वेदो विचारणं यस्य, वैश्वानरविद्यापि च कृतविचार इत्यर्थः। जातमात्र एव विजानते प्रज्ञानस्वभावत्वात्, जातं वेदः प्रज्ञानं वा अस्य। "प्र नूनं जातवेदसम् (ऋ० सं० ८,८,४५,१)"॥

(३) वैश्वानरः†। विश्वान् नरान् इतोऽमुतः लोकान्तरं नयति। इदमर्थेन विश्वानराणां नेतृत्वेन सम्पद्यते वा कर्मार्थप्रणेतृत्वेन सम्यादित्यस्य वैश्वानरः। 'अन्येषामपि दृश्यते (६,३,१३७)'— इति दीर्घः। अपि वा विश्वान् जन्तून् अरः। 'ऋ गतौ' इत्यस्य छान्दसत्वात् पचाद्यच् उपपदविभक्त्यलुक्। सर्वाणि भूतान्यरः प्रत्यृतः प्रतिगतः प्रविष्टेति विश्वानरः प्राणः। तेन जन्यमानत्वात्तस्यापत्यं वैश्वानरः। 'प्राणाद्धि बलान्मथ्यमानो हि जायते'—इति ब्राह्मणम् : "वैश्वानरस्य सुमतौ स्याम (ऋ० सं० १,७,६,१)"॥

* निघ० ७,१९. 'जातविद्या' १,८।

† निघ० २,११. ७,२१. "विश्वानरः" प० ५. ६

द्रविणोदाः[1]। इध्मः[2]। तनूनपात्[3]। नराशंसः[4]। इळः[5]। बर्हिः[6]। द्वारः[7]। उषासानक्ता[8]। दैव्याहोतारा[9]। तिस्रोदेवीः[10]। त्वष्टा[11]। वनस्पतिः[12]। स्वाहाकृतयः[13] इति त्रयोदश पदानि* ॥ २ ॥

(१) द्रविणोदाः†। द्रविणशब्दो व्याख्यातो धननामत्वेन (२२१ पृ०)। तस्य सकारउपजनः। ददातेरसुनि बाहुलकादाकारलोपः। धनस्य बलस्य वा दाता द्रविणोदाः। द्रविणोदा द्रविणसः (ऋ० सं० १,७,४,३)"। ऋतुयाजप्रैषेषु सकारलोपोद्रष्टव्यः ॥

(२) इध्मः‡। 'ञि इन्धी दीप्तौ (भू० उ०)'। इध्यतेऽनेनाग्निरिति इध्मः यज्ञेध्म। समिध्यत इत्यस्ति अग्नेः समिन्धनम्। ज्वलन्नाम वेध्मः। "समिद्धो अद्य मनुषो दुरोणे (ऋ० सं० ८,६,८,१)" ॥

(३) तनूनपात्§। नपाच्छब्दोऽपत्यनामसु व्याख्यातः (१७५ पृ०)। इह पौत्रे वर्त्तते। यद्वा ; नुतशब्दस्य नपाद्-भावः। पुत्रापेक्षया नीचैः सुतरां नुतो हि पौत्रः। तनोतेः 'कृभृशीङ्वरित्सरितनिधनिमस्जिभ्य ऊः||'। तन्वन्त्यस्यां पयआदिभोगाः इति तनूः गोनाम। अस्याः पयो जायते। पयस आज्यमिति। आज्यं तनू-

(५) "इळः" क, ख, ग।
* इतीत्यादि न दृश्यते ग-पुस्तके।
† निघ० ८, १. २। "द्रविणस्", "द्रविणोदसा" ८, २।
‡ निघ० ८, ४-५।
§ निघ० ८, ५. "तनूः" १०, ४० "तनूत्यजा" २, १७. "तनूशुभ्रा" ६, १९. "तन्यतुः" १२, ३०।
|| 'कृषिचमितनिधनिसर्जिखर्जिभ्यऊः' सि० कौ० उ० १, ७८।

नपात्। अथ वा ततमन्तरिक्षे इति तत्र: आपः । तान्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्योऽग्निर्जायते इति । अग्निस्तनूनपात् । "तनूनपात्पथ ऋतस्य यानान् (ऋ० सं० ८,६,८,२)" ॥

(४) नराशंसः* । नरैः ऋत्विग्भिः शस्यतेऽस्मिन् 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । यज्ञ उच्यते । नरैः प्रशस्यते स्तूयते इत्यग्निः । "नराशंसस्य महिमानमेषाम् (ऋ० सं० ५,२,१,२)" ॥

(५) इळः† । इळाशब्दो व्याख्यातः पृथिवीनामसु (१४पृ०) । * * * । "आजुह्वान ईड्यो वन्द्यश्च (ऋ० सं० ८,६,८,३)" ॥ "होताग्निरिळः प्रथमं यजत्यौ (ऋ० सं० २,८,२२,३)" ॥

(६) बर्हिः‡ । व्याख्यातं महन्नामसु (१००पृ०) । बर्हिरेवाङ्गं दर्भमयम् । यद्वा; 'वृही उद्यमने (भू० प०)'—इत्यस्मादिभिः । वबयोरभेदादुक्तम्। अग्निपक्षे परिवृढत्वाद् बर्हिः। "प्राचीनं बर्हिः प्रदिशा पृथिव्या (ऋ० सं० ८,६,८,४)" ॥

(७) द्वारः§ । जवतेर्द्रवतेर्वा गतिकर्मणः वारयतेर्वा स्यात् । जवतेर्जकारस्य दकारः, द्रवतेः रेफलोपः, वारयतेर्णिड़ागमश्च निपातमात्। गम्यन्ते ह्याभिर्यज्ञगृहम्, अनभिमता हि तास्वेव निवार्यते । अग्निपक्षे, ज्वाला आगम्यन्ते आभिः, शीतादिनिवारणम् । "देवीर्द्वारो बृहतीर्विश्वमिन्वा (ऋ० सं० ८,६,८,५)" ॥

* निरु० ८, ६ । "नरः" पृ० २, ३. निरु० ५, १. "मर्य्या" ११, ११. "नरकः" १, ११ । "नाराशंसः" प० ३ ।

† निरु० ८, ७ । "इला" पृ० १, १ ।

‡ पृ० १, ३ ।

§ निरु० २, १. ८, ९ ।

(८) उषासानक्ता* । 'उच्छी विवासे (भ्वा०प०)', 'वश कान्तौ (अदा०प०)'—'इषिरञ्जिभूशूभ्यः कित्'—इति [illegible] शकारस्य वा षकारः । 'ग्रहिज्या (६,१,१६)'—इति सम्प्रसारणम् । उच्छति कान्ता वा उषा । नक्त-शब्दो रात्रिवचनः । 'उषासोषसः (६,३,३१)'—इति उषसादेशः । द्विवचनस्याकारः । अग्निपक्षे, उषा दीप्तिः, तमसो विवासनात्, आकृतिस्तद्युक्ता अनक्त्यग्निमिति । "उषासानक्ता सदतां नि योनौ (ऋ०सं०८,६,८,६)" ॥

(९) दैव्याहोतारा† । उभयत्राकारो द्विवचनस्य । * * * । आह्वातारौ देवानाम् । पार्थिवमध्यमावग्नी उच्येते । "दैव्या होतारा प्रथमा सुवाचा (ऋ०सं०८,६,९,१)" ॥

(१०) तिस्रोदेवीः‡ । प्रथमार्थे द्वितीया । भारतीळासरस्वत्यः । * * * । अग्नायी पृथिवीळेति स्त्रियः इति प्रत्यक्षेण पठिताया अपि तिस्रोदेव्यः इति सामान्येन पाठात् पृथिवीस्थानं भाष्यकारेण ज्ञापितम् । सरस्वती मध्यमस्थाना । "आनो यज्ञं भारती (ऋ०सं०८,६,९,२)"—इति निगमः ॥

(११) त्वष्टा§ । * * * । तूर्णशब्दोपपदादश्नोतेस्त्वन्निपात्यते । त्वष्टा मध्यमस्थानः । आप्रीत्वादिह समाम्नातः । तूर्णमश्नुते वायुरूपत्वात् । त्विषेर्देवतायामकारस्योपधाया अनिट्त्वञ्चेति वा दीप्तो ह्यसौ

* निघ० ८, १० । "उषः" पृ० १, ८. "उष्याम्" निघ० १, २ ।
† निघ० ७,३० ८, ११ । "दैवतं" १, १०. ७, १ ।
‡ निघ० ८, १२ ।
§ निघ० ८, १३. १०, ३३. ११, ११. "त्वाष्ट्र." २, १६. "त्वेषा" ९, २८. "त्वेषप्रतीका" १०, २१ ।

वैद्युतत्वात्। * * *। त्वष्टा पूर्वनिपातनम्। अग्निपक्षेऽप्युपपद्यन्ते निर्वचनानि। "इ॒वं त्वष्टा॑रमि॒ह य॑क्षि वि॒द्वान् (ऋ॰ मं॰ ८,६,८,३)"। "उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात् (ऋ॰ मं॰ १,७,१,५)"॥

(१२) वनस्पतिः*। वनानां पाता। वन्यते सेव्यते इति वनम्। 'पुंसि सञ्ज्ञायां घः (३,३,११८)'। पतिशब्दो व्याख्यात ईश्वरनामसु (२९ ३ पृ॰)। अग्निरन्तरनु प्रविष्टोऽपि यतो न दहति अतः पातेति व्यपदिश्यते। पिबतेर्वैतद्रूपम्। यूपपक्षे वनस्पतिविकारत्वाद् वनस्पतिः। पारस्करादित्वात् सुट् (६,१,१५७)। "व॒न॒स्पतिः॑ शमि॒ता दे॒वो अ॒ग्निः (ऋ॰ मं॰ ८,६,९,१०४)"। "वन॑स्पते॒ मधु॑ना दैव्ये॑न (ऋ॰ मं॰ ३,१,३,१)"॥

(१३) स्वाहाकृतयः†। स्वाहाशब्दो व्याख्यातो वाङ्नामसु (८ ३ पृ॰) अत्र स्मरणार्थमुक्तमस्य प्रयाजस्य वक्ष्यमाणदेवतासङ्कीर्त्तनपरत्वात्, स्वाहास्वाहेत्येवं पुनः कतिवारमुच्चारणं वा समीक्ष्यमाणदेवतानां ताः स्वाहाकृतय उच्यन्ते। "स्वाहा॑कृतं ह॒विर॑दन्तु दे॒वाः (ऋ॰ मं॰ ८,६,९,५)"। "स्वाहा॑कृतीषु रोचते (ऋ॰ मं॰ २,५,९,६)"॥

**अश्वः॑[१]। श॒कुनिः॑[२]। म॒ण्डूकाः॑[३]। अ॒क्षाः॑[४]। ग्रावा॑णः[५]। ना॒रा॒शंसः॑[६]। रथः॑[७]। दु॒न्दु॒भिः॑[८]। इषु॒-**

* निरु॰ ८, ३. १६. ९, १२. "वनीयसी" १२, ५।
† निरु॰ ८, २०।
(६) "नराशंसः" ख. A. E।
(७) इतोऽनन्तरम् "क्रतम"—इत्यधिकम् ग-पुस्तके।

धिः[९] । हस्तघ्नः[१०] । अभीशवः[११] । धनुः[१२] । ज्या[१३] । इषुः[१४] । अश्वाजनी[१५] । उलूखलम्[१६] । वृषभः[१७] । द्रुघणः[१८] । पितुः[१९] । नद्यः[२०] । आपः[२१] । ओषधयः[२२] । रात्रिः[२३] । अरण्यानी[२४] । श्रद्धा[२५] । पृथिवी[२६] । अप्वा[२७] । अग्नायी[२८] । उलूखलमुसले[२९] । हविर्धाने[३०] । द्यावापृथिवी[३१] । विपाट्छुतुद्री[३२] । आर्त्नी[३३] । शुनासीरौ[३४] । देवीजोष्ट्री[३५] । देवीऊर्जाहुतीति[३६] षट्त्रिंशत् पदानि* ॥ ३ ॥

(१) अश्वः† । व्याख्यातोऽश्वनामसु (१५२पृ०) । "यद्वाजिनो देवजातस्य सप्तेः (ऋ० सं० २,३,७,२)" । "सूरादश्वं वसवो निरतष्ट (ऋ० सं० २,३,११,२)" ॥

(२) शकुनिः‡ । शकेः क्विपि शक् । उन्नयतेः 'वेञोडित्'§— इति बाहुलकात् डिदिन्-प्रत्यये उदस्तलोपः । शक्नोत्युन्नेतुमात्मानं शकुनिः ककारस्य जश्त्वाभावः । * * * । शक्नोत्युन्नयनादिक्रियाः कर्त्तुम् । "सुमङ्गलश्च शकुने भवासि (ऋ० सं० २,८,११,१)" ॥

(१९) "पितुम्" ग ।
(२४) "अरण्यानि" ग. घ. "अरण्यानी" F ।
(३१) "द्यावापृथिव्यौ" ग ।
(३२) विपाट्छुतुद्र्यौ" ग ।
* इतीत्यादि नास्ति ग-पुस्तके ।
† पृ० १. १४. "अश्वपर्णा" निघ० ११,१४ ।
‡ निघ० ९, २ ।
§ 'वातेर्डिच्च' इति सि० कौ० उ० ४, ११९ ।

(३) मण्डूकाः* । मस्जेः 'शलिमण्डिभ्यामूकन् (उ० ४,४२)'—इति बाहुलकादूकनि अमत्वकुत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वात् जकारस्य डकारापत्त्या अन्त्यात् पूर्वस्य नुमि सुत्वम् । निमज्जन्ति हि ते जले। मदतेस्तृप्त्यर्थात् मन्दतेर्वा मोदत्यर्थात् पूर्ववदूकञ् रूपसिद्धिश्च। नित्यमदत्वात्, नित्यहृष्टत्वात्, नित्यहृष्टत्वाद्वा मण्डूकाः । मण्डतेर्वा यथाप्राप्ते ऊकनि मण्डूकाः । यद्वा; मण्डामदतेः । 'गेहे कः (३,१,१४४)'—इति बाहुलकात् क-प्रत्यये रूपसिद्धिश्च मण्ड उदकम्। हृष्यन्ति हि तत्र स्नानपानाद्यगाहार्थिनः । मण्डे ओको निवास एषां मण्डशब्दादोकशब्दाच्च मण्डूकाः। "प्र मण्डूका अवादिषुः (ऋ० सं० ५,७,३,१)" ॥

(४) अक्षाः† । अश्नोतेः 'अशेर्देवने (उ० ३,६२)'—इति स-प्रत्ययः । अश्नुवन्ते व्याप्नुवन्ति गटनत्येनानुदेवितारः । अतिव्याप्नुवन्त्येभिः परस्परमिति वा । "अक्षैर्मा दीव्यः कृषिमित् कृषस्व (ऋ० सं० ७,८,५,३)" ॥

(५) ग्रावाणः‡ । व्याख्यातः पर्वतनामसु (५८५०) । "ग्रावभ्यो वाचं वदता वदद्भ्यः (ऋ० सं० ८,४,८,२)" ॥

(६) नाराशंसः§ । नरान् शंसतीति कर्मोपपदेऽण्, 'अन्येषामपि दृश्यते (६,३,१३७)' । ततः प्रज्ञादित्वात् स्वार्थिकोऽण् । नराशंस

* निरु० ९, ५. ०।

† निरु० ९, ७. ऋग्वेद १, ९. ५, १।

‡ पृ० १, १०।

§ पृ० ७ (५६९५०)।

एव नाराशंसः। मन्त्रोऽस्याभिधेयः। "अमन्दाँस्तोमान् प्र भरे मनीषा (ऋ० सं० २,१,११,१)" ॥

(७) रथः* । रंहतेर्गतिकर्मणः। 'हनिकुषिनीरमिकाशिभ्यः क्थन् (उ० २,२)'—इति क्थन्, बाहुलकान्नकारहकारलोपश्च । गच्छत्यनेन। स्थिरतेर्नैरुक्तधातुः। विपरीताक्षरः। 'पुंसि संज्ञायां घः (३,३,११८)'। सकारेकारयोर्लोपः। दृढगठितत्वात् स्थिरो हि सः। यद्वा; रमतेस्तिष्ठतेश्च द्विधातुजं रूपम्। रममाणो विस्रब्धोऽस्मिंस्तिष्ठति रथी। यद्वा; रमतेरेव यथाप्राप्तः क्थन्। रमणीयो हि रथः। रमतेर्वा शब्दार्थात् पूर्वसूत्रेण बाहुलकात् क्थनि मकारलोपः। भवति हि तस्यागच्छत उपलब्धिः। "तवा रथमुप शग्मं सदेम (ऋ० सं० ५,१,२०,३)" ॥

(८) दुन्दुभिः† । शब्दानुकरणनिमित्तकमेतन्नाम। द्रुमशब्दस्य वा रेफान्तलोपः। भिदेश्चाद्यन्तविपर्यय उकारस्योपजनः। दुन्दुभ्यतेर्वा नैरुक्तधातोर्बधकर्मणः इन्। ताड्यते ह्यसौ युद्धसमये। "स दुन्दुभे सजूरिन्द्रेण देवैः (ऋ० सं० ४,७,२५,४)" ॥

(९) इषुधिः‡ । इषवो निधीयन्तेऽस्मिन्। 'कर्मण्यधिकरणे च (३,३,९३)'—इति किः। "इषुधिः सङ्काः पृतनाश्च सर्वाः" ॥

(१०) हस्तघ्नः§ । हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन वा। 'घञर्थे क-विधानम् (३,३,५८. वा० २)'—इति कः।

---

* निघ० ९, ११. रथयुः ६, ११. रथ्या १०, २ ।

† निघ० ९, १२ ।

‡ निघ० ९, १३. "इषुः" ९, १८. प० १४ ।

§ निघ० ९, १४. "हस्तः" १, ७. "हस्तच्युतिः" ५, १०. हस्तः ९, ५ ।

"इस्तन्नो विश्वा वयुनानि विद्वान् (ऋ० सं० ५,१,२१,४)" ॥

(११) अभीशवः*। व्याख्याता रश्मिनामसु (३५पृ०)। निगमश्च दर्शितः ॥

(१२) धनुः†। धन्वतेर्गत्यर्थाद् वधार्थाद्वा 'अर्तिपृवपियजितनिधनितपिभ्यो नित् (उ० २,१०७)'—इति बाहुलकादुसिः प्रत्ययो वकारलोपश्च। धनिर्मारणार्थ इति क्षीरस्वामी। यथाप्राप्तउसिः। धन्वन्त्यपनयन्त्यस्मादिषवः, घ्नन्ति वा। "धनुः शत्रोरपकामं कृणोति (ऋ० सं० ५,१,१८,२)" ॥

(१३) ज्या‡। जयतेर्जिनातेर्वाऽन्तर्णीतण्यर्थाद् वा 'मध्यविध्यशिक्ष्य'—इत्यादिना यक्-प्रत्ययो धातोरकारभावश्च निपात्यते। 'अघ्न्यादयश्च (उ० ४,१०८)'—इति निपातनम्। जयसाधनं हि ज्या। "धन्वन्नज्या इयं समने पारयन्ती (ऋ० सं० ५,१,१८,३)" ॥

(१४) इषुः§। इषतेर्गतिकर्मणो वधार्थाद्वा 'इषेः किच्च (उ० १,१३)'—इति उ-प्रत्ययः। गच्छति शत्रून्, हन्ति वा तान्। "तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ५,१,२१,१)" ॥

(१५) अश्वाजनी‖। अश्वा अज्यन्ते क्षिप्यन्ते प्रेर्यन्तेऽनया। ल्युट्, 'वा यौ (२,४,५७)'—इति वीभावविकल्पः, टित्वात् ङीप्। अश्वानामजनी अश्वाजनी कशोच्यते। "अश्वाजनि प्र चेतसः (ऋ० सं० ५,१,२१,३)" ॥

* प० १,५।

† निघ० ९,१९।

‡ निघ० ९.१५.१७।

§ [illegible] (४८ पृ०)।

(१६) उलूखलम्*। उरु विस्तीर्णं खलं मुखमस्य, ऊर्द्धं वा उपरि-भागे खलं मुखमस्य। ऊर्कं अन्नं तत् करोति । किरतेर्वा उत्कीर्णं तत् । शब्दानुकरणनिमित्तं वा नामैतत्, यतेऽमुशलाघातजनित-ध्वनिमुरु मेषु कुर्वित्येवमब्रवीत्। सर्वथैव तेषु वर्णव्यत्ययादि वाच्यम् । "उलूखलक युज्यसे (ऋ० सं० १,२,२५,५)" ॥

(१७) वृषभः† । 'वृषु सेचने (भू० प०)' । 'ऋषिवृषिभ्यां कित् (उ० ३,११९)'—इत्यभच् प्रत्ययः । प्रजाहेतुभूतं बीजं वर्षति सिञ्चति । वृहेर्वा बाहुलकात् अभचि हकारस्य षकारः । अतिशयेन रेतः सेक्तुं वृहति उद्यच्छति आत्मानम् । "अमेदयन् वृषभं मध्य आजेः (ऋ० सं० ८,५,२०,५)" ॥

(१८) द्रुघणः‡ । द्रु-शब्दो द्रुमशब्दपर्यायः । द्रुमविकारः काष्ठखण्डोऽत्र द्रु-शब्देनोच्यते। द्रुर्हन्यतेऽनेन। 'करणेऽयोविद्रुषु (३, ३,८२)'—इति हन्तेरप् घनादेशश्च । क्षुभ्नादिषु (८,४,३९) पाठाण्णत्वम्, 'पूर्वपदात् सञ्ज्ञायामगः (८,४,३)'—इति वा । "काष्ठायामध्ये द्रुघणं शयानम् (ऋ० सं० ८,५,२१,४)" ॥

(१९) पितुः§ । अन्ननामसु व्याख्यातम् (२०६५०) । स निगमः (ऋ० सं० २,५,६,१) ॥

* निघ० ९,२० । प० इहैव २९ ।
† निघ० ४,९. ७, ११. ९, २२ ।
‡ निघ० ९, २२ ।
§ पु० १, ७. निघ० ९, २४ ।

(२०) नद्यः*। (२१) आपः†। व्याख्याताः (२४४पृ०। ११७पृ०) नियमौ च दर्शितौ सामान्येन। "इमं मे गङ्गे यमुने सरस्वति (ऋ०सं० ८,३,६,५)"—इति, विशेषेण। "आपो हि ष्ठा मयोभुवः (ऋ०सं० ७,६,५,१)"॥

(२२) ओषधयः‡। ओष-शब्दे दोष-शब्दे वोपपदे धयतेः 'कर्मण्यधिकरणे च (३,३,९३)'—इति कि-प्रत्ययः, 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति कर्त्तरि वा। ओषं दाहं धयति पिबति विनाशयतीत्यर्थः, दोषं वातपित्तादिकं वा। दकारलोपो द्रष्टव्यः। "या ओषधीः पूर्वा जाता (ऋ०सं० ८,५,८,१)"॥

(२३) रात्रिः§। प्रोपसर्गार्थविशिष्टात् अन्तर्णीतण्यर्थात् रमतेः 'राशदिभ्यां त्रिप् (उ० ४,६७)'—इति बाहुलकात् त्रिप्-प्रत्ययो मकारस्याकारस्य रातेर्वा त्रिप्-प्रत्ययो यथाप्राप्तः। प्ररमयन्ति भूतानि नक्तञ्चारीणि, उपरमयन्ति दिवाचराणि स्वव्यापारेभ्यः, प्रदीयन्तेऽवश्यायमवश्यायमनेन। "आ रात्रि पार्थिवं रजः (य०वा०सं० ३४,३२)"॥

(२४) अरण्यानी¶। अप-पूर्वात् रिणातेर्गतिकर्मणो नञ्पूर्वाद्रमतेर्वा अघ्न्यादित्वात् (उ० ४,११८) यत्-प्रत्यये रूपसिद्धिर्निपा-

* पु० १, ११।
† पु० १, २।
‡ ऋ०सं०१, ४, १९, २। ७, ७, २०, ४।
§ निरु० ९, २७।
|| पु० १, ७। "रात्री" निरु० २, १९. "रात्रिः" १२, १०।
¶ निरु० ९, २९. "अरण्यम्" ९, ३०. "अरणिः" ५, १०. "अरणः" ३, २. ११, ४६. "अरः" ४, २७. "अरम्" १०, २।

त्यते। अपार्णमपगतं ग्रामाद्धि अरमणं वा, न हि तद्रमयति अरण्यं वनम्। अरण्यपालयित्री अधिदेवता काचित् नैरुक्ताः। महदरण्य-मिति वैयाकरणाः। 'हिमारण्ययोर्महत्त्वे (४,१,४९.वा०१)'—इति विधीयते। "अरण्यान्यरण्यानि (ऋ०सं० ८,८,४,१)"॥

(२५) श्रद्धा*। श्रत् सत्यम्, तस्मिन् धीयते। तथाच मन्त्रः "अश्रद्धामनृते दधातन श्रद्धां सत्ये प्रजापतिः ( ? )"—इति। 'आतश्चोपसर्गे (३,३,१०६)'—इत्यङ्। 'श्रच्छब्दस्योपसङ्ख्यानम्' † इत्युपसर्गसञ्ज्ञा। धर्मार्थसुखापवर्गेषु यथाशास्त्रमधिकृतः पुरुषस्य कर्मानुष्ठानहेतुभावप्रख्यानात् बुद्ध्यधिदेवता श्रद्धा। "श्रद्धयाग्निः समिध्यते (ऋ०सं० ८,८,९,१)"॥

(२६) पृथिवी‡। 'प्रथ प्रख्याने (भ्वा०आ०)'। 'प्रथेः षिवन् सम्प्रसारणञ्च (उ०१,१४९)'। 'षिद्गौरादिभ्यश्च (४,१,४१)'। पृथ्वीत्यर्थः। "स्योना पृथिवि भव (ऋ०सं० १,२,६,५)"॥

(२७) अप्वा§। व्याख्यातं नैगमे सनिगमम्॥

(२८) अग्नायी‖। अग्नेः पत्नी। 'वृषाकप्यग्निकुसितकुसिदाना-मुदात्तः (४,१,३७)'—इत्यैकारादेशः, पुंयोगलक्षणादीष्। "अ-ग्नायीं सोमपीतये (ऋ०सं० १,२,६,२)"॥

* निरु० ९, ३०. "श्रत्" पृ० ३, १०।

† 'श्रदन्तरोरुपसर्गवद्वृत्तिः'—इति सि० कौ०।

‡ पृ० १, १. "पृथुः" पृ० १, ९. "पृथुजयाः" पृ० ४, २। "पृथुबुध्ने" निरु० ११, ३३. "पृथक्" ५, २५।

§ पृ० ४, ३। "अप्सुराः" निरु० ५, १३।

‖ निरु० ९, ३३. १२, ४६।

(२९) उलूखलमुसले*। उलूखलं व्याख्यातम् (४१९पृ०)। मुहुः-शब्दोपपदात् सर्त्तेः 'पुरूलोरुखलमुसलकुवलाः†'—इत्यादिना अल-प्रत्ययोऽटिलोपो मुहुः-शब्दस्य मुस-भावश्च निपात्यते। उलूखलेष्वपि निपातनान्मुहुः सरणं मुसलं द्विवचनम। "आयजी वाजसातमा (ऋ०सं०१,२.२६.२)"। अत्रेष्यतेऽ श्रुतिरमत्यपि लिङ्ग-योगे॥

(३०) हविर्द्धाने‡। सोमलक्षणानि हवींषि विधीयन्ते ययोः। "आ वामुपस्थमद्रुहाः (ऋ०सं०२,८,१०,६)"। पूर्ववदुदाहरण-लम्॥

(३१) द्यावापृथिवी §। दिवोद्युत्यर्थात् 'दिवेर्डिविः( ? )'—इति डिवि-प्रत्ययः। द्योतत इति द्यौः। पृथिवी व्याख्याता (१८ पृ०)। द्यौश्च पृथिवी च 'दिवोद्यावा (६,३,२९)'—इति द्यावादेशः। 'वाच्छन्दसि (६,१,१०६)'—इति पूर्वसवर्णः। "द्यावा नः पृथिवी इमम् (ऋ०सं०२,८,१०,५)"॥

(३२) विपाट्छुतुद्र्यौ‖। 'पद गतौ (दि०आ०)', 'पश बाधन-स्पर्शनयोः (चु०प०)' वि-पूर्वः। 'आप्लृ व्याप्तौ (स्वा०प०)' वि-प्र-पूर्वः। णिजन्तात् 'क्विब्वचि (३,२,१७८.वा१)'—इत्यत्र 'प्राक्-प्रत्यय-निर्देशादिष्टसिद्धिः'—इत्युक्ते क्विपि प्र-शब्दस्य रेफलोपादि। विविधं

---

* निघ० ९, २५।
† 'वृषादिभ्यः कित् (उ०१, १०२) * * *) मुस खण्डने। मुसलम्। सि०कौ०।
‡ निघ० ९, २६। "हविः" पु० १, १२। "वृषम्" निघ० ८, ७।
§ पु० ३, ३०।
‖ निघ० २, २४. ९, २९. २८, २९. "विपाशि" १२, ४८।

कूलपाटनात्, विपाशनात् । अपुत्रस्योद्भूतमोहन्तेर्मुमूर्षोर्वसिष्ठस्य कण्ठे शिलाबन्धने साधनभूताः पाशा अस्याम् । विविधदेशप्रापणा-द्वोदकस्यापनत्वात् विपाट् । शुतुद्री शु-द्राविणीत्यर्थः । आशु-तुन्न-द्राविणी-शब्देभ्यो वा । आशुतुन्ने प्रतोदे द्रवतीति शुतुद्री । विपाट् च शुतुद्री च विपाट्छुतुद्री पूर्वमवर्णः । "विपाट्छुतुद्री पयसा जवेते (ऋ० सं० ३,२,१२,१)" ॥

(३३) आर्त्नी* । अर्त्तेः रिषतेर्वा 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो-नित् (उ० ४,५१)'—इति बाहुलकात् नि-प्रत्ययो धातोरार्त्तभावश्च । 'कृदिकारात् (४,१,४५.वा० १)'—इति ङीष् । गते ज्यया कृष्य-माणे सङ्गच्छेते हिंसासाधने वा भवतः । "आर्त्नी इमे विस्फुरन्ती अमित्रान् (ऋ० सं० ५,१,१८,४)" ॥

(३४) शुनासीरौ† । शु-शब्दार्थविशिष्टात् 'शुन गतौ (तु० प०)'—इत्यस्मात् इगुपधलक्षणः कः (३,१,१३५) । क्षिप्रं गच्छ-त्यन्तरिक्षमिति शुनो वायुः । यद्वा; शु-शब्दोपपदान्नयतेर्गतिकर्मणः 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति डः । भाष्ये तु शु-एतद-र्थतो निर्वचनं प्रायेण । सर्त्तेः 'डिण्डीरवानीरगभीरगम्भीरकुम्भीर-शीरकाश्मीरजम्बीरकीरतीरादयः'—इति ईरन्-प्रत्ययष्टिलोपश्च नि-पात्यते । यद्वा सरणात् सीर आदित्यः । शुनस्य सीरस्य 'देवता-द्वन्द्वे च (६,३,२६)'—इत्यङ् । "शुनासीराविमां वाचं जुषेथाम् (ऋ० सं० ३,८,९,५)" ॥

---

* निघ० ६, ३९ ।

† निघ० ९, ४० । "शुनम्" पु० ९, ६ । "शुनः" निघ० ९, ४०. "शुन्धु." ४, १६ ।

(२५) देवीजोष्ट्री*। देवशब्दः पचाद्यजन्तः। देवड्िति पाठात् 'टिड्ढाणञ् (४,१,१५)'—इति ङीप्। जुषतेष्ट्रन् प्रत्ययः (उ० ४,१५४)। षित्वात् ङीष् (४,१,४१)। देव्यौ जोषयित्र्यौ। पूर्वसवर्णः। द्यावापृथिव्यौ, अहोरात्रे वाभिधेये। सस्यसमे इति कात्थक्यः। सस्यं व्रीहिः, समा संवत्सरः। "देवी जोष्ट्री वसुधिती ययोः (निरु० ९,४२)"॥

(२६) देवी ऊर्जाहुती†। ऊर्क् शब्दो व्याख्यातोऽन्ननामसु (२०९पृ०)। आह्वयतेः क्विपि 'वचिस्वपि (६,१,१५)' इति सम्प्रसारणम्, 'हलः (६,४,२)'—इति दीर्घाभावो व्यत्ययेन‡। ऊर्क्-शब्दात् हेतौ तृतीया। ऊर्जा हेतुभूतया आहुतव्ये। ऊर्क् इत्यत्र 'सावेकाचः (६,१,१६८)'—इति विभक्तेरुदात्तत्वम्, आहुति-शब्दोऽपि 'तादौ च निति कृत्यतौ (६,२,५०)'—इति आद्युदात्तः, 'एकादेश उदात्तेनोदात्तः (८,२,५)'। "देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् (य० वा० सं० २१,५२)"॥

॥ इति पृथिवीस्थानदेवताः ॥ १ ॥

* निरु० ९, ४१।

† निरु० ९, ४२।

‡ हल इति दीर्घः प्राप्तः, न भवति व्यत्ययेनेति भावः।

वायुः[१]। वरुणः[२]। रुद्रः[३]। इन्द्रः[४]। पर्जन्यः[५]। बृहस्पतिः[६]। ब्रह्मणस्पतिः[७]। क्षेत्रस्यपतिः[८]। वास्तोष्पतिः[९]। वाचस्पतिः[१०]। अपान्नपात्[११]। यमः[१२]। मित्रः[१३]। कः[१४]। सरस्वान्[१५]। विश्वकर्मा[१६]। तार्क्ष्यः[१७]। मन्युः[१८]। दधिक्राः[१९]। सविता[२०]। त्वष्टा[२१]। वातः[२२]। अग्निः[२३]। वेनः[२४]। असुनीतिः[२५]। ऋतः[२६]। इन्दुः[२७]। प्रजापतिः[२८]। अहिः[२९]। अहिर्बुध्न्यः[३०]। सुपर्णः[३१]। पुरूरवा[३२] इति द्वात्रिंशत् पदानि* ॥ ४ ॥

(१) वायुः†। 'वा गतिगन्धनयोः (अदा० प०)'। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ० १,१)'। 'आतो युक् चिण्कृतोः (७,३,३३)'। यद्वा; वेतेर्गतिकर्मणो बाहुलकादुण्। यद्वा; 'छन्दसीणः (उ० १,२)'—इत्युणि वकारोपजनः। गच्छत्यन्तरिक्षे। वायवा याहि दर्शते मे (ऋ० सं० १,१,३,१)" ॥

(२) वरुणः‡। 'वृञ् वरणे (स्वा० उ०)'। कृवृदारिभ्य उनन् (उ० ३,५०)। अन्तरिक्षे उदकमावृणोति। "नीचीनबारं वरुणः कवन्धम् (ऋ० सं० ४,४,२२,३)" ॥

* इतीत्यादि न विद्यते न पुस्तके, चपि च अध्याङ्कः "३"—इति।
† निरु० १०, १-२. "वायुः" ६, २८।
‡ प० ६। निरु० १०, ३. ११, २१. "वरुणानी" ११, ४६।

(३) रुद्रः*। रौतेः क्विपि। रुच्छब्दं करोति। 'आतोऽनुपसर्गे कः (३,२,३)'। यो रुवन् एति, रौतीति वक्तुं शक्यते। रोरूयमाणोऽत्यर्थं शब्दं कुर्वन् मेघादरण्यो द्रवतीति, रोरूयमाणशब्द-पूर्वाद् द्रवतेर्वा 'रोदेर्णिलुक् च (उ० २,२०)'—इति रक्। स हि सर्वकलवाणि रोदयति रुदेरेव वा णिजन्तात् बाहुलकाद्रक्। 'रुद्रः किं पितरं प्रजापतिमिथुना विच्छेद तमनुशोचन्नरुदद् यदरुदत्तद्रुद्रस्य रुद्रत्वम् (तै० ब्रा० ३,८,४)'—इति काठकम्। 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्'—इति हारिद्रवकम्। "इमा रुद्राय स्थिरधन्वने गिरः (ऋ० मं० ५,४,२३,१)" ॥

(४) इन्द्रः†। इराशब्द उपपदे दृणातेर्ददातेर्दधातेर्दारयतेर्वा 'ऋज्रेन्द्राग्रवज्रविप्र (उ० २,२८)'—इति रक्-प्रत्ययान्तो निपात्यते। निपातनाद्रूपसिद्धिर्ज्ञेया। इरा अन्नमनेन सम्बन्धादा तद्धेतुभूतकं बलं लक्ष्यते। तेन बललक्षितलक्षणया तदाधारभूतो मेघः। इरां मेघं धारात्मना दृणाति विदारयति। बीजं ब्रीह्यादि तथासौ वृष्टिप्रदानेन विदारयति। अङ्कुरोद्भेदेनाभिकाङ्क्ष्य विदारणम्। इरामन्नं तद्ददाति वा। इरां दधाति धारयति वा। इन्दावुपपदे द्रवतेः रमतेर्वा निपातनम्। इन्दवे द्रवति गच्छति सोमं पातुमित्यर्थः। इन्दौ रमतेऽतिप्रियत्वात् नान्यत्र। इन्धेर्वा निपातनम्। इन्धे दीपयति शरीरमध्यवर्त्ती पञ्चवृत्तिः प्राणो वायुः। शरीरभूतादि

*पृ० २, ११। "रौति" पृ० २, १५। "रोरवत्" निरु० ५, १६।

† निरु० १०, ८—९. "इन्द्रवत्" ११, १५. "इन्द्रशत्रुः" २, १६. "इन्द्राणी" प० ५. "इन्द्रियम्" पृ० २, १०।

इष्यते वा प्राणैः। शरीरमध्यवर्त्ती प्राणभावेन क्षेत्रज्ञमञ्जकः। प्राणैर्योगादिभिर्योगबलेन वा सम्यगाभिमुख्येन दीपयति आत्मोपासकाः। इदमुन्मादीकरोति पश्यति वा इन्द्रः। इदं कृत्स्नं जगद् वृष्टिप्रदानद्वारेण करोति लोकपालत्वात्, अस्य सर्वस्य शुभाशुभकर्मणो द्रष्टा वा। इदुपपदे दारयतेर्द्रावयतेर्वा इन्द्रपदम्। इतास्र शत्रूणां दारयिता द्रावयिता स। यद्वा; इतास्र यज्वना मादरयिता च। सर्वत्र निपातनाद्रूपसिद्धिः। "महान्त मिन्द्र पर्वत वियद्वः (ऋ० सं० ४,१,२२,६)" ॥

(५) पर्जन्यः* । तृपेरन्तर्णीतण्यर्थात् क्विपि तर्पयतीति तृप्। अनष्टितो जन्यः हितार्थे यत्। तृप् चासौ जन्यश्चेति तृप्शब्दस्य पर्-भावः। पर-शब्दोपपदात् जयतेर्जनयतेर्वा अघ्न्यादित्वात् यत्, मुम्, परशब्दातोलोपश्च निपात्यते। परः प्रकृष्टो जेता जनयिता वा। प्ररसशब्दोपपदादर्जयते वा अघ्न्यादित्वान्निपातनन्त्वेन पर्जन्यः प्रकर्षेणोपार्जयिता सङ्ग्रहीता रसानाम्। "यत् पर्जन्यस्तनयन् हन्ति दुष्कृतः (ऋ० सं० ४,४,२७,२)" ॥

(६) बृहस्पतिः† । बृहच्छब्दो व्याख्यातोमहन्नामसु (३ ० ० पृ०) पतिशब्दस्तु ईश्वरनामसु (२८३पृ०)। अत्र पिबतेरपि बाहुलकात् पतिः। बृहतः सोमरसस्य वाय्वात्मना पाता पालयिता रक्षिता वा। पिता रक्षयिता महतो जगतो वा। "बृहस्पति र्विरुवेणा विकृत्य (ऋ० सं० ८,२,१८,२)" ॥

* निघ० १०, १०. "पर्जन्यजिन्वितां" ९, ६।

† निघ० ९, ११. १०, ११. "बृहद्दिवा" ११, ४९।

(७) ब्रह्मणस्पतिः* ।

(८) क्षेत्रस्य पतिः† । 'क्षि निवासगत्योः (तु॰प॰)'। 'गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रन् (उ॰ ४, १६२)'—इति त्रन् प्रत्ययः । निवसन्ति हि येन स्व हेतुभूतेन, तस्य पाता । "क्षेत्रस्य पतिना वयम् (ऋ॰सं॰ ३,८,८,१)" ॥

(९) वास्तोष्पतिः‡ । 'वस निवासे (भू॰प॰)'। 'वसेस्तुन् णिच्च §' इति । सामर्थ्यात्तत्र वास्त्वन्तरिक्षम्, तस्य पाता विभुत्वेन । "अमीवहा वास्तोष्पते (ऋ॰सं॰ ५,४,२२,१)" ॥

(१०) वाचस्पतिः‖ । प्राणात्मेन्द्रः । * * * । अतः प्राणस्य वागुपतयाप्यवस्थानात् प्राणो वाचस्पतिरिति व्यपदिश्यते । "पुनरेहि वाचस्पते (अथ॰सं॰ १,१,२)" ॥

(११) अपान्नपात्¶ । तनूनपाता व्याख्यातः (४६१ पृ॰) । * * * । "अपान्नपान्मधुमतीरपोदाः (ऋ॰सं॰ ७,७,२४,४)" ॥

(१२) यमः** । मध्यस्थानो वायुः । यच्छति प्रयच्छति स्तोतृभ्यः कामानि । पचाद्यच् । "यमं राजानं हविषा दुवस्य (ऋ॰सं॰ ७, ६,१४,१)" ॥

---

* निघ॰ १०, १२. "ब्रह्म" १, ८. "ब्रह्मद्विषे" ६, ११ । देवराजकृतव्याख्यानक्रमादर्शपुस्तकेऽत्र लेखकप्रमादाद्भ्रष्टमित्यनुमिमे ।

† निघ॰ १०, १४. "क्षेत्रसाधाः" २, २ ।

‡ निघ॰ १०, १६. "वास्तु" २, ७. १०, १९ ।

§ 'वसेस्तुन् (७२) वस्तु । अगारे णिच्च (७३) वेश्मभूर्वास्तुरस्त्रियाम्'—इति सि॰ कौ॰ उ॰ १पा॰ ।

‖ निघ॰ १०, १८. "वाक्" प॰ १, ११ ।

¶ निघ॰ १०, १८ ।

** निघ॰ १०, १९—२१. १९. २८. "यमना" ६, २१ ।

(१३) मित्रः*। प्रमीतात्त्रायते। 'सुपि स्थः (३,२,४)' —इत्यत्र सुपीति योगविभागात् प्रमीतशब्दस्य मिद्भावः। यद्वा; 'डुमिञ् प्रक्षेपणे (स्वा० उ०)'। यद्वा; 'ञिमिदा स्नेहने (भ्वा० प०)'। सम्मिन्वानः सम्यक् वृष्टिं प्रक्षिपन् सम्यक् सिञ्चन् वा द्रवत्यन्तरिक्षे। मिन्वानशब्दस्य मिद्भावः, द्रवतेः ड-प्रत्ययान्तस्य त्र-भावः। 'ञिमिदा स्नेहने (भ्वा० आ०)' अन्तर्णीतण्यर्थः। 'अमिचिमिमिदिशसिभ्यः क्त्रः (उ० ४,१५९)'—इति त्रन् प्रत्ययः। णिजन्ताद्वा बाहुलकाद्रूपसिद्धिः। सर्वमस्यान्युदकेन स्नेहयति। "मित्रो जनान्यातयति ब्रुवाणः (ऋ० सं० ३,४,५,१)"। 'ञिमिदा स्नेहने (भ्वा० आ०)' अन्तर्णीतण्यर्थः॥

(१४) कः†। कमेः क्रमेर्वा 'अन्येष्वपि दृश्यते (३,२,१०१)'—इति ड-प्रत्यये क्रमते रेफलोपो बाहुलकात्, 'प्रजापतिरकामयत' —इति बहुकामत्वात् कः प्रजापतिः। क्रमणो वा क्रमयत्यन्तरिक्षे। कमिति सुखनाम, सुखो वा वृष्टिप्रदानादिना। "कस्मै देवाय हविषा विधेम (ऋ० सं० ८,७,३,१)"॥

(१५) सरस्वान्‡। सरइत्युदकं, तेन तद्वान्। "ये ते सरस्व ऊर्मयः (ऋ० सं० ५,६,२०,५)"॥

(१६) विश्वकर्मा§। करोतेः कर्त्तरि मनिन्। मध्यमस्थानो

* निघ० १०, २१. "मितद्रवः" ११, ४४।
† निघ० १०, २२।
‡ निघ० १०, २३।
§ निघ० १०, २५।

वायुः । वृष्टिद्वारेण सर्वस्य कर्त्ता सर्वचेष्टानां तदधीनत्वात् । "विश्व-कर्मा विमना आद्विहाया: (ऋ॰ सं॰ ८,३,१७,२)" ॥

(१७) तार्क्ष्यः* । तीर्णशब्दे तूर्णशब्दे चोपपदे क्षियतिक्षरति-रक्षत्यश्नातिभ्योऽन्यादित्वाद् (उ॰ ४,१८) यत्-प्रत्ययादि निपात्यते । तीर्णे विस्तीर्णेऽन्तरिक्षे क्षियति क्षरति रक्षत्यश्नाति, तूर्णं वार्यमुद-काख्यं क्षियति क्षरति वा, अश्नुते वा तमः । "स्वस्तये तार्क्ष्यं मिहाहुवेम (ऋ॰ सं॰ ८,८,३६,१)" ॥

(१८) मन्युः† । व्याख्यातः क्रोधनामसु (२३५ पृ॰) । दीप्तः क्रुद्धो वा । "त्वया मन्यो सरथमारुजन्तो (ऋ॰ सं॰ ८,३,१९,१)" ॥

(१९) दधिक्राः‡ । व्याख्यातोऽश्वनामसु (१४६ पृ॰) । दधद्रा-वयद् वृष्ट्युदकमन्तरिक्षे क्रामति गच्छति, क्रन्दति स्तनयित्नु-लक्षणं शब्दं करोति । "आ दधिक्राः शवसा पञ्च कृष्टीः (ऋ॰ सं॰ ३,७, १२,५)" ॥

(२०) सविता§ । 'षु प्रसवैश्वर्ययोः (भू॰ प॰)' । तृचि 'स्वरति-सूति-सूयति-धूञूदितो वा (७,२,४४)' । सर्वकर्मणां वृष्टिप्रदा-नादिना सविता अभ्यनुज्ञाता । "सविता यन्त्रैः पृथिवीमरम्णात् (ऋ॰ सं॰ ८,८,७,१)" ॥

(२१) त्वष्टा|| । व्याख्यातः (४६३ पृ॰) । "देवस्त्वष्टा सविता विश्वरूपः (ऋ॰ सं॰ ३,३,२१,४)" ॥

---

* निरु॰ १०, २७ ।

† निरु॰ १०, २९ ।

‡ पृ॰ १, १४ ।

§ पृ॰ ४ । निरु॰ १०, ३१, ३२, ३३, "सवः" ९, १०, ११, ९ ।

(२२) वातः*। वातेः 'कसिम्युग्रिप्लामिदमिलुपपुधुर्विंभ्यस्तन् (उ० ३,८३)'। वाति वातः। "वात आ वातु भेषजम् (ऋ० सं० ८,८,४४,१)"॥

(२३) अग्निः†। व्याख्यातः (४७५८ पृ०)। इह मध्यमोऽभिधेयः। "मरुद्भिरग्न आ गहि (ऋ० सं० १,१,३६,१)"॥

(२४) वेनः‡। वेनतेः कान्तिकर्मणो पचाद्यच् (३,१,१३४)। कान्तो दीप्तो मध्यमस्थानः। "अयं वेनश्चोदयत् पृश्निगर्भा (ऋ० सं० ८,७,७,१)"॥

(२५) असुनीतिः§। असुशब्दे उपपदे नयतेः 'कृत्यल्युटो बहुलम् (३,३,११३)'—इति क्तिन्। असून् नयतीति असुनीतिः। स च मध्यमः प्राणः। प्राणश्च वायुः। स हि शरीरादुत्क्रामन्तोऽसून् नयति। विज्ञायते हि प्राणा उत्क्रामन्तः सर्वेऽनूत्क्रामन्ति। "असुनीते मनो अस्मासु धारय (ऋ० सं० ८,१,२२,५)"॥

(२६) ऋतः‖। 'ऋ गतौ (भू० प०)'। गत्यर्थात् कर्त्तरि क्तः। अर्त्ता गन्ता अन्तरिक्षे। "ऋतस्य हि शुरुधः सन्ति पूर्वीः (ऋ० सं० ३,६,१०,३)"॥

(२७) इन्दुः¶। इन्धेः 'भृमृशीङ्तृचरित्सरितनि (उ० १,७)'—

* निघ० १०, २४।

† पु० १।

‡ पु० १, १५।

§ निघ० १०, २६, "असुः" १, ८, ११, १८।

‖ निघ० १०, ४०। "ऋतम्" पु० १, ११।

¶ पु० १, ११।

इत्यादिना बाहुलकाद्-प्रत्ययो धकारस्य दकारश्च । उणादौ 'इन्द्रे-रिच्चादेः (उ० १,१२)'—इत्यु-प्रत्ययः । दीप्यते उणक्ति वा वर्षेण। "प्र तदोचेयम्भव्यायेन्दवे (ऋ० सं० २,१,१७,१)" ॥

(२८) प्रजापतिः* । प्रजानां पाता । "प्रजापते न त्वदेतान्यन्यः (ऋ० सं० ८,७,४,५)" ॥

(२९) अहिः† । व्याख्यातो मेघनामसु (६८पृ०)। इह लिङ्गो-ऽभिधेयः । "अजामुक्थैरहिं गृणीषे (ऋ० सं० ५,३,२६,६)" ॥

(३०) अहिर्बुध्न्यः‡ । योऽहिः स एव बुध्न्यस्तेति समानाधिकरणत्वा-हिर्बुध्न्यशब्दोऽसमस्तः । तथाच 'अहिना बुध्न्येन(३,३,१२. ऐ०ब्रा०)' इति श्रुतौ लिङ्गम्। मानोऽहिर्बुध्न्यो रिषे धात् (ऋ० सं० ५,३,२६,७)"॥

(३१) सुपर्णः§ । व्याख्यातो रश्मिनामसु (३८पृ०) । इह शोभनगमनत्वान्मध्यम उच्यते । "एकः सुपर्णः स समुद्रमा विवेश (ऋ० सं० ८,६,१८,४)" ॥

(३२) पुरूरवाः‖ । पुरु-शब्दोपपदात् भृशार्थविशिष्टात् रौतेर-सुनि 'अन्येषामपि दृश्यते (६,३,१३७)'—इति पूर्वपदस्य दीर्घः । अनेकविधमित्यर्थः । स्तनयित्नु-लक्षणं शब्दं करोति पुरूरवाः । विज्ञा-यते हि वाताः प्राणाएव पुरूरवा इति । "महे यत्त्वा पुरूरवो रणाय (ऋ० सं० ८,५,३,२)" ॥

---

* पु० २, १९ ।

† पु० १, १० ।

‡ निरु० १०, ४४. १२, ३३. "अहिगोपाः" २, १७ ।

§ पु० १, ५ ।

‖ निरु० १०, ४६. "पुरुधा" ९, १२. "पुरुधा" १०, ३४. "पुरुरथाः" ११, ३३. "पुरुवर्पसः" ११, ३१. "पुरुधः" १, १२. ९, २. ८, २२. "परुपादः" ९, ६.

श्येनः[१] । सोमः[२] । चन्द्रमाः[३] । मृत्युः[४] । विश्वानरः[५] । धाता[६] । विधाता[७] । मरुतः[८] । रुद्राः[९] । ऋभवः[१०] । अङ्गिरसः[११] । पितरः[१२] । अथर्वाणः[१३] । भृगवः[१४] । आप्त्याः[१५] । अदितिः[१६] । सरमा[१७] । सरस्वती[१८] । वाक्[१९] । अनुमतिः[२०] । राका[२१] । सिनीवाली[२२] । कुहूः[२३] । यमी[२४] । उर्वशी[२५] । पृथिवी[२६] । इन्द्राणी[२७] । गौरी[२८] । गौः[२९] । धेनुः[३०] । अघ्न्या[३१] । पथ्या[३२] । स्वस्तिः[३३] । उषाः[३४] । इळा[३५] । रोदसी[३६] इति षट्त्रिंशत् पदानि* ॥ ५ ॥

(१) श्येनः† । श्येनोऽश्वनामसु व्याख्यातः (१५१पृ०) । इह मध्यमोऽभिधेयः । "आदाय श्येनो अभरत् सोमम् (ऋ० सं० ३, ६,१५,७)" ॥

(२) सोमः‡ । 'षुञ् अभिषवे (स्वा० उ०)' । 'अर्त्तिस्तुसुहुसृधृक्षि (उ० १,१३७)'—इति मन् । सूयते सोमः । "पवस्व सोम धारया (ऋ० सं० ६,७,१६,१)" ॥

(३) चन्द्रमाः§ । चायनात् द्रमतेरसुन् । चायन्-शब्दस्य चन्-

(१४) इतोऽनन्तरम् "ऋषयः"—इत्यधिकम् ग ।

(२३) "कुहू" ग । "कुहूम्" ख ।

(२४) इतोऽनन्तरम् "इषाः"—इत्यधिकम् ग ।

* इतीत्यादि न विद्यते ग-पुस्तके, अस्ति च खण्डाङ्कः "४"—इति।

† पृ० १, १४ ।

‡ निरु० ११, २ ।

§ निरु० ११, ५. "चन्द्रमाः" १०, १८ ।

भावः। चायन् पश्यन् लोकपालत्वात् द्रमन् गच्छति। यद्वा; चन्द्र-शब्दे उपपदे मातेश्च 'चन्द्रे मो डित् (उ० ४,२२२)' इत्यसुन्। चन्द्रस्यासौ निर्माता। चन्द्रमानं निर्माणं मात्यनेः कर्मणा वाच्यः। यद्वा; चान्द्रं चन्द्रसम्बन्धि मानमस्य, चान्द्रमाः सन् हस्व-त्वेन चन्द्रमाः। यद्वा; चारुशब्दे उपपदे द्रवतेरसुनि वाक्शकारादूप-सिद्धिः। चारु शोभनं द्रवति गच्छति मन्दगतित्वात् वा। चिरं द्रवति वा। "प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ० सं० ८,३,२३,४)"॥

(४) मृत्युः*। म्रियतेरन्तर्णीतण्यर्थात् 'भुजिमृङ्भ्यां युक्त्युकौ (उ० ३,१८)'—इति त्युक् प्रत्ययः। मारयति प्राणिनः, मृतं च्याव-यतीति वा। मृतमिति वर्त्तमानसामीप्ये आसन्नमृत्युं उत्क्रम-काले शरीरात् च्यावयति। अथवा; मृतः क्षीणायुःसंस्कार उच्यते, तम् मृतं मध्यमः प्राणः शरीरात् च्यावयतीति मृत्युः। मृतशब्दोपपदात् च्यावयतेः 'अप्सरादयश्च (उ० ४,१०८)'—इति उ-प्रत्ययः, मृतान्त्यलोपः, च्यावयतेस्त्यु-भावश्च निपात्यते। "परं मृत्यो अनु परेहि पन्थाम् (ऋ० सं० ७,६,२६,१)"॥

(५) विश्वानरः†। 'अपि वा विश्वानर एवेति व्याख्यातम् (निरु० ७,२१)'। "अर्चा विश्वानराय विश्वाभुवे (ऋ० सं० ४,१,८,१)"॥

(६) धाता‡। (७) विधाता§। व्युपसर्गार्थविशिष्टात्तदुपपदाच्च

* निरु० ११, ६।

† पृ० ६। निरु० ७, २१. ११, ८. १२, २०. "विश्वजन्याः" ११, १०. "विश्वदा-नीम्" ११, ४४. "विश्वमिन्वा" ८, १०. "विश्वामित्रः" २, २४. "विश्वाः" ९, ५।

‡ निरु० १०,२६. ११,१०. "धातुः" १,२०. "धामा" ४,२२. "धाम" ४,२. ९,२८।

§ पृ० ३, २५।

धाऽऽस्तृत । वर्षकर्मणा सर्वं स हि दधाति । "धाना दंदातु दाशुषे (अथ० सं० ७,१०,२,)" । "धातुर्विधातः कलशाँ अभक्षयम् (ऋ० सं० ८,८,२५,३)" ॥

(८) मरुतः* । व्याख्याताः (१५१पृ०) । मितं रुवन्ति स्तन-यित्नुलक्षणं शब्दं कुर्व्वन्ति । अमितं वा बहुप्रकारं रुवन्ति । महद्वै-र्द्रवन्ति, महदन्तरिक्षं द्रवन्तीति वा मरुतः । "आ विद्युन्मद्भिर्मरुतः स्वर्कैः (ऋ० सं० १,६,१४,१)" ॥

(९) रुद्राः† । रुद्रशब्दो व्याख्यातः (३४६पृ०) । अत्र बहु-वचनम् । "आ रुद्रास इन्द्रवन्तः सजोषसः (४,३,२१,१)" ॥

(१०) ऋभवः‡ । ऋभुशब्दो व्याख्यातो मेधाविनामसु (३४० प०) विद्युत्प्रकाशेन मुरुविस्तीर्णं भाति, ऋतेन वोदकेन दीप्यन्ते, ऋतेन सत्येन चान्तःसहाया भवन्ति । "सौधन्वना ऋभवः सूर-चक्षसः (ऋ० सं० १,७,३०,४)" ॥

(११) अङ्गिरसः§ । 'देवस्य वितते यज्ञे महतो वरुणस्य च । ब्रह्मणोऽप्सरसो दृष्ट्वा रेतश्चस्कन्द कर्हिचित् । तत् प्रतीच्य समर्थेन स जुहाव विभावसौ॥ । * * * अङ्गारतोऽङ्गिराः । * * * ।' जम् । "ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे (ऋ० सं० ८,२, १,५)" ॥

* पु० १, २ । "मरुद्धुते" ९, २१ ।
† पु० २, १६ ।
‡ पु० २, १५ । "ऋभ्वम्" ११, २१ ।
§ निरु० ११, १६. "यज्ञ" ५, १०. ६, ८. "यज्ञम्" ४, १ ।
॥ ऐ० ब्रा० ३, ३, १० द्रष्टव्यम् ।

(१२) पितरः*। 'पिता पाता वा (निरु० ४,२१)'—इत्यादिना व्याख्याताः। अम्। "उपह्वताः पितरः सोम्यासः (ऋ० सं० ७,६,१७,१)" ॥

(१३) अथर्वाणः†। (१४) भृगवः‡। थर्वतिश्चरत्यर्थो नैरुक्तधातुः। न थर्वणमथर्वणमगमनं ततो जषि अथर्वणाः सन्तः आथर्वणाः। यद्वा; थर्वतेः 'अनुक्षनपूषन् (उ० १,१५५)'—इत्यादिना कनिन्-प्रत्ययान्तो निपात्यते। अथर्वाणोऽगन्तारः। भृगवः। भृज्यमानाः महत्तेजस्वित्वात्। 'भ्रस्ज पाके (तु० उ०)'। 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च (उ० १,२७)'—इत्युप्रत्ययः, न्यङ्क्वादित्वात् कुत्वम्। "अथर्वाणो भृगवः सोम्यासः (ऋ० सं० ७,६,१४,१)" ॥

(१५) आप्त्याः§। आप्नोतेः अघ्न्यादित्वात् (उ० ४,१०८) यत् प्रत्ययः तुगागमश्च निपात्यते। आप्नुवन्ति सर्वमाप्त्या मध्यमस्थाना इन्द्र-सहचारिदेवगणाः। "इनतममाप्त्यमाप्त्यानाम् (ऋ० सं० ८,७,२,१)"॥

(१६) अदितिः‖। 'सर्वास्त्रियो मध्यमस्थाना पुमान् वायुश्च सर्वेशः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम्'। अदितिर्व्याख्याता नैगमे (१३ पृ०)। "दक्षस्य वादिते जन्मनि व्रते (ऋ० सं० ८,२,६,५)" ॥

* पृ० ४, १।
† पं० ६. निरु० ११, १८. ११, १९।
‡ निरु० ४, २३. ११, १९।
§ निरु० ११, २०. "आप्त्यम्" ६, ३. "आप्त्री" ८, ४।
‖ पृ० १, १।

(१७) सरमा* । 'सृ गतौ (भू०प०)' । 'कलिकर्दोरमः (उ० ४,८२)'—इति बाहुलकादम-प्रत्ययः । पणिभिरसुरैः गूढानि गा अन्वेष्टुं प्रहिता, इन्द्रेण सरमा देवशुनी । "किमिच्छन्ती सरमा प्रेदमानट् (ऋ०सं०८,६,५,१)" ॥

(१८) सरस्वती† । व्याख्याता वाङ्नामसु (८३पृ०) । "पावका नः सरस्वती (ऋ०सं०१,१,६,४)" ॥

(१९) वाक्‡ । व्याख्याता स्वनामसु (७५पृ०) । "यद्वाग् वदन्त्यविचेतनानि (ऋ०सं०६,७,५,४)" ॥

(२०) अनुमतिः§ । (२१) राका‖ । अनुपूर्वान्मन्यतेर्बाहुलकात् कर्त्तरि क्तिन् : अनुमन्यते यदनुमन्तव्यम् । 'रा दाने (अदा०प०) स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्' ... दाधाग्राघिकलिभ्यः कः'—इति क-प्रत्ययः । दीयते हि तस्यां देवेभ्यो हविः । मध्यमस्थाने 'देवपत्न्यौ (११,२८)'—इति नैरुक्ताः । पौर्णमास्याविति धार्मिकाः । "अन्विदनुमते त्वम् (य०वा०सं०३४, ८)" । "राकामहं सुहवां सुष्टुती हुवे (ऋ०सं०२,७,१५,४)" ॥

(२२) सिनीवाली¶ । देवपत्न्यावमावास्ये वा । सिनमन्ननामसु व्याख्यातम् (२०७पृ०) । वालं पर्व । * * * । "सिनीवालि पृथुष्टुके (ऋ०सं०२,७,१५,६)" ॥

* निरु० ११, २४ ।

† पु० १, ११ । "सरस्वान्" पु० ४ ।

‡ पु० १, ११ ।

§ निरु० ११, १२. २९. "अनु" १, १. , ६

‖ निरु० ११, २९. ३० ।

¶ निरु० ११, ३१ ।

(२३) कुहूः*। 'गुहू संवरणे (भ्वा० उ०)' अस्मात्, क-शब्दोपपदात् भवतेर्ह्वयतेर्वा 'कृतिशुभ्योः कुः (उ० १,८८)'—इति बाहुलकात् उ-प्रत्ययो भकारस्य ककारादि च। गुप्तः..दृश्यचन्द्रमा न भवति तस्याप्रत्यक्षत्वात्। क पुनरसाविति वितर्क्यस्य चन्द्रमा भवति। "कुहूमहं सुवृतं विद्मनापसम् (तै० ब्रा० ३,३,११)"॥

(२४) यमी†। यमेन व्याख्याता (४७८पृ०)। 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन्। 'कृदिकारात् (४,१,४५वा०)'—इति ङीप्। 'अन्यमू षु त्वं यम्यन्य उ त्वाम् (ऋ० सं० ७,६,७८,४)"॥

(२५) उर्वशी‡। व्याख्याता (४१५पृ०)। उर्वश्नुते इत्यादि यथासम्भवं योज्यम्। "प्रोर्वशी तिरत दीर्घमायुः (ऋ० सं० ८,५,२,५)"॥

(२६) पृथिवी§। व्याख्याता (२८पृ०)। इह मध्यमाभिधेया। "खिद्रं बिभर्षि पृथिवि (ऋ० सं० ४,४,२९,१)"॥

(२७) इन्द्राणी||। 'इन्द्रवरुण(४,१,४९)'—इति ङीषानुक् च। मध्यमस्थाना इन्द्रस्य पत्नी वा। "इन्द्राणीमासु नारिषु (ऋ० सं० ८,४,३,१)"॥

(२८) गौरी¶। (२९) गौः**। (३०) धेनुः††। व्याख्याता

---

* निघ० ११, ३१. ३२. "कुहू" ३, ५४।

† निघ० ११, ३७. "यमुना" ९, २६ : "यमः" पृ० ४।

‡ पृ० ४, २। "उर्विया" ८, १०।

§ पृ० १, १।

|| निघ० ११, ३७. १९, ५६।

¶ पृ० १, ११। "गौरः" ११, ३९।

** पृ० १, १। †† पृ० १, ११।

वाङ्नामसु (७७पृ०)। "गौरीर्मिमाय सलिलानि तक्षति (ऋ० सं० २,३,२२,१)" ॥ "गौरमीमेदनु वत्सं मिषन्तम् (ऋ० सं० २,३,२८,३)"। "उपह्वये सुदुघां धेनुमेताम् (ऋ० सं० २,३,२८,१)"॥

(३१) अघ्न्या* । व्याख्याता गोनामसु (२२८पृ०) । "अघ्नि हृणमग्ने विपदा गौम् (ऋ० सं० २,३,२१,५)" ॥

(३२) पथ्या† । (३३) स्वस्ति‡ । 'पन्थाः पततेः'—इत्यादिना पथिन् शब्दोव्याख्यातः (निरु० २,२८)। पद्यते तत्स्थानिभिरिति पन्था अन्तरिक्षम् । तत्र भवा पथ्या 'भवे छन्दसि (४,४,११०)' —इति यत्, 'नस्तद्धिते (६,४,१४४)'—इति टिलोपः । सुपूर्वादस्तेः क्तिन्, 'छन्दस्युभयथा (३,४,११७)'—इत्यसार्वधातुकत्वात् भू-भावाभावः, आर्द्धधातुकत्वाच्छसोरल्लोपो न भवति । शोभना अस्ति रमवत्तया यस्याः स्वस्ति । शोभनत्वस्याविनाशित्वात् । 'पथ्यां स्वस्तिं प्रथमां प्रायणीये यजति§'—इति दृष्टत्वात् द्विपदमेव समाम्नातम् । "स्वस्तिरिद्धि प्रपथे श्रेष्ठा (ऋ० सं० ८,२,५,६)" ॥

(३४) उषाः॥ । उच्छतीति व्याख्याता (निरु० २,१८) । सा ह्युदकादि विवासयति विवास्यते वा मेघात् । "अपोषा अनसः सरत् (ऋ० सं० ३,६,२०,५)" ॥

* पु० २, ११ । "अघम्" निरु० ६, ११ ।
† निरु० ११, ४५ ।
‡ निरु० ६, २१. ४, १८. ११, ४६. "स्वास्वायम्" ५, २६ ।
§ ऐ० ब्रा० १, १, १—५ ।
|| पु० १, ८ । निरु० "उष्याम्" २, २ । "उष्णिक्" ७, १२. "उशीवम्" ७, १२ ।

(२५) इळा* । व्याख्याता वाङ्नामसु (७९ पृ०) । "अभि न इळा यूथस्य माता (ऋ० सं० ४,२,१९,४)" ॥

(२६) रोदसी† । व्याख्याता द्यावापृथिवीनामसु (२७४ पृ०) । अत्र पुंयोगलक्षणो ङीष् (४,१,४८) । रुद्रस्य मध्यमस्थानस्य पत्नी माध्यमिका वाक् । "सचा मरुत्सु रोदसी (ऋ० सं० ४,३,१०,२)" ॥

॥ इति मध्यस्थानदेवताः ॥२॥

अश्विनौ(१) । उषाः(२) । सूर्या(३) । वृषाकपायी(४) । सरण्यूः(५) । त्वष्टा(६) । सविता(७) । भगः(८) । सूर्यः(९) । पूषा(१०) । विष्णुः(११) । विश्वानरः(१२) । वरुणः(१३) । केशी(१४) । केशिनः(१५) । वृषाकपिः(१६) । यमः(१७) । अज एकपात्(१८) । पृथिवी(१९) । समुद्रः(२०) । दध्यङ्(२१) । अथर्वा(२२) । मनुः(२३) । आदित्याः(२४) । सप्तऋषयः(२५) । देवाः(२६) । विश्वेदेवाः(२७) । साध्याः(२८) । वसवः(२९) । वाजिनः(३०) । देवपत्न्यो(३१) देवपत्न्य इत्येकत्रिंशत्पदानि* ॥ ॥ ६ ॥

॥ इति निघण्टौ पञ्चमाध्यायः समाप्तः ॥ ५ ॥

* पु० १, १ । "इळः" पु० २ ।

† पु० ३, ३० । "रोदसिप्राः" ७, २८ ।

(२१), (२२), (२३) "अथर्वा । मनः । दध्यङ्" क. ख. पुस्तकयोरेवं व्यतिक्रमपाठः ।

* ग-पुस्तकस्थानिलं पर्व विभमितीव न कोऽपि विचारः ।

(१) अश्विनौ* । अश्वमश्वो व्याख्यातोऽश्वनात्तस्तु (१५२१ पृ०) । भाषा सर्वं जगद् व्याप्तः । अवस्थापरत्वेन मध्यमः, तेजसोत्तमः । द्यावापृथिव्यावहोरात्रे सूर्याचन्द्रमसौ वाश्विशब्दाभिधेयौ । द्यौः ज्योतिषाश्नुते, पृथिवी रसेनाम्नलक्षणेन । अहर्ज्योतिषा, रात्रिरवस्थायेन । सूर्यो ज्योतिषा चन्द्रमा रसेनाह्लादादिना वा । अश्वैस्तुरङ्गैस्तरन्तौ राजानौ पुण्यकृतावित्यौर्णवाभः । "कुदेदमश्विना युवम् (निरु० १२,२)" । तयोः कालः उर्द्धमर्द्धरात्रात् सूर्योदयपर्यन्तः । तस्मिन्नान्यस्य देवता उपास्ते ॥

(२) उषाः† । वष्टेर्वोच्छतेर्वा । "उषस्तच्चित्रमा भरा (य० वा० सं० ३४,३३)" ॥

(३) सूर्या‡ । व्याख्याता वाऽ...नस्तु (८२ पृ०) । एषैवोषाः सूर्या सम्पद्यते । "आ रोह सूर्ये अमृतस्य लोकम् (ऋ० सं० ८,३, २३,५)" ॥

(४) वृषाकपायी§ । वृषाकपेरादित्यस्य पत्नी । 'वृषाकप्यग्निकुसितकुसिद (४,१,३७)'—इत्यैकारङीषौ । "वृषाकपायि रेवति (ऋ० सं० ८,४,३,३)" ॥

(५) सरण्यूः‖ । सैवोषा प्रभातकालदुदयात्सवा सूर्यं प्रत्यात्मानं सरणेन नयति तदा सरण्यूरुच्यते । सर्त्तेः 'पुंसि सञ्ज्ञायां घः (३,३,

---

* निरु० १२, १. "माध्यमी" १२, ४६. "सप्तपर्णैः" ११, १४ । "अश्वाः" पृ० १, १४ ।

† पृ० १, ८ । पृ० ४८९ पृ० ।

‡ नृ० १, ११ । प० ४९१ पृ० ।

§ निरु० १२, ८ । "वृषाकपिः" प० ४९१ ।

‖ निरु० १२, ९ ।

११८)'। संरेण सरणेन नयति 'स्नातिहृदिकुदिभ्यः'—इति वा-
स्नतेरूक-प्रत्ययः, 'एरनेकाचोऽसंयोगपूर्वस्य' (६,४,८२)'।
"अजोहवन्नासत्या करा महे सरण्यू (ऋ०सं० ७,६,२१,२)" ॥

(६) त्वष्टा*। (७) सविता†। व्याख्याते (४६२पृ०, ४८०
पृ०) तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति। "वि
नाकमख्यत् सविता वरेण्यः (य०वा०सं० १२,३)" ॥

(८) भगः‡। व्याख्यातो धननामसु (२२४पृ०)। भजनीयो
भूतानां स्वकार्यप्रयुक्तानाम्। त्वष्टृ-कालादनन्तर्विशिष्टोतिर्विशेषो
भगाख्यः। प्रागुत्सर्पणादनाविर्भूतमण्डल इत्यर्थः। "प्रातर्जितं भगमुग्रं
हुवेम (ऋ०सं० ५,४,८,२)" ॥

(९) सूर्यः§। व्याख्यातः सूर्यशब्देन (८२पृ०) प्रागवस्थानः।
सरति कर्मसु जगत् प्रेरयति वायुना घटाम्। सुष्ठु सर्वदेवोदयास्त-
मयौ प्रति ईर्यते। "दृशे विश्वाय सूर्यम् (ऋ०सं० १,४,७,१)" ॥

(१०) पूषा॥। 'पुष पुष्टौ (क्रा०प०)'। 'श्वन्नुक्षन्(उ० १,१५५)'
—इति कनिन् प्रत्यये उपधादीर्घत्वं निपात्यते। यदा रश्मिभिः
परिपुष्टो भवति तदा पूषा। "भद्रा ते पूषन्निह रातिरस्तु (ऋ०सं०
४,८,२४,१)" ॥

* पृ० २।
† पृ० ४।
‡ पृ० २, १०।
§ निघ० १२, १४। पृ० ४९१ पृ०।
॥ पृ० ६, ६।

(११) विष्णुः* । व्याख्यातो यज्ञनामसु (३,४८९पृ०)। तीव्र-रश्मिद्वारेण सर्वत्र व्याविशति । विशेर्बाहुलकात्नु-प्रत्ययादि । विश्व रश्मिभिर्व्यश्नुते वा । "इदं विष्णुर्वि चक्रमे (ऋ० सं० १,२,७,२)" ॥

(१२) विश्वानरः† । व्याख्यातः (४८४पृ०)। इहोत्तमोऽभिधेयः । "विश्वानरस्य वस्पतिम् (ऋ० सं० ६,५,१,४)" ॥

(१३) वरुणः‡ । व्याख्यातः (४७५पृ०) । "त्वं वरुण पश्यसि (ऋ० सं० १,४,७,५)" ॥

(१४) केशी§ । (१५) केशिनः‖ । केशा रश्मयः । प्रशंसायामिनिः । प्रकृष्टैः केशैस्तद्वान् 'काश्टृ दीप्तौ (भ्वा० आ०)' काशनं काशः, तद्वान् काशी सन् केशी । तमश्चोमध्यगत आदित्य उच्यते । "केश्यग्निं केशी विषम् (ऋ० सं० ८,७,२४,१)" ॥

(१६) वृषाकपिः¶ । 'वृष सेचने (भ्वा० प०)' । 'कनिन्युवृषि (उ० १,१५४)'—इत्यादिना कनिन् । 'कपि चलने (भ्वा० आ०)' । 'कुण्डिकम्प्योर्नलोपश्च (उ० ४,१३९)'—इतीप्रत्ययः णिजन्तो वा । अयं च सेचयिता, अवश्यायादीन् कम्पयंश्च चरति ; [illegible]वा चारीणि भूतानि भयात् कम्पयतीति वा । 'तत्पुरुषे कृति बहुलम् (६,३,१४)'—इति बहुलवचनादलुक् । "पुनरेहि वृषाकपे (ऋ० सं० ८,४,४,३)" ॥

---

* पृ० २, १० ।

† पृ० ५ ।

‡ पृ० ४ । 'वरुणानी" निरु० ११, ४९ ।

§ निरु० १२, २५ ।

‖ निरु० १२, २७ ।

¶ निरु० ११, २९. १२, २७ ।

(१७)। यमः*। व्याख्यातः (४७८पृ०)। स यच्छति रश्मिभिरिति मध्यमयावस्य आदित्य उच्यते। "देवैः सम्पिबते यमः (ऋ० मं० ८,७,२३,१)"॥

(१८) अजएकपात्†। मध्यभावस्य आदित्य उच्यते। द्विपदं चैतत्। अजतेः पचाद्यचि बाहुलकात् वीभावाभावः। एकस्तु पादः अस्य ब्रह्मणः। कुत एतत्? विज्ञायते हि अग्निः पादः, वायुः पादः, आदित्यः पादः, दिशः पादः इति। तेनाजश्चासावेकपाच्चेति। 'संख्यासुपूर्वस्य (५,४,१४०)—इत्यवधारणादपि पादस्याकारलोपः। एकेन पादेनांशेन सर्वमिदं जगत् ज्योतिरात्मना प्रविशन् पाति, एकेनांशेन उदकं सर्वस्य जगतः पिबति, क्विपि तकारोपजनः। एकोऽस्य पाद इत्ययथाप्राप्तः पादान्त्यलोपः। "पावीरवीतन्यतुरेकपादजः (ऋ० मं० ८,२,११,३)"॥

(१९) पृथिवी‡। व्याख्यातः (२८पृ०)। इह द्यौरुच्यते। "यदिन्द्राग्नी परमस्यां पृथिव्याम् (ऋ० मं० १,७,२७,३)"॥

(२०) समुद्रः§। व्याख्यातोऽन्तरिक्षनामसु (३० पृ०)। निर्वचनेषु योज्यम्। उक्तमोऽभिधेयः। "सद्यः समुद्रं वरुणस्तिरोदधे (ऋ० मं० ७,२,२८,३)"॥

(२१) दध्यङ्॥। ध्यानं ज्ञानं लोककृत्याकृत्यविषयं लोकपालत्वात्। ध्यानं प्रतिगतं प्रत्यक्षमस्मिन् ध्यानमिति वा। ध्यानशब्दो-

* पृ० ४।
† निघ० ११, १९. २२
‡ पृ० १, १।
§ पृ० ७, ९।
॥ निघ० १२, २२।

पपदात् अञ्चतेः क्विनि पृषोदरादित्वात् ध्यानृशब्दस्य दधिभावः, 'क्विन्प्रत्ययस्य कुः (८,२,६२)'॥

(२२) अथर्वा* । व्याख्यातोऽथर्वाण इत्यत्र (४८६पृ०)। इह तु उत्तमोवाच्यः। न ह्ययं स्वाधिकारं व्यभिचरति; इमादानादिकं नित्यमनुतिष्ठतीत्यर्थः॥

(२३) मनुः† । मन्यतेर्मननार्थादर्चतिकर्मणो वा 'शृस्वृस्निहि-त्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च (उ०१,१०)'—इत्यु-प्रत्ययः। मननात् स्वाधिकारादेः, अर्च्यते इति वा मनुरादित्यः। "यामथर्वा मनुष्पिता दध्यङ् धियमत्नत (ऋ०सं०१,५,२१,६)"‡॥

(२४) आदित्याः§ । आङ्पूर्वात् दातेर्दीप्यतेर्वा अघ्न्यादित्वात् (उ०४,१०८) यत् प्रत्ययः। आकारेकारयोरिकारः, दाञस्तुक् दीप्यतेः पकारस्य तकारश्च निपात्यते। भुवोरसं रश्मिभिरादत्ते। ज्योतिषां चन्द्रनक्षत्रग्रहादीनां भासमादत्ते वा, तदुदयेऽतद्भानादानव्यपदेशः। आदीप्तः ज्योतिरन्तरापेक्षया हि स्वभासा। अदितेः पुत्रा वा आदित्याः 'दित्यदित्यादित्य (४,१,८५)'—इति ण्यः। तथा च 'अदितेः पुत्रकम्'—इत्यादि ब्राह्मणम्। जसि आदित्याः मित्रादयः। "इमा गिर आदित्येभ्यो घृतस्नूः (ऋ०सं०२,७,६,१)"॥

(२५) सप्त ऋषयः‖ । व्याख्याताः (३८ पृ०)। रश्मयः। षडि-

---

* पृ० ५।

† निघ० १२, १२।

‡ दध्यङ्-मनुः-आदित्याः—इति त्रयाणामेव पदानामेष नियमः।

§ निघ० १२, १२. १२, १४. "आदितेयः" २, ११. ७, २९।

‖ पृ० ५।

न्द्रियाणि वा मनःषष्ठानि विद्यासप्तमानि । "सप्त ऋषयः प्रतिहिताः शरीरे (य॰ वा॰ सं॰ ३४.५५)" ॥

(२६) देवाः* । दिव्यतिर्दानार्थाद्दीप्त्यर्थाद्वा । पचाद्यच् (३,१,१३४) । दातारोऽभिमतानां भक्तेभ्यः । तैजसत्वाद्दीप्ता वा । द्युनेर्वापि बाहुलकाद्रूपसिद्धिः । अर्थः समानः । दिवः सम्बन्धिनो वा देवाः । 'तस्येदम् (४,३,१२०)'—इत्यणि वृद्ध्यभावश्छान्दसः । 'द्युप्रागपागुदक्प्रतीचो यत् (४,२,१०१)'—इति यत्प्रत्ययो नाच भवति । द्युस्थाना इत्यर्थः । देवा रश्मय उच्यन्ते । "देवानां भद्रा सुमतिर्ऋजूयताम् (ऋ॰ सं॰ १,६,१५,२)" ॥

(२७) विश्वेदेवाः† । सर्वे देवाः । "विश्वे देवास आ गत (ऋ॰ सं॰ १,१,६,१)" ॥

(२८) साध्याः‡ । व्याख्याताः रश्मिनामसु (३८पृ॰) । नैरुक्तपक्षे रश्मयः । ऐतिहासिकानान्तु कर्मभिरात्मभिरात्मसाधनात् पूर्वे देवसमूहाः, ये च किल विश्वसृजो नाम ऋषयः । "यत्र पूर्वे साध्याः सन्ति देवाः (ऋ॰ सं॰ २,३,२३,४)" ॥

(२९) वसवः‡ । व्याख्याता रश्मिनामसु (३६पृ॰) । विभासेनावस्थितमिदं सर्वमाच्छादयन्ति । अत्र निवासे कारकत्वात् । वसवो

* निरु॰ ७, १५. १२, ३८. "देवगोपा" ११, ४१. "देवजातस्य" ९, ३. "देवजूतम्" १०, २८. "देवता" ८, ६. २०. "देवयज्या" ६, २२. "देवपत्नीः" ८, १८. "देवया" १२, ५. "देवश्रुत्" ९, १२. "देवसुमतिः" २, ११. "देवकृतिः" ५, २५. "देवापिः" २, ११. १२. "दैवतम्" १, २०. ७, १ ।

† निरु॰ १२, ४०. "विभ्राः" ९, ४ ।

‡ प॰ १, ५ ।

यावत् किञ्चित् पृथिवीस्थानमग्निभक्ति तत् सर्वं वसुत्वेनाभिप्रेत्यैतदुच्यते,—'अग्निर्वसुभिर्वासव इति समाख्या तस्मात् पृथिवीस्थानाः निरु० १२,४१)'। एवमिन्द्रो वासवः; मरुतो हि वासवाः समाख्याताः;' तस्मात् मध्यमस्थानाः। वरुण आदित्यरश्मयो विवासनात्तस्मात् द्युस्थानाः। "अस्मे धत्त वसवो वसूनि (य० वा० सं० ८,१८)"॥ "ज्मया अत्र वसवो रन्त देवाः (ऋ० सं० ५,४,६,२)"॥

(३०) वाजिनः*। वाजिशब्दश्चाश्वनामसु व्याख्याताः (१४५ पृ०) रश्मयोऽभिधेयाः। देवाश्च वाजिनः। "शन्नो भवन्तु वाजिनो हवेषु (ऋ० सं० ५,४,५,७)"॥

(३१) देवपत्न्यः†। देवानां पालयित्र्यः पालनीया वा। "देवानां पत्नीरुशतीरवन्तु नः (ऋ० सं० ४,२,२८,७)"॥

अध्यायपरिसमाप्तिद्विर्वचनम्, श्रुतिदर्शनात्॥

अग्निर्द्रविणोदाश्वावायुः श्येनाश्विनौ षट्‡।

अत्रिगोत्रश्रीदेवराजयज्वनः कृते निघण्टु-निर्वचने
पञ्चमोऽध्यायः समाप्तः॥ ५॥

* पृ० १, १४। "वाजिनम्" १, २०।
† निरु० १२, ४४।
‡ नेदं क-ख-पुस्तकाभ्यामन्यत्र। पाठश्चैतत् ४६० पृष्ठे मूले 'देवपत्न्य इत्येकत्रिंशत् पदानि'—इत्येतस्यानन्तरमेव।

आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमन्तथा।
तृतीयं दैवतञ्चेति समाम्नायस्त्रिधा स्थितः॥ १॥
गौराद्यपारपर्य्यन्तमाद्यं नैघण्टुकं मतम्।
जहाद्युल्बंमृबीसान्तं नैगमं सम्प्रचक्षते॥
अग्न्यादि देवपत्न्यन्तं दैवताकाण्डमुच्यते॥ २॥

तत्र च—

अग्न्यादिर्देवीऊर्जाहुत्यन्तः क्षितिगतो गणः।
वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः।
सूर्य्यादिदेवपत्न्यन्ताद्युस्थानदेवताइति॥ ३॥
गौरादिर्देवपत्न्यन्तः समाम्नायोऽभिधीयते॥ ४॥*

॥ इति निघण्टुः समाप्तः॥

* इतीमे सार्धचतुष्टयानुष्टुभः ख-पुस्तके एव। इतोऽनन्तरं तत्र "वृषदेवता। अपि नैघण्टुकवत्"—इति पूर्वोक्तं च विद्यते। ततश्च "इति निघण्टुकोषः समाप्तः" इति।